# शब्दस्तोममहानिधि

## संस्कृताभिधान

प्रथमखण्डम् ।

गवर्णमेण्टसंस्कृतपाठशालायां व्याकरणाध्यापकेन

श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्येण सङ्कलितम्

तेनैव परिशोधितञ्च ।

कलिकातानगरे

१९२५ संवत्सरे नूतनसंस्कृतयन्त्रे मुद्रितम्

# S'ABDASTOMA MAHA'NIDHI

## PART I

## A SANSKRIT DICTIONARY

COMPILED
BY
TA'RA'NA'THA TARKAVA'CHASPATI

Professor of Grammar in the Govt Sanscrit College of Calcutta

CALCUTTA:

THE NEW SANSKRIT PRESS.

1869

Professor Taranatha Tarkavachaspati, who is so well known to all students of Sanskrit for his profound knowledge of the ancient literature of his country and for his services to philology is at present engaged, under the auspices of the Government of Bengal, in the compilation of a comprehensive Sanskrit Dictionary. But as considerable time will necessarily elapse before his great work is published, I requested him to undertake the compilation of a smaller Dictionary for the use of Colleges and schools in India. He has, accordingly, with his usual energy and untiring literary industry, commenced this useful work which he will publish in parts. The present number is the first instalment of five parts of which the Dictionary will consist.

*Calcutta*
The 1st February, 1869

Prasannakumara Sarvadhikari,
Principal of the Sanskrit College
*of Calcutta*

# साङ्केतिकशब्दसङ्केतज्ञापनम्।

| सङ्केत | सङ्केतबोध्य | सङ्केत | सङ्केतबोध्य | सङ्केत | सङ्केतबोध्य |
|---|---|---|---|---|---|
| पु० | पुंलिङ्ग. | न०त० | नञ्तत्पुरुषः | स्वादि० | स्वादिगणीय. |
| स्त्री० | स्त्रीलिङ्ग | कर्म्म० | कर्म्मधारय. | तुदा० | तुदादिगणीयः |
| न० | नपुंसकलिङ्गः | द्वि० | द्विगुसमास. | रुधा० | रुधादिगणीय. |
| पु०स्त्री० | अनपुंसकलिङ्गः | अव्ययी० | अव्ययीभाव | तना० | तनादिगणीयः |
| पु०न० | अस्त्रीलिङ्ग | ब० | बहुव्रीहिः | क्र्यादि० | क्र्यादिगणीयः |
| न०स्त्री० | अपुंलिङ्ग. | ३ब० | तृतीयान्तान्यपदार्थबहुव्रीहि. | चुरा० | चुरादिगणीयः |
| त्रि० | त्रिलिङ्ग | ५ब० | पञ्चम्यन्तान्यपदार्थबहुव्रीहि | अद० | अदन्त |
| अव्य० | अव्ययम् | ६ब० | षष्ठ्यन्तान्यपदार्थबहुव्रीहिः | पर० | परस्मैपदी |
| स० | समास. | ७ब० | सप्तम्यन्तान्यपदार्थबहुव्रीहिः | आत्म० | आत्मनेपदी |
| त० | तत्पुरुषः | न०ब० | नञ्बहुव्रीहि | उभ० | उभयपदी |
| २त० | द्वितीयातत्पुरुषः | प्रादि०ब० | प्रादिभ्यो धातुजबहुव्रीहिः | सक० | सकर्म्मकः |
| ३त० | तृतीयातत्पुरुषः | द्व० | द्वन्द्वसमास | अक० | अकर्म्मकः |
| ५त० | पञ्चमीतत्पुरुष. | समा० | समासान्तः | द्विक० | द्विकर्म्मकः |
| ६त० | षष्ठीतत्पुरुष | शक० | शकन्ध्वादित्वात्पररूपम् | द्विव० | द्विवचनान्तः |
| ७त० | सप्तमीतत्पुरुष | नि० | निपातनात् | ब०व० | बहुवचनान्त |
| ग० | गतिसमास | + | प्रातिपदिकम् | गौरा० | गौरादित्वात् |
| शाक० | शाकपार्थिवादितत्पुरुष | - | धातु | ब्राह्म० | ब्राह्मणादित्वात् |
| उप० | उपपदसमासः | भ्वा० | भ्वादिगणीयः | पृषो० | पृषोदरादित्वात् |
| मयू० | मयूरव्यंसकादि | अदा० | अदादिगणीय | चतुर्व० | चतुर्वर्णादित्वात् |
| प्रा० | प्रादिसमास. | जुहो० | जुहोत्यादिगणीय. | प्र० | प्रज्ञादित्वात् |
| उपमि० | उपमितसमास. | दिवा० | दिवादिगणीय | सार्व्व० | सार्व्वविभक्तिकः |

श्री तत्सत्।

# ग्रन्थारम्भः।

श्रुत्यार्थाधिगमं सर्वप्रकृतिप्रत्ययाभिधम्। त्र्यलिङ्गं बहुलिङ्गञ्च शब्दब्रह्माहमाश्रये॥ १॥
वाचामधीश्वरीं देवीं भक्त्या नत्वा वितन्यते। तारानाथद्विजेनायं शब्दस्तोममहानिधिः॥ २॥
यो बबन्ध विना सूत्रं शब्दरत्नस्रजं धिया। अशेषशेमुषीदात्रे तस्मै शेषात्मने नमः॥ ३॥
निःशेषं नाशयन्त्वेनः शेषाशेषमुखानि नः। यतः शब्दविशेषाणां रूपार्थाभ्यां प्रकाशनम्॥ ४॥
सूत्रवार्त्तिकभाष्याणां कारकान् मुनिसत्तमान्। पाणिन्यादीन् प्रणम्येह व्युत्पत्तिर्दर्श्यते मया॥ ५॥
निघण्टुकारिणो ग्रन्था-स्तद्व्याख्याकारिणस्तथा। मच्चित्ते द्योतयन्तोऽर्थान् प्रकाशन्तां सदा स्मृताः॥६॥

## मुखबन्धः।

इह खलु पुरुषा याः काश्चित् भाषामभ्यसितुमीहमानाः प्रयतन्ते तदर्थज्ञानसाधनं तत्तद्भाषाव्याकरणकोषस्याधिगन्तुम्। तत्र व्याकरणात् प्रायो यौगिकशब्दमात्राणामर्थज्ञानं, कोषात् पुनः रूढानां शब्दानां केषाञ्चित् यौगिकानामपि। कोषो नाम शब्दानामर्थबोधकं शास्त्रम्। तत्र संस्कृतकोषे प्रायेण लिङ्गसहितस्यैवार्थबोधनम्। तच्च यद्यपि संस्कृतभाषयैव विजातीयभाषयापि भवितुमर्हति, तथापि भाषान्तरेण भाषान्तरस्यार्थज्ञापने, सम्पूर्णतात्पर्य्यार्थस्यास्फुरणात् एकविधभाषयाऽर्थस्य ज्ञापने तु भावार्थस्य स्फुटं स्फुरणात्, समानभाषयापि, प्रकृतिप्रत्ययविभागमप्रदर्श्य अखण्डार्थस्य बोधने तदवयवार्थस्याबोधात् खण्डशस्तथा बोधने तु अवयवशब्दार्थस्यापि सुखेन ग्रहात् अवयवार्थप्रदर्शनपूर्व्वकम् एकविधभाषयैवार्थबोधनं युक्तम्। किन्तु प्रसिद्धेषु संस्कृताभिधानेषु अमरकोषादिषु केवलम् अखण्डार्थस्यैव प्रतिपादनात् शब्दानां सर्व्वेषामर्थानामप्रतिपादनात् तत्र कीर्त्तितानामपि शब्दानाम् अकारादिक्रममनतिक्रम्यैव पाठेनार्थप्रतिपादनात् व्युत्पित्सूनामतीव दुर्गमत्वेन न तेषां समीचीनता। किञ्च तत्रोक्तानामपि शब्दानामवयवार्थज्ञानमसुलभमेव। नानाकोषपठितानां शब्दानामेकत्र सङ्कलनेन पाणिन्यागममनुसृत्य विविधविद्यावता डाक्तरोपाधिना ‘उइलसन्’ साहेबेन वेदादिशास्त्रादिषु विशेषतः शब्दकल्पद्रुमाभिधाने कृतश्रमाभ्यां विद्वद्भ्यां बोथलिङ्करथाभ्यां च प्रणीतयोः संस्कृताभिधानयोः प्रकृतिप्रत्ययविभागप्रदर्शनपूर्व्वकं सुपरिपाट्या यत्नत्वेऽपि तैः स्वस्वभाषयैव संस्कृतशब्दस्यार्थानां बोधनात् संस्कृतभाषयार्थबोधनमन्तरेण संस्कृतशब्दानामर्थजातस्य एतद्देशीयैर्विशेषतो न ग्रहः अपरिचिततत्तद्भाषाणान्तु सुतरामेव। अतः संस्कृतभाषाशब्दानामभिधानं संस्कृतभाषयैव व्याख्यानयुत

प्रकृतिप्रत्ययादिविभागसहितं सपरिपाटीकमेकमभिधानं व्युत्पित्सूनामवश्यमपेक्षितमिति निश्चित्य तथाविधाभिधानसङ्कलने समाततरां सङ्कल्पो वभूव। किन्त्वसौ सङ्कल्पस्तत्प्रचारोपयोगिव्ययार्थार्थ-मार्थविरहेण निरर्थकतया मुकुलित इव संवभूव।

अथ तथाविधाभिधानप्रचारार्थं मुद्राव्यापारोपयोगिधनवाञ्छया एतद्देशाधिपसंस्थापितविद्यास-माजविभाग-प्रधानाध्यक्ष (डिरकटर) इति पदेऽभिषिक्तं (एसे) इत्युपाधिकं श्रीयुक्तम् एड्च् उड्रो इति नामकं साहेवं प्रत्यावेदितम्। मदावेदितेन च विविधविद्यानुरागवता विद्यावृद्धिविषये एकान्तोत्साहिना तेन प्रोत्साहितः वङ्गगवर्णमेण्ट अयुतं मुद्राः एतत्पुस्तकमुद्राव्ययसाहाय्यार्थं दातुमङ्गीचकार।

एवमेतद्देशाधिपतिनाऽङ्गीकृते प्रचारोपयोगिव्ययानुकूल्ये चिरमुकुलितोऽपि स संकल्पः पुनः फलो-न्मुखीवभूव। अथ तथाविधसस्कृताभिधाननिर्म्माणाय वेदस्मृतिपुराणमीमांसादिदर्शनज्योतिषतन्त्रवैद्य-काव्याकरणालङ्कारादीनि शास्त्राणि समालोड्य वहुलाः शब्दाः सङ्कलिताः। किन्तु तदभिधानस्य वहु-विस्तीर्णतया तन्मुद्राकार्य्यसम्पादने वहुकालापेक्षेति। सम्भाव्य तस्मादेव संक्षिप्य साहित्यादिग्रन्थेषु प्रयु-क्तशब्दानां प्रसिद्धार्थज्ञानानुकूलम् स्वल्पमभिधानमापाततः संस्कृतविद्यामन्दिरविश्वविद्यालयादिच्छा-त्राणां पाठार्थमपेक्षितमित्युद्भाव्य च संस्कृतपाठशालाप्रधानाध्यक्षेण (प्रिन्सिपल्) पदवीसमारूढेन श्रीयुत वावु प्रसन्नकुमार सर्व्वाधिकारिणा महाशयेन, (प्रसिडेनस्) विद्यालयसंस्कृतप्रधानाध्यापकेन आयुष्मता श्रीयुत वावु कृष्णकमलविद्याम्बुधिभट्टाचार्य्येण च प्रोत्साहित इदं व्यरचयम्।

अत्र च शब्दानां स्थूलाक्षरेण प्रथमं स्वरूपप्रदर्शनम् ततः सङ्केतविशेषेण लिङ्गप्रदर्शनं ततोऽवयवार्थ-प्रदर्शनम् ततः व्याकरणप्रक्रिया, ततोऽर्थविशेषकथनम्, यदर्थविशेषे लिङ्गभेदः प्रकृतिप्रत्ययभेदश्च तेऽत्र परतो दर्शिताः। 'नाम च धातुजमाह निरुक्ते' इत्युक्तेः सर्व्वशब्दानां धातुमूलतया पाणिनीयगण-पठितधातूनपि स्थूलाक्षरेण शब्दक्रममध्ये एव निवेश्य तेषाम् धातूनामर्थविशेषः, गणभेद, पदनियमः, इट्न्यूनतादि, सकर्म्मकत्वादि, लटि लुङि च रूपञ्च दर्शितम्। यद्यपि अर्थविशेषोत्कीर्त्तनं संस्कृत भाषयैव सर्व्वत्र कृतं, तथापि यत्र वङ्गभाषयापि अर्थकथने प्रकृतार्थस्य स्फुटं प्रतीतिर्भवेत् तत्र क्वचित् क्वचित् ग्रन्थवहिर्भूततासूचकेन वेष्टनाकाररेखाद्वयेन वेष्टितया वङ्गभाषयाप्यर्थप्रकाशनं कृतम्।

अत्र च यावता प्रयत्नेन अतीव सुगमता भवेत् तथा यत्नः कृतः। साहित्यप्रचलितशब्दप्रसङ्गात् दर्श-नज्योतिषादौ प्रसिद्धाः पारिभाषिकशब्दादयोऽपि एकान्ततो नोपेक्षिताः क्वचित् क्वचित् सारतस्तेऽपि सार्थाः उट्टङ्किताः। अतिप्रामाणिकतया पाणिनीयागमानुसार्य्येव प्रत्ययादिसंज्ञादिकमत्राहृतम्।

एतस्यापि सम्पूर्णपुस्तकस्य एकदा प्रचारे तत्क्रयार्थम् एकदैव वहुद्रव्यापेक्षा स्यादिति अल्पवित्ता-नां कष्टं भवेत् तन्मा भूदित्यनया धिया खण्डशएव प्रचारे प्रयतमानेन मया प्रथममिदं खण्डं प्राचारि।

सम्भावयामि एतत् पुस्तक प्रायः पञ्चभिः खण्डैः संपूर्णं स्यादिति। प्रयते च तथा, यथा मासाभ्यां मासाभ्यामेकैकं खण्डं प्रचारितं भवेदित्यत्र। एतस्य सङ्कलने शोधने च भूयान् परिश्रमः स्वीकृतस्तथापि अत्र यत्किञ्चिन्मम स्खलनं सुधीभि' समुद्भाव्येत तत्तैः निजगुणेन परिशोधनीयम्। शिवमस्तु ओं तत्सत्

# शब्दस्तोममहानिधिः।

---

## चिदात्मने नमः।



अ पु अत् ड। विष्णौ। अव्य० सम्बोधने, अधिक्षेपे, निषेधे च।

अंश अदन्तचुरा० उभ० विभाजने। अंशय ति ते आंशिशत् त।

अंश पु० अंश-घञ्। विभागे, विभाज्ये अवयवे, एकदेशे, विभाज्याङ्के, राशित्रिंशभागे च।

अंशक पु० अंश ण्वुल्। ज्ञातौ, दायादे, राशित्रिंशभागे, दिने च। विभाजके त्रि० स्त्रियाम् अंशिका।

अंशल त्रि अंश+लच्। बलवति। [स्त्रियाम् अंशिनी।

अंशिन् त्रि० अंश णिनि। भागकारके अवयविनि ज्ञातौ च।

अंशु पु अंश-उ। किरणे, प्रभायाम् वेगे, सूक्ष्मादिसूक्ष्मांशे च।

अंशुक क्ली अंशु+क। वस्त्रे, सूक्ष्मवस्त्रे शुभ्रवस्त्रे उत्तरीये च।

अंशुधर पु० अंशुधारि अंशु-धृ-अच्। सूर्य्ये। वेगधरे त्रि०स्त्रियामंशुधरा।

अंशुपति पु० अंशु पति इत। सूर्य्ये। [स्त्रियामंशुमती।

अंशुमत् पु० अंशु+मतुप्। सूर्य्ये। वेगवति अंशुमति च त्रि०

अंशुमत्फला स्त्री० अंशुमत् फल यस्याः। कदलीवृक्षे।

अंशुमती स्त्री० अंशु+मतुप्। शालपर्णीवृक्षे शालपाद इति ख्याते। अंशुविशिष्टायां स्त्रियाञ्च।

अंशुमाला स्त्री० अंशु-माला इत०। किरणजाले।

अंशुमालिन् पु० अंशु माला+इनि। सूर्य्ये। किरणजालवति त्रि स्त्रियामंशुमालिनी।

अंशुहस्त पु० अंशवः हस्त इव यस्य ब०। सूर्य्ये।

अंस अदन्तचुरादि० उभ० विभाजने। अंसय-ति ते। [च पु०।

अंस क्ली पु अम्-स। स्कन्धे। अंस घञ्। विभाज्ये अवयवे

अंसकूट पु० अंस कूट इत०। ककुदे, राजस्कन्धोन्नतकूटवत्



पटुरिति प्रबोधचन्द्रोदय।

अंसल त्रि० अंस+लच्। बलवति।

अंह चुरा० उभय० भासने। अंहय-ति ते आञ्जिहत् त त।

अंह भ्वादि० आत्म० गतौ। अंहते। आंहिष्ट।

अंहति स्त्री अंह अति, न हन्तु किन्तु वर्णविपर्य्यय इति वा। त्यागे, रोगे च। अंहती च।

अंहस् क्ली अंह-असि। पापे।

अंह्रि पु० अंह क्रि। पदे, वृक्षमूले च।

अंह्रिप पु अंह्रिणा पिबति अंह्रि-पा-क। वृक्षे।

अंह्रिस्कन्ध पु० अंह्रि स्कन्ध इत०। गुल्फे।

अक वक्रगतौ भ्वादि घटादि पर०। अकति आकीत्। अकयति।

अक इदित् भ्वादि० चिह्नकरणे आत्मने०। अङ्कते।

अक क्ली० क सुख न०त०। पापे दुःखे च।

अकच पु० न कच बहु०। केतुग्रहे। केशशून्ये त्रि०।

अकरणि स्त्री० न कृ अनि। आक्रोशभेदे, पापे च। [त्रि

अकरा स्त्री० न कृ अच्। आमलकीवृक्षे। करहीने, कर्मभिन्ने च

अकर्कश त्रि० न कर्कश न०त०। कोमले, कार्कश्यरहिते च।

अकर्ण त्रि न-कर्ण बहु०। बधिरे, कर्णरहिते च।

अकर्णन पु० न कर्णन बहु०। वामने, सर्पे च।

अकर्मण्य त्रि कर्मन्+यत् न०त०। कर्मायोग्ये।

अकर्मन् त्रि० न-कर्मन् बहु०। कार्याक्षमे।

अकल्कन (क) त्रि० न-कल्कन (क) बहु०। दम्भरहिते त्रि।

अकल्का स्त्री० न कल्क बहु०। ज्योत्स्नायाम्। दम्भरहित

अकल्य त्रि० कल्यात् साधु कल्य+यत् न० त०। रोगिणि।

**अकस्मात्** अव्य॰ न-कस्मात् न॰त॰। हठात्कारे, आगन्तुके च
**अकाण्ड** पु॰ न-काण्ड न॰ त॰। असमये, अनवसरे च। न काण्डः (स्कन्धः सायको वा यस्य) बहु॰। तत्शून्ये त्रि॰।
**अकाण्डे** अव्य॰न-काण्डे न॰त॰। असमये,अनवसरे च। [त्रि॰
**अकाम** पु॰ कम-घञ् न॰त॰। अनिच्छायाम्। ब॰ कामरहिते
**अकामतः** अव्य॰ अकाम-तसिल्। अनिच्छाहेतुतः।
**अकाय** पु॰ न-काय ब॰। राहौ। देहशून्ये त्रि॰।
**अकार** पु॰ अ+कार। अ-स्वरूपवर्णे। कारः क्रिया न-कारो यस्य ब॰। कर्म्मशून्ये त्रि॰।
**अकारण** न॰ न-कारण न॰त॰। कारणभिन्ने। न-कारण-(उद्देश्य,हेतु) ब॰। निष्प्रयोजने, हेतुशून्ये च त्रि॰।
**अकार्य्य** न॰ कृ-ण्यत् न॰ त॰। द्यूतक्रियाचौर्य्यसाहसादौ दुष्टकर्म्मणि। ब॰ कार्य्यशून्ये त्रि॰।
**अकाल** पु॰ न-काल न॰त॰। असमये,गुर्वस्तादिनिमित्तकव्रताद्यकरणायोग्ये काले। कृष्णवर्णभिन्ने त्रि॰।
**अकालजलदोदय** पु॰ अकाले जलदानामुदयः तत्पु॰। कुज्झटयाम्। असमये मेघानामुदये च। [च।
**अकिञ्चन** त्रि॰ न-किञ्चन मयूरव्यंसकादि त॰। दरिद्रे, निर्द्धने
**अकिञ्चनता** स्त्री॰ अकिञ्चन+ता। परिग्रहत्यागे,दारिद्र्ये च।
**अकिञ्चिज्ज्ञ** त्रि॰न-किञ्चित्-ज्ञा-क। अल्पज्ञाने, ज्ञानशून्ये च।
**अकिञ्चित्कर** त्रि॰न-किञ्चित्-कृ-अच्। अकर्म्मण्ये, क्रियाशून्ये, निष्प्रयोजने च।
**अकुण्ठ** त्रि॰न-कुण्ठा ब॰। अकुण्ठिते,प्रतिभायुक्ते,कार्य्यदक्षे च।
**अकुतोभय** त्रि॰ न-कुतः-भय-मयूरव्यंसकादि त॰। भयशून्ये।
**अकुप्य** न॰ गुप-क्यप् कस्य गः न॰त॰। स्वर्णरूप्ययोः।
**अकूपार** पु॰ न-कूप-ऋ-अण्। कच्छपे। न-कु-पॄ-अण् दीर्घः। महापारे,-समुद्रे,-दूरपारे-सूर्य्ये च।
**अकूवार** पु॰ न-कु-वृ-अण् दीर्घ। समुद्रे सूर्य्ये च।
**अकृत्य** न॰ कृ-क्यप् न॰त॰। अकार्य्ये, चौर्य्यादिदुष्टकर्म्मणि च। कर्म्मशून्ये त्रि॰।
**अकृष्टपच्य** त्रि॰ न कृष्टे कर्षणे पच्यते पच्-यत्। कृष्यादिकं विना स्वयं पक्के नीवारादौ।
**अकृष्णकर्म्मन्** त्रि॰ न-कृष्ण-कर्म्मन् ब॰। अदुष्टाचारे पुण्यशीले।
**अकौशल** न॰ कुशलस्य भाव कुशल+अण् न॰त॰। अपाटवे। बहु॰। पाटवशून्ये त्रि॰।
**अक्का** स्त्री॰ अक-कन्। मातरि।
**अक्त** त्रि॰ अन्ज-क्त। कृताञ्जने,परिमिते,व्याप्ते, संकुले च।
**अक्रम** त्रि॰ न-क्रम न॰। क्रमशून्ये,यौगपद्ये,पादशून्ये च।

**अक्रान्ता** स्त्री॰ न क्रम-क्त। वृहत्याम्। क्रान्तभिन्ने त्रि॰।
**अक्रूर** पु॰ न-क्रूर न॰त॰। यदुवंशीयन्पभेदे। क्रूरभिन्ने त्रि॰।
**अक्रोध** पु॰ क्रुध-घञ् न॰त॰। कोपनिवृत्तौ। ब॰। कोपशून्य त्रि॰
**अक्ष** व्याप्तौ संहतौ च भ्वादिगणीयः स्वादिश्च पर॰। अक्ष्णोति अक्षति।
**अक्ष** न॰ अक्ष-अच्। इन्द्रिये,कायोद्भवरसाञ्जने,(तुंता) सव्वर्चल-सञ्चारे। अक्ष घञ् पु॰। द्यूतसाधने पाशकादौ, षोडशमाषकमानरूपे कर्षे,रथावयवे चक्रे, क्रयविक्रयचिन्तायाम्, विभीतकवृक्षे वएड़ा इति ख्याते, सर्पे, शकटे, विवादविज्ञाततत्त्वे, रुद्राक्षे, जपमालायाञ्च।
**अक्षक** त्रि॰ अक्ष-ण्वुल्। पाशकादिक्रियाकारिणि,व्यापके च।
**अक्षत** न॰ क्षण्-क्त-न त॰। यवे,क्षतरहिते च। लाजेषु पु॰ब॰ व॰।
**अक्षदर्शक** पु॰ अक्ष-दृश-ण्वुल्। द्यूतकारिणि। व्यवहारादिदर्शिनि त्रि॰। स्त्रियाम् अक्षदर्शिका।
**अक्षदृश्** पु॰ अक्ष-(व्यवहार) दृश-क्विप्। व्यवहारनिर्णेतरि। द्यूतदर्शके त्रि॰। [अक्षदेविनी।
**अक्षदेविन्** त्रि॰ अक्ष-दिव-णिनि। द्यूतकारिणि स्त्रियाम्
**अक्षद्यू** त्रि॰ अक्ष दिव-क्विप्। पाशकादिक्रियाकारिणि, स्त्रीने अक्षद्यु।
**अक्षधुरा** स्त्री॰ अक्ष-(चक्र) धुर्-(अग्र) ६त॰। चक्राग्रे।
**अक्षधूर्त्त** पु॰ धुर्व्व-क्त अक्ष-धूर्त्त ७त॰। द्यूतकारिणि,षाखोट इति प्रसिद्धे वृक्षे च।
**अक्षधूर्त्तिल** पु॰ अक्ष-(शकट) धुर्व-तिल। वृषे।
**अक्षपाटक** पु॰अक्ष-(व्यवहार) पट-ण्वुल्। व्यवहारनिर्णेतरि।
**अक्षपाद** पु॰अक्ष-(चक्षु) पाद ब॰।गौतमे (न्यायदर्शनप्रवर्त्तक मुनौ)। अक्ष-(चक्र) पाद (अवयव) ६त॰। चक्राङ्गे।
**अक्षम** त्रि॰क्षम-अच् न॰त॰। अशक्ते। ब॰। क्षमारहिते।
**अक्षमा** स्त्री॰ क्षम-अङ् न॰त॰। ईर्ष्यायाम्, असहने च।
**अक्षमाला** स्त्री॰अक्ष-माला ६त॰। जपमालायाम्। [त्रि॰।
**अक्षय** पु॰न॰ क्षि-अच्। क्षयाभावे। ब॰। नाशरहिते,क्षयशून्ये च
**अक्षया** स्त्री॰ सोमवारे,अमावास्यातिथौ, रविवारे सप्तम्यां, कुजवारे चतुर्थ्याञ्च। वैशाखशुक्लतृतीयायामपि।
**अक्षय्य** न॰ अक्षयाय हितम् अक्षय+यत्। श्राद्धशेषे देये घृतमधुयुक्ते जले, अक्षयधर्म्मे च।
**अक्षर** पु॰ क्षर-अच् न॰त॰। अकारादिवर्णे। नाशशून्ये त्रि॰। मक्षणि न॰। [लेखके।
**अक्षरचण** (न) त्रि॰ अक्षरेण वित्तः अक्षर+चण (न)।
**अक्षरचुञ्चु** त्रि॰ अक्षरेण वित्तः अक्षर+चुञ्चु। लेखके।

**अक्षरजीवक** त्रि अक्षर-जीव-ण्वुल् । वर्णलेखनोपजीविनि, स्त्रियाम् अक्षरजीविका ।
**अक्षरजीविन्** त्रि अक्षर जीव णिनि । वर्णलेखनोपजीविनि, स्त्रियाम् अक्षरजीविनी । [ लेखन्यादौ ।
**अक्षरतूलिका** स्त्री अक्षर-तूलिका ६त० । वर्णलेखनद्रव्ये
**अक्षरवाट** पु० न क्षरतीति अक्षर वट-वेष्टने घञ् । बाहुयुद्धभूमौ । [ विभिन्नस्त्रियामपि ।
**अक्षरसंस्थान** न० अक्षर-संस्थान ६त० । वर्णविन्यासे । बहु० लिप्यादौ च ।
**अक्षवती** स्त्री अक्ष+मतुप् मस्य वः । अक्षक्रीडायाम् । अक्ष-
**अक्षवित्** त्रि० अक्ष विद्-क्विप् । द्यूततत्त्वे व्यवहाराभिज्ञे च ।
**अक्षशौण्ड** पु० अक्ष शौण्ड ७त । द्यूतदक्षे । [ च ।
**अक्षसूत्र** न० अक्ष सूत्र ६त० । जपमालासूत्रे यज्ञसूत्रे, उपवीते
**अक्षाग्रकीलक** पु० स्त्री० अक्ष (चक्र) अग्र कीलक ६त । चक्रा-ग्रस्थापिते शङ्कौ । [हिते त्रि० ।
**अक्षान्ति** स्त्री० क्षम क्तिन् न०त० । ईर्ष्यायाम् । ब० । क्षमार-
**अक्षारलवण** न० क्षारलवण न०त०, ब वा । क्षारलवण-भिन्ने सैन्धवे, सामुद्रे च । गोधूम गोधूमश्चैव धान्यं यस्मा-ल्लिखा यथा । सामुद्रं सैन्धवश्चैव अक्षारलवणं स्मृतमिति स्मृतिपरिभाषितेऽपि ।
**अक्षि** न० अश क्सि । चक्षुषि । [मिति केचित् ।
**अक्षिकूटक** न अक्षि कूटक, ६त० । चक्षुर्गोलके तत्तारकायां
**अक्षिगत** त्रि० अक्षिविषयगत शाकपार्थिवादि त० । द्वेष्ये रिपौ च
**अक्षिभेषज** पु अक्षि भेष (रोग) जि ड । लोध्रविशेषे ।
**अक्षिव** न क्षिव क न०त० । सामुद्रलवणे । [पाते च ।
**अक्षिविकूणित** न० अक्षि वि-कूण क्त । अपाङ्गदर्शने कटाक्ष
**अक्षीव** पु क्षीव क, न त० । सामुद्रलवणे । क्षीबो मत्तो न० त० । मत्तभिन्ने त्रि० ।
**अक्षोट** पु अक्ष-ओट, अक्षस्येव बिभीतकस्येव उटा पत्रा-ण्यस्येति वा । पार्वतीयपीलुवृक्षे आखरोट इति प्रसिद्धे ।
**अक्षोड** पु० अक्ष ओड । पार्वतीयपीलुवृक्षे ।
**अक्षोभ** पु क्षुभ-घञ् न० त । हस्तिबन्धनस्तम्भे । बहु० । क्षोभरहिते त्रि ।
**अक्षौहिणी** स्त्री० अक्ष (शकटादि) ऊहि णिनि । सेनाविशेष युक्तरथादिसेनायाम् । तत्सङ्ख्या च २१८७० हस्तिन । २१८७० रथा । ६५६१० अश्वा । १०९३५० पदातय ।
**अखट्ट** पु० खट्ट अच् न०त० । पियालवृक्षे पियाशाल ख्याते ।
**अखट्टि** स्त्री खट्ट इ न०त० । अनिष्टव्यवहारे । अखट्टी च ।

**अखण्ड** त्रि खडि-अच् न०त । सम्पूर्णे, सकले । खण्डभिन्ने पु न० ।
**अखण्डन** पु० खडि ल्युट् न० । काले । खण्डनशून्ये त्रि० ।
**अखण्डित** त्रि० खडि क्त न त० । सम्पूर्णे, खण्डितभिन्ने च ।
**अखात** न० खन-क्त न०त० । देवखाते मनुष्याद्यखाते च । खातभिन्ने त्रि० । [ गोमायादौ, भक्ष्यभिन्ने च ।
**अखाद्य** त्रि० खाद-अर्हार्थे ण्यत् न० त० । भोजनानर्हे
**अखिल** त्रि० न खिल्यते न कणश आदीयते इति खिल-क न०त । समग्रे । खिलाभिन्ने कृष्टभूम्यादौ स्त्री० ।
**अग** इदित् गतौ भ्वादि० पर० । अङ्गति । आङ्गीत् ।
**अग** वक्रगतौ भ्वादि० पर० घटादि । अगति आगीत् । अगयति ।
**अग** पु० न गच्छतीति गम-ड न०त० । वृक्षे, पर्वते, सूर्ये च । गमनाकर्त्तरि स्थावरादौ त्रि ।
**अगच्छ** पु० गम श न०त० । वृक्षे ।
**अगति** स्त्री० गम-क्तिन् न०त० । उपायाभावे । बहु । गति शून्ये उपायशून्ये च त्रि । [रोगशून्ये अकथने च त्रि० ।
**अगद** पु नास्ति गदो रोगो यस्मात् ५ब० । औषधे । ६ब० ।
**अगदङ्कार** पु० अगद करोति अगद कृ अण् मुम् च । वैद्ये ।
**अगम** पु० न गच्छतीति गम-अच् न०त० । वृक्षे । अगन्तरि त्रि ।
**अगम्य** त्रि न-गन्तुमर्हति गम-यत् न० त० । गमनानर्हे, अन्त्यजातिस्त्रियाञ्च स्त्री० ।
**अगरी** स्त्री० नास्ति गरो विषो यस्या ५ब० ङीप् । मूषिकविष हारिणि देवताड वृक्षे । विषहारिणि द्रव्यमात्रे त्रि० ।
**अगरु** न० न गिरति गॄ उ । अगुरुचन्दने स्वनामप्रसिद्धे ।
**अगस्ति** पु अग विन्ध्याचलम् अस्यति अग-अस् ति शकन्ध्वा दि० । अगस्त्यनामके मुनौ ।
**अगस्तिद्रु** पु० अगस्तिप्रिय द्रु इव शाक०त० । वकवृक्षे ।
**अगस्ती** स्त्री० अगस्तिनिवासत्वात् दक्षिणस्यां दिशि ।
**अगस्त्य** पु० अग विन्ध्याचल स्त्यायति स्तभ्नाति स्त्यै-क । अगस्त्यनामके मुनौ । [ वृक्षे न० ।
**अगाध** त्रि० गाध प्रतिष्ठायाम् गाध घञ् न त० । अतिगभीरे ।
**अगाधजल** पु० अगाध-जल-७ब० । अतिगभीरजले ह्रदे ।
**अगार** न० अगम् न गच्छन्तमृच्छति प्राप्नोति अग ऋ अण् । गृहे । [ च त्रि० ।
**अगु** पु० न गौ किरणो यस्य । राहौ । किरणशून्ये, गोशून्ये
**अगुरु** न० न गुरुर्यस्मात् । अगुरुचन्दने स्वनामप्रसिद्धे, शिंशपा (सिसु) वृक्षे च । गुरुभिन्ने, उपदेशकशून्ये च त्रि० ।
**अगुरुशिंशपा** स्त्री० अगुरु सारो यस्या तादृशी शिंशपा मध्यपदलोपि त० । सिसु इति प्रसिद्धे शिंशपावृक्षे ।

**अगढगन्ध** न॰ न गूढो गन्धो यस्य ब॰। हिङ्गुद्रव्ये। अगूढ़-सौरभे द्रव्यमात्रे त्रि॰।

**अग्नायी** स्त्री॰ अग्नि+ऐङ्-ङीप्। अग्नेर्योषिति स्वाहाख्यायाम्।

**अग्नि** पु॰ अङ्गति ऊर्द्धं गच्छति अगि-नि नलोपः। अग्नौ स्वनामप्रसिद्धे तेजोभेदे।

**अग्निक** पु॰ अग्निवत् कायति प्रकाशते कै-क। इन्द्रगोपकीटे।

**अग्निकण** पु॰ अग्नि-कण ष॰त॰। अग्निच्युतक्षुद्रांशे।

**अग्निकारिका** स्त्री अग्नि-कारिका ष॰त॰। अग्निकृत्ये होमाधानादौ, आग्नुद्दीपकौषधिभेदे च। [धानादौ।

**अग्निकार्य्य** न॰ अग्नि-कार्य्य (कृ-ण्यत्) ष॰त॰। अग्निकृत्ये होमा

**अग्निकाष्ठ** न॰ अग्नेः (उद्दीपनाय) काष्ठम् तादर्थ्यषष्ठ्या त॰। अगुरुकाष्ठे।

**अग्निकुक्कुट** पु॰ अग्नेः कुक्कुटइव रक्तवर्णस्फुलिङ्गत्वात्। ज्वलदग्निव्याप्ततृणपुञ्जे लुडा इति ख्याते।

**अग्निकोण** न॰ अग्नेः कोणः ष॰त॰। पूर्वदक्षिणयोर्मध्ये दिग्भागे तस्य वह्निदैवत्यप्रसिद्धेः। [क्षीति प्रसिद्धे काचे च।

**अग्निगर्भ** पु॰ अग्निर्गर्भे यस्य ब॰। सूर्य्यकान्तमणौ आत-

**अग्निचयन** पु॰ अग्निश्चीयतेऽनेन चि-ल्युट्। मन्त्रभेदे, काष्ठे च। [सततवह्निस्थापने अग्निहोत्रिणि।

**अग्निचित्** पु॰ अग्निं चितवान् चि-भूतार्थे क्विप्। मन्त्रपूर्व्वक

**अग्निज** पु॰ अग्नि-जन-ड। अग्निजारवृक्षे। स्वर्णे न॰। अग्निजातद्रव्ये त्रि॰। [न॰। वह्निजातमात्रे त्रि॰

**अग्निजात** पु॰ अग्नेर्जात जन-क्त। अग्निजारवृक्षे स्वर्णे

**अग्निजार** पु॰ अग्नि जारयति जॄ-अण्। अग्निजारनामकवृक्षे

**अग्निजाल** पु॰ अग्निं जारयति जॄ-अण् लत्वम्। अग्निजार वृक्षे। [ष॰त॰। अग्निशिखायाम्।

**अग्निजिह्वा** स्त्री॰ अग्नेर्जिह्वेव। लाङ्गलीवृक्षे। ष॰त॰। अग्नि जिह्वायाम्। अग्निर्जिह्वा येषां ब॰। देवे

**अग्निज्वाला** स्त्री॰ अग्नेर्ज्वालेव। गजपिप्पलीवृक्षे।

**अग्निदमना** स्त्री॰ अग्निं दमयतीति दमि-ल्यु। गणिकारी-[नामकक्षुपभेदे।

**अग्निदेवा** स्त्री॰ अग्निर्देवो यस्याः। कृत्तिकाख्यतारायां तस्या अग्निदैवतत्वात्। अग्निदैवतमात्रे त्रि॰।

**अग्निनिर्य्यास** पु॰ अग्नेर्निर्यासः (क्षीरवत् निष्यन्दः)। उपचारात् तज्जाते अग्निजारवृक्षे। स्वर्णे न॰।

**अग्निप्रस्तर** पु॰ अग्नि प्रस्तृणाति स्तॄ-अच् अग्नेर्वा प्रस्तर। चकमकीति ख्यातेऽग्न्युत्थापके प्रस्तरखण्डे।

**अग्निबाहु** पु॰ अग्नेर्बाहुरिव दीर्घशिखत्वात्। धूमे।

**अग्निभ** न॰ अग्निरिव भाति भा-क। स्वर्णे। अग्निवत् प्रकाशवति त्रि॰।

**अग्निभू** पु॰ अग्नेर्भवति भू-क्विप्। कार्त्तिकेये। स्वर्णे न॰। अग्निजातमात्रे त्रि॰।

**अग्निमणि** पु॰ अग्नेः-मणि। अग्निसाधने आतसीति प्रसिद्धे काचे। सूर्य्यकान्ते मणौ च।

**अग्निमथन** पु॰ अग्नये मथ्यतेऽसौ मन्थ-ल्युट् नलोपः। गणियारीति ख्याते गणिकारीवृक्षे। तत्काष्ठयोर्घर्षणे हि झटिति वह्निरुद्दीप्यते। अग्निमन्थनमन्त्रे च।

**अग्निमन्थ** पु॰ अग्नये मथ्यतेऽसौ मन्थ अप्। गणिकारीवृक्षे।

**अग्निमारुति** पु॰ अग्निमारुत+इञ् हस्व कल्पभेदे अग्नि-वायुरूपयोर्द्वयोः पुत्रे अगस्त्यमुनौ।

**अग्निमुख** पु॰ अग्निर्मुखमिव यस्य। देवे, हुतद्रव्यं हि देवैरग्निद्वारेणैवाश्यते। अग्निर्मुखे यस्य तस्मिन्। विप्रे, शापरूपाग्नेस्तस्य मुखे स्थितत्वात्। अग्निर्मुखं प्रधानमुपास्यो यस्य तस्मिन् वा। विप्रे। अग्नेर्मुखे तु न॰।

**अग्निमुखी** स्त्री अग्निरिव मुखमस्य यस्याः गौरादित्वात् ङीप्। (भेला) भल्लातकवृक्षे, पाकशालायाम्, गायत्रीमन्त्रे च।

**अग्निरक्षण** न॰ अग्निः रक्ष्यतेऽनेन रक्ष-ल्युट्। राक्षसादिभ्योऽग्निरक्षाकारके मन्त्रभेदे, अग्निहोत्रे च।

**अग्निरजस्** पु॰ अग्निरिव रज्यते दीप्यते रन्ज असुन् नलोपः। रक्तवर्णे इन्द्रगोपनामककीटे। अग्निवीर्य्ये, स्वर्णे च।

**अग्निवल्लभ** पु॰ अग्नेर्वल्लभ सुखेन दाह्यत्वात्। शालवृक्षे। अग्निप्रिये त्रि॰।

**अग्निवाह** पु॰ अग्निं वाहयति गमयति बोधयति वा वाहि अण्। धूमे, छागे च। वह्निवाहकमात्रे त्रि॰।

**अग्निवित्** पु॰ अग्निं विन्दते विन्द-क्विप्। अग्निहोत्रिणि साग्निके। [स्वर्णे, वह्निरेतसि च।

**अग्निवीज** न॰ अग्नेर्वीजम् तद्रेतोजातत्वात् उपचारात्।

**अग्निवीर्य्य** न॰ अग्नेर्वीर्य्यं, तद्वीर्य्यजातत्वादुपचारात् स्वर्णे वह्निरेतसि, तत्पराक्रमे च। ब॰। अग्नितुल्यपराक्रमवति त्रि॰

**अग्निशिख** पु॰ अग्निरिव शिखा यस्य। कुङ्कुमवृक्षे, कुसुम्भवृक्षे, अग्नितुल्यशिखे लाङ्गलीवृक्षे च। अग्नितुल्यजटावति त्रि॰

**अग्निशेखर** पु॰ अग्निरिव शेखरमस्य यस्य। कुङ्कुमवृक्षे कुसुम्भवृक्षे लाङ्गलीवृक्षे च। अग्नितुल्याग्रवति त्रि॰।

**अग्निष्टोम** पु॰ अग्नेः स्तोमं स्तु मन् षत्वम्। यागविशेषे।

**अग्निष्ठ** पु॰ अग्नौ स्थातुमर्हति स्था-क षत्वम्। वह्नौ स्थितियोग्ये लौहमये कटाहादिपात्रे।

**अग्निसम्भव** पु० अग्नौ सम्भवति भू अच् । अरण्यकुसुम्भे । अग्निसम्भूतमात्रे त्रि० ।

**अग्निसहाय** पु अग्निना सह अयते अय अच् । वायौ अग्निसहायधूमवद्वेगवत्त्वात् शीघ्रगतित्वाच्च वनकपोते च ।

**अग्निसार** न० अग्नौ सारो यस्य अत्यन्ताग्न्यादुत्तापनेऽपि सारांशादहनात् । रसाञ्जने । अग्नेर्मध्ये अस्त्री० ।

**अग्निस्वात्त** (ष्वात्त) पु ब०व अग्निना (श्राद्धीयविप्रकरणाग्नौ) सुष्ठु आत्त भक्षणं येषां आ दा क्त षत्वमिति महव । मरीचिपुत्रे पितृगणविशेषे ।

**अग्निहोत्र** पु० अग्नौ-हूयतेऽत्र हु-त्र । मन्त्रकरणकवह्निस्थापनपूर्व्वकहोमादौ । अग्निहोत्रसम्बन्धित्वात् वह्नौ च ।

**अग्निहोत्रिन्** त्रि० अग्निहोत्र+इनि । अग्निस्थापनपूर्व्वके सायम्प्रातरादिकाले होमकर्त्तरि साग्निके ।

**अग्नीध्** पु अग्निरिध्यतेऽनेन अग्नि इन्ध-क्विप् । अग्निप्रज्वालनमन्त्रे ।

**अग्नीध्र** पु० अग्निरिध्यतेऽनेन कर्त्रा अग्नि इन्ध-रक् । अग्निरक्षणकारके ब्रह्मापरपर्य्याये ऋत्विग्भेदे । अग्निं धारयत्यत्र अग्निध्र इत्यपि ष्ट क । अग्निगृहे, होमादौ च ।

**अग्नीन्धन** त्रि० अग्निरिध्यतेऽनेन अग्नि इन्ध ल्युट् । मन्त्रभेदे । स्त्रियां टित्वात् ङीप् । भावे ल्युटि । अग्निज्वालने न० ।

**अग्न्याधान** न० अग्नेराधानम् आ धाञ् ल्युट् ६त । वेदमन्त्रद्वारा वह्निस्थापने । बहु० । अग्निहोत्रयागे ।

**अग्न्यालय** पु० अग्नेरालय अग्नि आ ली अच् ६त० । वेदमन्त्रद्वारा वह्निस्थापनयोग्ये स्थाने, तदाधारे-कुण्डे स्थण्डिले च ।

**अग्न्याहित** पु० अग्निराहितो येन अग्नि आ-धाञ् कर्म्मणि क्त वा परनिपात । अग्निहोत्रिणि साग्निके ।

**अग्न्युत्पात** पु० अग्निना कृत उत्पात (अनिष्टसूचकोपद्रव) उत्-पत घञ् ३त । आकाशस्याग्निकृतविकारसूचिते उपद्रवे, उल्कापातादावशुभसूचके, धूमकेतुकृतविकारे च ।

**अग्न्युपस्थान** त्रि अग्निरुपस्थीयतेऽनेन अग्नि उप स्था ल्युट् । वह्न्युपस्थानमन्त्रे । स्त्रियां ङीप् । ६त० । वह्न्युपस्थाने न ।

**अग्र** न० अङ्ग-रक् नलोप । उपरिभागे शेषभागे, आलम्बने, पूर्व्वभागे, पलपरिमाणे समूहे च । प्रधाने, अधिके, प्रथमे च त्रि ।

**अग्रकाय** अस्त्री० अग्र काय अवयवावयविनोरभेदात् अग्र हस्तवत् कर्म्म० । देहपूर्व्वभागे ।

**अग्रग** त्रि० अग्रे गच्छतीति अग्र गम ड । प्रथमगामिनि । स्त्रियामग्रगा । [प्रधाने च ।

**अग्रगण्य** त्रि० अग्रे गण्यते अग्र गण यत् ७त० । अग्रगणनीये,

**अग्रगामिन्** त्रि अग्रे गच्छति अग्र गम-णिनि ७त० । अग्रसरे । स्त्रियामग्रगामिनी ।

**अग्रज** पु अग्रे जायते अग्र जन ड । ज्येष्ठभ्रातरि । अग्रजातमात्रे त्रि । ज्येष्ठभगिन्यां स्त्री० ।

**अग्रजङ्घा** स्त्री अग्रा जङ्घा अवयवावयविनोरभेदात् क० स । जङ्घाग्रभागे ।

**अग्रजन्मन्** पु० अग्रे जन्म यस्य अग्र जन् मनिन् व्यधि० बहु० । ज्येष्ठभ्रातरि, विप्रे च । अग्रजातमात्रे त्रि ।

**अग्रजात** पु अग्रे जात अग्र-जन् क्त ७त० । ज्येष्ठभ्रातरि विप्रे च । ज्येष्ठभगिन्यां स्त्री । पूर्व्वजातमात्रे त्रि० ।

**अग्रजाति** पु० अग्रा श्रेष्ठा जातिर्यस्य,अग्र जन क्तिन् । विप्रे ।

**अग्रजिह्वा** स्त्री० अग्रा जिह्वा अग्रहस्तवत् क० । जिह्वाग्रभागे । [श्रेष्ठे च ।

**अग्रणी** त्रि० अग्रे नीयतेऽसौ अग्र नी क्विप् णत्वम् । प्रभौ

**अग्रतस्** अव्य० अग्रे अग्राद्वा अग्र तसिल् । पूर्व्वभागे, पूर्व्वभागावधिके च । [अग्रगामिनि । स्त्रियां ङीप् ।

**अग्रतःसर** त्रि० अग्रतः सरति गच्छति अग्रतस् सृ-ट ७त ।

**अग्रदानिन्** पु० अग्रे दानं यस्य अग्र-दान+इनि । प्रेतोद्देशेन यद्दानं दीयते तत्प्रतिग्राहिणि अग्रदानीति ख्याते विप्रे ।

**अग्रनख** अस्त्री० अग्र नख अग्रहस्तवत् क० । नखाग्रे ।

**अग्रनासिका** स्त्री० अग्रा नासिका अग्रहस्तवत् क० । नासिकाग्रभागे । [शोलि ख्याते वृक्षे ।

**अग्रपर्णी** स्त्री अग्रे पर्णं यस्याः जातित्वात् ङीप् । आलकु-

**अग्रभाग** पु० भज्यते इति भाग एकदेश अग्र पूर्व्व भाग भज-घञ् क० । श्राद्धादौ प्रथमसमुद्धृत्य देये द्रव्ये अवयवस्य अग्रदेशे च । यथा शरस्य शल्याग्रम् ।

**अग्रभुक्** त्रि० अग्रे देवपित्रादिभ्योऽदत्त्वा भुङ्क्ते अग्र भुज क्विप् । औदरिके ।

**अग्रमांस** न० अग्र प्रधानं भक्ष्यत्वेन मन्यते मन्-स दीर्घ क० । हृदयस्थे पद्माकारे (फुलका) इति नामके मांसे । केचित् युकृत्प्रमांसमेक नामेत्याहु । अग्रमांस इति प्रसिद्धे रोगभेदे च ।

**अग्रमुख** न अग्र मुख अग्रहस्तवत् क० । मुखाग्रे ।

**अग्रयान** न० अग्रे यानं यस्य या-ल्युट् स[illegible]णत्वम् । पुरोगामिनि सैन्ये । अग्रगामिमात्रे त्रि० ।

**अग्रलोहिता** स्त्री० अग्रमुपरिभागः लोहितं यस्याः ब० । चिल्लीति प्रसिद्धे शाकभेदे ।

**अग्रबीज** पु० अग्रं शाखाग्रं बीजमुत्पादकं यस्य । छिन्नाग्र-तरुखण्डरूढे कलम इति प्रसिद्धे काण्डजाते कुरण्टकादिवृक्षे

**अग्रसन्धानी** स्त्री० अग्रे फलोत्पत्तेः प्राक् सन्धानं कार्य्यस्य ज्ञानं यस्या ङीप् । यमपञ्जिकायाम् । यत्र हि प्राणिवर्गस्य प्राग्भवीयकर्म्मानुसारेण शुभाशुभसूचनं सर्व्वं लिख्यते सा यमपञ्जिका, कैश्चित् यमपट्टिकेति वा कथ्यते । अग्र-सन्धानकारिणि तु त्रि० ।

**अग्रसन्ध्या** स्त्री० अग्रं सन्ध्यायाः सर्व्वोऽप्येकदेशः कालवाचिना समस्यते इत्युक्तेः एक०त० । सन्ध्यापूर्व्वसमये । अग्रा पूर्व्वा सन्ध्या इति क० । प्रातःसन्ध्यायाम् ।

**अग्रसर** त्रि० अग्रे सरति गच्छति अग्र-सृ-ट ७त० । अग्र-गामिनि । स्त्रियां ङीप् ।

**अग्रह** पु० ग्रह (परिग्रह०) न०त० । परिग्रहाभावे । बहु० । परिग्रहशून्ये सन्यासिप्रभृतौ त्रि० ।

**अग्रहर** पु० अग्रे ह्रियते दीयतेऽसौ अग्र-हृ-अच् । अग्रदेये वस्तुनि, भागाग्रे च । अग्र-हृ-ट । अग्रहारिणि तु त्रि० ।

**अग्रहस्त** पु० अग्र हस्तः अवयवावयविनोरभेदात् क० । हस्ताग्रे ।

**अग्रहायणः** अस्त्री० हय व्रीहिकालयोरिति काले वाच्ये हा-ल्युट् युक् च सावं स्वभावं जहाति हायनो वर्षः अग्र पूर्व्वं हायन क० णत्वम् । मार्गशीर्षे मासि तस्य च वर्षादित्वम् अमरकोषादौ मार्गादिमारभ्य कार्त्तिकान्त-मासकीर्त्तनात् स्पष्टमवगतम् ।

**अग्रहायणी** स्त्री० अग्नूनि जहातीति हायनो व्रीहि० अग्राः श्रेष्ठा हायनाः शालयो यस्याः संज्ञात्वात् णत्वं गौरादि-त्वात् ङीप् । मृगशीर्षनक्षत्रे । तस्य च नक्षत्रस्य रात्रौ प्रथमउदयकाले श्रेष्ठव्रीहीणां धान्यानामुत्पत्तिर्लोके दृश्यते । तत्र नक्षत्रं सौराग्रहायणे मासि रात्रौ प्रथममुदेति ।

**अग्रहार** पु० अग्रे ह्रियतेऽसौ हृ-घञ् । अग्रहरे (पूर्व्वोक्तेऽर्थे) ब्रह्मचारिणे देये क्षेत्रादौ च । अग्र-हृ-अण् । अग्रहा-रिणि त्रि० । स्त्रियां ङीप् ।

**अग्राह्य** त्रि० न-ग्रह-ण्यत् । ग्रहणायोग्ये शिवनिर्म्माल्यादौ प्रतिग्रहायोग्ये तिलान्नसुवर्णादौ च ।

**अग्रिम** पु० अग्रे भवः अग्र+डिमच् । ज्येष्ठभ्रातरि । श्रेष्ठे उत्तमे च त्रि० ।

**अग्रिय** पु० अग्रे भव० अग्र+घ । ज्येष्ठभ्रातरि । श्रेष्ठे उत्तमे च त्रि० ।

**अग्रीय** पु० अग्रे भवः अग्र+छ । ज्येष्ठभ्रातरि । श्रेष्ठे उत्तमे च त्रि० ।

**अग्रेगा** त्रि० अग्रे गच्छति अग्र-गम-क्वनिप् अलुक्स० । अग्र-गामिनि ।

**अग्रेगू** त्रि० अग्रे गच्छति अग्रे-गम-डू+अलुक्स० । अग्रसरे-सेवके ।

**अग्रेदिधिषू** पु० दिधिं धैर्य्यं स्यति निरस्यति, दिधिषूः द्विरूढा पुनर्भू योषित् दिधि-सो-कू-षत्वम् अग्रे प्रधाना दिधिषूर्यस्य अलुक्स० कबभावाद्धृस्वत्वे । पुनर्भूविवाहकारिणि । निपा-तनात् अस्य ह्रस्वान्ततापीष्यते । प्रागूढकनिष्ठभगिन्या अनूढ-ज्येष्ठभगिन्यां च । ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽ-नुजा । सा चाग्रेदिधिषूर्ज्ञेया पूर्व्वा तु दिधिषूः स्मृतेति मनूक्तेः । एतत्पक्षे च अग्रे स्वविवाहात् पूर्व्वं दिधिषूः ज्येष्ठाविवाहप्रतिबन्धकधैर्य्यनाशकारिणी अनुजा यस्या इति विग्रह० ।

**अग्रेवण** न० अग्रे वनस्य ७त० अलुक्स० णत्वञ्च । वनाग्रदेशे ।

**अग्रेसर** त्रि० अग्रे सरति गच्छति अग्रे सृ-ट अलुक्स० ७त० । अग्रगामिनि स्त्रियां ङीप् ।

**अग्र्य** पु० अग्रे भवः अग्र+यत् । ज्येष्ठभ्रातरि । प्रधाने श्रेष्ठे च त्रि० ।

**अघ** इदित् गतौ भ्वादि० आत्मने० सक० सेट् । अङ्घते । आङ्घिष्ट ।

**अघ** पापकरणे अदन्तचुरादि० उभय० । अघयति-ते ।

**अघ** न० चुरा० अघ अच् । पापे, व्यसने, दुःखे च ।

**अघमर्षण** त्रि० अघं पापं मृष्यतेऽनेन अघ-मृष-ल्युट् । सर्व्व-पापनाशार्थं जप्ये मन्त्रादौ । स्त्रियां ङीप् ।

**अघोर** पु० घुर-अच् । न घोरः (शान्त०) न०त० । महादेवे । घोरभिन्ने त्रि० । भाद्रकृष्णचतुर्द्दश्यान्तु स्त्री० ।

**अघोष** पु० घुष-घञ् न० त० । वर्णोच्चारणबाह्ययत्नविशेषे । क च खयां यमः खयः+क ×पौ विसर्गः शर एव च । एते श्वासानुप्रदानाः अघोषाश्च विवृण्वते इति शिक्षोक्त दिशा खयादिवर्णानामुच्चारणप्रयत्न ।

**अघ्न्य** पु० न हन्ति स्रष्टिकर्त्तृत्वात् न-हन-यक् निपातनात् साधु । प्रजापतौ । न हन्यते स्त्रीहत्याया निषिद्धत्वात् । स्त्रियां गवि तु स्त्री० ।

**अङ्क** (क) संख्याकरणे चिह्नयुक्तकरणे अदन्तचुरादि० उभ० सक० सेट् । अङ्कय-ति-ते आङ्किक-त्-त । अङ्कापयति ते इति केचित् ।

**अङ्क** पु० अङ्क-घञ् । दृश्यकाव्यविशेषे अङ्क इति प्रसिद्धे नाट-कपरिच्छेदे, पर्व्वते, चिह्ने, रेखायां, युद्धभूषणे, समीपे च । क्रोडे तु अस्त्री० ।

**अङ्कति** पु॰ अन्च-(गतौ) अति कुत्वम्। वाते। पूजनार्थत्वे कर्म्मणि अति। ब्रह्मणि अग्नौ च। अग्निहोत्रिणि त्रि। स्त्रियाम् अङ्कती च।

**अङ्कन** त्रि॰ अङ्क-ल्युट्। अङ्कनसाधनद्रव्ये दागनीति प्रसिद्धे स्त्रियामङ्कनी। चिह्नकरणमात्रे न॰।

**अङ्कपालि (ली)** स्त्री॰ पा अनि अङ्क-पालि इत॰ वा ङीप्। क्रोडमात्रे। अङ्केन पालयतीति अङ्क-पालि-इ। उपमातरि (धाइमा) इति प्रसिद्धायाम्। अङ्कस्य पालिरिव त॰। आलिङ्गने च।

**अङ्कपालिका** स्त्री॰ अङ्कपालि+क। धात्र्याम्, वेदिकायां, क्रोडप्रान्तभागे, आलिङ्गने च।

**अङ्कस्** न॰ अनक्-असुन् कुत्वम्। चिह्ने, शरीरे च।

**अङ्कित** त्रि॰ अङ्क-क्त। चिह्निते लिखिते, कृतसंख्यायाञ्च।

**अङ्किन्** त्रि॰अङ्क (आलिङ्गनस्थानत्वेन) अस्त्यस्य अङ्क+इनि। अङ्केनालिङ्ग्ये-मृदङ्गादिवाद्यभेदे क्रोडविशिष्टे च। स्त्रियामङ्किनी।

**अङ्कुर** अस्त्री॰ अङ्क उरच्। बीजादभिनवोत्पन्ने अविकाशद्विदल जाते च तृणादौ, जले च। लोमशल्यजाते इति साधर्म्यात् रुधिरे, लोम्नि च।

**अङ्कुरक** पु॰ अङ्क्यते यत्नेन रक्ष्यतेऽसौ अनुच-उरच् ततः क। पक्ष्यादीनां वासस्थाने बासा इति ख्याते।

**अङ्कुश** अस्त्री॰ अङ्क उशच्। हस्तिचालनोपयोगिनि वक्राग्रे लौहास्त्रभेदे डाङस इति ख्याते।

**अङ्कुशदुर्द्धर** पु दु खेन धार्य्यते व्यवस्थाप्यते दुर् धारि खल् ततः अङ्कुशस्य दुर्द्धर इत॰। दुर्दान्तहस्तिनि।

**अङ्कूर** पु अङ्क-खर्ज्जूरादित्वात् ऊरच्। अभिनवोत्पन्ने तृणादौ। [लौहमयेऽस्त्रभेदे।

**अङ्कूष** अस्त्री अङ्क ऊषच्। हस्तिचालनोपयोगिनि वक्राग्रे

**अङ्कोट (ठ) (ल)** पु अङ्क्यते लक्ष्यते कीलकैः। अङ्क-ओट (ओठ) (ओल)। पीतवर्णसारे गन्धयुक्तपुष्पे दीर्घकण्टकयुक्ते रक्तवर्णफले आकोड इति ख्याते वृक्षे।

**अङ्कोलक** पु अङ्कोल+क। आकोड इति ख्याते वृक्षे।

**अङ्कोलसार** पु॰ अङ्कोलस्य सार इव। अङ्कोटवृक्षजाते विषभेदे।

**अङ्कोलिका** स्त्री॰ अङ्क कल् अच् सम्प्रसारणे अङ्कोला+क। आलिङ्गनक्रियायाम्।

**अङ्क्य** पु॰ अङ्के क्रोडे स्थापयित्वा वाद्यतेऽसौ अङ्के साधु अङ्क यत्। सार्द्धतालत्रयायाम चतुर्दशाङ्गुलाननः। हरीतक्याकृतिर्यं स्यादङ्क्योऽर्द्ध स हि वाद्यते इत्युक्ते क्रोडे स्थापनपूर्व्वक वादनीये मृदङ्गादौ। अङ्कनीये त्रि॰।

**अङ्ग** चिह्नयुक्तकरणे अदन्तचुरादि उभय॰ सकर्म्मक॰ सेट्। अङ्गयति ते आञ्जिगत् त। मतान्तरे अङ्गापयति ते।

**अङ्ग** न॰ अङ्ग-अच्। देहे,अवयवे अप्रधाने,उपाये, मनसि च।

**अङ्गग्रह** पु अङ्ग-ग्रह इत॰। देहवेदनायाम्।

**अङ्गज** न॰अङ्गात् जायते अङ्ग जन-ड। रुधिरे। पुत्रे,केशे च पु॰। देहजातमात्रे त्रि॰।

**अङ्गण (न)** न॰अङ्ग्यतेऽत्र अङ्ग ल्युट् पृषोदरादित्वात् वा णत्वम्। (उठान) इति प्रसिद्धे प्राङ्गणे।

**अङ्गति** पु॰ अनक्ति याप्यनेन करणेन। अनज-अति कुत्वम्। वाह्नौ। अज्यते पूज्यते कर्म्मणि अति। ब्रह्मणि, अग्नौ च। अग्निहोत्रिणि त्रि॰। स्त्रियाम् अङ्गती च।

**अङ्गद** न॰ अङ्ग दायति शोधयति दै-क। ताड़,बाजु, इति च प्रसिद्धे बाहुभूषणे। बालिपुत्रे-वानरे पु। अङ्गदानकर्त्तरि त्रि। दक्षिणदिग्गजकरिण्यां स्त्री॰।

**अङ्गना** स्त्री॰प्रशस्तमङ्गमस्ति यस्याः अङ्ग+न। अङ्गसौष्ठववत्यां योषिति,योषिन्मात्रे, उत्तरदिग्गजकरिण्याञ्च।

**अङ्गनाप्रिय** पु प्री-क अङ्गना-प्रिय इत॰। अशोकवृक्षे तत्-पुष्पेण स्त्रियः स्वाङ्ग भूषयन्तीति। योषित्प्रियमात्रे तु त्रि। [आलिङ्गने।

**अङ्गपालि** स्त्री अङ्ग पाल्यते रक्ष्यतेऽत्र अङ्ग-पाल-इ।

**अङ्गपालिका** स्त्री॰ अङ्गं देहं पालयतीति अङ्गपालि-ण्वुल्। धाइमा इति ख्यातायाम् उपमातरि। अङ्गपालनकारके त्रि॰।

**अङ्गमर्द** पु॰ अङ्ग मर्दयति संवाहयति अङ्ग मर्द-णिच् अच्। देहसंवाहके-सेवके। अङ्गमर्दनकारके त्रि॰।

**अङ्गमर्दक** पु॰ अङ्ग मर्दयति अङ्ग-मर्द-णिच् ण्वुल्। देहसंवाहके-सेवके।

**अङ्गमर्दिन्** पु॰ अङ्ग मर्दयति अङ्ग-मर्द-णिच्-णिनि। अङ्गमर्दके सेवके। अङ्गमर्दनकारके त्रि॰ स्त्रियां ङीप्।

**अङ्गरक्त** पु॰ अङ्गेन रक्तः रन्ज क्त ३त। काम्पिल्यदेशजाते रक्तवर्णचूर्णवति-गुडारोचनीति वणिजेषु वैद्येषु च प्रसिद्धे वृक्षभेदे। रक्ताङ्गमात्रे त्रि॰।

**अङ्गरक्षणी** स्त्री अङ्ग रक्ष्यतेऽनया अङ्ग रक्ष ल्युट् ङीप्। आङ्राखा इति प्रसिद्धे वस्त्रे। अङ्गरक्षणकारके त्रि।

**अङ्गराग** पु अङ्ग रज्यतेऽनेन अङ्ग रन्ज-करणे घञ्। अङ्गलेपने कुङ्कुमादौ। भावे घञि। अङ्गस्य विलेपने।

**अङ्गराज्** पु० अङ्गेषु तन्नामकदेशेषु राजते राज-क्विप् ७त०। अङ्गदेशाधिपे कर्णे।

**अङ्गव** न० अङ्गे स्वावयवे वाति अन्तर्भवति अतिशोषणात् सङ्कुचिताङ्गमिव भवति अङ्ग-वा-ड। शुष्कफले।

**अङ्गविकृति** पु० वि-कृ-क्तिन् अङ्गस्य विकृतिश्चालनादि-र्यस्मात् ५त०। म्रगीनाडा इति ख्याते अपस्माररोगे। ६त०। अङ्गस्य विकारे स्त्री०।

**अङ्गविक्षेप** पु० वि-क्षिप-घञ् अङ्गस्य विक्षेपः चालनं यत्र ब०। अङ्गुल्यादिविन्यासभेदेन त्रिंशद्विधे नृत्ये। ६त०। अङ्गस्य चालनमात्रे।

**अङ्गवैकृत** न० विकृतस्य भावः विकृत+अण् अङ्गेन अङ्ग-चेष्टया वैकृतं हृदयभावो ज्ञायते यत्र बहु०। आकार इति ख्यातायाम्-हृदयगतभावावेदकचेष्टायाम्। ६त०। अङ्गस्य विकारे न०।

**अङ्गस्** पु० अगि-असुन् कुत्वञ्च। पक्षिणि इत्युज्ज्वलदत्तः।

**अङ्गसंस्कार** पु० अङ्गं संस्क्रियतेऽत्र अङ्ग-सम्-कृ आधारे घञ्। देहसंशोधनादिसंस्कारकारके स्नाने गोधूमचूर्णा-दिनाङ्गमर्द्दने च। भावे घञ् ६त०। अङ्गस्य संस्कारे विलेपनादौ। अङ्गं संस्करोति अङ्ग-सम्-कृ-कर्त्तरि-अण्। कुङ्कुमादौ त्रि०।

**अङ्गहार** पु० अङ्गं ह्रियते चाल्यतेऽत्र अङ्ग-हृ आधारे घञ्। अङ्गुल्यादिविन्यासभेदेन त्रिंशद्विधे नृत्ये। भावे घञ् ६त०। अङ्गस्य हरणमात्रे।

**अङ्गाङ्गिभावः** पु० अङ्गस्य अङ्गिनश्च भावः। गौणमुख्यभावे।

**अङ्गाधिप** पु० अधि पा-क अङ्ग-अधिप ६त०। अङ्गदेशपतौ कर्णे। अत्र अङ्गाधिपतिरित्यपि।

**अङ्गार** अस्त्री० अङ्ग-आरन्। अर्द्धदग्धे-अग्निसंक्रान्ते अग्निशून्ये वा आङार इति प्रसिद्धे-काष्ठखण्डे। मङ्गल ग्रहे पु०। रक्तवर्णे त्रि०।

**अङ्गारक** पु० अङ्गार+स्वार्थे क। रक्तवर्णत्वात् मङ्गलग्रहे, कुरण्टकवृक्षे, भीमराज इति ख्याते-भृङ्गराजवृक्षे च। अल्पार्थे क। स्फुलिङ्ग इति विख्याते-अङ्गारक्षुद्रांशे।

**अङ्गारक** न० तैलमङ्गारकं नाम सर्व्वज्वरविनाशनमिति वैद्यकपरिभाषिते तैलविशेषे।

**अङ्गारकमणि** अस्त्री० अङ्गारकस्य मणिः ६त०। प्रवाले तस्य मङ्गलग्रहस्वामिकत्वस्य ज्योतिषे प्रसिद्धिः।

**अङ्गारधानिका** स्त्री० अङ्गाराणि धीयन्तेऽस्याम् अङ्गार-धा-आधारे ल्युट् टित्त्वात् ङीप् ततः स्वार्थे कप् टाप्। अङ्गा-राधारे (आङ्टा) इति (धुनची) इति च प्रसिद्धे पात्रभेदे।

**अङ्गारपरिपाचित** न० अङ्गारे (ज्वलदग्निव्याप्तकाष्ठखण्डे) परिपाच्यते परि-पच स्वार्थे णिच् क्त। काबाब इति प्रसिद्धे-पक्वमांसादौ।

**अङ्गारपुष्प** पु० अङ्गारमिव लोहितवर्णं पुष्पं यस्य ब०। लिँयापुति, इति ख्याते इङ्गुदीवृक्षे।

**अङ्गारमञ्जरी** स्त्री० अङ्गारमिव रक्तवर्णा मञ्जरी यस्याः ब०। समासान्तकवभावाभावत्वे संज्ञात्वात्। रक्तवर्ण-(कर-मचा) इति ख्याते करञ्जवृक्षे।

**अङ्गारवल्ली** स्त्री० अङ्गारमिव रक्तफलत्वात् रक्ता वल्ली क०। रक्तवर्णफलवल्यां-कुँच इति प्रसिद्धायाम्,-गुञ्जालतायां करञ्जवृक्षे च।

**अङ्गारशकटी** स्त्री० शक्नोति वोढुं शकटम्, अल्पं शकटं, शकटी, वक्ष्यादिवत् अल्पार्थे ङीप् अङ्गारस्य शकटी ६त०। (आङ्टा) धुनाचीति च प्रसिद्धे अङ्गाराधारे पात्रभेदे।

**अङ्गारि** स्त्री० अङ्गार+मत्वर्थे ठन् पृषोदरादित्वात् कलोपः। अङ्गाराधारे आङ्टा इति प्रसिद्धे पात्रविशेषे।

**अङ्गारिका** स्त्री० अङ्गारं विद्यतेऽस्याः अङ्गार+मत्वर्थे ठन् टाप्। आङ्टा इति ख्याते अङ्गारपात्रे।

**अङ्गारिणी** स्त्री० अङ्गार+इनि। अङ्गारधानिकायां (आङ्टा इति ख्याते पात्रे)। अङ्गारयति त्रि०।

**अङ्गारित** पु० अङ्गारमिवाचरतीति अङ्गार+क्विप् ततः कर्त्तरि क्त। पलाशकलिकोद्गमे। अङ्गारं करोतीत्यर्थे णिचि क्त। दग्धप्राये त्रि०।

**अङ्गिका** स्त्री० अङ्गम् आच्छादयति अङ्ग+इनि-के स्त्रियां टाप्। आङ्राखा इति प्रसिद्धे कञ्चुकवस्त्रे।

**अङ्गिन्** त्रि० अङ्ग+इनि। प्रधाने,अवयवविशिष्टे, देहवति च।

**अङ्गिरस्** पु० अङ्ग-असि इरागमः। स्वनामख्याते ऋषिभेदे ब्रह्मणोमुखजाते पुत्रे।

**अङ्गीकार** पु० अनङ्गम् अस्वकीयम् अङ्गं क्रियते अङ्ग च्वि-कृ-घञ्। स्वीकारे अभ्युपगमे।

**अङ्गीकृत** त्रि० अङ्ग-च्वि-कृ कर्मणि क्त। अभ्युपगते स्वीकृते

**अङ्गुरि (री)** स्त्री० अङ्ग-उलि-रलयोरेकत्व स्मरणात् रत्वम्। आङुल इति प्रसिद्धायाम् हस्तपादशाखायाम् वा ङीप् अङ्गुरीवोरगच्चतेति रघुः।

**अङ्गुरीय** न० अङ्गुलौ भवम् अङ्गुलि-छ। वालमूलादित्वात् वा रत्वम्। अङ्गुलिभूषणे आङ्टीति प्रसिद्धे।

**अङ्गुरीयक** न० अङ्गुलौ भवम् अङ्गुलि-छ। वालमूलादित्वात्

वा इत्वे स्वार्थे क । अङ्गुलिभूषणे आङ्गटीति ख्याते ।

अङ्गुल पु० अङ्ग उल । हस्तपदशाखायां आङ्गुल इति ख्याता-याम् वात्स्यायनमुनौ अङ्गुले च । यवोदरैरङ्गुलमष्टसंख्यै-रिति भास्कराचार्योक्ते अष्टयवोदरपरिमाणे तु न० ।

अङ्गुलि (ली) स्त्री० अङ्ग-उलि । हस्तपदशाखायाम् आङ्गुल इति ख्यातायाम् । वा ङीपि अङ्गुली च । हातशुडा इति ख्याते गजकर्णिकाग्रहस्ते च ।

अङ्गुलितोरण न० अङ्गुल्या तोरणमिव कृतम् । चन्दनादि-द्वारा कृते ललाटस्थार्द्धचन्द्राकृतितिलके ।

अङ्गुलित्र न० अङ्गुलिं त्रायते अङ्गुलि+त्रै-क । आमाटीति प्रसिद्धे ज्याकर्षणक्षतखेदवारणार्थम् अङ्गुलिबद्धे चर्मणि बद्धगोधाङ्गुलित्र इति भट्टि ।

अङ्गुलित्राण न० अङ्गुलिस्त्रायतेऽनेन त्रै-क इत० । आमा-टीति प्रसिद्धे ज्याकर्षणक्षतखेदनिवारणार्थम् अङ्गुलिबद्धे चर्मणि ।

अङ्गुलिमुद्रा स्त्री० अङ्गुल्या मुद् राति अङ्गुलि+मुद् रा-क इत० । धारयितृनामाक्षरमुद्रासहिते आङ्गटीति प्रसिद्धे अङ्गुलीभूषणे ।

अङ्गुलिमोटन न० अङ्गुल्योर्मोटनं मर्दनं यत्र ब० । अङ्गुलिद्वयमर्दनजाते तुडि इति प्रसिद्धे शब्दे ।

अङ्गुलिसङ्गा स्त्री० अङ्गुलौ सङ्गो यस्याः यवागू ब० । (याउ) इति प्रसिद्धे अङ्गुलिसंश्लेषकारके यवागूद्रव्ये ।

अङ्गुलिसन्देश पु० अङ्गुल्या अङ्गुलिध्वनिना सन्दिश्यते अ दिश घञ् । अङ्गुलिध्वनिद्वारा सङ्केतदाने, अङ्गुलिस्फोट-नमात्रेऽपि ।

अङ्गुलिस्फोटन न० अङ्गुल्योः स्फोटनं ताडनं यत्र ब० । (तुडि) इति प्रसिद्धे अङ्गुलिद्वयमर्दनजाते शब्दे ।

अङ्गुलीपञ्चक न० अङ्गुलीनां पञ्चकम् षष्ठीतत्पु० । हस्तस्थानाम् अङ्गुलीनां पञ्चत्वे तत्र अङ्गुष्ठतर्जनीमध्यमानामिका कनिष्ठानामिका । [प्रसिद्धे अङ्गुलिभूषणे ।

अङ्गुलीयक न० अङ्गुलीयमेव स्वार्थे क वा रत्नाभाव । आंगुटीति

अङ्गुलीसम्भूत पु० अङ्गुलौ सम्भूतः सम्-भू क्त ७त० । नखे । अङ्गुलिसम्भूतमात्रे त्रि० ।

अङ्गुष्ठ पु० अङ्गौ पाणौ प्राधान्येन तिष्ठति अङ्ग-स्था क अम्बा-म्बेत्यादिना षत्वम् । ह्रस्वाङ्गुष्ठौ । अम्बाम्बेति सूत्रेऽङ्गुष्ठशब्द-प्रयोगात् अङ्गुष्ठशब्दोऽपि कृष्णाचार्यैर्ज्ञापितम् ।

अङ्गुष्ठमात्र त्रि० अङ्गुष्ठ+परिमाणार्थे मात्रच् । अङ्गुष्ठस्य पर्व्वपरिमिते । अङ्गुष्ठमात्रोऽन्तरस्थोऽपि दृष्ट इति श्रुतौ ।

अङ्गूष पु० अङ्ग-ऊष । नकुले बाणे च ।

अङ्घस् न० अङ्घ-असि । पापे ।

अङ्घि पु अघि गतौ इ । चरणे वृक्षमूले च ।

अङ्घ्रि पु० अघि गतौ क्रि । चरणे वृक्षमूले च ।

अङ्घ्रिप पु अङ्घ्रिणा मूलेन पिबति सिक्तजलादिकम् पा क इत० । वृक्षमात्रे ।

अङ्घ्रिपर्णिका स्त्री० अङ्घ्रौ मूले कण्टकोऽस्य वा पर्णमस्या ब० जातित्वात् ङीप् तत स्वार्थे के ह्रस्वे टाप् । सिंहपुच्छाकारपुष्पवति चाकुलिया, इति ख्याते वृक्षे । अङ्घ्रिपर्णीत्यपि नाम ।

अङ्घ्रिवल्लिका स्त्री अङ्घ्रि रारभ्य वल्लीव पर्णयुक्तत्वेन तत स्वार्थे के ह्रस्वे टाप् । सिंहपुच्छाकारपुष्पवति चाकुलिया, इति प्रसिद्धे वृक्षे । अङ्घ्रिवल्लीत्यपि नाम ।

अच अविस्पष्टकथने उभय० भ्वादि० सक० सेट् । अचति ते । आचीत् आचिष्ट ।

अञ्च पूजने गतौ च इदित् पर० भ्वादि सक० सेट् । अञ्चति आञ्चीत् आनञ्च । अञ्च्यात् गतौ तु अच्यात् ।

अञ्च अव्यक्तकथने इदित् उभय० भ्वादि० सक० सेट् । अञ्चति ते । आञ्चीत् आञ्चिष्ट । [ चक्षुर्भिन्ने न ।

अचक्षुस् त्रि नञ् चक्षि अस् न० । मन्दनेत्रे नेत्रहीने च । न त ।

अचण्डी स्त्री० चडि कोपने अच् गौरादित्वात् ङीप् न० त० । शान्तस्वभावायां गवि । कोपनभिन्ने त्रि० ।

अचर न० न चरति चलति चर-अच् न० त० । स्थावरे स्थितिशीले पृथिव्यादौ चराणामन्नमचरानिति मनुः । चलनशून्ये त्रि० ।

अचल पु० न चलति चल-अच् न०त० । पर्वते, गोंज इति ख्याते शङ्कौ, शिवे, सप्तसु च । पृथिव्यां स्त्री० । चलनशून्ये त्रि ।

अचलत्विष् पु० अचला सतता प्रधानत्वेनापि कान्तिर्यस्या मधुमासात् स्थिरा त्विट् कान्तिर्यस्य ब । कोकिले । स्थिर-कान्तिमति त्रि० । कर्म० । स्थिरायां कान्तौ स्त्री ।

अचिन्त्य न चिति-कर्मणि यत् न त० । चिन्तयितुमशक्याः परिच्छेत्तुमशक्ये परब्रह्मणि । चिन्तयितुमशक्ये वस्तुमात्रे त्रि० । अचिन्त्याः खलु ये भावा इति श्रुतौ ।

अचिर न चि रक् न त० । अल्पकाले । अल्पकालस्था-यिनि द्रव्यमात्रे त्रि० ।

अचिरद्युति स्त्री अचिरा अल्पकालस्थायिनी द्युतिरस्य ब० । विद्युति । अल्पकालस्थायिद्युतिमति त्रि० । कर्म० । अल्पकालस्थायिन्यां कान्तौ स्त्री० ।

**अचिरप्रभा** स्त्री० प्र-भा अङ् अचिरा अचिरस्थायिनी प्रभा यस्या ब० । विद्युति । "च्युता दिवं स्थास्नुरिवाचिरप्रभेति भट्टिः" । अल्पकालस्थायिप्रभावति त्रि० । कर्म्म० अचिरायां दीप्तौ स्त्री० ।

**अचिररोचिस्** स्त्री० अचिरं रोचिर्यस्याः ब० । विद्युति । अचिरप्रभावति त्रि० । कर्म्म० । अचिरप्रभायाम् न० ।

**अचिरांशु** स्त्री० अचिरा अंशवोऽस्याः ब० । विद्युति । अल्पकालस्थायिकिरणवति त्रि० । कर्म्म० । अचिरकिरणे पु० ।

**अचिरात्** अव्य० अचिर अवतीति क्विप् । शीघ्रे, अविलम्बे च ।

**अचिराभा** स्त्री० अचिरप्रभावत् । आ-भा-अङ् । विद्युति

**अचेतन** त्रि० चित-णिच्-युच् चेतना ज्ञानम् ब० । चेतनाशून्ये । चित-ल्यु न०त० । ज्ञानविशिष्टभिन्ने ।

**अचेतस्** त्रि० चित-असि ब० । विवेकशून्ये, दुष्टचित्ते, चित्तशून्ये च । अव्ययी० । चित्ताभावे अव्य० ।

**अचैतन्य** त्रि० चेतनस्य भाव· चेतन+ष्यञ् ब० । चैतन्यरहिते, ज्ञानशून्ये च । न०त० । ज्ञानभिन्ने न० ।

**अच्छ** अव्य० छो-क न०त० । आभिमुख्ये ।

**अच्छ** त्रि० न छ्यति दृष्टिम्, न+छो क० । स्वच्छे निर्म्मले च । भल्लूके, स्फटिके च पु० ।

**अच्छभल्ल** पु० अच्छ-आभिमुख्येन भल्लते गच्छति अच्छ+भल्ल-अच् । भालूके । अत्र भल्ल इत्यपि पृथक् नाम ।

**अच्छम्** अव्य० न-छो कमुन् । आभिमुख्ये ।

**अच्छिद्र** त्रि० छिद-रक् ब० । छिद्रशून्ये, अङ्गहानिः छिद्रं तच्छून्ये वैदिककर्म्मणि च ।

**अच्छिद्रावधारण** न० अच्छिद्रतया साङ्गतयावधारणम् अव धारि-ल्युट् । कृतस्य वैदिककर्म्मणोऽच्छिद्रतया अवधारणे कृतैतत्कर्म्माच्छिद्रमस्त्वित्यभिलापकर्मे ।

**अच्छोद** त्रि० अच्छम् उदकं यस्य उदकस्योदभावः । निर्म्मलजलवति तडागादौ । तन्नामकप्रसिद्धे सरसि न० ।

**अच्युत** पु० च्योतते च्युत-क न०त० । विष्णौ । च्युतिशून्ये त्रि०

**अच्युताग्रज** पु० अच्युतस्य कृष्णस्य अग्रे जायते अग्र+जन ड इत० । बलभद्रे ।

**अच्युताङ्गज** पु० अच्युतस्याङ्गात् जायते अङ्ग+जन-ड । इत० । कामदेवे । तदङ्गजातमात्रे त्रि० ।

**अच्युतात्मज** पु० आत्मनोऽङ्गात् जायते जन-ड इत० । कामदेवे ।

**अच्युतावास** पु० आ-उष्यते सेव्यतेऽत्र आ-वस-घञ् इत० । अश्वत्थवृक्षे । अश्वत्थः सर्व्ववृक्षाणामित्युक्तेस्तस्य तत्रोपास्यत्वात्तदावासत्वम् ।

**अच्युति** स्त्री० च्यु-क्तिन् न०त० । क्षरणाभावे । बहु० । नाशशून्ये त्रि० ।

**अज** गतौ क्षेपणे च भ्वादि० पर० सक० सेट् । अजति । आजीत् आजीत् । अजिता वेता ।

**अज** दीप्तौ इदित् चुरादि० उभय० सेट् अक० । अञ्जयति ते । आञ्जिजत् त ।

**अज** पु० न जायते जन-ड न०त० । ब्रह्मणि, विष्णौ, हरे, जीवात्मनि ईश्वरे, छागे, मेषराशौ, सूर्य्यवंशीयराजभेदे दशरथपितरि, अजात् विष्णोर्जाते कामदेवे च । जन्मरहिते त्रि० । जगत्कारणे सत्त्वरजस्तमोगुणात्मके प्रधाने अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानामिति श्रुतेः । छागयाञ्च स्त्री० ।

**अजकर्ण** पु० अजस्य कर्ण इव कर्णो यस्य ब० । छागतुल्य लम्बायमानपत्रयुक्ते पियासाल, इति ख्याते छागकर्णे, वृक्षे सरिचपत्रे च ।

**अजकर्णक** पु० अजकर्ण इव कायति पत्रद्वारा प्रकाशते कै-क । पियासाल इति ख्याते वृक्षे ।

**अजकव** अस्त्री० अजो विष्णुः को ब्रह्मा च याति शरत्वेनात्र या+अधिकरणे क इत० । शिवधनुषि । बाबुइ इति ख्याते वर्वरीवृक्षे पु० ।

**अजकाव** अस्त्री० अजकौ विष्णुब्रह्माणौ अवतीति अण् उप०स० । शिवधनुषि ।

**अजक्षीर** न० अजायाः क्षीरं पुंवद्भाव । छागदुग्धे ।

**अजग** पु० अजं छागं यज्ञाङ्गत्वेन गच्छति गम-ड इत० । विष्णौ । अजेन गन्तरि वह्नौ च ।

**अजगन्धा** स्त्री० अजस्य गन्धइव गन्धोऽस्याः । जोयानीति ख्यातायां वनयमान्याम् ।

**अजगन्धिका** स्त्री० अजस्य गन्ध इव गन्धो यस्याः ब० तत स्वार्थे के टाप् । बाबुइ इति प्रसिद्धे वर्वरीशाके ।

**अजगन्धिनी** स्त्री० अजस्य मेषस्य गन्धो लेशः एकदेशः शृङ्गमिति यावत् तद्वत्साः फलाकारेणास्तीति अजगन्ध+इनि ङीप् । गाडरशिङ्गा इति प्रसिद्धे अजशृङ्गीवृक्षे ।

**अजगर** पु० अजं छागं गिरति गिलति गॄ अच् । वृहत्सर्पे ।

**अजगव** पु० अजगो विष्णुः शरत्वेन त्रिपुरासुरवधकालेऽस्यास्ति अजग+व । शिवधनुषि । [धनुषि ।

**अजगाव** पु० अजगं विष्णुमवति अव-अण् उप०स० । शिव-

**अजघन्य** त्रि० न जघन्य (अधम) न०त० । अधमभिन्ने श्रेष्ठे च ।

**अजजीविक** त्रि० जीव्यतेऽनया जीवयतीति वा जीव-

वुण्-ण्वुल् वा अजएव क्रयविक्रयादिभ्यां पालनादिना वा जीविका जीवनोपायोऽस्य ब० । छागक्रयविक्रयादिना जीविकावति ।

**अजटा** स्त्री० नास्ति जटा शिफा यस्या ब० । (भुइआमला) इति प्रसिद्धे शिफारहिते वृक्षभेदे ।

**अजडा** स्त्री० अजडयति स्पर्शमात्रात् कण्डूभङ्गनार्थं चालयति न+जड-णिच् नत् अच् । आलकुशीति प्रसिद्धे वृक्षभेदे ।

**अजय्या** स्त्री० अजानां समूहः । अज+य्यन् स्त्रीत्वात् टाप् । अजसमूहे । तद्दानानवर्त्तत्वात् स्वर्णयूथिकायाम् ।

**अजदण्डी** स्त्री अजस्य ब्रह्मणो दण्डोऽस्या ब० गौरा० ङीष् । ब्रह्मदण्डीवृक्षे ब्रह्मणो यथार्थदण्डस्य तदीयकाष्ठेन करणात् तथात्वम् ।

**अजननि** स्त्री न+जन-आक्रोशे अनि । आक्रुश्यमाने जन्माभावे । अर्थाभावे अव्ययी० । जनन्या अभावे अव्य० ।

**अजन्य** क्ली लौकिकहेतुभिर्न जन्यते न+जन णिच्-यत् । शुभाशुभसूचके दैवकृते भूकम्पादावुत्पाते । जन्यभिन्ने त्रि०

**अजप** पु० असत् जपति निन्दार्थे नञ्, जप-अच् । कुपाठके । अजं पाति रक्षति अज+पा क । छागपालके त्रि ।

**अजपा** स्त्री० प्रयत्नेन जपितुमशक्या अयत्नोच्चारिता जप-अच् । श्वासप्रश्वासयोः बहिर्गमनागमनाभ्याम् अक्षरनिष्पादनरूपे जपे, हंस, सोऽहमिति वा मन्त्रभेदे च । जपशून्ये त्रि० ।

**अजपात्** (द) पु अजस्य पाद इव पादोऽस्य वा अन्त्याकार लोप । रुद्रभेदे तद्देवताकत्वात् पूर्वभाद्रपदनक्षत्रे च ।

**अजभक्ष** पु० अजैर्भक्ष्यतेऽसौ भक्ष घञ् इत । बाबुर इति प्रसिद्धे बर्बरीवृक्षे तत्पत्रमजैरतिप्रीतितो भक्ष्यते ।

**अजमीढ** पु० अजो मीढः यज्ञे सिक्तः यत्र ब० । आजमीर इति प्रसिद्धे देशे । तद्देशाधिपे राजनि अभि । आजमीढ युधिष्ठिरे ।

**अजमोदा** स्त्री० अजस्य मोद इव मोदः गन्धो यस्याः अजं मोदयति वा । मुद घञ् इत० । मोदि-अण् वा । उग्रगन्धः यस्याः वनयमान्याम् यमानीमात्रे च ।

**अजम्भ** पु नास्ति जम्भो दन्तोऽस्य ब० । भेके तस्य दन्ताभावात् । दन्तशून्ये त्रि० ।

**अजय** पु जि-अच् न त० । वीरभजिनगरसन्निधाने अजय इति नामके नदविशेषे च । अजेन छागेन याति-या-क इत० । छागवाहने वह्नौ पु । अजेये जयशून्ये त्रि० । अव्य० जयाभावे । नास्ति जयो पराजयो यस्यां सिद्धि,भाङ्ग,इति च प्रसिद्धनामिकायाम् विजयायाम् स्त्री ।

**अजय्य** स्त्री० जि शक्यार्थे यत् । जेतुमशक्ये दुर्जये शत्रौ ।

**अजरा** स्त्री० जॄ अङ् न० ब । (घृतकुमारी) इति प्रसिद्धे वृक्षे तस्य जराभावात् । जराशून्ये त्रि । जराभावे अजरसम् अव्य० ।

**अजर्य्य** न० न जीर्य्यति जॄ यत् न०त० । सौहार्दे ।

**अजलोमन्** पु० अजस्य लोमेव लोम (मञ्जरी) यस्य उपमान ब० । (शूकशिम्बी) इति ख्याते अजलोमवन्मञ्जरीविशिष्टे वृक्षभेदे ।

**अजवीथी** स्त्री अजेन ब्रह्मणा निर्मिता वीथी पद इत० । गगनसेतुरूपे(यमनाला) इति ख्याते, छायापथे । यामारभ्य अगस्त्यस्थानपर्य्यन्त पितृयानपथ ।

**अजशृङ्गी** स्त्री० अजस्य मेषस्य शृङ्गमिव फलमस्या ब० । (गाडरशिङ्गा) इति प्रसिद्धे मेषशृङ्गतुल्यफलवति वृक्षे ।

**अजस्र** न० । न-जस र । सन्तते विच्छेदरहिते । तथाभूतकालस्थायिनि वस्तुमात्रे त्रि० ।

**अजहत्स्वार्था** स्त्री० न जहत् स्वार्थोयाम् न+हा-शतृ ब० । स्वार्थापरित्यागेन परार्थावबोधिकायां लक्षणायाम् । यथा श्वेतो धावतीत्यादौ श्वेतगुणापरित्यागेन तद्वति लक्षणा ।

**अजहल्लिङ्ग** पु० न जहत् लिङ्गं यम् हा शतृ ब० । नियतलिङ्गके विशेष्यस्यान्यलिङ्गकत्वेऽपि स्वलिङ्गात्यागेन विशेषणे शब्दे । तथा चान्यत्र विशेषणस्य विशेष्यानुसारिलिङ्गत्वनियमेऽपि अस्य न तथा नियम । यथा वेद श्रुतिर्वा प्रमाणम् ।

**अजहा** स्त्री न जहाति शूकान् । न+हा श । आलकुशीति ख्याते वृक्षे ।

**अजागर** पु जागृ णिच् अच् न जागरो यस्मात् ५ब० । सेवनेन निद्राराहित्यकारके यदसेवयाऽन्यस्मिन् जागरणकभूत नास्ति तादृशे (भीमराज) इति ख्याते भृङ्गराजे । भृङ्गराज शुजागर इति रमसवाक्यात् तस्य यत्ननिद्राराहित्यकारित्वम् ।

**अजाजी** स्त्री अजन छागेन आजीविशेषो गन्धोत्कटत्वात् त्यागो यस्या अप घञ् लोभावाभाव ब० । सर्वभक्षेणापि छागेन गन्धोत्कटतया त्यज्यमाने जीरा इति प्रसिद्धे जीरके वृक्षे ।

**अजाजीव** पु अजैर्दुग्धपोषणादिना तत्क्रयविक्रयाभ्यां वा आजीवति । आ जीव-अच् इत । छागपालके तत्क्रयविक्रयाभ्यामाजीविनि च ।

पक्षिणि, सर्पे, मत्स्ये, कांकलास इति ख्याते कृकलासे च ।
अण्डजातमात्रे त्रि० । मृगनाभिकस्तूर्य्यान्तु स्त्री० ।

**अण्डालु** पु० अण्ड+आलु । डिम्बविशिष्टे मत्स्ये ।

**अण्डीर** पु० अण्डः पुंसवयवभेदः अस्यास्तीति अण्ड-ईरन् । पुरुषे, समर्थे च ।

**अत** बन्धने इदित् भ्वादि० पर० सक० सेट् । अन्तति । आन्तीत्

**अत** बन्धने भ्वादि० पर० सक० सेट् । अतति । आतीत् ।

**अत** प्रापणे, सातत्ये, गतौ च भ्वादि० पर० सक० सेट् । अतति । आतीत् । क्त अतितः ।

**अतट** पु० तट्यते आहन्यतेऽस्मात् इति तटं जलाघातस्थानं तन्नास्ति यस्य ब० । आड़रीति प्रसिद्धे आलम्बनस्थानशून्ये, पर्व्वताद्युच्चस्थाने, भूमेरधोभागे च ।

**अतल** न० अस्य भूखण्डस्य तलं पृषोदरात् इटमोऽतम् । सप्तपातालमध्ये प्रथमखण्डे, भूमेरधोभागे । तलशून्ये त्रि० ।

**अतलस्पर्श** त्रि० न तलस्याधोभागस्य स्पर्शो यत्र ब० । अतिगभीरे ।

**अतस** पु० अत-गतौ असच् । वाते । सातत्यार्थात् अत-असच् । आत्मनि । गौरादित्वात् ङीषि । तिषि, मसिना इति ख्याते अतसीवृक्षे । तत्सूत्रजाते क्षौमवस्त्रे न० ।

**अति** अव्य० अत-इ । पूजायाम्, उत्कर्षे, अतिक्रमणे, अतिशये च ।

**अतिकथ** त्रि० अतिक्रान्तः कथाम् । कथनायोग्ये, अश्रद्धेये, नष्टे च । [मके वृक्षे ।

**अतिकन्दक** पु० अतिरिक्तः कन्दः यस्य ब० । हस्तिकन्दना-

**अतिकेशर** पु० अतिरिक्तानि केशराण्यस्य ब० । कुब्जकवृक्षे ।

**अतिक्रम** पु० अति-क्रम-घञ् ह्रस्व । उल्लङ्घने । अतिक्रान्तः क्रममिति प्रादि स० । क्रमोल्लङ्घने त्रि० ।

**अतिगण्ड** पु० परिभाषया विष्कुम्भावधि षष्ठे योगे ।

**अतिगन्ध** पु० अतिशयितो गन्धो यस्य ब० । चम्पकवृक्षे । अतिशयितगन्धवति त्रि० ।

**अतिचरा** स्त्री० अतिक्रम्य चरति दुर्गभूमिजातत्वात् दुःप्रापत्वाच्च अति+चर-अच् । पद्मचारिणीवृक्षे उत्तरदेशभवे, तत्पर्य्याये पद्मासेतिशब्ददर्शनात् स्थलपद्मिन्यामिति केचित्

**अतिचार** पु० अतिशयेन चारः अतिक्रम्य वा चारः अति+चर-घञ् । अतिशयितगमने, ज्योतिःशास्त्रप्रसिद्धे मङ्गलादिग्रहपञ्चकस्य सूर्य्यसंपर्कविशेषात्तत्तेजोऽसहिष्णुतया वक्रशीघ्रादिगत्या स्वस्वभोग्यकालमुल्लङ्घ्य राश्यन्तरगमने, अस्य विशेषस्तु वृहदभिधाने दर्शयिष्यते ।

**अतिचारिन्** पु० अति+चर-णिनि । पूर्वोक्तातिचारवति ग्रहे । अतिक्रम्य अतिशयेन वा गन्तृमात्रे त्रि० ।

**अतिछत्र** पु० अतिक्रान्तश्छत्रम् प्रादि० स० । छातिया इति प्रसिद्धे स्थलतृणविशेषे, तालमाखना इति प्रसिद्धे जलतृणभेदे च । स्वार्थे क । अत्र अतिछत्रकोऽपीति नाम । छत्राकारपत्रपुष्पवति सुल्फा इति प्रसिद्धे शाकभेदे स्त्री० । क्षीरस्वामिमते छत्रा इत्येव नाम । छत्रातिक्रमकारिणि त्रि० । अतिक्रमेऽव्ययी० । छत्रातिक्रमे अव्य० ।

**अतिजगती** (ति) स्त्री० अतिक्रान्ता जगतीं द्वादशाक्षरपादां इत्तिं प्रा० स० । त्रयोदशाक्षरपादके छन्दोभेदे । जगतीं भुवनमतिक्रान्तवति त्रि० । तत्र पुंसि क्लीबे च (अतिजगति) ।

**अतिजव** त्रि० अतिशयितो जवोऽस्य ब० । अतिवेगवति । द्रुतगामिनि च ।

**अतिजागर** पु० अतिशयितो जागरो निद्राराहित्यं यस्य ब० । नीलवके पक्षिणि तस्य सर्व्वदा जागरूकत्वात् । निद्राराहित्यवति त्रि० । [पक्षिणाम् अतिदीर्घगमने ।

**अतिडीन** न० अतिक्रान्तं डीनं पक्षिगतिभेदं प्रा० स० ।

**अतितराम्** अव्य० अति+तर-तत् आम् । अत्यन्तातिशये ।

**अतितीक्ष्ण** त्रि० अतिशयेन तीक्ष्णः कटुरसो यस्य ब० । मरीचादौ । सजना इति प्रसिद्धे शोभाञ्जने पु० ।

**अतितीव्रा** स्त्री० अतिशयेन तीव्रा पाकादौ दुर्ज्जरत्वात् प्रा० स० । ग्रन्थिमत्यां गाँटदूर्व्वा इति ख्यातायां दूर्व्वायाम् । अतितीव्रगुणके त्रि० ।

**अतिथि** पु० अतति गच्छति न तिष्ठति अत इथिन् । अध्वयोगेन आगन्तुके गृहागते, विषये च तस्य इन्द्रियेषु संसर्गमात्रकाले एव चेतसि स्थितिर्नोत्तरकालमिति गतिरस्त्वनीयते ।

**अतिथिसपर्य्या** स्त्री० अतिथीनां सपर्य्या पूजनम् सपरधातु कण्ड्वादिः तेन यक् ततो अङ् । प्रत्यह गृहस्थस्य कर्त्तव्यपञ्चयज्ञमध्ये मनुष्ययज्ञेऽतिथिपूजनादौ ।

**अतिदिष्ट** त्रि० अति-दिश-क्त । अतिदेशस्य कर्म्मणि । यथा प्रकृतिवत् विकृतिः कर्त्तव्येति वाक्येन प्रकृतिभूतदर्शयागादेरङ्गकार्य्याणि प्रयाजादीनि विकृतौ पश्वादियागेऽतिदिश्यन्ते । अतिदेशोनाम इतरधर्म्मस्य इतरस्मिन् प्रयोगाय प्राप्तिः इति मीमांसायां स्थितम् । करणव्युत्पत्त्या तदुपदेशवाक्यमपि तथा ।

**अतिदीप्य** पु० अतिशयेन दीप्यते अति-दीप-कर्त्तरि यत् । रक्तचित्रके लालचिता इति ख्याते वृक्षे ।

**अतिवादिन्** त्रि० सर्व्वानतीत्य वदतीति अति वद-णिनि। सर्व्वानतिक्रम्य वदनशीले, सर्व्वमतखण्डनेन स्वमतव्यवस्थापके च। [क्रान्ते च।

**अतिवाहित** त्रि० अति+वह-णिच्-क्त। यापिते, अति-

**अतिविकट** पु० अतिशयेन विकट: वि+कटच्। दुष्टहस्तिनि। अतिकराले त्रि०।

**अतिविषा** स्त्री० अतिक्रान्ता विषम् प्रा० स०। आतइच् इति ख्यातायां लतायाम्। विषातिक्रमकारके त्रि०।

**अतिवृत्ति** स्त्री० अ.ति-वृत-क्तिन्। अतिक्रमे। वृत्तिर्जीविकातामतिक्रान्ते त्रि०।

**अतिवृष्टि** स्त्री० अति-वृष-क्तिन्। अत्यन्तवृष्टौ शस्योपघातकोपद्रवरूपे ईतिभेदे।

**अतिवेल** त्रि० अतिक्रान्तो वेलां मर्य्यादाम् कूलं वा प्रा०स०। अतिशयिते, निर्मर्य्यादे, समुद्रकूलातिक्रमकारके च। (अतिक्रमे अव्ययी०। वेलातिक्रमे अव्य०)

**अतिव्याप्ति** स्त्री० अतिशयेन लक्ष्यमलक्ष्यञ्चाविशिष्य व्याप्तिर्व्यापनम् अति-वि-आप्-क्तिन्। अतिशयव्यापने 'लक्ष्यस्येवालक्ष्यस्यापि व्यापने'। तथाच यत्र यस्य स्थितिरुचिता ततोऽन्यत्रापि तस्य सम्बन्धे अतिव्याप्तिः। यथा पृथिव्या गन्धो लक्षणं तत्रैव तस्य स्थितिरुचिता तस्य वाय्वादौ सत्त्वप्रसङ्गे अतिव्याप्तिः। यथा वा धूमे वह्नेर्व्यापकता न तु जले, तस्य जले प्रसक्तौ अतिव्याप्तिः।

**अतिशक्ति** स्त्री० अतिशयिता शक्तिः कर्म्मसाधनसामर्थ्यम् देहजं बलम् वा प्रा०स०। अतिशयिते सामर्थ्ये, अधिकवीर्य्ये च। अतिक्रान्त: शक्तिम् प्रा०स०। सामर्थ्यातिक्रमकारके त्रि०। अतिशयिता शक्तिर्यस्य ब० अतिशयबलवति त्रि०। अतिक्रमेऽव्ययी०। शक्त्यतिक्रमे अव्य०।

**अतिशक्करी** स्त्री० अतिक्रान्ता शक्करीम् चतुर्दशाक्षरपादिकां वृत्तिम् प्रा०स०। पञ्चदशाक्षरपादके छन्दोभेदे।

**अतिशय** पु० अति-शीङ्-अच्। आधिक्ये, अतिरेके, च। अतिक्रान्तः शयं हस्तं प्रा० स०। हस्तातिक्रमकारके त्रि०।

**अतिशयित** त्रि० अति-शीङ्-क्त। अधिके, अतिक्रान्ते च।

**अतिशयोक्ति** स्त्री० अतिशयेन उक्ति र्निर्द्देश: वच-क्तिन्। अर्थालङ्कारविशेषे अलङ्कारशास्त्रप्रसिद्धे। सा०।०परि०

**अतिशायन** न० अति-शीङ् ल्युट् अतिशायने महविति सूत्रनिर्द्देशात् दीर्घ:। आधिक्ये, प्रकर्षे च।

**अतिशीत** न० अतिशयितं शीतम् प्रा० स०। अत्यन्तशीतलस्पर्शे। तद्विशिष्टे त्रि०।

**अतिशोभन** त्रि० अति+शुभ-ल्यु। अत्यन्तशोभान्विते, श्रेष्ठे च।

**अतिसन्ध्या** स्त्री० अत्यासन्ना सन्ध्या प्रा० स०। पूर्व्वदिनसीयरात्रिशेषदण्डाद्विसूर्य्योदयपर्य्यन्त:, सूर्य्यास्तात् पूर्व्वोत्तरदण्डात्मकश्च काल: सन्ध्या तस्याः आसन्ने काले।

**अतिसर्ग** पु० अति+सृज-घञ्। दाने, कामचारानुज्ञायां यथेच्छं क्रियतामित्याद्यभिलापरूपायाञ्च। सर्गं सृष्टिमतिक्रान्तरि त्रि०।

**अतिसर्ज्जन** न० अति+सृज-ल्युट्। दाने, वधे, विप्रलम्भे च।

**अतिसायम्** अव्य० अत्यासन्नं सायम् प्रा०स०। सूर्य्यास्तकालः सायम् तस्यासन्ने काले।

**अति(ती)सार** पु० अतिशयेन सारयति रेचयति अति+सृणिच्-अच्। बहुद्रवीभूतमलनि:सारके उदरामये रोगे। अतेर्दीर्घतापि वा।

**अति(ती)सारकिन्** त्रि० अतिसारोरोगोऽस्त्यस्य अतिसार+इनि कुक् च। अतिसाररोगवति। अतेर्दीर्घतापि वा।

**अतिसृष्ट** त्रि० अति+सृज-क्त। दत्ते, प्रेरिते।

**अतिसौरभ** पु० सुरभेर्भावः अणि सौरभम्, अतिशयितं तदस्य ब०। अत्यन्तामोदवति आम्रे। सौरभान्विते वस्तुमात्रे त्रि०।

**अतीत** त्रि० अति+इन्-क्त। अतिक्रम्य गते, नाशप्रतियोगिनि भूते काले तत्कालवृत्तिपदार्थमात्रे च।

**अतीन्द्रिय** त्रि० अतिक्रान्तमिन्द्रियं तदविषयत्वात् प्रा०स०। इन्द्रियायोग्ये प्रमत्यक्षे, नेत्रश्रोत्रनासिकारसनात्वक्चेतांसीन्द्रियाणि तैर्ज्ञातुमशक्ये विषये। [त्यन्तेऽत्यन्ताशये च।

**अतीव** अव्य० अत्येव-इव: अवधारणे प्रा०स०। अवधृता-

**अतुल** त्रि० तुल-णिच् अ तुला सा नास्ति यस्य ब०। उपमाशून्ये, अत्यन्तशोभाढ्ये च। तिलवृक्षे पु०।

**अतुल्य** त्रि० तुलां सादृश्यमर्हति तुला+यत् न०त०। अनुपमे, सौन्दर्य्यातिशयशालिनि च।

**अतृप्ति** स्त्री० तृप-क्तिन् अत्यन्ताभावार्थे-न०त०। तृप्तिराहित्ये। ब०। तृप्तिरहिते, असन्तोषिणि, लोलुपे, च त्रि०।

**अतृट्** वधे भ्वा० आत्म०सक०सेट्। अट्टते आट्टिष्ट। णिचि अट्टयति ते आतिट्टत् त।

**अत्ता** स्त्री० अतति संवधाति अत-तक् द्वइभावः। मातरि, श्वश्र्वाञ्च। स्वार्थे के कापि अत इत्त्वे। अत्तिका च।

**अत्यन्त** न० अतिक्रान्तोऽन्तं सीमाम् प्रा०स०। अतिशये। तद्युक्ते सर्व्वपरिच्छेदान्ति क्रान्ते त्रि०। अतिक्रमेऽव्ययी०। परिच्छेदातिक्रमे नाशातिक्रमे च अव्य०।

अथर्व्ववेदस्य मन्त्रोदेवीरभीष्टयइत्यादिकस्य, तद्विहिताभिचारादिकर्म्मणश्च वेत्तरि वशिष्ठादौ।

**अथवा** अव्य० अथ+वा-क्विप्। पक्षान्तरे।

**अथो** अव्य० अर्थ-डो पृषो० रलोपः। अथशब्दार्थे आरम्भादौ।

**अद्** बन्धने भ्वा० पर० इदित् सक० सेट्। अन्दति। आन्दीत्।

**अद्** भक्षणे अदने च अदा० पर० सक० अनिट्। अत्ति अघसत् जघास अत्ता अत्स्यति सनि जिघत्सति।

**अद्** अव्य० अद-क्विप्। आश्चर्य्ये।

**अदत्ता** स्त्री० न० दा-क्त। अपरिणीतायाम् स्त्रियाम्। अदत्तमात्रे त्रि०। अप्रामाण्ये न०त०। अदत्तन्तु भयक्रोधशोकवेगरुजान्वितैरित्याद्यभिहितलक्षणे दानाभासेनार्पिते दत्त्वापि प्रत्याहर्त्तुं योग्ये त्रि०। [चौरे।

**अदत्तादायिन्** त्रि० अदत्तमादत्ते आ+दा-णिनि ६त०।

**अदभ्र** त्रि० दन्भ रक् दभ्रमल्पं न०त०। अनल्पे अदभ्रदर्भामधिशय्य स स्थलीमिति भारविः।

**अदर्शन** त्रि० दृश-भावे ल्युट् न०ब०। दर्शनायोग्ये, अतीन्द्रिये, नाशे, व्याकरणशास्त्रपरिभाषिते लोपे च। अव्ययी०। दर्शनाभावे अव्य०।

**अदल** पु० दल्यते भिद्यते इति दलं पत्रं दल-कर्म्मणि घञ् न० ब०। दलशून्ये हिजल इति ख्याते वृक्षे। पत्रशून्ये वृक्षमात्रे त्रि०। घृतकुमार्य्यां स्त्री०।

**अदस्** त्रि० न दस्यते उत्क्षिप्यतेऽङ्गुलिर्यत्र इदन्तया निर्द्धारणाय पुरोवर्त्तिन्येवाङ्गुलिनिर्द्देशः सम्भवति नापुरोवर्त्तिनि। न+दस्-क्विप्। अपुरोवर्त्तिनि परोक्षे ज्ञाते वस्तुनि।

**अदाह्य** पु० दग्धुमशक्ये दह-ण्यत् न०त०। निराकारतया दाहायोग्ये परमात्मनि। दाहानर्हे महारोगिप्रभृतौ त्रि०।

**अदिति** (ती) स्त्री० न+दा-क्तिन् वा ङीप्। दातु छेत्तुमयोग्यायाम् भुवि, दितिरसुरमाता तद्विरोधिन्यामदितौ सुरमातरि दक्षप्रजापतेः कन्यायाम् कश्यपपत्न्याम्, अदितिदेवताके पुनर्वसुनक्षत्रे च। दो-क्तिन् दितिः खण्डस्तद्रहिते त्रि०।

**अदितिज** पु० अदितेर्जायते जन-ड ५त०। देवे।

**अदीन** त्रि० दी-क्त न०त०। कातर्य्यरहिते उदारे।

**अदृष्ट** न० दृश-क्त न०त०। पुण्यापुण्यरूपे भाग्ये, इन्द्रियायोग्यत्वात् वसादृष्टत्वम्। अदृष्टहेतुके भयादौ च। दृष्टभिन्ने त्रि०। [पूर्व्वमदृष्टे।

**अदृष्टपूर्व्व** त्रि० न पूर्व्वं दृष्टः सह सुपेति स० परनि०।

**अदृष्टि** स्त्री० विरुद्धा दृष्टिः विरोधार्थे न०त०। क्रूरदृष्टौ, परोपघ्नकदृष्टौ, दर्शनाभावे च। ब०। दृष्टिशून्ये त्रि०।

**अद्धा** अव्य० अत्यते अत् तं सततं गमनं ज्ञानं वा दधाति क्विप्। याथार्थ्ये, साक्षात्कारे, स्फुटे, अवधारणे, अतिशये च।

**अद्भुत** न० अततीत्यत् अव्ययमाकस्मिकार्थे तथा भाति भा-डुतच्। आकस्मिके उल्कापातादौ, आलङ्कारिकप्रसिद्धे नवरसान्तर्गतविस्मयस्थायिभावके रसे च। तद्वति त्रि०।

**अद्भुतस्वन** पु० अद्भुतः स्वनो यस्य स्वन-अच् ब०। महादेवे। कर्म्म०। आश्चर्य्यशब्दे। ब०। तथाशब्दवति त्रि०।

**अद्य** अव्य० अस्मिन्नहनि इदम्शब्दस्य निपात सप्तम्यर्थे। अस्मिन् दिवसे। आधारार्थत्वेऽपि अस्य सप्तम्यन्तरघटकता तेनाद्यदिवसादारभ्य इति, अद्यप्रभृत्यवनताङ्गीति कुमार०।

**अद्यतन** त्रि० अद्य भवः अद्य+ट्यु तुडागमश्च। अद्यभवे वस्तुमात्रे। स्त्रियामद्यतनी।

**अद्यत्वे** अव्य० इदम्शब्दस्य इदानीमित्यर्थे निपा०। अधुनार्थे।

**अद्यश्वीना** स्त्री० अद्य श्वः परदिने वा प्रसोष्यते। अद्यश्वस्+ख टिलोपः। आसन्नप्रसवायां गर्भिण्याम्।

**अद्रि** पु० अद-क्रिन्। पर्व्वते, वृक्षे, सूर्य्ये, परिमाणभेदे च।

**अद्रिकर्णी** स्त्री० अद्रिः अद्रिनामिका गिरिर्बालमूषिका तस्याः कर्णः कर्णतुल्यं पत्रं यस्याः गौरादित्वात् ङीप्। बालमूषिकातुल्यपत्रायाम् अपराजितालतायाम्।

**अद्रिकीला** स्त्री० अद्रयः कुलाचलाः कीला शङ्कव इव यस्याः ब०। भूमौ।

**अद्रिज** न० अद्रौ जायते जन-ड ७त०। शिलाजतु इति ख्यातनामप्रसिद्धे गन्धद्रव्ये। गेरि इति प्रसिद्धे द्रव्ये इति केचित्। पार्व्वत्यां स्त्री०। पर्व्वतभवमात्रे त्रि०।

**अद्रितनया** स्त्री० अद्रेर्हिमाचलस्य तनया। पार्व्वत्याम्।

**अद्रिभिद्** पु० अद्रिं भिनत्ति भिद्-क्विप् ६त०। इन्द्रे।

**अद्रिभू** स्त्री० अद्रावपि भवति भू-क्विप् ७त०। अपराजितालतायाम् तस्याः पर्व्वतेऽप्यतिकठोरभूमिके जायमानत्वात्।

**अद्रिराज** पु० अद्रीणां राजा टच्। हिमाचले।

**अद्रिसार** पु० अद्रेः सार इव। लौहे।

**अद्रीश** पु० अद्रीणां अद्रेर्वा ईशः ६त०। हिमाचले, शिवे च।

**अद्वय** न० द्वावयवं द्वयं नञा ब०। सजातीयविजातीयस्वगतभेदशून्ये परब्रह्मणि। सजातीयद्वितीयरहिते, द्वयशून्ये च वस्तुमात्रे त्रि०। नास्ति द्वयं यस्य मते ब०। बुद्धभेदे पु०।

**अद्वयवादिन्** पु० अद्वयं वदति सर्व्वमेव वस्तु चित्स्वरूपं नान्यदतो द्वितीयमस्तीति वदतीति वद-णिनि। अद्वैतवादिनि वैदान्तिके वाह्यार्थाभावेन ज्ञानात्मकं सर्व्वं वस्तु

व्याकरणशास्त्रे पूर्व्वसूत्रोपात्तपदादेरुत्तरत्र सूत्रेषु अनुवृत्तौ च ।

**अधिकारविधि** पु० अधिकारे फलस्वाम्ये विधिर्विधानम् वि+धा-कि ७त० । कर्म्मजन्यफलभोक्तृज्ञापके विधौ यथा यजेत इत्यनेन यागजन्यफलभोक्ता स्वर्गकामीति ज्ञाप्यते ।

**अधिकार्थवचन** न० अधिकार्थस्य स्तुतिनिन्दाभ्यामारोपितस्य वस्तुधर्म्मादतिरिक्तस्य वचनम् वच-ल्युट् ६त० । स्तुत्यर्थवादे, निन्दार्थवादे च ।

**अधिकृत** पु० अधि+कृ-क्त । आयव्यायाद्यवेक्षके, अध्यक्षे कर्म्मजन्यफलसंबन्धिनि च । स्वामित्ववति त्रि० । [च ।

**अधिक्षिप्त** त्रि० अधि+क्षिप-क्त । स्थापिते,निन्दिते,कृताधिक्षेपे

**अधिक्षेप** पु० अधि+क्षिप-घञ् । तिरस्कारे ।

**अधिगत** पु० अधि+गम-क्त । ज्ञाते,प्राप्ते,स्वीकृते च ।

**अधिगम** पु० अधि-गम-घञ् । ज्ञाने, प्राप्तौ, स्वीकारे च ।

**अधित्यका** स्त्री० अधि+त्यकन् । पर्व्वतस्योपरिभूमौ ।

**अधिदेवता** स्त्री० देवएव देवता अधिका देवता देवताया अपीश्वरत्वात् । देवानामपि सूर्य्यादिग्रहादीनामीश्वरे रुद्रादौ । ते च स्मृत्युक्ता बोध्या यदधिष्ठानात् सूर्य्यादयः स्वस्वकार्य्यं कुर्व्वन्ति ।

**अधिदैवत** न० देवतैव स्वार्थे अण् । अधिदेवतावत् समासार्थौ । हिरण्यगर्भे, अन्तर्यामिनि पुरुषे च पु० । स च दैवतानि चक्षुरधिष्ठातॄणि सूर्य्यादीनि तत्तत्कर्म्मणि नियुज्य चक्षुरादीनीन्द्रियाण्यनुगृह्णातीति तस्य सर्व्वदेवतेश्वरत्वम् ।

**अधिनाय** पु० अधिनीयते वायुना गन्धाधारसूक्ष्मांशनयनद्वारा तत्तत्स्थानं ह्रियतेऽसौ अधि+नी-घञ् । गन्धे ।

**अधिप** त्रि० अधि+पा-क । राजनि, प्रभौ च ।

**अधिपति** पु० अधि+पा-डति । प्रभौ । [प्रभौ ।

**अधिभू** पु० अधिभवति स्वामीभवति स्वाम्यर्थेऽत्राधि॰ भू-क्विप् ।

**अधिमांसक** पु० अधिको मांसो यत्र ब० कप् । दन्तरोगविशेषे “हनुस्थे पश्चिमे दन्ते महाशोथोमहारुजः । लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसक इति वैद्यकम् ।

**अधिमास** पु० अधिको रविमासादतिरिक्तः शुक्लप्रतिपदादिदर्शान्तश्चान्द्रोमासः प्रा०स० । मलमासे असंक्रान्तमासोऽधिमासो निरुक्त इतिस्मृतेः रविसंक्रान्तिवर्जितो मासोऽधिमास । तथाहि मीनादिस्थोरविर्येषामारम्भः प्रथमे क्षणे । ते चैत्राद्या इत्युक्तदिशा मेषस्थे रवौ यस्य चान्द्रमासस्यारम्भः स वैशाख इत्येवं वैशाखादिलक्षणे स्थिते यस्मिन् चान्द्रमासे रवेः राश्यन्तरसंक्रमो न, तस्य तदुत्तरस्य च चान्द्रमासस्य उभयोर्मेषस्थे रवौ आरम्भात् उभयोरपि वैशाखता, तत्राद्योऽधिमासः संक्रान्तिहीनत्वात् द्वितीयः शुद्ध इति स्मृतौ प्रसिद्धम् ।

**अधिराज** पु० अधिको राजा प्रा०स० टच् । सार्व्वभौमे ।

**अधिरोहिणी** स्त्री० अधिरुह्यतेऽनया अधि+रुह-करणे ल्युट् । मइ इति, सिड़ि इति च प्रसिद्धे काष्ठवंशादिनिर्म्मिते उच्चस्थानारोहणसाधने सोपानदन्दे ।

**अधियज्ञ** पु० अधिकृत स्वामितया यज्ञो यस्य ब० । विष्णौ ।

**अधियोग:** युज-घञ् योगः अधिकोयोगः प्रा०स० । ज्योतिषप्रसिद्धेयात्रिकशुभयोगे । स च गमनसमयलग्ने, तस्माद्वा चतुर्थे, पञ्चमे, सप्तमे, नवमे, दशमे वा स्थाने बुधजीवभार्गवाणां मध्ये द्वयोरेकत्र, उक्तस्थानमध्ये अन्यतमस्थाने वा स्थितौ सत्यां योगः तत्र यातु क्षेमं शत्रुहानिश्च फलम् । मुहू० चिं० या० प्र० ।

**अधिवास** पु० अधि+वस-घञ् । निवासे । दासेर्घञ् । गन्धमाल्याद्यैः संस्कारे । अधिवासयति देवता अनेन अधि+वस-णिच् करणे घञ् । यज्ञारम्भपूर्व्वदिवसे देवतास्थापनादिकर्म्मणि ।

**अधिवासन** न० अधि+वस-णिच् अधिकरणे ल्युट् । यज्ञारम्भात् पूर्व्व दिवसे देवतास्थापनादौ । भावे ल्युट् । गन्धमाल्याद्यैः पूज्यादे संस्कारकरणे ।

**अधिवासित** त्रि० अधि-वस-णिच्-क्त । गन्धमाल्यादिभिः कृतसंस्कारे, कृतप्रागुक्ताधिवासे देवादौ च ।

**अधिविन्न** स्त्री० विद-भावे क्त । अधि उपरि विन्नं विवाहोऽस्याः । कृतसपत्निकायाम् अध्यूढायाम् स्त्रियाम् । कृतपूर्व्व विवाहायाः उपरि पत्या पुनर्विवाहकरणे प्रागूढाया भार्य्याया अधिविन्नत्वम् । अधिविन्नास्त्रियै देयमिति स्मृति ।

**अधिश्रयण** न० अधि उपरि श्रयणं पाकार्थं स्थापनं श्रीञ्-भावे ल्युट् । चूल्ल्या उपरि स्थापने, तत्पूर्व्वकपाके च । अधिश्रीयते पच्यतेऽत्र, करणे ल्युट् टित्त्वात् ङीप् । चूल्ला म आका इति, चूला, इति च ख्यातायाम् स्त्री० ।

**अधिष्ठातृ** त्रि० अधि+स्था-तृच् षत्वम् । अध्यक्षे, नियमितकार्य्यविशेषाकरणेन कृताकृतावेक्षके च ।

**अधिष्ठान** न० अधि-स्था ल्युट् । नियमितकार्य्यविशेषाकरणेन सान्निध्यमात्रकरणे, स्थितौ, वेदान्तशास्त्रप्रसिद्धे आरोपाधिकरणे च । अधिकरणे ल्युटि । पुरे । करणे ल्युटि । चक्रे, प्रभावे च चक्रेण प्रभावेन च प्रवृत्तकृत्यादि सम्भवात् ।

**अध्यावाहनिक** न॰ अध्यावाहनं पितृगृहात् भर्तृगृहागमनकाले लब्धं अधि+आ+वह-ल्युट् ततः लब्धार्थे ठन् ठस्य क । यत् पुनर्लभते नारी नीयमाना हि पैतृकात् । अध्यावाहनिकं नाम स्त्रीधनं परिकीर्त्तितमिति स्मृत्युक्तलक्षणे पितृकुलात् भर्तृकुलगमनकाले तेभ्यः प्राप्ते स्त्रीधने ।

**अध्याशन** न॰ अधि+आ-अश-ल्युट् । भोजनोपरिभोजने ।

**अध्यास** पु॰ अधि+अस-घञ् । अतस्मिन् तद्बुद्धौ अध्यारोपे । अधि-आस घञ् । आसने । [निवेशिते च ।

**अध्यासित** त्रि॰ अधि+आस-क्त । अधिष्ठिते । शिचि ।

**अध्याहार** पु॰ अधि+आ+हृ-घञ् । आकाङ्क्षाविषयपदानुसन्धाने, ऊहे, तर्के, अपूर्वोत्प्रेक्षणे च ।

**अध्यूढ़** पु॰ अधि+वह-क्त । प्रभौ रुद्रे च । आरोहणकर्त्तरि त्रि॰ । ऋच्यध्यूढं साम गीयते इति श्रुतिः । अधिउपरि ऊढमुद्वाहो यस्याः ब॰ । कृतसपत्निकायां स्त्रियां कृतद्वितीयविवाहस्य प्रागूढयोषिति स्त्री॰ ।

**अध्येषण** न॰ अधि-इष-प्रेरणे ल्युट् । सत्कारपूर्वकमाचार्यादेः प्रेरणे, प्रवर्त्तनमात्रे च । युचि टाप् तस्मिन्नेवार्थे स्त्री॰ । [अस्थिरे च ।

**अध्रुव** त्रि॰ ध्रु-क न॰त॰ । चले, विकारवति, अनित्ये,

**अध्वग** पु॰ अध्वन्+गम-ड । पथिके, सूर्ये, उष्ट्रे च । पथिगन्तृमात्रे त्रि॰ । गङ्गायां स्त्री॰ ।

**अध्वगभोग्य** पु॰ अध्वगेन अतिसौलभ्यात् अयत्नलभ्यफलत्वाच्च भोग्यं हृत॰ । आमड़ा इति प्रसिद्धे आम्रातकवृक्षे ।

**अध्वजा** स्त्री॰ अध्वनि जायते जन-ड ७त॰ । सोना इति ख्याते स्वर्णपुष्पीवृक्षे ।

**अध्वन्** पु॰ अत्ति बलम् अद्-क्वनिप् धादेशः । पथि, अधिकइरारोहणे च । (सर्वभक्षकत्वात्) काले, हिंस्ने च । अद्यते खण्डशो भक्ष्यतेऽनेनेति करणे घञि । अवयवे ।

**अध्वनीन** त्रि॰ अध्वानमलं गच्छति अध्वन्+ख । पथिके ।

**अध्वन्य** त्रि॰ अध्वानमलं गच्छति अध्वन्+यत् । पथिके ।

**अध्वर** पु॰ अध्वानं सत्पथं राति रा+क । यज्ञे । न ध्वरति कुटिलो न भवति ध्वृ-अच् न॰त॰ । सावधाने, अष्टवसुमध्ये द्वितीयवसौ च ।

**अध्वरथ** पु॰ अध्वैव रथो यस्य ब॰ । पथिप्रज्ञे दूते । अध्वनेहितो पर्याप्तो रथो यस्य ब॰ । पथिगमनोपयुक्ते रथे ।

**अध्वर्यु** पु॰ अध्वरमिच्छति अध्वर+क्यच्- युच् ततोऽन्त्याकारलोप । यजुर्वेदज्ञे होमकारिणि ऋत्विजि ।

**अध्वशल्य** पु॰ अध्वनि शल्यमिवाचरतीति क्विप्+अच् । पथिकानां पादवस्त्रादौ शल्यवद्वेधकारके आपाङ् इति ख्याते अपामार्गवृक्षे ।

**अन** जीवने अदादि॰पर॰ अक॰सेट् । अनिति आनीत् ।

**अन** जीवने दिवा॰ आत्म॰ अक॰ सेट् । अन्यते आनिष्ट ।

**अनक्ष** त्रि॰ नास्ति अक्षं चक्रं नेत्रादिकमिन्द्रियं वा यस्य ब॰ । चक्रशून्ये चक्षुरादीन्द्रियशून्ये च ।

**अनक्षर** न॰ अप्रशस्तान्यक्षराणि यत्र ब॰ । कटुत्वाक्षेपके दोषोद्घोषकवाक्ये, अवाच्ये निन्दावचने, गालि इति प्रसिद्धे दुष्टवचने च ।

**अनक्षि** पु॰ अप्रशस्तं मन्दमक्षि न॰त॰ । मन्दनेत्रे । ब॰ । तद्वति तत्र अनक्ष इत्येव टच् समासान्त· ।

**अनग्नि** पु॰ नास्ति अग्निः श्रौतः स्मार्त्तो वाऽस्य । श्रौतेन स्मार्त्तेन वा विधिना अनाहिताग्नौ ब्रह्मस्वादौ, सर्व्वथा अग्निशून्ये प्रव्रजिते च ।

**अनघ** त्रि॰ नास्ति अघं पापं दुःखं व्यसनं कालुष्यं वा यस्य । पापशून्ये, दुःखहीने, व्यसनशून्ये मलशून्ये स्वच्छे च ।

**अनङ्ग** न॰ नास्ति अङ्गमाकारो यस्य । आकाशे चित्ते । कन्दर्पे पु॰ । अङ्गशून्यमात्रे त्रि॰ । [विशेषे ।

**अनङ्गशेखर** पु॰ क्रमेण लघुगुरुनिवेशयति दण्डकभेदे,छन्दो-

**अनच्छ** त्रि॰ न अच्छं निर्म्मल· न॰त॰ । कलुषे, अप्रसन्ने च ।

**अनञ्जन** न॰ न अज्यते लिप्यते अन्ज-कर्म्मणि ल्युट् न॰त॰ । निःसम्बन्धे आकाशे, परब्रह्मणि च । अञ्जनं दोषसदृष्टिते नारायणे पु॰ । तथाभूतवस्तुमात्रे त्रि॰ ।

**अनडुह्** पु॰ अनः शकटं वहतीति नि॰ । एंड़ा इति प्रसिद्धे गवि । स्त्रियां गवि ङीपि अनडुही अनड्वाहीति च ।

**अनध्याय** पु॰ अध्यायोऽध्ययनमभावार्थे न॰त॰ । अध्ययनाभावे । न अधीयतेऽस्मिन् काले इति अधिकरणे घञि, अध्ययनाय निषिद्धे “चातुर्मास्यद्वितीयायाम् । मन्वादिषु युगादिषु । अष्टकासु च संक्रान्तौ शयने बोधने हरेः । अनध्यायं प्रकुर्व्वीतेत्याद्युक्ते काले, निर्घाते भूमिचलने इत्याद्याकालिकानध्यायकाले च ।

**अनन्त** पु॰ नास्ति अन्तः गुणानां यस्य ब॰ । गन्धर्व्वाप्सरसः सिद्धाः किन्नरोरगचारणाः । नान्तं गुणानां जानन्ति तेनानन्तोऽयमुच्यते इत्युक्तलक्षणे विष्णौ,मेघे च । बहुशीर्षकत्वादपरिच्छिन्ने शेषनागे, तदवतारे बलभद्रे च । अन्तः परिच्छेदः देशतः कालतः वस्तुतश्च यस्य नास्ति तस्मिन् परब्रह्मणि आकाशे च न॰ । बहुविस्तारवति सिन्दुवारवृक्षे पु॰ । अवधिशून्ये, इयत्ताशून्ये च वस्तुमात्रे त्रि॰ ।

**अनात्मन्** पु० अतति सातत्येन तिष्ठति अत-मनिन् आत्मशब्दे भेदार्थे च न०त० । आत्मभिन्ने, अपकृष्टात्मनि देहादौ "अप्राप्य प्राप्यते योऽयमत्यन्तं त्यज्यतेऽथ वा । जानीयात्त मनात्मानं बुद्ध्यन्तं वपुरादिकम्" इति प्रतिपादिते च ।

**अनादर** पु० आ+दृ-अच् आदरः गौरवहेतुका सम्मानना विरोधे नञ् त० । परिभवे, तिरस्कारे च तस्य आदरविरोधित्वात् । ब० । आदरशून्ये त्रि० । [ब० ।

**अनादि** पु० आदिः कारणम् पूर्वकालो वास नास्ति यस्य परमेश्वरे । नास्ति आदिः प्राथमिकोऽवयवः ५ब० । हिरण्यगर्भे पु तस्य स्रष्टेः प्रथमोत्पन्ने । आदिशून्ये त्रि०

**अनामन्** न० अननमनः अन-अच् अनं जीवनम् अनयति रुजति अम-अनि । अर्शोरोगे । नामशून्ये मलमासे पु० तस्य वैदिककर्मानर्हतयाऽनामत्वात् । नामशून्ये त्रि० ।

**अनामय** पु० अम-घञ् आमं तापं यात्यनेन या-क आमयो रोगः न० त० । रोगाभावे आरोग्ये । न० ब० । रोगशून्ये त्रि० ।

**अनामा** स्त्री० ब्रह्मणःशिरश्छेदनसाधनतया ग्रहणायोग्यत्वात् नास्ति नाम ग्रहणयोग्यं यस्याः ब० मननदात् डाप् । स्वनामप्रसिद्धायां मध्यमाकनिष्ठयोः मध्यगायामङ्गुल्याम् । स्वार्थे क अनामिकाप्यत्र । तथा हि शिवेन ब्रह्मशिरश्छिन्नमिति पुराणे प्रसिद्धम् अतएव तस्याः पवित्रीकरणार्थं पवित्रनामककुशधारणं क्रियते ।

**अनायास** पु० आ-यस घञ् यत्नार्थे न०त० । प्रयत्नाभावे, अल्पप्रयासे, अक्लेशे च । ब० । प्रयत्नशून्ये त्रि० ।

**अनायासकृत** न० अनायासेन अल्पप्रयत्नेन कृतं न०त० । अल्पायासेन साध्ये कार्यादौ ।

**अनारत** न० आ-रम-क्त आरतं विरतिः अत्यन्ताभावे न०त० । सन्तते, अविरते अविच्छेदे च । ब० । तद्वति त्रि० ।

**अनार्जव** पु० ऋजोर्भाव आर्जवं सरलता स्वाच्छन्द्यं नञा ७ब० । रोगे । अव्ययी० । ऋजुताभावे अव्य० । ६ब० । कुटिले त्रि० ।

**अनार्य्यक(ज)** न० । अनार्य्यदेशे आर्य्यावर्त्तादिभिन्ने द्वीपान्तरादौ भव अनार्य्य+क । अगुरुकाष्ठे । जदृति पक्षे तस्मिन् जायते जन-ड । अनार्य्यदेशजाते त्रि० ।

**अनार्य्यतिक्त** पु० अनार्य्यप्रियस्तिक्तः शाक० त० । चिरात इति ख्याते भूनिम्बे वृक्षे ।

**अनावृत्ति** स्त्री० आ+वृत-क्तिन् अभ्यासः आगतिश्च न० त० । अभ्यासाभावे, आगमनाभावे च । ब० । तद्वति त्रि० ।

**अनावृष्टि** स्त्री० आ-ईषत् -वृष क्तिन् न० त० । ईषद्वृष्टेरभावे शस्योपघातकोपद्रवे ईतिभेदे ।

**अनाश्रक** पु० । आ सम्यक् यथेच्छम् अशनः आशनम् आ+अश घञ् न०त० । यथेच्छभोगाभावे, तमेतं ब्राह्मणा विविदिषन्ति वेदानुवचनेन तपसाऽनाशकेनेति श्रुतिः ।

**अनाशिन्** पु० न नश्यति नश-णिनि न०त०, न अश्नाति कर्म्मफलं अश णिनि न०त० वा । नाशशून्ये, कर्म्मफलाभोक्तरि च परमेश्वरे ।

**अनाश्वन्** त्रि० न+अश-क्वसु नि० । अनशनव्रतवति ।

**अनास्था** स्त्री० आ+स्था-अङ् आस्था आदरः न०त० । अनादरे । ब० । आदररहिते त्रि० ।

**अनाहत** न० आ-हन-भावे क्त आहत छेदो भोगो वा न०ब० । छेदभोगादिरहिते नवीने वस्त्रे । तन्त्रशास्त्रे प्रसिद्धे हृदयस्थिते द्वादशदलपद्मे "शब्दो ब्रह्ममयः शब्दोऽनाहतो यत्र दृश्यते अनाहताख्यं तत् पद्मं मुनिभिः परिकीर्त्तितमित्युक्तलक्षणे च अश्विन् पक्षे च आहतमाघातः कण्ठताल्वाद्यभिघातः तदस्ति यस्य तादृशः शब्दः अस्त्यस्ति अर्श आदित्वात् अच् । अनाहतशब्देन च परापश्यन्तीमध्यमावैखरीतिनामिकानां वाक्शक्तीनां मध्ये मध्यमा वाक् कथ्यते तस्याः हृदयपद्मे उत्पन्नत्वात् । ब० । आघातरहिते वस्तुमात्रे त्रि० ।

**अनिकेत** त्रि० नास्ति निकेतः नियमेन वासो यस्य ब० । नियतनिवासशून्ये परिव्राजके ।

**अनिमि(मे)ष** पु० नास्ति निमिषः चक्षुःस्पन्दनं यस्य निमघञ् कुट०टि० न गुण० मिष आदि घञ्-वा ६ब० । चक्षुःस्पन्दनशून्ये देवे मत्स्ये च । निमेषो दृष्टिप्रतिबन्धकस्तच्छून्ये विष्णौ च । न निमिषति चक्षुरिति नि+मिष-क न०त० । काले । क्रियाशून्ये वस्तुमात्रे त्रि० ।

**अनियन्त्रित** त्रि० नि+यन्त्र चु० क्त न०त० । अनियमिते, उच्छृङ्खले च ।

**अनिरुद्ध** पु० न केनापि युद्धेन निरुद्धः नि+रुध-क्त न०त० । कामदेवपुत्रे, उषापतौ, वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्यचतुर्व्यूहस्य परमेश्वरस्य अनियोध्यस्य अत्यन्तचलस्य चेतसोऽधिष्ठातरि अनिरुद्धाख्ये अंशे च अप्रतिरुद्धे त्रि० ।

**अनिरुद्धपथ** न० न निरुद्धः पन्था यत्र ब० । आकाशे तत्र कस्यापि गतिरोधनाभावात् । रुद्धवर्त्मभिन्ने त्रि० ।

**अनिर्द्देश्य** त्रि० निर्द्देश्यं जातिगुणक्रियासंज्ञाभिर्निर्द्देष्टुमशक्यम् निर्+दिश्-यत्यार्थे ण्यत् न०त० । निर्विशेषे निर्धर्मके

परमात्मनि तस्य जातिगुणाद्यभावेन इद तदिति निर्देष्टुम योग्यत्वात्।

**अनिर्व्वचनीय** पु० निर्वचनं निरुक्तिः लक्षणादिना ज्ञापनं तदगोचरतया निर्वक्तुमशक्ये वियदादौ, परात्मनि च।

**अनिल** पु० अनित्यनेन अन-इलच्। वायौ, तेनैव सर्व्वेषां प्राणधारणात् तद्देवताके स्वातिनक्षत्रे, "वाता भद्राय दूत्का" इत्युक्तगणदेवताभेदे, अष्टवसुमध्ये पञ्चमे वसौ च।

**अनिलघ्नक** पु० अनिलं वातरोगं हन्ति हन् क ततः स्वार्थे क। बयडा इति ख्याते वृक्षे तत्फलस्य वातनाशकत्वात्।

**अनिलसख** पु० अनिलस्य वायोः सखा टच्। वह्नौ।

**अनिलान्तक** पु० अनिलो वातरोगस्तस्यान्तकं अन्तं करोतीति अन्त+णिच् ण्वुल्। ओयाफुलि इति ख्याते वृक्षे।

**अनिलामय** पु० अनिलकृत आमयः शाक० त०। वातरोगे।

**अनिवार** त्रि० नास्ति निवारो निवारणं यस्य। अविच्छेदे, सतते, अनिवार्य्ये च।

**अनिश** त्रि० निशा चेष्टाव्याघातः सा नास्ति यत्र ब०। अविरते, निरन्तरे सदाभवे वस्तुनि, रात्रिवर्ज्जिते च।

**अनिष्ट** त्रि० इष-क्त विरोधे नञा त०। इष्टस्य सुखादेर्विरोधिनि प्रतिकूलवेदनीये दुःखे, तत्साधने पापे, विषादौ, अपकारे च। नागवलायां स्त्री०।

**अनीक** न० अनित्यनेन अन ईकन्। सैन्ये, तस्य हि जीवनप्रदत्वात्। न नीयते अपसार्य्यतेऽस्मात्। नी क्विप् न० कप् ह्रस्वाभावः। युद्धे, ततो हि प्रायोमरणान्नापसारणम्।

**अनीकस्थ** पु० अनीके युद्धे तिष्ठति स्था क। युद्धगते सैन्ये।

**अनीकिनी** स्त्री० अनीकं युद्धं प्रयोजनतया अस्त्यस्याः अनीक+इनि। सेनायाम् हस्त्यादिसङ्ख्याविशेषवत्यां सेनायाम् तत्सङ्ख्या च हस्तिन २१८७। रथा २१८७। अश्वा ६५६१। पदातय १०९३५ समुदिता २१८७०।

**अनीश** पु० नास्ति ईशो नियन्ता यस्य ब०। सर्व्वनियन्तरि विष्णौ। न त०। ईश्वरभिन्ने स्वामिभिन्ने च त्रि०।

**अनीह** त्रि० ईह यस्य न०ब०। स्पृहाशून्ये निश्चेष्टे च।

**अनु** अव्य० अन-उ। सदृशार्थे पश्चार्थे सादृश्ये लक्षणे, हीने, व्याप्तौ कथञ्चित्प्रकारमापन्नापने, भागे, अनुक्रमे, आयामे, समीपे च।

**अनुक** त्रि० अनुकामयते अनु+कम ड। कामनावति।

**अनुकम्** अव्य० अनुकामयते अनु-कम् क्विप्। वितर्के।

**अनुकम्पा** स्त्री० अनु+कम्प अ। दयायाम् किञ्चिच्चलने च।

**अनुकरण** न० सादृश्ये अनु+कृ ल्युट्। अनुकरणे। तच्च देशभाषावयवादिभिः सदृशीकरणम्। अनुक्रियतेऽनेनेति करणे ल्युट्। सदृशीकरणसाधने। यथा पटत्पटमिति शब्दा अव्यक्तशब्दस्यानुकरणानि।

**अनुकर्ष(ण)** पु० अनुकृष्यते रथबन्धेन चक्रेण अनु+कृष घञ्। रथाधः स्थिते चक्रोपरिबद्धे काष्ठे पूर्व्वसूत्रोपात्तपदादेरुत्तरत्रान्वयार्थमाकर्षणे च। कर्त्तरि ल्युः नान्तोऽप्यत्रार्थे।

**अनुकल्प** पु० कल्प्यते विधीयते इति क्लृप णिच्-अच् कल्पो-विहित अनु हीनः कल्पो मुख्यकल्पादधमः प्रा स०। गौणकल्पे, प्रतिनिधौ च। यथा मध्वभावे गुडः।

**अनुकामीन** त्रि० कामस्य अभिलाषस्य सदृशमनुकामं सादृश्ये ऽव्ययी० तत् गच्छतीति ख। यथेष्टगमनशीले।

**अनुकार** पु० अनु कृ-घञ्। देशभाषादिभिः सदृशीकरणे।

**अनुकूल** त्रि० कूलमावरणं कूलेनानुबन्धमिति यावत् अनुगतं कूलं गतिश्च। सहचरे, सहाये स्वपक्षपातिनि, अन्य दारमात्रासक्ते नायकभेदे च। सा० दर्प०।

**अनुक्रम** पु० अनु+क्रम-घञ् न वृद्धिः। परिपाट्याम्। आनुपूर्व्ये अव्ययी०। यथाक्रमे अव्य०।

**अनुक्रमणिका** स्त्री० अनुक्रम्यते यथोत्तरं परिपाट्या आरभ्यतेऽनया अनु+क्रम करणे ल्युट् स्त्रीत्वात् ङीप् स्वार्थे के ह्रस्व। अनुक्रमज्ञापके ग्रन्थाद्ये वक्तव्यस्य ग्रन्थगतस्य च उक्तार्थस्य, अर्थसमुदायस्य सङ्ग्राहके पुराणादेरंशविशेषे। स्वार्थे काभावेऽनुक्रमणीत्यपि तत्रैव।

**अनुक्रोश** पु० अनुक्रोशत्यनेन क्रुश आह्वाने रोदने च घञ्। दयायाम्। अनुगतः क्रोशं गतिस०। प्राप्तक्रोशके त्रि०।

**अनुग** त्रि० अनु+गम ड। पश्चाद्गामिनि सहचरे, आनुलोम्य गते च।

**अनुगत** त्रि० अनु+गम क्त। पश्चाद्गते सहगते आनुलोम्यगते, सामान्यधर्म्मग्रहणेन सङ्गृहीतेऽखिले विशेषे च।

**अनुगम** पु० अनु+गम घञ् वृद्ध्यभावः। पश्चाद्गमने सहायीभवने आनुलोम्यकरणे, सामान्यधर्म्मेण सर्व्वेषां विशेषग्रहणाय कथने च।

**अनुगुण** त्रि० अनुकूलो गुणो यस्य। अनुकूले अनुगते च।

**अनुग्रह** पु० अनु+ग्रह-अप्। अभीष्टसम्पादनेच्छारूपे प्रसादे आनुकूल्ये, अनिष्टनिवारणपूर्व्वकेष्टसाधनेच्छारूपायामभ्युपपत्तौ, 'विरूपोऽप्यसति स्नानादनुग्रहपूर्व्वकं हि यत्। पुरुष दानमानाभ्यामनुग्रह उदाहृतः" इत्युक्तलक्षणे दरिद्रादिपोषणे च। पक्षो ग्रहस्य सूर्य्यादिपक्षो वा अनुगतम् गति स०। ग्रहानुगते सूर्य्यादिपक्षानुगते च त्रि०।

**अनुचर** त्रि० अनु+चर-ट। सहचरे, पश्चाद्गामिनि, दासादौ, स्त्रियां ङीप्। अनुगतश्चरं द्रुतं गतिस०। द्रुतानुगे त्रि०।

**अनुज** त्रि० अनु पश्चात् जायते जन-ड। पश्चाज्जाते सहोदरे भ्रातरि। तादृश्यां भगिन्यां स्त्री०।

**अनुजीविन्** अनुजीवितुमाश्रयितुं शीलमस्य अनु+जीव-णिनि। सेवके, आश्रिते च।

**अनुज्ञा** स्त्री० अनु+ज्ञा-अङ्। स्वयंप्रवृत्तस्यान्यस्य प्रवृत्तिविघाताकरणेन प्रवर्त्तनारूपायामनुमतौ।

**अनुतर्ष** न० अनुतृष्यतेऽनेन करणे घञ्। सुरापानपात्रे, मद्ये, मद्यपाने च। भावे घञ्। अभिलाषे पानेच्छायाम्।

**अनुताप** पु० अनु+तप-घञ्। इदमनुचितं कृतमिति स्वकृतवस्तुनो दुःखजनकतया ज्ञानेन पश्चात्तापे।

**अनुत्तर** त्रि० उत्तरउत्तम नञा ५ब०। अत्यन्तश्रेष्ठे। ६त०। उत्तरवाक्यरहिते। न०त०। उत्तरदिग्भिन्ने स्त्री०।

**अनुदात्त** पु० उच्चैरात्तः उच्चारितः उदात्तः न०त०। वर्णोच्चारणस्थानेषु कण्ठादिषु नीचोच्चारणप्रयत्नविशेषे स्वरभेदे।

**अनुदित** पु० उत्+इण्+क्त ईषदर्थे न०त०। किरणमात्रेण ईषदुदितसूर्य्ये प्रविरलतारके काले। उदितेऽनुदिते चैवेति मनुः।

**अनुद्रुत** त्रि० अनु+द्रु-क्त। पश्चाद्गते, "अर्द्धमात्रं द्रुतं ज्ञेयं द्रुतार्द्धञ्चाप्यनुद्रुतमित्युक्तलक्षणे वादनविषये कालविशेषे च।

**अनुधावन** न० अनु+धाव-ल्युट्। पश्चाद्गमने, तत्त्वनिश्चयायानुसरणे, अनुसन्धाने च।

**अनुध्या** स्त्री० अनु+ध्यै-कङ्। अनुचिन्तने, अनुग्रहे, आसक्तौ च। [सान्त्वने च।

**अनुनय** पु० अनु+नी-अच्। विनये, प्रणिपाते, प्रार्थने,

**अनुनासिक** पु० अनुगता नासा गतिस० तत्रोच्चार्य्यमाणत्वात् ठ। नासानुगतेन मुखेनोच्चार्य्यमाणेषु वर्ग्यान्त्येषु ङञादिषु।

**अनुपद** अव्य० पदस्य पश्चात् अव्ययी०। पश्चाद्गमने, अव्यवधाने च। अनुगतं पदम् गतिस०। पश्चाद्गामिनि त्रि०।

**अनुपदिन्** त्रि० अनुपदम् अन्वेष्टा अनुपद+अन्वेष्टरीत्यर्थे इनि। अन्वेषणकर्त्तरि। गवामेवान्वेष्टरीत्यन्ये। स्त्रियां ङीप्।

**अनुपदीना** स्त्री० अनु पदस्य आयामतुल्यायामः आयामेऽव्ययी० अनुपदं बद्धेत्यर्थे ख। पादतुल्यायामवत्यां पादबद्धायां पादुकायाम् मोजा इत्यादि ख्यातायाम्।

**अनुपपत्ति:** स्त्री० उप+पद-क्तिन्। उपपत्तिर्युक्तिः न०त०। युक्त्यभावे, असङ्गतौ च।

**अनुपम** त्रि० उप+मा-अङ् न०ब०। उपमाशून्ये, सादृश्यरहिते उत्तमे च। कुक्कुटाख्यस्य दिग्गजस्य योषिति स्त्री०।

**अनुपरत** त्रि० उप+रम-क्त न०त०। अविरते अनिवृत्तेच्छे च।

**अनुपलब्धि** स्त्री० उप+लभ-क्तिन् न०त०। लाभाभावे, प्रत्यक्षाभावे च। तत्र च कारणानि "अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्। सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहारादिति" सांख्यकारिकोक्तानि।

**अनुपसंहारिन्** पु० न्यायमते परिभाषिते दुष्टहेतुविशेषे। स च दृष्टान्तरहितोऽन्वयी व्यतिरेकी वा दुष्टहेतुः। यथा सर्व्वमनित्यं प्रमेयत्वादित्यनुमाने सर्व्वस्यापि पक्षत्वेन अन्वये दृष्टान्तो नास्ति नापि व्यतिरेके दृष्टान्तः सर्व्वस्यापि प्रमेयतया तदभावस्य कुत्राप्यसिद्धेः।

**अनुपाकृत** त्रि० उप-आ-कृ-क्त न०त०। मन्त्रैर्वेदे पशोरर्चनादिसंस्कार उपाकरणं तद्रहिते।

**अनुपात** पु० अनु+पत-करणे घञ्। अङ्कशास्त्रे प्रसिद्धे त्रैराशिके, पूर्व्वाङ्कपातानुसारेणापराङ्कपातने च। भावे घञ्, पश्चात् पतने।

**अनुपातक** न० अनुपातयति स्वानुरूपं नरकं गमयति अनु+पत-णिच्-ण्वुल्। ब्रह्महत्यादिमहापातकसदृशे वेदनिन्दादिजन्ये पापविशेषे। तानि च पञ्चत्रिंशत्प्रकारैस्तद्भवत्वेन तावत्संख्यातानि प्राय० वि० अनुपा० प्र०।

**अनुपान** न० अनु भेषजेन सह पश्चाद्वा पीयते कर्म्मणि ल्युट्। औषधाङ्गे तेन सह, तत्पश्चाद्वा पेये मधुगुडादौ। पानस्य जलस्य समीपे अव्ययी०। जलसामीप्ये अव्य०।

**अनुपूर्व्व** पु० अनुगतं पूर्व्वं परिपाटीं गतिस०। यथाक्रमे।

**अनुप्रासः** पु० अनुगतः रसाद्यनुगुणः प्रकृष्टः आसः वर्णन्यासः समवर्णरचना समवर्णोच्चारणं वा अनु-प्र-अस घञ्। अलङ्कारे प्रसिद्धे स्वरवैषम्येऽपि समवर्णानां रचनायाम्।

**अनुप्लव** पु० अनु-प्लु-अच्। सहाये, अनुचरे, दासे च।

**अनुबन्ध** पु० अनु+बन्ध-यथायथं भावादौ घञ्। बन्धने, इच्छापूर्व्वकदोषकरणे, वातपित्तादिदोषाणामप्राधान्ये, प्रकृतिप्रत्ययागमादेशानां गुणवृद्ध्यादिकार्य्यविशेषार्थमनुबन्ध्यन्ते परिनिष्पन्नपदकालेषु अश्रूयमाणतया नश्वरे इत्संज्ञके ककारलोपे वर्णादौ, मुख्यानुयायिनि अप्रधाने, प्रकृतस्यानुवर्त्तने, संबन्धे, पश्चाद्भाव्यशुभपरिणामे, शास्त्रस्यादौ वक्तव्येषु अधिकारिविषयप्रयोजनसम्बन्धेषु, लेशे, फलसाधने च।

**अनुबन्धिन्** त्रि० अनुबध्नाति अनु+बन्ध-णिनि। सहचरे, अनुचरे, अनुरोधिनि, व्यापके च। स्त्रियां ङीप्।

**अनुबन्धी** स्त्री० अनुबध्यतेऽतिक्रामेन व्याप्रियतेऽनया अनु+

वध घञ् गौरा० ङीष् । हिक्कारोगे तृष्णायाञ्च ।

अनुबन्ध्य त्रि० वधार्थं बध्नोऽनुबध्य ण्यत् । वधार्थबद्धे गवादौ ।

अनुबोध पु० अनु बुध णिच् घञ् । पूर्वलिप्तचन्दनादेर्गन्धोद्दीपनार्थं पुनर्मर्द्दनादौ पश्चाद्बोधे च ।

अनुभव पु० अनु+भू अप् । स्मृतिभिन्ने ज्ञाने ।

अनुभाव पु० अनुभावयति उद्बोधयत्यनेन अनु+भू-णिच्-करणे-घञ् । कोपदण्डादिजाते राज्ञा तेजोविशेषे । सामर्थ्ये च । कर्त्तरि अचि । अलङ्कारशास्त्रप्रसिद्धे रसव्यञ्जके । "भाव मनोगत साक्षात् स्वगत व्यञ्जयन्ति ये । तेऽनुभावा इति ख्याता, इत्युक्तलक्षणे भ्रूभङ्गादौ ।

अनुमत त्रि० अनु+मन-क्त । त्वयाऽहं ते इदं क्रियतामिति प्रोत्साहनार्थमनुज्ञाते ।

अनुमति स्त्री० अनु+मन क्तिन् । अनुमतौ अनुज्ञायाम् । अनुमन्यते कलाहीनत्वेऽपि पूर्णिमाविहितयागादिकरणायानुज्ञायतेऽस्याम् अधिकरणे क्तिन् । कलाहीनचन्द्रयुक्तायां चतुर्द्दशीयुतपूर्णिमातिथौ ।

अनुमन्तृ त्रि० अनु+मन तृच् । उपेक्षयाऽधीने कार्य्यादौ प्रवृत्तस्यान्यस्योत्साहवर्द्धनार्थमनुज्ञाकर्त्तरि ।

अनुमरण न० अनु+मृङ-ल्युट् । भर्त्तरि मृते तद्देशाप्राप्तौ तत्पादुकादिग्रहणेन पृथक्चितारोहणेन स्त्रीया देहत्यागे ।

अनुमान न० अनु मि मा वा भावादौ ल्युट् । व्याप्तस्य दर्शनेन व्यापकस्य निश्चये यथा वह्निर्धूमस्य व्यापक इति धूमस्य व्याप्तस्यैव तथा भूय सहचार महानसादौ दृष्टा पश्चात् पर्व्वतादौ तद्व्याप्यभिन्नस्य धूमस्य दर्शने तत्र वह्निरस्तीति निश्चीयते । करणे ल्युट् । तद्धेतुभूते धूमादौ । स्मृतेरेव स्वत प्रामाण्यं, यत्र श्रुति साक्षात् न श्रूयते तत्र स्मृति वाक्यात् श्रुतिवाक्यमनुमीयते इति स्मृत्यनुमापक स्मृतिवाक्य मप्यनुमानपदेनाभिधीयते इति मीमांसका ।

अनुमिति स्त्री० अनु+मि-मा वा क्तिन् । प्रागदर्शिते भाव-साधनानुमानशब्दस्यार्थे ।

अनुमोद पु० अनु+मुद घञ् । प्रस्तुतकर्म्मणि प्रशंसितया तत्करणान्यमोदन्यापारानुकूलव्यापारे तथा कृत तत्र तदनुमोदनमित्याद्यभिलापसाधने ।

अनुयाज पु० अनु+यज-घञ् कुत्वाभाव । दर्शपौर्णमासाङ्गे प्रयाजादिषु पञ्चसु यागेषु ।

अनुयायिन् त्रि० अनु+या णिनि । पश्चात् अनुचरे दासादौ, पश्चाद्गामिनि च । स्त्रियां ङीप् ।

अनुयोग पु० अनुयुज्यते कस्मात् नियुज्यते अनु+युज घञ् । प्रश्ने । इति हि प्रश्ने पृष्ट कथनाय प्रवर्त्तते ।

अनुराग पु० अनु+रञ्ज+घञ् । अत्यन्तप्रीतौ स्नेहे च । अनुगतो राग गतिस० । अतिरागानुगे त्रि० ।

अनुराधा पु० अनुगता राधां विशाखां गतिस० । स्वनामप्रसिद्धे सप्तदशनक्षत्रे ।

अनुरूप अव्य० रूपस्य सादृश्ये योग्यत्वे वा अव्ययी० । सादृश्ये योग्यतायाञ्च । अर्थाव्याद्याचि । सदृशे, योग्ये च त्रि० ।

अनुरोध पु० अनु+रुध-घञ् । अनुसरणे, आराध्यादेरिष्टसम्पादनेच्छायाञ्च ।

अनुलाप पु० अनु वारंवार लप्यते लप-घञ् । मुहुर्भाषणे ।

अनुलेप पु० अनु+लिप भावे घञ् । चन्दनादिमर्द्दने । कर्म्मणि घञ् । अनुलिप्यमाने चन्दनादौ ।

अनुलोम पु० अनु+लोमन्+यथाक्रमे अव्ययी० अच् । यथाक्रमे ।

अनुलोमज पु० अनुलोमेन यथाक्रमेण जात जन ड । परिणीतक्षत्रियादिस्त्रीषु विप्रादिभ्य उत्कृष्टेभ्यो वर्णेभ्यो जाते मूर्द्धाभिषिक्तादौ सङ्कीर्णवर्णे ।

अनुवर्त्तन पु० अनुगतो वर्त्तनमाराध्यादेरिष्टसम्पादन गतिस० अनु+वृत-ल्युट् । अनुरोधे, आराध्यादेरिष्टसम्पादने च ।

अनुवाक पु० अनु+उच्यते-वच घञ् कुत्वम् । ग्रन्थस्यांशविशेषे, ऋगयजु समूहे, वेदांशे शस्त्रनाम्ना ख्याते च ।

अनुवाक्या स्त्री० अनु वच-ण्यत कुत्वम् । ऋग्विशेषे प्रयाजा तत्पाठार्थं देवताह्वानसाधने ऋचि ।

अनुवात पु० अनु वा+क्त । शिष्यदेशाद् गुरुदेशगन्तरि वायौ ।

अनुवाद पु० अनु+वद घञ् । ज्ञातार्थस्य प्रतिपादने सिद्धस्योपन्यासे, प्रमाणान्तरावगतार्थस्य शब्देनोक्तौ कथितस्य भाषान्तरेण कथने च ।

अनुवासन न० अनु+वस -वास-ल्युट् । धूपादिना सौरभान्वितकरणे, स्नेहयुक्तकरणे च ।

अनुवृत्त त्रि० अनु+वृत क्त । व्याप्ते, पालिते अनुगते, प्रीतिविशिष्टे, अनुप्रसिक्ति च ।

अनुवृत्ति स्त्री० अनु+वृत क्तिन् । प्रवाहरूपेणानुगतौ अनुरोधे, सेवायाम, आनुकूल्ये, व्याकरणशास्त्रे प्रसिद्धे पूर्वसूत्रोपात्तपदादीनामुत्तरत्र सूत्रेष्वनुवर्त्तनरूपेऽध्याहारे च ।

अनुव्रज्या स्त्री अनु+व्रज-क्यप् । अनुसरणादिरूपे सेवने ।

अनुशय पु० अनु+शीङ अच् । अत्यन्तद्वेषे, पश्चात्तापे, पूर्व्ववैरे च । अनुगत शय दृढ गतिस० । दृढानुगते त्रि० ।

अनुशयिन् पु० अनु+शीङ्-इनि । यागकर्म्मकृत्य चन्द्रधामे स्थित्वा यावदेवं तत्र कर्म्मफलं पश्चात्तापान्विते भूमि

लोके जन्मप्रवाहागन्तं प्रवृत्ते जीवे। पश्चात्तापयुते त्रि० ।

**अनुशासन** न० अनु+शास-ल्युट् । शासने, आज्ञायाम्, उपदेशे, नियोगकरणे च । शिष्यते आख्यायते लक्षणादिनेति करणे ल्युटि। व्युत्पादने । व्युत्पादनञ्च अतथाभूतेभ्यो विशेष्य अनुशिष्याणां बोधनम् यथा व्याकरणे साधुशब्दानामसाधुभ्यो विविच्य प्रबोधनम् ।

**अनुशीलन** न० अनु चु० शील-ल्युट् । मुहुरालोचने, पुनः पुनरभ्यासे च ।

**अनुशोचन** न० अनु+शुच-ल्युट्। शोके। स्वार्थे णिचि युचि। अनुशोचना तत्रैवार्थे स्त्री० ।

**अनुश्रव** पु० अनुश्रूयते गुरुपरम्परयोच्चारणादनु अभ्यस्यते, श्रूयते एव न तु केनापि क्रियते वा अनु+श्रु+अप् । वेदे, तस्य श्रूयमाणतयाएव सर्व्वसम्मतत्वात् ।

**अनुषङ्ग** पु० अनु+सन्ज-घञ् कुत्वम् । दयायाम्, आसक्तौ, एकत्र श्रुतपदस्य अ यत्रान्वयार्थमनुवृत्तौ, अन्योद्देशेन प्रवृत्तौ तत्क्रियानान्तरीयकतयान्यस्य सिद्धिरूपे स्मृतिशास्त्र प्रसिद्धे प्रसङ्गे च ।

**अनुष्टुभ्** स्त्री० अनु+स्तुभ+क्विप् षत्वम्। सरस्वत्याम्, अष्टाक्षरपादके छन्दोभेदे च । [करणे ।

**अनुष्ठान** न० अनु-स्था- भावे ल्युट् षत्वम् । विहितकर्म्मादि

**अनुष्ण** त्रि० उष्णः उष्णः न०त० । अलसे,उष्णभिन्ने शीते च। उत्पले न० । अलसोहि शीतबाधाभावेऽपि शीतबाधामभिनयन् कर्त्तव्यकर्म्मणि जड इव भवति दक्षस्तु शीतेऽपि तदगणयित्वा कर्त्तव्यकरणाय अजड इव सन् व्याप्रियते इति तयोरुष्णानुष्णता । अत्र कारिण्यर्थे कनि अनुष्णकोऽपि । [टापि अत इत्वम् । नीलदूर्व्वायाम् ।

**अनुष्णवल्लिका** स्त्री० अनुष्णा शीतला वल्लीव इवार्थे क ।

**अनुसन्धान** न० अनु+सम्+धाञ् ल्युट् । अन्वेषणे,चिन्तने च।

**अनुसरण** न० अनु+सृ-ल्युट् । अनुगमने, सदृशीकरणे। भावे घञि अनुसारोऽप्यत्र ।

**अनुस्यूत** त्रि० अनु+सिव क्त ऊट् । ग्रथिते,सततसंबन्धे च ।

**अनुस्वार** पु० स्वृ-घञ् उदात्तादिस्वरवत्त्वात् स्वरवर्णाएव स्वाराः अनुगत· स्वारान् गतिस०। स्वराश्रयेण उच्चार्य्यमाणे बिन्दुरेखया व्यज्यमानेऽनुनासिके वर्णभेदे अनुस्वारो विसर्गोदुपक्रम्य आश्रयस्थानभागिनइत्युक्ते तस्य तथात्वम् ।

**अनुहरण** पु० अनु+हृ ल्युट् । देशभाषाचेष्टादिना सदृशीकरणे, सादृश्यधर्म्माविष्करणे च । [शीले च न०।

**अनूनो** पु० अनु+उन समवाये क कुत्वं नि०। गतजन्मनि।कुले

**अनूचान** पु० अनु+वच-क्वान नि०। शिक्षादिषडङ्गसहित वेदाध्ययनकारिणि, वेदार्थानुवचनसमर्थे च ।

**अनून** त्रि० ऊन-क न०त० । परिपूर्णे, समग्रे, अहीने च । नूनं निश्चितं न०त० । अनिश्चिते ।

**अनूप** त्रि० अनुगता आपोयत्र ७ब० अच् स० आतऊत्त्वम् । जलप्राये देशे, तत्स्थले सर्व्वदावासिनि महिषे, "वह्वम्बुर्वह्व वृक्षश्च वातश्लेष्मामयान्वित· । देशोऽनूप इति ख्यातः" इत्युक्ते देशविशेषे च पु० । अनूपसर इति प्रसिद्धे देशे वा ।

**अनूपज** न० अनूपे जलप्राये देशे जायते जन-ड ७त०। आदा इति ख्याते आर्द्रके, तस्य जलप्रायोद्भवत्वात् । तत् स्थानजातमात्रे त्रि० ।

**अनूरु** पु० न स्त ऊरू यस्य ब० । सूर्य्यसारथौ अरुणे विनताज्येष्ठपुत्रे। तस्य अपूर्ण एव गर्भे माता अण्डस्य स्फोटनादूरुप्रभृत्यङ्गविकलत्वं पुराणे प्रसिद्धम् ।

**अनूरुसारथि** पु० अनूरु सारथिः रथनियन्ता यस्य । सूर्य्ये

**अनृच** पु० नास्ति अध्ययततया ऋक् यस्य अच् समासान्तः । ऋक्शून्ये अनुपनीते बालके ।

**अनृत** न०ऋतं सत्यं न०त० । सत्यभिन्ने अयथार्थे । अनृतत्वव्यवहारस्तु प्रायेण कथने एव लोके दृश्यते क्वचित् वस्तुन्यपि यथा रङ्गे रजतादिकं,तत्र रजतमिदमिति ज्ञानञ्च । तद्वति त्रि० । ७ब० । वाणिज्ये न० तत्रानृतबाहुल्यात् ।

**अनेक** त्रि० एक+न०त० । एकभिन्नेषु बहुषु । नञ्तत्पुरुषे उत्तरपदानुसारेणैव लिङ्गवचनतानियमेऽपि अत्र बहुवचनान्ततैव तेन सतन्त्यनेके जलधेरिवोर्म्मय इति भावः ।

**अनेकप** पु० अनेकाभ्यां मुखशुण्डाभ्यां द्वाभ्यां पिवति पा-क । द्विपे हस्तिनि । [ रूपे ।

**अनेकरूप** त्रि० अनेकानि बहूनि रूपाण्यस्य ब० । चित्र-

**अनेकान्त** त्रि० न एकएवान्त· परिच्छेदो यस्य ब० । अनियतरूपे, अनतिशये च । [णिनि ७त० । बौद्धभेदे ।

**अनेकान्तवादिन्** पु० अस्ति नास्ति वेत्येकान्तं न वदति वद-

**अनेडमूक** त्रि० एडो बधिरो मूको वाक्शक्तिरहितश्च नास्ति यस्मात् ५ब० । काला, बोवा इति ख्याते श्रवणवचनशक्तिरहिते, शठे च ।

**अनेहस्** पु० न हन्यते हन-असि प्रकृतेरेहादेशः । काले ।

**अनैकान्तिक** पु० एकान्तं नियतं व्याप्नोति एकान्त+ठक् न त० । व्यभिचारिणि दुष्टे हेतौ । यथा धूमसाधने वह्निहेतु· न एकान्तोनियमो व्याप्तिर्यत्र ७ब० । अनेकान्तोऽप्यत्रार्थे ।

**अनोऽकह** पु० अनस· शकटस्याकं गतिं हन्ति हन-ड । वृक्षे ।

यमयतीत्यादिबृहदारण्यकान्तर्यामिब्राह्मणोक्तेः । अन्तर्गतवस्तुज्ञातरि त्रि० ।

**अन्तर्वंशिक** त्रि० अन्तर्वंशे राज्ञामाभ्यन्तरगृहे नियुक्तः नियुक्तार्थे ठ। अन्तःपुरे रक्षणार्थं नियुक्ते कुब्जवामनादौ ।

**अन्तर्वत्नी** स्त्री० अन्तरस्य अस्ति गर्भ । अन्तर्+मतुप् नि० । गर्भवत्यां स्त्रियाम् ।

**अन्तर्वमि** पु० अन्तःस्थित एव वाययति उद्गारशब्दं कारयति वम शब्दे इन् यस्य मतम् । (ढेकुर) इत्यादि ख्यातस्योद्गारशब्दस्य कारके अजीर्णनामके रोगभेदे ।

**अन्तर्वाणि** त्रि० अन्तर्गता अन्तःकरणे स्थिता शास्त्रवाक्यात्मिका वाणी यस्य ब० न काम् ह्रस्वश्च । बहुशास्त्रवाक्याभिज्ञे पण्डिते ।

**अन्तर्वेदी** स्त्री० पृथिव्यामध्यस्थितत्वादन्तर्वेदीव । हरिद्वारावधिप्रयागपर्यन्ते शस्यस्थलीति ब्रह्मावर्त्त इति च ख्याते देशे ।

**अन्तर्हित** त्रि० अन्तर्-धा-क्त । गुप्ते, तिरोभूते च ।

**अन्त (न्ते) वासिन्** पु०अन्ते समीपे वस्तुं शीलमस्य वस-णिनि सप्तम्या वा लुक् । शिष्ये । स्त्रियां ङीप् । समीपवर्त्तिनि त्रि०

**अन्तशय्या** स्त्री० शयनं शय्या शीङ्-क्यप् अन्तस्य नाशार्थं शय्या चतुर्थ्यर्थे तृत० । मरणार्थं भूमिशय्यायाम्, तद्धेतुत्वात् श्मशाने च । अन्त एव शय्या निर्व्यापारार्थकत्वात् कर्म्म० । मरणे ।

**अन्तःस्था** त्रि० अन्त स्पर्शोष्मणोर्मध्ये तिष्ठतीति स्था-क्विप् । यरलवाख्येषु वर्णेषु । वा विसर्गलोपमतोऽन्तस्था अपि ।

**अन्तावसायिन्** पु० नखकेशानामन्तमवसातुं छेत्तुं शीलमस्य अन्त+सो-णिनि युक् च । नापिते । अन्ते वृद्धे वयसि अवस्यति निश्चिनोति तत्त्वम् । मुनिभेदे । अन्ताय स्वतो-धतते जन्तुनाशाय अवस्यति । प्राणिहिंसके चाण्डालादौ ।

**अन्ति (का)** स्त्री० अन्त्यते संबध्यते अन्त-इ । नटाभिनयनकाले तदुक्तौ ज्येष्ठभगिन्याम् । स्वार्थे के टापि अन्तिकेत्यपि

**अन्तिक** त्रि० अन्त्यते संबध्यते सामीप्येन, अन्त-घञ् सोऽस्यास्तीति मत्वर्थीयः ठन् । समीपवति । स्वार्थे ठनि सामीप्ये पु० । चुल्ल्याम् न० । ओषधिभेदे स्त्री० ।

**अन्तिकाश्रय** पु० अन्तिके समीपे आश्रीयते आ+श्री-अच् । निकटस्थे, अवलम्बनस्थाने च ।

**अन्तिम** त्रि० अन्ते भवः अन्त+डिमच् । अन्तभवे, चरमे च ।

**अन्त्य** पु० अन्ते पर्यन्ते वसतीति अन्त+यत् । चाण्डाले । मुस्तायाम् स्त्री० । अन्तिमे वस्तुनि त्रि० । यथा नक्षत्राणां मध्ये रेवती, राशीनां मध्ये मीनः वर्णानां मध्ये हकार इत्यादि । संख्याभेदे न० "जलधिश्चान्त्यं मध्यं परार्द्धमिति दशगुणोत्तरा संज्ञे"ति भास्कराचार्योक्तेः परार्द्धदशभागे ।

**अन्त्यज** पु० अन्त्योऽधमः जायते जन-ड । शूद्रे,स हि वर्णानां विप्रादीनां चतुर्णां मध्ये अधमो जातः । "रजकश्चर्मकारश्च नटो वरुड एव च । कैवर्त्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृता" इति स्मृत्युक्तेषु सप्तसु रजकादिषु च । अधमजातमात्रे त्रि० ।

**अन्त्यजन्मन्** पु० अन्त्यं जन्म यस्य । शूद्रे । स हि विप्रक्षत्रियवैश्यजन्मानन्तरं ब्रह्मणः पादात् शेषे जातः ।

**अन्त्यावसायिन्** पु० "निषादस्त्री तु चण्डालात् पुत्रमन्त्यावसायिनम् । श्मशानगोचरं सूते, इति मनूक्तेः निषादस्त्रियां चण्डालजाते छुरदाफराष इति ख्याते सङ्कीर्णवर्णे । "चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा । मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः, इत्यङ्गिरसोक्तचाण्डालादिषु च ।

**अन्त्येष्टि** स्त्री० इष्टि यागः यज-क्तिन् अन्त्या इष्टिः । मृतस्य दाहादिरूपे चरमसंस्कारे "नान्त्येष्टिर्नास्थिसञ्चय" इतिस्मृतिः

**अन्त्र** न० अन्त्यते देहो बध्यतेऽनेन । अति बन्धने ष्ट्रन् । देहबन्धके "उक्ताः सार्द्धास्त्रयो व्यामा पुंसामन्त्राणि सूरिभि अर्द्धव्यामेन हीनानि स्त्रीणामन्त्राणि निर्द्दिशेत् ।" इति वैद्यकोक्तपरिमाणवति नाडीभेदे ।

**अन्दुक** पु० अन्द्यते बध्यतेऽनेन अदि बन्धने कू स्वार्थे के ह्रस्वः अभिधानात् पुंस्त्वम् । हस्तिपादबन्धने निगडे, पादकीले च ।

**अन्दू** स्त्री० अन्द्यते बध्यतेऽनेन अदि+कू । निगडे स्त्रीपादभूषणे च । [न्दिवत् त ।

**अन्ध** दृष्टिनाशे अद० चु० उभ० अक०सेट् । अन्धयति ते आ-

**अन्ध** पु० न० अन्धयति चक्षुषा न पश्यति अच् । चक्षुर्द्वयहीने । अन्ध्यतेऽनेनेति करणे घञि । अन्धकारे जले च न० ।

**अन्धक** पु० अन्धयति अन्ध-ण्वुल् । देशभेदे,मुनिभेदे, यदुवंश्यनृपभेदे, हिरण्याक्षसुते दैत्यभेदे च । तमसि न० ।

**अन्धकरिपु** पु० अन्धकासुरस्य रिपु । शिवे, अन्धकस्य तमसो रिपौ सूर्य्ये, चन्द्रे, वह्नौ च ।

**अन्धकार** पु० न० अन्धं करोति कृ-अण् उप०स० । तेजोऽभावे तमसि ।

**अन्धकूप** पु० अन्धयतीत्यन्धः स चासौ कूपः । साऽन्धकारे कूपे । अन्धः कूपो यत्र ब० । नरकभेदे । अन्धस्य दृष्ट्यभावस्य कूपइव । मोहे । स हि सर्व्वदृष्ट्यभावस्याकरः ।

**अन्धतमस** न० अन्धयति अन्ध+अच् ताम्यति अनेनेति तम्-असि कर्म्म० अच् समासान्तः । निविडान्धकारे ।

**अन्धतामिस्र** न० तमिस्रा तमस्ततिः तमिस्रैव तामिस्रं अन्ध-यतीत्यन्धम् कर्म्म० । निविड़ान्धकारे । अन्धम् अन्धकारकं तामिस्रं यत्र ७ब० । नरकविशेषे । सांख्यशास्त्रे प्रसिद्धे भयविशेषविषयकेऽभिनिवेशे पु० ।

**अन्धमूषिका** स्त्री० अन्धं दृष्टिभावं मुष्णाति मुष-ण्वुल् दीर्घः । देवताड़वृक्षे तत्सेवने हि चक्षुष्मत्ता भवतीति वैद्यकप्रसिद्धम् ।

**अन्धस्** न० अद्यते अद्-असुन् नुम् धश्च । ओदने ।

**अन्धिका** स्त्री अन्धयति अन्ध-ण्वुल् । रात्रौ, द्यूतभेदे स-र्षपे, शिखाख्यौषधौ, आन्दुलीति ख्याते नेत्ररोगभेदे च ।

**अन्धु** पु० अन्ध कु । कूपे ।

**अन्धुल** पु अन्ध-उल । शिरीषवृक्षे ।

**अन्ध्र** पु० अन्ध-र । देशभेदे, तन्नस्थलोके जातिभेदे च ।

**अन्न** न अनित्यनेन अन-नन् अद्यते इति वा अद क्त जग्ध्यादेशः न जग्धि । ओदने, शिवगीते "यच्च वेदगतं प्रोक्तं तदन्नं चान्नमुच्यते । अन्नं तु त्रिविधं प्रोक्तं शिवमन्नं तदाहृतम्" इति श्रुते ब्रीह्यादावाप्याने, पृथि-व्याम् अदनीयत्वात् तथा अन्नत्वम् अतएव वेदान्ते तेजो-ऽबन्नात्मिका प्रकृतिरित्युक्तम् । उपचारात् उपकरणे च ।

**अन्नकोष्ठक** पु अन्नस्य कोष्ठागारे स्वल्पकोष्ठमिव अस्त्यार्थे क । कुटी इति ख्याते धान्यादेः स्थापनस्थाने ।

**अन्नगन्धि** पु० अन्नस्य गन्धइव गन्धो यस्य ब० इत्समासान्त । अतिसारे, उदरामये च रोगे । अन्नस्य गन्धो लेशो यत्र ब० इत्समासान्त । अन्नादिभोजनादौ त्रि ।

**अन्नप्राशन** न० प्रकृष्ट विधानेन प्रथमप्राशन प्राशन ६त० । षष्ठाष्टममासादौ बालकादेर्विधानेन प्रथमान्नभोजने ।

**अन्नमय** पु अन्नस्य विकार अन्न+विकारार्थे मयट् । स्थूलशरीरे । अन्नविकारमात्रे त्रि । अन्नमयं हि सौम्य मन इति श्रुति ।

**अन्नविकार** पु० वि+कृ घञ् ६त० । अन्नस्य विकारे शोणितमांसादिपरिणामजे चरमधातौ शुक्रे । वि+कृ भावे क्ति । अन्नस्य विकृते ।

**अन्नाद्य** न अन्नस्य विधानेन आगमनम् । अन्नप्राशनार्थे ।

**अन्य** त्रि अन यत् । भिन्ने इतरे च । सर्वनामतास्य ।

**अन्यतम** त्रि अन्य० । बहूनां मध्ये निर्द्धारिते एकस्मिन् ।

**अन्यतर** त्रि० अन्य० । द्वयोर्मध्ये निर्द्धारिते एकस्मिन् सर्व्व० ।

**अन्यत्र** अव्य० अन्य+त्रल् । व्यतिरेके, विनार्थे च "अन्यत्र धर्मादन्यत्राधर्म्मादिति" श्रुतौ प्रथमार्थे एव त्रल् ।

**अन्यथा** अव्य० अन्य प्रकारार्थे थाल् । विनाय, इतरप्रका-रार्थे, निषेधे इष्टे च ।

**अन्यथासिद्धि** स्त्री० अन्यथा यस्य कारणतां विनापि सिद्धि कार्य्यजन्म तस्य अन्यथासिद्धिरिति न्याये परिभाषितरूपे वस्तुनि यथा घटजन्मकाले तत्र गर्द्दभस्य स्थितावपि तस्य कारणतां विनापि घटादिसिद्धिरिति घटादौ गर्द्दभादेरन्यथासिद्धि ।

**अन्यदा** अव्य अन्यस्मिन् काले दाच् । अन्यस्मिन् काले ।

**अन्यपूर्व्वा** स्त्री० अन्य पूर्व्वो यस्या । पूर्व्वपतिमरणादौ पश्चात् तत्तद्भिन्नपतिकाया पुनर्भुवि । अर्शआदित्वादच् अन्या पूर्व्वा यस्य सा । तत्परिणेतरि पुनर्भूपतौ पु ।

**अन्यभृत्** पु० अन्येन भ्रियते भृ-कर्म्मणि क्विप् । कोकिले । कर्म्मणि क्ते अन्यभृतोऽप्यत्र । कर्त्तरि क्विपि परपोषके त्रि० ।

**अन्यादृश्** त्रि अन्यस्येव दर्शनमस्य अन्य+दृश् क्विन् आत्वञ्च, स्त्री । अन्यसदृशे, अन्यप्रकारे च । टकि अन्यादृश , क्से अन्यादृक्षोऽप्यत्रैवार्थे ।

**अन्याय** पु० न्यायो विचार , सङ्गति, औचित्य, प्रतिज्ञादिपञ्चक-प्रतिपादकवाक्यञ्च न०त० । विचाराभावे, सङ्गत्यभावे, अनौ-चित्ये पञ्चाङ्गन्यायभिन्ने च न्यायपदार्थे तथैव पश्यते । ब० । विचारशून्ये औचित्यशून्ये असङ्गते, प्रतिज्ञादिपञ्चक वाक्यशून्ये च त्रि० ।

**अन्योदर्य्य** पु अन्यस्मिन् स्वमातृभिन्ने उदरे गर्भे भव उदर+ यत् । एकपितृके भिन्नमातृके वैमात्रेये भ्रातरि । अन्यो-दर्य्यस्तु संहरेदिति श्रुति । तथाभगिन्या स्त्री । अन्यो-दरजातमात्रे त्रि अतएव दायभागे संसृष्टव्याख्याने भ्रातृपुत्रादीनामपि अन्योदर्य्यपदार्थतया ग्रहणमित्युक्तम् ।

**अन्योन्य** त्रि० अन्य+कर्म्मव्यतिहारे । एकजातीयक्रिया करणे) द्वित्वम् पूर्व्वपदे सुप् । परस्परार्थे । कृतद्वित्वस्यापि सर्व्वनामता तेनान्योऽन्यस्मै इत्यादि । अलङ्कारशास्त्रप्रसिद्धे अलङ्कारभेदे न० तच्च साहि ।०दर्प०

**अन्योऽन्याभाव** पु अन्योऽन्यस्मिन् अन्योऽन्यस्य अभाव । भेदे भेदो हि यथा घटे पटस्य तथा पटे घटस्य सदा ऽस्ति समवायाभावस्त्वेव घटे भूतलस्याभावेऽपि भूतल घटस्य कदाचित् समवायसम्बन्धाभावात् ।

**अन्योन्याश्रय** त्रि अन्योन्यमाश्रयतीति आ+श्री अच् । परस्परसापेक्षे । न्यायमते तर्कविशेषे पु । स च यत्रैकस्य ज्ञानजनकाय यथाऽन्यज्ञानापेक्षा तथा अन्यस्य ज्ञानजनका नेतरस्य ज्ञानापेक्षेति ज्ञानापेक्षाया अनिर्मितकोऽनिष्ट प्रसङ्ग विस्तरस्तु शब्दार्थरत्ने ।

**अन्यास्य** त्रि० अनुगतमर्थमिन्द्रिय गतिष० । प्रत्यक्षे, अनुपदे,

अनुगे च । अक्ष्णः समीपेऽव्ययी०टचि । चक्षुर्निकटे अव्य० ।

**अन्वच्** त्रि० अनु+अन्च–क्विन् । अनुगामिनि, अनुपदे च ।

**अन्वय** पु० अनु+इण्-अच् । सन्ततौ, अनुगतौ, अनुवृत्तौ, आनुकूल्ये, कार्य्यकारणयोरनुसरणे, कार्य्यसत्तापादकसत्ता कस्य कारणस्य कार्य्योस्थितौ, सचत्तानियतसत्तावति, कार्य्ये संवन्धे च पदानां, पदोपस्थाप्यपदार्थानाञ्च परस्परेण संवन्धे च ।

**अन्वयबोध** पु० अन्वयस्य पदोपस्थाप्यपदार्थानां संवन्धस्य बोधः ६त० । न्यायमते शब्दजन्ये शाब्द इति नामके प्रत्यक्षानुमानादिभिन्ने बोधे । वैशेषिकमते शब्दजन्ये अनुमित्यात्मके एव बोधे ।

**अन्वयव्यतिरेकिन्** त्रि० अन्वयव्यतिरेकौ स्तोऽस्य । साध्यसाधके हेतुविशेषे, यथा वह्निसाधने धूम । स हि वह्निमति महानसादौ वह्न्यभाववति जलादौ च भावाभावाभ्यां वह्नेरन्वयव्याप्तः व्यतिरेकव्याप्तश्चेति न्यायमते प्रसिद्धम् ।

**अन्वयव्याप्ति** स्त्री० अन्वयेन व्याप्तिर्व्यापनं नियततया स्थितिः ३त० । यत्र धूमस्तत्र वह्निरित्येवं रूपायां व्याप्तौ ।

**अन्ववसर्ग** पु० अनु+अव+सृज-घञ् । यथेष्टं क्रियतामित्येवं रूपायामनुज्ञायाम् ।

**अन्ववाय** पु० अन्ववायते उत्पत्त्यानुसंवध्यते अनु+अव+अय-घञ्, इण्-अच् वा । वंशे, सन्ताने च ।

**अन्वष्टका** स्त्री० अनुगतामष्टकाम् गतिस० । अष्टकानन्तरतिथिषु गौणचान्द्रपौषमाघफाल्गुनमासानां कृष्णनवमीषु । तत्र साग्निकस्य मातृश्राद्धमष्टकाश्राद्धवत् कर्त्तव्यम् ।

**अन्वहम्** अव्य० अह्नि अह्नि वीप्सार्थेऽव्ययी० अच् । प्रतिदिने

**अन्वाचय** पु० एकस्य प्राधान्यादन्य आचीयते वोध्यते यत्र अनु+आ+चि-अच् । उद्देश्यसिद्ध्यानुद्देश्यसिद्धौ । यथा भिक्षां गच्छ यदि गां पश्येस्तामानय, अत्र भिक्षायामेव उद्देश· न गमने, तत्सिद्ध्यनन्तरं गवानयनमनुद्दिष्टमपि साध्यतया निर्द्दिष्टम् ।

**अन्वाजे** अव्य० अनु आजयत्यनेन अनु+आ+जि-डे । दुर्वलस्य वलाधाने । सप्तम्यन्तप्रतिरूपकोऽयम् ।

**अन्वादेश** पु० अनु+आ+दिश घञ् । पूर्वोपात्तस्य किञ्चित्कार्य्यान्तरं विधातु पुनरुपदेशे । यथा अनेन व्याकरणमधीतं न्यायमेनं प्रपाठयेति न्यायपाठनार्थं पुनरुपदेश । कथितकथने, अनुवादार्थे च ।

**अन्वाधेय** न० अनु+आ+धाञ् यत् । "विवाहात् परतो यत्तु लब्धं भर्त्तृकुलात् स्त्रिया । अन्वाधेयं तु तत्प्रोक्तं लब्धं वन्धुकुलात्तथे"त्युक्तलक्षणे स्त्रीधने । पश्चादाधेये वस्तुनि त्रि०

**अन्वासन** न० अनु+आस-ल्युट् । पश्चादुपवेशनरूपे सेवने, अनुशोचने च । आधारे ल्युटि शिल्पगृहे ।

**अन्वाहार्य्य** न० अनु व्याप्तौ, मासिमासि आह्रियते अनु+आ+हृ-ण्यत् । प्रतिमासकर्त्तव्येऽमावास्याविहिते श्राद्धे "पितॄणां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधा" इति स्मृतिः, यागदक्षिणायाञ्च ।

**अन्वाहार्य्यपचन** पु० अन्वाहार्य्यं श्राद्धान्नं पच्यतेऽनेन पच+ल्युट् । दक्षिणाग्नौ स्ववेदविधिना स्थापितेऽग्नौ ।

**अन्विच्छा** स्त्री० अनु+इष-अ नि० । अन्वेषणे ।

**अन्विष्ट** त्रि० अनु+इष्-क्त । अन्वेषिते ।

**अन्वीक्षा** स्त्री० अनु अवधारणानु ईक्षा कृतार्थस्य युक्तायुक्तत्वपर्य्यालोचना अनु+ईक्ष-अङ् । वेदवाक्यश्रवणानन्तरं तदर्थपर्य्यालोचनायाम् । अतएवैतदुपयोगिनी विद्या आन्वीक्षिकीत्युच्यते ।

**अन्वेषण** न० अनु+इष-ल्युट् । अनुसन्धाने । व्यवधानादिना अदर्शनं गतस्य ज्ञानार्थं प्रयत्नोदलानुसन्धानम् । याच्ञायाञ्च । युचि । अन्वेषणा । तस्मिन्नेवार्थे स्त्री० ।

**अप्** स्त्री० वहु० आप-क्विप् ह्रस्वः । जले ।

**अप** अव्य० न पाति पा-ड । वियोगे, विकृतौ, विपरीते, निदर्शने, आनन्दे, वर्जने, चौर्य्ये च ।

**अपकर्म्मन्** न० अपकृष्टं कर्म्म प्रा० । दुराचरणे । व० । दुष्टचरणवति त्रि० ।

**अपकर्ष** पु० अप+कृष-घञ् । उचितधर्म्मापेक्षया हीनतायां, स्वकर्त्तव्यकालात् पूर्व्वकालकरणे च ।

**अपकार** पु० अप+कृ-घञ् । अनिष्टोत्पादने, तद्धेतौ द्वेषे च ।

**अपकारगिर्** स्त्री० अपकारेण द्वेषेण गीर्य्यते गॄ-क्विप् । भर्त्सनवाक्ये । [कार्ये कृते च ।

**अपकृष्ट** त्रि० अप+कृष-क्त । अधमे, हीने, स्वकालात् पूर्व्वे

**अपक्रम** पु० अपसृत्य क्रमो गतिः क्रम घञ् अवृद्धिः । पलायने ।

**अपक्रिया** स्त्री० अप+कृ-श । द्रोहे, अपकारे च ।

**अपक्रोश** पु० अप+क्रुश-घञ् । निन्दने । उपक्रोशोऽप्यत्र ।

**अपक्षेपण** न० अप-क्षिप-ल्युट् । अध·स्थानसंयोगहेतौ क्रियाविशेषे, अध· पातने च । अवक्षेपणमप्यत्रार्थे ।

**अपगत** त्रि० अप+गम-क्त । मृते, पलायिते, गते, दूरीभूते च

**अपघन** पु० अप+हन अप् घनादेशः । देहे, घनो भिविडस्तद्वर्ज्जिते त्रि० । [च ।

**अपघात** पु० अप+हन-घञ् । अपकृष्टहनने दुष्टहेतुकमरणे

**अपचय** पु० अप+चि अच् । ह्रासे, अपहरणे, व्ययने च ।

**अपचायित** त्रि॰ अप+चाय-णिच् स्वार्थे णिच् वा क्त । पूजिते ।

**अपचार** पु॰ अप+चर घञ् । अहिताचरणे । अपगतचारे, दूरहीने च त्रि॰ । [च-क्त । हीने ।

**अपचित** त्रि॰ अप+चाय-क्त चाय चिभाव । पूजिते ।

**अपचिति** स्त्री॰ अप+चाय+क्तिन् प्रकृतेश्चिभाव । पूजायां चि+क्तिन् । हानौ व्ययायाञ्च ।

**अपटान्तर** त्रि॰ पटेन तिरस्करिण्या अन्तरमत्र । अव्यवहिते आसक्ते, ससक्ते च । अपटान्तरमित्यप्यत्रैवार्थे ।

**अपटी** स्त्री॰ अल्प पट पटी न॰त॰ । कानात् इति ख्याते वस्त्रप्रावरणे । [क्षमे च

**अपटु** त्रि॰ पटुर्दक्ष न॰त॰। रोगिणि टक्षतारहिते काव्या

**अपतर्पण** न॰ अप+तृप-ल्युट् । रोगादौ उपवासे तृप्त्यभावे च

**अपत्य** न॰ न पतन्ति पितरोऽनेन पत-यत् न॰त॰। पुत्रदुहितृरूपे सन्ताने । [कोषधिविशेषे गर्भदायिविद्याटौ च ।

**अपत्यदा** स्त्री॰ अपत्य तद्धेतु गर्भं ददाति । सेवनेन गर्भधारके

**अपत्यशत्रु** पु॰ अपत्यस्य शत्रु ६त॰ । कर्कटे ।

**अपत्र** पु॰ न विद्यते पत्रमस्य । अङ्कुरे तस्य पत्राभावात् ।

**अपत्रप** त्रि॰ अपगता त्रपा लज्जा यस्मात् ५ब॰। लज्जाहीने ।

**अपत्रपा** स्त्री॰ अप+त्रप-अङ् । अन्यहेतुकलज्जायाम् ।

**अपत्रपिष्णु** त्रि॰ अप+त्रप-इष्णुच् । स्वभावतो लज्जाशीले ।

**अपथ** न॰ न पन्था न॰त॰ वा अच् । कुपथे पथोऽभावे च । अत्र वा अथोऽभावे अपथिन् इत्यपि । ब॰ । पथिशून्ये त्रि॰ ।

**अपथ्य** त्रि॰ पथि (रोगिभोजने) हित पथिन्+यत् न॰त॰ । रोगिभोजनायोग्ये । [अवदानमप्यत्रार्थे ।

**अपदान** न॰ अप+दैप-ल्युट् । शोधने, (प्रशस्ते) कर्म्मणि

**अपदिश** न॰ दिशयोर्मध्ये अप+दिशा+अव्ययी॰ । दिशोर्मध्ये विदिक् इति कोण इति च ख्याते ।

**अपदेश** पु अप+दिश-घञ् । लक्ष्ये, स्वरूपाच्छादनरूपे, छले, निमित्ते स्थाने च ।

**अपध्वसज** पु अपध्वस्यतेऽनेन अपध्वंस अधमा भिन्नरूपता अधमाद्य सङ्करत्वञ्चाज्जायते जन ड ५त॰ । भिन्नवर्णसङ्करजाते करणादौ सङ्कीर्णवर्णे । [चूर्णिते च ।

**अपध्वस्त** त्रि अप+ध्वन्स-क्त । निन्दिते, परित्यक्ते, अव-

**अपनयन** न अप+नी-ल्युट् । दूरीकरणे, खण्डने च ।

**अपनोदन** न अप+नुद-ल्युट् । दूरीकरणे, खण्डने च ।

**अपभ्रंश** न॰ अप+भ्रन्श-पतने घञ् । पतने । अपभ्रंश्यते अधर्म्महेतुतया पात्यतेऽनेन करणे घञ् । साधुशब्दभिन्ने अपशब्दे भाषाशब्दे गव्यादौ तदुच्चारणस्य पापहेतुत्वात् ।

**अपमान** न॰ अप+मि-मा-मा ल्युट् । अवज्ञायाम् ।

**अपमित्यक** न॰अपमितिरपमान तेनाक दुःख यत्र । अपमानहेतुकदुःखदायके ऋणे, तदग्रहणे हि उत्तमर्णसमीपेऽनादरात् दुःख भवति ।

**अपमृत्यु** पु॰ अपकृष्टो मृत्यु प्रा॰स॰ । मरणहेतुरोगादिकं विना शस्त्रादिना स्वयमन्यतो वा मरणे ।

**अपयान** न॰ अप+या-ल्युट् । अपसरणे, पलायने च ।

**अपर** न॰ न पूर्य्यते यत पॄ-अपादाने,अप् । गजस्य पश्चाद्भागे । न पृणाति सन्तोषयति पॄ-अच् । शत्रौ । अर्वाचीने, भिन्ने च त्रि॰ । पश्चिमायां दिशि ऋग्वेदादिविद्यायां च स्त्री ।

**अपरक्त** त्रि अप+रञ्ज-कर्त्तरि क्त । विरक्ते, अननुकूले ।

**अपरति** स्त्री॰अप+रम-क्तिन् । विरागे, निवृत्तौ च ।

**अपरत्र** अव्य॰ अपर+त्रल् । पश्चार्थे, परकाले च ।

**अपरत्व** न अपरस्य भाव त्व। अपर इति व्यवहारके न्यायमते गुणभेदे तच्च द्विविध कालिक दैशिकञ्च तत्र नाशादपरमौय इति कालिक, पाटलिपुत्रादपरा काशीति दैशिकम् ।

**अपरपक्ष** पु॰ अपरो निकृष्ट पक्ष कर्म॰ । कृष्णपक्षे ।

**अपररात्र** पु॰ अपर रात्रे एक त टच् । रात्रिशेषे ।

**अपरस्पर** न॰अपरश्च परश्च द्व॰ पश्चपदे हस्व । क्रियासातत्ये सन्ततैकरूपक्रियाकरणे ।

**अपराजित** पु॰ परा+जि क्त न॰त॰ । शिवे, विष्णौ, ऋषिभेदे च । पराजितभिन्ने त्रि॰ । दुर्व्वायां, स्वनामख्यातायां लतायां, दुर्गायां, शेफालिकायां, जयन्तीवृक्षे, अश्मन्तके शङ्खिनीवृक्षे च स्त्री॰ ।

**अपराद्धपृषत्क** पु॰ अपराद्धो लक्ष्यात् च्युत पृषत्को बाणो यस्य अप+राध-क्त ब॰ । लक्ष्याप्राप्तिसायके धानुष्के ।

**अपराध** पु॰ अप+राध-घञ् । अकार्य्यादिकरणरूपे दोषे ।

**अपरान्त** पु अपरस्था अन्त । पाश्चात्यदेशभेदे।तद्देशवासिनि त्रि॰

**अपराह्न** पु॰ अपरमह्न एक॰ त टच् अह्नादेशो णत्वञ्च । त्रिधा विभक्तदिनस्य तृतीये भागे ।

**अपरिग्रह** पु॰परि+ग्रह-अप् न॰त॰ । अस्वपरे स्वीकाराभावे च । नास्ति कन्याकौपीनाद्यतिरिक्त परिग्रहो यस्य ब॰ । परिव्राजके । परिग्रहमात्रशून्ये त्रि ।

**अपरिच्छिन्न** त्रि॰ परि+छिद-क्त न त । इयत्तारहिते ।

**अपरिहार्य्य** त्रि॰ परि+हृ-ण्यत् न त॰ । परिहर्त्तुमयोग्ये

**अपरेद्युस्** अव्य॰ अपरस्मिन्नहनि अपर+एद्युस् । अपरदिने

**अपरोक्ष** न॰ परोऽतीतः अक्षाणामिन्द्रियाणां न भवति पर+अक्षि+समासान्त टच् नि॰ सट् । विषयेन्द्रियसन्निकर्ष-

जन्ये प्रत्यक्षरूपे ज्ञाने । अर्श आद्यचि तद्विषये त्रि० ।
**अपर्णा** स्त्री० न पर्णान्यपि भोजनं यस्याः । हिमाद्रिजायाम् तपसि स्थितया तया पर्णस्याप्यभोजनात् । पर्णशून्ये त्रि० ।
**अपर्य्याप्त** त्रि० परि+आप्-क्त न०त० । असमर्थे, असम्पूर्णे च ।
**अपलाप** पु० अप+लप-घञ् । सतोऽप्यसत्त्वेन कथनरूपे अपह्नवे, प्रेम्णि च ।
**अपवरक** न० अप+वृ० वर-इच्छायां कर्मणि खुल् । वासगृहे ।
**अपवर्ग** पु० अप+वृज-घञ् । दाने, निर्वाणमोक्षे, फलसाधने, समाप्तौ च ।
**अपवर्ज्जन** न० अप+वृज-ल्युट् । दानादावपवर्गार्थे ।
**अपवर्त्तन** न० अप+वृत-णिच्-ल्युट् । परिवर्त्तने, वक्रीभावे, अङ्कशास्त्रे प्रसिद्धे भाज्यभाजकयोरुभयोरपि तुल्यरूपेण केनचिदङ्केन विभाजने च ।
**अपवाद** पु० अप+वद-घञ् । निन्दायाम्, आज्ञायाम्, प्रणये, विश्वासे, विशेषविधिरूपे बाधके, वेदान्तप्रसिद्धे रज्जौ प्रतिभातस्य रजतस्य रज्जुमात्ररूपतालाभे च ।
**अपवारण** न० अप+वृ० । इ-ल्युट् । अन्तर्द्धाने ।
**अपविद्ध** त्रि० अप+व्यध-क्त । त्यक्ते, मन्वाद्युक्ते प्रतिक्षिप्ते, "मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा । यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते इत्युक्तरूपे पुत्रभेदे च ।
**अपविषा** स्त्री० अपगतं विषं यस्याः ५त० । विषहारिण्याम् ।
**अपवृत्त** त्रि० अप+वृत-क्त । पराङ्मुखीभूते ।
**अपशब्द** पु० अपकृष्टः शब्दः प्रा०स० । संस्कृतभिन्ने शब्दे "तत्र शक्तिवैकल्यप्रमादालसतादिभिः । अन्यथोच्चारिता शब्दा अपशब्दा इतीरिता इतिहर्य्युक्तादिशा संस्कृतशब्दस्य अन्यथोच्चारणादसाधुत्वं गते भाषाशब्दे ।
**अपशोक** पु० अपगतः शोको यस्मात् ब० । अशोकवृक्षे । शोकरहिते त्रि० ।
**अपष्ठु** अव्य० अप+स्था-कु षत्वम् । निर्दोषे, शोभने, विपरीते, च । प्रतिकूले, विरुद्धार्थे च त्रि० । काले पु० ।
**अपष्ठुल** त्रि० अप+स्था-उलच् षत्वम् । निमित्ते, विपरीते च
**अपसद** त्रि० अपकृष्टइव सीदति सद-अच् । अधमे, नीचे च ।
**अपसर्ज्जन** न० अप+सृज-ल्युट् । दाने, परिवर्ज्जने ।
**अपसर्प** पु० अप+सृप-अच् । गुप्तचरे । घञि अपसरणे ।
**अपसव्य** पु०अपगतं सव्यं यत्र । दक्षिणभागे । पितृतीर्थे न० ।
**अपस्कर** पु० अपकीर्य्यते स्वस्थाने क्षिप्यते अप+कृ-अप् सुडागमः । चक्रभिन्ने रथाङ्गे रथारम्भके काष्ठे ।
**अपस्नात** त्रि० अपकृष्टं स्नातः । मृतकाद्देश्य स्नाते ।
**अपस्मार** पु० अपगतः स्मारः स्मरणं यस्मात् ५ब० । मिरगीइति ख्याते रोगभेदे । तस्मिन् सति तद्रोगिणः सदानीं सर्व्वविषयस्मृतिर्नश्यति । [अपस्मारिते ।
**अपहस्त** त्रि० अपसारणार्थो हस्तो यस्मिन् । गलहस्तादिना
**अपहार** पु० अप+हृ-घञ् । अपसारणे, अपचये, चौर्य्ये, स्वद्गोपने, धनस्यास्यनुपयोगित्वे च ।
**अपह्नव** पु० अप+ह्नु-अप् । सतोऽपि वस्तुनोऽसत्त्वेन कथनरूपेऽपलापे, प्रेम्णि च ।
**अपह्नुति** स्त्री० अप+ह्नु-क्तिन् । अपलापे, अलङ्कारशास्त्रे प्रसिद्धे अर्थालङ्कारभेदे च सा०१०परि० ।
**अपांनाथ** पु० ६त० । अलुक् स० । समुद्रे ।
**अपांनिधि** पु० नि+धा-कि ६त० अलुक् स० । समुद्रे ।
**अपांपति** पु० पा+डति ६त० अलुक् स० । समुद्रे, वरुणे च ।
**अपांपित्त** न० ६त०अलुक् स०वा । अग्नौ, तस्य जलहेतुत्वात् तत्पित्तत्वम् "आकाशाद्वायुर्वायोरग्निरग्नेराप" इति श्रुतिः अत्र वा लुकि अप्पित्तमित्यपि ।
**अपाक** पु० पच-घञ् न०त० । पाकाभावे, भुक्तान्नादेरग्निमान्द्यादिना पाकाभावे च । ७ब० । तत्साधने अजीर्णतारोगे । ६ब० । पाकरहिते आमे त्रि० ।
**अपाकरण** न० अप+आ+कृ-ल्युट् । निराकरणे ।
**अपाकशाक** पु०न पच्यते शाको यस्य । आर्द्रके तस्य मूलस्यैव भोजनार्थं पच्यते न शाकः ।
**अपाङ्क्तेय** त्रि० सद्भिः सह भोजने पङ्क्तिमर्हति अर्हार्थे ढ न०त० । सद्भि० सह एकपङ्क्तौ भोजनानर्हे स्तेन पतितादौ । अत्र यञि अपाङ्क्त्य इत्यपि ।
**अपाङ्ग** पु० अपाङ्गति तिर्य्यक् चलति नेत्रं यत्र अप+अङ्ग घञ् । नेत्रप्रान्ते, तिलके च । अपगतोऽङ्गात् गत्यादि० स० । अङ्गहीने त्रि० ।
**अपाङ्गक** पु० अपकृष्टमङ्गं यस्य ब० कप् । आपाङ् इति ख्याते अपामार्गे । नेत्रान्ते पु० । अपगताङ्गे त्रि० ।
**अपाङ्गदर्शन** न० अपाङ्गेन नेत्रान्ताभ्यां दर्शनं ३त० । कटाक्षे ।
**अपाटव** न० नास्ति पाटवं पटुता यत्र पटु+भावेऽण् । ७ब० । रोगे । न०त० । पटुताभिन्ने । ६ब० । पटुताशून्ये त्रि० ।
**अपात्र** न० पात्रं श्राद्धभोजनदानादियोग्यं न०त० । विद्यादिहीनेऽनाचारे, दानादियोग्यताहीने कुपात्रे, नटादौ च ।
**अपात्रीकरण** न०अपात्रं श्राद्धभोजनाद्ययोग्यं क्रियतेऽनेन । निन्दितप्रतिग्रहादिजनिते पापभेदे । "निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् । अपात्रीकरणं ज्ञेयमसत्यस्य च

भाषत्व''मिति मनूक्ते तद्धेतुभूते निन्दितधनादानादौ च।

**अपादान** न० व्याकरणप्रसिद्धे वियोगक्रियावधिभूते विभागजनकतत्क्रियानाधारे तत्क्रियाजन्यविभागाश्रये।

**अपान** पु० अपसरणेनानित्यनेन अप+अन-घञ्। सततमधोगमनशीले, गुह्यदेशस्थे "अधोनयत्यपानस्तु आहारञ्च क्रमात् पुन"रित्युक्तलक्षणे "मूत्रशुक्रवहो वायुरपान इति कीर्त्यते" इत्युक्तलक्षणे च वायौ। गुह्ये न०।

**अपामार्ग** पु० अपमृज्यते व्याधिरनेन मृज्-करणे घञ् कुत्वदीर्घौ। आपाङ् इति ख्याते वृक्षे।

**अपाय** पु० अप+इण्-अच्। वियोगे, नाशे, अपसरणे च।

**अपार** त्रि० उत्तरोऽवधिः पारं न० ब०। उत्तरावधिशून्ये। नद्यादेरन्याधीने अवारे तीरे न०।

**अपार्थ** त्रि० अपगतोऽर्थोऽभिधेयं प्रयोजनं वा यस्मात् प्र०ब०। अर्थशून्ये, प्रयोजनशून्ये च। स्वार्थे कप्। अपार्थकमप्यत्रार्थे, निष्प्रयोजने, असम्बद्धार्थके वाक्ये च।

**अपावृत** त्रि० अप+आ+वृ-क्त। अनाच्छादिते, अप्रतिबद्धे स्वतन्त्रे, उद्घाटिते च।

**अपावृत्त** त्रि० अप+आ+वृत-क्त। लुण्ठिते, परावृत्ते च।

**अपाश्रय** पु० अप+आ+श्री-अच्। आश्रयशून्ये। अपाश्रयतीति कर्त्तरि अच्। अधीने। करणेऽच्। मण्डपे।

**अपासन** न० अप+अस-णिच्-ल्युट्। मारणे।

**अपास्त** त्रि० अप+अस-क्षेपे क्त। निरस्ते-अवधीरिते च।

**अपि** अव्य० न पिबति गच्छति पि-गतौ क्विप् न तुक्। अशक्यकरणायोद्यमरूपायां, प्रत्युत्कर्षमाविष्कर्तुं प्रयुक्तिरूपायां, वा सम्भावनायां, सन्देहे, निन्दायां प्रश्ने, समुच्चये, अन्यपदार्थे कामचारानुज्ञायाम् अवधारणे, पुनरर्थे च।

**अपिगीर्ण** त्रि० अपि+गॄ-क्त। स्तुते, वर्णिते, उद्गीर्णे च।

**अपितु** अव्य० अपि+तनु-डु। किन्तु, यद्यर्थे यद्यपीत्यर्थे च।

**अपिधान** न० अपि+धाञ् ल्युट्। आच्छादने, अत्र अपेरलोपे। पिधानमपि। [पिनद्धमप्यत्र।

**अपिनद्ध** त्रि० अपि+नह-क्त। परिहिते वसनादौ। अपेरलोपे

**अपीच्य** त्रि० अपि+न-अञ्चते सौन्दर्याद्धीयते अञ्च ड। उपसर्गदीर्घ। अतिसुन्दरे। [वृक्षे। पुच्छहीने त्रि०।

**अपुच्छा** स्त्री० नास्ति पुच्छमस्य यस्याः। शिशपा-

**अपुनरावृत्ति** स्त्री० न पुनरावृत्तिरागमनं यत्र ७ब०। निर्वाणमुक्तौ। ६त०। पुनर्गमनशून्ये त्रि०। न०त०। पुनरागत्यभावे स्त्री०। [६त०। अत्यन्तशक्तौ। न त०। पुनर्जन्माभावे।

**अपुनर्भव** पु० न पुनर्भवो जन्म यत्र ७ब०। निर्वाणमोक्षे।

**अपुष्पफलद** पु० पुष्पं विनापि फलं ददाति दा-क उप०स०। पुष्पशून्ये फलवति पनसोदुम्बरादिवृक्षे।

**अपूप** पु० न पूयते विशीर्य्यते पू-प। गोधूमादिचूर्णपिष्टके।

**अपूरणी** स्त्री० न पूर्य्यते सर्व्वतः कण्टकाकीर्णतया दुरारोहत्वात्। शाल्मलिवृक्षे। सङ्ख्यापूरणसाधनभिन्ने च।

**अपूर्व्व** त्रि० न पूर्व्वं दृष्टम्। अविदिते आश्चर्य्ये। ६त०। कारणशून्ये परमात्मनि पु०। वैधनिषेधक्रियाजन्ये कालान्तरभाविनो सुखदुःखयोर्हेतुभूतयोः पुण्यपापयोः न०। पूर्व्वकालादिभिन्ने त्रि०।

**अपूर्व्वविधि** पु० अपूर्व्वे प्रमाणान्तरेणाप्राप्ते विधिर्विधानम् वि+धा-कि। अप्राप्तप्रापके लिङादिपदवेदनीये शब्दविशेषे। यथा स्वर्गकामो यजेतेति लिङ्युक्तं वाक्यं प्रमाणान्तरेणाप्राप्तस्य स्वर्गसाधनत्वस्य यागे बोधयत् अपूर्व्वविधिः।

**अपेक्षा** स्त्री० अप+ईक्ष-अङ्। आकाङ्क्षायां, कार्य्यकारणयोरवश्यसम्बन्धे च। अपेक्षते प्रत्ययमुत्तमं त्वामिति कुमार

**अपेक्षाबुद्धि** स्त्री० अयमेकः अयमेक इत्याकारिकायाम् अनेकत्वादिविषयिण्यां बुद्धौ।

**अपेक्षाबद्धिज** त्रि० न्यायमते प्रसिद्धे द्वित्वाद्यारभ्य परार्द्धसङ्ख्याभेदे द्वित्वादिकं हि प्रायुक्तापेक्षाबुद्धितोजायते।

**अपोगण्ड** त्रि० पुनाति पवते वा पू-त्विच् न पोगण्डः एकदेशोऽस्य। शिशौ, षडङ्गे विकलाङ्गे, अतिभीरौ च।

**अपोढ** त्रि० अप-उह-क्त। निरस्ते, बाधिते च।

**अपोदका** स्त्री० अपगतमुदकं यस्याः ५ब०। पूतिका इति ख्याते शाके।

**अपोह** पु० अपगत-ऊहो वादिसङ्क्षावितर्को यस्मात् ५ब०। वादिसङ्क्षावितर्कनिरासार्थके प्रतिवादिसङ्क्षावितर्कविरुद्धे तर्कभेदे। अप+ऊह-क्त भज्ञि युक्ते परकृपम्। त्यागे, अतद्व्यावृत्तौ च।

**अप्पति** पु० अपां पतिः ६त। वरुणे समुद्रे च। [कादौ।

**अप्रकाण्ड** पु० न प्रकाण्डः स्कन्धो यस्य। स्कन्धशून्ये झिण्टि-

**अप्रकाश** त्रि० प्र+काश-घञ् न०त०। नाट्ये रङ्गभूमिस्थसामाजिकसन्निधाने एव प्रकाश्ये जनान्तिकपदबोधनीये रहस्यपात्रादिबोधनयोग्ये। परप्रकाश्ये च। न०त०। प्रकाशाभावे, गोपने च पु०।

**अप्रकृष्टगुण** त्रि० न प्रकृष्टः गुणो यस्य न०ब०। व्याकुले।

**अप्रतिकर** त्रि० न प्रतिक्रियते गोपनार्थं न आप्रियते यस्मिन् कृ-आधारे अप्। विश्वासपात्रे।

**अप्रतिरथ** न० न प्रतिकूलो रथोऽत्र। युद्धार्थयाने, युद्ध

समये यात्राकृतमङ्गले, सामान्ययवभेदे च। न प्रतिपक्षो रथो रथान्तरमस्य ६ब०। अतुल्ये योधे, विष्णौ च पु०।

अप्रतिरूपकथा स्त्री० नास्ति प्रतिरूपा प्रत्युत्तरी भूता कथा यस्याः। उत्तरवाक्यरहिताया वाचि।

अप्रत्यक्ष त्रि० ज्ञानभेद प्रत्यक्षं न०७ब०। प्रत्यक्षागोचरे अतीन्द्रिये। न०त०। प्रत्यक्षाभावे। न०६ब०। प्रत्यक्षज्ञानशून्ये त्रि०।

अप्रधान न०। न०त०। प्रधानभिन्ने गौणे।

अप्रस्तुतप्रशंसा अप्रस्तुतस्याप्राकरणिकार्थस्याक्षेपादिना प्रशंसा स्तुति। अलङ्कारप्रसिद्धे अर्थालङ्कारविशेषे। सा०द०परि०।

अप्रहत त्रि० न प्रहन्यते स्म प्र+हन-क्त न०त०। अनाहते अकृष्टभूम्यादौ खिल इति ख्याते।

अप्राग्र्य त्रि० प्राग्र्यं प्रधानं न०त०। अप्रधाने।

अप्सरस् स्त्री० बहु०। अद्भिः सरन्ति सृ-असि। समुद्रादुत्पन्नत्वात् उर्वश्यादिस्वर्गवेश्यायाम्। प्रत्याप्यचि। अप्सरा।

अफल पु० नास्ति फलं यस्य। फलशून्ये राढा इति ख्याते वृक्षे। निष्फले द्रव्यमात्रे, निष्प्रयोजने वस्तुमात्रे च त्रि०। फलशून्यायां घृतकुमार्य्यां, भूम्यामलक्याञ्च स्त्री०।

अफेन न० नास्ति फेनं यस्य। वृक्षविशेषनिर्यासे आफिङ्ग इति ख्याते अहिफेने।

अब शब्दे इदित् भ्वादि० आत्म० सक० सेट्। अम्बते आम्बिष्ट

अबद्ध न० न संबध्यते स्म बन्ध-क्त। समुदायार्थशून्ये निरर्थके वाक्ये। स्वार्थे के। अबद्धकमप्यत्र। संबन्धहीने त्रि०।

अबद्धमुख त्रि० न बद्धं नियन्त्रितं मुखमस्य। दुष्टवाक्यवादिनि दुर्मुखे। [वाक्ये न०।

अबध्य त्रि० बध+अर्हार्थे यत् न०त०। बधानर्हे। अनर्थक-

अबन्ध्य त्रि० बन्धे फलप्रतिबन्धे साधु बन्ध-यत् न०त०। सफले।

अबल पु० नास्ति बलं यस्मात् ५ब०। वरुणवृक्षे तत्तोवने हि बलक्षय०। ६ब०। बलरहिते दुर्बले च त्रि०। योषिति स्त्री०

अबाध त्रि० नास्ति बाधा यस्य। अप्रतिबद्धे, पीडाशून्ये च।

अबिन्धन पु० आपइन्धनं दाह्या यस्य। वाडवाग्नौ वज्राग्नौ च

अब्ज न० अद्भ्यो जायते जन-ड ५त०। पद्मे, "अर्बुदमब्जं खर्व्वनिखर्व्व"त्यादिभास्कराचार्य्योक्तेः शतकोटिसंख्यायाञ्च। शङ्खे पु०न०। चन्द्रे धन्वन्तरौ च पु०।

अब्जज पु० अब्जात् विष्णुनाभिपद्मात् जायते जन-ड। वेधसि। "स्वरांशे, स्वांशगे, सौम्ये लग्नस्थे वा भृगोः सुते। जीवे वाब्जजयोगोऽयं यातः शत्रुविनाशकृदि"त्युक्तलक्षणे ज्योतिषप्रसिद्धे यात्रिकयोगभेदे च।

अब्जभोग पु० अब्जस्य शङ्खस्य भोग आकार इवाकारो यस्य। वराटके। अब्जस्य पद्मस्य भोग इवाकारः। पद्मकन्दे।

अब्जयोनि पु० अब्जं योनिरुत्पत्तिस्थानं यस्य। विधातरि।

अब्जवाहन पु० अब्जमिव शुभ्रत्वात् वृषभो वाहनमस्य। वृषवाहने शिवे।

अब्जहस्त पु० अब्जधन्तो हस्तात् किरणात् यस्य। सूर्य्ये, सूर्य्यकिरणसंपर्कादेव चन्द्रपाटहृद्धिरिति ज्योतिषसिद्धान्त०।

अब्जिनी स्त्री० अब्जानि सन्त्यस्मिन् देशे, अब्जानां समूह इति वा इनि स्त्रीत्वम्। पद्मयुक्तलतायां पद्मसमूहे च।

अब्जिनीपति पु० अब्जिन्याः पद्मसमूहस्य पतिः प्रकाशकतयाऽनुकूलः। सूर्य्ये।

अब्द पु० अपोददाति दा-क। मेघे, जलदे, वत्सरे, मुथा इति ख्याते मुस्तके, शैलभेदे च।

अब्दसार पु० अब्दस्य मुस्तस्य सारो रसपरिपाकः। कर्पूरभेदे।

अब्धि पु० आपो धीयन्तेऽत्र धा-आधारे कि। जलधौ।

अब्धिकफ पु० अब्धेः समुद्रस्य कफ इव। समुद्रफेने।

अब्धिद्वीपा स्त्री० अब्धिसंख्याता लवणादिसप्तसंख्याता द्वीपा यस्या। जम्बुप्रभृतिसप्तद्वीपवत्याम् पृथिव्याम्। [चन्द्रे।

अब्धिनवनीतक पु० अब्धेः समुद्रस्य नवनीतमिव स्वार्थे क।

अब्धिमण्डूका स्त्री० अब्धिं मण्डयति मण्ड-ऊक गौरा० ङीप्। मुक्तासाधने शुक्तौ। [शेते।

अब्धिशयन पु० अब्धौ शयनमस्य। विष्णौ, स हि प्रलये अब्धौ

अब्भक्ष पु० अपोभक्षयति। सर्पभेदे। नित्यं जलपायिनि त्रि०

अभ्र न० अपो बिभर्त्ति भृ-क। मेघे,। न बिभर्त्ति किञ्चित्। सकारहीन एवायं गगने।

अभ्रंलिह पु० अभ्रं मेघं लेढि अत्युच्चतया स्पृशति। लिहखश् मुम् च। वायौ। मेघस्पर्शिनि उच्चतमे त्रि०। [भेदे।

अभ्रक न० अभ्रमिव कायति राजते कै-क। [आब्] धातु-

अभ्रङ्कष न० अभ्रं कषति स्पर्शादिना पीडयति। कष-खच् मुम् च। वायौ। अत्युच्चे त्रि०।

अभ्रपुष्प न० अभ्रस्य पुष्पमिव शुभ्रत्वात् कार्य्यत्वाच्च। जले। अभ्रमिव पुष्पमस्य ब०। वेतसवृक्षे पु०।

अभ्रमातङ्ग पु० अभ्रालको मातङ्गः शा०त०। ऐरावते गजे।

अभ्रमु स्त्री० अभ्रे अभ्रालके ऐरावते माति मा-डु। ऐरावतस्य योषिति।

अभ्रमुवल्लभ पु० अभ्रमो वल्लभः ६त०। ऐरावते गजे।

अभ्ररोहस् पु० अभ्रात् तच्छब्दात् रोहति रुह-असि। वैदूर्य्यमणौ तस्य हि मेघशब्दादङ्कुरः इति प्रसिद्धम्।

अभ्रोत्थ न० अभ्रात् तन्निघर्षणादुत्तिष्ठति स्था-क। वज्रे।

**अभिनीत** त्रि० अभि नी-क्त । युक्ते, विनीते, अक्रोधने, क्षमावति, भूषिते च । [आभिमुख्येन गते च ।
**अभिपन्न** त्रि० अभि+पद-क्त । अपराधवति, आपद्गते, स्वीकृते,
**अभिप्राय** पु० अभि+प्र+इण-अच् । आशये, सम्मतौ च ।
**अभिभव** पु० अभि+भू-अप् । पराजये, तिरस्कारे, अनादरे, च
**अभिभूत** त्रि० अभि+भू-क्त । किं कर्त्तव्यमिति ज्ञानशून्ये, पराभूते, व्याकुले च ।
**अभिमत** त्रि० अभि+मन-क्त । सम्मते, आदृते, अभीष्टे च ।
**अभिमन्त्रण** न० अभि+मन्त्र-ल्युट् । मन्त्रपाठेन संस्कारकरणे, निमन्त्रणे, आह्वाने च । [चक्षूरोगभेदे ।
**अभिमन्थ** (न्य) पु० अभि+मन्थ-अच् मन्य इति पक्षे मन-ण ।
**अभिमर** पु० अभिम्रियतेऽत्र मृ-अप् । युद्धे, मरणनिरपेक्षतया कृते युद्धोत्साहे च ।
**अभिमर्द्द** पु० अभि-मृद-घञ् । युद्धे, मद्ये, पीड़ने च ।
**अभिमान** पु० अभि+मन-घञ् । आत्मन्युत्कर्षारोपे, मिथ्यागर्व्वे, अर्थादिदर्पे, ज्ञाने, प्रणये, हिंसायाञ्च ।
**अभिमुख** त्रि० अभिगतो मुखं ग० तिस० । सम्मुखे । स्त्रियां ङीप् ।
**अभिसृष्ट** त्रि० अभि+सृज-क्त । संसृष्टे, मिलिते, संबद्धे च ।
**अभियुक्त** त्रि० अभि+युज-क्त । परैः रुद्धे, आसक्ते, व्यवहारविषये, प्रतिवादिनि च ।
**अभियोक्तृ** त्रि० अभि+युज-तृच् । व्यवहारे अपराधयोजनकर्त्तरि वादिनि, अभियोगकर्त्तरि च ।
**अभियोग** पु० अभि+युज-घञ् । अन्यकृतस्य निजधर्षणस्य न्याय विज्ञापने, युद्धार्थमाह्वाने, अपचिकीर्षयाक्रमणे, आग्रहे, शपथे, उद्योगे च । [प्रिये, मनोहरे च ।
**अभिराम** त्रि० अभिरम्यतेऽस्मिन् रम-आधारे घञ् । सुन्दरे,
**अभिरूप** पु० अभिरूपयति सर्व्वं स्वात्मकं करोति चु०रूप-अच् । शिवे, विष्णौ च । अभिरूपयति निरूपयति । पण्डिते । उत्कृष्टं रूपं यस्य । कन्दर्पे, चन्द्रे च । मनोहरे त्रि० ।
**अभिलाप** पु० अभिलप्यते सङ्कल्प्यतेऽनेन करणे लप-घञ् । देशकालादिकीर्त्तनपूर्व्वकं विहितकर्म्मैतदहं करिष्ये इत्येवं रूपे वाक्ये । कर्म्मणि घञ् । शब्दे ।
**अभिलाव** पु० अभि+लू-घञ् । छेदने ।
**अभिलाष** (स) पु० अभि+लष(स)-घञ् । इच्छायां, लोभे च । चाभिलासोऽप्यत्रार्थे । [वट-घञ् । प्रणामे ।
**अभिवाद** पु० अभि+वद-घञ् । अप्रियवाक्ये । अभि+चु०
**अभिवादन** न० अभि+चु०वद० ल्युट् ॥ अभिमुखीकरणार्थं वाचिके प्रणामे । आभिमुख्याय आनुकूल्याय वाद्यते आशीः कार्य्यतेऽनेन वद-णिच्-ल्युट् । स्वनामोच्चारणपूर्व्वकं नमने । तत्प्रकारस्य इदृटविधाने ।
**अभिविधि** पु० अभि+वि+धाञ्-कि । व्याप्तौ, सङ्गार्थे च ।
**अभिव्यक्त** पु० अभि+वि+अञ्ज-क्त । उत्पत्त्यादिना प्रत्यक्षयोग्यतामापन्ने ।
**अभिव्यक्ति** स्त्री० अभि+वि+अञ्ज-क्तिन् । प्रत्यक्षयोग्यतायां
**अभिव्याप्ति** स्त्री० अभितो-व्याप्तिः वि+आप-क्तिन् । साकल्येन योगे, सर्व्वावयवसम्बन्धे, सर्व्वतोवृत्तौ च ।
**अभिशप्त** त्रि० अभि+शप-क्त । दुष्टं तेऽनिष्टं भूयादित्येवं रूपस्य गुरुविप्राद्यभिशापस्य उद्देश्ये ।
**अभिशस्त** त्रि० अभि+शन्स-क्त । अयं परस्त्रियं गच्छतीत्यादिना मिथ्यावाक्येन मैथुनविषयको दोषारोपो यस्मिन् जने क्रियते तस्मिन् । [कृतमिति मिथ्यापवादे ।
**अभिशस्ति** स्त्री० अभि+शन्स-क्तिन् । स्वर्णस्तेयादिकमनेन
**अभिशाप** पु० अभि+शप-घञ् । स्वर्णमनेन हृतमित्यादि मिथ्यादूषकवाक्यकथने । द्विजगुरुप्रभृतिकर्त्तृके अनिष्टं ते भूयादित्येवमनिष्टस्याशंसने च ।
**अभिषङ्ग** पु० अभि+सञ्ज-घञ् । पराभवे, आक्रोशे, शपथे, व्यसने च "अभिषङ्गजडं विजज्ञिवानि" ति रघुः ।
**अभिषव** पु० अभि+सू-अप् । यज्ञान्तस्नाने, यज्ञे, स्नाने, पीडने, सुरोत्पादनादिव्यापारे, सोमलतापाने, तत्कण्डने च ।
**अभिषवण** न० अभि+सू-ल्युट् । स्नाने, यज्ञान्ते स्नाने, सोमादिकण्डने च ।
**अभिषेक** पु० अभि+सिच्-घञ् । विधिना शान्त्यर्थं सेचने, अधिकारप्राप्त्यर्थं स्नाने, यथा राज्याधिकारार्थं राज्येऽभिषेकः वाममार्गे शक्तिदीक्षायामधिकारार्थं शाक्ताभिषेकश्च मन्त्रादिना शिरसि जलप्रक्षेपमात्रेण मार्जने च ।
**अभिषेणन** न० सेनया शत्रोरभिमुखं यानम् अभि+सेना+णि ल्युट् षत्वणत्वे । सेनया शत्रुं योधयितुं तदभिमुखगमने ।
**अभिष्टुत** त्रि० अभि+स्तु-क्त । वर्णिते, स्तुते च ।
**अभिष्यन्द** पु० अभि+स्यन्द-भावे घञ् । अतिवृद्धौ स्रवणे, जलादिक्षरणे च । कर्म्मणि घञि । अधिके । स्वर्गाभिष्यन्दवमनमिति कुमारः । करणे घञि । नेत्ररोगे ।
**अभिष्यन्दनगर** पु० अभिष्यन्देन प्रधाननगरातिवृद्ध्या तदतिवाहेन कृत नगरम् । शाखानगरे ।
**अभिसन्ताप** पु० अभि+सम्+तप-आधारे घञ् । युद्धे । भावे घञि । अभितापे, सन्तापे च ।
**अभिसन्धान** न० अभि+सम्+धा-ल्युट् । वञ्चने, प्रतारणे च ।

**अभ्युदित** पु० अभितः सर्वतः उदतिशयेन इतं गतं प्रातर्विहितं कर्म्म यस्मात् । सूर्य्योदयकाले निद्रयाऽकृततत्कालकर्त्तव्ये ब्रह्मचारिणि । उदिते, प्रकाशिते च त्रि० ।

**अभ्युद्यत** त्रि० अभि+उत्‌-यम-क्त । अयाचितोपस्थितद्रव्यादौ

**अभ्युपगम** पु० अभि+उप+गम-घञ् अवृद्धिः । स्वीकारे समीपगतौ च ।

**अभ्युपपत्ति** स्त्री० अभि+उप+पद-क्तिन् । अनिष्टनिवारण पूर्व्वकाभीष्टसम्पादनरूपे अनुग्रहे, सान्त्वने च ।

**अभ्युपाय** पु० अभि+उप+इण्‌-अच् । स्वीकारे अधिकोपाये

**अभ्र** गतौ भ्वादि०पर०सक०सेट् । अभ्रति । आभ्रीत् ।

**अभ्रि** स्त्री० अभ्र-गतौ-इन् । नौकामलापकर्षणार्थं काष्ठरचिते कुद्दाले । स्त्रियां ङीपि अभ्रीत्यपि ।

**अभ्रेष** पु० भ्रेष-चलने घञ् न०त० । न्याय्ये, उचिते च ।

**अम** रोगे चुरा० उभय०अक०सेट् । आमयति ते आमिमत् त ।

**अम** गतौ, भोजने, शब्दे च भ्वादि० अक० सेट् । अमति आमीत्

**अम** पु० अम-घञ् अवृद्धिः । रोगे । अपक्वफलादौ त्रि० ।

**अमङ्गल** पु० नास्ति मङ्गलं यत्र । एरण्डवृक्षे । द्व०। कुशलशून्ये त्रि० । न०त० । मङ्गलाभावे । [पात्रे ।

**अमत्र** न० अमत्यनेनात्र अम-भोजने आधारे त्रन् । भोजन-

**अमर** पु० मृ-पचाद्यच् न०त० । देवे, अष्टशाब्दिकमध्ये अमरसिंहनामके शाब्दिके, स्नुहीवृक्षे, स हि छिन्नोऽपि पुनःपुनः प्ररोहति, सहसा न म्रियते । पारदे, तस्यापि वह्न्यादौ बहुतापनेऽपि ध्वंसः । अस्थिसंहारे च स हि बहुकालं भूमौ स्थितोऽपि न जीर्य्यति । द्व० मरणशून्ये त्रि० ।

**अमरद्विज** पु० अमरपूजकः द्विजः शाक० त० । देवले पूजारीति ख्याते विप्रे । [द्रनुगन्धायां स्त्री० ।

**अमरपुष्पक** पु० अमरमविशीर्णं पुष्पं यस्य । कल्पवृक्षे,

**अमरा** स्त्री० मृ-पचाद्यच् न०त० । दूर्व्वायां, गुडूच्यां, स्थूणायां, जरायौ, वटवृक्षे, घृतकुमार्य्यां च । अर्श आदित्वादचि । देवनगर्य्याममरावत्याम् ।

**अमराद्रि** पु० अमराणामद्रिः ६त० । सुमेरुपर्व्वते ।

**अमरालय** पु० अमराणामालयः । स्वर्गे । [इन्द्रनगर्य्याम् ।

**अमरावती** स्त्री० अमरा विद्यन्तेऽस्यां मतुप् वत्वं दीर्घः ।

**अमर्त्य** पु० मृतिमर्हति यत् मर्त्यः न०त० । मरणशून्ये देवे ।

**अमर्त्त्यभुवन** न० अमर्त्यानां देवानां भुवनम् । स्वर्गे ।

**अमर्ष** पु० मृष-शान्तौ घञ् विरोधे न०त० । क्षमाविरुद्धे कोपे ।

**अमर्षण** त्रि० मृष-ल्यु न०त० । क्रोधने, असहने च ।

**अमल** न० अम+कलच् । अभ्रके । निर्मले, दोषरहिते च त्रि०

लक्ष्म्यां, भूम्यामलक्यां, नाभिनालायां च स्त्री० ।

**अमा** अव्य० न माति क्विप् । सहार्थे, निकटे च । अमावास्यायां तिथौ, चन्द्रस्य सर्व्वकलाव्यापकतया स्थितायां सूर्य्यकिरणासंपर्कादृदीप्तायां कलायाञ्च स्त्री० ।

**अमांस** त्रि० नास्ति मांसं यस्य । दुर्बले । मांसहीनो हि दुर्बलः ।

**अमात्य** पु० अमा सह वसति त्यप् । मन्त्रिणि । तस्य सहचरत्वात् । [मन० कष्टदायके द्रव्ये ।

**अमानस्य** न० मानसे साधु न भवति मानस+यत् न०त० ।

**अमाव(वा)स्या** स्त्री० अमा सह वसतश्चन्द्रार्कौ यत्र वस-यत् यद्वा कृष्णपक्षशेषतिथौ तद्दिने चन्द्रार्कावेकराशिस्थौ ।

**अमित्र** पु० अम-रोगे इत्र । रिपौ । [त्रि० ।

**अमुक्त** न० मुच-क्त न०त० । सदा धार्य्ये कृपाणभेदे । मुक्तभिन्ने

**अमुत्र** अव्य० अदस्+त्रल् । परलोके, जन्मान्तरे च ।

**अमूर्त्त** त्रि० मूर्त्ति+अर्श आदित्वादच् न०त० । मूर्त्तिशून्ये वाय्वादौ । [शून्ये त्रि० ।

**अमूला** स्त्री० नास्ति मूलं यस्याः । अग्निशिखावृक्षे । मूल-

**अमृत** न० मृ-क्त न०त० । मोक्षे, होमावशिष्टद्रव्ये, सुधायां, जले, घृते, अमृतं स्यादयाचितमिति मनूक्ते अयाचितलब्धे च । परब्रह्मणि न० । मरणशून्ये त्रि० । विभीतके स्त्री० ।

**अमृतजटा** पु० अमृता जटा यस्याः । जटामांसीवृक्षे ।

**अमृतदीधिति** पु० अमृतमिवाप्यायनकरी दीधितिः किरणो यस्य । चन्द्रे । [पटोले पु० ।

**अमृतफला** स्त्री० अमृतमिव स्वादु फलं यस्याः । द्राक्षायाम्

**अमृतयोग** पु० ज्योतिषप्रसिद्धायां नक्षत्रविशेषयुक्तायां वारविशेषयुक्तायाञ्च तिथौ ।

**अमृतवल्ली** स्त्री० अमृताय जीवनसाधनाय वल्ली । गुडूच्याम्

**अमृतसू** पु० अमृतं दीधितिरूपमाप्यायनं सूते सू-क्विप् । चन्द्रे । अमृतान् देवान् सूते । देवमातरि स्त्री० ।

**अमृतसोदर** पु० अमृतं सोदरं एकस्थानजं यस्य । उच्चैःश्रवसि । उच्चैःश्रवसो हि समुद्रादुत्पत्तिः । तज्जातीयत्वात् घोटकमात्रे । [लतायाम् ।

**अमृतस्रवा** स्त्री० अमृतमिव स्रवति स्रु-पचाद्यच् । रुदन्ती-

**अमृतान्धस्** पु० अमृतमन्धो भक्ष्यं यस्य । देवमात्रे ।

**अमृताशन** पु० अमृतमश्नाति अश-ल्यु । देवमात्रे ।

**अमृताहरण** पु० अमृतमाहरति मातृदास्यनिवारणार्थं स्वर्गात् भूलोकं नयति आ+हृ ल्यु । गरुडे तस्यामृतहरणवृत्तान्तो महाभारते आदिप० ३३अ० ।

**अमेधस्** त्रि० नास्ति मेधा यस्य ब०असिच् । मूर्खे, अल्पबुद्धौ च

अमेध्य न० मेध्यं पवित्रं न त०। पुरीषे। अपवित्रमात्रे त्रि०।

अमोघ त्रि० मोघो निष्फलः न त०। सफले अव्यर्थे च। नद-भेदे पु०। पटोललतायां हरितक्यां विडङ्गे च स्त्री०।

अम्ब गतौ भ्वादि० पर०सक०सेट्। अम्बति आम्बीत्।

अम्बक न अम्बति योग्यं मङ्गलस्थानमर्थेन गच्छति अम्ब-ण्वुल्। नेत्रे। अम्ब्यते स्नेहेनोपगम्यते घञ् स्वार्थे क। पितरि।

अम्बर न अबि शब्दे घञ् अम्बः शब्दस्य रा त धत्ते अम्ब+रा-क। शब्दाश्रये आकाशे सर्वाङ्गच्छादके वस्त्रे, तन्नाम ख्याते गन्धद्रव्ये अभ्रकधातौ च।

अम्बरि(री)ष न० अम्ब्यते भ्रज्यतेऽत्र अम्ब-अरिष नि० वा दीर्घः। भाजनाखोला इति ख्याते भर्जनपात्रे। अम्बरीषमपि। दीर्घदुःखान्त विष्णौ शिवे, भास्करे बालके, आम्रातकवृक्षे, नरकभेदे अनुतापे सूर्यवंश्यनृपभेदे च पु०।

अम्बष्ठ पु अम्बाय विकलकशब्दाय समभ्यापनार्थं तिष्ठते-ऽभिप्रैति स्था क षत्वम्। चिकित्सके विप्रात् वैश्यकन्यायां जाते सङ्कीर्णवर्णे, देशभेदे, हस्तिपके च। यूथिकायां स्त्री०। स्वार्थे के ह्रस्वे अत इत्त्वे अम्बष्ठिकाप्यत्रैव वामनहाटीति प्रसिद्धायां आम्बष्ठीलतायाम्।

अम्बष्ठकी स्त्री अम्बष्ठ कायति आदानार्थमाह्वयति कै-क गौरा० ङीष्। (पलापडु) इति ख्यातायां लतायां पाठायाम्।

अम्बा स्त्री० अम्ब्यते स्नेहेनोपगम्यते अम्ब-कर्मणि घञ्। मातरि नाट्योक्तावपि तत्रैव अम्बष्ठालतायां, काशीराजकन्यायाम्।

अम्बाला स्त्री० अम्बेति शब्दं लाति धत्ते ला-क। मातरि।

अम्बालिका स्त्री० अम्बालैव स्वार्थे के ह्रस्वे अत इत्वम्। मातरि, पाण्डुराजमातरि च।

अम्बिका स्त्री० अम्बैव स्वार्थे के ह्रस्वे अत इत्वम्। मातरि धृतराष्ट्रमातरि जगदुत्पादकत्वात् दुर्गायाम् अम्बष्ठालतायाम् कट्कीति ख्यातायां लतायाम्। [स्त्री०।

अम्बु न अबि शब्दे-उ। जले। बाला इति ख्यातायां लतायां

अम्बुकण्टक पु अम्बुनि कण्टकमिव। कुम्भीरे, शृङ्गाटके च।

अम्बुकिरात पु अम्बुनि किरात इव हिंस्रः। कुम्भीरे।

अम्बुकीश पु० अम्बुनि कीशः वानर इव। शुशुक इति ख्याते शिशुमारे जलजन्तुभेदे।

अम्बुचामर न० अम्बुनि चामरमिव। शैवले।

अम्बुज न० अम्बुनि जायते। पद्मे। वज्रे हिजल इति ख्याते वृक्षे च पु। शङ्खे पु०न०।

अम्बुद पु० अम्बु ददाति दा क। मेघे, मुस्तके च।

अम्बुधि पु० अम्बूनि धीयन्तेऽत्र धा-आधारे कि। समुद्रे।

अम्बुवाची स्त्री० 'यस्मिन् वारे सहस्रांशुर्यत्काले मिथुनं व्रजेत्। अम्बुवाची भवेत्तत्र पुनस्तत्कालवारयोरिति" ज्योतिषोक्ते "रजोयुक् स्यादम्बुवाची स्यादि"ति च तेन सूर्याक्रान्तार्द्रानक्षत्रप्रथमचरणे जातरजस्कायां भूमौ।

अम्बुधिस्रवा स्त्री० अम्बु धरिव स्रवति स्रु अच्। पत्रान्-तर्जलकायां घृतकुमार्याम्।

अम्बुपत्रा स्त्री० अम्बुनि पत्रं यस्याः। उच्चटावृक्षे।

अम्बुप्रसाद पु अम्बूनि प्रसीदन्त्यनेन प्र+सद-घञ्। निर्मलीति प्रसिद्धे कतकवृक्षे। [च।

अम्बुभृत् पु० अम्बूनि बिभर्त्ति भृ-क्विप्। मेघे समुद्रे मुस्तके

अम्बुमातृज पु० अम्बुमात्रे जलमात्रे जायते जन-ड। शामुक इति ख्याते शम्बूके। [शुक्त्यां स्त्री।

अम्बुरुह न० अम्बुनि रोहति जायते रुह क। पद्मे। स्थलप-

अम्बुवासिनी स्त्री० अम्बुनि जलप्रधाने वसति वस णिनि। पाटलावृक्षे। [द्मके च।

अम्बुवाह पु० अम्बूनि वहति वह-अण्। मेघे तन्नामगन्धके

अम्बुवाहिनी स्त्री० अम्बूनि वाहयति नौकातः बहिरपसा-रयति वह+णिच् णिनि। काष्ठादिरचिते नौकाजलसेचनीपात्रे।

अम्बुवेतस पु० अम्बुजातो वेतसः शाक०त०। जलवेतसे।

अम्बुशिरीषिका स्त्री० अल्पः शिरीषः अल्पार्थे के स्त्रीत्वम्। जलशिरीषे। [इति ख्यातायां जलौकायाम्।

अम्बुसर्पिणी स्त्री० अम्बुनि सर्पति सृप-णिनि ७त। (जोँक)

अम्बूकृत त्रि० अनम्बु अम्बु कृत अम्बु श्लेष्मात्मकाम्बु उप-चारात् सम्बुकृत च्वि-कृ-क्त। निष्ठीवनयुक्ते वचसि।

अम्भस् न० अबि-शब्देऽसुन्। जले बालाख्यौषधौ च।

अम्भःसार न० अम्भः सारं वा यस्येति वा विग्रहः। मुक्तायाम्। सत्वे अम्भस्सारमपि।

अम्भोज न० अम्भसि जायते जन ड ७त। पद्मे। चन्द्रे पु। शङ्खे पु०न०। जलजातमात्रे त्रि। [पद्मपुष्पे।

अम्भोजख(ष)ण्ड न० अम्भोजानां समूहः अम्भोज+समूहार्थे षण्ड

अम्भोजयोनि पु अम्भोजं हरिनाभिपद्मं योनिः उत्पत्ति स्थानं यस्य। विधातरि।

अम्भोजिनी स्त्री अम्भोज+समूहार्थे इनि वा इनि। पद्मसमूहे पद्मयुक्तदेशे लताभेदे च।

अम्भोद पु अम्भो ददाति दा क। मेघे, मुस्तके च। जल-दातरि त्रि०।

**अम्भोधर** पु० अम्भो धरति धृञ-धारणे अच् । मेघे । समुद्रे, मुस्तके च ।

**अम्भोधि** पु० अम्भांसि धीयन्ते यत्र धा-आधारे कि । समुद्रे ।

**अम्भोनिधिः** पु० अम्भांसि निधीयन्तेऽत्र नि+धा-कि । समुद्रे

**अम्भोराशि** पु० अम्भसां राशिरिव एकत्रोपचितत्वात् । समुद्रे

**अम्भोरुह** न० अम्भसि रोहति रुह-क । पद्मे ।

**अम्मय** त्रि० अपां विकारः अप्+मयट् । जलविकारे फेनादौ ।

**अम्र** पु० अमति सौरभेण दूरं गच्छति अम-रन् । आम्रवृक्षे । फलपत्रादौ न० । एवं प्रायः सर्वत्र वृक्षवाचके ।

**अम्रात** पु० अम्रं रसं सर्वत्र पत्रपुष्पादौ अतति व्याप्नोति अत-अण् रस्य वा लत्वम् । (आमड़ा) अम्रातकवृक्षे स्वार्थे के अम्रातकोऽपि । वा रत्वाभावे अम्लातः । के । अम्लातकश्च ।

**अम्ल** न० अम-क्त । (घोल) तक्रे । (टक) रसे पु० । तद्वति त्रि० ।

**अम्लक** पु० अल्पोऽम्लः अल्पार्थे क । (मान्दार) नकुचवृक्षे ।

**अम्लकेशर** पु० अम्लः केशरोऽस्य । वीजपूरे ।

**अम्लचूड़** पु० अम्ला चूडा शिखाऽस्य । अम्लशाके ।

**अम्लजम्बीर** पु० अम्लो जम्बीरः । (गोंडानेबु) जम्बीरवृक्षे ।

**अम्लनायक** पु० अम्लं रसं नयति नी-ण्वुल् । अम्लवेतसे ।

**अम्लनिशा** स्त्री० अम्लरसे निःशेषेण शेते शीङ्-ड । शठीवृक्षे

**अम्लपत्र** पु० अम्लं पत्रं यस्य । अश्मन्तकवृक्षे ।

**अम्लपत्री** स्त्री० अम्लं पत्रं यस्याः । पलाशीलतायाम् ।

**अम्लपनस** पु० अम्लः पनसः कर्म० । (मान्दार) नकुचवृक्षे ।

**अम्लफल** पु० अम्लं फलं यस्य । तेतुल इतिख्याते वृक्षाम्ले ।

**अम्लभेदन** पु० अम्लार्थं भिद्यतेऽसौ कर्मणि ल्युट् । अम्लवेतसे

**अम्लरुहा** स्त्री० अम्लाय रोहति रुह-क । मालवजनागवल्ल्याम्

**अम्ललोनि(णि)का** स्त्री० अम्लं रसं लाति गृह्णाति अम्लल तमूनयति अत्यम्लत्वात् हीनयति ऊन-ण्वुल् वा णत्वम् । आमरुल इति ख्याते लताभेदे ।

**अम्लवती** स्त्री० अम्लो रसो विद्यतेऽस्याः अम्ल+मतुप् वत्वम् अटरालु इति ख्याते लताभेदे ।

**अम्लवल्ध्या** स्त्री० वन्ध-कर्मणि ण्यत् । अम्लसंबद्धे, कन्दभेदे ।

**अम्लवाटिका** स्त्री० अम्लस्य रसस्य वाटिका स्थानमिव । नागवल्लीभेदे । [पालङ्क इति ख्याते चुक्रे ।

**अम्लवास्तूक** पु० अम्लरसान्वितो वास्तूकः शाकभेदः । चुक-

**अम्लवीज** न० अम्लस्य वीजं कारणम् । (तेंतुल) वृक्षाम्ले ।

**अम्लवृक्ष** न० अम्लस्य रसस्य वृक्ष इवाधारः । (तेंतुल) वृक्षाम्ले ।

**अम्लवेतस** पु० अम्लो वेतस इव नम्रश्च । चुका इति ख्याते चुक्रे ।

**अम्लशाक** पु० अम्लः शाको यस्य । चुका इतिख्याते चुक्रे ।

**अम्लसार** पु० अम्लो रस एव सारः प्रधानं यस्य । चुक्रे निम्बुके, हिन्ताले च । काञ्चिके न० । [इति ख्याते वृक्षे ।

**अम्लहरिद्रा** स्त्री० अम्लरसान्विता हरिद्रा । आमहरिद्रा

**अम्ला** स्त्री० अम्लो विद्यतेऽस्या अर्शआद्यच् । तिन्तिड्याम् ।

**अम्लाङ्कुश** पु० अम्लम् अङ्कुशाकारमग्रं यस्य । चुक्रे ।

**अम्लादन** पु० अद्यते अद-कर्मणि ल्युट् कर्म० । कुरण्टक वृक्षे । [वृक्षे । म्लानभिन्ने त्रि० ।

**अम्लान** पु० म्लै-क्त न० त० । आम्ला इति ख्याते महाम्लान

**अम्लिका** स्त्री० अम्लैव स्वार्थे क । तिन्तिड्याम् । अत्राम्लीकेत्यपि

**अय** गतौ भ्वा० आत्म० सक० सेट् । अयते आयिष्ट ।

**अय** पु० एति शुभमनेन इण्-करणे अच् । प्राक्तने शुभकर्मणि, शुभदायके-दैवे विधाने च [नरकभेदे । अयस्थानमप्यत्र ।

**अयःपान** न० अयः द्रवीभूतं तप्तलौहं पीयतेऽत्र ल्युट् ।

**अयःशूल** न० अय इव शूलम् उपतापकम् । तीव्रे उपतापे, लौहकतास्त्रभेदे च, अयश्शूलमप्यत्र । [मापे पु० ।

**अयज्ञिय** त्रि० यज्ञाय साधुर्न भवति यज्ञ+यत् । यज्ञानर्हे ।

**अयन** न० अय-भावे ल्युट् । गतौ, दक्षिणत उत्तरस्याम्, उत्तरतश्च दक्षिणस्यां सूर्य्यस्य गतौ, तथाहि द्वादशराश्यात्मकस्य राशिचक्रस्यार्द्धं मकरावधि मिथुनपर्य्यन्तं राशिषट्कं क्रमेण उत्तरायनतं तत्र स्थितोऽर्कः स्वगत्या प्राचीं गच्छन्नपि किञ्चित् किञ्चित्तिर्य्यग्गत्या उत्तरामभिक्रामति ततः कर्कटावधि धनुःपर्य्यन्तं राशिषट्कं क्रमेण दक्षिणावनतं तत्र स्थितोऽर्कः प्राग्वत् दक्षिणामेवाभिक्रामति सेयं गतिरयनशब्देन ज्योतिषे व्यवह्रियते एवञ्च सौरैः षड्भिर्मासैरेकमयनमित्यपि तत्र प्रसिद्धम् । "अयनविष्णुपदी षड़शीतयः" इतिवुक्तेरयनाख्यसंक्रान्तौ, सा हि पारिभाषिकायनशब्दवाच्या । नभोमण्डले प्रवहानिलेन पश्चाद्गत्या वभ्रम्यमाणस्य राशिचक्रस्य निराधारतया दोलायमानत्वेन सप्तविंशांशपर्य्यन्तं प्राक्, पश्चाच्च, या गतिर्भवति तत्रापि, तद्धि अष्टमासाधिक ६६।८ षट्षष्टिवर्षैरेकैकमंशमतीत्य प्राक् पश्चाद्वा चलतीति १८०० अष्टादशशतवर्षैः सप्तविंशांशपर्य्यन्तं प्राक् गत्वा पुनः पश्चात्, पश्चाद्गत्वा च प्रागवलम्बते । यदा चैवं राशिचक्रं प्राक् गच्छति तदा राशिचक्रनिर्द्दिष्टमेषादिस्थानात् उक्तकालभेदेनैकैकांशातिक्रमेण क्रमशः प्राचि, प्राक्तरे, प्राक्तमे, वा स्थाने रव्यादिग्रहाणां प्रभापुञ्जसञ्चारः, यदा तु पश्चादवलम्बते तदा निर्दिष्टमेषादिस्थानात् तथैव परे, परतरे, परतमे, च स्थाने ग्रहाणां प्रभासञ्चार इति भेदः । इदानीञ्च पश्चिमगयनं ततः पश्चादेव ग्रहप्रभा-

ञ्चार । तथाच ज्योतिषोक्तगणितरीत्या मेषादिस्थ पश्चाद्भागे विभागे मीनादीनवभागे एवेदानीं विषुवादिसं-क्रान्तिर्भवति एवं विषुवपदादीनामपि तत्तद्भाग एव चक्र-भ्रमणसञ्चारः । अयनांशानुसारेण चक्रभ्रमणसञ्चारस्वीकारः दिनमानविशेषस्य लग्नपरिमाणस्य, छायापदविशेषस्य, च बोधार्थमिति सिद्धान्ते प्रसिद्धम् । करणे ल्युट् । तज्ज्ञाय नज्ञानसाधने शास्त्रे "ज्योतिषामयनञ्चैवेति" सैन्यनिवेश विशेषव्यूहप्रवेशमार्गे च "अयनेषु च सर्वेषु यथाभागमवस्थिताः" इति गीता । आधारे ल्युट् । पथि, गृहे, आश्रये, स्थाने, 'ता यदस्यायनं पूर्वमिति" मनुः । प्रागुक्तराशिचक्रस्य अग्ररूपे गतिस्थानविशेषे च तत्काले सायनार्क-स्येति" नीलकण्ठः ।

**अयनसङ्क्रान्ति** स्त्री० अयनेन राशिचक्रस्य पश्चात्, प्राग्वा गत्या कृता सङ्क्रान्तिर्यद्वा चक्रभ्रमणस्य सञ्चारः सम्+क्रम क्तिन् । चलसङ्क्रान्तौ, मेषादिभिर्द्वादशस्य स्थानेषु विभक्तस्य राशिचक्रस्य प्राक् पश्चाद्वा दोलायमानतया निर्दिष्टमेषादिस्थानात् पश्चात् पूर्वं वा चक्रभ्रमणसञ्चार आक्रान्तराशिं विहाय राश्यन्तरे गमनं चलसङ्क्रान्तिः अनियतस्थानतया चलत्वात् । निर्दिष्टराशिस्थानेषु ग्रहाणां मण्डलसञ्चारः अचलसङ्क्रान्तिः राशिसङ्क्रान्तिरिति चोच्यते नियतमेकस्थाने एव जायमानत्वादचलत्वम् । अनयैव सङ्क्रान्त्या यथा आद्याग्निव्यवहारे न दोषः चलसङ्क्रान्त्या तु महान् दोषस्तथा वृहदभिधाने वक्ष्यते ।

**अयस्** न० इण-असुन् । लोहे, तद्धि स्थावरमप्ययस्कान्तसान्निध्यात् चलति ।

**अयस्कान्त** पु० अयसां मध्ये कान्तः रमणीयः कस्कादित्वात् सत्वम् । कान्तिलोह इति ख्याते लोहभेदे । ६त० । सन्निधिमात्रेण लोहाकर्षके चुम्बक इति ख्याते प्रस्तरभेदे च ।

**अयस्कार** पु० अयस्-कृ अण् उप स० । लौहकारे ।

**अयाचित** न याच-क्त न०त० । अयाचितलब्धे 'अमृतं स्यादयाचित"मिति मनुः । अप्रार्थिते त्रि ।

**अयि** अव्य० इण्-इन् । प्रश्ने, अनुनये, सम्बोधने, अनुरागे च

**अयुक्छद** पु० अयुजः असमाः छदा अस्य । इत्तौ भाषया चौत्रायितम् (छातिम) इतिख्याते सप्तपर्णवृक्षे ।

**अयुक्त** त्रि न+युज-क्त । विषयासक्ततया कर्त्तव्येष्वनवहिते, अनुचिते, आपद्गते च ।

**अयुग्म** न० न युग्मात्मकम् । बिजोड़ इति ख्याते विषमे ।

**अयुग्मच्छद** पु० अयुग्मानि सप्त सप्त छदा अस्य । सप्तपर्णवृक्षे तस्य हि प्रत्येकपल्लवे सप्त सप्त पर्णानि विद्यन्ते ।

**अयुत** त्रि० यु-क्त न०त । असंयुक्ते । दशसहस्रसंख्यायां न० ।

**अये** अव्य० इण्-एच् । क्रोधे विषादे, सम्भ्रमे, स्मृतौ, सम्बुद्धौ च

**अयोग** पु युज घञ् न०त० । योगाभावे, कुयोगे, वियोगे च । न०ब । विधुरे कूटे, कठिनोद्यमे च ।

**अयोगव** पु० अय इव कठिना गौर्वाणी यस्य नि० अच् । शूद्रात् वैश्यायां जाते प्रतिलोमजे सङ्कीर्णवर्णे ।

**अयोगवाह** पु अक्षरसमाम्नायसूत्रेषु अइउण् इत्यादिषु अनुद्दिष्टस्य नास्ति योगः पाठादिरूपः सम्बन्धो येषां ते तथापि वाहयन्ति णत्वषत्वादिकार्य्याणि निष्पादयन्ति वाहि अच् कर्म० । अनुस्वारविसर्गादिषु "अनुस्वारो विसर्गश्च+क पौ चैव पराश्रितौ । अयोगवाहा विज्ञेया इति शिक्षाद्युपदिष्टेषु ।

**अयोगुड** पु गुड गोलाकारः अयसा निर्मितो गुडः । गोलीति ख्याते लौहगुटिकायाम् । [हलात् ।

**अयोऽग्र** न अयोऽग्रे मुखे यस्य । मुषले तस्य मुखे लौहव-

**अयोघन** पु० अयांसि हन्यन्तेऽनेन हन अप् घनादेशश्च नि० । हातुड़ीति ख्याते लौहमुद्गरे ।

**अयोध्या** स्त्री० युध यत् न त । सरयूतीरे स्वनामख्यातायां नगर्याम् । योधनानर्हे त्रि० ।

**अयोनिज** पु योनौ उपचारात् मातरि न जायते । परमेश्वरे । सीतायां स्त्री० । [मले ।

**अयोमल** न० अयसो मलमिव । लौहगूथ इति ख्याते लौह-

**अर** न ऋ-अच् । चक्रस्य नाभिनेम्योर्मध्यस्थे काष्ठे, शीघ्रे च शीघ्रतादिगुणवति त्रि । स्वार्थे के । शैवाले । पर्पटे प्रापड़ीति ख्याते पु० ।

**अरघट्ट(क)** पु० अरं शीघ्रं घट्टते चाल्यतेऽसौ । महाकूपे तदुपरिनिबद्धजलोत्तोलनकाष्ठे च । स्वार्थे क । तत्रैव

**अरजस्** त्रि रञ्ज असुन् नलोप न त० । रजोगुणकार्य्यकामक्रोधादिशून्ये । अप्राप्तरजसायां कन्यायां स्त्री ।

**अरणि** पु० ऋ-अनि । शूर्य्यगणियारीति ख्याते वृक्षे । ऋच्छति प्रापयत्यग्निम् । अग्निमन्थनकाष्ठे द्वि । स्त्रियां ङीप् ।

**अरणीक** पु० अरण्यां अग्निमन्थनकाष्ठाय साधु क । अग्निमन्थनकाष्ठसाधने अग्निमन्थवृक्षे । [वृक्षे पु ।

**अरण्य** पु अर्य्यते गम्यते वयसा ऋ-अन्य । वने, कट्फल-

**अरण्यकदली** स्त्री० अरण्यस्यैव कदली । गिरिकदल्यां तथा भामादावतलस्ये । [ख्यातायां वनकार्पास्याम् ।

**अरण्यकार्पासी** स्त्री अरण्यस्यैव कार्पासी । वनकापास इति

अरण्यकुलत्थिका स्त्री० अरण्यस्य कुलत्थिका स्वल्पकुलत्था। वनकुलथीति ख्यातायां कुलत्थिकायाम्।

अरण्यकुसुम्भ पु० ६त० वनकुसुम्भे।

अरण्यचटक पु० ६त० वनचटके।

अरण्यजार्द्रक न० अरण्ये जायते जन+ड कर्म्म०। वन आदा इति ख्याते वनार्द्रके।

अरण्यजीर पु० ६त० वनजीरके।

अरण्यधान्य न० ६त० नीवारादौ वनधान्ये।

अरण्यमक्षिका स्त्री० ६त०। डाश इति ख्याते दंशे।

अरण्यमुद्ग पु० ६त०। वनमुद्गे।

अरण्यवायस पु० ६त०। दांडकाक इति ख्याते द्रोणकाके।

अरण्यवास्तूक पु० ६त०। वनवेतो इतिख्याते वनवास्तूकशाके।

अरण्यशूरण पु० शा०त०। वनभवे ओल इति ख्याते वनशूरणे

अरण्यश्वा पु० अरण्ये श्वेव हिंस्रः। वृके।

अरण्यषष्ठी पु० अरण्याय गन्तुं षष्ठी। ज्यैष्ठशुक्लषष्ठ्याम्। "ज्यैष्ठे मासि सिते पक्षे षष्ठी यारण्यसंज्ञिता। व्यजनैक-करालस्तामटन्ति विपिने स्त्रिय" इति स्मृतिः।

अरण्यानी स्त्री०महदरण्य निन्ङीप् आनुक् च। महारण्ये।

अरति पु० ऋ-अति। क्रोधे। रम-क्तिन् न०त०। अनवस्थित-चित्ततायाम्, रागाभावे, रतिविरहे,उद्वेगे,"स्वाभीष्टवस्त्व-लाभेन चेतसो यानवस्थितिः अरति से'त्येव रूमे इष्टवि-योगान्मनसोव्याकुलीभावे च स्त्री०। न०ब०। रागहीने त्रि०

अरत्नि पु० ऋ-कत्नि रत्नि बद्धमुष्टिकर स नास्ति यत्र। विस्तृतकनिष्ठ बद्धमुष्टिहस्ते, तत्परिमाणे, कफोणौ च।

अरम् अव्य० अल-अम् वा लस्य रत्वम्। वक्ष्यमाणेऽल-मर्थे शीघ्रतायाञ्च।

अरर त्रि० ऋ-अरच्। कवाटे, अपिधाने च।

अररे अव्य० अरं शीघ्रं राति रा-डे। शीघ्रं प्रत्युत्तर लाभेच्छया क्षते अतिव्यग्रतया संबोधने।

अरणु(नु) पु० ऋ-अनु वा णत्वम्। (शोना) श्योनाकवृक्षे।

अरविन्द न०अराणि चक्राङ्गाणीव दलानि विन्दते विन्द+श।पद्मे

अराति पु० न राति ददाति सुखं न+रा-तिच्। शत्रौ।

अराल पु० ऋ-विच् अर् अरमालाति आ+ला-क। सर्ज्जरसे मत्तहस्तिनि। कुटिले त्रि०। वेश्याया स्त्री०।

अरि पु० ऋ-इ। शत्रौ रथाङ्गे, चक्रे, विट्खदिरे, कामक्रो-धादिषु षट्सु, तत्संख्यासाम्यात् षट्संख्याया, ज्योति षप्रसिद्धे लग्नावधिके षष्ठस्थाने च। [नकाष्ठे।

अरित्र न०ऋच्छत्यनेन ऋ-इत्र। हालि इति ख्याते नौकाचाल

अरिमर्द्द पु०अरिं रोगरूपं शत्रुं मृद्नाति मृद-अच्। कासमर्द्दवृक्षे

अरिमेद पु० अरेर्विट्खदिरस्येव मेदः भारः सन्दोऽस्य। (गुइयाबाबला) वृक्षभेदे। अ रिरिव मेद्यति रूक्षत्वात् अलं स्निह्यति मिद-अच्। विट्खदिरे।

अरिषड्टक न०षट् च अष्टौ च द्व० ततः परिमाणार्थे क षडष्ट कम् अरिस्थानिकं षडष्टकं शाक त०। विवाहे वर्ज्जनीये योगविशेषे, तथाहि दम्पत्यो परस्पर राशिमेलया परस्परस्य राशेः षष्ठत्वे अष्टमत्वे वा अशुभं, तयोः राश्योर्मित्र-स्वामिकत्वे पुनर्न दोषः शत्रुस्वामिकत्वेऽतीव दोषः

अरिषड्वर्ग पु० षण्णां वर्ग समुदाय षड्वर्गः अरीणां कामक्रोधलोभमोहमदमात्सर्य्यरूपाणामन्त शत्रूणां षड्वर्गः देवीभागवतमत् विष्णुभागवतवच्च शमन्तया समासः। कामादिषु षट्स्वान्तरेषु शत्रुषु।

अरिष्ट पु० रिष-क्त। न० ब०। निपुणे, निम्बे, वृषभासुरे, अचलभेदे, काके, कङ्कपक्षिणि, रीठा इति ख्याते फेनिल वृक्षे च। अशुभे, मरणचिह्ने तक्रे, चक्षुर्दन्ने,सूतिकागारे, मद्ये च न०। ५ब०। शुभे। स्वार्थे के। निम्बे, फेनिले वृक्षे च पु०।

अरिष्टताति पु०अरिष्ट+तातिल्। शुभाशंसने। शुभङ्करे त्रि०

अरिष्टसूदन पु० अरिष्टमसुरं सूदयति सूद+ल्यु। विष्णौ। अशुभनाशके त्रि०। [कम्पादके रोगभेदे।

अरुचि पु० न रुचिर्यत्र। सत्यप्यभिलाषे भोजनायोग्यता

अरुज पु० न रुजति रुज-क। शोदाल इति ख्याते वृक्षे।

अरुण पु० ऋ-उनन्। सूर्य्ये, सूर्य्यसारथौ, गुडे,सन्ध्यारागे, नि शब्दे, दानवभेदे कुष्ठभेदे, पुन्नागवृक्षे च अव्यक्तरागे च। कृष्णमिश्रितरक्ते वर्णे पु० तद्वति त्रि०। कुङ्कुमे, सिन्दूरे च न०। मञ्जिष्ठाया श्यामाकायाम्, अतिविषायां नदीभेदे कदम्बपुष्पायाञ्च स्त्री०।

अरुणलोचन पु० अरुणे रक्ते लोचने यस्य। पारावतपक्षिणि

अरुणसारथि पु० अरुण सारथिर्यस्य। सूर्य्ये,।

अरुणानुज पु० ६त०। गरुडे। अरुणावरजत्वात्तथैव।

अरुणोदक न० अरुणमुदकं यस्य। सरोवरभेदे।

अरुणोदय पु०अरुणस्यार्कस्य तत्किरणस्योदयो यत्र। 'चतस्रो घटिकाः प्रातररुणोदय उच्यते"इत्युक्ते सूर्य्योदयात् प्राचि काले

अरुणोदा स्त्री० अरुणमुदकं यस्या उदकस्योदः। मन्दराद्रि शिखरात् भूमौ पतन्त्यां नद्याम्।

अरुणोपल पु० अरुण उपलः। चुनीति ख्याते पद्मरागे।

अरुन्तुद त्रि० अरूंषि मर्म्माणि तुदति तुद-खश् मुम् च।

सेगुन इति ख्याते शाकद्रुमे, महापत्राख्यवृक्षे च ।

**अर्ण** पु॰ ऋ-न । अकारादौ वर्णे ।

**अर्णव** पु॰ अर्णांसि सन्त्यस्मिन् अर्णस्+व सलोपः । समुद्रे ।

**अर्णवोद्भव** पु॰ उद्भवत्यस्मात् उद्+भू-अपादाने अप् ६त॰ । अग्निजारवृक्षे । चन्द्रे च । अमृते न॰ । स्त्रियां स्त्री॰ ।

**अर्णस्** न॰ ऋच्छति ऋ-असुन् उदके नुट् चेति, नुट् । जले ।

**अ(आ)र्त्तगल** पु॰ आर्त्तमिव गलति गल-अच् पृषो॰ वा ह्रस्वः । नीलझिण्टिकायाम् । ह्रस्वाभावे आर्त्तगलश्च ।

**अर्त्तन** न॰ ऋत-ल्युट् पक्षे इयङभावः । निन्दायाम् ।

**अर्त्ति** स्त्री॰ अर्द्द-क्तिन् । पीडायाम् । करणे क्तिन् । धनुष्कोट्याम् ।

**अर्थ** याचने अद॰ चु॰ आत्म॰ द्विक॰ सेट् । अर्थयते आर्त्तियत मतान्तरे अर्थापयते आर्त्तथापत ।

**अर्थ** पु॰ अर्थ-भावादौ घञ् । विषये, अभिधेये, धने, वस्तुनि, प्रयोजने, निवृत्तौ, हेतौ, प्रकारे, अभिलाषे, उद्देश्ये च ।

**अर्थदूषण** न॰ अर्थस्य अपहरणादिना दूषणम् ६त॰ । धनापहरणे, व्यसनस्थाने क्रीडादौ धनव्यये च ।

**अर्थना** स्त्री॰ अर्थ-युच् । भिक्षायाम् ।

**अर्थपति** पु॰ अर्थानां पतिः ६त॰ । नृपे, कुबेरे च ।

**अर्थप्रयोग** पु॰ अर्थानां प्रयोगः ६त॰ । वृद्ध्याद्यर्थमधमर्णायार्थदानादौ, वृद्धिलाभार्थं धनप्रयोगे च ।

**अर्थवत्** त्रि॰ अर्थः सन्निहितोऽस्य मतुप् वत्वम् । सन्निहितधने धनिनि । असन्निहितधने तु न मतुप् किन्तु इनिस्तेन तत्र अर्थीत्येव । प्रयोजनवति, अभिधेयवति च ।

**अर्थवाद** पु॰ अर्थस्य लक्षणया स्तुत्यर्थस्य, निन्दार्थस्य वा वादः वद-करणे घञ् । प्रशंसनीयगुणवाचके, निन्दनीयदोषवाचके च शब्दविशेषे । भावे घञि । तत्कथने ।

**अर्थव्ययज्ञ** त्रि॰ अर्थस्य धनस्य व्ययं तत्प्रकारं जानाति ज्ञा-क । किं धनं, कथं कुत्र, कियत्, कस्मै, वा व्ययितव्यमिति विशेषाभिज्ञे ।

**अर्थशास्त्र** न॰ अर्थस्य भूमिधनादेः प्रापकं शास्त्रं शाक॰त॰ । नीतिशास्त्रे, अभिचारादिकर्म्मप्रतिपादके शास्त्रे च ।

**अर्थागम** पु॰ अर्थस्य आगम आ+गम-घञ् अवृद्धि । आये ।

**अर्थान्तर** न॰ अन्योऽर्थः अर्थान्तरं मयूर॰ त॰ । अन्यार्थे, न्यायमते उद्देश्यसिद्ध्यर्थं प्रयुक्ते शब्दसामर्थ्यादनुद्दिश्यसिद्ध्यनुकूले वाक्ये । तस्य प्रतिवादिनोद्भावने वादिनिग्रहः ।

**अर्थान्तरन्यास** पु॰ प्रकृतार्थसिद्धये अन्यार्थस्य न्यासः । अलङ्कारप्रसिद्धे अर्थालङ्कारभेदे सा॰१०प॰ ।

**अर्थापत्ति** स्त्री॰ अर्थेन अनुपपद्यमानेनापादकेनापाद्यस्यापत्तिः कल्पनम् आ+पद-क्तिन् । जीवतश्चैत्रस्य गृहाभावज्ञानेन बहिःसत्त्वकल्पनादौ, मीमांसकादिमते अनुमानातिरिक्तायां आपादकस्यानुपपत्तिज्ञानेनापाद्यस्य कल्पनायाम्, न्यायमते व्यतिरेकव्याप्तिज्ञानजन्यायामनुमितौ, अर्थालङ्कारभेदे च सा॰१०प॰ ।

**अर्थिक** पु॰ अर्थयते इत्यर्थी याचकः कुत्सितार्थे के । निद्रागतनृपादेर्जागरणार्थं नियुक्ते स्तुतिपाठकादौ ।

**अर्थिन्** त्रि॰ अर्थ+इनि । याचके, सेवके, व्यवहारे-वादिनि, असन्निहितधने धनस्वामिनि च ।

**अर्थ्य** त्रि॰ अर्थे साधु यत् । न्याय्ये । अर्थ-कर्मणि यत् । प्रार्थनीये । शिलाजतुनि न॰ ।

**अर्द्द** वधे भ्वादि॰उभ॰सक॰ सेट् । अर्द्दति ते आर्द्दीत् आर्द्दिष्ट ।

**अर्द्द** याचने, गतौ, पीडायां च, भ्वादि॰पर॰सक॰ सेट् । अर्द्दति आर्द्दीत् । याचने शरद्घनं नार्द्दति चातकोऽपीति रघुः ।

**अर्द्द** वधे चुरा॰ उभय॰ सक॰ सेट् । अर्द्दयति ते आर्द्दिदत् त ।

**अर्द्दना** स्त्री॰ अर्द्द-भावे युच् । भिक्षायां गतौ पीडायाञ्च ।

**अर्द्दित** त्रि॰ अर्द्द-क्त । पीडिते, गते, याचिते च । वातरोगे न॰ ।

**अर्द्ध** पु॰ ऋध-घञ् । खण्डे । तुल्यांशे न॰ । खण्डिते त्रि॰ ।

**अर्द्धगङ्गा** स्त्री॰ अर्द्धं गङ्गायाः एकदे॰ त॰ । स्नानादौ गङ्गास्नानादेरर्द्धफलदायिन्यां कावेरीनद्याम् ।

**अर्द्धचन्द्र** पु॰ अर्द्धं चन्द्रस्य एक॰त॰ । चन्द्रस्यार्द्धे, तदाकारे नखक्षते, गलहस्ते, बाणभेदे, स्त्रीणां तिलकभेदे च । तेओडीति ख्यातायां त्रिवृति स्त्री॰ । स्वार्थे के ह्रस्वे अतइत्त्वे । अर्द्धचन्द्रिका कर्णस्फोटलतायां, चर्मपर्ण्याञ्च ।

**अर्द्धचोलक** न॰ अर्द्धं चोलस्य न॰त॰ संज्ञायां कन् । काञ्चुलीति ख्याते कूर्पासकवस्त्रे ।

**अर्द्धतिक्त** पु॰ अर्द्धं तिक्तं यस्य । नेपालनिम्बे ।

**अर्द्धनारीश्वर** पु॰ अर्द्धाङ्गे या नारी तस्या ईश्वरः । हरगौरीरूपे शिवे ।

**अर्द्धपारावत** पु॰ अर्द्धेन अङ्गेन पारावतइव । चित्रकण्ठ कपोते तित्तिरीति ख्याते पक्षिणि ।

**अर्द्धपुलायित** न॰ "शताद्धार्द्धक्रमाद्दूने मण्डलायितवल्गिते । उन्मुखस्यात्र सुख्यस्य गतिरर्द्धपुलायितमिति" परिभाष्यते अश्वगतिभेदे । [यत । काव्यबन्धभेदे शब्दालङ्कारे

**अर्द्धभ्रमक** पु॰ अर्द्धे श्लोकार्द्धे गतागताभ्यामेकरूपतया भ्रमो

**अर्द्धमात्रा** स्त्री॰ अर्द्धं मात्राया बिन्द्वर्द्धचन्द्राकारव्यञ्ज्यायां ब्रह्मरूपायाम् वाचि । अर्द्धा मात्रा उच्चारणकालो येषाम् । हल्वर्णेषु व्यञ्जनं चार्द्धमात्रकमित्युक्तेः ।

**अर्द्धयाम** पु० अर्द्धं यामस्य। अष्टधा विभक्तस्य दिनस्य रात्रेर्वा अष्टमे भागे यत्र वारवेलाकालवेलाव्यवहारः।

**अर्द्धरथ** पु० अर्द्धं रथस्य रथनामकयोधविशेषस्य। निकृष्टयोधे

**अर्द्धरात्र** पु अ० रात्रेः। द्वितीयप्रहरशेषक्षणे निशीथे।

**अर्द्धवीक्षण** न० अर्द्धमसम्पूर्णं वीक्षणम् वि+ईक्ष-ल्युट्। कटाक्षदर्शने। [इति ख्याते मत्स्यभेदे।

**अर्द्धशफर** पु० अर्द्धं महत्तमफलाद्दीन शफरः। टाङ्का

**अर्द्धासन** न० अर्द्धमासनं यत्र। स्नेहव्यञ्जके सम्मानभेदे। अर्द्धासन शेषो यत्र। निन्दायाम्।

**अर्द्धोदय** पु० माघमासीयामातिथिनक्षत्रवारविशेषयुक्ते 'माघे मासि सिते पक्षे अमा स्यादर्कसंयुता। नक्षत्रे श्रवणे देवि। व्यतीपातो यदा भवेत्। अर्द्धोदय सविज्ञेय' इत्युक्ते योगे।

**अर्द्धोरुक** न अर्द्धमूरो अर्द्धोरु तत्र कायते काय-ड। जङ्घोरुपर्यन्ताच्छादने वस्त्रे उत्तमस्त्रीणामर्द्धोरुपर्यन्ते चोलकाकारे परिधेयवस्त्रे च।

**अर्पण** न० ऋ णिच्-पुक् ल्युट्। निक्षेपे, स्वत्वत्यागे च। करणे ल्युटि। मन्त्रादौ। जुहूप्रभृतौ स्त्री०। सम्प्रदाने ल्युटि। देवादिषु। अधिकरणे ल्युटि। त्यागाधिकरणे महादौ। कर्मणि ल्युटि। हविरादौ त्याज्यद्रव्ये।

**अर्पिस** पु० ऋ णिच् पुक् च इसन्। हृदये, व्यपमांसे च।

**अर्ब्ब** (र्व) हिंसने भ्वादि० पर०सक० सेट्। अर्बति आर्बीत्।

**अर्बु(र्वु)द** न अर्ब(र्व) विच् तस्मै उदेति अर्ब(र्व्)+उद्+इण्-ड। आव् इति ख्याते मांसपिण्डाकारे रोगभेदे, दशकोटिसंख्यायां तत्संख्यातेषु च। पर्वतभेदे पु०।

**अर्भ** पु० ऋ-भ। बालके। [च।

**अर्भक** पु अर्भ एव स्वार्थे क। बालके, मूर्खे, कृशे, अल्पे, सदृशे

**अर्य्य** त्रि० ऋ यत्। स्वामिनि। वैश्ये पु। स्त्रियां टाप्। अर्य्या वैश्यजातिस्त्रियां स्वामिन्याञ्च। वैश्यपत्न्यान्तु ङीष्। अर्य्यी। वैश्यजातीयायां स्त्रियाम आनुक् ङीप् च। अर्य्याणीत्यपि।

**अर्य्यमन्** पु अर्य्यं श्रेष्ठं मिमीते मा कनिन्। सूर्य्ये तद्देवताके उत्तरफल्गुनीनक्षत्रे अर्कवृक्षे, पितृणां राजनि च।

**अर्व्वन्** पु० ऋ वनिप्। घोटके इन्द्रे, गोकर्णपरिमाणे च। स्त्रियामर्व्वती बडवायां कुट्टिन्यामपि।

**अर्व्वाक्** अव्य० अवरे काले देशे वा अञ्चति अनुच क्विन्। पृषो० अर्वादेशः। पश्चात्काले मध्यगते। विपर्य्यस्ते च। अर्वाक्+अवि तस्य लुक्। अवरकालादौ मध्ये च अत्र तद्भवे अर्व्वाकृतन इत्यादि।

**अर्व्वाचीन** त्रि अर्व्वाक्काले पश्चात्काले भवः ख। पश्चाद्भवे

**अर्शस्** न ऋ-असुन् शुक् च। वल्लिकाकारे गुह्यस्थरोगभेदे वा पृषो० शलोपे। अर्शमप्यत्र।

**अर्शस** त्रि० अर्शस्+अस्त्यर्थे अच्। वल्लिकाकारगुह्यव्याधियुक्ते

**अर्शोघ्न** पु० अर्शांसि हन्ति हन ट। (ओल) शूरणे, भल्लातके च।

**अर्शोघ्नी** स्त्री० अर्शस् हन ठ टित्वात् ङीप् उप स। ताल मूल्याम् भल्लातक्याञ्च। [भल्लातके।

**अर्शोऽहित** पु० अर्शसोऽहित सेवनेन तन्नाशकत्वात्। इत०।

**अर्ह** पूजने, योग्यत्वे च भ्वादि० पर०सक० सेट्। अर्हति, आर्हीत् आनर्ह। [यज्ञे च। योग्ये त्रि०।

**अर्ह** पु० अर्ह कर्मणि घञ्। पूजाप्रयत्नादिभिराराध्ये ईश्वरे,

**अर्हण** पु अर्ह-ल्यु। बुद्धभेदे। भावे ल्युट्। पूजने न०। करणे ल्युटि। पूजोपकरणे पुष्पादौ उपायने च न।

**अर्हणा** स्त्री० अर्ह-युच्। पूजायां योग्यतायाञ्च।

**अर्हत्** पु० अर्ह कर्मणि शतृ। बुद्धभेदे। पूज्ये त्रि।

**अर्हन्त** पु० अर्ह झच्। बुद्धभेदे।

**अर्हा** स्त्री० अर्ह-अङ्। पूजायाम्।

**अल** भूषणे वारणे पर्य्याप्तौ च भ्वा० उभ०सक पर्य्याप्तौ अक० सेट्। अलति ते आलीत् आलिष्ट।

**अलक** पु अलति भूषयति मुखम् अल वुन्। ललाटस्थे छिन्नाग्रे कुटिलकेशे, अङ्गलिग्राङ्गुले च। क्षिपकादित्वात् आपि नेत्वम्। कुबेरपुर्य्याम् अष्टवर्षपर्य्यन्तमविदितमैथुनधर्मवयस्कायां कन्यायाञ्च स्त्री।

**अलकनन्दा** स्त्री० अलति पर्य्याप्नोति वुन् अलका नन्दयतीति अच् नन्दा कर्म०। गङ्गायाम्। अलकैर्नन्दति अच्। कन्यायाम्। सा हि अलकैस्तुष्यति [(पियाराव) प्रीतबालकन्ये।

**अलकप्रिय** पु० अलकान् प्रीणाति चिक्कणीकरोतीति प्री-क।

**अलकाधिप** पु० अलकाया अधिपः इत०। कुबेरे।

**अलक्त** पु० न रक्तोऽस्मात् प्र० रस्य लत्वम्। लाक्षारसे, स्वार्थे के। अलक्तकोऽप्यत्र तद्देशी लाक्षायाञ्च।

**अलक्षण** त्रि नास्ति लक्षणमनुमापक चिह्नं वा यस्य। अप शुभे चिह्नशून्ये च। न त०। दुर्लक्षणे न० त०। तद्वत त्रि

**अलक्षित** त्रि लक्ष-क्त न०त०। अज्ञाते लक्षणेनानुमिते च।

**अलक्ष्मी** स्त्री विरोधार्थे नञा त। लक्ष्मीविरुद्धायां निर्ऋतौ आनक्ष्मीति ख्यातायाम्।

**अलगर्द्द** पु० लगति स्पृशति क्विप लग् अर्द्दयति अर्द्द-अच् अत् स्पृशन् सन् अर्द्द न अर्दति। विषशून्ये जलव्याले पृषो० गलम् स्तभ्नोति वा स्तभ अच् वा। अलगर्द्दोऽप्यत्र।

**अलङ्करण** न॰ अलम्-कृ-भावे ल्युट्। भूषायाम्। करणे ल्युटि। वलयादौ भूषणे।

**अलङ्करिष्णु** त्रि॰अलम् कृ-इष्णुच्। भूषके मण्डनकरणशीले

**अलङ्कर्म्मीण** त्रि॰ अलं समर्थः कर्म्मणे ख। कर्म्मक्षमे।

**अलङ्कार** पु॰ अलम्+कृ-घञ्। भूषायाम्। करणे घञि हारादौ भूषणे, साहित्यविषयदोषगुणप्रतिपादके ग्रन्थे, शब्दभूषणे—अनुप्रासादौ, शब्दार्थभूषणे-उपमादौ च।

**अलङ्क्रिया** स्त्री॰ अलम्+कृ-श। भूषायाम्।

**अलम्** अव्य॰ अल+अमु। भूषणे, पर्य्याप्तौ, निवारणे, निषेधे निरर्थे, शक्तौ, अत्यर्थे, अवधारणे च। [योधनसमर्थे।

**अलम्पुरुषीण** त्रि॰ अलं समर्थं प्रतिपुरुषाय। प्रतिमल्लादि-

**अलम्बुष** पु॰ अलं पुष्णाति पुष-क पृषो॰ षस्य वत्वम्। प्रहस्ते, टमने, राक्षसभेदे च। लज्जालुवृक्षे स्वर्गवेश्यायाञ्च स्त्री॰।

**अलवाल** न॰ लवमालाति ला-क न॰त॰। वृक्षसेकार्थं वृक्षमूले मृदादिकृते जलाधारे वेष्टने स्वार्थेऽणि। आलवालमप्यत्र।

**अलस** त्रि॰ न लसति व्याप्रियते लस अच्। अवश्यकर्त्तव्येषु शरीरापाटवमभिनीय कृतापवासे, क्रियामन्दे च। पाद-रोगभेदे वृक्षभेदे च पु॰। हंसपदीलतायां स्त्री॰।

**अलसक** पु॰ अलसं करोति कृ-ड। उदरामयरोगभेदे।

**अलात** पु॰ न॰। ला-क्त न॰त॰। कोयाला इति ख्याते आङ्गार इति ख्याते च अर्द्धदग्धकाष्ठे।

**अलावु** स्त्री॰ न लम्बते न+लवि-उ णित् नलोपश्च वृद्धिः। (लाउ), तुम्बाम्। वा ऊङ्। अलाबूरप्यत्र।

**अलि** पु॰ अलति दंशे, कूजिते, शब्दिते, वा समर्थो भवति अल-इन्। भ्रमरे, वृश्चिके, काके, कोकिले, सुरायाञ्च।

**अलिक** न॰ अल्यते भूष्यते अल-कर्म्मणि इकन्। ललाटे।

**अलिङ्ग** त्रि॰ नास्ति लिङ्गमनुमापकचिह्नादि यस्य। कार्य्यादि रूपलिङ्गरहिते अननुमेये।

**अलिञ्जर** पु॰ अलनमलि अल-इन् तं जरयति जृ-अच् पृषो॰ मुम्। (जाला) इति ख्याते मृण्मये जलाधारे पात्रभेदे मणिके। [वृश्चिके, भ्रमरे च।

**अलिन्** पु॰अल पर्य्याप्तिः सर्व्वत्र गतिर्विद्यतेऽस्य अल+इनि।

**अलिन्द** पु॰ अल्यते भूष्यते अल-कर्म्मणि किन्दच्। द्वारप्रकोष्ठाद्बहिर्द्वारवर्त्तिचतुष्के, द्वारबहिर्भागे च।

**अलिपत्रिका** स्त्री॰अलिर्वृश्चिक इव पत्रमस्याः ब॰ कपि अत इत्त्वम्। वृश्चिकपत्राख्यलतायाम्। अलिपर्णीमप्यत्र।

**अलिप्रिय** न॰ अलीनां प्रियमधिकमादकत्वात्। रक्तोत्पले। पाटलावृक्षे स्त्री॰। अलिवल्लभाप्यत्र।

**अलिमोदा** स्त्री॰ अलीन् मोदयति मुद-णिच्-अच्। (गणि-आरी), गणिकारीवृक्षे।

**अलीक** न॰ अल-ईकन्। अप्रिये, ललाटे, स्वर्गे च। अलति गच्छत्यधोऽनेन। असत्ये। मिथ्याकथने हि नरकपातः।

**अलौकिक** त्रि॰ लोके विदितः ठक् न॰त॰। लौकिकप्रत्यक्षा-गम्ये, लोकातीते, चमत्कारिणि च।

**अल्प** त्रि॰ अल-प। क्षुद्रे, इषदर्थे, सूक्ष्मे, मर्त्ये च। स्वार्थे के। अल्पकमप्यत्र। यमासे पु॰। [त्रि॰।

**अल्पगन्ध** न॰ अल्पो गन्धोऽस्य। रक्तकैरवे। स्वल्पगन्धयुक्ते।

**अल्पतनु** त्रि॰ अल्पा क्षुद्रपरिमाणा तनुः शरीरं यस्य। खर्व्वे, दुर्बले, स्वल्पास्थियुक्ते च।

**अल्पप्रमाणक** पु॰ अल्पं प्रमाणमस्य ब॰ कप्। (तरमुज) (खरमुज) वा इति ख्याते वृक्षे। अल्पप्रमाणयुक्ते त्रि॰।

**अल्पमारिष** पु॰ अल्प मारिषः शाकः कर्म्म॰। (नटिया) इति ख्याते शाके। [प्रमाणे सरषि।

**अल्पसरस्** न॰ अल्पं सर कर्म्म॰। डोवा इति ख्याते अल्प

**अल्पायुस्** पु॰ अल्पमायुः जीवनकालो यस्य। छागे पशुषु तस्यैवाल्पायुष्कत्वात्। अल्पायुष्कमत्र त्रि॰।

**अल्पिका** स्त्री॰ अल्पैव स्वार्थे के अत इत्त्वम्। मुद्गपर्ण्याम्।

**अल्पिष्ठ** त्रि॰ अतिशयेनाल्पः अल्प+इष्ठ। क्षुद्रतरे।

**अल्पीयस्** त्रि॰ अल्प+ईयसु। अत्यन्ताल्पे। स्त्रियां ङीप्।

**अल्ला** स्त्री॰ अल्यते इत्यल् क्विप् अलं भूषायै मृह्णाति बालम् अल्+ला क। मातरि। अलतीति अल् पर्य्याप्तिः लाति सर्व्वानन्ति गृह्णाति जानाति वा। सर्व्वज्ञायां सर्व्वभक्षिकायां परमात्मदेवतायाम् सा च अथर्व्ववेदे अल्ला-सूक्त्यादिसूक्ते प्रसिद्धा।

**अव** रक्षणे, गतौ, स्पृहायां, तृप्तौ, शोभायां, श्रवणे, व्याप्तौ, आलिङ्गने, प्रार्थने, प्रवेशे, सत्तायां, वृद्धौ, ग्रहणे, वधे, सामर्थ्ये, अवगमे, करणे, इच्छोत्पादने च यथायथं सक॰ अक॰ च भ्वादि॰ सेट् पर॰। अवति आवीत्।

**अव** अव्य॰ अव-अच्। निश्चये, व्याप्तौ अनादरे, असाकल्ये, आलम्बने, शुद्धौ, परिभवे, नियोगे, निम्नतायां च।

**अवकर** पु॰ अवकीर्य्यते संमार्ज्जन्यादिभिः अव-कृ-अप्। सम्मार्ज्जन्यादिभिः क्षिप्ते धूल्यादौ।

**अवकाश** पु॰ अव+काश-घञ्। अवस्थितियोग्यतासम्पादके काले, देशे च। तत्र कालिकोऽवकाशः क्रियान्तरस्थितियो ग्यतासम्पादकः सचावसर इत्यप्युच्यते, "कृतावकाशे रुचि संक्रान्त"मिति भट्टिः। द्रव्यान्तरस्थितियोग्यतासम्पादको

**अवलेपन** न अव+लिप-भावे ल्युट्। विलेपे, गर्व्वे सङ्गे च। करणे ल्युटि। चन्दनादौ।

**अवलेह** पु॰ अव+लिह-घञ्। जिह्वाग्रेण स्वादने। कर्म्मणि घञि। तथास्वाद्ये औषधादौ च।

**अवलोकन** न अव+लुक-ल्युट्। दर्शने,अनुसन्धाने च। करणे ल्युट्। आलोके, नेत्रे च। [लतायाम्।

**अवल्गुज** पु॰ अवल्गोरधोभागाज्जायते जन-ड। सोमराजी

**अववाद** पु॰अव+वद घञ्। निन्दायाम् विश्वासे आज्ञायाम् अवालम्बने च। [परवशे, पराधीने च।

**अवश** त्रि॰ नास्ति वशमायत्तत्व यस्य। अस्वाधीने कामादि

**अवशिष्ट** त्रि॰अव+शिष-क्त। अतिरिक्ते परिशिष्टे अधिके च

**अवश्यम्** अव्य अव+श्यै डम्। निश्चये आवश्यनिवारणे च।

**अवश्याय** पु अव-श्यै ण। कुज्झटिकायाम् अभिमाने च।

**अवश्रयण** न॰ अव+श्री-ल्युट्। चुल्लीतोऽवतार्य स्थापने।

**अवष्टब्ध** त्रि॰ अव+स्तम्भ-क्त। आसन्ने, आक्रान्ते, अवलम्बिते,प्रतिरुद्धे च।

**अवष्टम्भ** पु॰ अव+स्तम्भ-घञ्। स्वर्णे,स्तम्भे,प्रारम्भे, रोधने, गर्वे च रघोरवष्टम्भमयेन पत्रिणे 'ति रघु।

**अवस्** अव्य॰ अवर+प्रथमाया पञ्चम्या सप्तम्या वाऽर्थे असि अवादेश। बाह्ये पश्चादर्थे च।

**अवसथ** पु वस-अथच् न॰प॰न॰। निलये,ग्रामे च।

**अवसथ्य** पु आवसथ+स्वार्थे यत्। आवासे, ग्रामे च।

**अवसर** पु॰ अव+सृ-अच्। प्रस्तावे जिज्ञासानिवृत्तयेऽवसरप्राप्ते, वत्सरे सत्त्वभेदे वर्षणे, क्रियास्थितियोग्यतासम्पादककृपे कालिकेऽवकाशे च। [कामचाराभ्यनुज्ञायां च।

**अवसर्ग** पु अव+सृज-घञ्। अप्रतिबन्धे, यथेष्टं क्रियतामिति

**अवसर्प** पु अव+सृप अच्। चरे। [कृपाणधनतायाञ्च।

**अवसाद** पु॰ अव+सद घञ्। नाशे विषादे स्वकार्याक्षमत्व

**अवसादन** न॰ अव+सद-णिच्-ल्युट्। कार्याक्षमतापादने, नाशने च। [सत्यौ च।

**अवसान** न अव+सो ल्युट्। विरामे समाप्तौ सीमाया,

**अवसाय** पु अव+सो घञ्। समाप्तौ, शेषे, निश्चये च।

**अवसित** त्रि॰ अव+सो क्त। समाप्ते, ऋद्धे, ज्ञाते, परिपक्वे निश्चिते सञ्चितधान्ये च। अव+सि-क्त। बद्धे।

**अवस्कन्द** पु॰अव+स्कन्द-आधारे घञ्। जिगीषया सैन्यनिवेशस्थाने शिविरे, आक्रमणे च। [तरणे,आक्रमणे च।

**अवस्कन्दन** न॰ अव+स्कन्द-ल्युट्। सर्वाङ्गे पादगाहने अव

**अवस्कर** पु॰अव+कॄ अप् सुट्। विष्ठादिमले। अपादाने अपि गुह्यदेशे उपस्थादौ। [अवादेश। अवरकालादौ।

**अवस्तात्** अव्य॰ अवरस्मिन् अवरस्मात् अवरमित्यर्थे अस्ताति

**अवस्तार** पु॰ अव+स्तृ-घञ्। परदा इति ख्यातायां जवनिकायाम्, आस्तरणे च। [अवस्थाने च।

**अवस्था** स्त्री अव+स्था-अङ्। कालकृतायां देहादेर्दशायाम्,

**अवस्थान** न॰ अव+स्था-ल्युट्। स्थितौ। आधारे घञि। आवासे, प्रतिष्ठायाञ्च।

**अवस्यन्दन** न॰ अव+स्यन्द-ल्युट्। क्षिरणे।

**अवस्रंसन** न॰ अव+स्रंस ल्युट्। अध पतने, च्युतौ च।

**अवहार** पु॰अव+हृ कर्त्तरि ण। चौरे,ग्राहनामके, जलजन्तुभेदे च। भावे घञि। युद्धादिविश्रामे। कर्म्मणि घञि। निमन्त्रितविप्रादिभ्यो देये द्रव्ये। [भावे।

**अवहित्था** स्त्री॰ न॰ न बहिर्मनोऽस्ति स्था-क पृषो। हृतह-

**अवहेल** न॰स्त्री। अव+हेल अच् स्त्रीत्वे क वा। अनादरे।

**अवाक्पुष्पी** स्त्री अवाक् अधोमुख पुष्पमस्या। (मुलफा) इति ख्यातायाम् शतपुष्पिकायाम्।

**अवाक्शिरस्** त्रि॰ अवाक् शिरोऽस्य ब॰। अधोमुखे।

**अवाग्र** त्रि॰ अवनतमग्रमस्य। नम्रमुखे।

**अवाङ्मुख** त्रि॰ अवाक् मुखमस्य। अधोमुखे।

**अवाच्** त्रि अवाञ्चति अव+अञ्च-क्विप्। अधोमुखगते, अवरे-देशे, काले च। दक्षिणस्यां दिशि स्त्री॰ ङीप्। नास्ति वाक् यस्य ब॰। वाक्यरहिते त्रि। पूर्व्वार्थे अवाञ्चौ अत्र अवाचौ इत्यादि भेद। कालाद्यर्थे प्रथमादीनां स्थानेऽस्ताति तस्य लुक्। अवरकालाद्यर्थे अव्य।

**अवाच्य** न॰ वच-ण्यत् कुत्सम् न त॰। दुष्टवचने, वचनानर्हे,निन्दनीये च अवाच्+यत्। अवरकालादौ भवे त्रि।

**अवान्तर** त्रि॰ अवगतमन्तर मध्यम् प्रा स। प्रधानान्तःपातिनि अङ्गादौ, सामान्यस्य विशेषे च।

**अवार** न॰ न वारमत्र। नद्यादेर्जलानतिक्रमेण प्राप्ये तीरे।

**अवारपार** पु॰ अवार पारश्च स्तो यस्य अर्शआद्यच्। उभयकूलवति समुद्रे।

**अवारपारीण** त्रि॰अवारपारे गच्छति+ख। पारगामिनि।

**अवारिका** स्त्री॰ नास्ति वारि यत्र। धन्याके तस्य अति शुष्कफलत्वेन जलशून्यत्वात्।

**अवासस्** त्रि न वासोऽस्य। वस्त्ररहिते नग्ने।

**अवि** पु अव-इन्। सूर्य्ये मेषे, छागे, पर्व्वते, मूषिककम्बले, प्रभौ च। ऋतुमत्यां स्त्रियां लज्जायाञ्च स्त्री वा ङीप्।

**अविकट** पु॰ अवि+समूहे कटच्। मेषसघाते। विकट उप

न०त०। उग्रभिन्ने सौम्ये। [अजगन्धावृत्ते।
**अविगन्धा** स्त्री० अवेश्छागस्य गन्ध इव गन्धः पुष्पादावस्याः।
**अविग्न** पु० विज-क्त न०त०। (करमचा) करमर्द्दकवृत्ते।
**अवितथ** न० न वितथं मिथ्या न०त०। सत्ये।
**अविद्या** स्त्री० विद-क्यप् न०त०। विद्याभावे, अहङ्कारहेतौ अज्ञाने, विद्याविरोधिन्याम् अयथार्थबुद्धौ च। वेदान्तमते भावाभावाभ्यामनिर्वाच्यायामचेतनायां मायायाम्।
**अविद्धकर्णी** स्त्री० न विद्धः अच्छिद्रं पर्णरूपः कर्णोऽस्याः। पाठालतायाम्।
**अविनाभाव** पु० विना व्यापकमृते न भावः स्थितिः। व्यापकस्थित्यनुरोधिसत्तारूपायां व्याप्तौ।
**अविनीत** त्रि० अव+नी-क्त। उद्धते। कुलटायां स्त्री०।
**अविप्रिय** पु० अवीन् मेषान् प्रीणाति प्री-क। श्यामालते। विप्रियमपकारः न०त०। प्रतिकूलभिन्ने। न०ब०। अपकारशून्ये त्रि०। श्वेतालतायां स्त्री०।
**अविभक्त** पु० वि+भज-क्त। संसृष्टे, विभागरहिते द्रव्ये-स्वामिनि च। अविभक्ता विभक्ता वा सपिण्डाः स्थावरे समाः इति, अविभक्तं स्थावरं यत्सर्वेषामेव तद्भवेदिति च स्मृतिः।
**अविमुक्त** न० "न विमुक्तं शिवाभ्यां यदविमुक्तं ततो विदु"रित्युक्तलक्षणे काशीक्षेत्रे। वि+मुच-क्त न०त०। मुक्तभिन्ने त्रि०
**अविरत** त्रि० वि+रम भावे-क्त न०ब०। विरामशून्ये, अनवरते द्रव्यादौ च क्रियाविशेषणत्वे न०।
**अविरति** स्त्री० विरामो विरतिः भावे क्तिन् न०त०। विषयादौ स्थिरचित्ततायाम्, विरामाभावे च।
**अविरल** त्रि० न विरलः न०त०। घने, निविडे।
**अविलम्बित** त्रि० वि+लबि-क्त न०त०। विलम्बशून्ये त्वरायुक्ते द्रव्यादौ। क्रियाविशेषणत्वे न०।
**अविवेक** पु० वि+विच-घञ् न०त०। सदसद्विवेकाभावे, सम्भूयैककार्य्यकरणे, भ्रमे च। न०ब०। विवेकशून्ये त्रि०।
**अविवेकिन्** त्रि० वि+विच-घिनुण् न०त०। विवेचकभिन्ने, मूर्खे, शास्त्राद्युपदेशशून्ये, विवेकोभेदस्तद्रहिते च। साङ्ख्यमते प्रधाने, महदादौ च। प्रधानं महदादिभ्यः, महदादयश्च प्रधानात् न विविच्यन्ते (भिद्यन्ते) इत्युक्तम् तत्रैव।
**अविशेष** पु० वि+शिष-घञ् न०त०। विशेषाभावे, अभेदे च। न०ब०। विशेषशून्ये तुल्ये त्रि०। साङ्ख्यादिमतसिद्धेषु तन्मात्रसंज्ञकेषु सूक्ष्मभूतेषु तानि च इदमेतदेवंगुणकमिति व्यावृत्ततया नानुभूयन्ते इत्यविशेषाः।
**अविश्रान्त** त्रि० वि+श्रम-क्त न०त०। विरामरहिते द्रव्ये।
**अविष** पु० अव-टिषच्। समुद्रे, नृपे च। ङीप्। नद्यां स्त्री०। विषशून्ये त्रि०। (आतइच्) विश्वायां स्त्री० टाप्।
**अविसोढ** न० अवेर्दुग्धम् अवि+सोढ न पत्वम्। मेष्यादुग्धे।
**अविस्पष्ट** न० विस्पष्टं स्फुतमात्रेणार्थाववोधकं मुखेन श्रवणायोग्यञ्च वि+स्पश-क्त न०त०। अस्पष्टवाक्ये। [त्यत।
**अवीचि** पु० नास्ति वीचिः सुखमत्र। नरकभेदे अवीचिमयोर-
**अवीजा** स्त्री० ईषदर्थे नञा ब०। अल्पबीजवत्यां द्राक्षायाम्। बीजशून्ये त्रि०। [प्रवर्त्तमाने निषेधके अनुमाने।
**अवीत** न० वि+इण्-क्त न०त०। न्यायमसिद्धे व्यतिरेकहेतुके
**अवीर** त्रि० वीरः पुत्रादिर्नास्ति यस्य। पुत्रादिशून्ये। न०त० वीर्यवर्ज्जिते। पतिपुत्ररहितायां स्त्री०। "अज्ञातपुत्रा-विधवा मातृवीरा परकीर्त्तितेति" स्मृतेः। [धाने च।
**अवेक्षण** न० अव+ईक्ष-ल्युट्। दर्शने, प्रतिजागरणे, अव-
**अव्यक्त** पु० वि+अन्ज-क्त न०त०। विष्णौ, कामे, शिवे, सांख्यमते सर्वकारणे, प्रधाने, रूपाद्यहीनतया चक्षुराद्यगोचरत्वात्तस्य, वेदान्तमते सूक्ष्मशरीरे स्वप्नावस्थायां शब्दप्रवृत्तिनिमित्तजातिगुणादिभिर्वर्जिते निराकारे ब्रह्मणि च न०। अस्पष्टे वस्तुमात्रे त्रि०। [ईषद्रक्ते अरुणवर्णे।
**अव्यक्तराग** पु० न व्यक्तोऽल्पव्यक्तोरागोऽरुणिमा यस्य।
**अव्यङ्गा** स्त्री० अवेरङ्गं व्यङ्गमिवाङ्गमस्याः। शूकशिम्ब्याम्। न विकलमङ्गमस्य ब०। विकलाङ्गभिन्ने पूर्णाङ्गे त्रि०।
**अव्यञ्जन** पु० नास्ति व्यञ्जनं शुभलक्षणं शृङ्गं यस्य। शृङ्गहीनपशौ, सुलक्षणशून्ये, चिह्नशून्ये च त्रि०।
**अव्यण्डा** स्त्री० न विगतमण्डं बीजमस्याः। शूकशिम्ब्याम्।
**अव्यथ** पु० न व्यथते पद्भ्यां न सञ्चलति व्यथभयचलनयोः अच्। सर्पे। व्याथाशून्ये त्रि०। नास्ति व्यथा यस्मात् ५त०। हरितक्याम् गुरुपाञ्च स्त्री०। [व्यथाशून्ये त्रि०।
**अव्यथिन्** पु० बहुचलनेऽपि न व्यथते व्यथ-इनि। अश्वे,
**अव्यभिचारिन्** त्रि० वि+अभि+चर-णिनि न०त०। केनापि प्रतिकूलहेतुना निवारयितुमशक्ये। न्यायमते व्यभिचारो व्याप्तेरभावस्तच्छून्ये हेतौ पु०।
**अव्यय** पु० न० वि+इण्-अच् न०त०। सर्वासु विभक्तिषु सर्ववचनेषु च एकरूपे शब्दवृत्तिधर्मविशेषे, यथास्वरादयोऽव्ययाः सर्वत्रैकरूपाः शिवे, विष्णौ च पु०। आद्यन्तरहिते विकारशून्ये त्रि०। परब्रह्मणि न०। "सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययमिति श्रुति।
**अव्ययीभाव** पु० अनव्ययमव्ययं भवत्यनेन अव्यय+च्वि-भ

**आपद्** स्त्री० आ+पद-क्विप् । विपत्तौ ।

**आपन** न० आप-ल्युट् । प्राप्तौ, मरीचे च । कर्म्मणि ल्युट् । क्लेशे

**आपन्न** त्रि० आ+पद क्त । विपद्ग्रस्ते, प्राप्ते च ।

**आपन्नसत्त्वा** स्त्री० आपन्नं सत्त्वं यया । गर्भवत्याम् ।

**आपमित्यक** न० अपमित्य परीवर्त्य निर्वृत्तम् अप+मे-क्त्वा ल्यप् ततोनिर्वृत्तेऽर्थे कक् कित्त्वात् वृद्धिः । तुल्यद्रव्य विनिमयेन ग्रहणे । [नस्य तृतीयभागभवे पिष्टकादौ

**आपराह्णिक** त्रि०अपराह्णे भवः ठञ् । त्रिधा विभक्तस्य दि-

**आपस्** न०आप-असुन् । जले,"आपोभिर्मार्ज्जनं"मितिस्मृतिः "सर्व्वमापोमयं जगदि"ति देवीमाहात्म्यम् । [लतायाम् ।

**आपस्तम्भिनी** स्त्री० आपः स्तभ्नाति स्तम्भ-णिनि । त्रिद्रिव्यां

**आपाक** पु० आपच्यतेऽत्र आ+पच+घञ् । (पोयान्) कुम्भकारस्य मृत्पात्रपाकस्थाने । [घञ् । तत्काले, मार्गे च ।

**आपात** पु० आ+पत-भावे घञ् । सहसा पतने, । आधारे

**आपाततस्** अव्य० आपात+तसिल् । अनिश्चये विनेत्यर्थे "आपाततोयदर्थस्ये"ति साहित्यदर्पणे ।

**आपान** न० आ सम्भूय पिबन्त्यत्र । सुरापानार्थं सम्भूयोपवेशने, (चक्रे) मद्यपानसभायाञ्च ।

**आपानभूमि** स्त्री० आपानस्य भूमिः । सुरापानस्थाने ।

**आपिञ्जर** न० ईषत् पिञ्जरवर्णम् । स्वर्णे ।

**आपीड** पु० आ+पीड-अच् । शिखामाल्ये, शिरोभूषणे, गृहवर्हिर्निःसृतकाष्ठे च । [पीते त्रि० ।

**आपीत** न० आपीयते आ+पा-क्त । माक्षिकधातौ । ईषत्-

**आपीन** न० आ+प्याय-क्त पीभावः तस्य नत्वम् । (मेड़) ऊधसि । कूपे पु० । ईषत्स्फीते त्रि० ।

**आपूपिक** न० अपूपानां पिष्टकानां समूहः ठक् । पिष्टकसमूहे पिष्टकसम्पादनेन जीव्यतीत्याद्यर्थे ठक् । पिष्टकाजीवे, तद्-भक्ष्यकारके, तद्रचयितरि, तद्भक्षणशीले च त्रि० ।

**आपूप्य** पु०अपूपार्थं पिष्टःअन्न । सक्तुषु, गोधूमचूर्णादौ च । [च ।

**आपृच्छा** स्त्री०आ+प्रच्छ-अङ् । आलापे, जिज्ञासायामाभाषणे

**आप्त** त्रि० आप-क्त । विश्वस्ते, प्राप्ते, लब्धे, सत्ये, रागद्वेषादिवर्ज्जिते, यथार्थोपदेष्टरि भ्रमादिशून्ये यथार्थज्ञातरि च ।

**आप्तकाम** त्रि०आप्तः प्राप्तः कामः कामनाविषयो येन । सम्पूर्णकामे नित्यतृप्ते । परमेश्वरे पु० ।

**आप्ति** स्त्री० आप-क्तिन् । संबन्धे, योगे, लाभे प्राप्तौ च ।

**आप्तोक्ति** स्त्री० आप्तस्य उक्तिः वच-क्तिन् । सन्दिग्धविषय निर्णयार्थं सिद्धान्तिवाक्ये, यथार्थज्ञवाक्ये च ।

**आप्य** न० आप-ण्यत् । (कुड़) कुष्ठभेदे । कर्म्मीभूते मन्त्रादौ प्राप्यें च त्रि० । अपां विकारः ष्यञ् । जलविकारे फेनादौ त्रि० । [ल्युट् । तर्पणे प्रीणने च । ल्यु । तत्कर्त्तरि त्रि० ।

**आप्यायन** न आ+प्याय-ल्युट् । तृप्तौ, प्रीतौ च । णिच्-

**आप्रच्छन** न० आ+प्रच्छ-ल्युट् । आनन्दने, गमनागमनसमये बन्धूनामन्योन्यकुशलजिज्ञासयानन्दसम्पादने ।

**आप्रपद** अव्य०प्रपदं पादाग्रं तत्पर्य्यन्तम् अव्ययी० । पादाग्रपर्य्यन्ते

**आप्रपदीन** त्रि०आप्रपदं पादाग्रान्तं प्राप्नोति ख । पादाग्रान्तं लम्बमाने वस्त्रादौ । [जलानां सर्व्वतः सङ्घट्टने च ।

**आप्ल(प्ला)व** पु० आ+प्लु-घञ्-अप् वा । स्नाने । (छिपकाण) ।

**आप्लुत** त्रि० आ+प्लु-क्त । स्नाते । भावे क्त । स्नाने न० ।

**आप्लुतव्रत** पु० आप्लुतं वेदाध्ययनानन्तरं स्नानं व्रतमस्य । अधीतवेदे, अकृतदारस्याश्रमे ब्रह्मचारिभेदे स्नातके ।

**आबद्ध** न० आ सम्यक् बद्धम् बन्ध-भावे क्त । दृढबन्धने । आधारे क्त । प्रेम्णि । कर्म्मणि क्त । भूषणे । करणे क्त । योक्त्रे पु० । बद्धे आप्ते प्रतिरुद्धे च त्रि० ।

**आबन्ध** पु० आ+बन्ध-घञ् । दृढबन्धे, योक्त्रे च ।

**आबाधा** स्त्री० आ+बाध-अङ् । पीडायां क्लेशे च । लीलावत्यादौ प्रसिद्धे । त्रिकोणक्षेत्रे लम्बोभयपार्श्वस्थे क्षेत्रमध्ये रज्जुनिक्षेपाज्जायमाने भूखण्डे ।

**आविल** त्रि० आ+बिल भेदने, क । कलुषे, अस्वच्छे च ।

**आवुक** पु० आपनमाप् क्विप् आपस्तत्तनोति उद्+तन-ड । नाट्योक्तौ भगिनीपतौ ।

**आभरण** न०आ+भृ-ल्युट् । भूषणे । [माने, वातरोगभेदे च ।

**आभा** स्त्री०आ+भा-अङ् । दीप्तौ, शोभायाम्, कान्तौ, उप

**आभाषण** न० आ+भाष-ल्युट् । आलापे, परस्परकथने च

**आभाषित** त्रि० आ+भाष-क्त । अभिमुखीकृत्य कथिते ।

**आभास** पु० आ+भास-घञ् । प्रतिबिम्बे, दीप्तौ, मन्यादेरादौ सङ्गतिदर्शनोत्थापने अवतारणे च ।

**आभास्वर** पु० आ+भास-वरच् । चतुःषष्टिमिते, द्वादशमिते वा गणदेवताभेदे । दीप्ते त्रि० । [पाण्डित्ये च ।

**आभिजात्य** न० अभिजातस्य भावः ष्यञ् । कौलीन्ये,

**आभीक्ष्ण** न०स्वार्थेऽण् । अत्यर्थे । तद्वति त्रि० । क्रियाविशेषणत्वे न० ।

**आभीक्ष्ण्य** न० अभीक्ष्णस्य भावः ष्यञ् । पौनःपुन्ये ।

**आभीर** पु०आ सम्यक् भियं राति रा-क । आहिर इतिख्याते ब्राह्मणादम्बष्ठायामुत्पन्ने वर्णसङ्करभेदे गोपे, देशभेदे च ।

**आभीरपल्लि(ल्ली)** स्त्री० आभीराणां पल्लिः । गोपग्रामे, पक्षे ङीप्

**आभील** न० आ समन्तात् भियं लाति आभी+ला+क । कष्टे तद्वति, भयानके च त्रि० ।

भक्तिः। [कर्म्माध्यक्षे,कुशले,च।

**आयुक्त** त्रि॰ आ+युज-क्त। व्यापारिते, ईषद्युक्ते, नियुक्ते,

**आयुध** न॰ आ+युध-करणे घञर्थे क। प्रहरणमात्रे।

**आयुधिक** पु॰ आयुधं शिल्पमस्य ठक्। शस्त्राजीवे। तदर्थे छ आयुधीयशब्द। [सोपाहे।

**आयुर्वेद** पु॰ आयुर्विन्द्यतेऽनेन घञ्। चिकित्साशास्त्रे वेद-

**आयुर्वेदिन्** त्रि॰ आयुर्वेदोवेद्यतया विद्यतेऽस्य इनि। आयुर्वेदज्ञे चिकित्सके। [आवधिके तृतीये योगे पु॰।

**आयुष्मत्** त्रि॰ आयुर्विद्यतेऽस्य मतुप्। चिरजीविनि। विष्कु

**आयुष्य** त्रि॰ आयुषे हितम् यत्। आयुषोहितकारके पथ्ये। स्वार्थे यत् आयुषि न॰। [रघु॰।

**आयुस्** न॰ इण-असि-णिच्च।जीवनकाले 'आयुषः क्षये' इति

**आयोग** पु॰ आ+युज-घञ्। गन्धमाल्योपहारे, व्यापारे,रोधे च

**आयोगव** पु॰शूद्राद्वैश्यायामुत्पन्ने प्रतिलोमवर्णसङ्करजे जातिभेदे

**आयोजन** न॰ आ+युज ल्युट्। उद्योगे, आहरणे च।

**आयोधन** न॰ आ+युध-आधारे ल्युट्। युद्धस्थाने। भावे ल्युट्। योधने, तत्फले वधे च।

**आर** पु॰ ऋ-घञ्। मङ्गलग्रहे, शनिग्रहे,मधुराम्लफले वृक्षभेदे च। पित्तले, कोणे, प्रान्तभागे, सुवर्णलोहे च न॰।

**आरकूट** पु॰न॰। आरं पित्तलं कूटयति रूपीकरोति अच्। पित्तलाभरणे। 'किमारकूटाभरणेन न श्रिय' इति नैषधम्।

**आरक्ष** पु॰ आ+रक्ष-अच्। हस्तिकुम्भाधःस्थले, हस्तिमस्तक चर्म्मणि, सैन्ये च। रक्षके त्रि॰। भावे घञ्। रक्षायाम्।

**आरग्वध** पु॰ रगे-शङ्कायां क्विप् आरगं रोगशङ्कामपि हन्ति अच् वधादेशश्च। सोंदाल इति ख्याते वृक्षे।

**आरट्ट** पु॰ आरट्यते विख्याप्यते आ+रट टच् टस्य नेत्वम्। शतद्रुविपाशादिपञ्चनद्यन्तर्गते देशभेदे। [घोटके।

**आरट्टज** पु॰ आरट्टे देशे जायते जन-ड। (आरव) स्थानजाते

**आरणि** पु॰आ+ऋ अणिच्। आवर्त्ते पयसां स्वतोभ्रमे।

**आरण्य** त्रि॰ अरण्ये भवः यक्। वनजाते व्याघ्रसिंहादौ।

**आरण्यक** पु॰ अरण्ये भव तत स्वार्थे क। पथि, अध्याये, न्याये, विहारस्थाने मनुष्ये, हस्तिनि च। वेदस्यावयवविशेषे न॰। "आरण्यकमधीत्य चेति" मनुः।

**आरति** स्त्री॰ आ-रम-क्तिन्। उपरमे, निवृत्तौ च।

**आरनाल** न॰ आरच्छतीति आर ऋ+ण, नल-गन्धे घञ्। आरो नालोगन्धो यस्य। काञ्जिके। वा कप्। आरनालकमप्यत्र

**आरभटी** आरभ्यतेऽनया आ+रभ-अटि ङीष्। नाट्ये रचनाभेदे

**आरम्भ** पु॰ आ+रभ-घञ् मुम् च। त्वरायाम् वेगे-उद्यमे,दर्पे, उपक्रमे, प्रस्तावनायाञ्च। कर्म्मणि-घञ्। आरभ्यमाणे।

**आरम्भवाद** पु॰ आरम्भस्य वादो यत्र। न्यायमते वैशेषिकमते च "पृथिव्यप्तेजोवायुना क्रियासंयोजितानाव द्व्यणुकादिक्रमेणैवमारभन्ते इदं जगदिति" तयोः स्वीकारात्

**आर(रा)व** पु॰ आ+रु-घञ् अप् वा। शब्दमात्रे।

**आरा** स्त्री॰ आ+ऋ अच्। चर्म्मभेदकास्त्रभेदे। टेको इति ख्याते लौहास्त्रे च।'आराग्रमात्रो ह्यवरोऽपीति' श्रुतिः

**आरात्** अव्य॰ आ+रा-आति। दूरे, समीपे च।

**आरात्रिक** न॰ अरात्राविपि निर्वृत्तं ठञ् दीपो हि रात्रावेव प्रदर्श्यते इदं दिनेऽपि दर्श्यते। (आरति) नीराजनकर्म्मणि।

**आराधन** न॰ आ+राध-ल्युट्। पाके, साधने, पूजने, तोषणे, प्राप्तौ च।

**आराधना** स्त्री॰ आराध-युच् स्त्रीत्वात् टाप्। सेवायाम्।

**आराम** पु॰ आ+रम-आधारे घञ्। उपवने, कृत्रिमवने, क्रीडार्थवने च। [वक्रगामिनि त्रि॰।

**आरालिक** पु॰ अरालं कुटिलं शिल्पमस्य ठक्। पाचके।

**आरु** पु॰ ऋ-उण्। वृक्षभेदे, कर्कटे, शूकरे च।

**आरेवत** पु॰ आरेचयति रेचयति मलं रेच-णिच्-क्विप् अतति-अच्। अत्यन्तसारके (सोन्दाल) आरग्वधवृक्षे।

**आरोग्य** न॰अरोगस्य भाव ष्यञ्। रोगराहित्ये अनामये।

**आरोग्यशाला** स्त्री॰ आरोग्यार्थं शाला। चिकित्सागृहे।

**आरोप** पु॰ आ रुह-णिच्-पुक् घञ्। अ स्मिन् अन्यधर्म्मावभासे यथा रज्ज्वां सर्पज्ञानम्। रूपकालङ्कारादौ तु सत्यपि बाधज्ञाने भेदावबोध शाब्द न प्रतिरुध्यते।

**आरोह** पु॰ आ+रुह-घञ्। दैर्घ्ये। उत्तमस्त्रीणां नितम्बे, आरोहणे, उच्छ्राये, परिमाणभेदे च।

**आरोहण** न॰ आ+रुह-करणे ल्युट्। पाषाणादिरचिते उच्चप्रासादारोहणसाधने (सिढि) सोपाने। भावे घञ्। निम्नस्थानादूर्द्ध्व-गमने।

**आर्चिक** पु॰ ऋचां व्याख्यानं ठक्। ऋचां व्याख्याने। ऋक्षु भवः ठक्। ऋग्वेदभवे त्रि॰। ईकारान्त आर्चीकशब्दोऽप्यत्र त्रि॰।

**आर्जव** पु॰ ऋजोर्भावः अण्। सरलतया परप्रतारणाराहित्ये

**आर्त्त** त्रि॰ आ+ऋ-क्त। पीडिते, दुःखिते, असुस्थे च।

**आर्त्तव** न॰ ऋतौ भवम् अण्। स्त्रीपुष्पे, पुष्पे च। ऋतोरस्य प्राप्तः अण्। ऋतुजे फलपुष्पादौ त्रि॰। घोषकायाम् स्त्री॰ ङीप्। [धनुस्कोट्याञ्च।

**आर्त्ति** स्त्री॰ आ+ऋ-क्तिन् ऋति धातौ वृद्धिः। पीडायाम्

**आर्त्विज्य** न॰ ऋत्विजः कर्म्म ष्यञ्। ऋत्विग्योग्ये कर्म्मणि।

आर्थिक त्रि॰ अर्थं स्वहाति अर्थात् आगच्छति वा ठक् । अर्थ-साधके ऽर्थागते च । [आरम्भ षष्ठे नक्षत्रे च स्त्री॰ न॰ ।

आर्द्र न॰ अर्द्-रक् दीर्घश्च । क्लिन्ने, सजलवस्तुनि । अश्विनीत

आर्द्रक न॰ आर्द्रायां भूमौ जातं वुन् । (आदा) खनाम ख्याते मूलभेदे ।

आर्य्य पु॰ ऋ-ण्यत् । स्वामिनि, गुरौ, सुहृदि च । श्रेष्ठकुलोत्पन्ने पूज्ये, श्रेष्ठे सङ्गते, न्याय्ये मान्ये उदारचरिते, शान्तचित्ते “कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स वा आर्य्य इति स्मृत” इत्युक्तलक्षणे जने च त्रि॰ ।

आर्य्यक पु॰ अतिशयेनार्य्यः पितोरपि पूज्यत्वात् प्रागस्त्ये कन् । पितामहे, मातामहे च । स्वार्थे कन् । श्रेष्ठे त्रि ।

आर्य्यपुत्र पु॰ आर्य्यं श्वशुरो गुरुश्च तस्य पुत्र इव॰ । पत्यौ गुरुपुत्रे च ।

आर्य्यावर्त्त पु॰आर्य्याणामावर्त्तोदेशः । ‘आ समुद्रात्तु वै पूर्वादा समुद्रात्तु पश्चिमात् । हिमवद्विन्ध्ययोर्मध्यमार्य्यावर्त्तं प्रचक्षते’ इति मनूक्ते देशभेदे ।

आर्ष त्रि॰ ऋषिभिः प्रोक्तम् ऋषेः कृतं वा अण् । ऋषिप्रणीते धर्मशास्त्रे तत्कृते वेदे च । आर्ष॰ धर्मोपदेशश्चेतिमनु ।” आर्षं आदाय गोयुग्ममित्युक्ते विवाहभेदे पु ।

आर्हत पु॰अर्हत एव स्वार्थे अण् । बुद्धविशेषे । तत्सम्बन्धिनि त्रि ।

आर्हन्ती स्त्री॰ अर्हतोभाव ष्यञ् नुम् च ङीष् यलोपः । योग्यतायाम् । [ बहुषु च त्रि॰ ।

आल न॰ आलयन्ति भूषयन्ति अच् । हरितालै । अनर्थे

आलभन न॰ आ+लभ ल्युट् । स्पर्शे ।

आलम्ब पु॰ आ+लबि घञ् । अवलम्बे, आश्रये च ।

आलम्बन न॰ आ+लबि-ल्युट् । आश्रये अलङ्कारमते रसाश्रये विभावे च । [नालम्बिनि स्पृशति” स्पर्शे च ।

आलम्भ पु॰आ+लभ घञ् नुम् च । वधे ‘अश्वालम्भं गवालम्भं’

आलय पु आलीयतेऽस्मिन् अच् । गृहे । अव्ययी॰ लयपर्य्यन्ते । अव्य॰ । ‘पिवत भागवत रसमालयमि’ति भागव ।

आलयविज्ञान न॰ आलय विज्ञानम् । बौद्धमते लयपर्य्यन्तस्थायिनि अहङ्कारास्पदे विज्ञाने तन्मते हि सर्वज्ञानानां क्षणिकतयाऽनुभवजन्यसंस्कारस्य तस्मिन् ज्ञाने एव प्रकाशनात् पूर्व्वानुभूतस्य स्फूर्त्तिसम्भव ।

आलवाल न आ समन्तात् जलमवलाति आ+ला क । वृक्षमूले सेकार्थं मृदादिभिर्घटिते जलाधारे वेष्टे ।

आलस्य न॰ अलसस्य भाव ष्यञ् । सत्यपि सामर्थ्येऽवश्यकर्त्तव्येष्वनुत्साहरूपे ऽपदार्थे । अलस एव प्राज्ञादित्वात् स्वार्थे ष्यञ् । अलसत्वयुक्ते । [रज्ज्वा, बन्धनमात्रे च ।

आलान न॰ आलीयतेऽत्र आ+ली-ल्युट् । गजबन्धनस्तम्भे

आलाप पु आ+लप-घञ् । कथोपकथने, सम्भाषणे च ।

आलाबू स्त्री॰ आ+लवि ऊङ् नलोपश्च । तुम्बाम् ।

आलावर्त्त न॰ आ समन्तात् अलमत्यर्थं वर्त्तते चाल्यते आ+अल+वृत णिच् घञ् । वस्त्रनिर्म्मिते व्यजने ।

आलि(ली) स्त्री॰ आ+अल इन् । आगन्तुकजलवारणार्थं पल्वसेकजलधारणार्थं च कृतिकृते सेतौ, सख्यां समवयस्कायां, पङ्क्तौ आरामादिवर्त्मश्रेण्याम् सन्ततौ च । वा ङीप् आलीत्यप्यत्र । गुह्यान्त करणे आशये च त्रि॰ । भ्रमरे वृश्चिके च पु॰ ।

आलिङ्गन न आ+लिगि-ल्युट् । प्रीतिपूर्व्वकमन्योन्यदेहसंश्लेषणे, परिरम्भे च । [मृदङ्गे च ।

आलिङ्ग्य त्रि॰ आ+लिगि-ण्यत् । आलिङ्गनीये, यवाकृति॰

आलिञ्जर पु॰ अलिञ्जर एव अण् । जाला इति ख्याते बृहत्ये जलपात्रे मणिके ।

आलिम्पन न॰ आ+लिप-ल्युट् नुम् च । मङ्गलार्थे लेपने ।

आलीढ न॰ “नमिता पूर्व्वजङ्घा तु पश्चिमा प्रगुणा भवेत् । अन्तरमध्यकाय स्यादालीढस्य च लक्षणमित्युक्तलक्षणे आलीढं दक्षिणं पादमित्युक्तलक्षणे च धन्विनां पादविन्यासविशेषेणावस्थाने । आ+लिह क्त । भुक्ते, घते च त्रि॰। ‘शैलात्मजापीठमिवाधुरास्कर्णं इति रघु । भावे क्त लेहने न॰

आलीनक न॰ आरङ्गत प्रयत्नेन अग्निसम्बन्धमात्रेण लीयते द्रवीभवति आ+ली-क्त संज्ञायां कन् । (रां) इतिख्याते रङ्गे

आलु पु॰ आ+लु डु । स्वनामख्याते कन्दभेदे, भेलके भेषके पक्षिणि च । झारी इति ख्यातायां क्षुद्रघटिकायां स्त्री॰।

आलुक न॰ आलुरेव स्वार्थे कन् । मूलभेदे, काष्ठालुपत्रालु प्रभृतिकन्दमात्रे च । शेषे नागे पु । आ लू-क्विप् संज्ञायां कन् ङीष् । आलुकी रक्तालुभेदे स्त्री॰ ।

आलेख्य न॰ आ लिख आधारे ण्यत् । चित्रपटादौ ।

आलेख्यशेष त्रि॰ आलेख्य चित्रमेव शेषो यस्य ब॰ । मृते, तस्य चित्रे एव प्रतिकृतिरूपेण अवस्थानात् ।

आलोक पु आ+लुक घञ् । दर्शने उद्द्योते चन्द्रिकाप्रकाशादे-स्त्वादि स्तुतिवाक्ये । “आलोकमार्गं सहसा विरार्चिरिति रघु

आलोचन न॰ आ+लुच ल्युट् । कर्त्तव्यतया ऽवधारणे विवेचने च । “अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृशं मुग्धवस्तुजम् । ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया । बुद्ध्याऽवसीयते सापि

प्रत्यक्त्वेन सम्मते'ति सांख्योक्ते निर्द्धर्मके शुद्धवस्तुविषयके प्राथमिके ज्ञाने च ।

**आवपन** न॰ आउप्यते स्थाप्यतेऽत्र ल्युट् । धान्यस्थापनपात्रे (थल्या इति ख्याते । वप-णिच्-भावे ल्युट् । सर्व्वमुण्डने ।

**आवरक** न॰ आ+वृ-करणे अप् संज्ञायां कन् । अपवरके, आच्छादके वस्त्रादौ ।

**आवरण** न॰ आ+वृ-करणे ल्युट् । (ढाल) चर्म्ममयफलके । भावे ल्युट् । आच्छादने, वेदान्तमतेऽविद्यादिना ज्ञान-प्रकाशाच्छादने च । [भित्तौ च ।

**आवर्जित** त्रि॰ आ+वर्ज्ज-क्त । आहृते, क्षिप्ते, दत्ते, आन-

**आवर्त्त** पु॰ आ+वृत-घञ् । चक्राकारेण जलस्य स्वयं भ्रमणे, भ्रुवाख्ये रोमसंस्थानभेदे घोटकचिह्ने वामावर्त्तनामके मणौ आवर्त्तने, चिन्तने च । अच् । मेघाधिपभेदे माक्षिकधातौ च न॰

**आवर्त्तन** न॰ आ+वृत-णिच् ल्युट् । (आवटान) दुग्धादेरा-लोडने । आवर्त्तते परिवर्त्तते यस्मिन् काले । मध्याह्नोत्तरं यदा प्रश्चिमतः पूर्व्वस्यां दिशि सूर्य्यच्छाया प्रथमं गच्छति, तस्मिन् काले 'आवर्त्तनसमीपे वेति स्मृतिः । धातुद्रव्यस्य द्रवीकरणे च ।

**आवर्त्तनी** स्त्री॰ आवर्त्त्यते द्रवीकृत्य आलोड्यतेऽत्र आ+वृत णिच्-आधारे ल्युट् । ताम्रादिधातुद्रव्यस्य द्रवीकरणाधारे स्वल्पके (मुची) पात्रभेदे, मूषायाम् ।

**आवर्त्तित** त्रि॰ आ+वृत-णिच् क्त । अभ्यस्ते, गुणिते च ।

**आवर्ह** पु॰ आ+वृह-घञ् । उत्पाटने । [स्त्रियां ङीप् ।

**आवश्यक** त्रि॰ अवश्यं भव्यः मनोज्ञा॰ वुञ् । नियतकृत्ये

**आवसथ** पु॰ आवसत्यत्र वस-अथच् । वसतिस्थाने, विश्राम-स्थाने, व्रतभेदे च । [मपनीततृणे राशीकृते धान्ये च ।

**आवसित** त्रि॰ आ+अव+सो-क्त । पक्वधान्ये, मर्द्दनानन्तर

**आवहमान** त्रि॰ आ+वह-शानच् । क्रमागते ।

**आवाप** पु॰ आ+वप-घञ् । आलवाले, (थल्या) पात्रभेदे, प्रक्षेपे, भाण्डे, वलये, शत्रुचिन्तने परराष्ट्रचिन्तने, निम्नोन्नत भूमौ, प्रधानहोमे च । [प्राभरणे वलयादौ ।

**आवापक** पु॰ आ+वप-कर्म्मणि घञ् संज्ञाया कन् । प्रको-

**आवापन** न॰ आ+वप-णिच्-ण्वुल् । (तांत) सूत्रयन्त्रे ।

**आवास** पु॰ आ+वस-आधारे घञ् । वासस्थाने गृहादौ ।

**आवाहन** न॰ आ+वह-णिच् ल्युट् । सान्निध्याय देवानामाह्वाने

**आविक** न॰ अविना तल्लोम्ना निर्म्मितं ठक् । कम्बले । अवेर्मे-षस्य सम्बन्धिनि त्रि॰ । [इति ख्याते करमर्द्दवृक्षे च ।

**आविग्न** पु॰ आ+विज कर्त्तरि क्त । उद्विग्ने (पाणिआमला)

**आविद्ध** त्रि॰ आ+व्यध-क्त । विद्धे, वक्रे, पराहते, क्षिप्ते, अभिभूते, मूर्खे च ।

**आविध** पु॰ आविध्यतेऽनेन व्यध-घञर्थे क । काष्ठादिवेधनसाधने (भमर) (तुरपिन) सूच्याकाराग्रे अस्त्रे । [व्याप्ते च ।

**आविष्ट** त्रि॰ आ+विश-क्त । भूतादिग्रस्ते, आवेशयुक्ते, निविष्ट,

**आविस्** अव्य॰ आ+अव-इस् । प्रकाशे । एतच्छब्देन सह भूधातुः प्रकाशार्थे यथा आविर्भाव । कृञ्धातुः प्रकाश करणेऽर्थे यथा आविष्कारः ।

**आवीरचूर्ण** पु॰ आ समन्तात् विशेषेण ईर्य्यते क्षिप्यते आ+वि+ईर-घञ् कर्म्म॰ । आबीर इति ख्याते फल्गुनि 'आवीरचूर्णं रुचिरं गृह्यतां परमेश्वरे'ति पुराणम् ।

**आवुक** पु॰ आवति पालयति उण् संज्ञाया कन् । नाट्योक्तौ जनके

**आवृत्** स्त्री॰ आ+वृत-संपादादित्वात् क्विप् । परिपाट्यामनुक्रमे ।

**आवृत** त्रि॰ आ+वृ-क्त । वेष्टिते कृताच्छादने ।

**आवृत्त** त्रि॰ आ+वृत-क्त । निवृत्ते, 'आवृत्तानां गुरुकुलादि'ति स्मृतिः अभ्यस्ते, गुणिते च ।

**आवृत्ति** स्त्री॰ आ+वृत-क्तिन् । अभ्यासे, पुनः पुनर्गुणने 'चण्डयाः शतावृत्तिपाठादि'ति पुराणम् । [वृन्दारकवृक्षे ।

**आवेणी** स्त्री॰ आवेणोऽस्त्यस्या अर्श आद्यच् गौरा॰ ङीप् ।

**आवेश** पु॰ आ+विश-घञ् । अहङ्कारभेदे, संरम्भे, अभि-निवेशे, आतङ्के, अनुप्रवेशे, यथा भूतावेशः । ग्रहभये, भूतादिना रोगे च । [भूतावेशे रोगे, सूर्य्येन्दुपरिधौ च

**आवेशन** न॰ आ+विश-आधारे ल्युट् । शिल्पशालायाम्

**आवेशिक** त्रि॰ आवेशे गृहे भव आगतो वा ठञ् । अतिथौ असाधारणे स्वकीये बान्धवादौ च । [ (वेडा) ।

**आवेष्टक** पु॰ आवेष्टयति ण्वुल् । आवरणकारके प्राचीरादौ

**आशंसा** स्त्री॰ आ+शंस-अ । अप्राप्तस्य प्राप्तीच्छायाम्, इष्टार्थाशंसने च । [क्त । कथने न॰ ।

**आशंसित** त्रि॰ आ+शंसि-क्त । वाञ्छिते, कथिते च । भावे

**आशंसु** त्रि॰ आ+शन्स-उ । इच्छावति, इष्टार्थलाभेच्छौ, कथयितरि च ।

**आशङ्का** स्त्री॰ आ+शकि-अ । त्रासे, सङ्कोचे, ईषद्वितर्के च

**आशय** पु॰ आ+शी-अच् । अभिप्राये, आधारे, विभवे, पनसवृक्षे वैद्यकोक्ते अजीर्णे स्थाने च । आ फलविपाकात् चित्तभूमौ शेते इति कर्त्तरि अच् कर्म्मजन्ये वासनारूपे संस्कारे, धर्म्माधर्म्मरूपे अदृष्टे च । आधारे अच् । आशयवति चित्ते । भावे अच् । शयने स्थाने च ।

**आशर** पु॰ आशृणाति आ+शॄ-अच् । अग्नौ, राक्षसे च ।

आशा स्त्री० आ समन्तात् अश्नुते आ+अश्-अच् । दिशि, अप्राप्तार्थविषयायाम् दीर्घाकाङ्क्षायाम् अनधिगतविषयायां तृष्णायां च । [त । तृष्णासम्बन्धे त्रिगा यत्ने च ।

आशाबन्ध पु आशां दिशं बध्नाति अच् । मर्कटजाले, बन्ध-घञ्

आशास्य त्रि० आ+शास-ण्यत् । आशीःसाध्ये आशंसनीये च "आशास्यमन्यत् पुनरुक्तभूतमि"ति रघुः ।

आशित त्रि० आ+क्र्यादि० अश-क्त । भुक्ते अशनेन तृप्ते च ।

आशितङ्गवीन अशितङ्गवीनमत्र सर्व्वम् । दीर्घादिरिति बहव

आशितम्भव पु० अशितम्भवमत्र सर्व्वम् । दीर्घादिरिति बहव

आशिस् स्त्री आ+शास-क्विप् इत्वम् । हितप्रार्थने अभीष्टवस्तुप्रार्थने, सर्पतालुस्थदन्ते, सर्पदंष्ट्रायामाशीरपि पृषो० ।

आशीर्व्वाद पु० आशिषो वाद वद-घञ् । मङ्गलप्रार्थने आशीर्वचने च ।

आशीविष पु० आशिषि आस्ये वा विषोऽस्य पृषो० । सर्पे ।

आशु अव्य० अश-उण् । शीघ्रे । वर्षाभवे षष्टिकान्ते धान्ये, पाटले व्रीहौ च पु न० । शीघ्रे त्रि० । क्रियाविशेषणत्वे न

आशुग पु० आशु+गम-ड । वायौ, वाणे, सूर्य्ये च । शीघ्रगामिनि त्रि०

आशुपत्री स्त्री० आशु पत्रं यस्याः । शल्लकीलतायाम् ।

आशुशुक्षणि पु० अ+शुष सनु+अनि । वह्नौ, वायौ च ।

आशौच न अशौचमेव स्वार्थेऽण् । अशौचशब्दार्थे वैदिककर्म्मानर्हावस्थायाम् ।

आश्चर्य्य न० आ ईषत् चर्य्यतेऽभिनीयते आ+चर ण्यत् सुट् च । अपूर्व्वे अद्भुते चित्रे, विस्मये च । तद्वति त्रि०

आश्मन पु० आ+अश-मनन् । सूर्य्यसारथौ अरुणे । [रघु

आश्यान त्रि आ+श्यै-क्त । ईषद्घनीभूते "पयसामाश्यानकर्द्दमानि"ति

आश्रम पु० न आ+श्रम आधारे घञ् अर्द्धर्चा० । ब्रह्मचर्य्यादिषु शास्त्रोक्तेषु धर्म्मभेदेषु, मुनीनां वासस्थाने मठे वने च कलौ ॥ ब्रह्मचर्य्यवानप्रस्थौ न स्तः गृहस्थभिक्षुकाश्रमावेव "गृहस्थो भिक्षुकश्चैव आश्रमौ द्वौ कलौ युगे" इति स्मरणात् सर्व्वलोकाश्रयत्वेन विश्रामस्थाने परमेश्वरे च ।

आश्रमधर्म्म पु आश्रमेषु विहितो धर्म्मः । ब्रह्मचर्य्यादीनां शास्त्रविहिते धर्म्मे ।

आश्रय पु आ+श्रि अच् । सामीप्ये, आधारे, गृहे इच्छा संश्रितिषु षट्सु गुणेषु मध्ये प्रबलशत्रोराश्रयणरूपे गुणे च

आश्रयाश पु० आश्रयमाधारं काष्ठमश्नाति अश-अण् । वह्नौ ।

आश्रव पु० आ+श्रु-अप् । अङ्गीकारे, क्लेशे च । आशृणोति वाक्यमुपचारात् । वर्त्तिषु निर्देशितु वा वाक्ये वचनस्थिते

आश्रित त्रि० आ+श्रि क्त । आश्रयमाप्ते शरणागते आधेये च

आश्रुत त्रि० आ+श्रु क्त । अङ्गीकृते, आकर्णिते च ।

आश्लेष पु आ ईषदेकदेशेन श्लेष सम्बन्ध आ+श्लिष-घञ् । एकदेशसम्बन्धे । [ऽण् । रथादौ त्रि० ।

आश्व न अश्वानां समूह अण् । अश्वसमूहे । अश्वैरुह्यते

आश्वत्थ न अश्वत्थस्य फलमित्यणि तस्य न लुक् । अश्वत्थफले ।

आश्वयुज पु आश्वयुजी अश्विनीनक्षत्रयुक्ता पौर्णमासी यस्मिन् मासेऽण् । शुक्लप्रतिपदादिके दर्शान्ते चान्द्रे आश्विने मासे

आश्वयुजी स्त्री० अश्वयुजा अश्विनीनक्षत्रेण युक्ता पौर्णमासी 'नक्षत्रेण युक्तः काल' इत्यण् । आश्विनमासीयपौर्णमास्याम्

आश्वास पु० आ+श्वस-घञ् । निर्वृतौ आश्रयदाने भीतस्य भयनिवारणार्थे सान्त्वने च । [चान्द्रे मासि ।

आश्विन पु० आश्विनी पूर्णिमा यस्मिन् मासे । स्वनामख्याते

आश्विनी स्त्री अश्विना अश्वाकारधरा नक्षत्रेण युक्ता पूर्णिमा नक्षत्राण् । आश्विनमासिकपौर्णमास्याम् ।

आश्विनेय पु द्वि० अश्विन्याः अश्वाकारधरायाः सूर्य्यपत्न्याः संज्ञाया अपत्ये ढक् । स्वर्वैद्ययोः । [गम्ये स्थाने ।

आश्वीन त्रि अश्वेनैकाहेनातिक्रम्यते खञ् । अश्वस्य एकाह

आषाढ पु आषाढी पूर्णिमाऽस्मिन् मासेऽण् । स्वनामख्याते मासि

आषाढी स्त्री० आषाढया नक्षत्रेण युक्ता पूर्णिमा 'नक्षत्रेण युक्तः काल' इत्यण् । आषाढमासीयपौर्णमास्याम् ।

आस उपवेशने अदादि० आत्म अक० सेट् । आस्ते आसिष्ट

आस् अव्य आस क्विप् । स्मरणे, अपाकरणे कोपे, सन्तापे पीडायां सगर्वतर्जने च ।

आसक्त त्रि० आ+सन्ज-क्त । आसङ्गे युक्ते विषयान्तरनिष्ठस्य तत्परे च । नित्ये सतत च न० । तद्वति त्रि० ।

आसङ्ग न० आ+सन्ज-घञ् । अभिनिवेशे प्राप्तस्योपस्थितस्यापि भावतो रक्षणाभिलाषे, भोगाभिलाषे, कार्त्स्न्याभिमाने च । तद्युक्ते त्रि । सौराष्ट्रमृदि स्त्री ।

आसत्ति स्त्री० आ+सद क्तिन् । प्राप्तौ, लाभे सन्निधौ । न्यायादिमते यत्पदार्थेन यत्पदार्थस्यान्वयापेक्षा तयोरव्यवधानेन पदेनोपस्थापने च ।

आसन न० आस-ल्युट् । उपवेशने । आधारे ल्युट् पीठादौ हस्तिस्कन्धदेशे सन्ध्यादिषु षट्सु नृपगुणेषु शत्रुदुर्गादिष्ववरुध्य स्थितौ यात्रानिवृत्तौ अष्टाङ्गयोगमध्ये तृतीयेऽङ्गे पद्मासनादौ । अस्ति स्नु स्वार्थेऽण् । जीवकवृक्षे पु । ङीष् टाप् । स्थितौ ।

आसन्न त्रि० आ+सद क्त । निकटस्थे, उपस्थित च ।

आसव पु० आ+सु-अप । मद्यमात्रे 'गौडादिसुराभेदे

रपके राघवो भवेदि" लुप्तप्रकारे मद्ये च। [तालवृक्षे

**आसवद्रु** पु॰ आसवस्य (ताडी) मद्यस्य कारणं द्रुः शाक॰त॰।

**आसादन** न॰ आ+सद-णिच्-ल्युट्। सन्निधापने, स्थापने च

**आसादित** त्रि॰ आ+सद्-णिच्-क्त। लब्धे, सन्निधापिते, आयोजिते च।

**आसार** पु॰ आ+सृ घञ्। धारासम्पाते वेगवृष्टौ, प्रसरणे, सैन्यानां सर्वतो व्याप्तौ च। करणे घञ्। सुहृद्बले।

**आसीनप्रचलायित** न॰ आसीनेन उपविष्टेनैव प्रचलवत् आचरितम् प्रचल-क्यच् क्त। उपविश्य निद्रावशेन प्रचलन रूपे (ढोला) दोलने। [प्रघाटने (चोयान) इति ख्याते पाके

**आसुति** स्त्री॰ आ+सु-क्तिन्। सोमादिनिष्पीडने अभिषवे, मद्यादि-

**आसुतीवल** पु॰ आसुतिरस्त्यस्ति वलच् दीर्घः। शौण्डिके। सोमाभिषवशालिनि याज्ञिके त्रि॰।

**आसुर** पु॰ 'आसुरो द्रविणादाना'दित्युक्तलक्षणे धनदानेन कन्याविवाहे। असुरस्येदम् अण्। असुरसम्बन्धिनि त्रि॰। स्त्रियां ङीप् 'आसुरी रात्रिरन्यत्रे इति स्मृतिः।

**आसुरस्व** न॰ ६त॰। "अयज्वनान्तु यद्द्रव्यमासुरस्वं तदुच्यते" इति मनूक्ते अयाज्ञिकधने।

**आसेचन** त्रि॰ असेचन+स्वार्थेऽण्। असेचनार्थे अलम्प्रकारके यस्य दर्शनं तत्र। स्वार्थे कन् आसेचनकमप्यत्र।

**आसेध** पु॰ आ+सिध-घञ्। राजाज्ञयाऽन्यत्र गमनादेः प्रतिषेधरूपेऽवरोधे।

**आसेवा** स्त्री॰ आ+सेव-अ। अभिलाषपूर्वकं पौनःपुन्येन प्रवृत्तौ। [आधारे घञ्। रणे।

**आस्कन्दन** न॰ आ+स्कन्द-ल्युट्। शोषणे, आक्रमणे च।

**आस्कन्दित** न॰ आ+स्कन्द-स्वार्थे णिच्-क्त। अश्वगतिभेदे त्वरितगमने च। स्वार्थे कन्। आस्कन्दितकमप्यत्र।

**आस्तर** पु॰ आ+स्तृ-करणे अप्। हस्तिपृष्ठस्थकम्बले झुल इति ख्याते। ल्युट्। आस्तरणमप्यत्र न॰।

**आस्तिक** त्रि॰ अस्ति परलोक इति मतिर्यस्य ठक्। परलोकास्तित्ववादिनि "अस्तीत्युक्त्वा गतो यस्मादास्तिकस्तेन कथ्यते इति निरुक्तसंज्ञके जरत्कारुमुनिसुते। आस्तीकोऽप्यत्र।

**आस्तिक्य** न॰ आस्तिकस्य भावः कर्म वा। वैदिकधर्मे श्रद्धायाम्

**आस्तीकजननी** स्त्री॰ ६त॰। जरत्कारुमुनिपत्न्यां जरत्कारुनाम्न्यां वासुकिभगिन्यां मनसादेव्याम्।

**आस्था** स्त्री॰ आ+स्था-अङ्। आलम्बने, अपेक्षायां, श्रद्धायां, स्थितौ, यत्ने च। आधारे अङ्। प्रतिष्ठायां, स्थाने च।

**आस्थान** न॰ आ+स्था-आधारे ल्युट्। सभायां, विश्रामस्थाने च। स्त्रीत्वमपि तत्र ङीप्। आस्थानीत्यप्यत्रैवार्थे।

**आस्थित** त्रि॰ आ+स्था-क्त। आरूढे प्राप्ते, अङ्गीकृतवति च

**आस्पद** न॰ आ+पद-घ सुट् च। प्रतिष्ठायाम्, पदे, स्थाने, कृत्ये, प्रभुत्वे च। ["ऐरावतास्फालनकर्कशेनेति कुमारः

**आस्फालन** न॰ आ+स्फुर-णिच् ल्युट् स्फालादेशः। चालने

**आस्फोट** पु॰ आ+स्फुट-अच्। स्वय फलस्य स्फोटनात् अर्कवृक्षे (तालठोका) मल्लादेर्बाह्वादेर्हस्ततालेन शब्दकरणे च। (हापरमाली) वनमल्लायां स्त्री॰। ल्युट् आस्फोटनमप्यत्र न॰।

**आस्फोटक** पु॰ आस्फोटोऽस्त्यस्य इव। (आखरोट) शैलपीलौ

**आस्फोटनी** स्त्री॰ आस्फोट्यते विदार्यतेऽनया आ+स्फुट-णिच् करणे ल्युट् स्त्रीत्वात् ङीप्। (तुरपन) वेधनास्त्रे।

**आस्फोत** पु॰ आ+स्फुट-अच् पृषो॰ टस्य तत्वम्। अर्कवृक्षे कोविदारवृक्षे, भूपलाशवृक्षे च। स्वार्थे कन्। आस्फोतकोऽर्कवृक्षे

**आस्फोता** स्त्री॰ आ+स्फुट-अच् पृषो॰। अपराजितायां, वनमल्लाम् (हापरमाली) लताभेदे च।

**आस्य** न॰ अस्यते ग्रासोऽत्र+अस-आधारे ण्यत्। मुखे। तन्मध्ये च। आस्ये भवः यति यलोपः। मुखभवे त्रि॰।

**आस्यपत्र** न॰ आस्यमेव पत्रमस्य। पद्मे।

**आस्यलाङ्गल** पु॰ आस्यं लाङ्गलमिव भूविदारकं यस्य। शूकरे

**आस्यलोमन्** न॰ ६त॰। पुरुषमुखजाते लोम्नि (दाडि)।

**आस्या** स्त्री॰ आस-ण्यत् टाप्। स्थितौ, आसने च।

**आस्यासव** पु॰ आस्यस्यासवः प्रभवः ६त॰। लालायाम् (थुथु) (लाल) इति ख्यातायाम्। [अप्। निरन्तरास्रवणे।

**आस्रव** पु॰ आस्रवति मनोऽनेन करणे अप्। क्लेशे। भावे

**आस्वाद** पु॰ आ+स्वद-कर्मणि घञ्। रसे। भावे घञ्। रसानुभवे

**आह** अव्य॰ आ+हन-ड। आक्षेपे, नियोगे, दृढसम्भावने, उवाचेत्यर्थे 'अथाह वर्णी विदितो महेश्वर' इति कुमारः।

**आहत** त्रि॰ आ+हन-क्त। गुणिते, ताडिते, वन्ध्यासुतोऽभीलाटौ मृषार्थके वाक्ये च। ढक्कायाम् पु॰। पुरातने नूतने च वस्त्रे न॰।

**आहतलक्षण** पु॰ आहतमभ्यस्तं लक्षणं यस्य। गुणैः प्रसिद्धे

**आहर** पु॰ आ+हृ-अच्। उच्छ्वासे, अन्तःस्थितस्य वायोर्मुखेन बहिर्गतौ।

**आहव** न॰ आहूयन्तेऽरयोऽत्र आ+ह्वे-अप् संप्रसारणे गुणः। युद्धे। आहूयतेऽत्र आ+हु अप्। यज्ञे।

**आहवनीय** पु॰ आहवनमर्हति छ। गार्हपत्याग्नेरुद्धृत्य होमार्थं कृतसंस्कारे वह्नौ। आ+हु-अनीयर्। हवनीये।

**आहार** पु॰ आ+हृ-घञ्। आहरणे, द्रव्यमात्रस्य गलाधःक-

गौरा० ङीप् इङ्गुदीत्यप्यत्रैव । [लि०।

इच्छक पु० इष-शक । टावालेबु इति ख्याते वृक्षे । इच्छायुक्ते

इच्छा स्त्री० इष-श । इदं मे भूयादिति मनोधर्मभेदे मुखे तत्साधने च चित्तवृत्तौ न्यायमते,"निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते । इच्छा तु तदुपाये स्यादिष्टोपाय-त्वधीर्यदि"इत्युक्तदिशा सुखादिज्ञानेन तत्साधनत्वज्ञानेन च जायमाने इदं मे भूयादित्येवं रूपे आत्मधर्मे अभिलाषे च ।

इच्छावती स्त्री० इच्छाऽस्त्यस्याः मतुप् मस्य वत्वम् । मैथुने-च्छावत्यां कामुकायाम् इच्छामात्रयुक्तायाञ्च ।

इच्छु त्रि० इष-उ नि० । इच्छायुक्ते, इच्छाशीले च । [वृक्षे ।

इज्जल पु० इण्-क्विप् तुक् इत् जलं यस्य । (हिजल) निचुल

इज्य पु० इज्यतेऽसौ यज-क्यप् । सुरगुरौ, नारायणे च । पूज्ये त्रि०

इज्या स्त्री० यज-भावे-क्यप् स्त्रीत्वात् टाप् । यज्ञे, यजेर्दानार्थत्वात् दाने, सङ्गमे च । कर्मणि क्यप् । प्रतिमायां, गवि, कुट्टन्याञ्च । [अच् । पुन पुनर्यज्ञकारके ।

इज्याशील त्रि० इज्यां यज्ञं शीलयति पुनः पुनराचरति शील-

इट गतौ भ्वादि० पर० सक० सेट् । एटति ऐटीत् ।

इड़ा स्त्री० इल-अच् वा लस्य डत्वम् । गवि, वाचि, भूमौ, स्वर्गे, वामपार्श्वस्थायाम् वक्रायां नाड्याञ्च ।

इण् गतौ णित् अदादि० पर० सक० अनिट् । एति ऐषीत् ।

इतर त्रि० इना कामेन तरं तॄ-अ । नीचे भिन्ने पामरे च ।

इतरेतर त्रि० इतर+द्विलस् । अन्योन्यार्थे परस्परार्थे ।

इतरेतरयोग पु० इतरेतरस्य परस्परस्य योगः एकपदार्था-न्वयित्वेन संबन्धः । चार्थविशेषे, व्याकरणे यत्र द्वन्द्वसमासे समस्यमानानां पदानां प्राधान्यं तदर्थे ।

इतरेद्युस् अव्य० इतर-एद्युस् । अन्यस्मिन्नहनीत्यर्थे ।

इतस् अव्य० इदम्+तसिल् । अस्मिन्नित्यर्थे ।

इतस्तत अव्य० इतश्च ततश्च । अस्मिन् तस्मिन्नित्यर्थे ।

इति अव्य० इण-क्तिच् । हेतौ, प्रकाशने निदर्शने, प्रकारे, अनुकर्षे, समाप्तौ, प्रकरणे, स्वरूपे, सान्निध्ये, विवक्षा-नियमे, मते, प्रत्यक्षे, अवधारणे, व्यवस्थायाम्, परामर्शे, माने, इत्थमर्थे, प्रकर्षे, उपक्रमे च ।

इतिकर्त्तव्यता स्त्री० इति इदं कर्त्तव्यं तस्य भावः । इदं कृत्वा इदं कुर्य्यादित्येवं परिपाटीरूपे कर्म्मानुष्ठानक्रमे ।

इतिह अव्य० इति एवं ह किल द्व० । उपदेशपरम्परायाम् यथाऽत्र वटे यक्ष इत्युपदेशपरम्परैव न तु केनापि दृष्टा तथा कथितम् ।

इतिहास पु० इतिह पारम्पर्य्योपदेश आस्तेऽस्मिन् इतिह+आस घञ् । "धर्म्मार्थकाममोक्षाणामुपदेशसमन्वितम् । पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते" इत्युक्तलक्षणे पुरा-वृत्तप्रकाशके भारतादिग्रन्थे ।

इत्थम् अव्य० इदम्+थमु । इदम्प्रकारे अनेन प्रकारेणेत्यर्थे ।

इत्थम्भूत त्रि० इदम्प्रकारं भूतः प्राप्तः भू-क्त । एवं प्रकारप्राप्ते ।

इत्वर त्रि० इण् क्वरप् । पथिके, नीचे, क्रूरकर्म्मणि च । षण्ढे पु० । अभिसारिकायां स्त्री० ।

इद ऐश्वर्य्ये इदित् भ्वादि० पर० अक० सेट् । इन्दति ऐन्दीत्

इदम् त्रि० इदि कमि नलोपश्च । पुरोवर्त्तिनि द्रव्ये चराचरे

इदानीम् अव्य० इदम्+दानीम् इश् च । सम्प्रत्यर्थे ।

इद्ध न० इन्ध-भावे क्त । आतपे, दीप्तौ, आश्चर्य्ये च । कर्त्तरि-क्त । दृढे, निर्म्मले च त्रि० ।

इध्म न० इन्ध-मक् । समिधि, अग्निसन्दीपने काष्ठे च ।

इन पु० इण-नक् । सूर्य्ये, प्रभौ, नृपविशेषे च ।

इन्दिरा स्त्री० इदि इर । लक्ष्म्याम् । [नीलोत्पले ।

इन्दि(न्दी)वर न० इन्दिरिन्दी वा लक्ष्मीस्तस्या वरमभीष्टम् ।

इन्दीवरिणी स्त्री० इन्दीवर+समूहे देशे वार्थे इनि । उत्पल-समुदाये, तद्युक्तलतायाञ्च । [शतमूल्याम् ।

इन्दीवरी स्त्री० इन्दी लक्ष्मी इवाति इव-अच् गौरा० ङीप् ।

इन्दु पु० उनत्ति चन्द्रिकया भुवं क्लिन्नां करोति उन्द-उ आदेरिच्च । चन्द्रे, तद्देवताके मृगशिरोनक्षत्रे तत्सम-संख्ये एकसंख्यायुक्ते, कर्पूरे च ।

इन्दुकलिका स्त्री० इन्दुरिव शुभ्रा कलिका यस्याः । केतक्याम्

इन्दुकान्तः पु० इन्दुः कान्तोऽभीष्टोऽस्य । चन्द्रकान्ते मणौ ।

इन्दुजनक पु० ६त० । समुद्रे । [नद्याम् ।

इन्दुजा स्त्री० इन्दोर्जायते जन ड । सोमोद्भवायां नर्म्मदायां

इन्दुपुत्र पु० ६त० । बुधग्रहे । [जाड़लीवृक्षे ।

इन्दुपुष्पिका स्त्री० इन्दुरिव शुभ्रं पुष्पमस्याः । (विषलाङ्गला)

इन्दुभृत् पु० इन्दुं बिभर्त्ति भृ-क्विप् । शिवे । [राजपत्न्याञ्च ।

इन्दुमती स्त्री० इन्दु+प्राशस्त्ये मतुप् । पूर्णिमायाम्, अज-

इन्दुरत्न न० ६त० । मुक्तायां तस्याश्चन्द्रदेवताकत्वात् ।

इन्दुलेखा स्त्री० इन्दोर्लेखेव । चन्द्रकलायाम् । तद्दर्शनाच्च सोमलतायाम्, तद्वत्आप्यायनकारित्वादमृतायां, तद्वद्-ङ्गुणत्वात्यमानिकायाञ्च ।

इन्दुलौहक न० ६त० । इन्दुदेवताके लौहके रौप्ये धातौ ।

इन्दुवल्ली स्त्री० ६त० । चन्द्रनामिकायां सोमलतायाम् ।

इन्द्र पु० इदि+र । देवाधिपे, परमेश्वरे, इन्द्रदैवते ज्येष्ठानक्षत्रे,

इन्द्रियार्थ पु० इन्द्रियाणामर्थो विषयः। शब्दस्पर्शरूपरसगन्धात्मके इन्द्रियवेद्ये विषये।
इन्द्रियायतन न० ६त०। शरीरे।
इन्द्रियार्थसन्निकर्ष पु० इन्द्रियाणामर्थैः स्वस्वविषयैः सह सन्निकर्षः संबन्धः। प्रत्यक्षज्ञानहेतौ इन्द्रियविषयसंयोगे।
इन्ध दीप्तौ रुधादि०आत्म०अक० सेट्। इन्धे, ऐन्धिष्ट।
इन्धन न० इध्यतेऽग्निरनेन इन्ध-करणे ल्युट्। काष्ठे।
इभ पु० इण्-भ किच्च। हस्तिनि, तत्तुल्यसंख्यके अष्टसंख्यान्विते च
इभकणा स्त्री० इभोपपदा कणा शाक०त०। गजपिप्पल्याम्।
इभदन्ता स्त्री० इभस्य दन्त इव शुभ्रं पुष्पमस्याः। शुभ्रपुष्पवत्यां नागदन्त्याम्, विषौषधौ च।
इभनिमीलिका स्त्री० इभं हस्तिनमपि निमीलयति सेवनात् निद्रापयति। भङ्गायाम्।
इभपालक पु० इभं पालयति। (माहुत) हस्तिपके।
इभया स्त्री० इभैर्यायते भक्ष्यतया प्राप्यते या कर्म्मणि क। स्वर्णक्षीरीवृक्षे। [ष्टाप् च।
इभ्य त्रि० इभं हस्तिनमर्हति यत्। प्रचुरधनवति आढ्ये,
इभ्या स्त्री० इभायहिता इभ+यत्। शल्लकीवृक्षे। [ङीप्
इयत् त्रि० इदं परिमाणमस्य इदम्-वतुप्। एतावदर्थे स्त्रियां
इयत्ता स्त्री० इयतो भावः तल्। सीमायां,परिमाणे, संख्यायाम्
इरम्मद पु० इरया जलेन माद्यति वर्द्धते इरा-मद-खश् ह्रस्व मुम् च। वज्राग्नौ वाडवानले च।
इरा स्त्री० इण्-रक् इं कामं राति रा-क वा। भूमौ,वाचि, सुरायाम्, जले, अन्ने च। [जलचरे, भूचरे च त्रि०
इराचर न० इरासु चरति चर-ट। (शिल) करकायाम्।
इराज पु० इरया सुरया वीयतेऽसौ अज-घञ्। कन्दर्पे।
इरावती स्त्री० इरां भूमिम् अवति अव-शतृ ङीप्। वटपत्त्रीक्षे, सा हि पाषाणभेदनेनापि भूमिमागच्छति।
इरिण न० ऋ-इन किच्च। ऊषरभूमौ,निरालम्बे, शून्ये च
इरेश पु० ६त०। वरुणे, वागीशे, भूमिपतौ, विष्णौ च।
इर्वारु स्त्री० उर्व-आरु पृषो०। (काकुड) कर्कट्याम्। आलु। इर्वालुरप्यत्र। [फुटी (स्वयं भिन्नपक्वकर्कट्याम्)।
इर्व्वारु(लु)शुक्तिका स्त्री० इर्वारु शुक्तिकेव स्वयं स्फोटनात्
इल गमने अक०गतौ क्षेपे च सक० तुदा० पर०सेट्। इलति
इल क्षेपणे चुरा० उभ०सक० सेट्। एलयति ते ऐलिलत् त।
इलविला स्त्री० पुलस्त्यमुनिपत्न्याम् कुबेरजनन्याम्। एतत्सम्बन्धेनैव कुबेरस्य ऐलविल इति नाम।
इला स्त्री०इल-क। भूमौ, गवि, वाचि, जम्बुद्वीपस्थनववर्षमध्ये वर्षभेदे तत्सीमा चैलावृतमित्याख्ये दृश्यते। वैवस्वतमनुकन्यायां बुधपत्न्याम्। सा हि विष्णुवरात् पुंस्त्वमासाद्य पुनः शङ्करशापात् स्त्रीत्वं गता बुधस्तामुपयम्य पुरूरवसमुत्पादयामासेति पुराणे प्रसिद्धम्।
इलावृत न०इला पृथिवी वृता येन। नववर्षात्मकजम्बूद्वीपस्य वर्षभेदे तद्वर्णनं "पश्चान्माल्यवतः प्राच्यां गन्धमादनशैलतः। इलावृतं नीलगिरेर्याम्यतो निषधादुदक्" इत्युक्ता चतुःसीमावच्छिन्ने देशेऽस्मिन्।
इली स्त्री० इल-इन् ङीप्। (छातुडरी) करवालिकायाम्।
इलीश ० इलीव जलानिकैव शोभते शुभ-क। जलवासिनां मध्ये शोभमानत्वात् मत्स्यभेदे।
इल्वल पु० इल-वलच् नि० गुणाभावः। अत्यन्तदुष्टे मत्स्यभेदे, वातापिनामके दैत्यभेदे च मृगशिरोदेशस्थपञ्चताराशिरस्थासु तारासु स्त्री० बहु०।
इव व्याप्तौ इदित् भ्वा०पर०सेट् सक०। इन्वति ऐन्वीत्।
इव अव्य० इण्-क्व। सादृश्ये, उत्प्रेक्षायाम्, ईषदर्थे, वाक्यालङ्कारे च
इष गतौ दर्शने च दिवा०पर०सक०सेट्। इष्यति, ऐषीत्।
इष वाञ्छायाम् तुदा०पर०सक०सेट्। इच्छति, ऐषीत् एषिता-यदा एषिता इष्टा। इष्टः। [एषितः एषिता।
इष पौनःपुन्ये क्र्यादि० पर० अक० सेट्। इष्णाति ऐषीत्।
इष पु० इष-गतौ क्विप् यात्रा जिगीषूणां आश्विनमासि अर्कः आद्यच्। आश्विने मासि।
इषि(षी)का स्त्री० ईष गत्यादिषु (ड) ईकन् कित् ह्रस्वश्च। गजनेत्रगोलके। दीर्घनलस्य काण्डे, मुञ्जामध्यवर्त्तितृणे च
इषु पु० स्त्री० ईष्यते हिंस्यतेऽनेन ईष-उ कित् ह्रस्वश्च। बाणे तत्तुल्यसंख्ये पञ्चसंख्यान्विते च।
इषुधि पु० स्त्री० इषवो धीयन्तेऽत्र धा-कि। बाणाधारे तूणे।
इषुपुङ्खा स्त्री० इषोः पुङ्खमिव पुष्पमस्याः। शरपुङ्खावृक्षे।
इष्ट त्रि० इष-क्त। पूजिते, अभिलषिते, प्रिये च। यज-क्त। यज्ञादौ कर्म्मणि, एरण्डवृक्षे च पु०। संस्कारे न०। "एकाग्निकर्म्म हवनं त्रेतायां यच्च हूयते। अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते। अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनम्। आतिथ्यं वैश्वदेवश्च माडरिष्टमित्युक्तलक्षणे धर्म्मकार्ये च।
इष्टका स्त्री० इष-तकन्। (इट्) मृदादिनिर्म्मिते मृत्खण्डभेदे
इष्टकापथ न० इष्टकाभिनिर्म्मितः पन्थाः। इष्टकानिर्म्मिते पथि। इष्टं कापथमपानं यस्य। अधोवायुहेतौ उशीरे।
इष्टगन्ध त्रि० इष्टो गन्धो यस्य। सुगन्धिद्रव्ये। बालुकायां न०

**ईह** चेष्टने भ्वादि० आत्म० अक० सेट् । ईहते ऐहिष्ट ।
**ईहा** स्त्री० ईह-अ । चेष्टायाम्, उद्यमे, वाञ्छायाञ्च ।
**ईहामृग** पु० ईहां मृगयते अण् । वृके (नेकडावाघ) अल-
ङ्कारशास्त्रलक्षिते नाटकभेदे च साहि०दर्पण० ।

## उ

**उ** शब्दे भ्वादि० आत्म० अक० अनिट् । अवते औष्ट ।
**उ** अव्य० उ-क्विप् न तुक् । सम्बोधने कोपवचने, अनुकम्पायां,
नियोगे, विस्मये च । अत-ड ।शिवे पु० । [भावे क्त । कथने न०
**उक्त** त्रि० वच-क्त । कथिते । एकाक्षरपादके छन्दोभेदे स्त्री० ।
**उक्ति** स्त्री० वच-क्तिन् । कथने ।
**उक्थ** न० वच थक् । नवविधात्मकसामावयवभेदे, महा-
व्रताख्ये यज्ञे प्रधानभूते शस्त्ररूपे सामवेदस्याङ्गे, प्राणे च ।
यज्ञभेदे पु० । एकाक्षरपादे छन्दोभेदे स्त्री० । उक्तेत्यन्ये
**उक्थशास्** पु० उक्थानि सामावयवशस्त्राणि शंसति-शंस्
क्विप् नि० । यजमाने । [उक्षाम्बभूव आस चकार ।
**उक्ष** सेचने भ्वादि० पर० सक० सेट् । उक्षति औक्षीत् ।
**उक्षतर** पु० तनुरुक्षा उक्षन्+तनुत्वे-र्थे ष्टरच् । तृतीयवय:-
प्राप्ते वृषे । जातौ स्त्रीत्वे ङीप् । [त्रि० ।
**उक्षन्** पु० उक्ष-कनिन् । वृषे, ऋषभौषधौ च । सेचनकर्त्तरि
**उख** गतौ भ्वादि० पर० सक० सेट् । ओखति औखीत् उवोख
**उखि** गतौ इदित् भ्वादि०पर०सक० सेट् । उङ्खति औङ्खीत् ।
**उखा** स्त्री० उख-क । पाकपात्रे पिठरादौ (हांडि) ।
**उख्य** त्रि० उखायां स्थाल्यां संस्कृतं यत् । स्थालीपक्वे मांसादौ
**उग्र** पु० उच-रक् गश्चान्तादेश । महादेवे, वायुमूर्त्तिधारिणि
शिवे क्षत्रियात् जातायां शूद्रायामुत्पन्ने संकीर्णवर्णे,
(आगुरी) उग्रगुणत्वात् शोभाञ्जनवृक्षे, केरलदेशे, क्रूरसंज्ञके
"उग्रः पूर्व्वमघान्तका इतिज्योतिषोक्ते नक्षत्रसमुदाये च
वत्सनाभाख्ये विषे न० । उत्कटे त्रि० । वचायां, यवान्यां,
धन्याके उग्रजाते स्त्रियां च स्त्री० टाप् ।
**उग्रकाण्ड** पु० उग्रं काण्डोऽस्य । (करेला) कारविल्ले वृक्षभेदे
**उग्रगन्ध** पु० उग्रः गन्धः पुष्पेऽस्य । चम्पके, कट्फले, अर्ज-
कवृक्षे लशुने च । हिङ्गुनि न० । उत्कटगन्धाढ्ये त्रि० ।
यवान्याम् वचायाम्, अजमोदायाञ्च स्त्री० टाप् ।
**उग्रचण्डा** स्त्री० उग्रा चण्डा कोपना कर्म्म० । देवीभेदे ।
**उग्रतारा** स्त्री० उग्रात् दुःखात् भयात् तारयति भक्तान् । तारा-
रूपायां देव्याम् । [शत्रुभिरसह्यधनुष्के त्रि०
**उग्रधन्वन्** पु० उग्रं धनुर्यस्य ब० अनङ् समा० । शिवे शुक्रे च ।
**उग्रनासिक** त्रि० उग्रा दीर्घा नासिका यस्य । दीर्घनासिके ।
**उग्रश्रवस्** पु० उग्रम् उत्कटं श्रुतिधरं श्रव: कर्णो यस्य ।
रोमहर्षणसुते पौराणिके सूते । [जनकत्वेन ख्याते नृपे
**उग्रसेन** पु० उग्रा सेनाऽस्य । यदुवंश्ये आहुकनामके कंसस्य
**उच** समवाये दि० पर० सक० सेट् । उच्यति औचत्-औचीत्
**उचित** त्रि० उच-क्त वच-कितच् वा । न्यस्ते, परिचिते, युक्ते ।
**उच्च** त्रि० उत्क्षिप्य वाऽऽचीयते उद्+चि-ड । उन्नते ।
**उच्चटा** स्त्री० उद्+चट-अच् । लशुनभेदे, गुञ्जायां, चूडाला-
याम्, भूम्यामलक्यां, नागरमुस्तायां, दम्भे (चेंचुया) चञ्चायाञ्च
**उच्चण्ड** त्रि० उद्+चडि-अच् । अत्यन्तोग्रे, त्वरायुक्तेऽविलम्बिते
**उच्चतरु** पु० कर्म्म० । नारिकेले । [तथा तत्र उच्चैर्हस्ततालदानात्
**उच्चताल** न० उच्चः तालः हस्ततालः यत्र । पानगोष्ठ्यां मत्त-
**उच्चन्द्र** पु० उच्छिष्टः स्वल्पावशिष्टश्चन्द्रो यत्र प्रादि० वा तु० व०
शिष्टशब्दलोपः । रात्रिशेषे । [सुवृत्याचिते नीवारे
**उच्चय** पु० उत्थाप्य चयः चि-अच् । पुष्पादेरुत्तोलने । हस्ताभ्या-
**उच्चाटन** न० उद्+चट्-णिच्-ल्युट् । उत्पाटने स्वस्थानात्
विश्लेषणे 'उच्चाटनं स्वदेशादेर्भ्रंशनं परिकीर्त्तितम्' इति
तन्त्रोक्ते षट्कर्म्मान्तर्गतेऽभिचारभेदे च । [विष्ठायाम् ।
**उच्चार** पु० उद्+चर-णिच् घञ् । उच्चारणे । कर्म्मणि घञ् ।
**उच्चावच** त्रि० उदक् उत्कृष्टञ्च अवाक् अपकृष्टञ्च मयू० नि० ।
उत्कृष्टापकृष्टात्मके नानाभेदे । [वस्त्रखण्डे ।
**उच्चूल** पु० उन्नता चूडा यस्य डस्य लत्वम् । ध्वजोर्द्धस्थिते
**उच्चैःश्रवस्** पु० उच्चैरुन्नत श्रवोऽस्य । उन्नतकर्णे समुद्रजाते
श्वेतवर्णे इन्द्रस्य वाहनभूते अश्वभेदे । उच्चैरुच्चशब्दं
शृणोति श्रु-असुन् । बधिरे ।
**उच्चैर्घुष्ट** न० उच्चैस्+घुष-क्त । (ढेंडरा) उच्चघोषणायाम् ।
**उच्चैस्** अव्य० उद्+चि डैसि । अत्यर्थे, महति, उन्नते च ।
अकथि उच्चकैरप्यत्र । [शास्त्रविरुद्धेऽधर्मकृत्ये च ।
**उच्छास्त्र** त्रि० उद्गतं शास्त्रात् ग० स० । अतिक्रान्तशास्त्रे
**उच्छिख** त्रि० उद्गता शिखा यस्य प्रा० ब० । उन्नताग्रे ।
**उच्छित्ति** स्त्री० उद्+छिद-क्तिन् । उच्छेदे, नाशने च ।
**उच्छिलीन्ध्र** उच्छ्रितं शिलीन्ध्रम् । छत्राके । विकसितशिली
न्ध्रयुक्ते त्रि० । 'उच्छिलीन्ध्रामवन्ध्यामिति' मेघदूतम् ।
**उच्छिष्ट** त्रि० उद्+शिष-क्त । भुक्तावशिष्टे, त्यक्ते च ।
**उच्छिष्टभोजन** पु० पञ्चयज्ञावशिष्टं देवनैवेद्यं वा भोजन-
मस्य । पञ्चयज्ञावशिष्टस्य देवनैवेद्यस्य च भोक्तरि ।
**उच्छिष्टमोदन** न० उच्छिष्टं भ्रमरोच्छिष्टं मधु तेन मोदते
वर्द्धते मुद ल्यु । (मोम) सिक्थके ।

**उत्खातकेलि** पु० 'उत्खातकेलि' शृङ्गाद्यैर्वप्रक्रीडा निगद्यते' इत्युक्तलक्षणे वृषगजादेः शृङ्गादिना मृत्तिकाखनने

**उत्त** त्रि० उन्द्-क्त । क्लिन्ने आर्द्रवस्तुनि ।

**उत्तंस** पु० उद्+तसि-अच् । कर्णाभरणे, शिरोभूषणे च ।

**उत्तप्त** त्रि० उद्+तप्-क्त । संतप्ते, स्नाते च । शुष्कमांसे न०

**उत्तम** त्रि० उद्+तमप् । उत्कृष्टे । प्रियव्रतनृपस्य पुत्रे पु० ।

**उत्तमर्ण** पु० उत्तममृणमस्य । ऋणप्रयोजके (महाजन) ।

**उत्तमसाहस** न० "साशीतिपणसाहस्रोदण्ड उत्तमसाहसमित्युक्ते दण्डभेदे ।

**उत्तमाङ्ग** न० कर्म० । मस्तके । [तो निवृत्तौ ।

**उत्तम्भ** पु० उद्+स्तम्भ-घञ् । प्रवृत्तिबाधिकायामनिष्टसाधन-

**उत्तर** न० उत्तीर्य्यते प्रकृताभियोगोऽनेन उद्+तॄ-अप् । राजसमीपे वादिकृताभियोगशोधने उत्तराख्ये व्यवहाराङ्गे "प्रश्नश्चोद्यधिया पृच्छा तस्य भञ्जनमुत्तर मित्युक्ते दोषभञ्जनवाक्ये च । विराटराजपुत्रे पु० । उदीच्यां दिशि विराटराजसुतायाञ्च स्त्री० । अनन्तरे देशे, काले च पु० । अनन्तरदिदेशकालवृत्तौ त्रि० ।

**उत्तरकाल** पु० कर्म० । भविष्यत्काले आयतौ ।

**उत्तरकुरु** पु० नववर्षात्मकस्य जम्बुद्वीपस्य वर्षभेदे ।

**उत्तरकोशला** स्त्री० अयोध्यानाम्न्यां नगर्य्याम् ।

**उत्तरङ्ग** न० उत्तरमङ्गम् कर्म० शकन्ध्वा० । द्वारोर्द्ध्वस्थदारुणि । उद्गततरङ्गे त्रि० ।

**उत्तरच्छद** पु० कर्म० । शय्याया उपर्य्यास्तरणवस्त्रे ।

**उत्तरपक्ष** पु० वादे पूर्व्वपक्षस्य मर्द्दनक्षमे सिद्धान्तपक्षे ।

**उत्तरफाल्गुनी** स्त्री० फल्गु मनोहरं नयति । नी-डी कर्म० । अश्विन्यादिनक्षत्रेषु द्वादशे नक्षत्रे दक्षिणोत्तरस्थिततारकाद्वयात्मके ।

**उत्तरभाद्रपद्** स्त्री० भद्राय हित भाद्रः पद् पादश्चतुर्थांशो यस्याः ब० ततः कर्म० । अश्विन्यादिनक्षत्रेषु षड्विंशे नक्षत्रे पदशब्देन समासः टाप् । उत्तरभाद्रपदाप्यत्र ।

**उत्तरमीमांसा** स्त्री० कर्म० । ब्रह्ममीमांसायाम् वेदान्तदर्शने ।

**उत्तरा** अव्य० उत्तर+आच् । उत्तरस्यां दिशि काले देशे वेत्यर्थे

**उत्तरा** 'प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते उत्तरास्ता' इत्युक्तासु सपिण्डीकरणोत्तरासु श्राद्धक्रियासु । [त्तरस्मादुत्तरस्मिन्नित्यर्थे ।

**उत्तरात्** अव्य० उत्तर+आति । दिग्देशकालविषये उत्तरस्मा-

**उत्तराधिकारिन्** त्रि० उत्तरमधिकरोति अधि+कृ-णिनि । पूर्व्वस्वामिस्वत्वोपरमे तत्सम्बन्धाधीनस्वत्ववति जाताधिकारे पुत्रपौत्रादौ दायादे । (अंशी) इति ख्याते । [त्तरे ।

**उत्तराभास** पु० उत्तरमिवाभासते आ+भास-अच् । दुष्टो-

**उत्तरायण** न० 'माघादि मासयुग्मैस्तु ऋतवः षट् क्रमादिति । उत्तरायणमाद्यैस्तैरित्युक्तलक्षणे ऋतुत्रयात्मके माघादिके मासषट्के काले । उत्तरा दिशि सूर्य्यस्य अयनं यस्मिन् काले इति व्युत्पत्तेः । तदारम्भकाले मकरसंक्रमणदिनेऽपि ।

**उत्तराषाढ़ा** स्त्री० अश्विन्यादिनक्षत्रेषु एकविंशतितमे नक्षत्रे

**उत्तरासङ्ग** पु० उत्तरे ऊर्द्ध्वभागे आसज्यते आ+षन्ज-घञ् । उत्तरीयवस्त्रे । [स्मिन् उत्तरस्मात् उत्तरमित्यर्थे

**उत्तराहि** अव्य० उत्तर+आहि । दिग्देशकालविषये उत्त-

**उत्तरीय** न० उत्तरस्मिन् देहभागे भवः छ । सर्व्वदेहधार्य्ये वस्त्रे

**उत्तरेण** अव्य० आसन्नदिग्देशकालानां प्रथमान्तसप्तम्यन्तानां मर्थेषु 'तत्रागारं धनपतिगृहानुत्तरेणास्मदीय'मिति मेघदूतम्

**उत्तरेद्युस्** अव्य० उत्तरस्मिन् दिने उत्तर+एद्युस् । आगामिदिवसे इत्यर्थे ।

**उत्तान** त्रि० उद्गतस्तानो विस्तारोयस्मात् । विस्तारशून्ये, (चित) भूमिलग्नपृष्ठतया ऊर्द्ध्वभावेन स्थिते, ऊर्द्ध्वमुखे च ।

**उत्तानक** पु० उद्-तन-ण्वुल् । उच्चटायाम् ।

**उत्तानपत्रक** पु० उत्तानमूर्द्ध्वमुखं पत्रमस्य । रक्ते एरण्डवृक्षे

**उत्तानपाद** पु० स्वयम्भुवो मनोः पुत्रे ध्रुवपितरि नृपभेदे ।

**उत्तानशय** त्रि० उत्तान ऊर्द्ध्वमुख सन्नेव शेते शी-अच् । स्तनपशिशौ तस्य च तदानीमवतानेसामर्थ्याभावात् ।

**उत्ताप** पु० उद्+तप-घञ् । उष्णतायाम्, सन्तापे च ।

**उत्तार** त्रि० उद्गता तारा यस्य । उद्गततारकनेत्रयुक्ते उत्कृष्टतारे । अत्यन्तोच्चे । [विकरणे, त्वरिते, उन्नते च । प्लवङ्गमे पु०

**उत्ताल** त्रि० चुरा० तल-प्रतिष्ठायाम् अच् । प्रतिष्ठिते महति ।

**उत्तीर्ण** त्रि० उद्+तॄ-क्त । मुक्ते, पारगते च ।

**उत्तुङ्ग** त्रि० उत्कटं तुङ्गम् । अत्युन्नते । [(खद्) भद्रधाये

**उत्तुष** पु० उद्गतः कण्डनाभावेऽपि तुषोऽस्मात् । लाजाख्ये

**उत्तेजना** स्त्री० उद्+तिज-णिच्-युच् । प्रेरणायाम्, व्यग्रताकरणे, उद्दीपने, तीक्ष्णीकरणे च ।

**उत्तेजित** त्रि० उद्+तिज-णिच्-क्त । प्रेरिते, उद्दीपिते च । भावे क्त । उत्तेजनायाम् "उत्तेजित मध्यवेगं योजनं प्लुधवल्गायेत्युक्तौ अश्वगतिभेदे न० ।

**उत्तेरित** न० उद्-ॠ भावे इतच् गुणे एत्वम् नि० । अश्वगतिभेदे । अर्श आद्यचि । "उत्तेरितोऽतिवेगाद्यो न शृणोति न पश्यतो' इत्युक्तागतियुक्तेऽश्वे पु० ।

**उत्तोलन** न० उद्+तुल-उन्माने ल्युट् । ऊर्द्ध्वं नीत्वा तोलने,

**उत्तोलित** त्रि० उद्+चु० तुल-क्त । उत्क्षिप्ते, ऊर्द्ध्वतोलने च

**उत्त्यक्त** त्रि० उद्+त्यज क्त । ऊर्द्ध्वक्षिप्ते, परित्यक्ते च ।

**उत्थान** न० उद्+स्था ल्युट् । ऊर्द्ध्वपतने, उद्यमे, ऊर्द्ध्वभवनचेष्टायाम् उद्भवे च । करणे ल्युट् । उत्साहे, पौरुषे, हर्षे च । अधिकरणे ल्युट् । रणे, राज्यचिन्तनरूपे तन्त्रे, प्राङ्गणे, चैत्ये च ।

**उत्थानैकादशी** स्त्री उत्थानस्य हरे निद्रात प्रबोधनस्य काल एकादशी । चान्द्रकार्त्तिकशुक्लैकादश्याम् ।

**उत्थित** त्रि० उद्+स्था-क्त । वृद्धियुक्ते, उद्यते उत्पन्ने च ।

**उत्थिताङ्गुलि** पु उत्थिता उद्यता अङ्गुलयो यत्र । (चापड़) विस्तृताङ्गुलिके करतले चपेटे ।

**उत्पत** पु० उत्पतति ऊर्द्ध्वं गच्छति उद्+पत-अच् । पक्षिणि

**उत्पतन** न० उद्+पत ल्युट् । ऊर्द्ध्वगमने उत्पत्तौ च ।

**उत्पत्ति** स्त्री० उद्+पद क्तिन् । जन्मनि, जीवस्य देहसम्बन्धे, साङ्ख्यादिमते आविर्भावे च । उद्+पत क्तिन् । ऊर्द्ध्वगमने ।

**उत्पत्तिविधि** पु मीमांसकमते कर्म्मस्वरूपावेदके विधौ यथा अग्निहोत्रं जुहोतीत्यादि ।

**उत्पल** न उद्+पल अच् । नीलपद्मे कुमुदादौ, कुष्ठौषधौ च ।

**उत्पलगन्धिक** न० उत्पलस्य गन्धइव गन्धोऽस्य इत् समा० समासान्त कप् । गोशीर्षाख्ये चन्दने ।

**उत्पलपत्र** न उत्पलस्य पत्रमिव । तिलकभेदे, स्त्रीणां स्तनादौ नखक्षते च । इत । इन्दीवरस्य दले ।

**उत्पलिनी** स्त्री उत्पलानि सन्त्यस्मिन् देशे तेषां समूहो वा इनि । उत्पलयुक्तलतायां, कुवलयसमुदाये च ।

**उत्पवन** न० उद्+पू करणे ल्युट् । कुशकण्डिकायां पवित्रेण जलादेरुत्क्षेपणे ।

**उत्पश्य** त्रि० उद्+दृश श । ऊर्द्ध्वदृष्टिकारके, उन्मुखे च ।

**उत्पाटन** न उद्+पट णिच्+ल्युट् । उन्मूलने ।

**उत्पात** पु उद्+पत-घञ् । उपद्रवे । उद्+पत-घञ् । अकस्मादागते प्राणिनां शुभाशुभसूचके दैवनिमित्ते भूकम्पादौ ।

**उत्पादक** पु ऊर्द्ध्वस्थिता पादा अस्य कप् । अष्टपदे शरभाख्ये गजारातौ पशुभेदे तस्य पृष्ठस्थचतुश्चरणत्वादूर्द्ध्वपादत्वम् । उत्+पद-णिच्-ण्वुल् । पितरि पु० । उत्पादनकर्त्तरि त्रि० । [(टिटिर) टिट्टिभपक्षिणि ।

**उत्पादशय** पु० उत्पाद ऊर्द्ध्वक्षिप्तपाद सन् शेते शी अच् ।

**उत्पिञ्जल** त्रि० उद्+पिजि कलच् । अत्यर्थाकुले ।

**उत्प्रास** पु० उद्+प्र+अस-दीप्त्यादिषु घञ् । उपहासे ।

**उत्प्रेक्षा** स्त्री उद्+प्र+ईक्ष-अ । उद्भावने अर्थालङ्कारभेदे च सा० द० । [रूपे उन्मज्जने (भासा) ।

**उत्प्लवन** न० उद्+प्लु-ल्युट् । उल्लम्फने, जलादेरुपरिस्थिति

**उत्प्लवा** स्त्री उत् जलादेरुपरि प्लवते प्लु-अच् । नौकायाम् ।

**उत्फुल्ल** त्रि उत्+फल क्त । दलानामन्योन्यविश्लेषेण विकाशिते कुसुमादौ ।

**उत्स** पु० उन्द् स । पर्व्वतादित स्रवज्जलस्य पातस्थाने, स्रव- [ज्जले च ।

**उत्सङ्ग** पु० उद्+सन्ज-घञ् । क्रोडे । सङ्गादुत्क्रान्ते त्रि० ।

**उत्सर्ग** पु० उद्+सृज-घञ् । व्याकरणोक्ते सामान्यविधाने, न्याय्ये त्यागे, दाने यागभेदे अपानवायोर्व्यापारे च ।

**उत्सर्ज्जन** न० उद्+सृज ल्युट् । दाने त्यागे च । [च

**उत्सर्पण** न० उद्+सृप-ल्युट् । उत्क्रम्य पुरतोगतौ, उल्लङ्घने

**उत्सव** पु उद्+सू अप् । आनन्दजनकव्यापारे विवाहादौ ।

**उत्सवसङ्केत** पु उत्सव आनन्दजनक सङ्केत स्त्रीपुंसयो रत्यर्थमनुरागादाह्वानम् यस्य । अस्तेय स्त्रीत्येव दाम्पत्यनियमशून्ये स्त्रीपुंसयोरनुरागमात्रहेतुकसैरविहारशालिनि पार्व्वतीये जातिभेदे । 'शरैरुत्सवसङ्केतान्जित' रघु ।

**उत्सादन** उद्+सद-णिच् ल्युट् । उत्सारणे, उद्वर्त्तने च ।

**उत्सारक** पु० उद्+सृ-णिच्-ण्वुल् । द्वारपाले तेन हि प्रभुद्वारतो जना दूरीक्रियन्ते । [स्थानान्तरकरणे च ।

**उत्सारण** न० उद्-सृ-णिच् ल्युट् । दूरीकरणे, चालने,

**उत्साह** पु० उद्+सह-घञ् । उद्यमे, अध्यवसाये, कर्त्तव्यकार्येषु स्थिरतरे प्रयत्ने "उत्साहो मन्त्रमूल स्यादिति नीतिविदा मतम् । प्रभुशक्ति मन्त्रमूला तस्मादुत्साहवान् भवेदि"त्युक्ते राज्ञां गुणविशेषे सामर्थ्ये, सूत्रे, वीररसस्य भावे च साहि० दर्प० ।

**उत्साहवर्द्धन** पु० उत्साह वर्द्धयति वृध णिच्-ल्यु । वीररसे । वृध ल्युट् इत । उत्साहस्य वृद्धौ न० ।

**उत्साहशक्ति** स्त्री० उत्साहएव शक्ति र्बलम् । राज्ञां विक्रमहेतौ बले । [सेकयुक्ते, उपप्लुत, त्यक्तमर्य्यादे च ।

**उत्सिक्त** त्रि० उद्+सिच क्त । गर्वित उद्धत वर्द्धित, उपरि-

**उत्सुक** त्रि उद्+सू-क्विप् कनि सुक् । इष्टार्थस्याप्राप्त्या उद्युक्ते अभीष्टेऽगमिष्यतोत्कण्ठान्विते च ।

**उत्सृष्ट** त्रि० उद्+सृज-क्त । त्यक्ते, कृतोत्सर्गे, दत्ते च ।

**उत्सेक** पु० उद्+सिच् घञ् । गर्व्वे उद्रेके उद्धत्य बहि सेचने च

**उत्सेध** पु० उद्+सिध-घञ् । देहे, उन्नतौ 'पयोधरोत्सेधनिपातेति' कुमार ।

**उद्** अव्य० उ-क्विप् तुक् पृषो दत्वम् । प्रकाशे, विभागे, प्राकट्ये, ऊर्द्ध्वे, उत्कर्षे, प्राबल्ये, अन्वास्ते, शक्तौ, प्राधान्ये,

बन्धने, भावे, मोक्षे, 'तस्य उदिति नामेति' श्रुतेर्ब्रह्मणि च

**उदक** न० उन्द-ण्वुल् नलोपश्च नि०। जले हरणो० कलोपे उदमन्थव। [करञ्जभेदे।

**उदकीर्य्य** पु० उदेन जलेन कीर्य्यते कॄ-क्यप्। (डहरकरमचा)

**उदकुम्भ** पु० उदकेन पूर्णः कुम्भः शाक० त०। जलपूर्णकुम्भे शान्त्युदकुम्भहस्ता इति भट्टिः। [ऋतुमत्याम्।

**उदक्या** स्त्री० उदकं शुद्धार्थं स्नानजलं चतुर्थदिने अर्हति यत्।

**उदगद्रि** उदगुत्तरस्यामद्रिः। हिमाचले।

**उदगयन** न० उदक् उदीच्यामयनम्। उत्तरायणे माघादिके मासषट्के 'उदगयने अपूर्य्यमाणे' पक्षे इति स्मृतिः।

**उदग्र** त्रि० उद्गतमग्रं यस्य। उच्चे। [घृतादिपात्रे (कुपो)।

**उदङ्क** पु० उदच्यते उद्ध्रियतेऽत्र उद्+अच-घञ्। चर्म्ममये

**उदच्** अव्य० उदच् दिग्देशकाले वाच्ये प्रथमापञ्चमीसप्तम्यर्थे अस्ताति तस्य लुक्। प्रथमान्ताद्यर्थवृत्तौ उत्तरदिगादौ। उद्+अन्च क्विन्। उत्तरे देशे काले च पु०। स्वादौ उदङ् उदञ्चौ। दिशि स्त्री० ङीप् उदीची।

**उदज** पु० उद्+अज-अच्। पशुप्रेरणे।

**उदञ्चन** न० उद्+अन्च-करणे ल्युट्। पिधानार्थे पात्रे (ढाकना)। भावे ल्युट्। ऊर्द्ध्वक्षेपणे।

**उदञ्चित** त्रि० उद्+अन्च-क्त। ऊर्द्ध्वक्षिप्ते, पूजिते च।

**उदधि** पु० उदकानि धीयन्तेऽस्मिन् धाञ्-आधारे कि उदादेश। समुद्रे, घटे च।

**उदधिमल** पु० उदधेर्मल इव। समुद्रफेने।

**उदन्त** पु० उद्गतोऽन्तोनिर्णयो यस्मात्। वार्त्तायाम् वृत्तान्ते कुशलादिकथने, साधौ च। [त्र। पिपासायाम्।

**उदन्या** स्त्री० अतिगार्द्ध्येन उदकमिच्छति क्यच् उदनुभाव

**उदन्वत्** पु० उदकानि सन्त्यस्य मतुप् उदन् भावः मस्य व। समुद्रे

**उदप** आघाते (सौत्र०) पर०सक० सेट्। उदपति। औदपीत्।

**उदपान** पु० न०, उदकं पीयतेऽस्मिन् पा-ल्युट् उदादेशः। कूपसमीपस्थे खाते क्षुद्रजलाधारे।

**उदमान** पु० 'कुल्या स्यादष्टभिर्द्रोणैर्द्रोणपादेन चाढकः। अस्यार्द्धशतिकोभाग उदमान उदाहृत इत्युक्ते मानभेदे।

**उदय** पु० उद्+इ-अच्। ज्योतिषोक्ते राशेरुदयरूपे लग्ने। आधारे अच्। उदयाचले पूर्व्वपर्व्वते 'यैर्यत्र दृश्यते भास्वान् स तेषामुदयः स्मृत' इत्युक्तलक्षणे दृष्टियोग्यस्थाने च भावे अच्। प्रथमदर्शनयोग्यभवन, वृद्धौ, समुन्नतौ उत्पत्तौ च।

**उदयन** पु० उद्+इ-ल्यु। वत्सराजे, अगस्त्ये मुनौ, कुसुमाञ्जलिप्रभृतिग्रन्थकारके उदयनाचार्य्ये च। भावे ल्युट्। उदये

**उदर** न० उद्+दृ-अप्। जठरे नाभिस्तनयोर्मध्यभागे। आधारे अप्। युद्धे। उद्+इ-अप् उदो दलोपश्च। उदररोगे।

**उदरग्रन्थि** पु० उदरे ग्रन्थिरिव। गुल्मनामकरोगे। [बन्धनत्रे

**उदरत्राण** न० उदरं त्रायतेऽनेन ल्युट्। (कमरबन्ध) उदर-

**उदरपिशाच** त्रि० उदरे तत्पूर्त्तौ पिशाच इव। सर्व्वान्नभक्षके।

**उदरम्भरि** त्रि० उदरं बिभर्त्ति भृ-खि मुम् च। पञ्चयज्ञाद्यकरणेनात्मोदरमात्रपोषके।

**उदररोग** पु० ६त०। उदरी इति ख्याते रोगे। [ख्याते रोगे

**उदरामय** पु० उदरस्यामं रोग याति नयति या-क। स्वनाम

**उदरावर्त्त** पु० उदरे आवर्त्त इव गभीरत्वात्। नाभौ।

**उदरिणी** स्त्री० उदरे गर्भोऽस्त्यस्याः इनि। गर्भवत्याम्।

**उदरिन्** त्रि० उदरं वृहत् अस्यास्ति महत्त्वे मत्वर्थीय इनि। तुन्दिले (भुडियुक्त)। इल। उदरिलोऽप्यत्र।

**उदर्क** पु० उद्+अर्क-अर्च+वा घञ्। उत्तरकाले भाविफलके शुभाशुभकर्म्मणि च।

**उदर्चिस्** पु० उद् ऊर्द्ध्वमर्च्चिः रश्मिरस्य। वह्निखे वह्नौ। उत्कृष्टकान्तित्वात् कन्दर्पे ऊर्द्ध्वरेतस्त्वात् शिवे च। प्रा०स०। उद्गतायां शिखायां न०।

**उदवसित** न० उद्+अव+सि-क्त। गृहे। [जलेन मथिते तक्रे

**उदश्वित्** न० उदेन जलेन श्वयति वर्द्धते श्वि-क्विप्। अर्द्ध-

**उदात्त** पु० उद्+आ+दा-क्त। वर्णोत्पत्तिस्थानेषु उच्चैःस्वरेण उच्चारिते। दृश्ये, महति, दातरि च त्रि०। अलङ्कारभेदे न०

**उदान** पु० उद्+अन-घञ्। ऊर्द्ध्वगमनोत्क्रमणवृत्तियुक्ते कण्ठस्थे वायौ, उदरावर्त्ते नाभौ, सर्पभेदे च।

**उदार** त्रि० उद्+आ+रा-क। दातरि, महति, सरले, दक्षिणे, गम्भीरे, असाधारणे च।

**उदावर्त्त** पु० उद्+आ+वृत-घञ्। 'यत्नोर्द्ध्वं जायते वायोरावेग स चिकित्सकैः। उदावर्त्त इति प्रोक्तो व्याधि'-रित्युक्तलक्षणे वातव्याधौ।

**उदासीन** त्रि० उद्+आस-शानच्। मध्यस्थे, विवदमानयोरेकतरपक्षानवलम्बके, जिगीषोर्न्टपतेः शत्रुमित्रभूमितो व्यवहिते परतरे, उपेक्षके च।

**उदास्थित** त्रि० उद्+आ+स्था-क्त। चरे, द्वारपाले, अध्यक्षे, प्रव्रज्यारूपस्थानच्युते नष्टसन्न्यासे परिव्राजके च।

**उदाहरण** न० उद्+आ+हृ-भावे ल्युट्। एकदेशप्रसिद्ध्या सकलसिद्ध्यर्थं कथने। कर्म्मणि ल्युट्। इष्टसिद्ध्यर्थमुच्यमाने दृष्टान्ते, प्रकृतसिद्ध्यर्थं निदर्शनरूपे उपोद्घाते च। [ते च।

**उदाहृत** त्रि० उद्+आ+हृ-क्त। दृष्टान्ततयोपन्यस्ते, कथि-

दर्शनात् अनुभूतहस्तिपकसंस्कारस्य उद्बोधरूपे उद्दीपने कृते हस्तिपकः स्मर्यते इति प्रबुद्धे जागरिते, उद्बुद्धां च जगद्धात्रीमिति स्मृतिः । [ननाय संस्कारोद्दीपने च

**उद्बोध** पु० उद्+बुध-घञ् । किञ्चिद्बोधे न्यायादिमते स्मृतिज-

**उद्भट** पु० उद्+भट-अच् । कच्छपे,तण्डुलादेः प्रस्फोटनहेतौ शूर्पे,श्रेष्ठाशये महाशये,प्रवरे,ग्रन्थादक्लिर्भूते श्लोकादौ च

**उद्भव** पु० उद्+भू-अप् । जन्मनि उत्पत्तौ । अपादाने अप् । परमेश्वरे । [चु० भू० ल्युट् । चिन्तने ।

**उद्भावन** न० उद्+भू-णिच्-ल्युट् । कल्पने,उत्पादने च । उद्-

**उद्भिज्ज** त्रि० उद्+भिनत्ति क्विप् उद्भित् तथा सन् जायते जन-ड । भूमिमुद्भिद्य जाते तरुगुल्मादौ 'उद्भिज्जाः स्थावरा सर्वे बीजकाण्डप्ररोहिणः' इति मनुः ।

**उद्भिद्** त्रि० भूमिमुद्भिनत्ति उद्+भिद्-क्विप् । वृक्षतृणगुल्मवल्लीलतारूपे पञ्चविधे स्थावरभेदे । यागविशेषे पु० ।

**उद्भिद** त्रि० उद्+भिद-क । वृक्षादौ पञ्चविधे स्थावरे ।

**उद्भूत** त्रि० उद्+भू-क्त । उत्पन्ने । न्यायमते प्रत्यक्षयोग्ये च

**उद्भेद** पु०उद्भिद्यतेऽङ्गमत्र घञ् । रोमाञ्चे । भावे घञ् । स्फुरणे

**उद्भ्रम** पु० उद्भ्राम्यत्यनेन उद्+भ्रम-घञ् अवृद्धिः । उद्वेगे ।

**उद्यत** त्रि०उद्+यम-क्त । उद्युक्ते,ऊर्द्धीकृते,प्रवृत्ते,ग्रन्थाध्याये च ।

**उद्यम** पु० उद्+यम-घञ् अवृद्धिः । उद्योगे ।

**उद्यान** न० उद्+या-आधारे ल्युट् । आक्रीडे वने । भावे-ल्युट् । निःसरणे । कर्मणि ल्युट् । प्रयोजने ।

**उद्योग** पु० उद्+युज-घञ् । यत्ने, चेष्टायाम्,उद्यमे च ।

**उद्र** पु० उनत्ति क्लिद्यति उन्द्-रक् । जलबिडाले । (उद्विराल)

**उद्रथ** पु०उद्गतोरथो यस्मात् । रथकीले । उद्गतरथतुल्यः पक्षो यस्य ( ताम्रचूडविहगे ।

**उद्रिक्त** त्रि० उद्+रिच-क्त । अतिशयिते,अधिके,स्फुटे च ।

**उद्रेक** पु० उद्+रिच-घञ् । वृद्धौ, अतिशये, उपक्रमे च ।

**उद्वर्त** पु० उद्+वृत-घञ् । अतिशयिते, अधिके च ।

**उद्वर्त्तन** न० उद्वर्त्यतेऽनेन उद्-वृत्-णिच्-ल्युट् । शरीरनिर्मलीकरणद्रव्यादौ । भावे ल्युट् । विलेपने,घर्षणे च । उद्+वृत-ल्युट् । उत्पतने ।

**उद्वह** पु० उद्वहति ऊर्द्धं नयति पितॄन् वह अच् । पुत्रे 'प्रणमामि रघूद्वह'मिति तन्त्रम् । ऊर्द्धेन वहति अच् । प्रवहवायोरूर्द्धस्थिते वायुभेदे ,

**उद्वान्त** पु० उद्गतं वान्तमन्तर्जलमस्मात् प्रा० ब० । निर्मदे गजे । उद्+वम-क्त । उद्गीर्णे उद्गते च त्रि० ।

**उद्वासन** न० उद्+चु० वस-ल्युट् । मारणे उद्+वस+णिच्-ल्युट् । विसर्जने । [रूपे परिणये ।

**उद्वाह** पु० उद्+वह-घञ् । विवाहे भार्यात्वसंपादकव्यापार-

**उद्वाहु** त्रि०उद्गतोबाहुर्यस्य । ऊर्द्धमुत्तोलितबाहौ 'उद्वाहुरिव वामन' इति रघुः । [तया व्याकुलचित्ते, क्षुभिते च

**उद्विग्न** त्रि० उद्+विज-क्त । उद्वेगयुक्ते, दुःखपरिहाराक्षम

**उद्वृत्त** त्रि० उद्गतो वृत्तात् गति० । दुर्वृत्ते । उद्+वृत-क्त । उत्क्षिप्ते, भुक्तोज्झिते च ।

**उद्वेग** पु० उद्+विज-घञ् । व्याकुलचित्ततायाम् विरहजन्ये दुःखोद्गमे, भये च । गुवाकफले न० । उद्गतोवेगो वेगात् । निश्चले, स्तिमिते । शीघ्रगामिनि च ।

**उद्वेल** त्रि० उद्गतो वेलाम् । अतिक्रान्तमर्य्यादे ।

**उद्वेष्टन** न० उद्+वेष्ट-ल्युट् । हस्तपादयोर्बन्धने, उपश्लेषे च उद्गतं वेष्टनात् त्रि० । उन्मुक्तबन्धने त्रि० ।

**उध्रस** उञ्छे क्र्या० पर० अक० सेट् । उध्रस्नाति औध्रासीत्

**उध्रस** उत्क्षेपे उञ्छे च(कणशआदाने) चु०सक०सेट् ।उध्रासयति ते

**उन्द** क्लेदे रुधा०पर०अक०सेट् । उनत्ति । औन्दीत् । [त्वार्थे

**उन्दरु** पु०उन्द्-उरु । मूषिके उर-उरु । उन्दुरः उन्दुरुश्चा-

**उन्दुरकर्णी** स्त्री० उन्दुरस्य कर्णइव पर्णमस्याः । आखुकर्ण्याम्

**उन्दूर** पु० उन्द्-ऊरु । मूषिके ।

**उन्न** त्रि० उन्द्-क्त क्लिन्ने आर्द्रे (भिजे) दयापरे च ।

**उन्नत** त्रि० उद्+नम-क्त । उच्चे, महति च ।

**उन्नतानत** त्रि० उन्नतं च तदानतञ्च । उन्नतेचस्थानादौ ।

**उन्नति** स्त्री० उद् नम-क्तिन् । वृद्धौ,उदये, गरुडभार्य्यायाञ्च ।

**उन्नद्ध** त्रि० उद्+नह-क्त । उद्धते, उत्कटे च ।

**उन्नमित** त्रि० उद्+नम-णिच्-क्त । उत्तोलिते,ऊर्द्धीकृते च ।

**उन्न(न्ना)य** पु०उद्+नी-अच् घञ् वा । कूपादितो जलादेरुत्तोलने

**उन्नयन** न० उद्+नी-ल्युट् । वितर्के, ऊर्द्ध प्रापणे च ।

**उन्नस** त्रि० उन्नता नासा यस्य नसादेशः । उन्नतनासिके ।

**उन्निद्र** त्रि० उद्गता निद्रा मुद्रा यस्य । विकसिते ।

**उन्मज्जक** पु० उद्+मज्ज-ण्वुल् । 'कण्ठदघ्ने जले स्थित्वा तपः कुर्वन् प्रवर्त्तते । उन्मज्जकः स विज्ञेयस्तापसोलोकपूजित' इत्युक्तलक्षणे तापसे । जलादेरुपरि उत्प्लावके त्रि० ।

**उन्मत्त** पु० उद+मद-करणे क्त । धूस्तूरे मुचकुन्दवृक्षे च । कर्त्तरि क्त । उन्मादवति, यक्षाविष्टवति च त्रि० ।

**उन्माद** त्रि० उद्गतो मदोहर्षोऽस्य । उन्मादयुक्ते । करणे अच् मादके द्रव्ये । [मनस्के च ।

**उन्मनस्** त्रि० उद्भ्रान्तं मनोऽस्य । उत्कण्ठायुक्ते, अन्य-

**उन्माथ** पु० उद्+मन्थ-घञ् । वधे ।

उपजीविन् त्रि० उप+जीव-णिनि। आश्रिते।
उपजीव्य त्रि० उप+जीव-ण्यत्। आश्रये।
उपज्ञा स्त्री० उप+ज्ञा-कर्मणि अङ्। विनोपदेशेन स्वयमुद्भाव्ये प्रथमं ज्ञायमाने। भावे अङ्। आद्ये ज्ञाने। [उपायने
उपढौकन न० उप+ढौक-कर्मणि ल्युट्। (भेट) उपहारे
उपत्यका स्त्री० उप+त्यकन्। पर्वतस्यासन्नायां भूमौ।
उपदंश पु० उप+दन्श-घञ्। मद्यपानरोचके (चाटनी) भक्ष्य द्रव्ये,भक्ष्यद्रव्योपकरणमात्रे, उपस्थरोगभेदे च।
उपदर्शक पु०उप+दृश-णिच्-ण्वुल्। द्वारपाले। दर्शयितरि त्रि०
उपदा स्त्री० उप+दा-अङ्। उत्कोचे,उपढौकने च।
उपदेश पु० उप+दिश-घञ्। मन्त्रादिकथने, अनुशासने, हितकथने,प्रवर्त्तकवाक्ये च।
उपद्रव पु० उप+द्रु-अप्। उत्पाते शुभाशुभसूचके भूकम्पादौ, रोगजन्येऽन्यस्मिन् पिपासादाहादौ विकारे च।
उपद्रुत त्रि० उप+द्रु-क्त। व्याकुले, प्राप्तोपद्रवे च।
उपधा स्त्री० उप-धा-अङ्। 'धर्मार्थकाममोक्षेषु प्रत्येकं परिशोधने। उपेत्य धीयते यस्मादुपधा तेन कीर्त्तिते'त्युक्ते धर्मार्थाद्युपन्यासेन मन्त्रिणां परीक्षणे, व्याकरणोक्ते, अन्त्यवर्णात् पूर्ववर्णे च।
उपधातु पु० उपमितः धातुभिः। स्वर्णादिप्रधानधातुसदृशेषु 'सप्तोपधातवः स्वर्णमाक्षिकं तारमाक्षिकम्। तुत्थं कांस्यञ्च रीतिश्च सिन्दूरञ्च शिलाजतु' इत्युक्तेषु सप्तसु द्रव्येषु, शरीरस्थेषु रसादिजन्येषु स्तनदुग्धादिषु च।
उपधान न०उपधीयते शिरोऽत्र। (वालिश) शिरोधाने,प्रणये, मतभेदे, विषे च। [प्रिनरूपे कपटे,रथचक्रे च।
उपधि पु०उप+धा-कि। अन्यथा स्थितस्य वस्तुनोऽन्यथा प्रका-
उपधूपित त्रि० उप+धूप–क्त। आसन्नमरणे,सन्तापयुते च।
उपधृति स्त्री० उप+धृ-क्तिन्। किरणे।
उप(पा)ध्मानीय पु०उप पप ध्मायतेऽनेन उपध्मानमोष्ठस्तत्रोच्चार्यमाण। पफयोः परयो' उच्चार्यमाणे विसर्गसदृशे वर्णभेदे तस्य व्यञ्जिका अर्द्धविसर्गाकारा रेखा। उपाध्मानीयश्च
उपनत त्रि० उप+नम-क्त। उपस्थिते, प्राप्ते च।
उपनय पु० उप+नी-अच्। उपनयने 'गृह्योक्तकर्मणा येन समीपं नीयते गुरोः। बालो वेदाय तद्योगाद्बालस्योपनयं विदु'रिति स्मृत्युक्ते संस्कारविशेषे। न्यायमते यो यो धूमवान् स वह्निमान् अयमपि तथेत्यादिवाक्यरूपे न्यायावयवभेदे, ज्ञानलक्षणाजन्ये ज्ञानभेदे च।
उपनयन न० उप+नी-ल्युट्। स्मृत्युक्ते संस्कारभेदे उपनयार्थे
उपनाह पु०उप+नह-घञ्। वीणायां तन्त्रबन्धनस्थाने,व्रणाद्युपशमार्थं लेपनद्रव्ये च। [द्रव्ये।
उपनिधि पु० उप+नि+धा-कि। न्यासे विश्वासेन स्थापिते
उपनिषद् स्त्री० उपनिषीदति प्राप्नोति ब्रह्मात्मभावोऽनया। उप+नि+सद-क्विप्। ब्रह्मविद्यायां, तत्प्रतिपादके वेदशिरोभागे वेदान्ते च। [वीथौ राजमार्गे।
उपनिष्कर न०उपनिष्किरन्ति सैन्यान्यत्र (उप-निस्-कृ+अप्।
उपनिष्क्रमण न० उप+निस्-क्रम-ल्युट्। राजपथे।
उपनेत्र न० उपगतं नेत्रम्। नेत्रसमीपे धृते काचादिनिर्मिते नेत्रोपकारके द्रव्ये (चसमा)।
उपन्यास पु० उप+नि+अस-घञ्। वाक्योपक्रमे।
उपपति पु० उपमितः पत्या। जारे।
उपपत्ति स्त्री० उप+पद-क्तिन्। युक्तौ, सङ्गतौ च।
उपपद न० उपोच्चारितं पदम् प्रा०स०। समीपोच्चारिते नामोत्तरे उच्चारिते शर्म्मवर्म्मादिरूपे शब्दे, व्याकरणे प्रत्ययादिविधायकसूत्रे सप्तम्यन्तपदेन निर्द्दिश्यमाने पदे च। यथा कर्म्मण्यण् इत्यादौ कर्म्मणीतिसप्तम्यन्तं पदम् अण्प्रत्ययविधाने उपपदम्। [रघु'।
उपपन्न त्रि०उप+पद-क्त। युक्तियुक्ते,'उपपन्नं ननु शिवमिति
उपपातक न० उपमितं पातकेन। गोबधादिरूपे पापे।
उपपादन न० उप+पद+णिच्-ल्युट्। युक्त्या समर्थने सम्यक्प्रतिपादने च। [प्रतिपादिते च।
उपपादित त्रि०उप-पद+णिच्-क्त। युक्त्या समर्थिते, सम्यक्
उपपुर न० उप समीपे पुरम्। पुरसमीपे शाखानगरे।
उपपुराण न० उपमितं पुराणेन। सर्गप्रतिसर्गाद्युक्तिरूपपुराणलक्षणयुक्तेषु सनत्कुमाराद्युक्तेषु अष्टादशसु ग्रन्थेषु।
उपप्लव पु० उप+प्लु-अप्। गगनादुल्कापातादिरूपे उपद्रवे, चन्द्रार्कग्रहणे च।
उपप्लुत त्रि०उप+प्लु-क्त। पीडिते,ग्रस्ते-चन्द्रार्कयोश्च उपद्रुते च। 'उपप्लुतं पातुमद' इति माघः। [णोपकारके।
उपभूषण न० उपभूष्यतेऽनेन ल्युट्। ध्वजचामरादौ भूष-
उपभोग पु० उप+भुज-घञ्। भोजनादिजन्ये सुखानुभवे भोगे
उपमर्द्द पु० उप+मृद-घञ्। आलोडने,हिंसने, पूर्व्वधर्म्मविनाशेन धर्म्मान्तरोत्पादने च। [सा०१०प०
उपमा स्त्री० उप+मा-अङ्। सादृश्ये, अर्थालङ्कारभेदे च।
उपमान न० उपमीयतेऽनेन उप+मा ल्युट्। सादृश्यज्ञानसाधने सादृश्यप्रतियोगिनि च, येन सादृश्यं भवति तस्मिन्, यथा चन्द्र इव सुखमित्यादौ चन्द्र उपमानम्। भावे ल्युट्। सादृश्यज्ञाने

उपमिति स्त्री० उप+मि क्तिन् । सादृश्यज्ञाने उपमायाम् ।
उपमेय त्रि० उपमीयतेऽसौ उप+मि-यत् । सादृश्याश्रये यथा चन्द्र इव मुखमित्यादौ मुखम् ।
उपमेयोपमा स्त्री० अर्थालङ्कारभेदे साहि० द० ।
उपयन्तृ पु० उप+यम-तृच् । स्त्रियो विवाहकर्त्तरि पत्यौ ।
उपयम पु० उप+यम् घञ् अवृद्धि । विवाहे । वा वृद्धिः । उपयामस्तत्र । [वैवाहिके मन्त्रे ।
उपयमन न० उप+यम-ल्युट् । विवाहे । करणे ल्युट् ।
उपयाचक त्रि०उपगम्य याचते याच ण्वुल् । समीपे आगत्य याच्ञाकर्त्तरि । [देवाय देये पश्वादौ च ।
उपयाचितक न० उप+याच क्त स्वार्थे कन् । प्रार्थिते अभीष्टसिद्धये
उपयुक्त त्रि० उप+युज क्त । न्याय्ये उचिते, युक्ते च ।
उपयोग पु० उप+युज घञ् । आचरणे भोजने इष्टसिद्धि-साधने व्यापारे च । [साधनतायाम्, प्रयोजने च ।
उपयोगिता स्त्री० उपयोगिनो भाव तल् । आनुकूल्ये इष्ट
उपयोगिन् त्रि० उप+युज घिनुण् । इष्टसाधने अनुकूले उपयुक्ते च । [अनेकार्थके रञ्जनद्रव्येण रक्ते च ।
उपरक्त पु० उप+रञ्ज-क्त । राहुग्रस्ते चन्द्रे सूर्ये च । व्य-
उपरक्षण न० उप+रक्ष ल्युट् । रक्षार्थं सैन्यादिस्थापने ।
उपरत त्रि० उप+रम क्त । विरते, निवृत्ते, मृते, सर्व-कामनाशून्ये च ।
उपरतस्पृह त्रि०उपरता निवृत्ता स्पृहा यस्य । यदपि जीवने स्थितिले, विषयभोगादौ च आत्यन्तिकनिवृत्ताभिलाषे । 'पित-र्युपरतस्पृहे' इति स्मृतिः ।
उपरति स्त्री०उप+रम क्तिन् । विरतौ, अध्यमार्गावीनामीत्ये, विषयेभ्य इन्द्रियाणां निवारणे, विहितकर्मणाम् विधा-नतस्त्यागरूपे सन्न्यासे "पुनर्व कर्मणा नेति धीर्या सोपरतिर्भवेत्" इत्युक्तरूपायां बुद्धौ च ।
उपरत्न न० उपमित रत्नेन गति० । मणिलक्षणेषु 'उपरत्नानि काचश्च कर्पूरोऽश्मा तथैव च । मुक्ताशुक्तिस्तथा शङ्ख इत्युक्तकाचादिषु । [च फेनोपरमे दद्यात्' इति वैद्यकम् ।
उपरम पु० उप+रम-घञ् अवृद्धि विषयवैराग्ये निवृत्तौ ।
उपराग पु० उप+रञ्ज-घञ् । रविचन्द्रयोर्ग्रहणे । ग्रहणाख्य राहुधिष्ठितभूमिच्छायया चन्द्रस्य चन्द्रमण्डलेन च रवे र्मण्डलाच्छादनमिति सिद्धान्ते स्थितम् ।
उपरि अव्य० ऊर्द्ध+रिल् उपादेशश्च । प्रथमाषष्ठीसप्तम्य-र्थवृत्ते ऊर्द्धमन्वर्थे ।
उपरिष्टात् अव्य० ऊर्द्ध रिष्टातिल् उपादेशश्च । उपरिशब्दार्थे

उपरोध पु० उप+रुध-घञ् । आनुकूल्य च कथनरूपे नुरोधे, समीपे रोधने च । [त्रि ।
उपरोधक न० उप+रुध ण्वुल् । वासगृहे । अपरोधकर्त्तरि
उपल पु उपनीयते उपलीयते गिरिरनेन ली-ड नस्य लत्वम् । प्रस्तरे । वर्षे आस्तिादवत् । पाषाणचितायां शर्करि स्त्री ।
उपलक्षण समीपस्थस्य स्वस्वभिन्नस्य लक्षणं ज्ञानं यस्मात् । स्वस्य स्वान्यस्य च अजहत्स्वार्थया लक्षणया बोधके शब्दे यथा काकेभ्योदधि रक्ष्यतामित्यत्र काकपदं स्वस्य स्वान्या-देः श्वादेश्च बोधकम् । [उपलक्षयितीति' वेदान्तसूत्रम्
उपलब्धि स्त्री० उप+लभ क्तिन् । ज्ञाने, प्राप्तौ च । 'नाभाव
उपलम्भ पु० उप+लभ घञ् मुम् च । लाभ, ज्ञाने च ।
उपलिङ्ग न० उपमित लिङ्गेन । लोकसिद्धसाधनभावेन सिद्धेनानुमापकेन सहशे अलौकिकसाधनभावके अरिष्ट सूचके भूकम्पादौ उत्पाते ।
उपवट पु० उपमितो वटेन । वटसदृशवृक्षे प्रियालान्तरे ।
उपवन न० उपमित वनेन । वनतुल्ये कृत्रिमे आरोपितवृक्ष-समूहे उद्याने । [बहुपानसमल न ।
उपवर्ह पु उप+वृह घञ् । शिरोधाने (बालिश) ल्युट् । उप
उपवसथ पु० उप+वस अथ । ग्रामे ।
उपवास पु० उप+वस-घञ् । 'उपगोदयम् इत्य यामाष्टकम् भोजनम् । उपवास इति ख्यातः' इति स्मृत्युक्ते अनाहारे ।
उपवाह्य पु उप+वह-ण्यत । राजवाहने ।
उपविष पु० उपमित विषेन । अर्कक्षीर स्नुहीक्षीर तथैव कलिहारिका । धुस्तूर करवीरश्च पञ्च चोपविषा स्मृता इत्युक्तेष्वर्कादिषु ।
उपवीत न० उप+व्येञ-क्त वीभाव । दक्षिणेतर्जिणकृततया वामांसस्थापित कार्पासे यज्ञसूत्रे ।
उपवीतिन् त्रि उपवीत विद्यतेऽस्य । यज्ञोपवीतवति ।
उपवृंहित त्रि उप+बृंह-क्त । वर्द्धित ।
उपवेद पु उपमित वेदेन । वेदसदृशे आयुर्वेदादौ ।
उपव्याघ्र पु० उपमितो व्याघ्रेण । व्याघ्रतुल्ये सृगालके (चिताबाघ) चित्रकाख्ये पशुभेदे ।
उपशम पु० उप+शम घञ् अवृद्धि । इन्द्रियाणां निग्रहे, तृष्णानाशे, रोगप्रतीकारे, शान्तौ च ।
उपशय पु उप+शी अच् । समीपशयने, 'औषधान्नविहारा-णामुपयोगं सुखावहम् । विद्यादुपशयं व्याधेरिति' वैद्य-कोक्ते उपयोगभेदे च ।
उपशल्य न०उपगत शल्यम् ग्रामसीमान्तस्थान (भागाड़) । ग्रामान्ते

**उपशाय** पु० उप+शी-घञ् । यामिकभटानां पर्य्यायेण शयने ।
**उपश्रुति** स्त्री० उप+श्रु-क्तिन् । अङ्गीकारे दैवशुभाशुभप्रश्ने च ।
**उपश्लेष** पु० उप ईषत् एकदेशेन श्लेषः संबन्धः । आधाराधेययोरेकदेशसंबन्धे । यथा गृहघटयोः । [दिग्धि त्रि०
**उपष्टम्भक** न० उप+स्तम्भ-ण्वुल् । स्थूणायाम् । स्तम्भका-
**उपसंग्रह** पु० उप+सम्+ग्रह-अप् । पादस्पर्शपूर्व्वकनमस्कारे
**उपसंयम** पु० उप+सम्+यम-घञ् अवृद्धिः । उपसंहारे ।
**उपसंव्यान** न०उपसंवीयतेऽनेन व्येञ्-ल्युट् । परिधानवस्त्रे ।
**उपसंहार** पु० उप+सम्+हृ-घञ् । समाप्तौ,संग्रहे च ।
**उपसत्ति** स्त्री०उप+षद-क्तिन् । सेवायां,सङ्गमात्रे,प्रतिपादने च
**उपसन्न** त्रि०उप+षद-क्त । उपस्थिते, निकटागते च ।
**उपसम्पन्न** त्रि०उप+सम्+पद-क्त । यज्ञार्थहते प्रोक्षिते पशौ, पाकेन संस्कृते मांसादौ,पर्य्याप्ते, मृते च । [धानायोपगमे ।
**उपसर** पु० उप+सृ-अप् । स्त्रीगव्यादिषु पुंगवादीनां गर्भा
**उपसर्ग** पु०उप+सृज-घञ् । रोगविकारे उपद्रवे, शुभाशुभसूचके महाभूतविकाररूपे उत्पाते, व्याकरणोक्तेषु "निपाताश्चादयोज्ञेया प्रादयस्तूपसर्गकाः । द्योतकत्वात् क्रियायोगे लोकादवगताद्भमे"इत्युक्तलक्षणेषु क्रियायोगे प्रादिषु च
**उपसर्ज्जन** न० उप+सृज-ल्युट् । अप्रधाने गौणे, विशेषणे, व्याकरणोक्ते समासशास्त्रे प्रथमान्तनिर्द्दिष्टे च ।
**उपसर्य्या** स्त्री०उपस्रियतेऽसौ सृ-यत् । गर्भग्रहणयोग्यायाम् ऋतुमत्यां गवि । [कन् । चन्द्रार्कसमीपे मण्डलाकारे परिधौ
**उपसूर्य्यक** न० उपगतं सूर्य्यं सूर्य्यमिव चन्द्रं वा संज्ञायां
**उपसूर्य्यकमण्डल** न० उपसूर्य्यकं मण्डलं वेष्टनम् कर्म्म० । चन्द्रार्कवेष्टने परिधौ । [युक्ते, विसृष्टे च त्रि० ।
**उपसृष्ट** न० उप+सृज-क्त । मैथुने । व्याकरणोक्ते प्राद्युपसर्ग
**उपसेक** पु० उप+सिच+घञ् । सेचनेन मृदूकरणे ।
**उपस्कर** पु० उप+कृ-अप् सुट् च । व्यञ्जनादिसंस्कारके पिष्टधन्याकहरिद्रादौ (वाटना) गृहोपकरणे दृषदुदूखलादौ च
**उपस्थाट** त्रि०उप+स्था-तृच् । सेवके, उपगते, ऋत्विग्भेदे च ।
**उपस्थान** न० उप+स्था-ल्युट् । उपेत्य स्थितौ,नमस्कारे च
**उपस्थित** त्रि० उप+स्था-क्त । समीपस्थिते, प्राप्ते, आगते च
**उपस्पर्श** पु० उप+स्पृश-घञ् । स्पर्शे, स्नाने च । उपस्पृश्यन्ते इन्द्रियाण्यत्र । विधिना जलपानपूर्व्वके मुखादिस्पर्शरूपे वैधाचमने । तथेत्युपस्पृश्येति, रघुः ।
**उपस्पृष्ट** त्रि० उप+स्पृश-क्त । आचान्ते कृताचमने, समीपे आसनादौ स्पृष्टे च । [द्वारसमीपे अव्य० ।
**उपह्वार** पु० उप+हृ-घञ् । (भेट) उपढौकये । अव्ययी० ।
**उपह्वर** पु० उप+ह्वृ-अप् । गुह्ये । निर्जने निकटे च न० ।
**उपांशु** अव्य० उप+अनूश-उ । निर्जने अप्रकाशे च । 'जिह्वोष्ठौ चालयेत् किञ्चित् देवतागतमानसः' । निजश्रवणयोग्यः स्यादुपांशु स जपः स्मृत इत्युक्तलक्षणे मन्त्रादिजपे पु० । 'उपांशु'स्याच्छतगुण इति मनुः ।
**उपाकरण** न० उप+आ+कृ-ल्युट् । उपनयनपूर्व्वकं वेदस्य ग्रहणे, श्रावण्यां पूर्णिमायां कर्त्तव्ये वैधकर्म्मविशेषे, संस्कारपूर्व्वकं यज्ञे पशूनां हनने, आरम्भे च ।
**उपाकर्म्म** न० उप+कृ-मनिन् । उपाकरणशब्दार्थे ।
**उपाकृत** त्रि० उप+आ+कृ-क्त । यज्ञे हननार्थं कृतसंस्कारे पशौ, आरब्धे च ।
**उपाख्यान** न० उप+आ+ख्या-ल्युट् । पूर्व्ववृत्तकथने, 'रामोपाख्यानमत्रैवे'ति महाभारतम् । कथनमात्रे च । [गमने च ।
**उपागम** पु० उप+आ+गम-घञ् अवृद्धिः । स्वीकारे,समीपा-
**उपाङ्ग** न० उपमितमङ्गेन गति० । अङ्गतुल्ये प्रधानोपयोगिनि 'साङ्गोपाङ्गैरिहोदिता' इत्यमरः ।
**उपाजे** अव्य० उप+अज-के गौभावाभाव । दुर्बलस्य बलाधाने
**उपात्त** त्रि० उप+आ+दा-क्त । गृहीते, प्राप्ते च 'चयं केचिदुपात्तस्ये'ति श्रुतिः । अन्तर्गतमदे गजे पु० ।
**उपात्यय** पु० उप+अति+इण्-अच् । लोकशास्त्राचाराति-क्रमे, व्यतिक्रमे,क्रमोल्लङ्घने, नाशे च ।
**उपादान** न० उप+आ+दा-ल्युट् । ग्रहणे, स्वस्वविषयेभ्य इन्द्रियाणां निवारणरूपे प्रत्याहारे, कार्य्यजननार्थमुपादीयमाने कार्य्यान्विते कारणे, यथा मृदादि घटादे', स्वर्णादि अलङ्कारादे , जननार्थं गृह्यते । तच्च सर्व्वदा कार्य्येष्वनुगतम्
**उपादेय** त्रि० उप+आ+दा-यत् । उत्कृष्टे, ग्राह्ये, प्रधाने, विधेये च उपादेये गुणो भवेदिति भट्टकारिका ।
**उपाधि** पु० उप+आ+धाञ्-कि । धर्म्मचिन्तायाम्, विशेषणे उपाधिर्भिद्यते न तु तद्वानिति सांख्यसूत्रम् । स्वधर्म्मस्यान्यगततयावभासके, यथा दर्पणादि स्वगतं नीलिमादिकं स्वप्रतिबिम्बितमुखगततया, जवापुष्पं च स्वगतं रक्तत्वं स्फटिकगततयाऽवभासयति अतोऽत्र दर्पणादि नीलिमाद्यवभासने उपाधिः । न्यायमते हेत्वव्यभिचारोद्भावके साध्यव्यापके साधनाव्यापके पदार्थे च ।
**उपाध्याय** पु० उपेत्याधीयतेऽस्मात् उप+अधि+इङ्-घञ् । 'एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः । 'योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते' इति मनूक्तलक्षणे वेदैकदेशतदङ्गाध्यापके । स्त्रियां ङीपि उपाध्याया उपाध्यायीतिरूप-

स्त्रीवक्षोजाते स्तने । [प्रगल्भवक्षोयुते ।

उरसिल त्रि० प्रशस्तमुरोऽस्त्यस्य प्राशस्त्ये मत्वर्थीय इलच् ।

उरस्काट पु० उरः काट्यते आव्रियतेऽनेन कट-घञर्थे क । बालानामुत्तरीयभेदे तदीये यज्ञोपवीताकारे वस्त्रभेदे च । (बुकवाक्स) । [उरस्त्राणमप्यत्र न० ।

उरस्त्र न० उरस्त्रायते त्रै-क । वक्षोरक्षके कवचे । ल्युट् ।

उरस्य पु० उरसा निर्मितः उरस्+यत् । स्वजाते औरसे पुत्रे

उरस्वत् त्रि० प्रशस्तमुरोऽस्त्यस्य प्राशस्त्ये मतुप् मस्य वः । प्रगल्भवक्षोयुते ।

उरी अव्य० बेञ् ईक् । अङ्गीकारे, विस्तारे च ।

उरीकार पु० उरी+कृ-घञ् । स्वीकारे, विस्तारे च ।

उरीकृत त्रि० उरी+कृ-क्त । अङ्गीकृते, विस्तृते च । [वा ङीष्

उरु त्रि० ऊर्णु-कु नुलोपो ह्रस्वश्च । विशाले, महति च स्त्रियां

उरुक्रम पु० उरुर्महान् क्रमः पादोविक्रमो वा यस्य । विष्णौ

उरुबूक पु० उरु-वै-ऊक आलोपश्च । एरण्डवृक्षे रक्तैरण्डे च

उरोज पु० उरस् जन-ड त० । स्त्रीस्तने । [(माकडसा) मर्कटके

ऊर्णनाभ पु० ऊर्णेव सूत्रं नाभौ गर्भेऽस्य अच् समा० ह्रस्व ।

उर्णा स्त्री० ऊर्णूयते आच्छाद्यते ऊर्णु-ड ह्रस्वश्च । मेषादिलोम्नि

उर्द माने स्वादे च सक० क्रीडायाम् अक० भ्वा० आत्म० सेट् । उर्दते

उर्द्र पु० उर्द-रक् । जलविडाले (उद्बिराल)

उर्व हिंसायां भ्वा० पर० सक० सेट् । उर्वति और्वीत् ।

उर्वरा स्त्री० उरु-ऋ-अच् । सर्वशस्ययुक्तायां भूमौ ।

उर्व्वशी स्त्री० उरून् अश्नुते वशीकरोति उरु+अश-क गौरा० ङीष् । स्वर्गवेश्यायाम् ।

उर्व्वशीरमण पु० ६त० । चन्द्रवंश्ये बुधपुत्रे पुरूरवोनामके राज्ञि

उर्व्वारु पु० उरु-ऋ-उण् । कर्कट्याम् । स्वार्थे कन् अत्रैव ।

उर्व्वी स्त्री० उरु+स्त्रिया गुणवचनत्वात् ङीष् । भूमौ ।

उल दाहे (सौत्र.) पर० सक० सेट् । ओलति औलीत् ।

उलप पु० न० वल-कपच् सम्प्रसारणम् । शाखापत्रप्रचययुतायां लतायाम् । कोमले तृणभेदे न० (उलुखड) ।

उलूक पु० वल-समवाये ऊक संप्रसारणम् । पेचके, इन्द्रे, दुर्य्योधनामातुलशकुनिपुत्रे च । तृणभेदे न० । (उलुखड)

उलूखल न० ऊर्ध्वं खम् उलूखं पृषो० तत् लाति गृह्णाति ला-क । धान्यादिकण्डनसाधने काष्ठमये पात्रे (उखरी) गुग्गुलौ च । [शिशुके, (शोशक) मत्स्यभेदे च

उलूपिन् पु० स्त्री० शम्भोरिव रूपमस्यास्ति इनि रस्य लत्वम् ।

उलुलु पु० उरु उरु इति रस्य लत्वम् । हर्षसूचके माङ्गल्यादौ स्त्रीध्वनिभेदे ' उच्चैरुलूलुध्वनिरुच्चचारे"ति नैषधम् ।

उल्का स्त्री० उष-दाहे क नि० षस्य लः । रेखाकारे गगनात् पतत्तेजःपुञ्जे । [भेदे (ख्याकशियाली)

उल्कामुखी स्त्री० उल्केव रात्रौ ज्वलत् मुखं यस्याः । शृगाली

उल्मुक न० उष-दाहे मुक, षस्य लः । अङ्गारे ।

उल्लल त्रि० उद्-लल-अच् । बहुरोमयुक्ते ।

उल्ललित त्रि० उद्-लल-क्त । तरलिते, आन्दोलिते च । [पु०

उल्लाघ त्रि० उद्+लाघ-क्त नि० । रोगनिर्मुक्ते, दक्षे, शुचौ, च । मरिचे

उल्लाप पु० उद्+लप-घञ् । काकुवाक्ये, शोकरोगादिना ध्वनेर्विकारे च । [ग्रन्थीये परिच्छेदे च

उल्लास पु० उद्+लस+घञ् । प्रकाशे, आह्लादे, ग्रन्थस्याध्याय

उल्लिखित त्रि० उद्+लिख-क्त । उत्कीर्णे तनूकृते उपरि लिखिते, चित्रिते च ।

उल्लेख पु० उद्+लिख-घञ् । उच्चारणे, अलङ्कारभेदे साहित्यप्र

उल्लेखन न० उद्+लिख-ल्युट् । वमने, खनने, उच्चारणे च

उल्लोच पु० उद्+लोच-घञ् । चन्द्रातपे विताने ।

उल्लोल पु० उद्+लोड़-घञ् डस्य लत्वम् । महातरङ्गे ।

उल्व न० वल-वन् संप्रसारणञ्च । गर्भवेष्टनचर्म्मणि जरायौ ।

उल्वण त्रि० उद्+वण-अच् पृषो० दस्य लः । व्यक्ते, स्पष्टे ।

उ(ष)शती स्त्री० उष-शतृ, वश-शतृ संप्रसारणम् वा । स्त्रियां ङीप् । अकल्याणवादां वाचि ।

उशनस् पु० वश-कनसि । भार्गवे शुक्रे । सौ उशना संबुद्धौ उशनन् उशन, उशनः ।

उशीर पु० न० वश-ईरन् किच्च । (खश खश) वीरणमूले ।

उष बधे, दाहे च भ्वादि० पर० सक० सेट् । ओषति, औषीत् ।

उष बधे दाहे च भ्वादि० पर० सक० सेट् । ओषति औषीत्, औषत्

उष पु० उष-क दिने गुग्गुलौ, रात्रिशेषे, क्षारमृत्तिकायां च कामनायुक्ते त्रि० । [च (चड्)।

उषण न० उष-क्युन् । मरिचे । पिप्पल्यां, शुण्ठ्यां चव्यिके

उषर्बुध पु० उषसि संध्यायां बुध्यते होमार्थं प्रज्वालने प्रकाशते उषस्+बुध-क अहरादित्वात् र० । अग्नौ, रक्तचित्रके च ।

उषस् न० उष-असि किच्च । प्रत्यूषे, पञ्चपञ्चाशद्घटिकोत्तरकाले

उषसी स्त्री० उषं तापकत्वात् दिवसं स्यति उष+सो-क गौरा० ङीष् । सायं सन्ध्यायाम् ।

उषा स्त्री० उष-क टाप् । "तेजःपरिहानिरूपा भानोरर्द्धोदयं यावदि"ति वराहोक्ते काले बाणराजसुतायाञ्च ।

उषाकल पु० उषायां कलः शब्दोऽस्य । कुक्कुटे ।

उषापति पु० उषाया बाणराजसुताया पतिः । अनिरुद्धे कन्दर्पात्मजे कृष्णपौत्रे । उषाकान्तादयोऽप्यत्र ।

उषित त्रि॰ उष-क्त । पर्युषिते दग्धे च । वस-क्त । स्थिते ।
उष्ट्र पु॰ उष-ष्ट्रन् कित् । स्वनामख्याते पशुभेदे वाहूरके च ।
उष्ण पु॰ उष-नक् । ग्रीष्मे ऋतौ आतपे पलाण्डौ नरकभेदे, शीतभिन्ने स्पर्शे च । तद्वति, आलस्यरहिते दक्षे च त्रि॰।
उष्णक त्रि॰ उष्णमिव करोतीति कन् । ज्वलसे, क्षिप्रकारिणि च उष्णं करोति उष्ण+णिच् । ण्वुल् ज्वरे पु॰ ।
उष्णगु पु॰ उष्णा गावः किरणा यस्य । सूर्ये । उष्णरश्मिरप्यत्र
उष्णनदी स्त्री॰ कर्म॰ "यमद्वारे महाघोरे तप्ता वैतरणी नदी"त्युक्तायाम् उष्णनद्यां वैतरण्याम् ।
उष्णवारण न॰ उष्णं वारयति वृ-णिच्-ल्यु । आतपत्रे, छत्रे
उष्णवीर्य्य पु॰ उष्णमुष्णं वीर्य्यमस्य । शिशुमाराख्ये जलजन्तौ । उष्णवीर्य्यवति त्रि॰ ।
उष्णांशु पु॰ उष्णाः अंशवो यस्य । सूर्ये ।
उष्णागम पु॰ उष्णस्यागमोऽत्रिन् । निदाघकाले ।
उष्णासह पु॰ उष्णं आसहतेऽत्र आ+सह अच् । हेमन्ते ऋतौ । उष्णं न सहते अच् । असह्योष्णे त्रि॰ ।
उष्णिका स्त्री अल्पमक्तमस्याम् अल्पार्थे कन् नि अकारस्य उष्णा-देशः । यवागवाम् (याउ) । उष्णकशब्दात् टाप् । दयायाम्
उष्णिह् स्त्री॰ उत्स्निह्यति क्विन् नि सलोपः । अष्टाक्षर-पादके छन्दोभेदे । स्वार्थे उष्णिक् उष्णिग्भ्याम् ।
उष्णीष पु॰ न उष्णमीषते हिनस्ति ईष-क गक॰ पर-रूपम् । शिरोवेष्टनवस्त्रे (पागडी) किरीटे च ।
उष्णोपगम पु॰ उष्णस्य उपगमोऽत्र । निदाघकाले ।
उष्म पु॰ उष-मक् । निदाघे आतपे, ग्रीष्मे ऋतौ च ।
उष्मपा पु॰ उष्म पिबन्ति पा क्विप् । अग्नौ पुत्रे पितृगणभेदे ।
उस्र पु॰ वसन्ति रसा यत्र वस रक् । किरणे, सूर्यकिर-णाना जलवेतृत्वात् रसवत्त्वम् । वृषे च । स्त्रस्त्रां उपचिता बताया च स्त्री । [उदोष ऊहन
उह अर्दने भ्वादि॰ पर॰सक॰सेट् । ओहति औहत्, औहीत्
उहु अव्य॰ उ च हु च द्व॰ । सम्बोधने एवार्थे च ।
उहहु अव्य॰ उहु च हु च । सम्बोधने । [कर्मणि च ।
उह्यमान त्रि॰ वह-कर्मणि शानच् । आनीयमाने, वहन-

ऊ

ऊ अव्य॰ वेञ् क्विप् । सम्बोधने, वाक्यारम्भे दयायां रक्षायाम्
ऊ पु॰ अवतीति अव-क्विप् ऊठ् । महादेवे चन्द्रे च । पालके त्रि॰
ऊत त्रि॰ व्य तन्तुसन्ताने क्त । स्यूते, सूत्रेण ग्रथिते च ।
ऊति स्त्री व्य क्तिन् । स्यूतौ । अव क्तिन् नि॰ । रक्षणे,
लीलाया, धारणे च । [क्षीराधारे आपीने (मेड)
ऊधस् न॰ उन्द्-असुन् निपा॰ ऊतोदीर्घः । स्त्रीगव्यादे
ऊधस्य न॰ ऊधसि भवम् ऊधस्+यत् । दुग्धे ।
ऊन परिहाणे अदन्तचुरा॰ उभ॰ सक॰ सेट् । ऊनयति ते औनिनत् त औनयीत् औनयिष्ट ।
ऊन त्रि॰ ऊन-हानौ अच् । हीने, असम्पूर्णे च ।
ऊम् अव्य॰ अव-मुक् । प्रश्ने, अङ्गीकारे, निन्दायां, असूयायाम्
ऊय तन्तुसन्ताने भ्वा॰ आत्म॰सक॰सेट् । ऊयते औयिष्ट ।
ऊररी अव्य॰ ऊय-ररीक् । अङ्गीकारे, विस्तारे च ।
ऊरव्य पु॰ ऊरु+भवार्थे यत् । वैश्ये । तस्य ब्रह्मण ऊरुतो जन्म 'ऊरू वैश्य' इति श्रुतेः प्रसिद्धम् । ऊरुसम्भवे त्रि॰।
ऊरी अव्य॰ ऊय-रीक् । अङ्गीकारे, विस्तारे च ।
ऊरु पु ऊर्णूयते आच्छाद्यते ऊर्णु-कर्मणि कु णुलोपश्च । जानूपरिभागे ।
ऊरुज पु॰ ऊरोर्ब्रह्मण ऊरोर्जायते जन-ड । वैश्ये ।
ऊरुपर्वन् पु॰ ऊरोः पर्वेव । जानुनि (हाटु)
ऊरुस्तम्भ पु॰ ऊरू स्तभ्नाति अण् । स्वनामख्याते रोगे ।
ऊरुस्तम्भा स्त्री॰ऊरोस्तम्भनमत्र अस्तीति यस्या । कदलीवृक्षे ।
ऊर्ज्ज जीवने बले च चु॰ उभ सक सेट् । ऊर्ज्जयति ते और्ज्जिजत् त ।
ऊर्ज्ज पु॰ऊर्ज्ज-आधारे घञ् । कार्त्तिके मासि । भावे घञ् । बले, उत्साहे च । असुनि सान्तोऽप्ययमत्रार्थे ।
ऊर्ज्जस्वल त्रि॰ ऊर्ज्जस्+अस्त्यर्थे वलच् । बलवति । विनि । ऊर्ज्जस्वी अप्यत्र ।
ऊर्ज्जित त्रि॰ ऊर्ज्ज-क्त । बलातिशययुक्ते वृद्धियुक्ते च ।
ऊर्णनाभ पु ऊर्णेव तन्तुर्नाभावस्य अच् समा॰ ह्रस्व । मर्कटे (माकडसा) अक्षभावे ऊर्णनाभिरप्यत्र भ्रुवोर्मध्यस्थे महा पुरुषचिह्ने आवर्त्ताकारे लोमसङ्घे च ।
ऊर्णा स्त्री ऊर्णु कर्तरि ड । मेषलोमनि ।
ऊर्णायु पु॰ ऊर्णा सन्त्यस्य युस् । मेषे, कम्बले ऊर्णनाभे मत्कुणे च ।
ऊर्णु आच्छादने अदा॰ उभ॰ सक॰ सेट् । ऊर्णोति ऊर्णुते और्णावीत् और्णुवीत् और्णवीत और्णविष्ट और्णुविष्ट ।
ऊर्द्ध त्रि॰ उद् हाङ्-ड पृषो॰ ऊरादेशः । उच्चे उपरि च
ऊर्द्धक पु॰ ऊर्द्ध कन् वायति शब्दायते । मृदङ्गभेदे स च गोपुच्छवदाकारस्त्रितालपरिमितः षडेङ्गाङ्गुलः ऊर्द्ध कृत्वा वाद्यते । [उच्चे उपरि च
ऊर्द्ध त्रि॰ उद् उपरि ध्मायते ध्मा-ड आदेरूरादेशः । उच्चे

**ऊर्द्ध्वकण्ठी** स्त्री० ऊर्द्ध्वः कण्ठः शुङ्गमस्याः ब० गौरा० ङीष्। महाशतावरीलतायाम्।

**ऊर्द्ध्वजानु** त्रि० ऊर्द्ध्वे जानुनी यस्य। उपरिभागे स्थूलजानुयुक्ते

**ऊर्द्ध्वज्ञु** त्रि० ऊर्द्ध्वे जानुनी यस्य जानुनो ज्ञुः। उपरिभागे स्थूलजानुयुक्ते। [गजारातौ पशुभेदे

**ऊर्द्ध्वपाद** पु० ऊर्द्ध्वाः पृष्ठस्थाः चत्वारः पादा अस्य। शरभाख्ये

**ऊर्द्ध्वपुण्ड्र** पु० ऊर्द्ध्वं ऊर्द्ध्वमुखः पुण्ड्रं इक्षुयष्टिरिव। ललाटस्थे ऊर्द्ध्वमुखे पुण्ड्रेक्षुवत् रेखात्रयात्मके तिलकभेदे। तद्धारणे विधिनिषेधादिकं वृहदभिधाने वक्ष्यते।

**ऊर्द्ध्वम्** अव्य० उद्-ह्वेञ् ड्स आदेरूरादेशश्च। ऊर्द्ध्वशब्दार्थे।

**ऊर्द्ध्वमान** न० ऊर्द्ध्वमारोप्य मीयते येन मा-ल्युट्। यत्कर्णादिमिते पाषाणादौ (बाटखारा)। तेन हि तुलादावारोपितस्य स्वर्णादेर्गुरुत्वमुन्मीयते। उच्चतापरिच्छेदकपरिमाणे च।

**ऊर्द्ध्वरेतस्** पु० ऊर्द्ध्वं न पतत् रेतो यस्य। महादेवे, सनकादौ सन्न्यासिनि, भीष्मे च।

**ऊर्द्ध्वलिङ्ग** पु० ऊर्द्ध्वमुत्कृष्टं लिङ्गं चिह्नमस्य। महादेवे ऊर्द्ध्वं लिङ्गं विरूपाक्षमिति मन्थ्याङ्कमन्त्र'।

**ऊर्द्ध्वलोक** पु० कर्म्म०। स्वर्गे।

**ऊर्द्ध्वासित** पु० ऊर्द्ध्वमुपरिभागे असितं कृष्णं आसितो वा। कारवेल्ले (करला) ऊर्द्ध्वोपविष्टे त्रि०।

**ऊर्म्मि** पु० स्त्री० ऋ-मि-अर्त्तेरुच्च। तरङ्गे, प्रकाशे, वेगे, वस्त्रसङ्कोचरेखायाम्, पीडायाम्, उत्कण्ठायाम्, बुभुक्षादिषु, षट्सु च 'यथा बुभुक्षा च पिपासा च प्राणस्य, मनसः स्मृतौ। शोकमोहौ, शरीरस्य जरामृत्यू षडूर्म्मयः' इति। "षड्तीक्षतानामश्वाना नमनोन्नमनाकृतिः। अतिवेग समायुक्ता गतिरूर्म्मिरुदाहृते'त्युक्तलक्षणायामश्वगतौ स्त्री०

**ऊर्म्मिका** स्त्री० ऊर्म्मिरिव कायति कै-क। तरङ्गवत्प्रकाशमाने अङ्गुरीयके। स्वार्थे कन्। तरङ्गादौ च।

**ऊर्म्मिमत्** त्रि० ऊर्म्मिरिव वक्रताऽस्त्यस्य मतुप् यवा० मस्य न व०। वक्रे तरङ्गवति च।

**ऊर्म्मिमालिन्** पु० ऊर्म्मिमालाऽस्त्यस्य इनि। समुद्रे।

**ऊष** पु० ऊष-रुजायां क। क्षारमृदि, प्रभाते, रन्ध्रे चन्दनादौ च

**ऊषण** न० ऊष-ल्युट्। मरिचे, पिप्पलीमूले, शुण्ठ्याञ्च। (चिता) चित्रके पु०। पिप्पल्यां चव्ये च (चइ) स्त्री०।

**ऊषर** त्रि० ऊष+मत्वर्थीयो र। ऊषवति क्षारमृत्तिकायुक्ते देशे यस्मिन्नुप्तं बीजं न प्ररोहति।

**ऊषरज** न० ऊषराज्जायते जन-ड। (पाङ्गा) लवणभेदे।

**ऊषवत्** त्रि० ऊष-मतुप् मस्य वः। ऊषरभूमौ।

**ऊष्मन्** पु० ऊष-मनिन्। घोषे व्याकरणोक्तेषु शीतवायुनोच्चार्य्यमाणेषु शषसहरूपेषु वर्णेषु।

**ऊह** वितर्के भ्वादि० आत्म० सक० सेट्। ऊहते औहिष्ट।

**ऊह** पु० ऊह-घञ्। वितर्के आगमाविरोधिना तर्केण आगमार्थस्य संशयपूर्वपक्षनिरासेन, उत्तरपक्षव्यवस्थापनेन निर्णयरूपे परीक्षणे, अनन्वितार्थकविभक्तिलिङ्गत्यागपूर्व्वकं अन्वययोग्यविभक्त्यादिकल्पने, यथा पार्थिवे मौल्याम इति बहुवचनमन्त्रितमपि एकोद्दिष्टे अनन्वितत्वात् सौम्य इत्येकवचनान्ततया कल्पनम् मन्त्रान्तरेणाकांक्षापूरणे च। [च।

**ऊहा** स्त्री० ऊह अ स्त्रीत्वात् टाप्। अध्याहारे ऊहशब्दार्थे

## ऋ

**ऋ** गतौ भ्वा० पर० सक० अनिट्। ऋच्छति। आरत् आर्षीत्।

**ऋ** गतौ जुहोत्यादि० पर० सक० अनिट्। इयर्त्ति आरत्।

**ऋ** हिंसायां स्वा० पर० सक० अनिट्। ऋणोति। आर्षीत।

**ऋक्थ** न० ऋच-थक्। धने स्वर्णे, मृतिप्रसिद्धे दायरूपे धने च

**ऋक्ष** पु० ऋष-स किच्च। भल्लूके। नक्षत्रे मेषादौ च पु० न०।

**ऋक्षगन्धा** स्त्री० ऋक्षान् गन्धयति हिनस्ति गन्ध-अच्। अधिजाङ्गलीवृक्षे, महाश्वेतायां, क्षीरविदार्य्याञ्च।

**ऋक्षगिरि** पु० कर्म्म०। कुलाचलभेदे ऋक्षनामके पर्व्वते।

**ऋक्षराज** पु० ऋक्षाणां राजा स० टच्। जाम्ववति, चन्द्रे च

**ऋक्षवत्** पु० ऋक्षा सन्त्यस्मिन् मतुप् मस्य वः। नर्म्मदातीरस्थे पर्व्वतभेदे।

**ऋग्वेद** पु० ऋक्प्रधानो वेदः। होतृदेवत्ये ब्रह्मणाऽऽम्नाते वेदभेदे

**ऋच** स्तुतौ तुदा० पर० सक० सेट्। ऋचति आर्चीत्।

**ऋच्** स्त्री० ऋच क्विप्। अर्थवशेन नियताक्षरपादयुते वेदांशे।

**ऋच्छ** मोहे मूर्त्तौ गमने च तुदा० पर० सक० अक० च। सेट्। ऋच्छति आर्च्छीत्। आनर्च्छ। [आनृजे

**ऋज** गतौ अर्जने च भ्वा० आत्म० सक० सेट्। ऋजते आर्जिष्ट

**ऋजीष** न० ऋज-ईषन् किच्च। भर्ज्जनपात्रे कटाहादौ। धने, नरकभेदे च।

**ऋजु** त्रि० ऋज-कु। सरले। स्त्रियां वा ङीप् ऋज्वी ऋजुः।

**ऋण** गतौ तना० उभ० सक० सेट्। अर्णोति ऋणोति, ऋणुते आर्णीत् आर्णिष्ट।

**ऋण** न० ऋ-क्त नि० नत्वम्। अधमर्णेन उत्तमर्णात् पुनर्देयत्वेनाभ्युपगम्य गृहीते धने, (धार) जले, दुर्गे, दुर्गभूमौ च। देवर्षिपितृगणोद्देशेन यथाक्रमं यज्ञवेदाध्ययनपुत्रोत्पादनरूपे ऽवश्यकार्य्यकृत्ये 'ऋणमन्त्यममोचीति रघु'।

पुरोभेदे स्त्री०यत्र वकासुरवधार्थं पाण्डवाः स्थिताः [रुपादौ

एकचर त्रि० एक सन् चरति पचाद्यच् । एकाकिचारिणि

एकचर्य्या स्त्री० एकस्य चर्या चर,-क्यप् । असहायगमने ।

एकजाति पु० एका जातिर्जननं यस्य । शूद्रे । एकजन्माप्यत्र

एकजातीय त्रि० एकः प्रकारो विधा यस्य प्रकारार्थे जातीयर् । तुल्यप्रकारा ।

एकतम त्रि० एक+डतमच् । बहूनां मध्ये जात्यादिभिर्निर्द्धार्य्ये एकस्मिन् । यथा भवतामेकतमः साधुः ।

एकतर त्रि० एक+डतरच् । द्वयोर्मध्ये जात्यादिभिर्निर्द्धार्य्ये एकस्मिन् । यथा, भवतोरेकतरः साधुः ।

एकतान त्रि० एकं तानयति चु० तन-श्रद्धायाम् अण् । अनन्यचित्तवृत्तौ एकविषयासक्तचित्ते तद्गतचित्ते च ।

एकताल पु० एकः समस्तालोमानं यत्र । समन्वितलये, विच्छेदरहिते च नृत्यगीतादौ ।

एकत्र अ० एक+त्रल् । एकस्मिन्नित्यर्थे । [व्यावर्तके च ।

एकत्व न० एक-त्व । ऐक्ये, अभेदे,साम्ये, सायुज्यमुक्तौ, भेद-

एकदण्डिन् पु० एकः केवलं शिखायज्ञोपवीतादिशून्यो दण्डोऽस्त्यस्य । "यदा हृदाध्यवसितं परंब्रह्म सनातनम् । तदैकदण्डं संगृह्य सोपवीतां शिखां त्यजेदि"त्युक्तात्र चणे परिव्राजके ।

एकदन्त पु० एको दन्तोऽस्य । गणेशे । एकदंष्ट्रोऽप्यत्र ।

एकदा अव्य० एक+काले दाच् । एकस्मिन् काले इत्यर्थे ।

एकदृक् त्रि० एका दृक् यस्य । एकनेत्रे काणे । काके पु० । एकं सर्व्वमभिन्नं पश्यति दृश-क्विप् । शिवे ।

एकदेश पु० कर्म्म० । अवयवे, प्रतीके ।

एकधा अव्य० एक+प्रकारे धाच् । एकप्रकारे "एकधा बहुधा चैव दृश्यते जलचन्द्रवदि"ति श्रुतिः ।

एकधुरा स्त्री० एका धूः कर्म्म० अच् । एकभारे । तद्वहतीत्यर्थेऽण् तस्य लुक् । एकभारवाहके गवादौ । [वाहके गवादौ ।

एकधुरावह त्रि० एकधुरां वहतीति वह-अच् । एकभार-

एकधुरीण त्रि० एकधुरां वहतीति ख । एकभारवाहके गवादौ

एकपक्ष त्रि० एकः पक्षो यस्य । सहाये ।

एकपत्नी स्त्री० एकः समानः अनन्योवा पतिर्यस्याः ङीप् नुक् च । सपत्न्यां पतिव्रतायाञ्च । "यो धर्म्मएकपत्नीनामिति मनुः

एकपद न० एकं पदं पदगतियोग्यकालो यत्र । एकपदगतियोग्यकाले तत्काले । कर्म्म० । एकस्मिन् पदे । निघ्नन्ति स एकपदे इति माघः । [वर्त्मनि पथि ।

एकपदी स्त्री० एकः पादोऽस्याम् । स्त्रीत्वात् ङीप् पद्भावः ।

एकपदे अव्य० एक+पद-के । अकस्मादित्यर्थे 'कथमेकपदे निरागसमिति कुमारः ।

एकपिङ्ग पु० एकं नेत्रं पिङ्गमस्य । कुवेरे स हि शम्भोः सह गौरीं निरीक्ष्य तच्छापात् नष्टनेत्रो जातः पुनः शिवप्रसादात् तच्चक्षुः पिङ्गलत्वं जातमिति पुराणकथा । एकपिङ्गलोऽप्यत्र

एकभक्तव्रत पु न० "दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत् । एकभक्तमिति प्रोक्तं रात्रौ तन्न कदाचने"त्युक्ते व्रतभेदे ।

एकयष्टिका स्त्री० एका यष्टिरिवावली यस्याः ब० कप् । (एकनर) एकावलीहारभेदे ।

एकराज् पु० एको राजते क्विप् । सार्व्वभौमे ।

एकवचन न० वच-ल्युट् इत० । व्याकरणोक्ते एकसंख्यावाचके स्वादौ तिङादौ च । [गवि ।

एकवर्षिका स्त्री० एको वर्षो वयःकालो यस्याः । एकहायन्यां

एकविंशति स्त्री० एकाधिका विंशतिः । एकाधिकविंशतिसंख्यायां तद्वति च । एकत्रिंशदादयश्चैवम् । [भेदे च ।

एकवीर पु० एको वीरः कर्म्म० । महावीरे अतिवीरे वृक्ष-

एकशफ पु० एकः शफोऽस्य । एकखुरयुक्तेषु खरादिषु "खरो ऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा । एते चैकशफाः" इत्युक्तेषु पशुषु ।

एकशेष पु० एकः शेषो यत्र । व्याकरणप्रसिद्धे द्वन्द्वस्थानीये वृत्तिभेदे । यथा घटः घटौ इत्यत्र घटौ ।

एकश्रुति स्त्री० एका अभिन्ना उदात्तादिशून्या श्रुतिरुच्चारणम् । प्रातिशाख्ये प्रसिद्धे उदात्तानुदात्तस्वरितानामविभागेनोच्चारणे ।

एकसर्ग त्रि० एकस्मिन् सर्गो निश्चयो यस्य । अनन्यमनसि एकाग्रचित्ते । [वर्षवयस्कायां गवि ।

एकहायनी स्त्री० एकोहायनो वयोमानं यस्याः ङीप् । एक-

एकाकिन् त्रि० एक+आकिन् । असहाये ।

एकाक्ष पु० एकमक्षि यस्य षच् समा० । काके । काणे त्रि० ।

एकाग्र त्रि० एकमग्रं विषयो यस्य । विषयान्तरव्यावृत्त्या एकमात्रमनस्के विक्षेपरहितज्ञाने च । स्वार्थे ष्यञ् ऐकाग्र्यमप्यत्र

एकादश त्रि० एकादशन्+पूरणे डट् । एकादशानां पूरणीभूते । [सङ्ख्यायुक्ते ।

एकादशन् त्रि० एकश्च दश च आत्वम् । एकाधिकदश-

एकादशद्वार न० एकादश द्वाराणि यत्र । शरीराख्ये पुरे तत्र हि नासिकाश्रोत्रनेत्राणां द्वय द्वयमिति षट् मुखस्थानि, मुखमेकम्, नाभ्या सह अध स्थानि त्रीणि, ब्रह्मरन्ध्रञ्चैकमित्थमेकादश द्वाराणि सन्ति ।

एकादशी स्त्री० एकादशानां पूरणी । उभयपक्षीयप्रतिपदा

ऐकात्म्य न० एक आत्मा स्वरूपं यस्य तस्य भावः ष्यञ् । ऐक्ये एकस्वरूपत्वे ।

ऐकान्तिक त्रि० एकान्तं व्याप्नोति ठञ् । अव्यभिचारिणि, अवश्यं भाविनि । स्त्रियां ङीप् । 'ऐकान्तिकी हरेर्भक्तिरुत्पातायैव कल्पते इति पुराणम् ।

ऐकाह्निक त्रि० एकाह्ने भवः कालात् ठञ् । एकदिननिष्पन्ने। एकाहमतीत्य भव । एकाहान्तरं जायमाने ज्वरे दिने दिने एकसमये जायमाने ज्वरे च पु० । ऐकाह्निकं ज्वरं हन्ति तस्य नामानुकीर्त्तनमिति ज्वरनाशकमन्त्र' ।

ऐक्य न० एकस्य भावः एक+ष्यञ् । अभेदे एकरूपतायाम् ।

ऐक्षव त्रि० इक्षोर्विकारः इक्षु-अण् । इक्षुविकारे गुडादौ । "ऐक्षवं गुडवर्ज्जित"मिति स्मृतिः ।

ऐक्ष्वाक पु० इक्ष्वाकोर्गोत्रापत्यम् अण् नि० । सूर्यवंश्ये नृपे

ऐङ्गुद न० इङ्गुद्याः फलम् फले अण् तस्य न लुक् । इङ्गुदी वृक्षफले ।

ऐण त्रि० एणस्य कृष्णमृगस्येदम् अण् । कृष्णमृगचर्म्मादौ ।

ऐणेय त्रि० एण्या इदम् ढक् । कृष्णमृगीचर्म्मादौ ।

ऐतिह्य न० इतिह पारम्पर्य्योपदेश अनिर्द्दिष्टप्रवक्तृकोपदेश इति यावत् स्वार्थे ष्यञ् । पारम्पर्य्योपदेशे । यथात्र वटे यक्ष प्रतिवसतीत्यादि परम्परापदेशमात्रम् । न तु केनाप्येतदुपलभ्य कथितम् ।

ऐन्दव न० इन्दुर्देवताऽस्य । मृगशिरोनक्षत्रे चन्द्रसम्बन्धिनि त्रि० । सोमराज्याम् स्त्री० ङीप् ।

ऐन्द्र त्रि० इन्द्रस्येदम् इन्द्र+अण् । शक्रसम्बन्धिनि । ज्येष्ठा नक्षत्रे न० । स्त्रियां ङीप् । 'ऐन्द्री तमस्तुरेश्वर'मिति दुर्गादेवतार्थेऽण् । इन्द्रदेवताके त्रि० । प्राच्यां दिशि स्त्री० ।

ऐन्द्रजालिक त्रि० इन्द्रजालेन चरति । मायाकारके । (बाजिकर)

ऐन्द्रि पु० इन्द्रस्यापत्यम् इञ् । इन्द्रपुत्रे, जयन्ते, अर्ज्जुने, सुग्रीववानरे, काके च । [प्रकाश्ये ।

ऐन्द्रियक त्रि० इन्द्रियेण प्रकाश्यः वुञ् । इन्द्रियजन्यप्रत्यक्षेण

ऐर न० इरा अन्नं तद्विकारः । अन्नमये ब्रह्मलोकस्थे सरसि च ।

ऐरावण पु० इरा सुरा वनमुदकं यत्र पूर्व्वपदादिति णत्वम् तत्र भव अण् । इन्द्रगजे ऐरावते ।

ऐरावत पु० इरा जलानि सन्त्यस्य इरा+मतुप् मस्य व इरावान् समुद्रस्तत्र भव अण् । समुद्रजाते इन्द्रगजे ।

ऐरावती स्त्री० इरा सन्त्यस्य मतुप् मस्य वः इरावान् तत्र समुद्रः भवा अण् । विद्युति ।

ऐरिण न० इरिणे ऊषरे भव । लवणभेदे । (पाङ्गा) ।

ऐरेय न० इरा अन्नम् तत्र भवः ढक् । अन्नभवे मद्ये ।

ऐल पु० इलायाः अपत्यम् । बुधपुत्रे पुरूरवोनामके नृपतौ ।

ऐलविल पु० इलविलाया अपत्यम् अण् । कुवेरे ।

ऐशानी स्त्री० ईशानो देवताऽस्याः । उत्तरपूर्व्वदिशि ।

ऐश्वर्य्य न० ईश्वरस्य भावः । अणिमाद्यष्टविधविभूतिभेदे ।

ऐषमस् अव्य० अस्मिन् वत्सरे नि० । वर्त्तमानवत्सरे । [ज्ञाते

ऐहलौकिक त्रि० इह लोके भव ठञ् द्विपदवृद्धिः । इहलोक

ऐहिक त्रि० इह भव कालाट्ठञ् । इहलोकभवे गृहीतशरीरसम्बन्धिनि स्रक्चन्दनादिसुखानुभवादौ च ।

## ओ

ओक पु० उच-क नि० चस्य कः । पक्षिणि वृषले च ।

ओकस् न० उच-असुन् न्यङ्क्वादित्वात् कुत्वम् । गृहे आश्रयमात्रे च । [(उकुण) केशकीटे ।

ओकोदनी स्त्री०ओक आश्रयः मूर्द्धरूपम् अदनं भक्ष्यं यस्याः ।

ओख शोषणे, भूषणे, निवारणे च सक० सामर्थ्ये अक० भ्वा० पर० सेट् । ओखति औखीत् । [कृतस्थ्ये च ।

ओघ पु० उच-घञ् पृषो० घ । समूहे, जलवेगे, परम्परायां

ओङ्कार पु० अव-मन् तस्याकारलोपः, ऊठ् गुणः ओम् ततः स्वरूपे कार । प्रणवे । [औजिजत्-त

ओज बले अद० चुरा० उभ०अक० सेट् । ओजयति-ते

ओजस् न० उब्ज-असुन् बलोपे गुण । दीप्तौ अवष्टम्भे, प्राणबले, प्रकाशे, सामर्थ्ये, ज्योतिषोक्ते प्रथमतृतीयादौ विषमराशौ, शस्त्रादिकौशले, धातुतेजसि, ज्ञानेन्द्रियाणां पाटवे, काव्यगुणभेदे, गौडरीत्याम्, वैद्यकोक्ते 'भ्रमरैः फलपुष्पेभ्यो यथा सम्भ्रियते मधु । तद्वदोजः शरीरेभ्यो धातुः सम्भ्रियते नृणाम्" इति लक्षणे धातुरसपोषके वस्तुभेदे च । अच् । ओजशब्दोऽप्यत्र ।

ओजिष्ठ त्रि० अतिशयेनोजस्वी ओजस्विन् इष्ठन् मतो र्लुक् । अतितेजस्विनि सारतमे च । [(उडिधान) नीवारे ।

ओडिका स्त्री०उ-ड तस्य नेत्त्वम् गौरा०ङीप् स्वार्थे क ह्रस्वः ।

ओडी स्त्री०उ-ड तस्य नेत्त्वम् गौरा०ङीप् । (उडीधान)नीवारे

ओड्र पु०न०आ+ईषत् उनत्ति उन्द-रक् दस्य डः । जपापुष्पे

ओड्रपुष्प पु० ओड्रं पुष्पमस्य । जवावृक्षे ।

ओण अपसारणे भ्वा० पर०सक० सेट् । ओणति औणीत् ।

ओत त्रि० आ+वेञ्+क्त । अन्तर्व्याप्तौ 'ओतञ्च प्रोतञ्चेति' श्रुतिः । पटे दीर्घतन्तौ च ।

और्द्ध्वदेहिक त्रि० ऊर्द्धो देहः प्रेतदेहः तत्र भवं तस्मै देयं वा श्राद्धादि ठक्। मृतदिनमारभ्य सपिण्डीकरणान्तं क्रियमाणे जलदानश्राद्धादिलक्षणे कर्म्मकलापे। अनुशतादित्वात् द्विपदवृद्धौ और्द्ध्वदैहिकमप्यत्र।

और्व पु० ऊर्वस्यापत्यम् अण्। वाडवानले तस्यौर्वमुनिजातत्वात् तत्स्थानत्वे भूगोलस्य दक्षिणसीमायाम्। उर्व्यां भवः। पांशुलवणे।

औलूक न० उलूकानां समूहः अण्। पेचकसमूहे।

औलूक्य पु० वैशेषिकदर्शनकारके कणादमुनौ तच्छास्त्रवेत्तरि च।

औशनस न० उशनसा शुक्रेण प्रोक्तम् अण्। शुक्रप्रोक्ते उपपुराणादौ दण्डप्रणयनकर्मे शास्त्रे च।

औशीर न० वश-ईरन् किच्च तत प्रज्ञाद्यण्। समुदितयो शय्यापीठयोः।

औषध न० ओषधौ भवः अण्। रोगनाशके ओषधिभवे द्रव्ये, रोगहारके द्रव्यमात्रे च।

औष्ट्र न० उष्ट्रस्येदम् अण्। उष्ट्रदुग्धादौ।

औष्ट्रक न० उष्ट्राणां समूहः वुञ्। उष्ट्रसमूहे। [र्गादौ

औष्ठ्य त्रि० ओष्ठे भवः यत्। ओष्ठस्थानोच्चार्य्यमाणे उवर्णपव-

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिते शब्दस्तोममहानिधौ स्वरवर्णादिकाः शब्दाः समाप्ताः।

ओँतत्सत्।

---

कङ्काल पु० कं सुखं शिरो वा कालयति क्षिपति कल-अच् । त्वङ्मांसरहितशरीरारम्भकेऽस्थिसञ्चये ।

कङ्कालमालिन् पु० कङ्कालानां मालाऽस्त्यस्य इनि । रुद्रे ।

कङ्गु(ङ्गू) पु० ककि-उ । (काङ्नी) धान्यभेदे । पृषो० कस्य गः कङ्गुरप्यत्र । [लस्य द्वित्वे । कङ्कोलिरप्यत्र ।

कङ्कोल पु० कङ्कइव ईलति कङ्क+ईल-र । अशोकवृक्षे । पृषो०

कच रवे भ्वा०पर०अक०सेट् । कचति अकचीत् अकाचीत् ।

कच बन्धे,द्वेषे च भ्वा०पर०इदित् सक०सेट् । कञ्चति अकञ्चीत्

कच बन्धे सक० दीप्तौ अक० भ्वादि०आत्म०सेट् । कचते अकचिष्ट

कच पु० कच-अच् । केशे, वृहस्पतिपुत्रे, शुष्कव्रणे, मेघे च । हस्तिन्यां स्त्री० । भावे घ । बन्धे शोभायाञ्च ।

कचाचित त्रि० कच आचितो विकीर्णो यस्य । विकीर्णकेशे । 'कचाचितौ विष्वगि'ति भारवि' ।

कचामोद न० कचमामोदयति आ+मुद-णिच्-अच् । (वाला) इतिख्याते गन्धद्रव्ये । [निवपत्रिकाद्रि वृक्षे ।

कचु स्त्री० कच-उ । स्वनामख्याते (हरिद्रा मानकं कचुरिति)

कच्चर त्रि०कुत्सित चरति कु-चर-अच् कदादेश । मलिने । तक्रे न०

कच्चित् अव्य० काम्यते इति कम् चीयते निश्चीयते अर्थो यस्मात् कम्+चि-क्विप् पृषो० मस्य द । साभिलषितज्ञापनाय-क्वते प्रश्ने, हर्षे, मङ्गले च ।

कच्छ त्रि० कच-बन्धे-छ, केन जलेन छृणाति दीप्यते छृ-ड वा । जलप्राये देशे । तटे पुन्नागद्रुमे, नौकाङ्गे च पु० । परिधानाञ्चले, (काछा) वाराह्याम्, चीरिकायाञ्च (झिल्ली) स्त्री० ।

कच्छप पु० कच्छे पिवति पा-क । कूर्मे । स्त्रियां जातित्वात् ङीप् । मल्लयुद्धबन्धभेदे च ।

कच्छरुहा स्त्री० कच्छे जलप्रायदेशे रोहति रुह-क । दूर्वायाम्

कच्छुर त्रि०कच्छूरस्यास्ति र ह्रस्वश्च । कच्छूरोगवति । कुत्सितं छुरति कु+छुर-क कदादेश । परस्त्रीगामिनि । पुंश्चल्यां स्त्री०

कच्छू स्त्री० कचं दीप्तिं छ्यति छो-कू । कण्डूकारके रोगभेदे

कच्छूघ्नी स्त्री० कच्छूं हन्ति हन-टक् टित्वात् ङीप् । पटोलतायाम् । [(आलकुशी) शव्याम्, गन्धशट्याञ्च ।

कच्छुरा स्त्री० कच्छूं राति ददाति रा-क । शूकशिम्ब्याम्

कच्छाटिका स्त्री० कच्छया अटिका वेष्टनं वट धात्वर्थनिर्देशे वुञ् संप्रस०रणञ्च । कच्छावेष्टने । अर्श आद्यचि स्त्रीत्वात् टाप् कच्छवेष्टनयुक्तायां शाट्याम् ।

कज रोद्धे (सौत्र) इदित् पर०अक०सेट् । कञ्जति अकञ्जीत् ।

कज्जल न० कुत्सितमीषद्वा जलं नेत्रस्य यस्मात् कोः कद् । अञ्जने । तद्वर्णत्वात् मेघे पु० । मत्स्यभेदे स्त्री० टाप् ।

कज्जलरोचक पु० न० कज्जलं रोचयति रुच-णिच्-अच् । दीपाधारे (पिलसुज) । इति वङ्गभाषायां प्रसिद्धे ।

कञ्चिका स्त्री० कचि ण्वुल् । वंशशाखायाम् (कञ्ची) ।

कञ्चुक पु० कचि-उकन् । योधादेः चोलाकृतौ सन्नाहे लौहवर्मणि, निर्मोके (खोलस) स्त्रीणां चूलिकायां वस्त्रे च ।

कञ्चुकिन् पु० कञ्चुक+इनि । राजामात्य-पुराधिकारिणि द्वारपाले, सर्पे जारे, यवे, चणके च । आवद्धकवचे त्रि० ।

कञ्चुलिका स्त्री०कचि-उल गौरा०ङीप् स्वार्थे कन् ह्रस्वे टाप् । स्त्रीणां कूर्पासवस्त्रे (काचली) कनभावे । कञ्चुलीत्यप्यत्र ।

कञ्ज पु० कमित्यव्ययं जलादिवाचि तस्मिन् जले मूर्ध्नि वा जायते जन-ड । पद्मे, केशे, कारणजले शिष्टवीजजातत्वात् चतुरानने च । [तस्य कृष्णवर्णत्वेन केशतुल्यत्वात् ।

कञ्जक पु० कञ्जः केशइव कायति कै क । (मयना) पक्षिभेदे

कञ्जार पु० कं जलं जारयति जॄ-अण् । सूर्ये, ब्रह्मणि च । उदरे न० । अचि । कञ्जरोऽप्यत्र ।

कट गतौ भ्वादि०पर०सक०सेट् । कटति अकटीत् अकाटीत् ।

कट गतौ भ्वा० इदित् पर०सक०सेट् । कण्टति अकण्टीत् ।

कट गतौ भ्वा०पर०सक०सेट् । कटति अकटीत् अकाटीत् कट्टः

कट वृतौ वर्षणे च भ्वादि०पर०सक०सेट् । कटति अकटीत् ।

कट पु० कट-अच् कर्मणि घ वा । हस्तिगण्डस्थले, कटिपार्श्वे, नडादिरचिते आसने (मादुर)(टटमा) । अतिशये, काले, तृणे, शवे, शवरथे, ओषधौ, श्मशाने च । क्रियाकारके त्रि० । [कटुरोहिण्याम् । कटुवराप्यत्र ।

कटंवरा स्त्री० कटं वृणोति कट्+वृ-खच् मुम् च् । (कटकी)

कटक अस्त्री० कट-वुन् । मेखलाख्ये पर्वतमध्यभागे, वाङ्-भूषणे वलये,हस्तिदन्तमण्डले, चक्रे, सामुद्रलवणे, राजधान्याम्, सेनायाञ्च । [कामरूपिणि राक्षसे च ।

कटप्रू पु० कटं प्रवते प्रु-क्विप् दीर्घश्च । महादेवे, विद्याधरे,

कट(टि)प्रोथ प्रोथ-अच् कटस्य (कट्या वा) प्रोथोमांसपिण्डः । स्फिचि कटिदेशस्थोमांसपिण्डे, कव्याञ्च ।

कटभङ्ग पु० भनज-घञ् ह्त० । सैन्यभङ्गद्वारा राजविनाशे, धान्यानां हस्तच्छेदने च । [लतायाम्,अपराजितायाञ्च ।

कटभी स्त्री० कट इव भाति ड गौरा० ङीप् । ज्योतिष्मती-

कटम्भरा स्त्री० कट बिभर्त्ति भृ,खच् मुम् च् । (गन्धभादाल) राजवलायाम् । श्योनाकवृक्षे पु० ।

कटशर्करा स्त्री० कथ्यते आश्रियते कटं फलं तत् शर्करा खर्परेव यस्याः (लाटा) गाङ्गेष्टीलतायाम् ।

कटाक्ष पु० कटं गण्डं अक्षति व्याप्नोति अच् । अपाङ्गदृष्टौ ।

कटायन न॰ कटस्य तृणासनस्यायनमुत्पत्तिस्थानम्। वीरणमूले
कटाह पु॰ कटमाहन्ति आ-हन-ड। महिषीशिशौ, तैलादि पाकसाधनपात्रे, खर्परे नरके च।
कटि(टी) स्त्री॰ कट-इन्। श्रोणिदेशे (काँकाल)। कृदिकारान्तत्वात् वा ङीप्। [वर्म्मणि च।
कटित्र न॰ कटिं त्रायते त्रै-क। काञ्च्याम् कटिवस्त्रे कटि
कटिल्ल पु॰ कट-इल्ल। कारवेल्ले (करेला)।
कटिसूत्र न कर्म॰ धार्य्यं सूत्रं शाक॰। कटिधार्य्ये कार्पास-रचिते धातुमये वा सूत्रे (घुनसी गोट)। [मद्यो धार्य्यते
कटीतल पु कट्या तलमास्पदमस्य। वक्रखड्गे यतोऽसौ कटिदेशे
कटीर पु कट-ईरन्। जघने कन्दरे, च। कट्या न सज्ञाया कन् नितम्बे। तद्वत, शोणे, मत्स्यरिपि च त्रि
कटु न॰ कट-उ। दूषणे दुष्काय्ये रसभेदे (झाल) तद्वति त्रि॰। चम्पके चीनकर्पूरे, पटोले कटुकीलतायाञ्च स्त्री वा ङीप्।
कटुक पु॰ कटु स्वार्थे सज्ञाया वा कन्। पटोले, सुगन्धितृणे अर्कवृक्षे (आकन्द) कुटजवृक्षे (कुरची) राजसर्षपे (राइसर्षा) शुण्ठीपिप्पलीमरिचरूपे त्रिकटौ न। [सम्भूते च
कटुकन्द पु कटु कन्दो मूलं यस्य। शिग्रुवृक्षे (सजना) आर्द्रके,
कटुकफल पु कटुकं फलमस्य। कक्कोले।
कटुका स्त्री॰ कटु+सज्ञायां कन्। (कट्की) कटुरोहिण्याम्, ताम्बूल्यां राजिकायां,(राइसरषा) तिक्तालाबुके च (तितलाउ)
कटुकी स्त्री कटु+स्वार्थे कन् गौरा ङीष्। (कट्की) कटुकायाम्
कटुकीटक पु कटु कीट स्वार्थे कन्। मशके। [पत्रिणि।
कटुक्वाण पु॰ कटुर्लोकाणः क्वाणो यस्य। (तितिर) टिट्टिभ-
कटुग्रन्थि पु॰न॰। कटुर्ग्रन्थिरस्य। पिप्पलीमूले शुण्ठीमूले च
कटुच्छद पु॰ कटु च्छदं पत्रं यस्य। तगरवृक्षे (टगर)
कटुतिक्तक पु॰ कटुश्चासौ तिक्तश्चेति अल्पार्थे कन्। भूनिम्बे, शणवृक्षे च कटुतुम्ब्याम् स्त्री॰। टाप् अत इत्वम्।
कटुतुम्बी स्त्री॰ कर्म॰। (तितलाउ) लताभेदे। कटु तुम्बं फलमस्याः ङीप् कटुतुम्बिकाऽप्यत्र। [त्रिकमप्यत्र।
कटुत्रय न कटूनां त्रयम्। शुण्ठीपिप्पलीमरिचानां त्रये। कटु
कटुदला स्त्री कटु दलं यस्याः। (काँकड) कर्कट्याम्।
कटुफल पु कटु फलं यस्य। पटोले। श्रीवल्लीवृक्षे स्त्री।
कटुभद्र पु कटु भद्रं एकदेशो यस्य। शुण्ठ्याम्। कटुरपि भद्रं हितकारी कर्म्म॰ कटुभद्रोऽप्यत्र।
कटुमञ्जरिका स्त्री॰ कटुर्मञ्जरी यस्याः। अपामार्गे।
कटुर न॰ कटु विपाके कटुरसं राति रा क। तक्रे।
कटुरस पु॰ कटुर्लीक्ष्णो रसो धार्य्यस्य। भेके।

कटुरोहिणी स्त्री॰ कटु सती रोहति णिनि। कटुकायाम्
कटुवार्त्ताकी स्त्री॰ कर्म॰। श्वेतकण्टकारिकायाम्।
कटुवीजा स्त्री॰ कटुवीजं यस्याः। पिप्पल्याम्।
कटुस्नेह पु कटु स्नेह तैलादिरूपो निर्य्यासो यस्य। सर्षपे
कट्टार पु॰ कटौ क कट्वमावरणम् ऋच्छति ऋ-अण्। (काटार) अस्त्रभेदे। कट-ण्वुल् कट्टारकोऽप्यत्र।
कट्फल पु कट क्विप् कट् फलं यस्य। (कायफल) श्रीपर्णी-वृक्षे गाम्भार्य्याम् (गामार) कुम्भ्याम्,कारमार्य्याम्,वार्त्ताक्याञ्च
कट्वर न कट ष्वरन्। तक्रे, दधिसरे व्यञ्जने च।
कट्वी स्त्री॰ कटु+गुणवचनत्वात् ङीप्। (कट्की) कटुकायाम्।
कठ आध्याने (उत्कण्ठापूर्व्वकस्मरणे) वा चुरा॰ उभ॰ पक्षे भ्वा॰ पर सक सेट् इदित्। कण्ठयति ते कण्ठति। अचकण्ठत् त अकण्ठीत्। [अकाठीत्।
कठ कृच्छ्रजीवने भ्वादि॰ पर अक सेट्। कठति अकठीत्
कठ आध्याने उत्कण्ठापूर्व्वकस्मृतौ इदित् भ्वा॰ आत्म सक॰ सेट्। प्रायेणोत्पूर्व्व। उत्कण्ठते उत्कण्ठिष्ट। [तरि च।
कठ पु॰ कठ-अच्। मुनिभेदे कृष्णवेदीयशाखायाम् तच्छाखाध्ये
कठाकु पु॰ कठ आकु। पक्षिभेदे।
कठिञ्जर पु॰ कठ-इन् कठि कठिनं जरयति जॄ+णिच अच्। पृषो॰ मुम् च। तुलस्याम् पलाशवृक्षे वर्व्वरायाञ्च। [स्त्री
कठिन त्रि॰कठ-इनच्। क्रूरे निष्ठुरे कठोरे स्तब्धे च स्थाल्याम्
कठिनपृष्ठ पु॰ कठिनं पृष्ठमस्य। कच्छपे।
कठिनी स्त्री॰ कठिन+गौरा॰ ङीष्। वर्णलेखनसाधने द्रव्ये। खटिकायाम्। कठिनो विग्रीतो'ति नैषधम् स्वार्थे कन् अल्पार्थे। [त्राक्छनक्कठिनिरिति माघ।
कठोर त्रि॰ कठ-ओरन्। कठिने पूर्णे च। कठोरताराधिप
कड भेदने रक्षणे च चुरा॰ इदित् उभ॰सक॰ सेट्। कण्डयति ते अचकण्डत त। [ण्डीत् अकण्डिष्ट।
कड हर्षे भ्वा॰ इदित उभ॰ सक॰ सेट्। कण्डति ते अक-
कड भक्षणे तुदा पर॰सक॰सेट। कडति अकाडीत अकडीत्।
कडक न॰ कड-अच् सज्ञायाम् कन्। (करकच) लवणभेदे।
कडङ्गर न॰ कडं गिरति गृणाति वा अच् नि मुम्। माषमुद्गादिकाण्डे (आगडा) बुसे।
कडङ्गरीय त्रि॰ कडङ्गरमर्हति। बुसभक्षणयोग्ये गवादौ।
कडम्ब पु॰ कड-अम्बच्। शाकनाडिकायाम् (डाँट) कोणे, मान्यभागे च।
कडम्बी स्त्री॰ कडम्बो भूयसा विद्यतेऽस्याः अर्श आद्यच् गौरा॰ ङीष्। (कमभी) शाकभेदे तस्याः कडम्बभूयस्त्वात्।

**कनकक्षार** पु० कनकस्य तद्द्रावणाय क्षारः। (सोहागा) टङ्के तत्सम्पर्कात् हि झटिति कनकं द्रवति।

**कनकच्छत्र** न० कनकदण्डं छत्रं यस्य शाक०। राजच्छत्रे।

**कनकप्रसवा** स्त्री० कनकमिव प्रसवः पुष्पं यस्याः। स्वर्ण-केतक्याम्।

**कनकरस** पु० कनकमिव रसो यस्य। हरिताले।

**कनकलोद्भव** पु० कनतीति कना दीप्ता कला अवयवः तया उद्भवति उद्+भू-अच्। (धूना) सालनिर्यासे।

**कनकाचल** पु० कर्म्म०। सुमेरुपर्व्वते, धान्याचलादिषु दश्सु दानीयपर्व्वतेषु मध्ये दानीये स्वर्णपर्व्वते च।

**कनकाध्यक्ष** पु० ७त०। सुवर्णरक्षणादावधिकृते।

**कनकारक** पु० कनकं दीप्तं यथा तथा गच्छति सर्व्वतो व्याप्नोति ऋ-ण्वुन्। कोविदारवृक्षे।

**कनकालुका** स्त्री० कनकनिर्म्मिता आलुः संज्ञायां कन्। भृङ्गारे (झारी) सौवर्णकलसे च।

**कनखल** पु० तीर्थभेदे।

**कनिष्ठ** त्रि० अयमेषामतिशयेन अल्पो युवा वा इष्ठन् कना-देशः। अतियूनि, अत्यल्पे, अनुजे च। अनुजाया सर्व्वा-भ्यः क्षुद्राङ्गुलौ च स्त्री० टाप्। कनिष्ठभ्रातुः पत्न्यामपि अजादित्वात् टावेव।

**कनी** स्त्री० कन-अच् गौरा० ङीष्। दुहितरि।

**कनीनिका** स्त्री० कन-ईन संज्ञायां कन् टाप् अत इत्वम्। अक्षितारायां, कनिष्ठाङ्गुलौ च।

**कनीयस्** त्रि० अयमनयोरतिशयेन युवा अल्पो वा ईयसु कनादेशः। द्वयोर्मध्ये अल्पतरे, युवतरे, अनुजे च। स्त्रियां ङीप्।

**कनीयस** न० कनी दीप्तिं तस्मै यस्यति यस-अच्। ताम्रे।

**कन्तु** पु० कम-तु। कामदेवे। हृदये न०। कं सुखमस्तीति कम्+ अस्त्यर्थे तु। सुखवति त्रि०। [वस्त्रखण्डे। (काथा)

**कन्था** स्त्री० कम-थन्। मृण्मयभित्तौ (काथ) स्यूतग्रथितजीर्ण-

**कन्थारी** स्त्री० अतिकण्टकावृतत्वात् कन्थामपि ऋच्छति वेधनेन प्रविशति ऋ-अण्। दुष्प्रवेशाख्ये वृक्षे।

**कन्द** पुं०न० कन्दति कन्दयति कन्द्यते वा कदि-अच् णिच्,अच्, वञ् वा। सूरणे (ओल) शस्यमात्रमूले, गृञ्जने च (गाजर) मेघे पु०। [(सुथ्नी) इति ख्याते कन्दे च।

**कन्दगुडूची** स्त्री० कन्दोद्भवा गुडूची शाक०। गुडूचीभेदे,

**कन्दट** न० कदि-अटन्। श्वेतोत्पले। [(उच्छा)

**कन्दफला** स्त्री० कन्दात् फलं यस्याः। क्षुद्रकारवेल्लायाम्।

**कन्दर** पु० स्त्री० कम् जलेन दीर्य्यते कम्+दृ-अच्। दरी-कारे गिरिनितम्बदेशे गुहायाम्, स्त्रीत्वे टाप् ङीप् च। अङ्कुशे पु०। आर्द्रके न०।

**कन्दराकर** पु० ६त०। पर्व्वते।

**कन्दराल** पु० कन्दरा+अस्त्यर्थे लच्। गर्द्दभाण्डवृक्षे प्लक्ष-वृक्षे (पाकुड) अक्षोट वृक्षे च। [पाषाणभेदीवृक्षे।

**कन्दरोद्भवा** स्त्री० कन्दरे उद्भवति उद्+भू-अच्। क्षुद्र-

**कन्दर्प** पु० कम् सुखं तेन तत्र वा दर्पयति कम्+दृप+अच्, कम् कुत्सितो दर्पोऽस्मात् वा। कामदेवे।

**कन्दर्पकूप** पु० कन्दर्पस्य कूप इव। स्त्रीचिह्नभेदे।

**कन्दर्पजीव** पु० कन्दर्पं जीवयति उद्दीपयति जीव णिच् अण्। कामवर्द्धननामकवृक्षे।

**कन्दर्पमुषल** पु० कन्दर्पस्य मुषल इव। पुरुषचिह्नभेदे।

**कन्दल** न० कदि-कलच्। कपाले नवाङ्कुरे, कलध्वनौ अप-वादे, कन्दलीनतापुष्पे च। कनके, युद्धे कलापे च पु०।

**कन्दली** स्त्री० कन्दे लीयते ली-ड, कदि-कलच् वा गौरा० ङीष्। मृगभेदे गुल्मभेदे, पताकायाम्, पद्मबीजे, भूमिकदल्याञ्च।

**कन्दलीकुसुम** न० ६त०। भूमिकदलीपुष्पे, छत्राके च

**कन्दवर्द्धन** पु० कन्देन वर्द्धते वृध-ल्यु। सूरणे (ओल)

**कन्दवल्ली** स्त्री० कन्दादारभ्य वल्ली। वन्ध्याकर्कोट्याम्।

**कन्दसूरण** पु० कन्दप्रधानः सूरणः शाक० (ओल) सूरणे

**कन्दु** पुं०स्त्री० स्कन्द उ सलोप। (ताओया) स्वेदनीपात्रे कन्दुपक्वं तैलपक्वमिति स्मृतिः तण्डुलादेः भर्ज्जनपात्रभावे च गोकुले कन्दुशालायामिति स्मृतिः। [ति कुमारः।

**कन्दुक** पु० कदि-उक। गेन्दुके,'सा कन्दुकैः कलितपुत्रकैर्य्यैः'

**कन्दुपक्व** त्रि० जलोपसेकं विना कन्दुपात्रे पक्वं तण्डुलादि। शुष्कतया भृष्टतण्डुलादौ। कन्दुपक्वानि तैलेनेत्यादिस्मृतिः।

**कन्दोट** पु० कदि-ओटन्। श्वेतोत्पले। नीलोत्पले न०।

**कन्दोत** पु० कन्दे मूले उतः वेञ्-क्त। कुमुदे।

**कन्धर** पु० कम् जलम् धारयति धरः। मेघे। कम् शिरस्तस्य धरा। ग्रीवायाम् स्त्री०।

**कन्धि** पु० कम् शिरो धीयतेऽस्मिन् कम्+धा-कि। ग्रीवायाम्।

**कन्न** न० कद-क्त। पातके, मूर्च्छायाञ्च।

**कन्यका** स्त्री० अज्ञाता कन्या कन्या+अज्ञातार्थे कन् क्षिपकादि-त्वात् नेत्वम्। 'कन्यका दशमे प्रोक्तेति स्मृत्युक्तायां दश-वर्षायां कुमार्य्याम्।

**कन्या** स्त्री० कन-यत् कन्यायाः कनीन् चेति निर्देशात् वयसि प्रथम इति न ङीप्। अनूढायां कुमार्य्याम्, मेषादितः षष्ठे राशौ च।

**कम्बोज** पु॰ कवि ओज। हस्तिभेदे शङ्खभेदे "पञ्चनद समारभ्य म्लेच्छाद्दक्षिणपूर्वतः कम्बोजदेश" इत्युक्तदेशे च।

**कम्बुतायिन्** पु॰ कम्बुरिव तायी। शङ्खतुल्यश्वेतपृष्ठकाये शङ्खचिल्ले। [व्याम् (गाभार)।

**कम्भारी** स्त्री॰ क जलं बिभर्त्ति क+भृ अण् उप॰। गाम्भा-

**कम्र** त्रि॰ कम-णिङभावपक्षे र। मैथुनेच्छावति कामुके मनोहरे च

**कर** पु॰ कृ-अप्, कॄ अच् वा। हस्ते किरणे, राजग्राह्ये राजस्वे, वर्षोपले, मत्स्ये, हस्तिहस्ते, हस्तनक्षत्रे च। किञ्चित्कर्म्मोपपदे तत्कर्म्मकारके। यथा कर्म्मकरः यशस्कर

**करक** पु॰ कृ वुन्। करङ्कवृक्षे, पक्षिभेदे, दाडिमवृक्षे कोविदारवृक्षे बकुलवृक्षे, करीरे नारिकेलास्थ्नि च (नारिकेलेर खोल)। कमण्डलौ पु॰न॰। कर-स्वार्थे कन्, वर्षोपले (शिल) पु॰स्त्री॰। स्त्रियां गौरा॰ ङीष् करकी।

**करकङ्कणन्याय** पु॰ कङ्कणशब्दस्य करभूषणार्थकत्वेऽपि यथा करशब्दप्रयोगस्तत्र तत्तदन्यनार्थोतनार्थ तद्रूपे दृष्टान्ते।

**करकण्टक** पु॰ करस्य कण्टक इव। नखे।

**करकाजल** न॰ करकाया जलम् ६त॰ (बरफ) करकासन्दिजले

**करकाम्भस्** पु॰ करकाया अम्भ इवाम्भो यस्य। नारिकेले।

**करग्रह** पु॰ करस्य वधूकरस्य वरेण ग्रहो ग्रहणं यत्र। विवाहे

**करग्रहारम्भ** पु॰ करस्य राजग्राह्यस्य ग्रहणं प्रजाभ्य आदानं तस्यारम्भः। वार्षिककरस्य प्रथमादानारम्भे (पुण्याह)

**करङ्क** पु॰ कीर्य्यते द्रव्यमत्र कृ-अप् करोऽङ्को गर्भोऽस्य यक॰। नारिकेलास्थ्नि (खोल) मस्तकखर्परे (माथारखुली), कमण्डलौ पात्रभेदे च 'ताम्बूलकरङ्कवाहिनी'ति कादम्बरी।

**करच्छद** पु॰ कर इवाकरमच्छदोऽस्य। शाखोटवृक्षे (शिहोडा)

**करज** पु॰ करे जायते जन-ड। नखे व्याघ्रनखाख्यगन्धद्रव्ये (नखी) च। क शिरः जलं वा रञ्जयति रन्ज णिच्-अण् नि॰। (करमचा) करञ्जवृक्षे। [व्याते वृक्षे।

**करञ्ज** पु॰ क शिरः जलं वा रञ्जयति अण्। (करमचा) इति

**करञ्जफल** पु॰ करञ्जस्य फलमिवाम्लं फलं यस्य। कपित्थे (कायतबेल)। [दु खेन दोह्यायां गवि स्त्री टाप्।

**करट** पु॰ कृ-अटन्। गजगण्डे, काके कुसुम्भवृक्षे च।

**करटिन्** पु॰ करट गजगण्डः तत्र मदस्त्यस्य इनि। हस्तिनि।

**करटु** पु॰ कृ-अटु। (करकटिया) इति नामके विहगे।

**करण** न॰ कृ ल्युट्। क्रियानिष्पत्तौ साक्षात् अव्यवधानेन साधने व्याकरणोक्ते कारकभेदे वर्णे, क्षेत्रे, देहे, इन्द्रिये, गात्रे च, करणं यस्य कानिमभयेति तुषार। भावे ल्युट्। क्रियायाम् न॰। ज्योतिषोक्तेषु ववबालवादिषु-

कादशसु तिथ्यर्द्धेषु, वैश्येन शूद्रायामुत्पादिते जातिभेदे च (करणकायस्थ) पु॰।

**करणाधिप** पु॰ करणानामिन्द्रियाणामधिपः। जीवे आत्मनि।

**करण्ड** पु॰ कृ-अण्डन्। मधुचक्रे (मौचाक), खड्गे, कारण्डवे विहगे, वंशादिरचिते पुष्पपात्रे (साजी), समुद्गे च (कौटा), मसृति रोगे स्त्री॰ टाप्।

**करतल** पु॰ ६त॰। हस्तस्य मध्ये, हस्ते च।

**करताल** न॰ तल-प्रतिष्ठायां घञ् करे तालो यस्य। वाद्यभेदे (करताल) तद्धि करे स्थापयित्वैव वाद्यते।

**करताली** स्त्री॰ करौ ताल्येते यत्र ताड घञ् ६त॰ गौरा॰ ङीष् डस्य ल। करतलध्वनौ।

**करतोया** स्त्री॰ करस्य गौरीविवाहकाले शिवकरस्थ तोयात् सम्भूतं तोयं यस्याः। कामरूपदेशे समाख्यातायाम् नद्याम्।

**करपत्र** न॰ करात् पतति-पत ष्ट्रन्। (करात) क्रकचे दारुभेदके शस्त्रभेदे। करावेव पत्रं वाहनं यत्र। जलक्रीडायाम्। तत्र हि हस्ताभ्यां परस्परस्योक्षणं क्रीयते।

**करपत्रवत्** पु॰ करपत्रमिव पत्रमस्त्यस्य मतुप्। ताल वृक्षे। [इतीरकाष्ठे च।

**करपर्ण** पु॰ कर हस्त इव पर्णं यस्य। (भ्येट) भिण्डातकवृक्षे

**करपल्लव** पु॰ करस्य हस्तस्य पल्लव इव। अङ्गुलौ।

**करपात्र** न॰ कर एव पात्रं जलनिक्षेपपात्रं यत्र। हस्ताभ्यामुत्क्षिप्य परस्परजलदानक्रीडने। कर्म॰। हस्तरूपे पात्रे

**करपाल** पु॰ कर पालयति पाल अण्। खड्गे। अजाद्या तत्त्वात् टाप् अतद्रत्वम्। हस्तयष्टौ। (सोटा) स्त्री॰ ङीप्।

**करपीडन** न॰ करस्य वधूकरस्य वरेण पीडनं ग्रहणेन मर्द्दनं यत्र। विवाहे। [गतिर्यस्य। खड्गे।

**करबाल** पु॰ करस्य बाल इव शिशुरिव। नखे। करे वालो

**करभ** पु॰ कृ अभच् करे भाति भा क वा। मणिबन्धात् कनिष्ठपर्य्यन्ते करस्य बाह्यदेशे, करिशावके, उष्ट्रशिशौ (नखी) नामगन्धद्रव्ये, उष्ट्रे च। 'करभकण्ठकडार'मिति माघ

**करभप्रिया** स्त्री॰ करभस्य उष्ट्रस्य प्रिया। दुरालभायाम्। (यावकुशी)।

**करभवल्लभ** पु॰ ६त॰। उष्ट्रप्रिये पीलुवृक्षे, कपित्थवृक्षे च।

**करभादनी** स्त्री करभैः उष्ट्रैरद्यते अद कर्म्मणि ल्युट् टित्त्वात् स्त्रियां ङीप्। दुरालभायाम्। (यावकुशी)

**करमर्द्द** पु कर मृद्नाति मृद-अण्। (करमचा) करञ्जवृक्षे। स्वार्थे कन् करमर्द्दकोऽप्यत्र। तत्पर्य्याये हि करकण्टुरिति रसरत्नाकरम्

**करमर्द्दन** पु० करं मृद्नाति मृद-ल्यु। (करमचा) करम्रहचे।
**करमाला** स्त्री० करः कराङ्गुलिपर्व्व मालेव जपसंख्याङ्केतत्वात्। 'आरभ्यानामिकामध्यं दक्षिणावर्त्तयोगत। तर्ज्जनीमूलपर्य्यन्तं करमाला प्रकीर्त्तितेत्युक्तलक्षणाया जपसंख्यार्थं कराङ्गुलिपर्व्वरूपायां मालायाम्। [अश्वभेदे।
**करमुक्त** न० करेण मुच्यते शत्रुं प्रति क्षिप्यते मुच-क्त।(वडशी)
**करम्ब** त्रि० कृ-अम्बच्। मिश्रिते। मिश्रणे पु०।
**करम्बित** त्रि० करम्बो मिश्रणं जातोऽस्य इतच्। मिश्रिते मधुकरनिकरकरम्बितेति जयदेवः। [दधिमिश्रितसक्तुषु।
**करम्भ** पु० केन जलेन रभ्यते मिश्र्यते रभ-घञ् मुम् च।
**कररुह** पु० करे रोहति रुह-क। नखे। [खड्गे (तरवार)
**करवाल** पु० करं वालयति रक्षति णि०वल-पालने अण्। क-
**करवीर** पु० करं वीरयति णि० वीर-विक्रान्तौ अच्। श्मशाने खड्गे, स्वनामख्याते वृक्षे,श्मशाने, देशभेदे च।
**करवीरक** पु० करवीर इव कायति कै-क। अर्ज्जुनवृक्षे। स्वार्थे कन्। करवीरार्थे। [(अरहर)
**करवीरभुजा** स्त्री० करवीरस्येव भुजा यस्याः। आढक्याम्।
**करशाखा** स्त्री० करस्य शाखेव। अङ्गुलौ। [निर्गते जलकणे
**करशीकर** पु० करस्य हस्तिहस्तस्य शीकरः। हस्तिहस्तात्
**करसूक** पु० करस्य सूक सूचीव। नखे।
**करसूत्र** न० ६त०। विवाहादौ हस्ते मङ्गलार्थं बध्यमाने सूत्रे।
**करहाट** पु० करं हाटयति दीपयति हट-दीप्तौ णिच्-अण्। पद्मादिमूले,मदनद्रुमे, पिण्डीतरौ, देशभेदे च।
**करहाटक** पु० करं हाटयति हट-दीप्तौ णिच् ण्वुल्। मदन वृक्षे। ६त०। हस्ताभरणे सुवर्णे। [(करमचा)
**करामर्द्द** पु० करमामृद्नाति आ+मृद-अण् उप०। करमर्द्दे
**कराल** त्रि०कृ-अप् करो विक्षेप तस्मै अलति पर्य्याप्नोति अल-पर्य्याप्तौ-अच्। विकटे भयानके। तैलभेदे (गर्ज्जनतैल)। सर्जरसयुक्ततैले, (तेलधुना) च न०। दन्तुरे, उच्चे च त्रि०। (अनन्तमूल) वृक्षभेदे पु०।
**करास्फोट** पु० करेण आस्फोट शब्दो यत्र। वक्षस्थले सङ्कुचितरूपेण स्थापिते एकबाहौ इतरकरस्याघातेन शब्दकरणे (तालठोका)। ३त० बाह्वास्फोटे।
**करिक** पु० कृ-इक। विट्खदिरे। [च।
**करिणी** स्त्री०करिन्-ङीप्। हस्तिन्या धेनुकायाम् देवताभेदे
**करिदारक** पु० करिणं दारयति विनत्ति दृ-ण्वुल्। सिंहे।
**करिन्** पु० कर शुण्डादण्ड अस्त्यर्थे इनि। हस्तिनि।
**करीर** पु० कृ ईरन्। घटे। वंशाङ्कुरे, हिमागुवंशस्य करीरमेङ्गेति नैषधम्। झिल्लीयाम्, हस्तिदन्तमूले च स्त्री०।
**करीष** पु० न०। कृ-ईषन्। शुष्कगोमये। [वात्यायाम्।
**करीषङ्कषा** स्त्री० करीषं कषति कष-हिंसायाम् खच् मुम् च।
**करुण** पु० कृ-उनन्। करुणाख्ये रसभेदे करुणाख्ये वृक्षे च। 'दशाशुद्दश्चतुरूकरुणे' इति नैषधम्। दीने करुणावेदके त्रि०, करुणान्विते च त्रि०। दयायां स्त्री० टाप्।
**करुणाविप्रलम्भ** पु० करुणरसान्वितो विप्रलम्भः। शृङ्गारप्रभिदे शृङ्गाररसमध्ये विप्रलम्भभेदे साहि० ३ परि०।
**करुणापर** त्रि० करुणाया पर आसक्त० करुणा परा वा यस्य। अत्यन्तकरुणायुक्ते। [स्त्रियां करुणामयी।
**करुणामय** त्रि० करुणा+प्राचुर्य्ये मयट्। प्रचुरकरुणावति
**करूष** पु० कृ+ऊष। देशभेदे। [बके।
**करेटु** पु० के जले रेटति रेट-कु। (करकटिया) इति ख्याते
**करेणु** पु० कृ-एनु। गजे। हस्तिन्यां स्त्री०।
**करोट** पु०न० के शिरसि रोटते रुट्-द्युतौ अच्। शिरोऽस्थि। इन्। करोटिरप्यत्र स्त्री० वा ङीप्।
**कर्क** हासे सौत्र पर०अक० सेट्। कर्कति अकर्कीत्।
**कर्क** पु० करोति करोति क्रियते वा यथायथं वाम्यम् कृ-क तस्य नेत्वम्। वह्नौ, श्वेताश्वे, दर्पणे, कुलीरे, कर्कटवृक्षे, कण्टके, मेषादितश्चतुर्थे राशौ च। घटे पु०स्त्री० वा ङीप्।
**कर्कट** पु० सौत्र-कर्क-अटन्। क्षुद्रमलके, कर्कटे, कर्कराटौ पक्षिणि, जलजन्तुभेदे कुलीरे, (काकडा) मेषादितश्चतुर्थे राशौ, शाल्मलीवृक्षे च। स्वार्थे कन् कर्कटकोऽप्येष्वर्थेषु, इक्षुभेदे च।
**कर्कटशृङ्गी** स्त्री० कर्कट इव शृङ्ग यस्याः। (काकडाशिङ्गा) वृक्षभेदे। स्वार्थे कन् कर्कटशृङ्गिकाप्यत्र।
**कर्कटि** स्त्री० कर्कं कण्टकमटति इन् शक०। (काकुड) इर्व्वारौ शाल्मलीवृक्षे च। वा ङीप् अत्रार्थे, कर्कटशृङ्ग्यां च।
**कर्कटु** पु० सौत्र-कर्क-अटु। करेटुपक्षिणि (करकटिया)। [(कुल)
**कर्कन्धू** स्त्री० कर्कं कण्टकं दधाति धा-कू नि० मुम्। वदर्याम्
**कर्कर** पु० कर्क-हासे-अरन्। दर्पणे, चूर्णपाषाणखण्डे कङ्करे, (काकर) मुद्गरे च। घञ्। कर्कं हासं राति रा-क दृढे कठिने त्रि०।
**कर्कराङ्ग** पु० कर्करं कठिनमङ्गं यस्य। खञ्जने पक्षिणि।
**कर्कराम्बुक** पु० कर्कर कठोर० अतिशयितान्धकारवत्त्वात् अम्बु कूप संज्ञाया कन्। अत्यन्तान्धकारवति कूपे।
**कर्करी** स्त्री० कर्कं हासं राति रा-क गौरा० ङीप्। (भारी) सनालजलपात्रे,कर्न्दोर्घृतादिपक्वनिष्काशनसाधने (भाजरा)

पात्रे च। कर्क+रा-इक। कर्करीकोऽप्यत्र।

**कर्करेटु** पु० कर्केति शब्दं रेटते भाषते रेट-भाषणे उ। (कट्कन्यिा) इति ख्याते खगे।

**कर्कश** पु० करे कशति कश-शब्दे अच् पृषो० कर्कं काठिन्यम् अस्त्यर्थे श। कृ क्षेपे क्विप् कर् कश-हिंसायां अच् कर्म्मा० वा। करञ्जे (करमचा) काशमर्दे, इक्षौ खड्गे, खरस्पर्शे च। साहसिके, क्रूरे, निर्दये, खरस्पर्शवति च त्रि।

**कर्कशच्छद** पु० कर्कशः छदः पत्रमस्य। (सिहोडा) शाखोट वृक्षे पटोले च। कर्कशदलोऽप्यत्र। कोषातक्यां स्त्री० टाप्

**कर्कसार** न० कर्कं हासं श्वेततां सरति गच्छति सृ अण्। करम्भे (दधिमिश्रितसक्तौ)। [कुष्माण्ड्यां स्त्री० वा ङीष्।

**कर्कारु** पु० कर्कं हासं श्वेततामृच्छति ऋ-उण्। कुष्माण्डे।

**कर्कोट** पु० कर्क-ओट। सर्पभेदे, स्वार्थे कन्। 'कर्कोटको नाम सर्पो यो दृष्टिविष उच्यते' इत्युक्तलक्षणे सर्पे बिल्ववृक्षे शमी, (काकरोल) ख्याते वृक्षे च। [घोषातक्याम्।

**कर्कोटकी** स्त्री कर्क ओट ण्वुल् कन् गौरा० ङीष्। पीत

**कर्कोटी** स्त्री० कर्क ओट गौरा० ङीष्। (काकुड) कर्कट्याम् कुष्माण्ड्याञ्च। स्वार्थे कन्। कर्कोटिकाप्यत्र।

**कर्चूर** पु० कर्च्च-ऊर पृषो०। (कर्पूर) गन्धद्रव्ये, शठ्यां च।

**कर्ज** पीडायाम् भ्वा० पर० सक० सेट्। कर्जति अकर्जीत्।

**कर्ण** भेदने अदन्त चुरादि० उभ० सक० सेट्। कर्णयति ते अचकर्णत् त। आ श्रवणे आकर्णयति ते।

**कर्ण** पु० कॄ-नन् कर्ण-भेदने, अप्, कीर्य्यते शब्दग्रहणाय कृ-नन् वा। श्रोत्रेन्द्रिये अरित्रे नौनियामके, अङ्गदेशाधिपे पृथासुते सूर्य्यात्मजे त्रिभुजक्षेत्रे भुजकोटिभिन्नायां तिर्य्यग्रेखायाञ्च।

**कर्णकीटी** स्त्री० कर्णयति भिनत्ति अच् कर्णः स चासौ कीट अल्पार्थे ङीष् कीटी कर्म्म०। (कानड़ाक) शतपद्याम्।

**कर्णगथ** न० ६त०। कर्णमले।

**कर्णजलूका** स्त्री कर्णे जलूकेव। शतपद्याम (कानटार) कर्णजलौकस् इत्यप्यत्र। [जाहविलोचनेति भट्टिः।

**कर्णजाह** न० कर्णस्य मूलम्। कर्ण+जाहच्। कर्णमूले 'कर्ण

**कर्णधार** पु० कर्णं नौकागतिनिरूपणदण्डं (हाल) धारयति धृ-णिच्-अण्। नाविके (काण्डारि)। [कर्णभूषणभेदे।

**कर्णपाली** स्त्री० कर्णं पालयति पालि अण्। (कानपाला)

**कर्णपुष्प** पु कर्ण इव पुष्पं यस्य। मोरटालतायाम।

**कर्णपूर** पु० कर्णं पूरयति पूर-अण्। कर्णाभरणे, नीलोत्पले, शिरीषवृक्षे अशोकवृक्षे च एतेषां पुष्पैः स्त्रीकर्णस्य भूषा।

**कर्णपूरक** पु० कर्णं पूरयति ण्वुल्। कर्णपूरार्थे।

**कर्णमल** न० ६त०। कर्णस्थे मलाकारे पदार्थे (कानेर खल)

**कर्णवर्ज्जित** त्रि० ३त०। बधिरे (काला) श्रोत्रशून्ये। सर्पे पु०

**कर्णवेध** पु विध-घञ् ६त०। कर्णवेधनरूपे संस्कारभेदे।

**कर्णवेष्ट** पु० कर्णो वेष्ट्यते अनेन। कुण्डले। ण्वुल् कर्णवेष्टकोऽप्यत्र। भावे ल्युट्। कर्णवेष्टने न०।

**कर्णशष्कुली** स्त्री० कर्णस्य शष्कुलीव। कर्णगोलके, तन्मध्याकाशे च 'अवलम्बितकर्णशष्कुली'ति नैषधम्।

**कर्णशूल** न० ६त०। कर्णरोगभेदे। [लताभेदे।

**कर्णस्फोटा** स्त्री० कर्णे स्फोटो विदारणं यस्याः। (कानफाटा)

**कर्णाट** पु० 'रामनाथं समारभ्य श्रीरङ्गान्तं किलेश्वरि। कर्णाटदेश इत्युक्तदेशे काव्यरीतिभेदे, स्त्री० ङीप्।

**कर्णाभरणक** पु० कर्णाभरणमिव कायति पुष्पद्वारा। आरग्वधे वृक्षे। (सोन्दाल) [कर्णपालने।

**कर्णास्फाल** पु० आ+स्फुर-णिच् स्फालादेश ६त०। करिणः

**कर्णि** पु० कर्ण इनु। शरभेदे कण्टकारिकायां स्त्री० वा ङीप्।

**कर्णिका** स्त्री० कर्ण ण्वुल्। करशाखायाम्, करमध्याङ्गुलौ बीजकोषे पद्मवराटे, लेखन्याम्, कुट्टिन्याम् अग्निमन्थवृक्षे अजशृङ्गीवृक्षे च। कर्ण+भूषणे इकन्। कर्णभूषणभेदे।

**कर्णिकार** पु० कर्णिकामृच्छति ऋ-अण् उप। (कणियारी) वृक्षभेदे, आरग्वधवृक्षभेदे च (छोट सोन्दाल)।

**कर्णीरथ** पु कर्णे सामीप्येनास्त्यस्य कर्णी स्कन्धः तत्र ईः शोभा यस्य न समासान्त कप् स चासौ रथी रथतुल्य वाहनं कर्म्म०। स्कन्धवाह्ये याने (पालकी) इत्यादौ।

**कर्णेसुत** पु० कर्ण्यां कस्मात् सुत। कथान्तरे।

**कर्णेजप** पु० कर्णे जपति जप अच् सप्तम्या अलुक्। सूचके पिशुने, खले च। [अचकर्त्तत त।

**कर्त्त** शैथिल्ये अद० चुरा० उभ० सक० सेट्। कर्त्तयति त

**कर्त्तन** न कृती छेदने कृत-ल्युट्। छेदने। तूलपिण्डात् सूत्रनिष्काशनव्यापारे (काटना काटा)

**कर्त्तरी** स्त्री कृत-अच् कं। राति रा-क गौरा० ङीष्। छुरिकायाम्, पत्रीकृतहिरण्यादि छेदनसाधने (कातारी) कनकादिकर्त्तनसाधने (काचि) अस्त्रे 'क्रूरमध्यगतश्चन्द्रो लग्नं वा क्रूरमध्यगम्। कर्त्तरी नाम योगोऽयमिति ज्योतिषोक्ते योगभेदे च।

**कर्त्तृ** त्रि कृ तृच्। कारके व्याकरणोक्ते कारकान्तरप्रयोक्तरि क्रियाश्रये स्वतन्त्रे तत्प्रयोजके च। चतुरानने पु०।

**कर्त्तृका** स्त्री० कृत तृच् इडभाव स्वार्थे कन्। अस्त्रभेदे।

**कर्द्द** शैथिल्यकरणे अद० चुरा० उभय० सक० शैथिल्ये अक०

सेट्। कर्त्तयति ते अचकर्त्तत् त। क्त कर्त्तितः।
कर्त्तरी स्त्री० कर्त्त-अच् गौरा० ङीष्। (काटार) इति ख्याते अस्त्र-
भेदे। कृ-तृच् कारिकायां स्त्रियां स्त्री० ङीप्। [अकर्द्दीत्
कर्द्द कुत्सितरवे उदरशब्दे च भ्वा०पर०अक० सेट्। कर्द्दति
कर्द्द पु० कर्द्द-अच्। कर्द्दमे।
कर्द्दट पु० कर्द्द-अटन्। पद्मकेशरे, पङ्के च।
कर्द्दम पु० कर्द्द-अम्। पङ्के,पापे, ब्रह्मणश्छायायामुत्पन्ने प्रजा-
पतिभेदे। मांसे न०, पङ्कवति त्रि०। [पङ्क एव हि परोक्षः
कर्द्दमक पु० कर्द्दमे कायति प्रकाशते कै-क। शालिभेदे, तस्य
कर्पट पु०न० कृ-कर्म्मणि विच्-कर्-पटः कर्म्म०। लक्तके जीर्ण-
वस्त्रे (लातांकानि), मलिनवस्त्रे च। करस्य पटः ष०त०।
धर्म्मादिमार्ज्जनार्थं हस्तन्यस्ते वस्त्रखण्डे कषायरक्ते वस्त्रे च।
कर्पटधारिन् त्रि०कर्पटं मलिनं जीर्णं रक्तं वा वस्त्रं धारयति
णिनि। मलिनादिवस्त्रधारके भिक्षुकादौ। [कर्पटीत्यप्यत्र
कर्पटिक त्रि० कर्पट-ठन्। कर्पटवस्त्रयुक्ते भिक्षुकादौ। इनि
कर्पर पु० क्रप-अरन् लत्वाभावः। कपाले शीर्षेर्द्धास्थनि,
(माथारखुलि), शस्त्रभेदे (कात), कटाहे च।
कर्पराश पु० कर्परस्यांश। (खापरा) शर्करायाम्।
कर्पराल पु०कर्परमलति अल-अण्। कन्दराले,अक्षोटवृक्षे च
कर्परी स्त्री० क्रप-अरन् लत्वाभावः गौ० ङीष्। दारुहरिद्रा-
क्वाथभवे तुत्थे (तुंते)। [जातित्वे ङीष्। कर्पासीत्यपि।
कर्पास पु०न०क-पास। वस्त्रयोनौ (कापास) वृक्षभेदे।
कर्पासफल न० ६त०। (काकटी) कर्पासीबीजे।
कर्पूर पु०न० क्रप-ऊर लत्वाभावः। स्वनामख्याते गन्धद्रव्ये
कर्पूरमणि पु० कर्पूरवर्णो मणिः। रत्नभेदे, कर्पूराश्मन्यत्र
कर्पूररस पु० कर्पूर एव रस। रसकर्पूरे।
कर्व गतौ भ्वा०पर०सक० सेट्। कर्वति अकर्वीत्।
कर्वूर पु० कर्व-ऊर। राक्षसे,पाप्माच्च। स्वर्णे,हरिताले च न०।
कर्म्मकर पु० कर्म्म करोति कृ-ट। यमे। भृत्ये त्रि०। स्त्रियां
ङीप्। [कर्म्मसमूहे, तत्प्रतिपादके वेदभागे च।
कर्म्मकाण्ड पु० कर्म्मणां समूहः दूर्व्वादित्वात् काण्डच्।
कर्म्मकार पु०कर्म्मन्+कृ-अण्। लौहकारके जातिभेदे,(कामार)
वेतनं विना (वेगार) कर्म्मकारके, वाहके च।
कर्म्मक्षेत्र न० कर्म्मणां तद्विधानायोचितं क्षेत्रम्। भारतवर्षे।
कर्म्मठ त्रि० कर्म्मणि कुशलः कर्म्मन्+ठ। क्रियाकुशले।
कर्म्मण्य त्रि० कर्म्मणि साधुः कर्म्मन्+यत्। कर्म्मणि योग्ये,तत्र
प्रवीणे च। वेतने स्त्री०।
कर्म्मदेवता स्त्री० कर्म्मणा यागादिना देवता। यज्ञेन देवत्वं
प्राप्ते 'अस्मिन् कल्पेऽश्वमेधादि कर्म्म कृत्वा महत्तरम्।
अवाप्य देवतां पूज्यास्तस्माः कर्म्मदेवता इत्युक्तलक्षणे देवे
कर्म्मधारय पु० व्याकरणोक्ते अभेदान्वयिना समानविभक्तिकेन
पदेन घटिते समासभेदे। [धर्म्मे कारके च।
कर्म्मन् न० कृ मनिन्। क्रियायाम्, व्याकरणोक्ते कर्त्तुरीप्सिततमे
कर्म्मफल न०कर्म्मणः फलम्। कर्म्मविपाकजनिते सुखदुःखादौ.
कमरङ्गफले च (कामराङ्गानेबु)
कर्म्मभू स्त्री० कर्म्म कर्षणादि परिकर्म्म,पुण्यादिकर्म्म वा तस्य भूः।
कृष्टभूमौ, आर्य्यावर्त्ते, भारतवर्षे च विहितकर्म्मणस्तत्रैव वर्षे
क्रियन्ते नान्यत्र। [जैमिनिप्रणीते ग्रन्थे।
कर्म्ममीमांसा स्त्री० ६त०। कर्म्मकाण्डप्रधानवेदभागविचारात्मके
कर्म्ममूल न० कर्म्मणां मूलम्। कुशतृणे। तेन हि वैदिकादि
सर्व्वं कर्म्म निष्पाद्यते।
कर्म्मरङ्ग पु०न०कर्म्मणि भोजनादौ रङ्गो रतिर्यस्मात् रन्ज-घञ्
(कामराङ्गा) जम्बीरभेदे,तद्भोजने हि भोजनादौ रुचिर्भवति
कर्म्मविपाक पु० विपच्यते वि पच-कर्म्मणि घञ् कर्म्मणो
विपाकः। शुभाशुभकर्म्मजन्ये तत्फलभूते सुखदुःखादौ।
कर्म्मव्यतिहार पु० वि-अति-हृ-घञ्। कर्म्मणा व्यतिहारः
३त०। परस्परं सजातीयक्रियाकरणे, क्रियाविनिमये च यथा
यः कश्चित् येन कर्म्मणा इतरं संबध्नाति,इतरोऽपि तज्जा-
तीयेनैव कर्म्मणा तं संबध्नाति, तयोः कर्म्मविनिमयो भवति।
यथा अन्योन्यं ताडयत इत्यादौ। [लौहमये कर्म्मकारिणि च
कर्म्मशूर पु०कर्म्मणि शूर। प्रयत्नेन प्रारब्धकर्म्मसमापके,काम-
कर्म्मसङ्ग पु० कर्म्मणि सङ्ग आसक्तिः सन्ज-घञ्। इदमहं
करोमि अनेनैतत् फलं भोक्ष्ये इत्याकारकेऽभिनिवेशे।
कर्म्मसंन्यासिन् पु० विहितकर्म्माणि विधानेन संन्यस्यति सं+
नि+अस्-णिनि। सर्व्वकर्म्मत्यागिनि यतौ।
कर्म्मसाक्षिन् पु० साक्षात् पश्यति त्रि० साक्षी ६त०। 'सूर्य्यः
सोमो यमः कालो महाभूतानि पञ्च च। एते शुभाशुभस्येह
कर्म्मणो नव साक्षिण इत्युक्तेषु सूर्य्यादिषु नवसु।
कर्म्मसिद्धि स्त्री० ६त०। इष्टानिष्टफलप्राप्तौ "स्वकर्म्मसिद्धि
पुनराशशंसे' इति कुमारः।
कर्म्माध्यक्ष पु० ७त०। क्रियासाक्षिणि कृताकृतनिरीक्षके।
कर्म्मार पु०कर्म्म ऋच्छति ऋ-अण्। कर्म्मकारे (कामार) जाति-
भेदे, वंशभेदे (वेडवांश), कर्म्मरङ्गे वृक्षे च।
कर्म्मिष्ठ त्रि० अतिशयेन कर्म्मी इष्ठन् इनेर्लुक्। क्रियादक्षे जने
कर्म्मेन्द्रिय न० कर्म्मणां क्रियाणां साधनभूतमिन्द्रियम्। हस्त-
पादादौ, ततो हि ग्रहणादानादिक्रिया निष्पद्यते।

कर्व्व दर्पे भ्वा०पर०अक० सेट् । कर्व्वति अकर्व्वीत् ।

कर्वट पु० कर्व अट । द्विशतग्राममध्ये सुन्दरस्थाने, यत्र गत्वा क्रयविक्रयादिना सन्निहितजनपदवासिनो जना जीवन्ति तादृशे ग्रामे पुरे वा नगरमात्रे च ।

कर्व्वर पु० कणाति हिनस्ति कृ-अमे वरच् । व्याघ्रे, राक्षसे च । शृगाले स्त्री० ङीप् । [स्वार्थे कन् ण्वुल् । शोभातकवृक्षे

कर्वुदार पु० कर्वं दर्पं अण् स दारयति दृ-अण् । कोविदारवृक्षे

कर्वुर पु० कर्व्व-उरच् । राक्षसे, पापे, नानावर्णे च । तद्वति त्रि०

कर्ष पु०न० कृष अच् कर्मणि घञ् वा । षोडशमाषके माने, तन्मिते सुवर्णे च ।

कर्षक पु० कृष ण्वुल् । कृषीवले ।

कर्षफल पु० कर्षं तन्मात्रं फलमस्य । विभीतकवृक्षे आमलक्याम् स्त्री० टाप् । [लागामेर जोड़) ।

कर्षिणी स्त्री० कृष-णिनि । क्षीरिणीवृक्षे, खलीने च (अश्व

कर्षू पु० कृष-ऊ । करीषाग्नौ (घुटियार आगुन)। कृषौ च । कुल्यायां, नदीमात्रे च स्त्री० । [कस्मिन् काले इत्यर्थे ।

कर्हि अव्य० कस्मिन् काले किम्+र्हिल् कादेश । अनद्यतने

कर्हिचित् अव्य० कर्हि+चित् । कस्मिंश्चित्काले इत्यर्थे ।

कल सङ्ख्याने सक शब्दे अक भ्वा०आत्म०सेट् । कलते अकलिष्ट

कल गतौ सङ्ख्याने च अद०चुरा०उभय०सक सेट् । कलयति ते अचकलत् त । [कलत् त।

कल मोदने (प्रेरणे) चुरा उभय०सक०सेट् । कालयति ते अची

कल पु० कल-शब्दे घञ् अवृद्धि । मधुराव्यक्तशब्दे, शालवृक्षे च । कड मदे घञर्थे क डस्य ल । रेतसि । अजीर्णे त्रि०

कलकण्ठ पु०कल कलान्वित कण्ठोऽस्य । कोकिले हंसे, पारावते च । जातित्वे स्त्रियां ङीप् कलकण्ठी । [कोलाहले ।

कलकल पु० कलप्रकार गुणवचनत्वात् प्रकारे द्वित्वम् ।

कलघोष पु० कलो घोषो यस्य । कोकिले ।

कलङ्क पु कलयति क्षिप् कल् चासौ अङ्कश्चेति । चिह्ने, अपवादे, ताम्रादिधातूनां मलभेदे (कलङ्कास), ताम्रादियोगात् अन्नादेर्विकारे च ।

कलञ्ज पु० केतिशब्द कञ्जति भाषते क इत्यव्यक्तानुकरणम् गञ्ज-अण् । विषाक्तास्त्रेण हते मृगे, पक्षिणि च न कलञ्ज भक्षयेदिति श्रुति । नामकृते 'कलञ्जशब्देन धूमपानात् स्यात् हल्लासादिमुखरोगहानिरिति' वैद्यके तद्वर्णनात् तमाखुप्रभृति दृढा। 'दशकर्दशभि प्रोक्तः कलञ्जो नाम तत्परिमाणे च

कलत्र न० गड-त्रन् गस्य क डस्य ल । नितम्बे भार्यायाञ्च

कलधौत न० कल मल धौतोऽस्य । स्वर्णे, रजते च । कलधूतमयन । [मधुराव्यक्ते शब्दे

कलध्वनि पु० इव० । कोकिले पारावते, मयूरे च । कर्म० ।

कलन पु० कल ल्यु । वेतसवृक्षे । भावे ल्युट् । चिह्ने दोषे, लङ्घने एकमासिकगर्भे अवस्था, सङ्ख्याने, गणने ग्रसने च, न । 'कलनात् सर्व्वभूतानामि'ति स्मृति ।

कलभ पु कल-अभच् । पञ्चवर्षीये हस्तिशावके, धुस्तूरवृक्षे च।

कलभवल्लभ पु० इत० पीलुवृक्षे । [इव ते रघुमि'ति रघु ।

कलम पु० कल अम। लेखन्याम् चौरे धान्यभेदे च। 'कलमा

कलम्ब पु०कड-अम्बच् डस्य ल । नालिकाशाके (कलमी), बाणे, कदम्बवृक्षे, शाकनाडाञ्च । स्वार्थे कन् । कलम्बकोऽप्यत्रार्थे ।

कलम्बिका स्त्री० कलम्बो भक्ष्याऽस्त्यस्य ठन् । कलम्बीशाके, ग्रीवास्थिनाड्यां मन्यायाञ्च ।

कलम्बी स्त्री० कड-अम्बच् डस्य ल कै जले लम्बते अच् वा गौरा० ङीप् (कलमी) जलजशाकभेदे । कलम्बी गोवधाक्षिकेति स्मृति । [कम० । मधुराव्यक्ते शब्दे ।

कलरव पु० रु-अप् रव कलो रवोऽस्य । कोकिले, पारावते च

कलल पु न० कल-अलच् । गर्भवेष्टनचर्म्मणि जरायौ शुक्रशोणितयो सयोगे च । [कालनिर्यासे (धुना) ।

कललज पु कलल शुक्रशोणितसघात इव जायते जन-ड ।

कलविङ्क(ङ्ग) पु० कल यङ्क(ङ्ग)ते वगि(वकि) गतौ अच् इषो० अत इत्वम् । चटके खगे, इन्द्रयव च ।

कलश पु न कल शब्द शवति शु गतौ ड । घटे ।

कलशि स्त्री० कल श्यति शो इन् अालोप । घटे । कलशिमुदधिगुर्व्वीमिति माघ । वा ङीप् । अवलम्बितकर्णशष्कुलीकलशीकमिति नैषधम् पृश्निपर्ण्याम् (चाकुलिया) ।

कलस पु कैन जलेन लसति अच् । घटे कलश जलसम्भृतमिति नैषधम् । जातित्वात् स्त्रियां ङीष् । द्रोणमात्रे त्रि

कलह पु०न कल हन्ति हन ड । विवादे, युद्धे , असिकोषे च

कलहंस पु० कलप्रधानो हंस । राजहंसे, कलहंस कलया बभूव स इति नैषधम् । कादम्बहंसे (कालहाँस) श्रेष्ठनृपे, परमात्मनि, वर्णहंसेषु त्रयोदशाक्षरपादके छन्दोभेदे च ।

कलहान्तरिता स्त्री० 'कोपात् कान्त पराणुद्य पश्चात् तापान्विता यदि। कलहान्तरिता प्रोक्ते'त्युक्तलक्षणे नायिकाभेदे।

कला स्त्री० कल-अच् । चन्द्रमण्डलस्य षोडशे भागे, इत्तधन स्याधिकलभ्यांशे (सुद) अवयवे, कालपरिमाणे, ज्योतिषोक्ते राशित्रिंशद्भागस्य षष्टिभागे नौकायाम, कपटे विभूतौ, सामर्थ्ये, सख्यायां मरीचिप्रभृतम्, चतु षष्टिप्रकारेषु गीतवाद्यादिषु च ।

कलाद पु० कलामंशमादत्ते आ+दा+क । स्वर्णकारे तेन हि अलङ्कारगठनार्थं गृहीतधनस्यांशोऽपह्रियते ।

कलादक पु० कलामत्ति कला+अद-ण्वुल् । स्वर्णकारे गठनार्थं दत्तद्रव्यांशस्य भोजनं तेन हि क्रियते ।

कलानिधि पु० कला निधीयन्तेऽत्र । कला+नि+धा कि । चन्द्रे

कलानुनादिन् पु० कलमनुनदति णिनि । भ्रमरे, चटके च

कलान्तर पु०अन्या कला अंश. मयू० । वृद्धिभेदे 'मासे गतस्य यदि पञ्च कलान्तरं स्यादिति' लीलावती, अन्यस्यां चन्द्रकलायाञ्च, 'ज्योत्स्नान्तराणीव कलान्तराणी'ति कुमार' ।

कलाप पु० कलामाप्नोति कला-आप्-अण् । समूहे, मयूरपिच्छे, भूषणे, काञ्चाम्, तूणे, चन्द्रे, व्याकरणभेदे ग्रामभेदे च ।

कलापक पु० कलाप+क स्वार्थे कन् । कलापार्थे, हस्तिस्कन्धबन्धे, एकवाक्यतापन्ने श्लोकचतुष्के न० कल पक चतुर्भिः स्यादिति त्यक्ते । [शाखावति वटे च । कल+आप-णिनि । कोकिले

कलापिन् पु० कलापो बर्होऽस्यास्ति इनि । मयूरे तद्वर्हतुल्य-

कलाभृत् पु० कलां बिभर्त्ति कला+भृ-क्विप् । चन्द्रे । [र्या स्त्री०

कलाय पु० कलमयते अय-अण् । (मटर) धान्यभेदे । गण्डदूर्वा-

कलालाप पु० कलमालपति आ+लप-अण् । भ्रमरे । [त्रि०

कलावत् पु० कला+अस्त्यर्थे मतुप् मस्य व । चन्द्रे । कलावति

कलि पु० कल-इन् । विभीतकवृक्षे, विवादे, युद्धे, शूरे, अन्त्ययुगे च । कोरके स्त्री० वा ङीप् कली च ।

कलिक पु० कल+मत्वर्थे ठन् । वकभेदे (कोंचवक) [मूले च

कलिका स्त्री० कल-इन् स्वार्थे कन् । (कलि) कोरके. वीणा

कलिकापूर्व्व न० कलिकेव अपूर्व्वमदृष्टं पुण्यापुण्यम् । प्रधानकर्म्मजन्य प्रधानापूर्व्वस्य हेतुभूतेऽवान्तरकर्म्मजन्ये पुण्यादौ

कलिकार पु० कलिं करोति कृ-अण् । भूम्याटपक्षिणि, पूतिकरञ्जे च ।

कलिकारक पु० कलिं करोति कृ-ण्वुल् । नारदे । कलहकारके त्रि० । कलिकार+स्वार्थे क । भूम्याटपक्षि पु० । [ङ्गल्याम् ।

कलिकारी स्त्री० कलकामृच्छति ऋ-अण् । (विषलाङ्गलिया) ला-

कलिङ्ग पु० कलिं गच्छति गम-खच् मुम् डिच्च । पूतिकरञ्जे धूम्याटे, कुटजवृक्षे, शिरीषवृक्षे, प्लक्षवृक्षे, 'जगन्नाथात् पूर्वभागे कृष्णातीरान्तरं शिवे ! । कलिङ्गदेशः संप्रोक्त' इत्युक्ते देशे, 'उत्कलादर्शितपथ कलिङ्गाभिमुखो ययौ'विति रघु । इन्द्रयवे च । योषिति लिङ्गतायाञ्च (तेवडि) स्त्री०

कलित त्रि० कल-क्त । विदिते प्राप्ते, भेदिते, गृहीते, उक्ते । संख्याते, विचारिते, बद्धे च ।

कलिद्रुम पु० कलेराश्रय. द्रुम. । विभीतकवृक्षे तत्र हि नलस्य राजश्छिद्रावाप्तये कलिना सुचिरं स्थितमिति भारतकथा ।

कलिन्द पु० कलिं ददाति द्यति वा खच् मुम् च । गिरिविशेषे, यतो यमुनानदी निःसृता, विभीतकवृक्षे, सूर्य्ये च ।

कलिन्दकन्या स्त्री० ६त० । यमुनायां, कलिन्दनाद्योऽप्यत्र ।

कलिप्रिय पु० कलिः कलहः प्रियो यस्य । नारदे, वानरे च । ६त० विभीतके । द्वन्द्व० प्रियविवादे जने त्रि० ।

कलिल त्रि० कल-इलच् । गहने, मिश्रे च । [लाङ्गल्याम् ।

कलिहारी स्त्री० कलिं हरति हृ-अण् । (विषलाङ्गलीया)

कलुष पु०स्त्री० कल-उषच्, लुष हिंसायां क कस्य जलस्य लुषो घातकः इति वा । महिषे । पापे न० । तद्वति त्रि० ।

कलेवर न० कले शुक्रे वरं श्रेष्ठम् तद्वत्पन्नत्वेऽपि शुचि । सप्तम्या अलुक् । देहे । [वार्हस्पिके ।

कलोपजीविन् त्रि० कला वृद्धिमुपजीवति उप+जीव-णिनि ।

कल्क पु०न० कल-क तस्य नेत्वम् । एततनाटिप्ये, दम्भे, विभीतकवृक्षे, विष्ठायाम्, तुरुष्कनामकगन्धद्रव्ये, एततैलादिपाकेदेशे कै, पपिद्रव्ये च 'द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलमिश्रितम् । तदेव सूरिभिः पूर्व्वैः कल्कइत्यभिधीयते' इत्युक्तलक्षणे द्रव्यभेदे, शाठ्ये, पापे च । [कथने कलहे च ।

कल्कन न० कल्कं करोति णिच्-भावे ल्युट् । दम्भे, शाठ्ये,

कल्कि पु० कल्क+नत् करोतीति णिच्-इन् । 'सम्बलग्राममुख्यस्य ब्राह्मणस्य महात्मन । भवने विष्णुयशस. कल्किः प्रादुर्भविष्यती'त्युक्तलक्षणे हरेरवतारे ।

कल्किन् पु० कल्क-इनि । रामो रामश्च रामश्च बुद्धः कल्की च ते दशेति विष्णोरवतारभेदे ।

कल्प पु० कृप-अच् घञ् वा । यज्ञक्रियायामुपदेशके, शिक्षाकल्पव्याकरणादीनामन्यतमे वेदाङ्गभेदे, बौधायनादिकृते अनुष्ठेयक्रमविधाने, सूत्रात्मके कर्म्मपद्धतिग्रन्थे, ब्रह्मदिने, प्रलये, विकल्पे, कल्पवृक्षे, न्याये च । उत्तरपदस्थ. सादृश्ये कल्पप् । यथा पितृकल्प' गुरुकल्पः ।

कल्पक पु० कृप-णिच् ण्वुल् । नापिते । छेदके, कल्पनाकारके त्रि०

कल्पतरु पु० कल्पते फलदानाय अच् कर्म० । कल्पवृक्षे । [भेदे च

कल्पन न० कृप-भावे ल्युट् । कृप्तौ, छेदने, न्यायोक्ते अनुमिति

कल्पना स्त्री० कृप-णिच्-युच् । पल्ययनादिना करिणः सज्जीकरणे, न्यायोक्ते अनुमितिभेदे, रचनायाञ्च ।

कल्पान्त पु० ७त० । प्रलये ।

कल्मष पु० कर्म्म शुभकर्म स्यति सो-क-पृषो० षत्वं रस्य लत्वञ्च । नरकभेदे । पापे न० । तद्वति, मलिने च त्रि० ।

कल्माष पु० कलयति कल-क्विप् तं माषयति अभिभवति अच्

**कषायिन्** पु० कषाय+इनि । सालवृक्षे, नकुचवृक्षे, खर्जूरी वृक्षे च । विषयरागवति त्रि०

**कष्ट** न० कष-क्त कृच्छ्रगहनयोः कषइति नेट् । पीडायाम् व्यथायाम्, पीडायुक्ते । गहने च त्रि० ।

**कस** गतौ भ्वा०पर०सक०सेट् । कसति अकसीत् अकासीत् ।

**कस** शासने गतौ च अदा०इदित् आत्म०सक० सेट् । कंस्ते अकंसिष्ट

**कस** शासने गतौ च सक० अदा०आत्म० सेट् । कस्ते अकसिष्ट

**कसनोत्पाटन** पु० कसनं कासरोगम् उत्पाटयति ल्यु । वास कवृक्षे, 'वासकः कासनाशन' इति वैद्यकोक्ते । [च ।

**कसेरु** पु० कस-उ एरुगागम । कसेरौ, स्त्रूकरस्य प्रिये जलकन्दभेदे

**कसीर** पु०न०के जलं तीरयति अच् नि०सुट् । रङ्गे (राङ्) धातौ

**कस्तूरिका** स्त्री० कस-ऊर तुट् च गौरा० ङीष् कस्तूरी स्वार्थे कन् ह्रस्वः अत इत्वम् । मृगमदे । पृषो० अतोत्वम् कस्तुरिकाप्यत्र । [मृगनाभिजाते गन्धद्रव्ये ।

**कस्तूरी** स्त्री० कसति गन्धोऽस्याः कस-ऊर तुट् च गौरा० ङीष् ।

**कह्लार** न० के जले ह्लादते ह्लाद-अच् पृषो० दस्य रः । श्वेतोत्पले

**कांस्य** न० कंसेन निर्व्वाटितम् कंस-ञ्य । वाद्यभेदे, पानपात्रे च । स्वार्थे ष्यञ् । ताम्ररङ्गनिर्म्मिते उपधातौ, 'उपधातुर्भवे- त्कांस्यं द्वयोस्तरणिरङ्गयोरिष्युक्तेः । स्वार्थे कन् । तत्रार्थे ।

**कांस्यकार** पु० कांस्य+कृ-अण् उप० । (कांसारि) जातिभेदे

**काक** पु० कै-शब्दे कन् तस्य नेत्त्वम् । स्वनामख्याते पक्षिणि । खञ्जे, कट्टे तिलके च ।

**काककला** स्त्री० काकस्य कला अवयवो जङ्घेवावयवोऽस्याः काकजङ्घावृक्षे । [काकस्य नाम० ।

**काकघ्नी** स्त्री० काकं हन्ति ट । महाकरञ्जे, तत्फलसेवने हि

**काकचिञ्चा** स्त्री० काकवर्णा चिञ्चा प्रान्तभागः फले यस्याः । गुञ्जायाम् । पृषो० । काकचिञ्चि, काकचिञ्ची, काकचिञ्चाप्यत्र

**काकच्छद** पु० काकस्य छद पक्ष इव छदो यस्य । खञ्जनखगे

**काकजङ्घा** स्त्री० काकस्य जङ्घेवावयवो यस्याः । स्वनामख्याते वृक्षभेदे (केओयाठेङ्गा)

**काकजम्बु** स्त्री० काकवर्णा जम्बुः । भूमिजम्ब्वाम् ।

**काकतालीय** त्रि० काकागमनसमये तालपतनमतर्कितहेतुकं वदिव छ । अवितर्कितसम्भवे याद्दृच्छिकागतौ ।

**काकतिक्ता** स्त्री० काकस्यापि तिक्ता । गुञ्जायाम् ।

**काकतिन्दुक** पु० काकवर्णः तिन्दुकः । काकपीलुके (कुचला)

**काकनासा** स्त्री० काकस्य नासेव फलमस्याः । काकजङ्घायाम् (कौओठेङ्गा) काकनास्यप्यत्र ।

**काकपक्ष** पु० काकस्य पक्ष इव । नरकपालद्वयस्थे 'बालानां शिखा प्रोक्ता काकपक्षः शिखण्डके' इत्युक्तकेशरचनाभेदे (जुल्फा)।

**काकपद** न० काकस्य पदमिव । लिपौ पतितवर्णस्य उपरि- लेखने तत्स्थानसूचनार्थं न्यस्ते काकपदाकारे चिह्ने । रतिबन्धे काकपदाकारे बन्धभेदे च (शिका) ।

**काकपर्णी** पु० काकवर्णं पर्णमस्याः । शूद्रपर्ण्याम् ।

**काकपीलु** पु० काकप्रियः पीलुः शाक० । (कुचला) काकतिन्दुके

**काकपीलुक** पु० काकानां पीलुरिव । (कुचला) काकतिन्दुके ।

**काकपुष्ट** पु० काकेन पुष्टः । कोकिले, कोकिलया हि काकनीडात् वायसडिम्बमपनीय तत्स्थाने स्वडिम्बं स्थाप्यते काकया च स्वडिम्बबुद्ध्या तत् परिपाल्यते इति प्रसिद्धम् ।

**काकपुष्प** पु० काकवर्णं पुष्पमस्य । ग्रन्थिपर्णे वृक्षे ।

**काकभीरु** पु० काकात् भीरुः । पेचके ।

**काकमाची** पु० काकान् मञ्चते मचि-अण् नलोपः । कट्फल- लतायाम् । (गुड्कामाइ)। [पृ.प०। शूद्रपर्ण्याम् । (मुगानी०

**काकमुद्गा** स्त्री० मुदं गच्छति मुद्-गम्-ड काका मुद्गा यस्याः

**काकरुहा** स्त्री० काकवत् रोहति अन्यरोहे वृक्षान्तरतया जायते । (परगाछा) बन्दाकृक्षे ।

**काकलक** पु० ईषितं कलं कायति कै-क । ग्रीवायामुन्नतदेशे

**काकली** स्त्री० कल-इ ईषत् कलि काादेशः वा ङीप् । सूक्ष्मे मधुरशब्दे ।

**काकलीरव** पु काकली मधुराव्यक्तो रवो यस्य । कोकिले ।

**काका** स्त्री० काकः काकवर्णो विद्यतेऽस्याः अर्श आद्यच् । काकोल्या, काकनासायाम् काकमाच्याञ्च ।

**काकाक्षिगोलकन्याय** पु० काकस्य एकं चक्षुर्यथा उभयगोलके पर्यायेण वहु कार्यकारकमेकमेवोभयसंबन्धे दृष्टान्ते ।

**काकाङ्गी** स्त्री० काकस्याङ्गं नासेव फलमस्याः । काकनासायाम्

**काकाण्ड** पु० काकस्याण्ड इव फलं यस्य । महानिम्बे । कोलशिम्ब्याम् स्त्री० टाप् महाज्योतिष्मत्यां च ङीप् ।

**काकादनी** स्त्री० काकैरद्यतेऽसौ काक+अद-ल्युट् । गुञ्जायाम्

**काकाल** पु० काकं काकेतिरवं लाति ला-क । द्रोणकाके ।

**काकिणी** स्त्री० कक-लौल्ये घञ् तम् अणति अण् इणो० । (कुड़ि) पणचतुर्थांशे 'वराटकानां दशकद्वयं यत् सा काकि- णी'ति लीलावती । काकिनीत्यप्यत्र ।

**काकी** स्त्री० काकस्य जातित्वात् स्त्रियां ङीष् । काकयोषिति काकवर्णत्वात् वायसोलिकायाम् ।

**काकु** स्त्री० कक-उण् । शोकभीत्यादिभिर्ध्वनेर्विकारे, अलङ्कार प्रसिद्धे विकृतार्थकल्पके नञादौ शब्दे च । [सूर्यवंश्ये नृपे

**काकुत्स्थ** पु० ककुत्स्थः सूर्यवंशीयः नृपभेदः तस्यापत्यम् अण्

**कुसुमायुध** पु० कुसुममायुधमस्य । कामदेवे । [मदने च ।

**कुसुमासव** न० कुसुमस्य तद्रसस्यासवम् । पौष्पे मधुनि, तज्जाते

**कुसुमेषु** पु० कुसुमानीषवो यस्य । कामदेवे । [पुष्पसमूहे ।

**कुसुमोच्चय** पु० कुसुमानामुच्चयः समूहो यत्र । स्तवके । इत०

**कुसुम्भ** न० कुस-उम्भ । पुष्पप्रधानशाके (कुसुम) "कुसुम्भं नालिकाशाकं वार्त्ताकुमिति स्मृतिः । स्वार्थे क कमण्डलौ ।

**कुसृति** स्त्री० कुत्सिता सृतिः सृ-क्तिन् । शाठ्ये ।

**कुस्तुभ** पु० कुं भूमिम् ईषद्वा स्तुभ्नाति स्तुन्भ-अच् नलोप० नि० । विष्णौ, समुद्रे च ।

**कुस्तुम्बुरु** न० कुत्सितं तुम्बति तुबि-मर्द्दने उरु नि०-सुट् । धन्याके

**कुस्म(स्म)** बुद्धौ दर्शने च चुरा० आत्म० सक० सेट् । कुस्मा(स्मा)यति अचुकुस्म(स्म)त । [अचुकुहत ।

**कुह** विस्मयने अद० चुरा० आत्म० सक० सेट् । कुहयते

**कुह** अव्य० किम्+ह-क्त तिहोरिति कादेशः । कुत्रेत्यभिन्नार्थे

**कुहक** न० कुह-ण्वुल् । इन्द्रजालमायया अन्यथास्थितस्य वस्तुनोऽन्यथादर्शने । तद्युक्ते त्रि० ।

**कुहन** न० ईषत् वलेन हन्यते हन-कर्मणि अच् । मृद्भाण्डे ईषद् वलेन हन्ति कर्त्तरि अच् । सर्पे, चौरे च । कुं भूमिं हन्ति खनति अच् । मूषिके । कुह-युच् टाप् । दम्भचर्यायां स्त्री० । ईर्ष्यालौ त्रि० ।

**कुहर** पु० कुं हरति हृ-अच् । नागभेदे । कुहं विस्मापनं राति रा-क । छिद्रे । कर्णे, कण्ठे कण्ठशब्दे समीपे च न० ।

**कुहलि** पु० कुत्सितं हलति हल-इन् । ताम्बूल्याम् (पान)

**कुहा** स्त्री० कुह-अच् । कुज्झटिकायां, कटुकायाञ्च ।

**कुहू(हु)** स्त्री० कुह-कु-वा ऊङ् । नष्टेन्दुकलायां चतुर्द्दशीयुतायाममावस्यायां, कोकिलालापे च 'त्वमपि चन्द्रविरोधि कुहूरवं' इति 'कुहूरिति कुहूरवध्वनिभिये'ति चोद्भटः ।

**कुहूकण्ठ** पु० कुहूरितिशब्दः कण्ठे यस्य । कोकिले ।

**कुहूरव** पु० कुहूरिति रवो यस्य । कोकिले । कुहूशब्दादयोऽप्यत्र

**कुहेलिका** स्त्री० कुत्सितं हेलयति ण्वुल् । कुज्झटिकायाम् ।

**कू** आर्त्तस्वरे तुदा० आत्म० अक० सेट् कुटादि० । कुवते अकुविष्ट

**कू** शब्दे क्र्यादि० उभ० अक० सेट् प्वादि० । कुनाति कुनीते अकवीत् अकविष्ट ।

**कूकुद** पु० सत्कृत्यालङ्कृतकन्यादातरि ।

**कूचिका** स्त्री० कू-चिक् संज्ञायां कन् । तूलिकायाम् । कनभावे वा ङीष् । कूचीत्यप्यत्र ।

**कूज** शब्दे भ्वा० पर० अक० सेट् । कूजति अकूजीत् ।

**कूजित** न० कूज-क्त । पक्षिशब्दे अव्यक्तशब्दे च 'मधुकरनिकरकरम्बितकूजितकुञ्जकुटीरे' इति जयदेवः ।

**कूट** पु० कूट-अच् कर्मणि घञ् वा । अगस्त्यमुनौ । गृहे पु० स्त्री० । निश्चले, धान्यादिराशौ, अयोधने (नेहाइ) लौहमुद्गरे, दम्भे, मायायां, यथार्थवस्त्वाच्छादने, अद्रिशृङ्गे, तुच्छे, फालाधारे-लाङ्गलाङ्गे, मृगे मृगबन्धनहेतौ-यन्त्रे, भग्नशृङ्गसखण्डे, पुरद्वारि च पुः । स्वार्थे कन् फाले । संज्ञायां कन् । कवर्य्याम्, कुटनामगन्धद्रव्ये च पु० ।

**कूट** अपमादे दानाभावे च चुरा० आत्म० सक० सेट् । कूटयते अचुकूटत-त । [कूटयति ते अचुकूटत्-त ।

**कूट** दाहे मन्त्रणे प्रच्छादने च अद० चुरा० उभय० सक० सेट् ।

**कूटकार्षापण** पु० कर्म० । मिथ्याभूतरौप्यादिमुद्रायाम्

**कूटकृत्** पु० कूटं मिथ्याभूतं करोति कृ-क्विप् तुक् च । कायस्थे । कितवे त्रि० । कलसादिपाकस्थाने (पोयान) ।

**कूटपालक** पु० कूटं मृत्तिकास्तूपं पालयति ण्वुल् । कुलाले ।

**कूटयन्त्र** न० कूटेन कृतं यन्त्रम् । आमिषादिदानेन मृगपक्षिधारणार्थं पातिते यन्त्रे ।

**कूटशाल्मलि** पु० कूट० मिथ्याभूतः शाल्मलिः । कृष्णशाल्मलौ

**कूटसंक्रान्ति** स्त्री० 'अर्द्धरात्रे व्यतीते तु यदा संक्रमते रविः । सा ज्ञेया कूटसंक्रान्तिरिति' स्मृत्युक्ते रवेरर्द्धरात्रोत्तरं राश्यन्तरसञ्चारे ।

**कूटसाक्षिन्** त्रि० कर्म० । साक्ष्ये मिथ्याभिधायिनि ।

**कूटस्थ** त्रि० कूटोऽयोधनवत् निश्चलं यथा तथा तिष्ठति स्था-क । एकरूपतया सर्व्वकालस्थायिनि परिणामादिकार्य्यान्तरशून्ये आकाशादौ, ब्रह्मणि च । व्याघ्रनखाख्यगन्धद्रव्ये पु० ।

**कूटागार** न० कर्म० । स्वपागारे, चन्द्रशालिकायाम्, (चिलावर) क्रीडागृहे च । [मये अस्त्रभेदे ।

**कूटायुध** न० कर्म० । अन्तर्गुप्तनिशितशस्त्रे वहि काष्ठादि-

**कूटार्थभाषा** स्त्री० कूटार्थस्य कल्पितार्थस्य भाषा कथा । मवन्धकल्पनारूपायां कथायाम् ।

**कूड** घनीभावे तुदादि० पर० अक० सेट् । कूडति अकूडीत् ।

**कूण** सङ्कोचे अद० चुरा० उभ० अक० सेट् । कूणयति-ते अचुकूणत्-त ।

**कूण** सङ्कोचे चुरा० आत्म० अक० सेट् । कूणयते अचूकुणत ।

**कूणि** त्रि० कूण-इन् । रोगादिना सङ्कुचितनखकरादौ जने

**कू(कु)प** दौर्बल्ये अद० चुरा० उभ० अक० सेट् । कू(कु)पयति-ते अचुकू(कु)पत्-त ।

**कूप** पु० कुत्सिताः ईषत् वा आपो यत्र अच् समा०, कुवन्ति मण्डूकाः अस्मिन् कु-पक् दीर्घश्च वा । स्वनामख्याते जला-

धारे गर्त्ते च । तत स्वार्थे कन् । नौकादौ गुणाधारे (मास्तुल) काष्ठमये स्तम्भे । [रोम स्वे ।

कूपाङ्क(ङ्ग) पु० कूपकारोद्भवचिह्न कूपाकारमङ्क यस्मिन् ।

कूपार पु० कु पृथिवीं पिपर्त्ति पूरयति अण् पूर्व्वदीर्घः । समुद्रे

कूपी स्त्री० कूप-अच् गौ ङीष् । स्नेहाद्याधारार्थे चर्म्ममये पात्रभेदे

कूर्च्च पु न० कूर्य्यते कुर-चट् नि दीर्घः । भ्रुवोर्मध्ये स्थिते लोमोच्चये दम्भेऽपि कैतवे, दर्भे मयूरपुच्छे कुशमुष्टौ, अङ्गुष्ठाङ्गुलिमध्यस्योपरिभागे, श्मश्रौ, शीर्षे, आसनभेदे, तन्त्रोक्ते बीजभेदे च (हुम्) । [दयोऽप्यत्र ।

कूर्च्चशिरस् न० ६त० अस्थिस्कन्धे (गुडगुडा) । [शेखरा

कूर्च्चशीर्ष पु० कूर्च्चं श्मश्रु तद्वत् शीर्षमस्य । नारिकेले । कूर्च्च

कूर्च्चिका स्त्री० कूर्च्च+अस्त्यर्थे ठन् । (कोरसा) दुग्धविकारे, सूचिकायां, तूलिकायाम् कुड्मले कुञ्चिकायाञ्च इष्यमार्जनसाधने कूर्च्चे,—(कुचि) इत्यगुच्छे च ।

कूर्पास पु० कूर्पासमवत् मर्द्दम् ।

कूर्म्म पु० कुत्सित ऊर्म्मिर्वेगो यस्य प० । कच्छपे, उन्मीलने कृत कूर्म्म" इत्युक्ते देहस्थे वायुभेदे च ।

कूर्म्मचक्र न कूर्म्माकार चक्रम् । ज्योतिषोक्ते शुभकर्म्मोपयोगिनि, तन्त्रोक्ते जपादिकर्म्मोपयोगिनि च कूर्म्माकारे चक्रभेदे

कूर्म्मपुराण न० कूर्म्मेण कूर्म्मावतारेण भगवता उक्तम् पुराणम् । अष्टादशसु पुराणेषु मध्ये पुराणभेदे ।

कूर्म्मपृष्ठक न कूर्म्मस्य पृष्ठमिव स्वार्थे कन् । शरावे (सरा) ।

कूल आवरणे भ्वा० पर० सक० सेट् । कूलति अकूलीत् ।

कूल न० कूल अच् । नद्यादेर्जलसमीपस्थाने तीरे, स्तूपे, सैन्यपृष्ठे च

कूलक पु कूल ण्वुल् । वल्मीकपर्व्वते, वल्मीके स्थाने । (उइदीपि)

कूलङ्कष पु० कूल कषति कष-खच् मुम् च । समुद्रे । नद्यां स्त्री०

कूवर पु०न० कूङ् शब्दे कुटादि वरच् । रथस्य युगकाष्ठाधारे काष्ठे युगन्धरे, कवचे च । रथे त्रि ।

कूष्माण्ड पु० कुत्सित उष्मा अण्डेषु बीजेषु यस्य । (कुमडा) इत्यभेदे गणदेवताभेदे च । आतिस्तान्ङीष् कूष्माण्डीत्यप्यत्र ।

कृ हतौ भ्वा० उभ सक० अनिट् । करति ते अकार्षीत् अकृत ।

कृ कृतौ तना उभ० सक० अनिट् । करोति कुरुते अकार्षीत् अकृत । कृत्रिम । [अकृत ।

कृ बधे स्वादि उभ० सक अनिट् । कृणोति कृणुते अकार्षीत्

कृक पु० कृ-कक् । गले ।

कृकण पु० कृ इति कणति कण शब्दे अच । (क्याए) कक्कर पक्षिणि, कुभाकारस्थे देहस्थे वायुभेदे च ।

कृकर पु कृ इति शब्द करोति । कुभाकारे देहस्थे वायौ ।

कृकलास पु० कृक कण्ठ लासयति अण् । सरटे (काकलास) पक्षिणि । [मयूरे, सरटे च ।

कृकवाकु पु० कृकेण वक्ति वच-परिभाषणे ञुण् कुश्च । कुक्कुटे,

कृकाटिका स्त्री० कृक कण्ठमटति अट ण्वुल् टाप् कापि-अत इत्वम् । ग्रीवायाउन्नतदेशे ।

कृच्छ्र न० कृत रक् छोऽन्तादेश । कष्टे, दुःखे, तत्कारणे-पापे, कष्टदायके-प्राजापत्यादिव्रते, मूत्रकृच्छ्ररोगे च । तद्वति त्रि० ।

कृत छेदे तुदा० पर० सक० सेट् । मुचादि । कृन्तति अकर्त्तीत् कर्त्तिष्यति कर्त्स्यति कृत्त ।

कृत वेष्टे रुधा० पर० सक० सेट् । कृणत्ति कृन्त अकर्त्तीत् ।

कृत न० कृ क्त । चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युग' मिति मनूक्ते दिव्यमानेन चतुःसहस्रमितवर्षे, मानुषमानेन १७२८०००मितवर्षे, सत्ययुगे, पर्य्याप्ते अलमर्थे, फले च । रचिते त्रि० ।

कृतक न० कृत-कन् । विडलवणे । कल्पिते, मिथ्याकल्पिते च त्रि० ।

कृतकृत्य त्रि० कृत कृत्य कर्त्तव्य येन । कृतार्थे समाप्तकार्य्ये धन्ये विदुषि च ।

कृतक्षण त्रि० कृत क्षण समयो येन । लब्धावकाशे ।

कृतघ्न त्रि० कृत हन्ति हन क । कृतोपकारस्य जनस्य अपकारे प्रवर्त्तमाने 'कृतघ्ने नास्ति निष्कृति'रिति पुराणम् ।

कृतच्छिद्रा स्त्री० कृत छिद्र यस्याः । कोषातकीलतायाम् ।

कृतज्ञ त्रि कृत कृतोपकार जानाति ज्ञा क । कृतोपकार ज्ञातरि प्रत्युपकारके । कुक्कुरे पु ।

कृतधी त्रि० कृता सम्यादिता धीर्येन । शास्त्राभ्यासमस्कृतान्तकरणे, स्थिरचित्ते, 'कृतधी कि प्रभाषेते'ति गीता ।

कृतप्रणाश पु० कृतयो पुण्यापुण्ययोर्भोगमन्तरेण प्रणाशो नाश' । कृतहानौ ।

कृतम् अव्य० कृत-कम् । अलमर्थे, निषेधे च ।

कृतमाल पु० कृता माला अस्य । आरग्वधे (सोन्दाल) कर्णिकारे च

कृतलक्षण त्रि कृतानि लक्षणान्यस्य । गुणैर्विख्याते ।

कृतवर्म्मन् पु० हृदिकात्मजे यादवे क्षत्रियभेदे ।

कृतश्रम त्रि० कृत श्रमो येन । महोत्साहान्विते ।

कृतवीर्य्य पु० कृत वीर्य्यमनेन । एकवीरस्यात्मजे कार्त्तवीर्य्यार्जुनजनके नृपभेदे । वीर्य्यान्विते त्रि ।

कृतविद्य त्रि कृता अभ्यस्ता विद्या येन । अभ्यस्तविद्ये ।

कृतसापत्निका स्त्री० कृत सापत्न्य यस्याः कप् ह्रस्व टाप् अत इत्वम् । अध्यूढायां स्त्रियां यस्या विवाहात् पश्चात् तत्पतिना विवाहान्तर कृत तस्याम् ।

**कृतस्वर** पु० कृतः स्वरो यत्र । स्वर्णोत्पत्तिस्थाने स्वर्णाकरे ।
**कृतहस्त** त्रि० कृत· अभ्यस्तः हस्तो बाणादित्यागमोक्षणलाघवरूपा हस्तशिक्षा येन । सुशिक्षितशरमोक्षणविद्ये जने ।
**कृताकृत** न० कृतं कार्य्यमकृतं कारणं च समा०द्व० । कार्य्यकारणयो । कर्म्म० । कृते अकृते च होमादौ । अतएव ऋत्विग्विशेषस्य ब्रह्मण· कृताकृतावेक्षणाय होमादौ वरणम्
**कृताञ्जलि** पु० कृतोऽञ्जलिरिव पत्रसङ्कोचो येन । लज्जालुवृक्षे । संपुटीकृतहस्ते त्रि० ।
**कृतात्मन्** पु० कृतः शिक्षितः संस्कृतो वा आत्माऽन्तःकरणं यस्य । शिक्षितचित्ते, शुद्धान्तःकरणे च ।
**कृतात्यय** पु० कृतस्य कर्म्मजन्यभोगस्यात्ययोऽवसानम् । भोगं विना कृतकर्म्मनाशे 'कृतात्ययेऽनुशयवानि'ति शारीरकसूत्रम्
**कृतान्त** पु० कृत' अन्तो विपर्य्ययनाशो निश्चयो विषयपरिच्छेदो वा येन । ज्ञातसिद्धान्ते । कृतो नाशो येन । दैवे, पापे यमे च ।
**कृतान्न** न० कृतं पक्वञ्च तदन्नञ्च । लड्डुकादौ पक्वान्ने, 'कृतान्नमुदकं स्त्रिय' इति स्मृति· ।
**कृतार्थ** त्रि० कृतः अर्थः प्रयोजनं येन । कृतकार्य्ये ।
**कृतास्त्र** त्रि० कृतं शिक्षितमस्त्रं येन । शिक्षितास्त्रे ।
**कृति** स्त्री० कृ-क्तिन् । पुरुषप्रयत्ने, कर्त्तृव्यापारे, विंशत्यक्षरपादके छन्दोभेदे च । [त्रिति, निपुणे, साधौ, कृतार्थे च ।
**कृतिन्** स्त्री० कृतमनेन इष्टादित्वादिनि । पण्डिते, योग्ये, पुण्य
**कृत्त** त्रि० कृत-क्त । छिन्ने, वेष्टिते च ।
**कृत्ति** स्त्री० कृत-क्तिन् । चर्म्मणि, भूर्ज्जपत्रे च ।
**कृत्तिका** स्त्री० कृत-क्तिन् संज्ञायां कन् । अश्विन्यवधिके तृतीये नक्षत्रे । [युक्तकाले सुतो जातः । चन्द्रे ।
**कृत्तिकासुत** पु० कृत्तिकायाः सुतः । स्कन्दे, कृत्तिकानक्षत्र-
**कृत्तिवासस्** पु० कृत्तिचर्म्म वासो यस्य, कृत्तिं वस्ते वस-असुन् वा । शिवे ।
**कृत्य** न० कृत-क्यप् । कार्य्ये, व्याकरणोक्तेषु तव्यत्क्यप्तव्यानीयर्यत्केलिमाख्येषु प्रत्ययेषु पु० । कर्त्तव्ये त्रि० ।
**कृत्यविद्** त्रि० कृत्यं कर्त्तव्यं वेत्ति विद-क्विप् । कार्य्यज्ञे, विधिज्ञे, कृत्यविदित्युवाचेति रघु' । [देवभेदे च ।
**कृत्या** स्त्री० कृ-क्यप् टाप् । क्रियायाम्-अभिचारक्रियाजन्ये,
**कृत्रिम** न० कृ-क्त्रि मेमप् च । विड्लवणे, काचलवणे, तुरुष्कनामगन्धद्रव्ये, रसाञ्जने च । सिद्धके द्वादशविधपुत्रान्तर्गते पुत्रभेदे च पु० । क्रियया निष्पन्नमात्रे त्रि० ।
**कृत्स्न** न० कृत-क्स्न । सकले, जले, कुक्षौ च । अशेषे त्रि०
**कृन्तन** न० कृत-ल्युट् । नि० नुमच । छेदने, 'कृन्तनं नखकेशानां छेदनञ्च वनस्पते'रिति स्मृतिः ।
**कृप** कल्पने भ्वा०आत्म०लुङि लुटि लृटि लृङि च उभ०इत्यादि अक०वेट् । कल्पते । अकल्पत् अकल्पिष्ट अक्लृप्त । कल्प्तासि कल्पितासे कल्प्तासे कल्प्स्यति कल्पिष्यते ।
**कृप** दौर्बल्ये अद०चुरा०उभ०अक०सेट् । कृपयति ते अचिकृपत्-त ।
**कृप** युतौ चित्रीकरणे वा चुरा० पक्षे भ्वादि०पर० । कल्पयति ते कल्पति अचीकॢपत्-त अकल्पीत् ।
**कृप** पु० कृप-क । शरद्वतः पुत्रे द्रोणश्यालके कृपाचार्य्ये ।
**कृपण** पु० कृप-क्युन् । कृमौ । मन्दे, क्षुद्रे च 'कृपणा' फलहेतव' इति गीता । दीने, 'कार्पण्यदोषोपहतस्वभाव' इति गीता अदातरि च त्रि० । [अनिच्छायाम् ।
**कृपा** स्त्री० कृप-अङ् । दयायां फलनिरपेक्षतया दीनजनानु-
**कृपाण** पु० कृपा नुदति नुद-ड । खड्गे । ङीप् । कृपाणीत्यप्यत्र । छुरिकायाम्, कर्त्तर्याञ्च ।
**कृपालु** त्रि० कृपां लाति ला-डु । कृपायुक्ते ।
**कृपी** स्त्री० द्रोणाचार्य्यस्य पत्न्याम् शरद्वतो दुहितरि ।
**कृपीट** न० कृप-कीटन् । उदरे, तोये च ।
**कृपीटयोनि** पु० कृपीटस्य जलस्य योनि' । वह्नौ "वायोरग्निरग्नेराप इति श्रुतेरस्य जलयोनित्वम् ।
**कृमि** पु० क्रम-इन् सम्प्रसारणञ्च । कीटात् सूक्ष्मे-जन्तौ । तज्जातायां-लाक्षायां, उदरजातकीटयुक्तरोगे च ।
**कृमिकण्टक** पु० कृमिरिव कण्टकोऽस्य । विडङ्गे उडुम्बरे चित्रायाञ्च । [क । कौषेये (रेशमिवस्त्रे) ।
**कृमिकोषोत्थ** न० कृमे' कोषात् उत्तिष्ठते उत्पद्यते उद्-स्था-
**कृमिघ्न** पु- कृमिं हन्ति हन-क । विडङ्गे, पलाण्डौ, कोलकन्दे, भल्लातके च । हरिद्रायाम् स्त्री०टाप् । धूम्रपत्रायां स्त्री०ङीप्
**कृमिज** न० कृमिभिर्जन्यते जन-कर्म्मणि ड । अगुरुणि चन्दने । कृमितोजाते त्रि० । लाक्षायां स्त्री० टाप् ।
**कृमिफल** पु० कृमय फलेऽस्य । उडुम्बरे ।
**कृमिशैल** पु० कृमीणां शैल इव । वल्मीके ।
**कृमीलक** पु० कृमीन् ईरयति जनयति ईर-ण्वुल् रस्य ल । वनमुद्गे । [अकर्शीत् ।
**कृश** तनूकरणे दिवा० पर० सक० सेट् । कृश्यति अकृशत्-
**कृश** त्रि० कृश-क्त नि० । अल्पे, सूक्ष्मे च ।
**कृशाङ्गी** स्त्री० कृशमङ्गमस्याः । प्रियङ्गुवृक्षे । कृशदेहे त्रि०
**कृशानु** पु० कृश-आनुक् । वह्नौ चित्रकवृक्षे च ।
**कृशानुरेतस्** पु० कृशानौ वह्नौ रेतोऽस्य । शिवे । देव्या सोढुमशक्यस्य शिववीर्य्यस्याग्नौ प्रक्षेप· अतोऽग्निभ·

कृष्णाजिन न० कर्म० । कृष्णसारमृगचर्म्मणि ।

कृष्णायस न० कर्म० टच् समा० । कृष्णलौहे अयस्कान्ते ।

कृष्णार्चिस् पु० कृष्णा कृष्णता अर्चिर्यो यस्य । कृष्णता कारकशिखे वह्नौ ।

कृष्णार्जक पु० कर्म० । विषमे (कालतुलसी) वनवर्वरे ।

कृष्णावास पु० कृष्णस्यावासोऽस्मिन् । अश्वत्थवृक्षे ।

कृष्णिका स्त्री० कृष्णेव संज्ञायां कन् । (राइ) राजसर्षपे ।

कृष्णेक्षु पु० कर्म० । (काजला) इक्षुभेदे ।

कृष्य स्त्री० कृष-अर्हार्थे क्यप् । कर्षणार्हायाम् भूमौ ।

कॄ विक्षेपे तुदा० पर० सक० सेट् । किरति अकारीत् । कीर्ण'

कॄ हिंसने क्र्यादि० उभ० सक० सेट् । कृणाति अकारीत् ।

कॄ विज्ञाने चुरा० आत्म० सक० सेट् । कारयते अचीकरत ।

कॄत संशब्दे चु० उभ० सक० सेट् । कीर्त्तयति-ते अचकीर्त्तत्-त

क्लृप्त त्रि० कृप-क्त । रचिते, नियते, 'क्लृप्तेन सोपानपथेनेति रघु० ।

केकय पु० देशभेदे, तद्राजस्य अणो बहुषु लुक् । तद्देशराजभेदे च ब०व० । 'तद्योगात् जन्यजनकभावोपचारात्

कैकयी स्त्री० भरतमातरि । [व्रतातियुक्ते पुरुषे (टेरा)

केकर पु० के मूर्द्ध्नि करं शीलमस्य कृ-अच् अलुक् स० । तिर्य्य-

केका स्त्री० के मूर्द्ध्नि कायते कर्मणि ड अलुक् स० । मयूरवाण्याम्

केकावल पु० केका+अस्त्यर्थे वलच् । मयूरे ।

केकिन् पु० केका+अस्त्यर्थे इनि । मयूरे ।

केचन अव्य० किम्+पुंसि जसिरूपं ततश्चन । केचिदित्यर्थे एव केचिदित्यप्यत्र । [कितत्-त ।

केत मन्त्रणे अद० चुरा० उभ० सक० सेट् । केतयति-ते अचि

केतक पु० कित-निवासे ण्वुल् । 'केतक' सूचिकापुष्पोऽम्बुक' क्रकचच्छद' इत्युक्तलक्षणे वृक्षे । तत्पुष्पे न० । गौरादि० ङीप् । केतकीत्यप्यत्र ।

केतन न० कित-भावाधिकरणकर्म्मकरणेषु यथायथं ल्युट् । गृहे, निमन्त्रणे, केतौ, ध्वजे, चिह्ने, कृत्ये च ।

केतु पु० चाय-तुन्-कादेशः । रोगे, द्युतौ, पताकायाम्, चिह्ने, रिपौ च । राहोः शरीरात्मके उपग्रहे । तेषामुत्पातरूपता ज्योतिषे सिद्धा ब० । व० ।

केतुमाल न० 'एकेतनं केतुमालं प्रतीच्यां गन्धमादना दित्युक्ते जम्बुद्वीपस्य नवखण्डान्तर्गते खण्डभेदे ।

केदार पु० के शिरसि दारोऽस्य । पर्व्वतभेदे, तत्रस्थे शिवलिङ्गभेदे, भूमिभेदे, आलवाले, क्षेत्रे च ।

केनिपात पु० के जले निपातोऽस्य अलुक् स० । अरित्रे नौकादेर्गतिनियामके (हाल) इति प्रसिद्धे काष्ठे । वा कपि तत्रैवार्थे

केन्दु पु० कुत्सित इन्दुः कोः कादेशः । तिन्दुकवृक्षे । संज्ञायां कन् (गाव) गालवृक्षे ।

केमुक पु० के शिरसि भ्रमयति मुच-णिच् कमठक् अलुक् स० । (केन्द) इतिख्याते केन्दुवृक्षे । फलं केमुकमर्जितमिति स्मृतिः

केयूर पु० के बाहुशिरसि याति या-ऊरच् अलुक् स० । (बाजु) (ताड) बाहुभूषणे ।

केरल पु० ब०व० । 'गोकर्णमं समारभ्य यावद्देशो जनार्द्दन! तावत् केरलदेश' इत्याद्युक्ते देशे । 'वैदिकयागानधिकारिणि-अननुधारिणि' कोशिसर्पा माहिषका दर्वाचोलाः सकेरला' । सर्वे ते क्षत्रियास्तात । धर्मस्तेषां निराकृत इति हरिवंशोक्ते क्षत्रियभेदे च ।

केल चालने भ्वा० पर० सक० सेट् । केलति अकेलीत् । णिचि अचिकेलत् त । [स्त्री० वा ङीप् ।

केलि पु० स्त्री० केल-इन् । परीहासे, क्रीडायाञ्च । पृथिव्यां

केलिवृक्ष पु० केले क्रीडार्थं वृक्षः । केलिकदम्बवृक्षे ।

केलिसचिव पु० केलौ सचिवः सहायः नर्मसचिवे क्रीडाविषये मन्त्रिणि । [अचिकेवत् त ।

केव सेवने भ्वा० आत्म० सक० सेट् । केवते अकेविष्ट, णिचि

केवल त्रि० केव-कलच् के मस्तके वलयति वल-अच् अलुक् स० । एके, कृत्स्ने च । निश्चिते, ज्ञानभेदे, शुद्धे च न० ।

केविका स्त्री० केव-ण्वुल् टाप् । कोङ्कणदेशप्रसिद्धे केवेर इति ख्याते पुष्पप्रधाने वृक्षे, भट्टारौ च ।

केश पु० क्लिश्यते क्लिश्नाति वा क्लिश-अच् ललोपश्च कस्य ईशो वा । वरुणे, ह्रीवेरे, दैत्यभेदे, विष्णौ, चिकुरे च मज्जवातजातोपधातुविशेषोऽयं केश' । अस्य परवर्त्तिन' पाशादिशब्दा केशभूयस्त्ववाचिन । बालास्तु तत्परा पाशो रचना भार उच्चय' । हस्त' पक्षः कलापश्च केशभूयस्त्ववाचकाइत्युक्तेः ।

केशकीट पु० ६त० । यूकाख्ये केशकीटे । (उकुण) [नागे

केशपर्णी स्त्री० केश इव पर्णमस्याः जातित्वात् ङीप् । अपा-

केशपाशी स्त्री० केश+पाश-गौरा० ङीप् । शिखायाम् केशमध्यस्यचूडायाम् । [शमीवृक्षे ।

केशमथनी स्त्री० केशै वेष्टा मथ्यतेऽसौ मथ ल्युट् ङीप् ।

केशमार्जक न० केशान् मार्ष्टि मृज-ण्वुल् । (कांकुइ चिरुणि) ख्याते केशप्रसाधिकायां कङ्कतिकायाम् ।

केशर पु० के जले शीर्य्यते शॄ-अप् । सिंहस्कन्धस्थायां जटायाम्, अश्वस्कन्धस्थकेशेषु पुन्नागवृक्षे, वकुलवृक्षे, नीलकेशरवृक्षे सुरानामगन्धद्रव्ये च । हिङ्गुले न० किञ्जल्के पु० न०

**कोच** पु० कुच-अच्। देशभेदे, तद्देशस्थे 'तीवरस्य स पुत्रः मांसच्छेदसमुद्भव'। 'कोचजातिरिति ख्यात' इत्युक्ते जातिभेदे च।

**कोजागर** पु० कोजागर्तीति वदत्यस्मिन् पृ०। आश्विनपौर्णमास्याम्। 'निशीथे वरदा लक्ष्मीः कोजागर्तीतिभाषिणी'ति।

**कोट** पु० कुट घञ्। कौटिल्ये, दुर्गे च (गड)।

**कोटर** पु०न० कोटं कौटिल्यं राति रा-क। वृक्षस्यगह्वरे।

**कोटवी** स्त्री० कोटं वाति वा क गौरा० ङीप्। नग्निकायां स्त्रियां दुर्गायाञ्च।

**कोटि** स्त्री० कुट-इञ्। धनुषोऽग्रभागे वस्तुमात्रस्याग्रभागे, शुक्कायाम् (पिडिङ्गशाक) संशयस्यान्यतमे, वादे निर्णयार्थं कृते पूर्वपक्षे, शतलक्षमितसंख्यायां, तत्संख्येये च। वा ङीप् कोटीत्यप्यत्र। [गोपकीटे।

**कोटिक** पु० काश्या बह्व्या कायति प्रकाशते कै-क। इन्द्र

**कोटिर** पु० कोटिं राति रा-क। इन्द्रे, नकुले, इन्द्रगोपकीटे च

**कोटिवर्षा** स्त्री० कोटिभिरग्रैर्वर्षति मधु इन-अण्। (पिडिङ्) शाकभेदे।

**कोटि(टी)श** पु० कोट्या अग्रेण श्यति शो-क। लोष्टभेदनेऽस्त्रे

**कोटीर** पु० कोटिमीरयति ईर-अण्। किरीटे, जटायाञ्च।

**कोट्ट** पु० कुट्ट-घञ् नि०गुणः। दुर्गे(गड) राजधानीभेदे च।

**कोट्टवी** स्त्री० कोट्टं वाति वा-क गौरा० ङीप्। नग्नायां स्त्रियाम् बाणमातृत्वे ऽस्याञ्च। [स्त्रियाम्।

**कोट्टार** पु० कुट्ट-आरक् पृ०। कूपे पुष्करिण्याः पाटके च।

**कोठ** पु० कुठि-अच् नि० नलोपः। मण्डलाकारे कुष्ठरोगे।

**कोण** पु० कुण-करणे घञ् कर्त्तरि अच् वा। येन धनुराकृतिना काष्ठेन वीणादयोवाद्यन्ते तस्मिन् वादनसाधने काष्ठे, गृहादीनामेकदेशे, अश्रौ, अस्त्राणामग्रभागे, लगुडे, मङ्गलग्रहे च। [मत्कुणे (उकुण)।

**कोणकुण** पु० कोणे गृहस्यैकदेशे कुणति चलति कुण-क।

**कोदण्ड** न० कु-शब्दे विच् कोर्दण्डोऽस्य। धनुषि, भ्रूलतायां, देशभेदे च।

**कोद्रव** पु० कु-विच् कोः द्रवति द्रु-अच् कर्म्म० (कोदो) धान्यभेदे

**कोप** पु० कुप-भावे घञ्। क्रोधे कामाग्रभिन्ने चित्तवृत्तिभेदे।

**कोपनक** पु० कुप-युच् कोपन· स इव कायति कै-क। चोरनामकगन्धद्रव्ये।

**कोपना** स्त्री० कुप-युच् टाप्। प्रकृत्या कोपवत्यां स्त्रियाम्। कोपशीले त्रि०। [कोपशालिनि त्रि०।

**कोपिन्** पु० अवश्य कुप्यति णिनि। जलपारावते। अवश्य

**कोमल** न० कु-कलच् मुट् नि० गुण'। जले। स्त्री, अकठिने, मनोहरे च त्रि०। मौरिकायां स्त्री० टाप्।

**कोमलवल्कली** स्त्री० कोमलं वल्कलं यस्याः। लवल्याम्।

**कोयष्टि** पु० के जले यष्टिरिवास्य पृ० अत ओत्वम्। जलकुक्कुटे पक्षिणि। संज्ञायां कन्। (टिटिर) टिट्टिभपक्षिणि

**कोरक** पु० न०। कुर्य्यते कुर-वुन्। कलिकायाम्, मृणाले, कक्कोले च 'विचारकोरकाणीति' भाव'। अमरे पुंलिङ्गोक्तिः प्रायिकाभिप्रायेण।

**कोरङ्गी** स्त्री० कुर-अङ्गच् ङीप्। सूक्ष्मैलायाम्, पिप्पल्याञ्च

**कोरदूष** पु० कोर दूषयति दुष-णिच्-अण् (कोदो) धान्यभेदे

**कोल** पु० कुल-संस्त्याने अच्। क्रोडे-शनिग्रहे, शूकरे, उडुपे (डोङ्गा), भुजान्तरे, भेलके, चितायाम् (चिता), अस्त्रभेदे, टङ्कद्वयमाने, जातिभेदे, देशभेदे च। चव्ये, मरिचे, तोलकमाने, बदरफले च न०।

**कोलक** पु० कुल-ण्वुल्। अङ्कोठवृक्षे, बहुवारवृक्षे (काकला) च। गन्धद्रव्यभेदे, मरिचे, कक्कोले च न०।

**कोलकन्द** पु० कोलमिव कन्दोऽस्य। महाकन्दभेदे।

**कोलदल** न० कोलं बदरीफलमिव दलमस्य। नखीनामगन्धद्रव्ये

**कोलपुच्छ** पु० कोलस्य शूकरस्येव पुच्छोऽस्य। कङ्कपक्षिणि

**कोलमूल** न० कोलस्य बदर्य्या इव मूलम्। पिप्पलीमूले।

**कोलम्बक** पु० कुल-अम्बच् संज्ञायां कन्। तन्त्रीभिन्ने अलाबूप्रभृतिसमुदाये वीणायाः काये। [पिप्पल्याम्।

**कोलवल्ली** स्त्री० कोल इव वल्ली तत्तुल्यरोमवत्त्वात्। गजपि-

**कोलशिम्बि** स्त्री० कोलपादाकारा शिम्बिरस्या। 'आलकुशीति ख्यातायां शूकरपादिकायां लतायाम्।

**कोला** स्त्री० कुल-अच् टाप्। पिप्पल्याम्, चव्यभेषजे, कोलिवृक्षे, देशभेदे च।

**कोलाविध्वंसिन्** त्रि० कोलां विध्वंसितं वस्तुं शीलमस्य विशब्देन धातोरन्यार्थपरत्वम्। पर्वतवासिनि म्लेच्छभेदे 'एव पालयतस्तस्य म्लेच्छा पर्वतवासिनः। कोलाविध्वंसिन प्राप्ता इति देवीभागवतम्। कोलाविध्वंसिनस्तथेति देवीमाहात्म्यम्। कोलाशब्द कोलाहलवाचकस्तथा च कोलाहलेनैव राज्यविध्वंसं कुर्वन्ति ये। तेषु।

**कोलाहल** पु० कुल-घञ् तमाहलति अच्। बहुविधे दूरगामिन्यव्यक्ते शब्दे।

**कोलि** पु० स्त्री० कुल-इन्। बदर्य्याम् स्त्रीत्वपक्षे वा ङीप्।

**कोविद** पु० कुङ् शब्दे-विच् कोर्वेदस्तं वेत्ति विद-क। पण्डिते विदुषि।

**कौलटेय** पु० स्त्री० कुलटायाः सत्याः असत्या वा अपत्यम् । ढक् । स वा असत्याश्च कुलटाया पुत्रे । स्त्रियां ङीप् ।

**कौलटेर** पु०स्त्री०कुलटाया असत्या अपत्यम् ढ्रक् । बन्धक्याः पुत्रे

**कौलिक** त्रि०कुलाद् गत ठक् । कुलपरम्परागते । कुलेनाचरितः ठक् । कुलाचारे । कौल कुलधर्मं प्रवर्त्तयति ठक् । कुलधर्मप्रवर्त्तके तन्त्रोक्ते शिवे. तन्त्वादौ च ।

**कौलीन** न० कौ पृथिव्यां लीनं यस्मात् अलुक् स० । गुह्ये, परीवादे, दुष्टकार्य्ये च । कुलीनस्य भाव कर्म वा । कुलीन कर्मणि, प्राणिभिर्द्यूते च ।

**कौलेय** त्रि० कुले+भव ढक् । सत्कुलोत्पन्ने ।

**कौलेयक** पु० कुले भव श्वा ढकञ् । कुलागते कुक्कुरे ।

**कौवेरी** स्त्री० कुवेरस्येयम् अण् । मातृभेदे, उत्तरदिशि च।

**कौशल** न० कुशलस्य भावः अण्। क्रिय या नैपुण्ये ।

**कौशलिका** स्त्री० कुशलस्य पृच्छा ठक् । कुशलप्रश्ने । कुशलाय सम्पादनाय नीयते ठञ् । उपायने उपढौकने ।

**कौशलेय** पु० कौशल्यायाः अपत्यम् ढक् यलोपः । रामचन्द्रे

**कौशल्या** स्त्री० कुशलेव चातुर्य्यादिलात् ष्यञ् । राममातरि

**कौशाम्बी** स्त्री० कुशाम्बेन निर्वृत्ता नगरी अण् । वत्सपत्तने

**कौशिक** पु० कुशिकस्य गोत्रापत्यम् ऋष्यण्। विश्वामित्रे मुनौ। कोशे भवः ठक् । नकुले, व्यालग्राहे, मेचके, इन्द्रे, गुग्गुलौ च। कोशेऽधिकृतः ठक् । कोषाध्यक्षे ।

**कौशिकफल** पु० कौशिकेन विश्वामित्रेण सृष्टं फलं यस्य । नारिकेले । [शतुत्वं लोकसिद्धम् ।

**कौशिकाराति** पु० ६त० । मेचकशत्रौ काके तस्य मेचक-

**कौशिकी** स्त्री० "शरीरकोशाद्यत्तस्याः पार्वत्या निःसृताम्बिका । कौशिकीति समाख्यातेत्युक्तलक्षणाया दुर्गायाम् नदीभेदे 'कौशिकी चन्द्रभागा चे'ति स्मृति' नाट्ये वृत्तिभेदे च

**कौशेय** त्रि० कोशादुत्थितम् ढक् । कृमिकोषादिजाते वस्त्रे ।

**कौसल्या** स्त्री० कोसलस्य राज्ञोऽपत्यं ष्यङ् । राममातरि पाणिनिसूत्रे दन्त्यसकारनिर्द्देशात् दन्त्यसकारवानयम् ।

**कौसल्यायनि** पु० कौसल्याया अपत्यं फिञ् । श्रीरामे ।

**कौसुम्भ** पु० कुसुम्भ+स्वार्थे अण् । अरण्यकुसुम्भे शाकभेदे च कुसुम्भेन रक्तम् अण् । कुसुम्भरागरञ्जिते वस्त्रादौ त्रि०

**कौसृतिक** त्रि० कुसृत्या चरति टक् मायाकारके शाठ्ययुक्ते।

**कौस्तुभ** पु० कुं भूमिं स्तुभ्नाति कुस्तुभोजलधिः तत्र भवः अण् । विष्णोर्वक्षःस्थे 'कौस्तुभस्तु महातेजा' कोटिसूर्य्य-समप्रभ, इत्युक्तलक्षणे मणिभेदे ।

**कौस्तुभवक्षस्** ६व० कौस्तुभो वक्षसि यस्य । विष्णौ ।

**क्नथ** वधे वा० चु० उभ० पक्षे भ्वा० पर० सक० सेट् घटादि । क्नथयति-ते क्नथति अचिक्नथत्-त अक्नथीत्-अक्नाथीत् ।

**क्नस** दीप्तौ कौटिल्ये च दिवा० पर० अक० सेट् घ० । क्नस्यति अक्नसीत्-अक्नासीत् क्नसयति-ते क्नसित्वा-क्नस्त्वा ।

**क्नस** दीप्तौ वा०चु०उभ० पक्षे भ्वा० क्नसयति-ते । क्नसति । अचिक्नसत्-त अक्नसीत्-अक्नासीत् । क्नसित्वा-क्नस्त्वा ।

**क्नू** शब्दकरणे क्र्यादि० उभ०सक०सेट् प्वादि० । क्नुनाति क्नुनीते अक्नावीत अक्नविट ।

**क्नूय** दुर्गन्धे आर्द्रीभावे शब्दे च भ्वा० आ०म० अक० सेट् । क्नूयते अक्नूयिष्ट । क्नोपयति ते । क्नूतः ।

**क्मर** कौटिल्ये भ्वा० पर० अक० सेट् । क्मरति अक्मारीत् ]

**क्रकच** पु० क्र इति कचति शब्दायते क्र-शब्दे अच् । ग्रन्थिलाख्ये वृक्षे । करपत्रे (करात) पु० न० । ज्योतिषोक्ते योगभेदे च ।

**क्रकचच्छद** पु० क्रकच इव छदो यस्य । केतकीवृक्षे ।

**क्रकचपाद्**(द) क्रकचमिव पादो यस्य वा अन्त्यलोपः । कृकलासे

**क्रकचपृष्ठी** स्त्री० क्रकच इव पृष्ठं यस्याः । (कइ) मत्स्यभेदे ।

**क्रकण** पु०क्र इति कणति शब्दायते कण-अच् । (कयार)पक्षिणि

**क्रकर** पु० क्र इति शब्दं कर्त्तुं शीलमस्य ताच्छील्येऽच् (कयार) क्रकणे पक्षिणि ।

**क्रतु** पु० कृ-कतु । यूपसहिते, तद्रहिते वा यज्ञे, संकल्पे, 'यथा-क्रतुरस्मिन् तथा प्रेत्य भवती'ति श्रुतिः । ब्रह्मण कराज्जाते मरीच्याद्यन्तर्गते मुनिभेदे, विश्वदेवभेदे, इन्द्रियेषु च ।

**क्रतुदोषनुद्** पु० क्रतूनामिन्द्रियाणां दोषं नुदति क्विप् । प्राणायामे "दह्यन्ते ध्मायमानानां धातूनाञ्च यथा मलाः । प्राणायामैस्तथा दोषाः नश्यन्तीन्द्रियगोचराः" इत्युक्तेस्तस्येन्द्रियदोषनाशकत्वम् ।

**क्रतुद्विष्** पु० क्रतु द्वेष्टि द्विष-क्विप् । असुरे, न स्त्रियां च ।

**क्रतुध्वंसिन्** पु० क्रतं दक्षयज्ञं ध्वंसयति ध्वन्स-णिच्-णिनि । शिवे । [देवे ।

**क्रतुभुज्** पु० क्रतुं यज्ञे दत्तहविरादिकं भुङ्क्ते भुज-क्विप् ।

**क्रतुराज** पु० क्रतूनां राजा टच्समा० । राजसूययज्ञे ।

**क्रथ** वधे भ्वा० पर०सक० सेट् घटा० । क्रथति अक्रथीत्-अक्राथीत् । क्राथयति-ते । [थत्-त ।

**क्रथ** प्रतिहर्षे चु० उभय० सक० सेट् क्राथयति-ते अचिक्र-

**क्रथन** न० क्रथ वधे ल्युट् । मारणे छेदने च राजन्योन्नासकूट क्रथनपटुरिति प्रबोधचन्द्रोदयः । संज्ञायां कन् उष्ट्रे ।

**क्रन्द** रोदने वैकल्ये अक० आह्वाने सक० भ्वा० पर० सेट् ।

क्नुय्य क्लेशे क्षेपे च क्र्या०पर० अक० सेट् । क्नुय्यति अक्नुयीत्

क्रुश रोदने आक्रोशे च सक० भ्वा० पर०अनिट् । क्रोशति अक्रुक्षत् । [आहूते त्रि० ।

क्रुष्ट क्रुश-भावे क्त । रोदने, रवे च । आङ्+कर्मणि क्त ।

क्रूर त्रि०कृत-रक् धातोः क्रू । कठिने,निर्दये,परद्रोहकारिणि, नृशंसे, उष्णे च । रक्तकरवीरे श्येनखगे, कङ्कपक्षिणि ज्योतिषोक्ते रविमङ्गलमन्दराहुकेतुरूपे ग्रहे, पूर्व्वात्रय-भरणीमघारूपे नक्षत्रे च पु० ।

क्रूररावित् पु० क्रूरस्वरं रौति रु-णिनि । द्रोणकाके ।

क्रेय त्रि० क्री-यत् । क्रेतव्ये वस्तुमात्रे ।

क्रोड़ पु० न० क्रुड-घञ् । अङ्के (कोल) । राक्षसे शूकरे च पु० । अश्वानामुरसि भुजान्तरे च स्त्री० टाप् । वाराहीकन्दे पु०स्त्री० ।

क्रोडाङ्घ्रि पु० क्रोड़े अङ्घ्रिर्यस्य । कच्छपे ।

क्रोध पु० क्रुध-घञ् । परापकाराय चित्तवृत्तिभेदे, परानिष्टाभिलाषे, अनिष्टविषयद्वेषहेतुके चित्तवृत्तिभेदे च ।

क्रोधज पु० क्रोधात् जायते जन-ड । मोहे 'क्रोधात् भवति संमोह' इति गीता । 'पैशुन्यं साहसं द्रोह ईर्ष्यासूया-र्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टक' इत्युक्ते व्यसनभेदे च ।

क्रोधन पु० क्रुध-ल्यु । कोपयुक्ते, कोपशीले, तन्त्रोक्तेषु अष्टसु भैरवेषु भैरवभेदे, षष्टिसंवत्सरमध्ये ज्योतिषोक्ते 'रोगो-मरणदुर्भिक्षं विरोधोबहुसङ्कुलः । क्रोधने विषमं सर्व्व-मित्युक्तफलके वत्सरभेदे च ।

क्रोश पु० क्रुश-घञ् । रोदने आह्वाने च । अष्टसहस्र-माने (कोश) 'क्रोश सहस्रद्वितयेन तेषा'मिति लीला-वती । मतान्तरे सहस्रहस्तमाने । [स्त्रियां क्रोष्ट्री ।

क्रोष्टु पु० क्रोशति क्रुश-तुन् । शृगाले । स्वार्थे कन् अत्रैवार्थे ।

क्रोष्टुकपुच्छिका स्त्री० क्रोष्टुकस्य पुच्छमिव पर्णान्यस्याः । (चाकुलिया) पृश्निपर्ण्याम् । [शृगाल्यां, लाङ्गल्याञ्च ।

क्रोष्ट्री स्त्री०क्रुश-तुन् तृज्वत् ङीप् । भूमिकुष्माण्डे, विदार्य्यां,

क्रौञ्च पु० क्रुञ्च+स्वार्थे अण् । (कोंचवक) वकभेदे कुररपक्षिणि, दैत्यभेदे, दधिसमुद्रेणावृते द्वीपभेदे, पर्व्वतभेदे च ।

क्रौञ्चदारण(न) पु० क्रौञ्चं दैत्यं पर्व्वतं वा दारयति दृ-णिच् ल्युट् युच् वा । कार्त्तिकेये सच्चि 'क्रौञ्चक्रौञ्चौ हतो दैत्य-क्रौञ्चाद्री' हेमचन्द्रे । स्कन्देन युद्धा सुचिरं चित्रमायी सुमायिना । स शैलस्य दैत्यस्य ख्यातयित्वेव कर्म्मणा । नेतुतामगमत्तस्य नाम्ना क्रौञ्च स उच्यते इति पुराणम् ।

क्रौञ्चादन न० क्रौञ्चानां वकभेदानामदनं भक्ष्यम् । मृणाले, (घेचु) चिञ्चोटके, पिप्पल्याञ्च । पद्मबीजे स्त्री० ।

क्लथ वधे वा चुरा०उभ०पक्षे भ्वा०पर०सक०सेट् घटादि० । क्लथयति ते क्लथति अचिक्लथत् अक्लाथीत् अक्लथीत् ।

क्लद रोदने अक०आह्वाने सक०इदित् पर०भ्वा०सेट् । क्लन्दति अक्लन्दीत् । [अक्लदिष्ट क्लदयति ते ।

क्लद वैकल्ये दि० आत्म० अक० सेट् घटादि० । क्लद्यते

क्लद रोदने भ्वा० उभ० इदित् अक० सेट् । क्लन्दति ते अक्लन्दीत् अक्लन्दिष्ट । [अचिक्लिपत्-त ।

क्लप अव्यक्तवाक्ये चुरा० उभ०अक० सेट् घटा० । क्लपयति-ते

क्लम ग्लानौ दिवा०पर०अक०सेट् । क्लाम्यति अक्लमीत् । क्लमित्वा-क्लान्त्वा । क्लान्तः । [मीत् । क्लमित्वा क्लमित. ।

क्लम ग्लानौ भ्वा० पर० अक० सेट् । क्लामति अक्लमत् अक्ल-

क्लम पु० क्लम-घञ् अवृद्धिः । आयासे, श्रमे च । [क्लित्वा ।

क्लमथ पु० क्लम-अथच् । आयासे । [विट्-क्लवयति क्लवित्वा ।

क्लव भये दिवा० आत्म०अक० सेट् घटादि० । क्लव्यते अक्ल-

क्लान्त त्रि० क्लम-क्त । श्रान्ते । [अक्लेदीत्-अक्लैत्सीत् ।

क्लिद आर्द्रीभावे दिवा०पर०अक० वेट् । क्लिद्यति । अक्लिदत्-

क्लिद रोदने इदित् भ्वा०उभ०अक०सेट् । क्लिन्दति अक्लिन्दीत्

क्लिन्न त्रि० क्लिद-क्त । आर्द्रे ।

क्लिश उपतापे दि० आत्म० अक० सेट् । क्लिश्यते । अक्लेशिष्ट क्लिशित्वा । क्लिशित'-क्लिष्ट० । [अक्लिक्षत्

क्लिश विबाधे क्र्या० पर० सक० वेट् । क्लिश्नाति अक्लेशीत्-

क्लिशित त्रि०क्लिश-उपतापे क्त । क्लेशयुक्ते वा । इडभावे क्लिष्टोऽप्यत्र

क्लीतक न० क्लीव-क्विप् नि० वलोपः क्लीं तकति हसते अच् मधुके (यष्टिमधु) । [नील्यामोषधौ ।

क्लीतकिका स्त्री० क्लीतकं क्रयोऽस्त्यस्याः ठन् वा नम् ।

क्लीब(व) मदे अप्रागल्भ्ये च भ्वा०आत्म०अक०सेट् । क्लीब(व)ते अक्लीबि(वि)ष्ट । [निरुत्साहे च ।

क्लीब(व) पु०क्लीब(व)-अच् । नपुंसके,विक्रमहीने,धर्म्मकत्वादौ,

क्लु गतौ भ्वा० आत्म० सक० सेट् । क्लवते अक्लविष्ट ।

क्लेद पु० क्लिद-घञ् । पूतीभावे, चन्द्रे च ।

क्लेश वधे उपतापे भ्वा०आत्म० सक० सेट् । क्लेशते अक्लेशिष्ट

क्लेश पु० क्लिश-घञ् । दुःखे, रोगादौ, योगशास्त्रोक्तेषु अविद्यास्मितादिषु पञ्चसु । [कौन्तेये'ति गीता ।

क्लैव्य(व्य) न० क्लीव(व) भावे-ष्यञ् । निष्पौरुषत्वे 'मा क्लैव्यं गच्छ

क्लोमन् न० क्लुङ् गतौ मनिन् । 'अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति । जलवाहि शिरामूलं तृष्णास्थानं मतं

बुध इत्युक्ते वाह्लीमध्ये स्थानभेदे । [नेति चालार्थे ।

क्व अव्य० किम्+अ कादेश । कुत्रेत्यर्थे चिन्तनयो । क्वचित् क्वच

क्वण शब्दे भ्वा० पर० अक० सेट् । क्वणति अक्वाणीत् अक्वणीत्

क्वण पु० क्वण अप् । वीणाया शब्दे, ध्वनिमात्रे च ।

क्वथ निष्पचने भ्वा० पर सक सेट् । क्वथति अक्वथीत् । [च

क्वथित त्रि क्वथ-क्त । अतिशयपक्वे व्यञ्जनादौ, दशमूलपाचनादौ

क्वाथ पु० क्वथ घञ् । दुःखे, द्रव्यमात्रस्यातिशये पाके ।

क्वाथोद्भव न० क्वाथादुद्भवति अच् । तुत्थाञ्जने ।

क्ष्वेल चालने गतौ च भ्वा पर० सक० सेट् । क्ष्वेलति अक्ष्वेलीत् ।

क्ष्वेलयति अचिक्ष्वेलत् । [अचक्षञ्जत् त ।

क्षज कृच्छ्रजीवने इदित् चुरा० उभ अक० सेट् । क्षञ्जयति ते

क्षज धरे भ्वा आ सक० सेट घटा । क्षजते अक्षजिष्ट । क्षजयति

क्षज गतौ दाने च भ्वा० आत्म० इदित् सक० सेट् । क्षञ्जते

अक्षञ्जिष्ट । [अक्षणिष्ट ।

क्षण वधे तना उभ सक० सेट् । क्षणोति क्षणुते । अक्षणीत्

क्षण पु० क्षणोति दुःखम् क्षण अच् । उत्सवे, अवसरे मध्ये,

द्वादशपलपरिमिते काले, निमेषक्रियाचतुर्थभागे च ।

क्षणद पु क्षण यामिकादिलक्षणं उत्सव वा ददाति दा क ।

गणके । जले न । रात्रौ स्त्री० ।

क्षणप्रभा स्त्री० क्षण व्याप्य प्रभा यस्या । विद्युति ।

क्षणभङ्ग पु क्षणात् भङ्गो यस्य । उत्पन्नाभे सर्वेषां भावपदार्थानां प्रतिक्षणमवयवनाशत्वाद्याधारध्वानयवभङ्गस्य स्वीकारो यस्मिन् मते तादृशे बौद्धादीना मते ।

क्षणभङ्गुर त्रि० क्षणात् भज्यते भञ्ज कर्मकर्त्तरि घुरच् ।

क्षणैकमात्रस्थे वस्तुमात्रे ।

क्षणिक त्रि० क्षण व्याप्नोति ठञ् । एकक्षणमात्रस्थायिनि पदार्थे । येषा प्रथमक्षणे उत्पत्ति द्वितीयक्षणे स्थितिस्तृतीयक्षणे नाश इति ते क्षणिका यथा बुद्ध्यादय इति तार्किकाः । कार्यकारणभेदानां समवायाभावाद्यक्षण उत्पत्तिर्द्वितीयक्षणे नाश इति बौद्धा 'यत् सत्तत् क्षणिक'मित्युक्ते

क्षत न० क्षण-भावे क्त । खड्गक्षुरादौ व्रणे । कर्मणि क्त ।

व्रणयुक्ते त्रि ।

क्षतघ्न पु० क्षत हन्ति हन-क । (कुकुरशोधा) क्षुपभेदे । लाक्षायाम्

क्षतज न० क्षतात् जायते जन-ड । रुधिरे ।

क्षति स्त्री० क्षण-क्तिन् । हानौ अपचये नाशे च ।

क्षत्तृ पु० क्षद तृच् । शूद्रात् क्षत्रियायामुत्पन्ने सङ्कीर्णवर्णे प्रतीहारे, सारथौ भुजिष्यापुत्रे नियुक्ते वेधसि च ।

क्षत्र पु क्षण क्विप् क्षत् ततस्त्रायते त्रै क । क्षत्रिये क्षतात् किल त्रायत इत्युग्रः क्षत्रस्य शब्द इति रघु ।

क्षत्रबन्धु पु० क्षत्रस्य बन्धुरेव तत्कर्मकर्तृत्वाभावात् न तत्-कर्त्ता । क्षत्रकार्याक्षमे निन्द्ये क्षत्रिये ।

क्षत्रिय पु० क्षत्रस्यापत्य घ । क्षत्रजाते राजन्ये 'क्षतात् सेवते कर्म वेदाध्ययनसंयुतम् । दानादानरतिर्भूत स वै क्षत्रिय उच्यते' इत्युक्ते वर्णभेदे ।

क्षद् भक्षणे सौत्र० आत्म० सक० अनिट् । क्षदते अक्षत्त ।

क्षप क्षेपे अद चुरा० उभ० सक० सेट् । क्षपयति ते अचक्षपत् त

क्षप सहने चुरा० इदित् उभ सक० सेट् । क्षम्पयति ते अचक्षम्पत् त ।

क्षप प्रेरणे चुरा उभ सक० सेट् । क्षपयति ते अचिक्षपत् त

क्षपणक पु० क्षपयति निपयरागं क्षप-युच् स्वार्थे कन् । बौद्धसन्यासिनि । एक क्षपणक । साकाङ्क्षत्युक्ते ।

क्षपा स्त्री० क्षपयति चेष्टाम् क्षै-णिच् पुक् च अच् । रात्रौ ।

क्षपाकर पु क्षपाया रात्रौ करोदीधिति र्यस्य । चन्द्रे स हि रात्रौ सूर्यतेजसा दीप्यते ।

क्षपाट पु० क्षपायामटति अट-अच् । राक्षसे 'तत क्षपाटै पृथुपिङ्गलाक्षैरिति भट्टि । [क्षान्त ।

क्षम सहने भ्वादि आत्म० सक० सेट् । क्षमते अक्षमिष्ट अक्षस्त

क्षम सहने दिवा० पर० सक० सेट् शमादि । क्षाम्यति 'क्षाम क्षाम्यतु य क्षमीति माघ । अक्षमीत् ।

क्षम न० क्षम अच् । युक्ते । शक्ते, हिते क्षमायति च त्रि०

क्षमता स्त्री० क्षम+तल् । योग्यतायां, यन्निष्ठे कार्यजनकाश्रम सामर्थ्ये च 'क्षमता च लिङ्गमि'ति मीमांसा ।

क्षमा स्त्री क्षम-अङ् । तितिक्षायाम्, 'बाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित् । न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता,' 'आक्रुष्टोऽभिहतो वापि नाक्रोशेन्न च हन्ति वा । अदुष्टवाङ्मन कायैस्तितिक्षा क्षमा' इत्युक्ते लक्षणायाम् पृथिव्याम्, भूमौ च ।

क्षमिन् त्रि० क्षम-घिनुण् इत्यभाव । क्षमावति । क्षाम क्षाम्यतु य क्षमीति माघ ।

क्षय पु० क्षि-अच् । नाशे, ह्रासे, अपचये कासरोगभेदे च गृहे, निवासे, हिंसायाम् ६ वर्षमध्ये 'देशभङ्गश्च दुर्भिक्षं क्षये कथ्यते प्रजाः' इत्युक्तफलके वत्सरभेदे, रविसंक्रान्तिद्वययुक्तशुक्लप्रतिपदादिके अमावास्यान्ते मासे 'द्विसंक्रान्त माप क्षयः कार्तिकादौ' । 'यौदाद्यदा चन्द्रमसो गरीयान् मासो द्विसंक्रान्तिरसौ क्षयाख्य' इत्युक्ते मासे च ।

क्षयथु पु० क्षि अथु (कासरोगे) ।

**क्षयनाशिनी** स्त्री० क्षयं कासं नाशयति नश-णिच-णिनि । जीवन्तीवृक्षे । [क्षमा० । कृष्णपक्षे ।
**क्षयपक्ष** पु० क्षयस्य (चन्द्रस्य क्षयार्थं) पक्ष अवयवाशादिवत्
**क्षर** संचलने भ्वा० पर० अक० सेट् । क्षरति अक्षारीत् ।
**क्षर** पु० क्षर-अच् । मेघे । 'कार्य्यकारणरूपन्तु नश्वरं क्षरमुच्यते' इत्युक्ते नश्वरे त्रि० । 'क्षरः सर्वाणि भूतानी'ति गीता । जले न० । [यति ते क्षलति अक्षालत् त अक्षालीत् ।
**क्षल** शोधने वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । क्षाल
**क्षव** पु० क्षु-अप् । क्षुते, (हांचि) राजिकाभेदे च ।
**क्षवक** पु० क्षव+संज्ञायां कन् । राजिकाभेदे, अपामार्गे च ।
**क्षवथु** पु० क्षु-अथुच् । क्षुते (हांचि) [क्षि क्षुतं जायते ।
**क्षवपत्रा** स्त्री० क्षवः पत्रेषु यस्याः' । द्रोणपुष्प्याम् तत्पत्राघ्राणे
**क्षात्त्र** न० क्षत्रस्य कर्म्म भावो वा-अण् । 'शौर्य्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षात्रकर्म्म स्वभावज'मित्युक्ते क्षत्रियकर्म्मणि 'क्षात्र' द्विजत्वञ्च परस्परार्थमिति भट्टि' । [सामर्थ्ये तदतो कारपराङ्मुखे ।
**क्षान्त** त्रि० क्षम-क्त । सहिष्णौ केनचित्पीडनेऽपि सति
**क्षान्ति** स्त्री० क्षम-क्तिन् । क्षमायाम् सामर्थ्ये सत्यपकारिणोऽप्यपकाराचिकीर्षायाम् ।
**क्षाम** त्रि० क्षै-क्त तस्य म । क्षीणे, दुर्बले च ।
**क्षार** पु० क्षर-ण । (खार) इति ख्याते रसे, लवणे, क्षारजाते काचे, भस्मनि, गुडे, धूर्त्ते च । टङ्कणे (सोहागा) यवक्षारे, विड्लवणे, सर्ज्जिकाक्षारे च न० । [पिटके च
**क्षारक** पु० क्षर-ण्वुल् । (जालि) नवकलिकावृन्दे पक्षिमत्स्यादि
**क्षारदला** स्त्री० क्षारो दलेष्वस्याः' । क्षुद्रवास्तुकशाके ।
**क्षारभूमि** स्त्री० क्षारयुक्ता भूमिः । अम्बुधिसमीपस्थभूमौ किमाश्चर्य्यं क्षारभूमौ प्रयाता वन्दूतिकेत्युद्भट० ।
**क्षारमृत्तिका** स्त्री० क्षारसंयुक्ता मृत्तिका । ऊषरस्थाने ।
**क्षारित** त्रि० क्षर-णिच्-क्त । अपवादग्रस्ते, आसृष्टे, स्राविते च
**क्षालित** त्रि० चु० क्षल-क्त । निर्णिक्ते जलप्रक्षालने च ।
**क्षि** क्षये भ्वा० पर० अक० अनिट् । क्षयति अक्षैषीत् ।
**क्षि** हिंसायां स्वा० पर० सक० अनिट् । क्षिणोति क्षिणुत' क्षिण्वः क्षिणुवः । अक्षैषीत् । [अक्षैषीत् ।
**क्षि** गतौ सक० निवासे अक० तुदा० पर० अनिट् । क्षियति
**क्षि** हिंसायां क्र्या० पर० सक० अनिट् । क्षिणाति अक्षैषीत् ।
**क्षिण** हिंसायां तना० उभ० सक० सेट् । क्षिणोति क्षिणुते अक्षेणीत् अक्षेणिष्ट ।
**क्षिति** स्त्री० क्षि-निवासे आधारे क्तिन् । भूमौ, भावे क्तिन् निवासे । क्षि-क्षये भावे-क्तिन् । क्षये, रोचनाख्यगन्धद्रव्ये च ।
**क्षितिधर** पु० क्षितिं धारयति धृ-णिच् अच् ह्रस्वः । पर्व्वते कूर्म्मवाराहकिटिगजेषु च ।
**क्षितिपति** पु० ६त० । राजनि नृपतौ एवं क्षितीशादयोऽप्यत्र
**क्षितिरुह** पु० रोहति रुह-क ७त० । वृक्षे ।
**क्षितिवर्द्धन** पु० क्षितिं वर्द्धयति वृध-णिच् ल्यु । शवे 'करोमि क्षितिवर्द्धन'मिति भट्टि । [अक्षिप्त ।
**क्षिप** प्रेरणे तुदा० उभ० सक० अनिट् । क्षिपति-ते अक्षैप्सीत्
**क्षिप** लोटने दिवा० पर० सक० अनिट् । क्षिप्यति अक्षैप्सीत् ।
**क्षिपणि(णी)** स्त्री० क्षिप-अनि वा ङीप् । नौकादण्डे 'दाड़' शस्त्रे, वड़िशे च ।
**क्षिप्त** त्रि० क्षिप-क्त । प्रेरिते, त्यक्ते, विकीर्णे अवज्ञाते, रागद्वेषादिवशाद्विषयासक्ते चित्ते, वायुरोगग्रस्ते च ।
**क्षिप्र** न० क्षिप-रक् । ज्योतिषोक्ते नक्षत्रभेदे शीघ्रे च तद्वति त्रि०
**क्षिप्रकारिन्** त्रि० क्षिप्रं करोति कृ-णिनि । (चालाक) शीघ्रक्रियाकारके ।
**क्षिप्रपाकिन्** पु० क्षिप्रं शीघ्रं पच्यते पच-घिणुन् । (गन्धभादिलिया) द्रुमभेदे । शीघ्रपाकवति त्रि० ।
**क्षिव** निरसने भ्वा० पर० सक० सेट् । क्षेवति अक्षेवीत् ।
**क्षिव** निरसने दिवा० पर० सक० सेट् । क्षीव्यति अक्षेवीत् । क्षेविला क्ष्यूत्वा । [अक्षेट् ।
**क्षी** हिंसायां भ्वा० उभ० सक० अनिट् । क्षयति-ते अक्षैषीत्
**क्षीज** अव्यक्तशब्दे भ्वा० पर० अक० सेट् । क्षीजति अक्षीजीत्
**क्षीण** त्रि० क्षि-क्त । दुर्बले, क्षामे च 'चतुर्द्दश्यष्टमे क्षामे क्षीणो भवति चन्द्रमा इति स्मृति ।
**क्षीब(व)** मदे भ्वा० आत्म० अक० सेट् क्षीब(व)ति अक्षीबी(वी)त्
**क्षीब(व)** त्रि० क्षीब(व)-क्त नि० । मत्ते । [जले च ।
**क्षीर** न० क्षी-सम्पादित्वात् क्विप् तामीरयति ईर-अण् । दुग्धे
**क्षीरकण्ठ** पु० क्षीरं कण्ठे यस्य । स्तनन्धये बालके । [क्षाञ्च
**क्षीरकन्द** पु० क्षीरमिव कन्दोऽस्य । क्षीरविदार्य्याम्, क्षीरव
**क्षीरकाण्डक** पु० क्षीरान्वितं काण्डं यस्य कप् । स्नुहीवृक्षे, अर्कवृक्षे च ।
**क्षीरदल** पु० क्षीरं दले यस्य । अर्कवृक्षे ।
**क्षीरनाश** पु० क्षीरं नाशयति नश-णिच्-अण् । शाखोटवृक्षे (सेओड़ा) तत्पत्रादिनिर्यासयोगेन शीघ्रमेव दुग्धं दधिवत् घनीभवतीति तस्य दुग्धनाशकता ।
**क्षीरपर्णी** स्त्री० क्षीरं पर्णे यस्याः ङीप् । अर्कवृक्षे ।
**क्षीरवल्ली** स्त्री० क्षीरा क्षीरवती वल्ली । क्षीरविदार्य्याम्

स्वार्थे कन् अतोइत्त्वम् क्षीरवल्लिका अत्रैवार्थे ।

**क्षीरविकृति** स्त्री० ६त० 'दध्नासह पयः पक्वं यत् स्यात् सा दधिकूर्चिकेत्युक्तायाम् । (क्षीरसा) दधिकूर्चिकायाम् ।

**क्षीरवृक्ष** पु० क्षीरप्रधानो वृक्षः । उदुम्बरे राजादन्याम् ।

**क्षीरशर** पु० क्षीरं शृणाति शॄ-अच् । (छाना) आमिक्षायाम् ।

**क्षीरशाक** न० अपक्वमेव यत्तु क्षीरशाकं हि तत् पयः' इत्युक्ते नवे दुग्धे राजादन्ने च । क्षुकुष्माण्डे स्त्री० ।

**क्षीरशुक्ल** पु० क्षीरमिव शुक्लः । शृङ्गाटके (पानिफल)

**क्षीरसार** पु० क्षीरस्य सारः । नवनीते 'क्षीरसारमपनीये'त्युक्ते (छाना) आमिक्षायाञ्च । [(फेनी) शर्करायाम् ।

**क्षीरहिण्डीर** पु० ६त० । दुग्धफेने । क्षीरमिव हिण्डीर

**क्षीराब्धि** पु० क्षीरस्य दुग्धरसस्याब्धिः । क्षीरसमुद्रे एव क्षीरसागरादयोऽप्यत्र । [स्त्री ।

**क्षीराब्धिज** पु० क्षीराब्धौ जायते जन-ड । चन्द्रे । लक्ष्म्यां

**क्षीरावी** स्त्री० क्षीरमवति अव-अण् ङीप् । दुग्धिकायाम् (दुधी)

**क्षीरिका** स्त्री० क्षीर+मत्वर्थे ठन् (क्षीरा) राजादन्याम् ।

**क्षीरिणी** स्त्री० क्षीर+मत्वर्थे इनि । तिक्तदुग्धायां क्षीरदुग्धायां च क्षीरलतायाम् ।

**क्षीरिन्** पु० क्षीर+इनि । स्नुह्याम् वटे शब्दे, उदुम्बरे, अर्कवृक्षे राजादने, सोमलतायाम् स्वालोहके च ।

**क्षीरिवृक्ष** पु० कर्म० । क्षीरयुक्तेषु न्यग्रोधाश्वत्थोडुम्बरपारिशप्लक्षेषु पञ्चसु वृक्षेषु ।

**क्षीरोद** पु० क्षीरमुदकमस्य उदकस्योदादेशः । क्षीरसमुद्रे ।

**क्षु** क्षुतौ अदा० पर० अक० सेट् । क्षौति अक्षावीत् चुक्षाव । क्षुत । क्षुत्वा । क्षवथुः । [दुर्गम'मिति माघः ।

**क्षुण्ण** त्रि० क्षुद-क्त । अभ्यस्ते, विहते च 'अभीक्ष्णमक्षुण्णतयाति-

**क्षुत्** स्त्री० क्षु सम्पदा० क्विप् तुक् च । (हाँचि) क्षुते ।

**क्षुत** न० क्षु-क्त । नासात वायुनि करणजे शब्दे । (हाँचि)

**क्षुद** पेषणे रुधा० उभ० सक० सेट् । क्षुणत्ति क्षुन्ते । अक्षुदत् अक्षोदीत् अक्षोदिष्ट । ]मल्पापिहिंसे च

**क्षुद्र** त्रि० क्षुद-रक् । नीचे कृपणे क्रूरे, दरिद्रे, अल्पे,

**क्षुद्रकण्टकी** स्त्री० क्षुद्रः कण्टकः यस्याः ङीप् । वृहत्याम् ।

**क्षुद्रकण्टिका** क्षुद्रः कण्टकः यस्याः टाप् अत इत्त्वम् । कण्टकारिकाभेदे ।

**क्षुद्रकम्बु** पु० कर्म० । शम्बूके । [(क्षुद्र,र)

**क्षुद्रघण्टिका** स्त्री० घण्टेव कन् घण्टिका कर्म० । किङ्किण्याम्

**क्षुद्रजन्तु** पु० कर्म० । 'क्षुद्रजन्तुरनस्थि स्यादथवा क्षुद्रको मतः शतं वा प्रसृतो येषां केचिदानकुलाद्यपि' इत्युक्ते अस्थिशून्ये जन्ते ।

**क्षुद्रजम्बू(म्बु)** स्त्री० कर्म० । भूमिजम्ब्वाम् ।

**क्षुद्रजीरक** न० कर्म० । कणजीरके सुगन्धे च ।

**क्षुद्रधात्री** स्त्री० कर्म० । कर्कटवृक्षे ।

**क्षुद्रधान्य** न० कर्म० । कङ्गुप्रभृतौ तृणधान्ये ।

**क्षुद्रपत्रा** स्त्री० क्षुद्रं पत्रं यस्याः टाप् । चाङ्गेर्याञ्च (क्षुद्रपालङ्) । ङीप् । वचायाम् ।

**क्षुद्रपनस** पु० कर्म० । लकुचे (मादार) ।

**क्षुद्रफल** पु० क्षुद्रं फलमस्य । जीवनवृक्षे । कण्टकार्याम् अग्निदमन्याम्, भूमिजम्ब्वाञ्च स्त्री टाप् ।

**क्षुद्रभण्टाकी** स्त्री० कर्म० । वृहत्याम् ।

**क्षुद्रमुस्ता** स्त्री० कर्म० । कसेरुकन्दे ।

**क्षुद्रवार्त्ताकिनी** स्त्री० कर्म० । कण्टकार्याम् ।

**क्षुद्रवार्त्ताकी** स्त्री० कर्म० । वृहत्याम् ।

**क्षुद्रशङ्ख** पु० कर्म० । शम्बूके । [त्रि

**क्षुद्रशीर्ष** पु० क्षुद्रं शीर्षमस्य । मयूरशिखावृक्षे स्वल्पशीर्षवति

**क्षुद्रशुक्ति** स्त्री० कर्म० । जलशुक्तिकायाम् । स्वार्थे कन् तत्रैवार्थे

**क्षुद्रश्वास** पु० कर्म० । स्वल्पश्वासरोगे ।

**क्षुद्रसहा** स्त्री० सह अच् क्षुद्रस्य सहा ६त० । शूकरपर्ण्याम् मात्स्यौरगन्धायाञ्च ।

**क्षुद्रसुवर्ण** न० कर्म० । पित्तले । [त्रुट्यां टाप् । अत्रैवार्थे ।

**क्षुद्रहिङ्गुली** स्त्री० कर्म० । कण्टकार्याम् । स्वार्थे कन् क्षुद्रहिङ्गुलिका

**क्षुद्रा** स्त्री० क्षुद रक् । वेश्यायाम्, कण्टकार्याम् सरघाख्यमक्षिकाभावे, चाङ्गेर्याम्, हिंस्रायां, नटीभेदे, मक्षिकायाञ्च (गड्डगड्डेभान) । [कायाम् ।

**क्षुद्राग्निमन्थ** पु० कर्म० (छोटगणियारी) स्वल्पगणिकारि-

**क्षुद्राम्लपनस** पु० अम्लः अम्लरसः पनसः कर्म० । लकुचे (डेफो) (मान्दार) । [(अम्ल) स्वार्थे कन् तत्रैवार्थे ।

**क्षुद्राम्ला** स्त्री० अम्ला अम्लरसा कर्म० । चाङ्गेर्याम् (क्षुद्रपा-

**क्षुद्रेर्वारु** पु० कर्म० । गोपालकर्कट्याम् ।

**क्षुद्रोडुम्बरिका** स्त्री० कर्म० । काकोडुम्बरिकायाम् ।

**क्षुध** बुभुक्षायां दिवा० पर० अक० अनिट् । क्षुध्यति अक्षुधत् ।

**क्षुध्(धा)** स्त्री० क्षुध-सम्पदादित्वात् क्विप् वा टाप् । भोजनेच्छायाम्

**क्षुप** पु० क्षु पक् । ह्रस्वशाखाशिफायुक्ते शाखोटादिवृक्षे द्वारकापश्चिमदिक्स्थे पर्वतभेदे, राजन्यभेदे च ।

**क्षुब्ध** पु० क्षुभ-क्त नि० । मन्थनदण्डे । क्षुभित त्रि ।

**क्षुभ** सञ्चलने भ्वा० आत्म० अक० सेट् । क्षोभते अक्षुभत अक्षोभिष्ट चुक्षुभे । क्षुभित । [अक्षोभीत । क्षुभित ।

**क्षुभ** सञ्चलने वा दिवा क्र्या० पर० अक० सेट् । क्षुभ्यति क्षुभ्नाति

क्षुभित त्रि० क्षुभ-क्त । आलोडिते, व्याकुले, भीते च ।
क्षुमा स्त्री० क्षु-मक् । (मसिना) (तिसी) अतस्याम् ।
क्षुर विलेखने तुदा० पर० सक० सेट् । क्षुरति अक्षोरीत् ।
क्षुर पु० क्षुर-क क्षु-रक् वा । नापितास्त्रे पश्वादीनां शफे,(खुर) कोकिलाक्षे, गोक्षुरे, महापिण्डीतके, वाणे च ।
क्षुरक पु० क्षुर-क्वुन् । गोक्षुरे,(गोखुरी) कोकिलाक्षे,तिलकद्रुमे च
क्षुर(रि)कर्म्मन् न० क्षुरस्य,क्षुरिणो वा नापितस्य कर्म० । क्षौरे नखकेशादिकर्त्तने 'क्षुर(रि)कर्म न कुर्व्वीत जन्ममासे च जन्मभे' इति स्मृतिः । [क्षुरभाण्डादयोऽप्यत्र ।
क्षुरधान न० क्षुरोधीयतेऽस्मिन् नापितास्त्राधारे (भांड़)
क्षुरधार पु० क्षुराणां धारेव शरपत्रधारा यत्र । नरकभेदे ।
क्षुरपत्र पु० क्षुर इव पत्रमस्य । वाणे, क्षुरतुल्यपर्णयुक्ते शरवणादौ त्रि० ।
क्षुरपत्रिका पु० क्षुर इव पत्रं यस्याः । पालङ्कशाके ।
क्षु(खु)रप्र पु० क्षुरः (खुरः)इव प्राति छिनत्ति प्र-क (खुरपी) इति ख्याते घासच्छेदनास्त्रे, तत्तुल्याग्रफलके शरे च ।
क्षुरमर्द्दिन् पु० क्षुरं मृद्नाति घर्षयति मृद-णिनि नापिते ।
क्षुरमुण्डिन् पु० क्षुरेण मुण्डयति मुण्ड-णिनि ३त० । नापिते
क्षुराङ्ग पु० क्षुर इवाङ्गमस्य । गोक्षुरे (गोखुरी) ।
क्षुरिणी स्त्री० क्षुर+अस्त्यर्थे इनि ङीप् । वराहक्रान्तायाम् नापितभार्य्यायाञ्च ।
क्षुरिन् पु० क्षुर+इनि । नापिते, पशौ च ।
क्षु(खु)ल्ल त्रि० क्षुद्(खु) क्विप् क्षुद्(खुद्) ता लाति ला-क । अल्पे, लघौ, कनिष्ठे च । [पामरे, अल्पे च ।
क्षुल्लक त्रि० क्षुधा लक्यते लक-आस्वादने घञर्थे क । नीचे,
क्षेत्र न० क्षि-ष्ट्रन् । देहे, अन्तःकरणे, इन्द्रिये, 'इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः । इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः । एतत् क्षेत्रमिति गीतोक्ते इन्द्रियादिसंघाते, शस्याद्युत्पत्तिस्थाने केदारे, सिद्धस्थाने, कलत्रे मेषादिराशिषु च ।
क्षेत्रज पु० क्षेत्रे जायते जन-ड । 'यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्य वा । स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजो मतः' इत्युक्ते द्वादशविध पुत्रमध्ये पुत्रभेदे । क्षेत्रजातमात्रे त्रि० । गोरक्षिकायाम् श्वेतकण्टकार्य्याञ्च स्त्री० ।
क्षेत्रज्ञ पु० क्षेत्रं देहमात्मत्वेन जानाति ज्ञा-क । 'क्षेत्राण्याहुः शरीराणि तेषाञ्चैव यथासुखम् । आत्मानं वेत्ति संयोगात्तत् क्षेत्रज्ञ उच्यते' इत्युक्ते जीवात्मनि ।
क्षेत्रपति पु० ६त० । 'इदं क्षेत्रपतिं प्राहुः केचिदग्निमथापरे । स्वतन्त्रएव वा कैश्चित् क्षेत्रस्य पतिरुच्यते' इत्युक्तेषु रुद्रादिषु, क्षेत्रस्वामिमात्रे च क्षेत्रपालादयोऽप्यत्र ।
क्षेत्ररुहा स्त्री० क्षेत्रे रोहति रुह-अच् । वालुकर्कट्याम् ।
क्षेत्राजीव पु० क्षेत्रं शस्योत्पादनभूमिराजीवो यस्य । कृषके
क्षेत्रिक त्रि० क्षेत्र+अस्त्यर्थे ठन् । क्षेत्रस्वामिनि ।
क्षेत्रिन् त्रि० क्षेत्र+अस्त्यर्थे इनि । क्षेत्रस्वामिनि ।
क्षेत्रिय पु० परक्षेत्रे देहान्तरे चिकित्स्य परक्षेत्र+घ नि० । देहान्तरचिकित्सनीये असाध्ये रोगे, 'दण्डोऽयं क्षेत्रियो येन मय्यपाती'ति भट्टिः परक्षेत्रोत्पन्ने क्षेत्रजपुत्रादौ च क्षेत्रजातमात्रे त्रि० । [विलम्बे, हेलायाञ्च ।
क्षेप पु० क्षिप-घञ् । विक्षेपे, निन्दायाम्, गर्वे, प्रेरणे, लङ्घने,
क्षेपक त्रि० क्षिप-ण्वुल् । क्षेपकर्त्तरि । घञ् स्वार्थे कन् । ग्रन्थादौ ग्रन्थकर्त्तृत्वेन निष्पाठे, गुच्छे च । लीलावती प्रसिद्धे कुट्टके संयोजनीये अङ्कविशेषे च ।
क्षेपण न० क्षिप-ल्युट् । प्रेरणे, यापने च 'आयुषः क्षेपणार्थञ्च दातव्यं स्त्रीधनं सदे'ति स्मृतिः ।
क्षेपणिका स्त्री० क्षिप्यते चाल्यतेऽनया क्षिप-क्वनि । नौका चालनदण्डे,(डाड़) जालभेदे च (क्षेपला) ।
क्षेपणीय क्षिप-अनीयर् । भिन्दिपालेऽस्त्रे, पाषाणादिके वा क्षेप्यास्त्रे च । क्षेप्यमात्रे त्रि० ।
क्षेपिष्ठ त्रि० अयमेषामतिशयेन क्षिप्रः इष्ठन् । अतिशीघ्र गामिनि, 'वायुर्वै क्षेपिष्ठा देवते'ति श्रुतिः ।
क्षेम न० क्षि-मन् । चौरनामगन्धद्रव्ये । लब्धवस्तुनोरक्षणे पु० न० । कुशले न० । तद्वति त्रि० । मुक्तौ न० ।
क्षेमफला स्त्री० क्षेमाय फलान्यस्याः । उडुम्बरद्रुमे ।
क्षेव सेवने भ्वा० पर० सक० सेट् । क्षेवति अक्षेवीत् ।
क्षै क्षये भ्वा० पर० अक० अनिट् । क्षायति अक्षासीत् ।
क्षैत्र न० क्षेत्राणां समूहः भिक्षादित्वात् अञ् । क्षेत्रसमुदाये ।
क्षैरेय त्रि० क्षीरे संस्कृतः ढञ् । क्षीरसंस्कृते अन्नादौ । यवागव म् स्त्री० ङीप् । [क्षोणिरप्यत्र
क्षोणि(णी) स्त्री० क्षु-नि वा ङीप् । धरायाम् । पृ०नि०
क्षोद पु० क्षुद-घञ् । रजसि, चूर्णे, पेषणे च ।
क्षोदक्षम त्रि० क्षोदं क्षमते अच् । विचारसहे तथ्यनिर्णयार्थं विचारणीये अप्रसक्तदूषणे वाक्ये । [क्षुद्रतरे ।
क्षोदिष्ठ त्रि० अयमेषामतिशयेन क्षुद्रः इष्ठन् क्षोदादेशः ।
क्षोभ पु० क्षुभ-घञ् । व्यर्थमितस्ततः सञ्चलने, चित्तस्य भयादिहेतुके स्वकार्य्यासामर्थ्ये च ।
क्षोभण पु० क्षोभयति क्षुभ-णिच्-ल्यु । कामवाणभेदे

धारक इति वटुकस्तोत्रम् । [वटुकभैरवे च ।
**खट्वाङ्गभृत्** पु० खट्वाङ्गं बिभर्त्ति भृ क्विप् तुक् च । शिवे,
**खट्वारूढ** पु० खट्वा अम् आरुह-क्त नित्यस० । प्रमादवति ।
खट्वाश्रिते । त्रि० । [अखण्डिष्ट ।
**खड** मन्थने भञ्जने च भ्वा० आत्म० इदित् सक० सेट् । खण्डते
**खड** भेदे चुरा०उभ०सक०सेट् । खडयति ते अचीखडत् त ।
**खड** न० खड-अच् । तृणभेदे (खड) पानान्तरे, भेदे च पु०
**खडक्की** स्त्री० खडक् इत्यव्यक्तशब्दं करोति कृ-ड गौ० ङीष् ।
पक्षद्वारे (खिड्कि) । [ख्याते लेखनद्रव्ये ।
**खडी** स्त्री० खडि अच् नि० नलोपः गौरा० ङीष् । स्वनाम
**खड्ग** पु० खडि-ग नि०नलोपः । गण्डकशृङ्गे तद्वति गण्डकपशौ
च । (गाण्डार) चोरनामगन्धद्रव्ये, असौ च । लौहे न०
**खड्गकोष** पु० ६त० । चर्म्मादिमये असिपिधाने (खाप) वस्तुनि
(ढाल) खड्गावरके च । [खड्गकोषे (खाप) च
**खड्गपत्र** पु० खड्गस्य पत्रमिवाच्छादकम् । (ढाल) खड्गावरके
**खड्गपिधान** न० खड्गः पिधीयतेऽनेन । (खाप) खड्गकोषे ।
**खड्गिन्** पु० खड्ग+अस्त्यर्थे इनि । गण्डारे । खड्गधारिजने त्रि०
**खण्ड** पु०खडि-घञ् । भेदे 'खण्डं खण्डं ययुर्घना' इति देवी-
माहात्म्यम् । विड्लवणे, इक्षुविकारे (खांड) च न० ।
कर्म्मणि घञ् । एकदेशे पु०न० । [भेदे ।
**खण्डकर्ण** पु०खण्ड इव कर्णं कन्दोयस्य । (शकरकन्द) आलु-
**खण्डकालु** पु० खण्डइव कायति कै-क कर्म्म० । (शकरन्द)
आलुभेदे । [(कांइची)
**खण्डधारा** स्त्री० खण्डे एकदेशे धारा यस्याः । कर्त्तर्य्याम्
**खण्डन** न० खडि-ल्युट् । भञ्जने,भेदने, छेदने,निराकरणे च
**खण्डपरशु** पु० खण्डयति खण्ड० परशुरस्य । शिवे,तच्छिष्ये
जामदग्न्ये च । खण्डपर्शु रप्यत्र ।
**खण्डिक** पु०खण्ड+अस्त्यर्थे ठन् । कलाये,ऋषिभेदे,कक्षे च । क्रुद्धे
- त्रि० । खण्डिकोपाध्यायः शिष्याय चपेटं ददातीति भाष्यम्
**खण्डित** त्रि० खडि-क्त । भेदिते छिन्ने,द्विधाकृते च 'ज्ञातान्य
सङ्गविकृते खण्डितेर्ष्याकषायिते त्युक्तचिह्नायां स्त्रियां स्त्री०
**खण्डी** स्त्री० खण्ड्यते गौरा० । वनमुद्गे ।
**खण्डीर** पु० अपकृष्टा खण्डी शुण्डादित्वात् र । पीतमुद्गे ।
**खतमाल** पु० खे तमाल इव । धूमे, मेघे च । [अखदीत् ।
**खद** स्थैर्ये अक०वधे०सक०भ्वा०पर०सेट् । खदति अखादीत्-
**खदिर** पु० खद-किरच् । (खएर) द्रुमभेदे, इन्द्रे,चन्द्रे च ।
**खदिरपत्रिका** स्त्री० खदिरस्येव पत्रमस्याः ङीप् तत० संज्ञायां
कन् कापि ह्रस्व । अरिखदिरे लज्जालुलतायाञ्च । कनभावे
खदिरपत्रीत्यप्यत्रैव । [विना खदिरसारेणेत्युद्भटः ।
**खदिरसार** पु० ६त० । खदिरद्रुमस्य निर्यासजे सारे (खएर)
**खदिरिका** स्त्री०खदिर० खदिररसोऽस्त्यस्याः ठन् । लाक्षायां
तस्या हि खदिरतुल्यनिर्यासः ।
**खदिरी** स्त्री०खद-किरच् गौरा०ङीष् । लज्जालुलतायाम्,
शाकभेदे, (हायजोडा) लतायाञ्च । [भेदे
**खदिरोपम** न० खदिर उपमा यस्य । (कांटावावला) द्रुम-
**खद्योत** पु०खे द्योतते द्युत-अच् । सूर्य्ये,कीटभेदे च (जोनाकेपोका)
**खधूप** पु० खमाकाशं धूपयति धूप-अण् । (हाउइ) प्रभृतौ
अग्निक्रीडने 'सुसुचुः खधूपानि'ति भट्टिः ।
**खन** विदारे भ्वा०उभ०सक०सेट् । खनति अखानीत्-अखनीत्
अखनिष्ट खायात्-खन्यात् । [(कोडा) त्रि०
**खनक** पु० खन-वुन् । मूषिके, सन्धिचौरे च । भूमिदारके
**खनि(नी)** स्त्री० खन-इ वा ङीप् । धातुरत्नाद्युत्पत्तिस्थाने ।
आकरे भूविदारणे च ।
**खनित्र** न० खन-इत्र । (खोन्ता) अस्त्रभेदे ।
**खपुर** पु० खमिन्द्रियमाकाशं वा पिपर्त्ति पृ-क । गुवाकद्रुमे,
(सुपारी) भद्रमुस्तके,व्याघ्रनखे च । ऊर्द्धगते पुरे, घटे च
न० । अलसे त्रि० । [पर्य्याम्(पाना) ।
**खमूली** स्त्री० खे आकाशे भूमिमन्तरेणापि मूलमस्याः । वारि
**खम्ब** गतौ भ्वा०पर०सक०सेट् । खम्बति अखम्बीत् ।
**खर** पु०खं मुखबिलमतिशयेनास्त्यस्य र खमिन्द्रियं राति-रा-क
वा रलयोरेकत्वम् । गर्द्दभे,अश्वतरे राक्षसभेदे च 'चेरतुः
खरदूषणावि'ति भट्टिः । कण्टकिवृक्षभेदे,कामे,कङ्कविहगे,
कुररपक्षिणि, ६० संवत्सरमध्ये वत्सरभेदे रवे पार्श्वचरे,
तिग्मस्पर्शे च । तद्वति, कठिने च त्रि० 'खरविशदमभ्य-
वहार्य्य'मिति भाष्यम् । देवताडवृक्षे स्त्री० टाप् ।
**खरकाष्ठिका** स्त्री० खरमुग्रं काष्ठं यस्याः । बलायामौषधौ
**खरगन्धा** स्त्री० खरोगन्धो यस्याः । नागबलायाम् । [रामे च
**खरघातन** पु०खरमुग्ररोगं घातयति हन-णिच्-ल्यु । नागकेशरे,
**खरच्छद** पु० खरः छदः पत्रमस्य । (उलुखड) तृणभेदे ।
**खरणस्(स)** त्रि० खरा कठिना नासिकास्य नासिकाया नस०
वान्त्यलोपः । णत्वञ्च । कठिननासिके ।
**खरत्वच्** पु० खरा कठिना त्वक् यस्य । लज्जालुभेदे ।
**खरदण्ड** न०खरः पुष्पाद्यपेक्षया कठिनोदण्डोनालो यस्य । पद्मे
**खरदला** स्त्री० खरं दलं यस्याः । काकोडुम्बरे ।
**खरदूषण** पु० खरमुग्रं दूषणमुन्मादकताहेतुदोषो यत्र ।
धत्तूरे (धुतुरा) कङ्कदीपे त्रि० ।

खसखस पु० (पोस्ता) नामकफलके द्रुमभेदे यस्य निर्यासः अहिफेनः (आफिङ्) ।

खाञ्जिक पु० खे आकाशे वीयते अज-घञ् आजोगतिः सोऽस्यास्ति ठन् । लाजेषु (खद्द) ईन्द्रायुयोगे हि तेषामाकाशगतिः

खटि पु० स्त्री० खट-इन । शवरथे । स्त्री० वा ङीप् असद्वृष्टे ।

खाण्डव पु० इन्द्रप्रस्थनगरसन्निकृष्टस्थे वने ।

खात न० खन-क्त । गर्त्ते, पुष्करिण्यादौ च 'पूर्त्तं खाताादि-कर्म चे'ति स्मृतिः ।

खातक पु० खन-घञ् स्वार्थे कन् (खाद) परिखायाम् । खात इव कायति कै-क । अधमर्णे (ऋणी) 'खात(ट)कोवित्तहीनः स्यात्तस्मकौ वित्तवान् यदी'ति स्मृति० ।

खातभू स्त्री० खातस्य भू स्थानम् । परिखायाम्,अल्पकूपे च ।

खाद् भक्षणे भ्वा० पर० सक० सेट् । खादति अखादीत् ।

खादक पु० खादति खाद-ण्वुल् । ऋणग्राहके अधमर्णे 'खादकोवित्तहीनः स्यादि'ति स्मृतिः । भक्षके त्रि० ।

खादिर त्रि० खदिरस्य विकारः अञ् । खदिरकाष्ठनिर्मिते यूपादौ 'खादिरे पशुं बध्नाति खादिरं वीर्य्यकामस्ये'ति श्रुतिः । खदिरनिर्यासे (खयेर) पु० ।

खारि(री) स्त्री० खमाराति रा-क गौरा० ङीप् वा ह्रस्वः । द्रोणचतुष्टयरूपे धान्यादिमानभेदे ।

खारीक त्रि० खार्य्याम् वाप',खारीपरिमाणमस्य वा ईकञ् । खारीमितधान्यवपनयोग्ये क्षेत्रे, खारीमिते धान्यादौ च ।

खिट भये भ्वा० पर० अक० सेट् । खेटति अखेटीत् ।

खिद् दैन्ये दिवा० रुधा० च आत्म० अक० अनिट् । खिद्यते खिन्ते अखित्त । खिन्नः । [खिन्दतः । अखैत्सीत् खिन्न'

खिद् परिघाते तुदा० पर० अक० अनिट् मुचादि । खिन्दति

खिन्न त्रि० खिद-क्त । दैन्ययुक्ते, अलसे, खेदयुक्ते च ।

खिल कणश आदाने तुदा०पर०सक०सेट् । खिलति अखेलीत् ।

खिल त्रि० खिल-क । हलादिना अकृष्टे क्षेत्रादौ शास्त्रसंचिते पूर्व्वतानुक्तपरिशिष्टे, यथा ऋग्वेदादौ श्रीसूक्तम्, यजुर्वेदे शिवसंकल्पादि,महाभारते हरिवंशः । खिलेषु हरिवंश इति पुष्पिकाव्याख्याने 'खिलो नारायण' प्रोक्तस्तद्गुणा इयव' स्मृता इति नीलकण्ठोक्ते' नारायणे च ।

खु ध्वनौ भ्वा० आत्म० अक० अनिट् । खवते अखोष्ट ।

खुज स्तेये भ्वा० पर० सक० सेट् । खोजति अखोजीत् ।

खुञ्जाक पु० खुज-आक ष० । देवताडवृक्षे । [खिट्ष

खुड सङ्गे इदित् भ्वादि० आत्म० अक० सेट् । खुण्डते अखु

खुड भेदने चुरा० उभ०सक०सेट् । खोडयति-ते अचुखोडत्-त

खुड भेदने चुरा० उभ० इदित् सक० सेट् । खुण्डयति-ते अचुखुण्डत्-त

खुर विलेखने तुदा० पर० सक० सेट् । खुरति अखोरीत् ।

खुर पु० खुर-क । शफाख्याते पशूनां शफे, कोलदले, नखीनामगन्धद्रव्ये, नापितास्त्रे, खट्वादीनां पादे च (खुरा) ।

खुरक पु० खुर इव कायति कै-क । तिलवृक्षे ।

खुरणस्(स) त्रि० खुर इव नासिकाऽस्य नसादेशः वा अन्त्यलोपः णत्वञ्च । चिपिटनासिके ।

खुरली स्त्री० खुर इव लाति ला-क गौरा० ङीष् । शराभ्यासे

खुरालिक पु० खुराणामालिभिः कायति प्रकाशते कै-क । (भाड़) नापितास्त्रभाण्डे, नाराचास्त्रे, उपधाने च ।

खु(खू)र्द्द क्रीडायां भ्वा० आ० अक० सेट् । खु(खू)र्द्दते अखु(खू)र्द्दिष्ट

खेचर पु० खे चरति चर-ट अलुक् स० । शिवे, सूर्य्यादिग्रहे, विद्याधरे च स्त्रियां ङीप् । 'चित्तं हरति खे यस्मात् जिह्वा हरति खे गता । भ्रुवोरन्तर्गता जिह्वा खेचरी नाम मुद्रिके'ति' तन्त्रोक्ते मुद्राभेदे स्त्री० ।

खेट भोजने अद० चु० उभ० सक० सेट् । खेटयति ते अचिखेटत् त

खेऽट पु० खेऽटति । सूर्य्यादिग्रहे, 'यस्मिन्नृक्षे स्थिता' खेटा' इति ज्योतिषम् । कफे, ग्रामभेदे च । मृगयायां पु० न० । अधमे त्रि० । कर्म्मणि, तृणे च न० । [दुर्गोध्यानम् ।

खेटक पु० खेट-ण्वुल् । फलके (ढाल) खेटक पूर्णचापश्चेति

खेड भोजने अद० चु० उभ० सक० सेट् । खेडयति ते अचखेडत त

खेद पु० खिद-घञ् । शोके, अवसन्नतायाञ्च ।

खेदिनी स्त्री० खेदयति खिद णिच् णिनि । अग्रनपूर्णीद्रुमे

खेय न० खन-यत् । परिखायाम् (गडखाइ) खननीये त्रि० ।

खेल चालने गत्याञ्च भ्वा० पर० सक० सेट् । खेलति अखेलीत् । अचिखेलत् त । [शारिफलके स्त्री०

खेलन न० खेल-ल्युट् । क्रीडायाम् । आधारे ल्युट् ङीप् ।

खेला स्त्री० खेल-अ । क्रीड़ायाम् ।

खेव सेवने भ्वा० आ० सक० सेट् । खेवते अखेविष्ट अचिखेवत ।

खेसर पु० खे आकाश इव शोभ्रगामित्वात् सरति सृ-ट अलुक् स० । गर्द्दभात् अश्वोजाते अश्वात् गर्द्दभीज ते वा अश्वतरे पशुभेदे

खै स्थैर्य्ये अक० खनने हिंसायाञ्च सक० भ्वा० पर० अनिट् । खायति अखासीत् ।

खोट गतिप्रतिघाते भ्वा० पर० सक० सेट् । खोटति अखोटीत् ।

खोट क्षेपे अद० चु० उभ० सक० सेट् । खोटयति ते अचुखोटत् त

खोटि(टी) स्त्री० खोट-इ वा ङीप् । चतुरायां स्त्रियां मालद्वीवृक्षे च । [अचुखोडत् त

खोड गतिप्रतिघाते भ्वा० पर० सक० सेट् । खोडति अखोडीत् ।

(गजसंख्या २१ रथसंख्या २१ अश्वसंख्या ८१ पदातिसंख्या १२५) एवं संख्यान्वितायां सेनायाम्, एकैक विकरणभेदमासेदुषां भ्वाद्यदादिधातूनां समूहे, ज्योतिषोक्ते देवादिसंज्ञकनक्षत्राणां समूहे छन्दोग्रन्थोक्तेषु वर्णत्रयात्मकेषु मयरादिषु अष्टसु च।

**गणक** पु० गणयति-ण्वुल्। दैवज्ञे।

**गणदेवता** स्त्री० गणाः सन् गणीभूय वा देवता। संहत्य दैवत्यं प्राप्तेषु 'आदित्या द्वादश प्रोक्ता विश्वे देवा दश स्मृताः। वसवश्चाष्टसंख्याताः षट्त्रिंशत् तुषिता मताः'। आभास्वराश्च षष्टिर्वाताः पञ्चाशदूनकाः। महाराजिकनामानो द्वे शते विंशतिस्तथा। साध्या द्वादश विख्याता रुद्राश्चैकादश स्मृता इत्युक्त तत्तत्संख्याभेदान्वितेषु आदित्यादिषु।

**गणनाथ** पु० गणानां प्रमथादीनां नाथः। गणेशे शिवे च गणनायकादयोऽप्यत्र।

**गणरात्र** न० गणानां रात्रीणां समाहारः। गणशब्दस्य संख्यावत्त्वात् द्विगुस० पच्समा०। रात्रिवृन्दे।

**गणरूप** पु० गणा बहूनि रूपाण्यस्य। अर्कवृक्षे।

**गणशस्** अव्य० गणान्-गणान् इति गण+शस्। बहुशब्दार्थे

**गणहासक** पु० गणान् हासयति हस-णिच्-ण्वुल्। चोरनामगन्धे

**गणान्न** न० गणायोत्सृष्टं, गणानां वाऽन्नम्। मठादौ बहुजनोद्देशेनोत्सृष्टान्ने, बहुस्वामिकेऽन्ने च 'गणान्नं गणिकान्नञ्चेति मनुना निषिद्धान्नमध्ये गणितम्।

**गणिका** स्त्री० गणः समूहोऽस्त्यस्याः भर्तृत्वेन ठन्। वेश्यायाम्, चित्ताकर्षकत्वात् यूथिकायाम् (युइ) हस्तिन्याञ्च।

**गणिकारिका** स्त्री० गणनं गणिः गण-इ तं करोति अण् ङीप् गणिकारी स्वार्थे के ह्रस्वः। (गणियारी) द्रुमे। कन्भावे गणिकार्यप्यत्र।

**गणित** न० गण-भावे क्त। गणने। करणे क्त। व्यक्ताव्यक्तरूपे अङ्कशास्त्रे। कर्म्मणि क्त। कृतगणने संख्याते त्रि०।

**गणेय** त्रि० गण-एय। गणनीये।

**गणेरु** पु० गण-एरु। कर्णिकारवृक्षे, हस्तिन्यां, वेश्यायाञ्च।

**गणेश** पु० गणानामीशः। स्वनामख्याते देवे, शिवे च।

**गण्ड** पु० गडि-अच्। वह्निकपोले, कपोलमात्रे, गण्डके, (गाण्डार) चिह्ने, वीर्य्यङ्गे, पिटके, वीरे, हयभूषणे, वुद्बुदे, स्फोटके, ग्रन्थौ, ज्योतिषोक्ते विष्कुम्भादिमध्ये योगभेदे, त्याज्ये वैवाहिकजन्मलग्नस्थे अश्विन्यादितारादण्डभेदे च

**गण्डक** पु० गण्ड+स्वार्थे कन्। स्वनामख्याते पशौ (गण्डार) संख्याभेदे, अन्तराये, अवच्छेदे च।

**गण्डकारी** स्त्री० गण्डं ग्रन्थिं भग्नसंयोजनरूपं सन्धिं करोति कृ-अण् ङीप्। (लाजलोटा) वराहक्रान्तायामोषधौ।

**गण्डकी** स्त्री० 'गण्डस्याश्च कदेशे च श गण्डशिलास्तत'मिस्तुते नदीभेदे। [शिलायाम्।

**गण्डकीशिला** स्त्री० गण्डक्यामुद्भवा शिला। शालग्राम-

**गण्डगात्र** न० गण्डाः स्फोटका गात्रेऽवयवे यस्य (आता) सीताफले। [दूर्वाभेदे।

**गण्डदूर्वा** स्त्री० गण्डयुक्ता ग्रन्थिमती दूर्वा (गाण्डदूर्वा)

**गण्डमाला** स्त्री० गण्डानां स्फोटकानां माला। 'स्यादण्डमाला बहुभिः गण्डैः रिपुक्तलक्षणे रोगभेदे।

**गण्डमालिका** स्त्री० गण्डानां ग्रन्थीनां माला यस्य वा कप् अत इत्वम्। लज्जालुवृक्षे।

**गण्डलेखा** स्त्री० लिख्यतेऽत्र लेखा स्थली गण्ड स्थलीव। मदमत्तगजस्य स्थल्याम्। गण्डभित्त्यादयोऽप्यत्र। [पत्रेषु ललाटे च

**गण्डशैल** पु० शैलस्य गण्डइव, रा०त०स०। पर्व्वतात् पतितेषु स्थूलो-

**गण्डु** पु० स्त्री० गडि-उ। ग्रन्थौ, उपधाने च। स्त्रीत्वे वा ऊङ्

**गण्डूपद** पु० गण्डुयुक्तानि पदानि यस्य। (केंचो) किञ्चुलके। स्त्रीत्वे जातौ ङीप्।

**गण्डूष** पु० गडि-ऊषन्। मुखपूरणयोग्ये तोये 'गजाय गण्डूषजल'मिति कुमारः। करिहस्ताग्रे, प्रसृत्या प्रमिते जले, कराङ्गुलौ च। [लभ्यार्हे, गणनीये च।

**गण्य** त्रि० गणं लब्धा गण+यत्, गण-यत् वा। गण संख्याने

**गत** त्रि० गम-क्त। ज्ञाते, प्राप्ते, याते, नष्टे, पतिते, समाप्ते च। भावे क्त। गमने।

**गतागत** न० गतं चागतञ्च द्व०। यातायाते 'गतागतं कामकामा लभन्ते' इति गीता। गतञ्चागतञ्च यत्र। पक्षिगतिभेदे

**गतार्त्तवा** स्त्री० ऋतोरयमार्त्तवः तत्फलं गर्भादि च गत आर्त्तवो यस्याः। वन्ध्यायाम् वृद्धायाञ्च।

**गति** स्त्री० गम-भावादौ क्तिन्। गमने, पथि, ज्ञाने, दशायां, यात्रायाम्, उपाये, नाडीव्रणपथे, कर्म्मफले, प्राप्तौ च।

**गद** पु० गद-अच्। श्रीकृष्णानुजे, रोगे च। भावे क। कथने, विषे च

**गदा** स्त्री० गद-अच् टाप्। स्वनामख्याते लौहादिकीलिते, लौहमये वाद्यस्त्रभेदे, पाटलावृक्षे च।

**गदाग्रज** पु० ६त० श्रीकृष्णे।

**गदाधर** पु० गदां धरतीति धृ-अच् ६त०। श्रीकृष्णे।

**गदाराति** पु० ७त० औषधे। [तद्वति त्रि०

**गद्गद** पु० गदित्यव्यक्तं गदति क, अच् वा अव्यक्तास्फुटशब्दे।

**गद्गदध्वनि** पु० गद्गदः कफादिनाऽव्यक्त० ध्वनिः। हर्षशोकादिना

सक्रेनेन वायुना यथास्थानादुद्धारणात् सजाते धन्यक्षध्वनौ ।
तद्वति त्रि० । [समूहे न० ।

**गद्य** त्रि० गद्-यत् । कथनीये । पद्यभिन्ने कविकृते अपादे पद-

**गन्त्री** स्त्री गम्यतेऽनया ष्ट्रन् ङीप् । इषद्वहनीये शकटे ।

**गन्त्रीरथ** पु० गन्त्री रथ इव अभीष्टस्थानप्रापकत्वात् । शकटे

**गन्ध** द्योते चुरा० आ० अक० सेट् । गन्धयते अजगन्धत ।

**गन्ध** पु० गन्ध अच् । सम्बन्धे, लेशे, गन्धके गर्वे, शोभाञ्जने, इद-
चन्दनादीनां घ्राणग्राह्ये गुणभेदे स च गन्ध पञ्चविध
'चूर्णीकृतो वा छिन्नो वा दाहाकर्षित एव वा । रस सम्मर्दजो वापि प्राण्यङ्गोद्भवएव वेति' पञ्चविधकारणभेदात्
इष्टश्च दमादौ च ।

**गन्धकन्दक** पु० गन्ध+अर्श आद्यच् गन्धयुक्त कन्दोऽस्य कप् ।
कशेरुणि । [पदार्थे ।

**गन्धकचूर्ण** पु गन्धकप्रधानचूर्णं । (बारुद) इति ख्याते

**गन्धकाष्ठ** न० गन्धयुक्त काष्ठम् कर्म० । अगुरुचन्दने ।

**गन्धकुटी** स्त्री० गन्धस्य कुटीवाधारः । मुरानामगन्धद्रव्ये ।

**गन्धकुसुमा** स्त्री० गन्धयुक्त कुसुम यस्याः । (गणियारी)
गणिकारीवृक्षे । [वेणा) गन्धवति भूषणे ।

**गन्धखेलक** न० गन्धस्य खेला यत्र कप् डलयोरेकत्वात् ।

**गन्धजात** न० गन्धो जातो यत्र । तेजपत्रे ।

**गन्धज्ञा** स्त्री० गन्ध ज्ञायतेऽनया ज्ञा-अर्थे क । नासिकायाम् ।

**गन्धतैल** न० गन्धयुक्तस्य चन्दनस्याग्निसंयोगेन जनित
तैलम् । यन्त्रपाकेण जनिते तैले । (आतर) प्रभृतौ

**गन्धत्वच** स्त्री० गन्धान्विता त्वच् यस्याः । एलायाम् ।

**गन्धदला** स्त्री गन्धयुक्त दल यस्याः । अजमोदायाम् ।

**गन्धन** न० गन्ध भावादिषु ल्युट् । उत्साहे, प्रकाशने, सूचने,
हिंसायाञ्च ।

**गन्धनाकुली** स्त्री गन्धान्विता नाकुली रास्ना । रास्नाभेदे

**गन्धनिलया** स्त्री गन्धस्य निलयो यत्र । नवमल्लिकायाम्

**गन्धपत्र** पु० गन्धयुक्त पत्र यस्य । श्वेततुलसी । शठीभेदे स्त्री०

**गन्धपत्रिका** स्त्री० गन्धयुक्त पत्र यस्याः कप् कापि अत
इत्वम् । अजमोदायाम ।

**गन्धपत्री** स्त्री० गन्धयुक्त पत्र यस्याः गौरा० ङीष् । अश्व
गन्धायाम् अम्बष्ठायाम्, अजमोदायाञ्च ।

**गन्धपलाशिका** स्त्री० गन्धयुक्त पलाश यस्याः कप् । हरिद्रायाम्

**गन्धपाषाण** पु० गन्धयुक्त पाषाण । गन्धके ।

**गन्धपुष्प** पु० गन्ध पुष्पेषु यस्य । वेतसे अङ्कोटवृक्षे वकुलवृक्षे
अशोके च । केतक्यां, नील्याम् गणिकारीवृक्षे च स्त्री० टाप्

**गन्धफल** पु गन्धयुक्त फल यस्य । बिल्वे, कपित्थे च । विदा-
र्यां, शल्लक्याञ्च स्त्री० टाप् । प्रियङ्गौ स्त्री० ङीप् ।

**गन्धबन्धु** पु ६त० । आम्रवृक्षे । [(गन्धभादाल) लताभेदे ।

**गन्धभद्रा** स्त्री० गन्धेन सेवमात्रसेवनेन भद्र यस्याः ५ब० ।

**गन्धभाण्ड** पु० गन्धस्य भाण्ड इव । (गन्धभादाल) लताभेदे

**गन्धमांसी** स्त्री० गन्धयुता मांसी कर्म० । जटामांसीभेदे ।

**गन्धमादन** पु०न० गन्धेन मादयति मद णिच् ल्यु । पर्वत
भेदे । भ्रमरे, वानरे, गन्धके च पु० ।

**गन्धमादिनी** स्त्री गन्धेन मादयति मद णिच् णिनि । लाक्षा
याम् मुरानामगन्धद्रव्ये च । [द्रव्ये ।

**गन्धमालिनी** स्त्री० गन्धमालाऽस्त्यस्या इनि । मुरानामगन्ध

**गन्धमुखा** स्त्री० गन्धो मुखेऽस्याः । छुछुन्दर्याम् (छुचा)

**गन्धमुण्ड** पु० गन्ध मुण्डयति मुण्ड+तत्करोतीति णिच्-अण् ।
(गन्धभादाल) लताभेदे ।

**गन्धमूल** पु० गन्धो मूले यस्य । शल्लकीवृक्षे-गन्धाम् । पु०
स्त्री वा ङीप् । स्वार्थे कन् अत्रैवार्थे । [ख्याते पुष्पवृक्षे च ।

**गन्धमृग** पु० गन्धप्रधानो मृगः । गन्धयोनौ कस्तूरीमृगे । [खनाम

**गन्धराज** न० गन्धेन राजते राज-अच् । चन्दने, मल्लिकायाम्, गुग्गुलौ,

**गन्धराजी** स्त्री० गन्धानां राजी ६त ङीप् । नखीगन्धद्रव्ये

**गन्धर्व** पु गन्धमर्दति अर्द्द गतौ अच् शक । मृगभेदे,
अश्वे कोकिले, स्वर्गगायके देवयोनिभेदे, गायनमात्रे च ।

**गन्धर्वनगर** पु न० गन्धर्वाणां नगरमिव । शून्याधिष्ठाने
पुराकारे नीलपीतादिमेघरचनाभेदे, इन्द्रजाले च ।
गन्धर्वपुरमप्यत्र । [षे।निषिद्धे स्थाने ।

**गन्धर्वलोक** पु० ६त० । गुह्यलोकोपरि विद्याधरलोकस्य

**गन्धर्ववेद** पु० ६त । सामवेदस्योपवेदे सङ्गीतविद्यायाम् ।

**गन्धर्वहस्त** पु० गन्धर्वस्य मृगभेदस्य हस्त पाद इव
पत्रमस्य । एरण्डवृक्षे । स्वार्थे कन् तत्रैवार्थे । [भेदे ।

**गन्धलता** स्त्री० गन्धान्विता लता । प्रियङ्गौ । [ख्याते जाति

**गन्धवणिज्** पु० गन्धोपजीवी वणिक् । (गन्धवेनिया) इति

**गन्धवती** स्त्री गन्ध+मतुप् मस्य व । व्यासमातरि, भूमौ,
वायुवरुणयोर्नगर्याम्, सुरायाञ्च ।

**गन्धवल्कल** न० गन्धो वल्कलेऽस्य । (दारचिनि) त्वचे ।

**गन्धवल्लरी** स्त्री गन्धान्विता वल्लरी । सहदेवीलतायाम्
गन्धवल्ल्यप्यत्र । [वासकादौ त्रि०

**गन्धवह** पु० गन्ध वहति वह अच् ६त । वायौ । गन्धयुक्ते

**गन्धवारि** न० गन्धवासित वारि । गन्धद्रव्येण वासिते जले ।

**गन्धवाह** पु० गन्ध वहति वह अण् उप० । वायौ । नासिकायां स्त्री०

गन्धविह्वल पु० गन्धेन विह्वलयति ह्वल-णिच्-अच् । गोधूमे
गन्धबीजा स्त्री० गन्धो बीजे यस्याः । मेथिकायाम् ।
गन्धव्याकुल पु०न० गन्धेन व्याकुलयति वि+आ+कुल-णिच् अच् । कक्कोले । [(बाममति) प्रमृतौ ।
गन्धशालि पु० गन्धप्रधानः शालिः । आमोदवति धान्यभेदे
गन्धसार पु० गन्धयुक्तः सारो यस्य । चन्दनवृक्षे ।
गन्धसारण पु० गन्धं सारयति सृ-णिच्-ल्यु । इन्द्रमल्लाम्
गन्धसोम न० गन्धार्थं सोमोविधुर्यस्य । कुमुदे चन्द्रोदये हि तस्य गन्धः ।
गन्धा स्त्री० गन्ध-णिच् अच् । गन्धकेतौ चम्पककलिकायाम्
गन्धाखु स्त्री० गन्धयुक्त आखुः । छुछुन्दर्याम् (छुंचा)
गन्धाजीव पु० गन्धेन गन्धद्रव्येणाजीवति आ+जीव-अच् । (गन्धवेने) गन्धवणिजि ।
गन्धाढ्य पु० गन्धेनाढ्यः । चन्दनवृक्षे, नागरङ्गवृक्षे च । गन्धयुक्ते त्रि० । 'गन्धाढ्यः सुमनोहरः' इति तन्त्रम् । स्वर्णयूथ्या, गन्धपत्रायाञ्च स्त्री० ।
गन्धाम्ला स्त्री० गन्धयुक्तः अम्लो यस्याः । वनबीजपूरके ।
गन्धार पु० गन्धमृच्छति ऋ-अण् उप० । रागे, सिन्दूरे, स्वरभेदे च । देशभेदे ब० व० । [लताभेदे ।
गन्धाली स्त्री०गन्धमलति पर्याप्नोति अल-अण् । (गन्धभादाल)
गन्धालीगर्भ स्त्री० गन्धयुक्तो गर्भो यस्याः । सूक्ष्मैलायाम्
गन्धाष्टक न० गन्धानां गन्धद्रव्याणामष्टकम् । चन्दनाद्यष्टसु गन्धद्रव्येषु प्रपञ्चस्तु शब्दाभिधाने दृष्टव्यः ।
गन्धिनी स्त्री० गन्धोविद्यतेऽस्याः इनि । मुरानामगन्धद्रव्ये ।
गन्धिपर्ण पु०गन्धि गन्धयुक्तं पर्णं यस्य । सप्तच्छदद्रुमे (छातिम)
गन्धोत्कटा स्त्री० गन्धेन उत्कटा उग्रा । दमनकवृक्षे ।
गन्धोत्तमा स्त्री० गन्धेन उत्तमा उत्कृष्टा । मदिरायाम् ।
गन्धोली स्त्री० गन्धयति अर्दयति गन्ध-ओलच् गौरा० ङीष् । वरटायाम् (बोलता) ।
गभस्ति पु० गम्यते ज्ञायते गम-ड गः विषयस्तं बभस्ति भासयति भस-क्तिच् । किरणे, सूर्य्ये च । स्वाहायां वह्नि-पत्न्यां स्त्री० वा ङीप् ।
गभस्तिमत् पु० गभस्ति+मतुप् । सूर्य्ये । [सूर्य्ये
गभस्तिहस्त पु० गभस्तयो हस्ता इव जलाकर्षकत्वात् यस्य ।
गभीर त्रि० गच्छति जलमत्र गम-ईरन् भान्तादेशश्च । निम्न-स्थाने,अतलस्पर्शे,गहने, दुष्प्रवेशे, दुर्बोधे च ।
गम गतौ भ्वा० पर० सक० अनिट् । गच्छति अगमत् ।
गम पु० गम-अप् । द्यूतभेदे,जिगीषोर्यात्रायाम्, गमने, पथि, सदृशपाठे च । [त्वात् समास इति भाष्यम् । गमयितरि च ।
गमक त्रि०गमयति बोधयति गम-णिच्-ण्वुल् । बोधके, गम-
गम्भारी स्त्री० कं जलं बिभर्त्ति भृ-अण् ङीप् पृ० कस्य गः । (गामारी) द्रुमभेदे ।
गम्भीर त्रि० गच्छति जलमत्र गम ईरन् भुगागमः नि० । निम्नस्थाने, मन्द्रे गभीरार्थे च । जम्बीरे पद्मे, कुरुवकभेदे च पु० । स्वरे कण्ठे च नाभौ च त्रिषु गम्भीरता शुभा ।
गम्भीरवेदिन् पु० गम्भीरं मन्दं वेत्ति विद-णिनि । 'चिर-कालेन यो वेत्ति शिक्षां परिचितामपि 'गम्भीरवेदी विज्ञेयः स गजः ह्युक्तलक्षणः, 'त्वग्भेदात् शोणितस्रावात् मांसस्य क्वथनादपि । कालान्ते यो न जानाति स स्यात् गम्भीरवेदितल्लक्षणविशिष्टे च गजे । तत्र, गम्भीरवेदिताख्ये
गय पु० असुरभेदे,वानरभेदे,नृपभेदे च । तीर्थभेदे स्त्री०टाप्
गर पु० गॄ-निगरणे अच् अप् वा । विषे, रोगे, ववाख्यके पञ्चमे करणे च । [ङीप् ।
गरघ्न पु० गरं विषं हन्ति । वर्व्वरे । मत्स्यभेदे (गरुड) स्त्री०
गरल न० गिरति जीवनं गॄ-अलच् । विषे, सर्पविषे, तृणपूले च
गरागरी स्त्री० गरं मूषिकविषमागिरति आ+गॄ-अच् गौ० ङीष् । देवताडीवृक्षे ।
गरिमन् पु०गुरोर्भावः इमनिच् गरादेश०। गौरवे । [वान्यत्र
गरिष्ठ त्रि० अतिशयेन गुरुः इष्ठन् । गुरुतरे । ईयसुनि गरी-
गरी स्त्री० गॄ शब्दे अच् गौरा० ङीष् । देवताडीद्रुमे ।
गरुड पु० गरुद्भ्यां डयते डी-ड पृ० तलोपः । कश्यपात्मजे विनतागर्भजाते पक्षिराजे ।
गरुडध्वज पु० गरुडो ध्वजः चिह्नमस्य । विष्णौ ।
गरुडपुराण न० गरुडेन प्रोक्तं पुराणम् । पुराणभेदे ।
गरुडाग्रज पु०६त०विनताया ज्येष्ठपुत्रे सूर्य्यसारथौ अरुणे ।
गरुत् पु० ऋ-गॄ-उति । खगानां नभोगतिहेतौ पक्षे (पाखा)
गरुत्मत् पु० गरुत् अस्त्यस्य मतुप् यवादित्वात् न मस्य वः । गरुडे, विहगमात्रे च ।
गर्ग पु० ऋ-ग । ब्रह्मणः पुत्रे मुनिभेदे ।
गर्गरी स्त्री० गर्ग इति शब्दं राति रा-क गौ० ङीष् । दधि मन्थनपात्रे, कलसे च । मत्स्यभेदे, तरुणपर्णौ च पु० ।
गर्ज अव्यक्तशब्दे भ्वा० पर० सक० सेट् । गर्ज्जति । अग र्ज्जीत् गर्ज्ज गर्ज्ज क्षणं मूढे ति देवीमाहात्म्यम् ।
गर्ज रवे चुरा० उभ०सक० सेट् । गर्ज्जयति ते अजगर्जत्-त
गर्जर न०गॄ-विच् गरं जरयति जॄ-णिच् अच् ।(गाजर) मूलभेदे
गर्जित न० गर्ज्ज-क्त । मेघशब्दे । कर्त्तरि क्त । मत्तहस्तिनि

**गलन्तिका** स्त्री० गल-शत्रु ङीप् अल्पार्थे कन् स्वल्पवारिधारा युतायां (झारा) कर्कर्य्यां 'देवे देया गलन्तिकेति स्मृतिः ।

**गल(ले)स्तनी** स्त्री० गले स्तनौ यस्याः वा अलुक्स० । छाग्याम् ।

**गलहस्त** पु० गले हस्तः । अपसारणार्थं गलेऽर्पिते हस्ते (गलाटिपि)

**गला** स्त्री० गल-अच् । लज्जालुलताभेदे, अलम्बुषायाञ्च ।

**गलित** त्रि० गल-क्त । पतिते स्खन्ने, च्युते, स्थानादितो भ्रष्टे च ।

**गलेगण्ड** पु० गलेगण्ड इव यस्य । पक्षिभेदे (हाड़गेला)

**गलोद्देश** पु० गलस्य उद्देशः समीपम् । गलस्मीपस्थे ऽवयवे ।

**गल्ह** धार्ष्ट्ये, प्रागल्भ्ये भ्वा० आ० सक० सेट् । गल्हते अगल्हिष्ट

**गल्या** स्त्री० गलानां कण्ठानां समूहः । कण्ठसमुदाये ।

**गल्ल** पु० गल-ल तस्य नेत्त्वम् । (गाल) गण्डे ।

**गल्लक** पु० गल्लति क्षिप् गल् तं लाति गृह्णाति तत स्वार्थे कन् । चषके मद्यपानपात्रे । [भेदे च

**गवय** पु० गु-अयच् । गोसदृशे गलकम्बलहीने पशुभेदे वानर-

**गवल** पु० गुङ् शब्दे अप् तं लाति ला-क । वनमहिषे । तत्सम्बन्धित्वात् तच्छृङ्गे न० ।

**गवाक्ष** पु० गवां किरणानामक्षि रन्ध्रमिव । जालाकारे कुलवधूदृष्टिस्थाने वातायने ।

**गवाची** स्त्री० गां भूमिमञ्चति अञ्च् ङीप् । (गोमुक) लता-भेदे, (चिचोड़ा) शाखोटे, अपराजितायाञ्च । [ङीप् ।

**गवादन** न० गोभिरद्यते अद-ल्युट् । घासे । इन्द्रवारुण्यां स्त्री०

**गवेडु** पु० गवे टीयते टीङ् रक्षणे कु पृ०हस्य ह अलुक् स० । (गडगडे) धान्यभेदे । * [कनि स्त्रीत्वेन टाप् अत्वेवार्थे ।

**गवेधु** पु० गवे धीयते धाञ्-धारणे कु । (गडगडे) धान्यभेदे,

**गवेरुकी** स्त्री० न० । गवामीश गौरव तथाभूतः इव कायति कै क गौरा० ङीप् । (गोरचाकुलिया) लताभेदे ।

**गवेष** अन्वेषणे, अद० चुरा० आत्म० सेट् । गवेषयते अजगवेषत ।

**गवेषणा** स्त्री० गवेष-युच् टाप् । अन्वेषणे । ल्युट् अत्रैवार्थे न० ।

**गव्य** त्रि० गोर्विकारः गवि भव, गोर्हितं गोरिदं, वा सर्वत्र यत् गोसम्बन्धिनि, गोहितादौ च । ज्यायां रागद्रव्ये च न० ।

**गव्यूति** स्त्री० गोर्यूतिः । क्रोशद्वये क्रोशे च ।

**गह** गहने अद० चु० उभ० सक० सेट् । गहयति ते अजगहत् त

**गहन** न० गाह-युच् ट० ह्रस्वः । कानने, गह्वरे, दुःखे च । दुर्गमे, दुष्प्रवेशे च त्रि० । 'गहना कर्मणो गतिरि'ति गीता

**गह्वर** पु० गाह-वरच् नि० । निकुञ्जे । दम्भे, वने, रोदने, विषमस्थाने, अनेकानर्थसङ्कटे च न० । गुहायां न० स्त्री० स्त्रीत्वपक्षे ङीप् ।

**गा** गतौ भ्वा० आत्म० सक० अनिट् । गाते अगास्त ।

**गा** स्तुतौ सक० जन्मनि अक० जुहो० । जगाति अगासीत् ।

**गाङ्गेय** पु० गङ्गा+ढक् । भीष्मे, कार्त्तिकेये च । 'तं गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम् । तदुल्वं पर्व्वते न्यस्तं हिरण्यं समपद्यते'त्युक्ते स्वर्णे, तत्र मनामके धुस्तूरे, मुस्तके, कशेरुणि च

**गाङ्गेरुकी** स्त्री० गाङ्गं जलमीरयति क्षिपति ईर-उ स्वार्थे कन् गौरा० ङीप् । नागबलायाम् ।

**गाजर** न० गां जरयति जॄ-णिच्-अच् । गृञ्जने (गाजोर) ।

**गाढ** न० गाह-क्त । अतिशये दृढे । तद्युते, अवगाढे, क्षिपिते च त्रि० । तपस्विगाढां तमसां प्राप्येति रघुः ।

**गाणिक्य** न० गणिकानां समूहः ष्यञ् । वेश्यासमूहे ।

**गाण्डि** पु० गण्ड-इन् पृ० वृद्धिः । ग्रन्थौ ।

**गाण्डि(ण्डी)व** पु० न० । गाण्डिर्ग्रन्थिरस्त्यस्मिन् वा पृर्व्वपद-दीर्घः । अर्ज्जुनचापे, चापमात्रे च । [मात्रे, अर्ज्जुनवृक्षे च

**गाण्डी(ण्डि)विन्** पु० गाण्डी(ण्डि)व-इनि । अर्ज्जुने, धानुष्क

**गात्र** गैथिल्ये अद० चु० आत्म० अक० सेट् । गात्रयते अजगात्रत

**गात्र** न० गा-ष्ट्रन् । देहे, गजाग्रजङ्घादौ च ।

**गात्रभङ्ग** पु० भन्ज-घञ् गात्रस्य भङ्गोऽवसादो यस्याः । स्वयंगुप्तायाम् । इत० । अङ्गभङ्गे (गामोड़ा) स्त्री० ।

**गात्रानुलेपनी** स्त्री० गात्रमनुलिप्यतेऽनया लिप-ल्युट् । अनुलेपनवर्त्तिकायाम् ।

**गायक** त्रि० गै-ण्वुल् । गायके गानोपजीविनि ।

**गाथा** स्त्री० गै-थन् । आर्य्याच्छन्दसि प्राकृतादिभाषारचिते पद्ये, श्लोके च । [अगाधिष्ट । अजगाधत्

**गाध** प्रतिष्ठायां ग्रन्थे लिप्सायाञ्च भ्वा० आ० अक० सेट् । गाधते

**गाध** पु० गाध-घञ् । स्थाने, लिप्सायां, तलस्पर्शे च । [नृपभेदे

**गाधि** पु० गाध इन् । चन्द्रवंश्ये कान्यकुब्जाधिपे, विश्वामित्रपितरि

**गाधिज** पु० गाधेर्जायते जन-ड । विश्वामित्रे ।

**गाधेय** पु० गाधि+अपत्ये ढञ् । विश्वामित्रे मुनौ ।

**गान** न० गै-ल्युट् । गीतौ, ध्वनौ च ।

**गान्दिनी** स्त्री० गङ्गायां, यादववंश्यस्य अक्रूरस्य मातरि च ।

**गान्धर्व्व** त्रि० गन्धर्व्वस्येदम् अण् । गन्धर्व्वसम्बन्धिनि । 'इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च । गान्धर्व्वः स तु विज्ञेय' इत्युक्ते विवाहभेदे, भारतवर्षीयोपद्वीपभेदे च पु० । सामवेदस्योपवेदे सङ्गीतशास्त्रे, पटस्वरसंघातत्वेन सङ्कृतस्या । प्रयुक्तश्चावध नेन गान्धर्व्वमभिधीयते'इत्युक्ते गाने च न० ।

**गान्धार** पु० गन्धं धौरमृच्छति अण् पृषोदरा० । सिन्दूरे गीतिविषये रागभेदे, स्वरभेदे च । कान्दार इति ख्याते देशोद्भवे त्रि० । गन्धके न० ।

गु(त्स)च्छफल पु० गु(त्स)च्छाकृतीनि फलान्यस्य। रीठाकरञ्जे, राजादन्यां कतके च। अग्निदमन्यां, काकमाच्यां, द्राक्षायां, कदल्याञ्च स्त्री० टाप्।
गु(त्स)च्छार्द्ध पु० गु(त्स)च्छ इव ऋध्यति ऋध-अच्। चतुर्विंशतियष्टिके हारभेदे। ६त० गुच्छ(त्स)स्यार्द्धे पु०न०। [जुगोज
गुज ध्वनौ तुदा० कुटा० पर० अक० सेट्। गुजति अगुजिट
गुज कूजने भ्वा० पर० अक० सेट्। गोजति अगोजीत्।
गुज कूजने भ्वा० पर० सक० सेट् इदित्। गुञ्जति अगुञ्जीत् न जुगुञ्ज य. कलमिति भट्टिः।
गुञ्जा स्त्री० गुजि-अच्। लताभेदे (कुच) तत्फलेऽपि हरितक्यादित्वाटणो लुक्। 'तुल्या यवाभ्यां कथितात्र गुञ्जेति लीलावती। गोधूमद्वयमाने, चतुर्धान्यमाने, पटहे, मदिरागृहे, मधुरध्वनौ, चर्च्चायाञ्च।
गुटि(टी) स्त्री० गु-टिक् वा ङीप्। गोलाकारायां वटिकायाम्। स्वार्थे कन्। तत्रैवार्थे गुटिकापातादिना व्यञ्जन'मि तिदायभागः। [अजुगुण्टत्-त।
गुठ वेष्टने चुरा० उभ० इदित् सक० सेट्। गुण्ठयति-ते
गुड वेष्टने रक्षणे चूर्णने च चुरा० उभ० इदित् सक० सेट्। गुण्डयति-ते अजुगुण्डत्-त।
गुड रक्षणे व्याघाते च तुदा० कुटा० पर० सक० सेट्। गुडति। अगुडीत्। जुगोड।
गुड पु० गुड-क। गोले, हस्तिसन्नाहे, 'इक्षोरसो यः सम्पक्वो जायते लोष्टवद् दृढः। स गुड. गौडदेशे तु मत्स्यण्डैव गुडोमत इत्युक्ते स्वनामख्याते इक्षोरसपाकजाते पदार्थे (फेनी) इति ख्याते पदार्थे, ग्रासे, कार्पास्याञ्च। [त्वक्तिः
गुडतृण न० गुडस्य गुडार्थं तृणम्। इक्षौ तत्र हि गुडो
गुडत्वक्(च) पु० गुड इव मधुरा त्वक्(चा) यस्य। त्वचे (दारचिनि)
गुडदारु पु० गुडप्रधानो दा.रुः शाक०। इक्षौ।
गुडधेनु स्त्री० गुडनिर्म्मिता धेनु.। दानार्थं धेनुत्वेन शास्त्रानुसारेण कल्पिते गुडादिपदार्थे। [(मह्या)
गुडपुष्प पु० गुड इव मधुरं पुष्पमस्य। मधुकवृक्षे (मौल)
गुडफल पु० गुड इव मधुरं फलमस्य। पीलुवृक्षे।
गुडबीज पु० गुड इव मधुरं बीजमस्य। मसूरे।
गुडशिग्रु पु० गुड इव मधुर. शिग्रु। रक्तशोभाञ्जने।
गुडाका स्त्री० गुड-व्याघाते आक। निद्रायाम्।
गुडाकेश पु० गुडाकाया. निद्रायास्आलस्यस्य ईशः वशित्वात्। शिवे, अर्ज्जुने च।
गुडाशय पु० गुड इव मधुर आशयः फलमध्यं यस्य। आखोट वृक्षे (आखरोट) ६त० गुडाभिलाषे। [लतायाम्।
गुडु(डू)ची स्त्री० गुड-रक्षणे उ (ऊ) चट्। स्वनामख्यातायां
गुण आमन्त्रणे आम्रेडने इत्येके अद० चु० उभ० सक० सेट्। गुणयति-ते अजुगुणत्-त।
गुण पु० गुण-अच् घञ् वा। धनुषो मौर्व्याम् धनुराकर्षणदामनि, रज्जुमात्रे, सगुणोऽपि पूर्णकुम्भो यथा कूपे निमज्जतीत्युक्तः। शौर्यादिधर्मे, राज्ञां सन्धिविग्रहादिषु षट्सु साधनेषु, 'षाड्गुण्यमुपयुञ्जत' इति माघः। ज्ञानविनयादिषु. गुणा गुणानुबन्धित्वा'दिति रघुः। सांख्यमते पुरुषोपभोगोपकरणभूतत्वात् तद्बन्धनोपयोगित्वाञ्च सत्वरजस्तम आदिषु पदार्थेषु। 'प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मस्वि'ति गीता। अप्रधाने, न्यायमते रूपादिषु चतुर्विंशतिपदार्थेषु, व्याकरणोक्ते 'सत्वे निविशतेऽपैति पृथग् जातिषु दृश्यते। आधेयश्चाक्रियाजश्च सोऽसत्वप्रकृतिर्गुण', इत्युक्ते द्रव्यमाश्रित्य द्रव्यभिन्ने उत्पाद्यानुत्पाद्यता समानाधिकरणे सिद्धरूपे वस्तुधर्मे, व्याकरणे परिभाषिते अदेङ्गुण इत्युक्ते अकारे, एकारे, ओकारे च अलङ्कारोक्तेषु माधुर्यादिषु, आवृत्तौ, तन्तौ, उत्कर्षे, दूर्व्वायाञ्च।
गुणक पु० गुण-आम्रेडने ण्वुल्। आवर्त्तके पूरके 'गुण्यान्त्यमङ्कं गुणकेन हन्यादिति लीलावती। [पचपातिनि।
गुणगृह्य त्रि० ग्रह-पक्षार्थे क्यप् ६त०। गुणानां पक्षे
गुणनिका स्त्री० गुण-आम्रेडने युच् स्वार्थे कन्। अभ्यासे नियमार्थं पाठ्यस्य ग्रन्थस्य पुन पुनरनुशीलने, वक्तु गुणनिकेव सेति माघ। शून्ये, नृत्ये, मालायाञ्च।
गुणवृक्षक पु० वृक्ष इव कायति कै-क गुणानां नौकाकर्षणरज्जूनां बन्धनाधार. वृक्ष। नौकाकर्षकदामाधाधारे काष्ठे। (मास्तुल)। [पूरिते।
गुणित त्रि० गुण-आम्रेडने कर्म्मणि क्त। आहते ताडिते
गुणिन् पु० गुणोऽस्त्यस्य इनि। धनुषि। गुणविशिष्टे त्रि० 'गुणी गुणं वेत्ती'त्युद्भटः।
गुणीभूत त्रि० अगुण गुण' भूत' च्वि भू-क्त। अप्रधानीभूते
गुणीभूतव्यङ्ग्य न० गुणीभूतं वाच्यार्थादपकृष्टं व्यङ्गं यत्र। अलङ्कारोक्ते मध्यमे काव्ये। [कशेरु।
गुण्ड पु० गुडि-वेष्टने अच्। असिपत्रे तृणभेदे यस्य कन्दः
गुण्डकन्द पु० ६त०। कशेरुणि (केशुर)।
गुण्डारोचनिका स्त्री० गुण्डा इती रोचना हरिद्रेव इवार्थे कन् (कमलागुडि) वृक्षभेदे।
गुण्डिक पु० गुण्ड+अस्त्यर्थे ठन्। चूर्णीकृते तण्डुलादौ।

स्थितगृहे, वन्यास्, गृध्रनखीवृक्षे, (गुड़कार्यांली)।

गु(गू)वाक पु० गु-पिनाकादित्वात् आक नि० (सुपारी) क्रमुके

गुह संवरणे भ्वा०उभ०सक०वेट्। गूहति ते अगूहीत् अघुक्षत् अगूहिष्ट अगूढ।

गुह पु० गुह-क। कार्त्तिकेये, अश्वे, रामसित्रे शृङ्गवेराधिपे चण्डालनाथे, गर्त्ते, विष्णौ च। सिंहपुच्छीलतायाम् अक-त्रिमे देवखाते पर्वतगर्त्ते, हृदये च स्त्री०। गुहां प्रवि-ष्टावितिश्रुतिः।

गुहाशय पु० गुहायां गर्त्ते आशेते शी-अच्। अज्ञाने। 'सिंहव्याघ्रवृकाश्चतरक्षुद्वीपिनस्तथा। बभ्रुजम्बुकमार्जारा इत्याद्याः स्युर्गुहाशया इत्युक्तेषु सिंहादिषु, हृदये, बुद्धौ च स्थिते जीवे,ईश्वरे च 'गुहाशयं गह्वरेष्ठ'मिति श्रुतिः।

गुहिल न० गुह-इलच् किच्च। धने, वने च।

गुह्य त्रि० गुह-क्यप्। कच्छपे, दम्भे,परमात्मनि च। रहसि, भगे, लिङ्गे च न०। रहस्ये,गुहामर्हति दण्डादित्वात् यत्। अप्रकाश्ये च त्रि०। [कुवेरधनरक्षके देवयोनिभेदे।

गुह्यक पु० गुह्यं कं सुखं यस्य,गुह्यं कुत्सितं कायति कै क वा।

गुह्यकेश्वर पु० ६त०। कुबेरे।

गुह्यपुष्प पु० गुह्यं पुष्पमस्य। अश्वत्थवृक्षे। [जुगाव। गूनः

गू विष्ठात्यागे तुदा०कुटा०पर०अक०सेट्। गुवति अगुविष्ट

ग स्त्री० गच्छत्यपानेन देहात् गम-क्त टिलोपश्च। विष्ठायां, मले च। गूधातोःकप्प्रत्ययान्ततां कथनं पुंलिङ्गताकथनञ्च मामादिकम्।

गूढ त्रि० गुह-क्त। गुप्ते, संवृते, गहने च। रहसि न०।

गूढज पु०गूढं गुप्तं यथा तथा जातः-गूढ. सन् वा जातः जन ड। द्वादशपुत्रमध्ये पुत्रभेदे। [हि केनापि न दुष्टचरम्

गूढनीड पु०गूढं नीडं वासस्थानं यस्य। खञ्जनखगे तद्वासस्थानं

गूढपत्र पु०गूढं पत्रमस्य। अङ्कोटे, करीरे च।

गूढपाद(द) पु० गूढाः पादा अस्य वा पाद्भावः। सर्पे।

गूढपुरुष पु० कर्म०। गुप्तचरे, प्रणिधौ।

गूढपुष्प पु० गूढानि संवृतानि पुष्पाण्यस्य। वकुलवृक्षे।

गूढफल पु० गूढं यथा तथा फलति अच्। बदरे।

गूढमैथुन पु० गूढं केनाप्यदृश्यं मैथुनं यस्य। काके।

गूढवल्लिका स्त्री० कर्म०। अमोटवृक्षे।

गूढसाक्षिन् पु०कर्म०।'अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम्। य' श्राव्यते तदा गूढो गूढसाक्षी स उच्यते' इत्युक्ते साक्षिभेदे

गूढाङ्ग पु० गूढान्यङ्गान्यस्य। कच्छपे।

गूढोत्पन्न पु०'उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः। स गृहे गूढ उत्पन्न स्तस्य स्यात् यस्य तल्पजः' इत्युक्ते पुत्रभेदे।

गूथ पु०न०। गू-थक्। विष्ठायाम्।

गूर उद्यमे चुरा०आ०अक०सेट्। गूरयते अजूगुरत।

गूर वधे गतौ च दिवा०आत्म०सक०सेट्। गूर्य्यते अगूरिष्ट।

गृ सेके भ्वा०पर०सक०अनिट्। गरति अगार्षीत्।

गृज ध्वनौ भ्वा०पर० अक०सेट्। गर्जति अगर्जीत्।

गृञ्ज ध्वनौ भ्वा०पर०अक०सेट् इदित्। गृञ्जति अगृञ्जीत्।

गृञ्जन पु० गृञ्जते भक्ष्यत्वेन काम्यते रोगेषु गृजि-ल्युट्। 'गन्धाकृतिरसैस्तुल्यः स्वच्छगाल पलाण्डुने'त्युक्तलक्षणे मूलभेदे (रसुन) इति ख्याते मूलभेदे च। विषदग्धपशु-मांसे न०ः [अगर्द्धीत्। गर्द्धिता-गृद्धा।

गृध लिप्सायां दिवा० पर०सक० सेट्। गृध्यति अगृधत्-

गृध्नु त्रि० गृध-क्नु। लुब्धे।

गृध्र पु० गृध-क्रन्। (गृधिनि) खगभेदे।

गृध्रनखी स्त्री० गृध्रस्य नखइव पत्रादि अस्याः ङीष्। वदर्याम् (कुलेखाडा) कुलिकवृक्षे च।

गृध्रराज पु० ६त०। गरुडात्मजे जटायुखगे।

गृष्टि स्त्री० सकृत् गर्भं गृह्णाति ग्रह-क्तिच्-ष्ट०नि०। सकृत्-प्रसूतायां गवि,वराहक्रान्तयां,वदरायामोषधौ.काश्मर्य्यांञ्च

गृह ग्रहणे अद०चु०आत्म०सक० सेट्। गृहयते अजगृहत

गृह न० ग्रह गेहार्थे क। इष्टकास्तृत्तिकादिरचिते गेहे। गृह-ग्रहणे अच्। कलत्रे 'न गृहं गृहमित्याहु-र्गृहिणी गृहमुच्यते' इति स्मृतिः। नामनि, मेषादिभवने राशौ च। अर्द्धर्चादित्वात्उभयलिङ्ग। तत्र एकत्वे न० पुंलिङ्गस्तु बहुवचनान्तएव 'तत्रागारं धनपतिगृहा'-निति मेघदूतम्। कलत्रेऽपि दारशब्दवत् ब०व०।

गृहकच्छप पु० गृहे कच्छप इव। पेषणशिलायाम्।

गृहकन्या स्त्री० गृहे कन्येव। घृतकुमार्याम्।

गृहकारक पु० गृहं करोति कृ-ण्वुल्। (घरामि) गृहनि-र्म्माणकारके वर्णसङ्करभेदे। [चित्रकण्ठे (घुघु)

गृहनाशन पु० गृहं नाशयति नश-णिच् ल्यु। वनकपोते

गृहगोधा स्त्री० गृहस्य गोधेव। (टिक्टिकी) ज्येष्ठ्याम्। स्वार्थे कन् तत्रैवार्थे।

गृहपति पु० ६त०। गृहस्वामिनि,गृहस्थे, मन्त्रिणि,धर्मे च

गृहभूमि स्त्री० गृहयोग्या भूमिः। वास्तुभूमौ।

गृहमणि पु० गृहे मणिरिव। प्रदीपे।

गृहमृग पु० गृहस्य मृगइव। कुक्कुरे। [गृहस्थे।

गृहमेधिन् पु० गृहैर्दारैर्मेधते संगच्छते मेध-सङ्गमे णिनि।

'द्विस्रूपा गव्युदाहृते'ति मानभेदे, द्रोणीपरिमाणे च ।

**गोऽण्ड** पु॰ गोरण्ड इव । नीचजातिभेदे (गोंड) वृक्षनाभौ च तद्वति

**गोतम** पु॰ ब्रह्मण॰ पुत्रे स्वनामख्याते मुनिभेदे ।

**गोतीर्थ** न॰ गोहेतुकं तत्स्थित्या तीर्थमिव । गोष्ठे ।

**गोत्र** पु॰ गां पृथिवीं त्रायते त्रै-क । पर्वते । नामनि, कानने, क्षेत्रे, पथि, छत्रे, सजातीयगणे, पौत्राद्यपत्ये वंशे, ऋषिशब्दवाच्येषु आदिपुरुषेषु शाण्डिल्यादिषु चतुर्विंशतौ मनूक्तेषु च । वित्तरो वृन्दसिधाने ।

**गोत्रज** त्रि॰ गोत्रे समाने गोत्रे जायते जन-ड । एकगोत्रोत्पन्ने

**गोत्रभिद्** पु॰ गोत्रान् पर्वतान् भिनत्ति भिद-क्विप् । इन्द्रे ।

**गोत्रा** स्त्री॰ गोत्राः पर्वताः सन्त्यस्याः अर्श आदित्वादच् । धरायाम् । गो+समूहे त्रल् । गोसमूहे । [दन्ते पु॰

**गोदन्त** न॰ गोर्दन्त इवावयवो यस्य । हरिताले । ६त॰ । गवां

**गोदान** न॰ गावः केशा दीयन्ते छिद्यन्तेऽत्र दो-ल्युट् । केशान्तरूपसंस्कारभेदे 'अथास्य गोदानविधेरनन्तर'मिति रघुः ।

**गोदारण** न॰ गां भूमिं दारयति दृ-णिच्-ल्यु । लाङ्गले, कुद्दाले च । [तीर्थावाहनमन्त्र

**गोदावरी** स्त्री॰ नदीभेदे । गोदावरि । सरस्वति । इति जले

**गोधन** न॰ गवां धनं समूहः । गोसमूहे । गौरेव धनमस्य । गोरूपधनवति त्रि॰ । गौरेव धनम् । गोरूपे धने न॰ ।

**गोधा** स्त्री॰ गुध्यते वेष्ट्यतेबाहुरनया करणे घञ् । धनुर्गुणाघातवारणाय प्रकोष्ठे बद्धे चर्म्मणि । कर्त्तरि अच् । (गोसाप) इति ख्याते सर्पभेदे 'शशकः शल्लकी गोधेति' मनुः । स्वार्थे कन् अत्रैवार्थे ।

**गोधापदी** स्त्री॰ गोधेव पादो मूलमस्याः स्वाङ्गत्वात् जातित्वाच्च ङीपि पद्भावः । (गोयालिया) लताभेदे । स्वार्थे कन् अत्रैवार्थे

**गोधास्कन्ध** पु॰ गोधेव स्कन्धोऽस्य । विट्खदिरे ।

**गोधि** पु॰ गुध-इन् । ललाटे, गोधायां च ।

**गोधिनी** स्त्री॰ गुध-णिनि । वृहतीभेदे ।

**गोधूम** पु॰ गुध-ऊम । व्रीहिभेदे (गेहुम) नागरङ्गे च ।

**गोधूलि** पु॰ गोभ्य उत्थिता धूलिर्यत्र काले । (सन्ध्यातपारुणित पश्चिमदिग्विभागे व्योम्नि स्फुरद्विरलतारकसन्निवेशे । वृन्दे गवां खुरपुटोद्गलितैरजोभिर्गोधूलिरित्युक्तो काले ।

**गोनर्द** पु॰ गां जलं नर्दयति नर्द-अण् । सारसपक्षिणि, पर्वतभेदे च । कैवर्त्तीमुस्तके न॰ ।

**गोनर्दीय** पु॰ गोनर्दे तत्समीपे देशे भव । पाणिनौ मुनौ ।

**गोनस** पु॰ गोरिव नासास्य नसादेशः । सर्पभेदे ।

**गोप** पु॰ गां भूमिं वा पाति रक्षति पा-क । (गोयाला) जातिभेदे । ग्रामाधिकृते भूरक्षके, उपकारके च त्रि॰ ।

**गोपघोण्टा** स्त्री॰ गोपप्रिया घोण्टा । हस्तिकोलौ, 'वदरीसदृशाकारो वृक्ष सूक्ष्मफलो भवेत् । अटव्यामेव सा घोण्टा गोपघोण्टेति कीर्त्तिते'त्युक्तवृक्षे च ।

**गोपति** पु॰ ६त॰ । गवां पत्यौ वृषे, (सांड) वृषपतौ शिवे, भूमिपतौ, नृपे, श्रीकृष्णे, किरणपतौ सूर्य्ये, स्वर्गपतौ शक्रे, ऋषभनामौषधौ च ।

**गोपदल** पु॰ गोपदमात्रस्थानं लाति ला-क । गुवाके ।

**गोपभद्र** पु॰न॰ गोपेभ्यो भद्रमस्मात् ५व॰ । शालूके । [गाम्भार्य्याम्

**गोपभद्रिका** स्त्री॰ गोपेभ्योभद्रं यस्मात् ५व॰ कप् अतइत्त्वम् ।

**गोपवल्ली** स्त्री॰ गां पाति पा-क कर्म॰ । मूर्वालतायां श्यामालतायां (श्यामावास) ।

**गोपा** स्त्री॰ गां पाति पा-क टाप् । श्यामालतायाम् ।

**गोपानसी** स्त्री॰ गवां किरणानां पानं शोधनं गोपानं स्यति सो-क गौरा॰ ङीप् । कुड्येषु छादनार्थं बद्धे वक्रकाष्ठे, (मुदनी) बन्धनाधारे पटलाधारे वंशपञ्जरे च । [लयो च

**गोपाल** पु॰ गां सुरभीवृषभादिकं भूमिं वा पालयति । गोपार्थे,

**गोपालकर्कटी** स्त्री॰ । पाल-अण् गोपालस्य गोरक्षकस्य प्रिया कर्कटी । क्षुद्रकर्कट्याम् ।

**गोपुच्छ** पु॰ गोः पुच्छ इव पुच्छो यस्य । गोलाङ्गूलवानरे । गोपुच्छाकारत्वात् हारभेदे । ६त॰ । गोलाङ्गूले न॰ ।

**गोपुर** न॰ गावः पूर्य्यन्ते यत्र पृ-मूल॰क । पुरद्वारे, कैवर्त्तीमुस्तके च

**गोप्य** पु॰ गुप-यत् । रक्ष्ये दासीपुत्रे । रक्षणीयमात्रे, गुह्ये च त्रि॰

**गोमती** स्त्री॰ नदीभेदे, वेदमन्त्रभेदे च । [अनुगोमत्-त ।

**गोम** लेपने अद॰ चुरा॰ उभ॰ सक॰ सेट् । गोमयति-ते

**गोमन्त** पु॰ विन्ध्यपर्वतस्य प्रत्यन्तपर्वते ।

**गोमय** पु॰न॰ गवां पुरीषम् गो+मयट् । गोपुरीषे (गोवर) ।

**गोमयच्छत्र** न॰ गोमये तदाधारस्थाने छत्रमिव । शिलीन्ध्रे (छातिया) । [रियापोका) कीटभेदे

**गोमयोत्था** स्त्री॰ गोमयादुत्तिष्ठति उद्+स्था-क टाप् । (गुव-

**गोमायु** पु॰ मा विकृता वाचं मिनोति मा-उण् । शृगाले, गन्धर्वभेदे च ।

**गोमिन्** त्रि॰ गो+अस्त्यर्थे मिनि । गवां स्वामिनि । शृगाले पु॰

**गोमुख** पु॰ गोरिव मुखमस्य । यन्त्रभेदे, नक्रे, कुटिलाकारे वाद्यभाण्डे, चौरकृतसन्धिभेदे, लेपने, तन्त्रोक्ते जपमालास्थापनार्थं पट्टसूत्रादिनिर्म्मिते यन्त्रभेदे च । हिमालयैकदेशात् गङ्गापतनगुहायां स्त्री॰ ङीप् ।

**गोमूत्रिका** स्त्री॰ गोमूत्रं साधनत्वेनास्त्यस्याः ठन् । गोमूत्रजातायां

इत्योपपादितेत्यर्थे च। शब्दनिष्ठे व्यर्थबोधकताशक्तिरूपे वृत्तिभेदे स्त्री० ङीप्।

**गौतम** पु० गोतमस्यापत्यम् शिष्यो वा अण्। शतानन्दे नाचिकेतसो जनके मुनिभेदे, शाक्यसिंहे च। [वरीनद्याम्

**गौतमसम्भवा** स्त्री० गौतमात् सम्भवतीति अच्। गोदा-

**गौतमी** स्त्री० गोतम+इदमर्थे अण् ततो ङीप्। गोतमप्रणीतायां षोडशपदार्थीरूपायाम् शाक्यसिंहप्रणीतायाञ्च विद्यायां, गोदावरीनद्याम्, राक्षसीभेदे, कण्वभगिन्याञ्च।

**गौधार** पु० गोधायाः अपत्यम्। आरक्। गोधापुत्रे।

**गौधेय** पु० गोधा+ढक्। गोधासुते द्रक् गौधेरोऽप्यत्र।

**गौर** पु० गुर-र नि०। श्वेतसर्षपे, चन्द्रे, धवदृक्षे, अरुणवर्णे, श्वेतवर्णे च तत्तद्वर्णवति, विशुद्धे च त्रि०। स्त्रियां गौरी। केशरे, पङ्कजे, कुङ्कुमे, स्वर्णे च न०।

**गौरजीरक** पु० कर्म०। श्वेतजीरके।

**गौरत्वच्** पु० गौरी त्वक् यस्य। इङ्गुदीवृक्षे (जीवपुति)

**गौरव** न० गुरोर्भावः अण्। गुरुत्वे अभ्युत्थानादिसम्माने च।

**गौरवित** त्रि० गौरवं जातमस्य तार० इतच्। पूज्ये।

**गौरशाक** पु० गौरः शाकोऽस्य। मधूकभेदे।

**गौरी** स्त्री० गौर+ङीष् 'शङ्खेन्दुकुन्दधवला ततो गौरी तु सा मतेत्युक्तायां पार्वत्याम् 'अष्टवर्षा भवेद्गौरी'त्युक्तायाम् अष्टवर्षायाम् असञ्जातरजस्कायां कन्यायां, हरिद्रायाम् दारुहरिद्रायां, गोरोचनायाम्, प्रियङ्गौ, भूमौ, नदीभेदे, मञ्जिष्ठायां, श्वेतदूर्वायां, मल्लिकायाम्, तुलस्याम्, स्वर्णकदल्याम्, आकाशमांस्यां रागिणीभेदे च। [कुमारः।

**गौरीपुष्प** पु० गौरीव पीतं पुष्पमस्य। प्रियङ्गुवृक्षे। [मिति

**गौरीशिखर** न० पार्वती तपस्यास्थाने 'जगाम गौरीशिखर-

**गौष्ठीन** न० पूर्वं भूतं गोष्ठं खञ्। भूतपूर्वगोष्ठे। [ग्रन्थिष्ट

**ग्रथ** कुटिलीकरणे आत्म० इदित् सक० सेट्। ग्रन्थते अग्र-

**ग्रथित** त्रि०ग्रन्थ संदर्भे-क्त। गुम्फिते, हिंसिते, आक्रान्ते च।

**ग्रन्थ** संदर्भे वा चु० पक्षे क्र्या०उभ०सक०सेट्। ग्रन्थयति-ते ग्रथ्नाति ग्रथ्नीते अजग्रन्थत्, अग्रन्थीत् अग्रन्थिष्ट।

**ग्रन्थ** पु० ग्रन्थ-घञ्। गुम्फने,धने च। करणे घञ्। शास्त्रे। अनुष्टुप्छन्दस्के पद्ये च।

**ग्रन्थि** पु० ग्रन्थ-इन्। वंशादिसन्धौ (गांट) ख्याते कौटिल्ये, 'ग्रन्थग्रन्थिरिह कचिदि'ति नैषधम्। ग्रन्थिपर्णवृक्षे, बन्धने,रोगभेदे च। [गग्गुलौ, करीरे च। देवक्षे पु०।

**ग्रन्थिक** न० ग्रन्थ-अस्त्यर्थे ठन्। पिप्पलीमूले। ग्रन्थिपर्णे,

**ग्रन्थिदूर्वा** स्त्री० ग्रन्थिमती दूर्वा (गांटदूर्वा) दूर्वाभेदे।

**ग्रन्थिपर्ण** न० ग्रन्थिग्रन्थयुतं पर्णं यस्य। चोरनामगन्धद्रव्ये।

**ग्रन्थिफल** पु०ग्रन्थिग्रन्थियुक्तं फलमस्य। कपित्थवृक्षे,मदनवृक्षे, गुक्करे च (कुक्कुरशोंडा)।

**ग्रन्थिभेद** पु० ग्रन्थिं भिनत्ति भिद-अण् (गांटकाटा) चौरभेदे 'अङ्गुलिं ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे' इति स्मृतिः।

**ग्रन्थिमत्** पु० ग्रन्थिः सन्धिरस्यास्ति मतुप् (हाड़जोड़ा) अस्थिसंहारकवृक्षे। ग्रन्थियुक्ते त्रि०।

**ग्रन्थिमत्फल** पु० ग्रन्थिमत् फलं यस्य। (मान्दार) लकुचे।

**ग्रन्थिमूल** न० ग्रन्थियुतं मूलमस्य। गृञ्जने (गाजर)

**ग्रन्थिमूला** स्त्री०ग्रन्थि ग्रन्थयुतंमूलमपि यस्याः। मालादूर्वायाम्

**ग्रन्थिल** न० ग्रन्थिं लाति ला-क। पिप्पलीमूले, आर्द्रके च। विकङ्कतवृक्षे, (वइचि) करीरे, तण्डुलीयशाके (पोदिना) भद्रमुस्तायां मालादूर्वायाञ्च स्त्री०। हितावल्लाम् पिरुड लौ चोरनामगन्धद्रव्ये पु०। ग्रन्थिमति त्रि०। [ग्रस्ता।

**ग्रस** भक्षणे भ्वा०आत्म०सक०सेट्। ग्रसते अग्रसिष्ट ग्रसिता-

**ग्रस** भक्षणे वा० चुरा० उभ० पक्षे भ्वा० सक० सेट्। ग्रास यति-ते ग्रसति अजिग्रसत्-त अग्रासीत् अग्रसीत्।

**ग्रस्त** न० ग्रस-क्त। लुप्तवर्णपदे वाक्यविशेषे, भक्षिते त्रि०।

**ग्रह** ग्रहणे क्र्या० उभ० सक० सेट्। गृह्णाति गृह्णीते अग्राहीत् अग्रहीष्ट।

**ग्रह** आदाने वा चुरा०उभ०पक्षे भ्वा०पर०सक०वेट्। ग्राहयति-ते ग्रहति। अजिग्रहत्-त अग्राहीत्-त अग्राक्षीत्।

**ग्रह** पु० ग्रह-अच्। सूर्यादिषु नवसु। अनुग्रहे, निर्बन्धे, ग्रहणे, रणोद्यमे, बालारिष्टकारकेषु पूतनादिषु, चन्द्रसूर्ययोर्ग्रासे च 'तदा सम्भाव्यते ग्रह' इति ज्योतिषम्।

**ग्रहण** न० ग्रह-भावादौ ल्युट्। स्वीकारे, आदाने, आदरे, करे, ज्ञाने, बन्धने,चन्द्रसूर्ययोर्ग्रासे, इन्द्रिये च।

**ग्रहणि(णी)** स्त्री० ग्रह-अनि वा ङीप्। स्वनामख्याते रोगभेदे। [रोगहारिणि त्रि०।

**ग्रहणीहर** न० ग्रहणीं हरति-हृ-अच्। लवङ्गे, ग्रहणी-

**ग्रहनाश** पु० ग्रहं ग्रहजन्यारिष्टं नाशयति नश-णिच्-अण्। (छातियान) वृक्षभेदे।

**ग्रहपति** पु० ६त०। सूर्ये एवं ग्रहनायकादयोऽप्यत्र।

**ग्रहयाग** पु०ग्रहेभ्यो यागः। अरिष्टनिवारणार्थं पुण्यार्थं वा। ग्रहोद्देशके यागभेदे।

**ग्रहाधार** पु० ६त०। ध्रुवनक्षत्रे।

**ग्रहवह्नि** पु० ग्रहाणां वह्निः। 'कपिलः पिङ्गलो धूमकेतुश्च जठराग्निकः। शिखी च हाटकश्चैव महातेजा हुताशनः

उताशनश्च विशेयो नवैते ग्रहसङ्ग्रहेयुक्ते इत्यादि क्रमेण वह्निभेदे ।

**ग्राम** पु॰ग्रस-मन् आदन्तादेश विनाश विश्वस्ताश यत्र चैव वसन्ति हि। तत्र ग्राम इतिप्रोक्त शूद्राणां वास एव वा' 'तथा शूद्रजनप्रायाः सुसमृद्धकृषीवलाः क्षेत्रोपयोगभूमध्ये वसति ग्रामसंज्ञिकेत्युक्तलक्षणे मिश्राणां वासस्थाने, यथा कुटुम्बिन सर्व्वेप्येकीभूता भवन्ति हि । तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते' इत्युक्ते स्वरभेदे, शिल्प्यन्त्योपपदे तत्समूहे च यथा शब्दग्राम अर्थग्राम इत्यादि

**ग्रामकुष्या** स्त्री॰ ग्रह-बाहुल्यात् क्यप् । ग्रामबहिर्भूताया सेनायाम् ।

**ग्रामणी** पु॰ग्राम नयति नी-क्विप् णत्वम् । नापिते । पत्यौ, प्रधाने च त्रि । ग्रामगम्याया वेश्याया नीलिकायाश्च स्त्री॰।

**ग्रामता** स्त्री॰ ग्रामाणां समूह तल् । ग्रामसमूहे ।

**ग्रामधर्म्म** पु॰ ग्रामे भव धर्म्म कर्म॰ । मैथुने व्यवाये ।

**ग्राममुख** पु॰ ग्रामस्य मुख यत्र । हट्टे ।

**ग्राममृग** पु॰ इत॰ । कुक्कुरे । — — — — [विशे

**ग्रामयाजक** पु॰इत॰ । ग्रामस्य नानावर्णानां याजके अपकृष्ट

**ग्रामान्त** न॰ इत । ग्रामस्य समीपस्थे ग्रामनिकटे ।

**ग्रामीण** पु ग्रामे भव खञ् । कुक्कुरे, काके, ग्राम्यशूकरे च । ग्रामोद्भवे त्रि॰। ग्रामीणस्य प्रथमत इति भाषापरि॰ नीलिकौषधौ पालङ्कशाके च स्त्री॰ ।

**ग्राम्य** त्रि ग्रामे भव य । प्राकृते मूढे ग्रामभवे ज्योतिषोक्ते मिथुनादिराशिभेदे 'छागमेषहयाद्याः ग्राम्याः प्रोक्ता इत्युक्तेषु पशुभेदेषु, अश्लीलव्यञ्जके भण्डादिवाक्ये, च । तुलायां नील्याश्च स्त्री॰ ।

**ग्राम्यकन्द** पु॰ कर्म॰ । कन्दभेदे (ग्रामेर ओल) ।

**ग्राम्यकर्कटी** स्त्री कर्म॰। कुष्माण्डे ।

**ग्राम्यकुङ्कुम** न॰ कर्म॰ । कुसुम्भे ।

**ग्राम्यपशु** पु॰ कर्म॰ । 'गौर्मेषोऽजो मनुष्यश्च अश्वोऽश्वतर गर्द्दभः' इत्युक्तेषु सप्तसु पशुषु ।

**ग्राम्यवल्लभा** स्त्री इत । पालङ्कशाके (पालङ्)

**ग्राम्याश्व** पु॰ कर्म । गर्द्दभे ।

**ग्रावन्** पु॰ ग्रसते ग्रस-ड ग्र आवनति वन-सम्भक्तौ विच् कर्म । प्रस्तरे पर्व्वते मेघे च । दृढे त्रि ।

**ग्रास** पु॰ ग्रस घञ् । पिण्डाकारे कवले कवले 'कुक्कुटाण्डप्रमाणं वा यावद्वा प्रविशेन्मुखम्। एत ग्रास विजानीयादि त्युक्ते सर्वपूरणयोग्याशादौ ।

**ग्राह** पु ग्रह भावे घञ् । आदाने,ज्ञाने, ग्रहणे च । कर्त्तरि ण । जलजन्तुभेदे (हाङ्गर) । [तद्वति त्रि ।

**ग्राहक** पु॰ ग्रह ण्वुल् । श्येनपक्षिणि विषवैद्ये च । ग्राही

**ग्राहिणी** स्त्री ग्रह-णिनि । क्षुद्रदुरालभायाम् (चिहट) ताम्रमूलाहृते, ग्रहीतायाश्च । [कारके च त्रि॰ ।

**ग्राहिन्** पु ग्रह णिनि । कपित्थे । ग्राहके मलबन्ध-

**ग्राहिफल** पु॰ ग्राहि मलबन्धक फल यस्य । कपित्थवृक्षे ।

**ग्राह्य** त्रि॰ ग्रह-ण्यत् । ग्रहीतुमुचिते ग्रहणयोग्ये,उपादेये स्वीकार्य्ये, ज्ञेये च ।

**ग्रीवा** स्त्री॰ गॄ-व नि॰ । कन्धरायाम ।

**ग्रीष्म** पु॰ ग्रस-म नि । निदाघे घर्म्मजनके ज्यैष्ठाषाढ़े तदाधारकाले ज्यैष्ठाषाढ़मासे, उष्मणि च तद्वति त्रि॰ ।

**ग्रीष्मजा** स्त्री॰ ग्रीष्मे जायते जन-ड । (लोणा आता) लवण्याम् नवमल्लिकायाञ्च ।

**ग्रीष्मपुष्पी** स्त्री॰ ग्रीष्मे पुष्प यस्याः । करुणवृक्षे ।

**ग्रीष्मभवा** स्त्री॰ ग्रीष्मे भवति भू अच् । नवमल्लिकायाम् ।

**ग्रीष्मसुन्दर** पु ७त॰ । (गिमा) शाकभेदे ।

**ग्रुच** चौर्य्ये गतौ च भ्वा॰ पर॰ सक॰ सेट् । ग्रोचति अग्रुचत् अग्रोचीत् । ग्रुचित्वा ग्रुक्त्वा ।

**ग्रैव** न ग्रीवायां भवम् अण् । ग्रीवाभरणे ।

**ग्रैवेय** न॰ ग्रीवायां भव ढञ् । ग्रीवाभूषणे ढकञ् ग्रैवेयकम प्यत्र । 'ग्रैवेयक नोज्ज्वलं'मिति माघः ।

**ग्लस** भक्षणे भ्वा॰ आत्म सक॰ सेट् । ग्लसते अग्लसिष्ट । ग्लसित्वा-ग्लस्त्वा ।

**ग्लह** आदाने वा चुरा उभ पक्षे भ्वा॰ सक॰ वेट् । ग्लाहयति ते ग्लहति अजग्लहत् त अग्लहीत् ।

**ग्लह** पु॰ ग्लह-अ । द्यूतादौ क्रते पणे, द्यूते च ।

**ग्लास्नु** त्रि॰ ग्लै स्नु । ग्लानियुक्ते ।

**ग्लुच** चौर्य्ये गतौ च भ्वा पर॰ सक सेट । ग्लोचति अग्लुचत-अग्लोचीत् । क्त्वा वेट् । [अग्लुचत-अग्लुञ्चीत् ।

**ग्लुन्च** चौर्य्ये गतौ च भ्वा पर सक॰सेट् क्त्वा वेट्। ग्लुञ्चति

**ग्लेप** दैन्ये गतौ चाले च भ्वा॰ आत्म॰ सक॰ सेट् । ग्लेपते अग्लेपिष्ट । अजिग्लेपत ।

**ग्लेव** सेवने भ्वा॰ आ सक॰सेट् । ग्लेवते अग्लेविष्ट । अजिग्लेवत

**ग्लेष** अन्वेषणे भ्वा॰ आ॰ सक॰ सेट् । ग्लेषते अग्लेषिष्ट अजिग्लेषत् । [अग्लासीत् ।

**ग्लै** क्लमे हर्षक्षये च भ्वा॰ पर अक॰ अनिट् । ग्लायति

**ग्लौ** पु॰ ग्लै-डौ । चन्द्रे, कर्पूरे च ।

# घ

घ पु० घट-ड । घण्टायां, घर्घरशब्दे च ।

घग्घ हसने भ्वा० पर० अक० सेट् । । घग्घति अघग्घीत् ।

घट चेष्टायां भ्वा० आत्म० अक० सेट् घटादि । घटते अघटिष्ट घटयति । घटा । [घटन्-त ।

घट हिंसे सक० संघाते अक० चु० उभ० सेट् । घाटयति-ते अजी

घट वृत्तौ वा चु० उभ० पक्षे भ्वा० पर० अक० सेट् । घटयति ते घटति । अजीघटत्-त अघाटीत् अघटीत् । [घण्टत्-त

घट शब्दकरणे चुरा० उभ० अक० सेट् इदित् । घण्टयति-ते अज-

घट पु० घट-अच् । कलसे, कुम्भाशब्दार्थे परिमाणभेदे च ।

घटक त्रि० घटयति सन्निविष्टतया निरूपयति घट णिच्-ण्वुल् । वाक्यलक्षणादिषु मध्यपातिनि पदार्थे, योजके च ।

घटना स्त्री० चु० घट-युच् । संहतकरणे, योजने, मेलने, करिणां समूहे च । [टङ्कारे च ।

घटा स्त्री० घट-अ । घटने, सभायां, समूहे, गजसंहतौ, मेघा-

घटिका स्त्री० 'गुर्व्वक्षराणां षष्टिर्गदितं च यस्याः पलं पलानां घटिका किलैके'ति ज्योतिर्विदाभरणोक्ते षष्टिपलात्मके दण्डरूपे काले । घटयति विहितकार्यकरणाय घट-णिच्-ण्वुल् । दण्डद्वयरूपे मुहूर्त्तात्मके काले । अल्पो घट० कन् । अल्पे घटे । ह्रस्वार्थे कन् । नितम्बे न० ।

घटी स्त्री० घटेन कालमानज्ञापकेन सच्छिद्रेण कुम्भेन ज्ञाप्या । दण्डात्मके काले । अल्पार्थे ङीप् । क्षुद्रे घटे ।

घटीयन्त्र न० ६त० । कूपादितो जलोद्धारणयन्त्रे अरघट्टे, उद्घाटने, स्त्रणीरोगभेदे च । [भेदे ।

घटोत्कच पु० हिडिम्बायां राक्षस्यां भीमसेनाज्जाते राक्षस-

घट्ट चालने भ्वा० आत्म० सक० सेट् । घट्टते अघट्टिष्ट ।

घट्ट चालने चुरा० उभ० सक० सेट् । घट्टयति-ते अजघट्टत्-त

घट्ट पु० घट्यतेऽत्र घञ् । स्नानायावतरणस्थाने (घाट) शुल्कग्रहणस्थाने च । भावे घञ् । चालने । [जातिभेदे ।

घट्टजीविन् पु० घट्टं जीवति जीव-णिनि । (पाटुनि) प्रसिद्धे

घट्टित त्रि० घट्ट-क्त । निर्म्मिते, चालिते, चित्रपटादेरङ्कनार्थम् अन्नचूर्णमर्द्दनेन लिप्ते वसनादौ (कलप दिए घोटा) ।

घण दीप्तौ तना० उभ० अक० सेट् । घणोति घणुते । अघाणीत्-अघणीत् अघणिष्ट । घणित्वा-घण्ट्वा ।

घण्टा स्त्री० हन-ट तस्य घेत्वम् नि० घ० । कांस्यादिनिर्मिते वाद्यभेदे । अतिबलायां, नागबलायां, घण्टापाटलौ च ।

घण्टाकर्ण पु० घण्टेव कर्णावस्य । शिवानुचरभेदे (घेंटु) ।

घण्टापथ घण्टोपलक्षितः, घण्टावतां हस्त्यादीनां गमनयोग्यो वा पन्थाः टच् । 'दशधन्वन्तरो राजमार्गो घण्टापथः स्मृत' इत्युक्तपरिमाणे ग्रामप्रधानवर्त्मनि ।

घण्टापाटलि पु० हन्यते वा हन कर्म्मणि ट टस्य घेत्वम् चतं नि०, पट गतौ घञ् पाटम् लाति ला-कि कर्म० । (घण्टाकरनि) वृक्षभेदे ।

घण्टारवा स्त्री० घण्टेवारौति आ-रु-अच् । (शनशना) क्षुपभेदे यस्य पक्वं फलं शब्दं करोति ।

घण्टाली स्त्री० घण्टा तदाकारमलति अल-अण् ङीप् । कोषातकी । ६त० घण्टाश्रेणौ ।

घण्टाबीज पु० घण्टेव बीजमस्य । जयपाले वृक्षे ।

घण्टिका स्त्री० क्षुद्रा घण्टा स्वल्पार्थे कन् । क्षुद्रघण्टायां तदाकारत्वात् आलजिव, तालुस्थजिह्वायाम् । [जित

घण्टेश्वर पु० मङ्गलायां नागस्य मेधानाम्न्यां पत्न्यां जाते

घन पु० हन-अप् घनादेश । मेघे, मुस्तायां, ओघे, दार्ढ्ये, काठिन्ये, विस्तारे, देहे, लौहमुद्गरे कफे, अभ्रके, 'घननिपातश्च घनः प्रदिष्ट' इत्युक्ते सजातीयाङ्कत्रयस्यान्योन्यगुणने च यथा त्रयाणां घन २७ चतुर्णां ६४ । निविडे, सान्द्रे, दृढे, दृढे च त्रि० । कांस्यतालादिवाद्ये मध्यमनृत्ये लौहे च न० ।

घनकफ पु० घनस्य मेघस्य कफ इव । मेघोपले करके ।

घनच्छद पु० घनो निविडश्छदो यस्य । शिग्रौ ।

घनत्वच् पु० घना निविडा त्वक् यस्य । लोध्रे ।

घनद्रुम पु० कर्म० । विकङ्कतवृक्षे ।

घननाभि पु० ६त० । धूमे तस्य मेघयोनित्वात् तन्नाभित्वं धूमज्योतिः सलिलमरुतामिति मेघदूते तदुक्तोक्तेः । [विशालम्

घनपत्र पु० घनानि पत्राण्यस्य । पुनर्नवायाम् । [स्थानतया च

घनपदवी स्त्री० ६त० । आकाशे तस्य मेघाधारतया तद्व्यवहार-

घनरस पु० घनस्य रसो निस्यन्दः । जले । कर्म० । सान्द्रनिर्यासादौ । कर्पूरे पीलुपर्ण्याम् पु० । ब० निविडरसे त्रि० ।

घनवल्लिका स्त्री० घना निविडा वल्ली । अमृतस्रवालतायाम्

घनवल्ली स्त्री० घनस्य मेघस्य वल्लीव । विद्युति ।

घनसार पु० घनस्य सार इव शीतलत्वात् । कर्पूरे, दक्षिणावर्ते पारदे, जले च ।

घनस्कन्ध पु० घनः स्कन्धो यस्य । कोशाम्रवृक्षे ।

घना स्त्री० रुद्रजटायां माषपर्ण्याम् । [राजघ्ने हींति नैषधम्

घनागम पु० घनानां मेघानामागमो यत्र । वर्षाकाले 'घनागमे

घनाघन पु० हन-अच् नि० । इन्द्रे वर्षुकमेघे मत्ते-घातुके-गजे, पक्के, अन्योन्यघट्टने च । निरन्तरघातुके त्रि० ।

घनात्यय पु० घनानामत्ययो यत्र काले । शरत्काले ।

**घृतपूर** पु० घृतेन पूर्य्यते पूर-घञ् । पक्वान्नभेदे (घिओड) ।
**घृताची** स्त्री० अप्सरोभेदे ।
**घृष** संघर्षे सक० हर्षे अक०भ्वा०आत्म० सेट् । घर्षते अघर्षिष्ट
**घृष्टि** पु० घृष-क्तिच् । वराहे । क्तिन् । घर्षणे,स्पर्द्धायां,विष्णु-
क्रान्तायां,वाराह्याञ्च स्त्री० ।
**घृष्टिला** स्त्री०घृष्टिं लाति ला-क । पृश्निपर्ण्याम् ।(चाकुलिया)
**घोट**(क) पु० घुट-अच् ण्वुल् वा । अश्वे । [लोके प्रसिद्धः ।
**घोटकारि** पु० ६त० । महिषे तस्य महिषेण सह वैरिभावस्य
**घोणा** स्त्री० घुण-अच् । अश्वनासिकायां, नासामात्रे च ।
**घोणिन्** पु० घोणा नासाऽस्त्यस्य व्रीह्यादित्वात् इनि ।
वराहे तस्य दीर्घनासत्वात् तथात्वम् ।
**घोण्टा** स्त्री० घुण-ट तस्य नेत्त्वम् ।(सेयाकुल) बदरीभेदे ।
**घोर** पु० घुर-अच् । शिवे, कृपिलेदे, सांख्योक्तेषु रजःप्रधानेषु
आकाशादिविशेषधर्म्मेषु । विषे न० । दारुणे, भयानके,
दुर्गन्धे च त्रि० ।
**घोररासन** पु० घोरं रासनं शब्दोऽस्य । शृगाले ।
**घोरा** स्त्री० घुर-अच् । देवताडीलतायां, भयानकायां रात्रौ,
सांख्योक्तायां राजस्यां मनोवृत्तौ,ज्योतिषोक्ते ‘रवावुग्रभे
संक्रमे भास्करस्य भवेद्घोर’नाम्नीत्युक्ते रविसंक्रान्तिभेदे च।
**घोल** पु०न० घुड-कर्म्मणि घञ् डस्य ल । तक्रे मथितदध्नि ।
**घोष** पु० घोषन्ति गावोऽत्र घुष-आधारे घञ्। आभीरपल्लीग्रामे
भावे घञ्। ध्वनौ,अस्फुटनादे च। कर्त्तरि अच्। अपामार्गे,
व्याकरणोक्ते वर्णविशेषोत्पत्तौ वाह्यप्रयत्नभेदे च। कांस्ये न०।
**घोषणा** स्त्री०घुष-णिच्-युच्। लोके ख्यापनार्थमुच्चै शब्दकरणे।
**घोषा** स्त्री० घुष्यते भ्रमरैरियं कर्म्मणि घञ् । शतपुष्पायां,
मधुरिकायां, कर्कटशृङ्ग्यां, कोषातक्याञ्च ।
**घ्रा** गन्धग्रहणे भ्वा०पर०अक०ग्रहणमात्रे सक०अनिट्। जिघ्रति
अघ्रात्-अघ्रासीत् । घ्राणः-घ्रातः । [आघ्राते त्रि०
**घ्राण** न० घ्रायतेऽनेन घ्रा-ल्युट् । नासिकायाम् । घ्रा-क्त ।
**घ्राणतर्पण** पु०घ्राणं नासिका तर्पयति तृप्-णिच् ल्यु। सुगन्धौ

## ङ

**ङ** पु० ङु-ड । विषये, विषयस्पृहायाम् ।
**ङु** ध्वनौ भ्वा० आत्म० अक० अनिट् । ङवते अङविष्ट ।

## च

**च** अव्य० चि-ड । अन्वाचये (एकस्य प्राधान्येनेतरस्यानुषङ्गि-
णोक्तौ) यथा ग्रामं गच्छ अजाञ्चानय अत्र ग्रामगमन-
नैव मुख्यमजानयनन्त्वानुषङ्गिकम् । समुच्चये (परस्परा-
पेक्षारहितस्यानेकस्य एकस्मिन् कर्म्मादौ अन्वये) यथा
पिता पुत्रश्च ग्रामं गच्छति । अत्रैकस्मिन् गमने कर्म्मणि
पितुरिव पुत्रस्यापि अन्वयः । इतरेतरयोगे (परस्पर
सापेक्षाणामेकस्मिन् कर्म्मादावन्वये) तत्र च द्वन्द्वसमास एव
यथा पितापुत्रौ गच्छतः । अत्रोभयोरपि एकस्मिन् प्रत्येक-
रूपेण गमने परस्परसापेक्षतदैवाऽन्वय अन्वाचयादयमेवास्य
विशेषः । सापेक्षता च स्वघटितनामोत्तरवर्त्ति विभक्त्यन्व-
यित्वेन । समाहारे (मिलितानामन्वये) यथा हस्तपादं
वादयति अत्र हस्तादीनां मिलितानामेवान्वय इतरेतरयोगे
तु प्रत्येकस्यान्वयः अयमा तद्वर्त्ति पदसमुदयोपस्थाप्यतत्तत्
पदार्थसंहतिरेव तत्र प्रधानं संहतेश्चैकत्वात् तत्रैकवचनता।
व्यासवाक्ये च चकारेणोभयत्र इतरेतरयोगस्य समाहार-
रूपसंहतेश्च प्राधान्यं द्योत्यते। पक्षान्तरे,अवधारणे,हेतौ,
तुल्यत्वे, विनियोगे, पादपूरणे च । चण्डेशे, चन्द्रे,
कच्छपे, चौरे च पु० । दुर्जने निर्बीजे च त्रि० ।
**चक** भ्रान्तौ सौ० पर०अक०सेट् इदित् । चङ्कति अचङ्कीत्।
**चक** प्रतिघाते सक० तृप्तौ अक० भ्वा० उभ० सेट् घटा० ।
चकति-ते अचकीत्-अचाकीत् अचकिष्ट । चकयति ।
**चकास** दीप्तौ अदा० जक्षा० पर० अक० सेट् । चकास्ति
अचकासीत् । अचचकासत् ।
**चकित** न० चक-भावे क्त । भये, । कर्त्तरि क्त । भीते त्रि० ।
षोडशाक्षरपादके छन्दोभेदे स्त्री० ।
**चकोर** पु० चक-तृप्तौ ओरन् । स्वनामख्याते-पक्षिभेदे चकोर
पारणकरीति मुरारिः ।
**चक्क** आर्त्तौ चुरा० उभ० सक० सेट्। चक्कयति-ते अचचक्कत्-त
**चक्र** पु० क्रियतेऽनेन कृ-घञर्थे क नि० द्वित्वम् । चक्रवाके
पक्षिणि, (चका) रथाङ्गे,(चाका) सैन्ये, समुदाये,राष्ट्रे,दम्भ
भेदे, कुम्भकारोपकरणे, ‘कलसे निजहेतुदण्डजः’ किमु-
चक्रभ्रमिकारिते’ति नैषधम् अस्त्रभेदे। पुटभेदे, जलावर्त्ते,
ग्रामजाले, तगरपुष्पे, व्यूहभेदे, तन्त्रोक्तेषु मूलाधारादिषु
स्थितेषु षट्सु पद्मेषु, सर्व्वतोभद्रादिषु देवार्च्चनयन्त्रेषु ‘श्री-
चक्रमेतदुदितमि’ति तन्त्रम् । मन्त्रदीक्षोपयोगिषु अकडमा
दिषु, वीरादिचक्रेषु, ‘प्रवृत्ते भैरवीचक्रे सर्व्वे वर्णा द्विजो-
त्तमाः’ इति तन्त्रम् अलङ्कारोक्ते काव्यबन्धविशेषे च न० ।
अर्द्धर्चादित्वात् द्विलिङ्गत्वेऽपि लक्ष्यभेदेनवास्य लिङ्गनियमः
**चक्रक** पु० चक्रमिव कायति कै-क । स्वापेक्षापेक्ष्यपेक्षित्वनिब-
न्धनेऽनिष्टप्रसङ्गरूपे तर्कभेदे ।

चक्रकारक न० नखाकृतित्वेन चक्रवत् वेष्टनं करोति कृ-ण्वुल्
    6त०। व्याघ्रनखाख्ये गन्धद्रव्ये।
चक्रकुल्या स्त्री० चक्रस्य तद्वद्वेष्टनाकारस्य कुल्येवाधारः।
    (चाकुलिया) पृश्निपर्ण्याम्। [चक्रमर्दे। (दादमर्दन)
चक्रगज पु० चक्रे चक्राकारे दद्रुरोगे गजइव मर्दकत्वात्।
चक्रगुच्छ पु० चक्रमिव वेष्टनाकारो गुच्छः स्तवको यस्य।
    अशोकवृक्षे। [विष्णौ, सर्पे च।
चक्रधर पु० चक्रमस्त्रभेदं फणमण्डलं वा धारयति धृ-अच्।
चक्रधारा स्त्री० चक्रस्य धाराग्रम्। चक्रापि यदग्रेऽस्य तीक्ष्णता
    वा चास्ये एवैतस्यमेव धारा। [नखाख्ये गन्धद्रव्ये।
चक्रनख पु० चक्राकारो नखइव शुक्लादि० न णत्वम्। व्याघ्र-
चक्रपद्माट पु० पद्म पद्मद्वयमटति अण् पद्माटोगजवच्चक्रे
    चक्राकारे दद्रुरोगे पद्माट गजइव मर्दकत्वात्। चक्रमर्द
    वृक्षे (दादमर्दन) [पृश्निपर्ण्याम्
चक्रपर्णी स्त्री० चक्रमिव पर्णमस्या ङीप्। (चाकुलिया)
चक्रपाणि पु० चक्रं प्रहरणं पाणौ यस्य। विष्णौ।
चक्रपाद पु० चक्रं पाद इव गतिसाधनत्वात् यस्य। रथे
    चक्रमिव पादोऽस्य। हस्तिनि।
चक्रपुष्करिणी स्त्री० हरिचक्रेण निखाता पुष्करिणी।
    काशीतीर्थस्थे मणिकर्णिकाख्ये चक्रतीर्थे। [योग।
चक्रबन्धु पु० चक्रयो मेलकत्वात् बन्धुरिव। सूर्ये दिवाहि तयो
चक्रभेदिनी स्त्री० चक्रौ भिनत्ति परस्परं वियोजयति भिद
    णिनि। रात्रौ तत्र हि तयोर्वियोग लोकप्रसिद्ध।
चक्रभ्रम पु० चक्रमिव भ्रमति अच्। कुन्दाख्ये शिल्पिनां यन्त्रभेदे
चक्रमर्द पु० चक्रं चक्राकारं दद्रुरोगं मृद्नाति मृद-अण्।
    (दादमर्दन) क्षुपभेदे। स्वार्थे कन् चक्रमर्दकोऽप्यत्र।
चक्रला स्त्री० चक्रं रोगभेदं लाति ला क। उच्चटायाम् तृणभेदे
चक्रवर्त्तिन् पु० चक्रे भूमण्डले, वर्त्तितुं चक्रं सैन्यचक्रं वा
    सर्वभूमौ वर्त्तयितुं शीलमस्य वृत वृत णिच् वा णिनि।
    मण्डलस्थनृपतिरधीश्वरे, वास्तुकशाके च। चक्रवत् वर्त्तिनि
    त्रि०। जतुकायां, जटामांस्याम् अलक्तके च स्त्री० ङीप्।
चक्रवाक पु० चक्रशब्देन उच्यते वच परिभाषणे कर्म्मणि
    घञ्। नामाख्यात खगे। [पर्व्वते। मण्डले न०
चक्रवाड(ल) पु० चक्रमिव वाडते वेष्टयति अच्। लोकालोक
चक्रवृद्धि स्त्री० वृद्धेरपि पुनर्वृद्धयेकवृद्धिश्चक्राकृतेति वक्तुर्वृद्धि
    वृद्धिभेदे (सुदेर सुद)।
चक्रव्यूह पु० चक्रमिव व्यूहः सैन्यस्थितिरचनाविशेषः।
    दुर्गाय मण्डलाकारे सैन्यस्थापने।

चक्रा स्त्री० चक्र रुपौ रक्। नागरमुस्तायां, कर्कटशृङ्ग्याञ्च।
चक्राङ्ग पु० चक्रमाकृतिमदङ्गमिवाङ्गं यस्य। हंसे। चक्रमङ्ग-
    मस्य। रथे। [मोचिकायां, मञ्जिष्ठायाञ्च
चक्राङ्गी स्त्री० चक्रं चिह्नकरमङ्गमस्याः। कटुरोहिण्यां, हिल-
चक्रिन् पु० चक्र+अस्त्यर्थे इनि। विष्णौ, सर्पे, चक्रवाके,
    कुम्भकारे, सूचके तैलिकभेदे चक्रवर्त्तिनि, चक्रमर्द व्याल
    नखे, खरे, ग्रामजालिके च। चक्रवति त्रि०।
चक्रीवत् पु० चक्रवत् भ्रमणमस्यास्ति मतुप् मस्य व नि० अत
    ईत्वम्। गर्द्दभे, नृपभेदे च।
चक्ष कथने त्यागे च अदा० आत्म० सक० सेट्। चष्टे। अचष्ट।
    आख्यात भाश्यमते अचख्यासीत् अचख्यास्त। त्यागे तु
    समर्थविषय। [(चाकना)।
चषण न० चष-ल्युट् न ख्यादेश। मद्यपानरोचके अवदंशे
चक्षुःश्रवस् पु० चक्षुषा शृणोति श्रु-असुन् चक्षुरेव श्रव
    कर्णौ यस्य वा। सर्पे।
चक्षुष्य पु० चक्षुषे हितं यत्। केतके पुण्डरीकवृक्षे, शोभाञ्जने
    रसाञ्जने च। सौवीराञ्जने स्थलपद्मे, खर्परीतुत्थे च न०।
    प्रियदर्शने, चक्षुर्हिते च त्रि०। कुलत्थिकायां सुभगायाम्,
    अजशृङ्ग्याम्, वनकुलत्थिकायाञ्च स्त्री०।
चक्षुस् न० चक्ष-उसि णित् तेन न ख्यादेश। लोचने।
चघ घातने स्वा० पर० सक० सेट्। चघ्नोति अचघीत् अचाघीत्
चङ्कुर पु० यौ० चकि उरच्। रथे, वृक्षे च। यानमात्रे न०।
चङ्क्रमण न० क्रम-यङ्-ल्युट्। पुन पुनर्भ्रमणे, अतिशयभ्रमणे
    इतस्ततो भ्रमणे कुटिलभ्रमणे च।
चञ्चरी स्त्री चन्च गतौ ढञ् त चाति ला-क रस्य ल चञ्च+
    अस्त्यर्थे र ना गौरा० ङीप्। भ्रमर्य्यां तिन्तिडीवृक्षे च।
चञ्चरीक पु० चर-ईकन् पर्करीकादित्वात् नि०। भ्रमरे।
चञ्चल पु० चन्च अलच् चञ्च गति वा लाति ला-क वा।
    कामुके, वायौ च। चपले अस्थिरे च त्रि०। विद्युति
    लक्ष्म्याञ्च स्त्री०।
चञ्चा स्त्री० चन्च अच्। नलनिर्म्मिते कटभेदे (चाच) चञ्चेवेति
    इवार्थे कन् तुच्छ मनुष्ये इति तस्य लुप्। तृणमयपुरुषे।
चञ्चु पु० चन्च उ। एरण्डवृक्षे, रक्तैरण्डे, नाडीचशाके च।
    पक्षिणामोष्ठे (ठोट)। स्त्री वा ऊङ् प्रत्यये। चञ्चू।
चञ्चुसूचि पु० स्त्री० चञ्चुः सूचिरिव यस्य। कारण्डवपक्षिणि
    स्त्रीत्वपक्षे वा ङीप्। वा कप् कन्येव।
चट भेदे भ्वा० पर० सक० सेट्। चटति अचटीत् अचाटीत्।
चट वधे भेदे च चु० उभ० सक० सेट्। चाटयति ते अचीचटत् त

चटक पु० चटति भिनत्ति धान्यादिकम् क्वुन् । कलविङ्के (चड़ुइ) स्वार्थे कन् चटककोऽप्यत्र । जातौ स्त्रियामजादित्वात् टाप् न तु ङीप् । कन्पक्षे चटकिका ।

चटकाशिरस् पु० चटकायाः शिर इव । पिप्पलीमूले ।

चटु पु० चट-कु । प्रियवाक्ये, व्रतिनामासनभेदे, उदरे च । क्लीवत्वमपीत्यन्ये ।

चटुल त्रि० चट-उलच् । चञ्चले, चपले । विद्युति स्त्री० ।

चड कोपे भ्वा०आत्म०अक०सेट् इदित् । चण्डते अचण्डिष्ट ।

चड कोपे चुरा० उभ०अक० सेट् इदित् । चण्डयति ते अचचण्डत् त । [चाणयति ।

चण शब्दे भ्वा० पर०सक० सेट् । चणति अचाणीत्-अचणीत्

चण गतौ हिंसे च भ्वा०पर०सक० सेट् वा घटा० । चणति अचाणीत्-अचणीत् । चणयति-चाणयति ।

चण दाने भ्वा० पर० अक० सेट् घटा० । चणति अचणीत्-अचाणीत् । चणयति । [यस्य गोत्रापत्यं चाणक्यः ।

चणक पु० चण-दाने क्वुन् । शस्यभेदे (बुट)(छोला) मुनिभेदे च

चण्ड पु० चडि-कोपे-अच् । तिन्तिडीवृक्षे, यमदूते, दैत्यभेदे च । तीक्ष्णे न० । तीक्ष्णतायति अतिकोपने च त्रि० । स्त्रियां ङीप् । चण्डी । 'मल्लिकामुकुले चण्डी लुब्धः ।

चण्डा पु० चडि-अच् टाप् । चोरनामगन्धद्रव्ये, शङ्खपुष्प्याम्, लिङ्गिनीलतायाम्, कपिकच्छ्वाम्, आखुपर्ण्याम्, श्वेतदूर्वायाम्, मङ्गावतीनद्याञ्च ।

चण्डांशु पु० चण्डास्तीव्रा अंशवो यस्य । सूर्ये ।

चण्डात पु० चण्डमतति अत-अच् । करवीरे ।

चण्डातक पु०न० चण्डा कोपनामतति अत-ण्वुल् । वरस्त्रीणा मर्द्धोरुपर्यन्ते वस्त्रे । [ब्राह्मण्याद्युत्पादिते सङ्कीर्णवर्णे

चण्डाल पु० चडि-आलच् । स्वनामख्याते जातिभेदे, शूद्रेण

चण्डिमन् पु० चण्डस्य भावः इमनिच् । उग्रत्वे ।

चण्डी स्त्री० चडि-अच् वह्वादित्वात् ङीष् । कोपवत्यां, दुर्गायां तन्माहात्म्ययुक्तत्वात् सप्तशतीनामके स्तोत्रे च 'चण्ड्याः शतावृत्तिपाठादिति स्मृतिः ।

चण्डीकुसुम पु० चण्डीप्रियं कुसुमं यस्य । रक्तकरवीरवृक्षे ।

चत याचने भ्वा०उ०द्वि०सेट् । चतति-ते अचतीत् अचतिष्ट

चतुःपत्री स्त्री० चत्वारि चत्वारि पत्राण्यस्याः । क्षुद्रपाषाणभेदे

चतुःपर्णी स्त्री० चत्वारिचत्वारि प्रतिपर्वं पर्णान्यस्याः । क्षुद्राम्लिकायाम् (आमरुल्)

चतुःफला स्त्री० चतुर्धा विभक्तं फलमस्याः । नागबलायाम्

चतुःशाला न० चतस्रः अन्योन्याभिमुख्यः शाला यत्र । अन्योन्याभिमुखशालचतुष्कयुतभवने, 'एकग्रामे चतुःशाले, दुर्भिक्षे इति ज्योतिषम् ।

चतुःसम न० चत्वारि समानि यत्र । 'लवङ्गं जीरकं पथ्या यमानी च चतुःसममित्युक्ते लवङ्गादितुल्यचतुर्द्रव्यात्मके औषधे, 'कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य तु । कुङ्कुमस्य त्रयश्चैव शशिनश्च चतुःसम मित्युक्तेषु मिलितेषु तत्तत्परिमाणान्वितकस्तूरीचन्दनकुङ्कुमकर्पूरेषु च । वा सत्वे चतुस्सममप्युभयत्र ।

चतुर् त्रि० ब०व० चत-उरन् । चतुःसंख्यायाम्, चतुःसंख्यान्विते च । स्त्रियां चतस्रः । [नेत्रगोचरे च त्रि० ।

चतुर पु० चत-उरच् । हस्तिशालायाम् । कार्य्यकुशले, दक्षे,

चतुरङ्ग न० चत्वारि अङ्गानि यस्य । हस्त्यश्वरथपदातिरूपाङ्गचतुष्टययुते सैन्ये । रक्तहरितपीतश्यामलरूपाणि चत्वारि बलरूपाणि क्रीडासाधनान्यङ्गान्यस्य । (चतुराजी) क्रीड़ाभेदे

चतुरङ्गुला स्त्री० चतस्रोऽङ्गुल्यः प्रमाणमस्य पर्व्वणः अच्-समा० । आरग्वधे (सोन्दाल) ।

चतुरस्र त्रि० चतस्रः अस्रयः कोणाः यस्य सुप्रातेत्यादि नि० । चतुष्कोणे, ज्योतिषोक्तयोः लग्नाच्चतुर्थाष्टमस्थानयोश्च । दन्त्यगर्भं चतुरस्रमित्यन्ये । [मुखादयोऽप्यत्र ।

चतुरानन पु० चत्वारि आननानि यस्य । ब्रह्मणि एवं चतु

चतुर्थ त्रि० चतुर्णां पूरणः । येन चतुःसंख्या पूर्य्यते तादृशे तुरीये । [हरः सुताः इति स्मृतिः ।

चतुर्थांश पु० चतुर्थोंऽशः । चतुर्भागैकभागे पादे, 'चतुर्थांश-

चतुर्थी स्त्री० चन्द्रस्य चतुर्थकलायाः प्रवेशनिर्गमनरूपक्रियात्मकतिथौ, व्याकरणोक्तेषु ङे भ्याम् भ्यस् इति प्रत्ययेषु च

चतुर्दन्त पु० चत्वारो दन्ता यस्य । ऐरावते इन्द्रगजे ।

चतुर्दशन् त्रि० ब०व० । चतुरधिका दश । संख्याभेदे तत्संख्याते पदार्थे च । तत्संख्यापूरणे तु डट् । चतुर्दशः स्त्रियां चतुर्दशी । चन्द्रस्य चतुर्दशकलाक्रियायां चतुर्दशी ।

चतुर्दोल न० चतुर्भि र्वाह्यते यत्तु चतुर्दोलं तदुच्यते इत्युक्ते द्विपदैश्चतुर्भिर्वाह्ये यानभेदे (चौदोल) ।

चतुर्धा अव्य० चतुःप्रकारम् धाच् । चतु प्रकारे ।

चतुर्भद्र न० चत्वारि भद्राणि धर्मार्थकाममोक्षरूपाणि कल्याणानि यन्न्यूनानतिरेकेण समाहृतानि । मिलिते धर्मादिचतुष्टये ।

चतुर्भुज पु० चत्वारो भुजा हस्ता यस्य । नारायणे ।

चतुर्युग न० चतुर्णां युगानां समाहारः पात्रादित्वान्न ङीप् । सत्यत्रेताद्वापरकलिरूपयुगचतुष्टये 'विज्ञेयं तच्चतुर्युगमिति मनुः

चतुर्वर्ग पु० चतुर्णां धर्मार्थकाममोक्षाणां वर्गः समुदायः ।

धर्मार्थकाममोक्षेषु चतुर्षु पुरुषार्थेषु ।

**चतुर्विंशति** स्त्री० चतुरधिका विंशतिः । (चब्बिश) चतुर्युत-विंशतिसंख्यायाम्, तत्संख्याते च ।

**चतुर्विद्य** पु० चतस्रो विद्या वेदज्ञानरूपा यस्य । चतुर्वेद वेत्तरि । सत्रादयोपि द्विपदवृद्धिः । चातुर्वैद्योऽप्यत्र ।

**चतुर्विधशरीर** न० कर्म० । जरायुजाण्डजस्वेदजोद्भिज्जेषु शरीरेषु । चतुर्विधशरीराणि धृत्वा मुक्त्वा सहस्रश इति

**चतुर्व्यूह** पु० सृष्ट्यादिकार्यार्थं चत्वारो व्यूहा विभागा यस्य । वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धात्मके विष्णौ । [कन् । चतुर्व

**चतुष्क** न०चतुर्भिः स्तम्भैः कायति कै-क । चतुःस्तम्भयुक्तमण्डपे ।

**चतुष्टय** त्रि० चत्वारोऽवयवा विधा यस्य तयप् । चतुर्विभाग-वति चतुष्के च । स्त्रियां ङीप् 'प्रशस्तिराशीरुक्ताना चरितार्थां चतुष्टयी'ति कुमार । [ङीप् । (छत्तुभी) शाकभेदे ।

**चतुष्पत्री** स्त्री० चत्वारि चत्वारि प्रत्येकपत्रे पत्राण्यस्याः

**चतुष्पथ** पु चत्वारः पन्थानः ब्रह्मचर्यादय आश्रमा यस्य अच् समा० । ब्राह्मणे । चतुर्णां पथां समाहारः अच् । (चौमाथा) चतुर्मुखे पथि ।

**चतुष्पद** पु० चत्वारि पदानि चरणा यस्य । गवादौ पशौ । ज्योतिषोक्ते करणभेदे, मेषवृषसिंहधनुरन्त्यार्द्धमकरपूर्वार्द्धरूपराशिभेदे च । पादयन्त्रस्य पाद्याभे चतुष्पादप्यत्र ।

**चतुष्पदी** स्त्री० चत्वारः पादा यस्याः पादस्य पाद्भावे ङीपि पद्भावः । चतुश्चरणात्मके पद्ये । [इत्] कुद्रालिकायाम्

**चतुष्पर्णी** स्त्री चत्वारि चत्वारि प्रतिपर्णं पर्णान्यस्याः । (आम-

**चतुस्त्रिंशत्** स्त्री चतुरधिका त्रिंशत् । चतुरधिकायां त्रिंशति (चौतिश) तत्संख्याते च चतुश्चत्वारिंशदादयोऽप्येवम् ।

**चत्वर** न० चत-ष्वरच् । स्थण्डिले, यागार्थं संस्कृतभूमौ अङ्गने च (उठान) । [(चब्बिश) संख्याभेदे तत्संख्याते च ।

**चत्वारिंशत्** स्त्री चत्वारि दशतः परिमाणमस्य नि ।

**चत्वाल** पु० चत-वालञ् । होमकुण्डे, दर्भे च ।

**चद** याचने भ्वा० उभ० द्विक० सेट् । चदति ते अचदीत् ।

**चद** आह्लादे दीप्तौ च भ्वा० पर० अक० सेट् इदित् । चन्दति अचन्दीत् ।

**चन** हिंसायां शब्दार्थतिदाने च भ्वा० पर० सक० सेट् घटा० चनति । अचानीत्-अचनीत् । चनयति ।

**चन** शब्दे अदा० पर० अक० सेट् । चनति । अचानीत् अच नीत् । चानयति । [समर्थे च ।

**चन** अव्य० चन शब्दे अच् । असाकल्ये यथा कियन ।

**चन्** गतौ भ्वा० पर० सक० सेट् । चञ्चति अचञ्चीत चञ्च

कुजभ्रमिते'ति देवी० । [वानरभेदे ओषधिभेदे च ।

**चन्दन** चदि णिच् ल्यु । मलयजाते गन्धसारे रक्तचन्दने,

**चन्दनधेनु** स्त्री० चन्दनेनाङ्किता धेनुः । 'पतिपुत्रवती नारी म्रियते भर्तुरग्रतः । चन्दनेनाङ्किता धेनुस्तस्याः स्वर्गाय दीयते' इति वृद्धयुक्तायां चन्दनाङ्कितायां देयधेन्वाम् ।

**चन्दनपुष्प** न० चन्दनस्येव पुष्पमस्य । लवङ्गे ।

**चन्द्र** पु०चदि रक् । इन्दौ, कर्णशिरोमणनले, कर्पूरे काम्पिल्ले हीरके, जले, काम्ये, सुन्दरे स्वर्णवर्णे मयूरचन्द्रके, गोपद्मनामकवृक्षे च । आह्लादकद्रव्ये त्रि० स्वर्णे, शुक्ले च न

**चन्द्रक** पु० चन्द्र इव कायति कै-क इवार्थे कन् वा । मयूरस्य पक्षस्थिते चन्द्राकृतौ पदार्थे, मत्स्यभेदे (चादा) शिग्रु-बीजे, शुभ्रमरिचे च ।

**चन्द्रकला** स्त्री ६त । चन्द्रस्य षोडशे भागे दुन्दुभिवाद्यभेदे च

**चन्द्रकान्त** पु चन्द्रः कान्तोऽभीष्टो यस्य । स्वनामख्याते मणिभेदे तद्दर्शने हि तस्य जलस्रावात् तत्कान्तत्वम् । कैरवे, श्रीखण्डचन्दने च न० । रात्रौ ज्योत्स्नायां, चन्द्रशोभायां,चन्द्रपत्न्यां च स्त्री ।

**चन्द्रकान्ति** न चन्द्रस्येव कान्तिरस्य शुभ्रत्वात् । रजते रूप्ये ६त० चन्द्रस्य दीप्तौ । [पदद्वीर्घे । मयूरे ।

**चन्द्रकारत्** पु० चन्द्रक+अस्त्यर्थे मतुप् मस्य वः संज्ञायां मूर्द्ध

**चन्द्रकिन्** पु चन्द्रक+अस्त्यर्थे इनि । मयूरे ।

**चन्द्रकूट** पु० कामरूपस्थे पर्वतभेदे ।

**चन्द्रगुप्त** पु० मगधनन्दस्य मुराख्यायां दास्यां जाते चाणक्येन योगानन्दं वधित्वा तत्राज्याभिषिक्ते राजभेदे ।

**चन्द्रपुष्पी** स्त्री०चन्द्र इव शुभ्रं पुष्पमस्याः । श्वेतकण्टकार्याम्

**चन्द्रबाला** स्त्री० चन्द्रस्य कर्पूरस्य बालेव तुल्यगन्धित्वात् । स्थूलैलायाम् । अल्पान्तकमध्य इत्यन्ये ।

**चन्द्रभागा** स्त्री० काश्मीरदेशस्थे नदीभेदे ।

**चन्द्रमण्डल** न० ६त० । चन्द्रस्य मण्डलाकारे बिम्बे ।

**चन्द्रमस्** पु० चन्द्रमाह्लादं मिमीतेमि असिप्रत्ययः चन्द्रं कर्पूरं माति तुलयति मा-असि वा । चन्द्रे ।

**चन्द्रमौलि** पु चन्द्रो मौलौ यस्य । चन्द्रशेखरे शिवे ।

**चन्द्रवल्लरी** स्त्री०६त । सोमलतायाम् । [माधवीलतायाम

**चन्द्रवल्ली** स्त्री० चन्द्र इव वल्ली सुधाह्लादमधुस्रावित्वात् ।

**चन्द्रव्रत** न० चन्द्रस्य चन्द्रलोकप्राप्तये व्रतम् नियम । चा-न्द्रायणरूपके व्रते ।

**चन्द्रशाला** स्त्री० चन्द्रः शालेवाधारो यस्याः । ज्योत्स्नायाम् । चन्द्र इवाह्लादिका शाला । प्रासादोपरिस्थे गृहे (चिलेघर)

स्वार्थे कन् तत्रैव । [देशस्थे पर्व्वतभेदे च।

**चन्द्रशेखर** पु० चन्द्रः शेखरं शिरोभूषणं यस्य । शिवे पूर्व्व-

**चन्द्रसम्भव** पु० सम्भवत्यस्मात् सम्भवः चन्द्रः सम्भवो यस्य । बुधे एवं सोमसुतादयोऽप्यत्र । नर्म्मदायां, स्थूलैलायाञ्च स्त्री० ।

**चन्द्रहास** पु० चन्द्र इव हासः प्रभाऽस्य चन्द्रं हसति वा सितत्वात् अण् वा । खड्गे । रौप्ये न० गुडूच्यां स्त्री० ।

**चन्द्रा** स्त्री० चदि-रक् । एलायां, चन्द्रातपे च (चान्दोया) ।

**चन्द्रातप** पु० चन्द्रस्य आतो गमनं ततः माति मा-क । (चादोया) विताने चन्द्रस्य आतप इव किरणः । ज्योत्स्नायाम् । [तारापीडसुते न्टपभेदे च ।

**चन्द्रापीड** पु० चन्द्र आपीड शिरोभूषणं यस्य । शिवे,

**चन्द्रिका** स्त्री० चन्द्रः स्वाश्रयत्वेन अस्त्यस्याः ठन् । ज्योत्स्नाया, स्थूलैलायाम्, कर्णस्फोटायाम्, लयोटगादिचरपादके छन्दोभेदे च । [कान्तमणौ ।

**चन्द्रिकाद्राव** पु० चन्द्रिकया द्रावोनिस्यन्दो यस्य । चन्द्र-

**चन्द्रिकापायिन्** पु० चन्द्रिका पिवति पा-णिनि । चकोरपक्षिणि । [न्याम् ।

**चन्द्रेष्टा** स्त्री० चन्द्रइष्टो यस्याः । उत्पललतायाम् उत्पलि-

**चन्द्रोपल** पु० चन्द्रप्रियः उपलः । चन्द्रकान्तमणौ ।

**चप** चूर्णीकरणे चु० उभ० सक० सेट् घटा० । चपयति-ते अचीचपत्-त । चिधातोरेव स्वार्थे णिजित्यन्ये ।

**चप** सान्त्वने भ्वा० पर० सक० सेट् । चपति अचापीत्-अचपीत् । चपयति ।

**चप** गतौ चु०उभ०सक०सेट् इदित् । चम्पयतिते अचचम्पत् त

**चपल** पु० चप-णिच् घञ् चपं सान्त्वनं लाति ला-क । पारदे, मीने, चोरनामगन्धद्रव्ये, प्रस्तरभेदे, राजमाषे च । तरले, चञ्चले, क्षणिके, विकले, दुर्विनीते च त्रि० तत्स्त्री विद्युति, पुंश्चल्याम्, पिप्पल्यां, विजयायां, मदिरायां, जिह्वायां, आर्य्याभेदे च स्त्री० ।

**चपेट** पु० चप-भावे क चपाय सान्त्वनाय इटति गच्छति इट-क । विस्तृताङ्गुलिके हस्ते प्रहते (चापड) स्त्रीमप्येति स्वगिङ्कोपाध्यायः शिष्याय चपेटां ददातीति भाष्यप्रयोगात् । स्वार्थे कन् अत्रैवार्थे ।

**चम** भक्षणे भ्वा०स्वादि०च पर०सक०सेट् । चमति आचामति विचमति चम्नोति । अचमीत् । चमित्वा-चान्त्वा ।

**चमत्कार** पु० चमदित्यव्यक्तं क्रियते कृ-घञ् । लोकातीतवस्तु दृष्ट्वा चित्तस्य आनन्दहेतौ प्रकाशे विस्मये, अपामार्गवृक्षे च

**चमर** पु० चम-अरच् । मक्षिपाकृतौ मृगभेदे, यस्य पुच्छेन च मराख्यं व्यजनं भवति, दैत्यभेदे च । जातौ स्त्रियां ङीप् चमरी । चमरव्यजने चामरे न० । [आम्रातके च ।

**चमरिक** पु० चमरमिव पुष्पमस्त्यस्य ठन् । कोविदारवृक्षे रक्त-

**चमस** पु०न० चम-असच् । काष्ठजाते यज्ञिये पात्रभेदे, सोमरसपानपात्रे च । पिष्टकभेदे लड्डुके च पु० ।

**चमीकर** पु० लतस्वराभिधे स्वर्णस्योत्पत्तिस्थाने तद्योगात् स्वर्णं चामीकरमित्युच्यते ।

**चमू** स्त्री० चम ऊ । सेनामात्रे (गजाः ७२६, रथा ७२६ अश्वाः २१८७, पदातयः ३६४५), एतत्संख्याभेदान्विते सैन्यभेदे च । [चर्म्मणेति माघः ।

**चमूरु** पु० चम-ऊरच् । मृगभेदे, कोविदारवृक्षे च । चारुचमूरु

**चम्पक** पु० चपि-गतौ क्वुन् । (चांपा) इति नामके वृक्षभेदे । कदलीफलभेदे न० (चापाकला) ।

**चम्पकमाला** स्त्री०६त० । स्वर्णचम्पकैः निर्म्मिताया स्त्रीणां कण्ठाभरणे (चांपकलो) दगाद्यक्षरपादके पङ्क्तिच्छन्दोभेदे च ।

**चम्पकरम्भा** स्त्री० चम्पक इव रम्भा । स्वर्णकदल्याम् ।

**चम्पकोष** पु०चपि-अच् कर्म्म० । पनसे तस्य हि कोषोभक्ष्यते

**चम्पा** स्त्री० चपि-अच् । नगरीभेदे नदीभेदे तीर्थभेदे कर्णस्य भार्य्यायाञ्च ।

**चम्पाधिप** पु० ६त० । कर्णे । [नगर्य्याम् ।

**चम्पावती** स्त्री० चम्पा+मतुप् मस्य व । कर्णराजधान्यां

**चम्पू** स्त्री० 'गद्यपद्यमयी वाणी चम्पूरित्यभिधीयते' इत्युक्ते काव्यभेदे ।

**चम्ब** गतौ भ्वा० पर० सक० सेट् चम्बति अचम्बीत् ।

**चय** गतौ भ्वा० आ० सक० सेट् । चयते अचयिष्ट ।

**चय** पु० चि-अच् । प्राकारमूले प्राकाराधारवेदिकायाम्, समूहे समाहृतौ च । [पुष्पादेश्चयाटितो प्रस्तरे च ।

**चयन** न० चि-ल्युट् । इष्टकादीनामूर्द्ध्वाधोनयनरूपे रचनाभेदे,

**चर** गतौ भ्वा० पर० सक० सेट् । चरति अचारीत् ।

**चर** संशये चुरा० उभ० सक० सेट् । चारयति-ते अचीचरत् त

**चर** पु० चर-अच् । स्वपरराष्ट्रवृत्तान्तज्ञानार्थं राजनियोगेन इतस्ततो भ्रमणकर्त्तरि चारे प्रणिधौ, कपर्द्दके, ज्योतिषोक्तेषु मेषकर्कटतुलामकरराशिषु च । स्वातिपुनर्वसुश्रवणाद्विकरूपे नक्षत्रभेदे सोमवारे च न० । चले जङ्गमे त्रि० ।

**चरक** पु० चर-क्वुन् स्वार्थे कन् वा । चारे राजदूते, पर्पटे भिक्षौ, वैद्यकशास्त्रकर्त्तरि मुनिभेदे तत्कृते तन्नामके ग्रन्थे च । देवाकर्णय सुश्रुतेन चरकस्योक्तेन जानेऽखिलमिति नैषधम् ।

**चरण** पु०न० । चर-करणे ल्युट् । पादे, वेदैकदेशे शाखा-

रूपे ग्रन्थे, तदध्येतरि जने गोत्रे च। भावे ल्युट्। गतौ भक्षणे, आचारे शीले च न०।

**चरणग्रन्थि** पु० ६त०। गुल्फे।

**चरणायुध** पु० चरणाभ्यामायुध्यति आ+युध क। कुक्कुटे।

**चरणव्यूह** पु० चरणानां वेदशाखानां व्यूहो विशेषेणोहो-निरूपणं यत्र। व्यासकृते ग्रन्थभेदे।

**चरम** त्रि० चर-अमच्। अन्ते अवसाने, पश्चिमे च।

**चरमाचल** पु० चरम पश्चिम अचल कर्म०। अस्ताचले। चरमगिर्यादयोऽप्यत्र। [एक व०। कपर्दके पु०।

**चराचर** न० चर-अच् नि०। जगति। समा०द्व। जङ्गमेऽजङ्गमे

**चरित(त्र)** न० चर-क्त (इत्र वा)। अनुष्ठाने, सञ्चारे, स्वभावे, चेष्टिते, शीलादौ च।

**चरु** पु० चर उ। हव्यान्ने होमार्थ पाच्याने 'अनवस्रावितान्तरूष्मपाक्यौदनश्चरुरि'ति याज्ञिकाः। चरुपाकपात्रे भाण्डे च। [चित्-त। चर्चित चर्चा।

**चर्च** अध्ययने चुरा० उभ० सक० सेट्। चर्चयति ते अचच-

**चर्च** उक्तौ भर्त्सने च तु० पर० सक० सेट्। चर्चति अचर्चीत्।

**चर्चरी** स्त्री० चर्च अरन् गौरा० ङीप्। गीतिभेदे, कुटिल केशे, हर्षक्रीडायाम् साटोपवाक्ये, छन्दोभेदे च।

**चर्चा** स्त्री चर्च-अ। विचारे, चिन्तायां चन्दनादिना देहलेपने च। [लेपने

**चर्चित** त्रि० चर्चा जातास्य इतच्। चन्दनादिना कृतगात्रानु-

**चर्ब** गतौ भक्षणे च भ्वा पर सक० सेट्। चर्बति अचर्बीत्।

**चर्मकार** पु चर्म तन्मय पादुकादिकं करोति कृ-अण्। (चामार) पादुकाकारे एव चर्मकृदादयोऽप्यत्र।

**चर्मण्वती** स्त्री चर्माण्यस्याम् मतुप नि०। नदीभेदे।

**चर्मदण्ड** पु० चर्मणा कृतोदण्ड। कशायाम् (कोड़ा)

**चर्मन्** न० चर मनिन्। त्वक्स्तरायां कृत्तौ, इन्द्रियभेदे येन स्पर्श उपलभ्यते तत्र अन् 'शरीरावरकमात्रं चर्म इत्यभिधीयते' इत्युक्ते (ढाल) फलके च।

**चर्मपादुका** स्त्री० चर्मनिर्मिता पादुका। उपानहि (जुता)

**चर्मप्रभेदिका** स्त्री० प्रभिनत्ति प्र+भिद ण्वुल् ६त०। चर्मभेदनेऽस्त्रभेदे।

**चर्मप्रसेविका** स्त्री० चर्मणा प्रसीव्यते सिव ण्वुल्। अग्नि सन्दीपनार्थं चर्मनिर्मिते भस्त्रानाम्नि यन्त्रे।

**चर्मिन्** पु चर्म-फलकमस्यास्ति व्रीह्यादित्वादिनि। फलकास्त्रवति त्वग्युक्तमात्रे, भूर्जवृक्षे, भृङ्गरीटे, कदल्याम्।

**चर्या** स्त्री० चर-यत्। नियमापरित्यागे गुरूपदिष्टमतादतगमने

**चर्व** भक्षे (दन्तैश्चूर्णने) वा चुरा० उभ० पक्षे भ्वा० पर०। चर्वयति ते चर्वति अचचर्वत् त अचर्वीत्।

**चर्षणि** पु० कृष अनि च० आदेशस्तम्। जने 'स चर्षणीनां सदमादि'ति भागवतम्। [चल चाल।

**चल** गतौ भ्वा०पर० सक० सेट् ज्वला दि। चलति अचालीत्

**चल** विलासे तु०पर०अक०सेट्। चलति अचालीत्।

**चल** पोषणे चुरा० उभ०सक० सेट्। चालयति अचीचलत्-त

**चल** त्रि० चल ज्वलादित्वात् वा अच्। तरले, चञ्चले, कम्पयुक्ते। भावे क। कम्पे। [चलादयोऽप्यत्र।

**चलदल** पु० चलानि चञ्चलानि दलान्यस्य। अश्वत्थवृक्षे चल-

**चला** स्त्री० चल अच्। लक्ष्म्यां सिह्लके च।

**चलाचल** त्रि० चल अच् नि०। अत्यन्तचञ्चले। काके पु०

**चवि** स्त्री० चर्व इन् पृ०। (चइ) चव्ये। [भक्षणार्थे।

**चविका** स्त्री चर्व कुन पृ०। चव्ये (चइ) इकन् पृ। चविक-

**चव्य** न० चर्व्यते चर्व-यत् पृ०। (चइ) इति ख्याता, कार्पासाद्य

**चव्यजा** स्त्री चव्यमिव जायते जन-ड। गजपिप्पल्याम्।

**चष** भक्षे भ्वा० उभ० पर० सक सेट्। चषति-ते अचाषीत्-अचषीत् अचषिष्ट।

**चष** वधे भ्वा पर० सक सेट्। चषति अचाषीत् अचषीत्।

**चषक** पु०न० चष-करणे क्वुन्। मद्यपानपात्रे। कर्मणि क्वुन्। मधुनि, मद्यभेदे च न०।

**चषाल** पु० चष-आलच्। यज्ञियपशुबन्धनार्थे काष्ठे यूपमध्यदेशे वलयाकारे काष्ठमये लौहमये वा पदार्थे।

**चह** प्रतारणे भ्वा० पर सक० सेट्। चहति अचहीत्।

**चह** प्रतारणे अद० चुरा० उभ० सक० सेट्। चहयति-ते अचचहत् त। [चहत त।

**चह** प्रतारणे चुरा० पर० सक० सेट् घटा० चहयति अची-

**चाकचक्य** न० चक अच् चक प्रकारे द्वित्व चकचकस्तस्य भाव। उज्ज्वलतायाम्। चाकचक्यादिदोषेण मदर्शनसहतेति वेदान्तपरिभाषा। [मर्णो च।

**चाक्षुष** न० चक्षुषा निर्वृत्तम् अण्। चक्षुर्जन्ये ज्ञाने प्रत्यक्षे

**चाक्रिक** पु० चक्रेण समूहेन चरति ठक्। ऋद्धस्य स्तुतिपाठके घाण्टिकार्थे।

**चाङ्गेरी** स्त्री० 'चाङ्गुक शोभने दन्ते इत्युक्ते चाङ्ग शोभनदन्ततां गीरयति दृट-अण् गौरा ङीष्। (आमरुल) शुभर्दे।

**चाट** पु चट-भेदे णिच्। आदौ विश्वासमुत्पाद्य पश्चात् धनापहर्त्तरि चौरे "चाटचारणदासेषु दत्तं भवति निष्फलमि"ति स्मृतिः।

**चाटकैर** पु० चटकायाः चटकस्य वाऽपत्यम् एरक् । चटकापत्ये ।

**चाटु** पु०न० चट-ञुण् । प्रियवाक्ये मिथ्याप्रियवाक्ये च स्वार्थे कन् । अत्रैवार्थे 'विभ्रमचाटुकमतानी'ति साहि० ३परि० ।

**चाटुपटु** पु० चाटौ मिथ्यापरितोषणे वाक्ये पटुः । (भाण्ड) (खोषामुदे) जने । ट०पस्य व० चाटुवटुरप्यत्र विदूषके च ।

**चाणकीन** त्रि० चणकस्य भवनं क्षेत्रम् खञ् । चणकभवनयोग्ये क्षेत्रादौ । [हत्वा चन्द्रगुप्ताय राज्यं दातरि विष्णुगुप्ते

**चाणक्य** पु० चणकस्य मुनेर्गोत्रापत्यम् यञ् । नव नन्दान्

**चाणूर(र)** पु० चण(न)-ऊरण् । कंसासुरस्य प्रधानमल्ले ।

**चाणू(नू)रसूदन** पु० चाणू(नू)रं सूदयति ल्युट् । श्रीकृष्णे ।

**चाण्डाल** पु० चण्डाल एव प्रज्ञाद्यण् । श्वपचे चण्डालार्थे ।

**चातक** पु० चतति याचते सततमम्बो मेघम् चत-ण्वुल् । स्वनामख्याते पक्षिभेदे । [चातुरी तुरी'ति नैषधम् ।

**चातुरी** स्त्री० चतुरस्य भावः तस्येदं वा ष्यञ् । 'चातुर्य्ये

**चातुर्मास्य** न० चतुर्षु मासेषु विहितम् ण्य । चतुर्माससाध्ये यज्ञभेदे व्रतभेदे च 'आषाढशुक्लद्वादश्यां पौर्णमास्यामथापि वा चातुर्मास्यव्रतारम्भ'मित्युपक्रम्य 'कार्त्तिक्यां शुक्लपक्षे तु द्वादश्यां तत् समापयेदि'त्युक्तं वाराहे ।

**चातुर्वर्ण्य** न० चत्वारो ब्राह्मणादयोवर्णा एव स्वार्थे ष्यञ् । ब्राह्मणादिषु चतुर्षु वर्णेषु 'चातुर्वर्ण्यं मया सृष्ट'मिति गीता । भावे-ष्यञ् । चतुर्वर्णधर्म्मे ।

**चान्द्र** पु० चन्द्रोदेवताऽस्य, तस्येदमिति वा अण् । चन्द्रकान्तमणौ, त्रिंशत्तिथ्यात्मके पौर्णमास्यन्ते, अमान्ते वा मासे च । चान्द्रायणव्रते न० । चन्द्रलोके पु० । चन्द्रेण प्रोक्तम् अण् । व्याकरणभेदे । तदधीते पुनरण् । चान्द्रव्याकरणाध्यायिनि त्रि० । [मित्यत्रे'त्युक्तलक्षणे मासि ।

**चान्द्रमास** पु०कर्म० । 'तत्तिथिगता भवेन्मासश्चान्द्रस्तु तिथि-

**चान्द्रायण** चान्द्रश्चन्द्रलोकोऽयतेऽनेन अय-ल्युट् णत्वम् । व्रतभेदे

**चान्द्री** स्त्री० चन्द्रस्येयम् अण् । चन्द्रपत्न्यां ज्योत्स्नायाञ्च । तत्तुल्यशुभ्रत्वात् श्वेतकण्टकार्य्याम् । [नवमे राशौ च ।

**चाप** पु० चपस्य वंशभेदस्य विकारः अण् । धनुषि, मेषादधिके

**चापल** न० चपलस्य भावः कर्म वा अण् । अविमृश्यकारितारूपे, प्रयोजनं विनाऽपि पाण्यादिचालनरूपे वा चपलकर्माणि 'मात्सर्य्यद्वेषरागादेश्चापलं त्वनवस्थिति'रित्युक्तलक्षणेऽनवस्थाने च । ष्यञ् । चापल्यमप्यत्र ।

**चामर** पु० न० चमरस्य विकारः तत्पुच्छनिर्मितत्वात् । चमरपुच्छकृतव्यजने । [आम्रे च

**चामरपुष्प** पु० चामरमिव पुष्पमस्य । क्रमुके, काशे, केतके,

**चामीकर** न० चमीकरे आकरभेदे भवः अण् । स्वर्णे धुस्तूरे च

**चामुण्डा** स्त्री० चमू सेनां वियदादिरूपमहद्रूपां लाति आदत्ते ला-क पृ० । दुर्गायाम् 'यस्माच्चण्डञ्च मुण्डञ्च गृहीत्वा त्वमुपागता चामुण्डेति ततो लोके ख्याता देवी'त्युक्तेर्वा चण्डमुण्डानयित्र्यां दुर्गायाम् ।

**चाम्पेय** न० चम्पायां भवः ढक् । चम्पके, नागकेशरे, स्वर्णे, किञ्जल्के च । स्वार्थे कन् किञ्जल्के ।

**चाय** दर्शने भ्वा० उभ० सक० सेट् । चायति ते अचायीत्-अचासीत् अचायिष्ट-आचास्त ।

**चार** पु० चर एव स्वार्थे अण् । चरे 'चारैः पश्यन्ति राजान' इति नीतिशास्त्रम् । चर-भावे घञ् । गमने बन्धे च । आधारे घञ् । कारागारे । कृत्रिमविषे न० ।

**चारण** पु० चारयति कीर्त्तिं चर-णिच् ल्यु । कीर्त्तिसञ्चारके नटे 'चाटचारणदासेषि'ति स्मृतिः ।

**चारित्र** न० चरित्रमेव स्वार्थेऽण् । चरित्रे ।

**चारु** पु० चर-ञुण् । बृहस्पतौ । मनोज्ञे मनोहरे त्रि० ।

**चारुकेशरा** स्त्री० चारूणि केशराण्यस्याः । नागरमुस्तायाम् ।

**चारुनालक** न० चारु-नालं यस्य कप् सुश्रु० । रक्तपद्मे ।

**चारुपर्णी** चारूणि पर्णान्यस्याः ङीप् । (गन्धभादाल) प्रसारिण्याम् ।

**चारुफला** स्त्री० चारूणि स्वादूनि फलान्यस्याः । द्राक्षायाम् ।

**चार्च्चिक्य** न० चर्च्च-धात्वर्थे ण्वुल् चर्च्चिकैव स्वार्थे ष्यञ् । चन्दनादिना गात्रलेपने । [वेष्टिते रथे ।

**चार्म्म** पु० चर्म्मणा परिवृतो रथ अण् । चर्म्मणा सर्वतो

**चार्म्मण** न० चर्म्मणां समूहः अण् । चर्म्मसमुदाये ।

**चार्म्मिण** चर्म्मिणां समूहः अण् । चर्म्मिसमुदाये (ढालि) समूहे

**चार्व्वाक** पु० चारुर्लोकसिद्धोवाको वचनं यस्य पृ० । प्रत्यक्षप्रमाणवादिनि लौकायतिके यस्य मतप्रस्थापकोबृहस्पतिः

**चार्व्वी** स्त्री० चारु-ङीप् । चारुत्वगुणवत्याम्, स्त्रियां ज्योत्स्नायाम्, दीप्तौ, कुबेरपत्न्याञ्च ।

**चाल** पु० चल-ण । स्वनामख्याते गृहाच्छादने तृणादौ ।

**चालनी** स्त्री० चाल्यते शस्यादिरनया चल-णिच्-करणे ल्युट् । स्वनामख्याते बहुच्छिद्रे शस्यादिचालनसाधने पदार्थे ।

**चाष** पु० चष-भक्षणे णिच्-अच् । स्वर्णचूडे नीलाङ्गे खगे (नीलकण्ठ) ।

**चास** पु० चस-णिच्-अच् । दूर्वाचाषे पक्षिणि च ।

**चि** चयने स्वादि० उभ० द्विक० अनिट् । चिनोति . चिनुते । अचैषीत् अचेष्ट चिकाय-चिचाय । चाययति चपयतीत्येके ।

अष्टादशाक्षरपादके छन्दोभेदे च ।
चित्रवीर्य्य पु० चित्रमाश्चर्यं वीर्य्यमस्य । रक्तैरण्डे ।
चित्रशिखण्डिज पु० चित्रशिखण्डिनोऽङ्गिरसो जायते जन-ड । बृहस्पतौ ।
चित्रशिखण्डिन् पु० चित्र शिखण्डः अस्त्यस्य इनि । 'मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतु० । वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिन' इत्युक्तेषु सप्तसु मुनिषु
चित्राङ्ग पु० चित्रमङ्गमस्य । रक्तचित्रके, सर्पे च । [भेदे च
चित्राङ्गद पु० शान्तनुराजसुते विचित्रवीर्य्यभ्रातरि, गन्धर्व-
चित्राङ्गी स्त्री० चित्रमङ्गमस्याः । मञ्जिष्ठायां कर्णजलौकसि च
चित्रायस न० कर्म० अदन्तमा० । तीक्ष्णलौहे (इस्पात) ।
चिद्रूप पु० चिदेव रूपमस्य । आत्मनि, स्फूर्त्तिमति च ।
चिदाकाश न० चिद् आकाशमिव निर्लेपत्वात् सर्व्वाधारत्वाच्च । शुद्धे ब्रह्मणि ।
चिदाभास पु० चित आभासः प्रतिविम्बः । बुद्ध्यावात्मप्रतिविम्बे जीवे बुद्धिवृत्तिचिदाभासाविति वेदान्तः । [इष्टपदार्थस्मरणे
चिन्ता स्त्री० चिति-अ । प्रागनुभूतज्ञानजन्यसंस्कारोद्बोधे पूर्व्व-
चिन्तामणि पु० चिन्ताविषयस्य (तदुद्भवार्थे) मणिः । चिन्तामात्रेण चिन्तितवस्तुदायके मणौ, स्पर्शमणौ च । 'यथा चिन्तामणिं स्पृष्ट्वा लौहं काञ्चनतां व्रजे'दिति ।
चिन्न पु० चित-न ष० तस्य नः । (चिना) शस्यभेदे ।
चिन्मय पु० चिदेव चित्+मयट् । चैतन्यरूपात्मके परमेश्वरे 'चिन्मयस्याद्वितीयस्ये'त्यादि । [स्वार्थे कन् । अत्रैवार्थे
चिपिट पु० चि-पिटच् किच्च । (चिडा) इति ख्याते पृथुके
चिर न० चि-रक् । दीर्घकाले । तद्वर्त्तिनि पदार्थे त्रि० ।
चिरक्रिय त्रि० चिरकालेन क्रिया यस्य । दीर्घसूत्रे ।
चिरजीवक पु० चिरं जीवति जीव-ण्वुल् । जीवकवृक्षे ।
चिरजीविन् पु० चिरं जीवति णिनि । काके, जीवकवृक्षे, शाल्मलिवृक्षे, मार्कण्डेये, 'अश्वत्थामा बलिर्व्यासो हनुमांश्च विभीषणः । कृपः परशुरामश्च सप्तैते चिरजीविन' इत्युक्तेषु सप्तसु च । चिरजीविनि त्रि० ।
चिरञ्जीविन् पु० चिरं जीवति जीव-खिन् । चिरजीविपदार्थे
चिरण्टी स्त्री० चिरेण अटति पितृगेहात् भर्त्तृगेहम् अट-अच् ष० । यौवनवत्यां पितृगेहस्थायां स्त्रियाम् ।
चिरतिक्त पु० चिरन्तिक्तो रसो यत्र । (चिराता) भूनिम्बे ।
चिरत्न त्रि० चिरे भवः त्न । चिरन्तने पुरातने ।
चिरन्तन त्रि० चिरम्+ट्युल् तुट् च । पुरातने । स्त्रियां ङीप् ।
चिरपाकिन् पु० चिरेण पाकोऽस्त्यस्य दुर्ज्जरत्वात् । कपित्थे
चिरपुष्प पु० चिराणि पुष्पाण्यस्य । बकुलवृक्षे ।
चिरम् अव्य० चि-रमुक् । बहुकालार्थे ।
चिररात्र पु० चिरा रात्रिः अच् । बहुकाले ।
चिररात्राय अव्य० चिररात्रान् अयते अय-अण् । बहुकाले
चिरविल्व पु० चिर विलति विल-भेदने क । करञ्जवृक्षे ।
चिरसूता स्त्री० चिरं प्रसूता । बहुकालप्रसवत्यां गवादौ । स्वार्थे कन् अत्रार्थे ।
चिरस्य अव्य० चिरमस्यति अस-ण्यत् शक० । दीर्घकाले ।
चिरात् अव्य० चिरमतति अत-क्विप् । दीर्घकाले, गरुडे पु० ।
चिराय अव्य० चिरमयते अण् । चिरकाले दीर्घकाले ।
चिरायुस् पु० चिरमायुर्यस्य । देवे । चिरजीविनि त्रि० ।
चिरि हिंसे स्वादि० पर० सक० सेट् । चिरिणोति अचिरायीत् ।
चिरेण अव्य० चिर+एनप् । दीर्घकालार्थे । [चिर्भिटीफले ।
चिर्भटी स्त्री० चिरेण भटति अच् ङीप् ष० । कर्कट्याम् ।
चिल वासे तु० पर० अक० सेट् । चिलति अचेलीत् ।
चिलिचिम पु० चिल इन् चिलिं मत्स्यं चिनोति चि-मक् । (चेलेगुड़गुडिया) मत्स्यभेदे ।
चिल्ल शैथिल्ये भावकृतौ च भ्वा० पर० अक० सेट् । चिल्लति अचिल्लीत् । [चिल् । क्लिन्ननेत्रे त्रि० ।
चिल्ल पु० चिल्ल-अच् । (चिल) पक्षिभेदे । क्लिन्न+च क्लिन्नस्य
चिल्लक पु० चिल्ल-ण्वुल् । लोध्रे । झिल्लिकायां स्त्री० ।
चिल्लाभ पु० चिल्ल इव मनस्वहारित्वादाभाति भा-क । ग्रन्थिभेदके चौरे । [बालुकशाके च ।
चिल्ली स्त्री० चिल्ल-अच् गौरा० ङीष् । झिल्लीकीटे, लोध्रे,
चिवु(क) न० चीव-संवरणे ड ष० ह्रस्व० । ओष्ठाधोभागे । स्वार्थे कन् तत्रैवार्थे । मुचकुन्दवृक्षे पु० ।
चिह्न लक्षणे अ० चु० उभ० सक० सेट् । चिह्नयति ते अचिचिह्नत् त । [लक्षणे ।
चिह्न न० चिह्न-अच्, चह-न उपधाया इत्त्वम् वा । लाञ्छने
चीक मर्षणे वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । चीकयति ते चीकति अचीचिकत् त अचीकीत् ।
चीन पु० चि-नक् ष० दीर्घ । 'मानसेशात् दक्षपूर्व्वे चीनदेश० प्रकीर्त्तित' इत्युक्ते देशे, तद्देशस्थे जने ब० व० । तन्त्रोक्ते तद्देशाचारभेदे च । तद्देशोद्भववस्त्रे न० 'चीन-पीनस्तनवसनदत्तान्दोलने'त्युद्भटः । काङ्गुतुल्यव्रीहिभेदे मृगे, मृगभेदे च पु० । पताकायां, सीसके च न० । स्वार्थे कन् । काङ्गुधान्यभेदे । [मुनिभेदे ।
चीत्कार पु० चीदित्यव्यक्तशब्दस्य कारः कृ-घञ् । भयहेतुके

(अवके) । [महाभाष्ये, कपर्दके च ।

**चूर्णि(र्णी)** पु० चुर-चर-वा क्विप् नि० । पतञ्जलिकृते

**चूला** स्त्री० चुल-अ दीर्घः । प्रासादोपरिस्थे गृहे (चिलाघर) चूड़ायाञ्च । [मूले, नाटकाङ्गभेदे च ।

**चूलिका** स्त्री० चुल-समुच्छ्राये ण्वुल् पृ० दीर्घ । हस्तिकर्णा-

**चूष** पाने भ्वा० पर० सक० सेट् । चूषति । अचूषीत् ।

**चृत** हिंसे ग्रन्थने च तुदा० सक० सेट् । चृतति अचर्तीत्

**चृत(प)** संदीपने वा चु० उभ० पक्षे भ्वा०पर० सक० सेट् । चर्त(र्प)यति-ते । अचीचृत(प)त-त अचचर्त(र्प)त्-त । पक्षे चर्त(र्प)ति अचर्तीं(र्पी)त् ।

**चेट(ड)** पु० चिट-परप्रैष्ये अच् वा टस्य डः । दासे उभयत्र ङीप् । दास्याम् । ण्वुल् । दासे, उपनायके च स्त्रियां चेटि(डि)का । [स्वतया कथने च ।

**चेत्** अव्य० चित-विच् । यद्यर्थे पक्षान्तरे, असन्देहेऽपि सन्दि

**चेतकी** स्त्री० चित-वुन् । हरितक्याम् तत्फलेऽपि स्त्री० ।

**चेतन** पु० चित-युच् । आत्मनि, जीवे परमेश्वरे प्राणिनि च । चेतनयुक्ते त्रि० ।

**चेतनकी** पु० चेतनं करोति कृ-ड गौ० ङीप् । हरितक्याम् ।

**चेतना** स्त्री० चु० चित युच् । बुद्धौ ज्ञाने ।

**चेतनीया** स्त्री० चेतनाय हिता छ । ऋद्धिनामौषधे ।

**चेतस्** न० चित-असुन् । चित्ते । आत्मनि पु० 'साक्षी चेताः केवलो निर्गुणश्चे'ति श्रुतिः । [जीवे ।

**चेतोसुख** पु० चेतो सुखं द्वारमस्य । वेदान्तोक्ते सुषुप्त्यभिमानिनि

**चेदि** पु० देशभेदे । तद्देशस्थे जने ब०व० ।

**चेदिपति** पु० चेदीनां पतिः । शिशुपाले उपरिचरवसुनामके नृपे च । चेदिराजादयोऽप्यत्र । [अचिचेलत् त ।

**चेल** लौल्ये गतौ च भ्वा० पर० सक० सेट् । चेलति अचेलीत्

**चेल** न० चिल-आच्छादने कर्मणि घञ् । वस्त्रे । चेल-लौल्ये अच् । अधमे त्रि० ।

**चेल्ल** चालने गतौ च भ्वा० पर० सक० सेट् । चेल्लति अचेल्लीत्

**चेष्ट** ईहायां भ्वा० आ० अक० सेट् । चेष्टते अचेष्टिष्ट । अच-चेष्टत्-अचिचेष्टत् ।

**चेष्टा** स्त्री० चेष्ट-अङ् । 'आत्मजन्या भवेदिच्छा इच्छाजन्या भवेत् कृतिः । कृतिजन्या भवेच्चेष्टे'त्युक्ते कायिके व्यापारे ।

**चैतन्य** न० चेतन+भावे स्वार्थे वा ष्यञ् । चेतनायां, ब्रह्मणि, प्रकृतौ च । [स्वभावे ।

**चैत्त** न० चित्तस्येदम् अण् । बौद्धमते विज्ञानातिरक्ते

**चैत्य** न० चित्याया इदमण् । ग्रामादिप्रसिद्धे महावृक्षे, देवावासे वृक्षे, जनानां सभास्थतरौ, बुद्धभेदे, आयतने, चिताचिह्ने. जनसभायां, यज्ञस्थाने, जनानां विश्रामस्थाने, देवस्थाने च । [हिते गृहे ।

**चैत्यगृह** न० चैत्यस्य समीपे गृहम् । चतुष्पथस्थे चैत्यमन्दि-

**चैत्यद्रुम** पु० कर्म० । अश्वत्थादिप्रसिद्धे वृक्षे ।

**चैत्र** पु० चित्रानक्षत्रेण युक्ता पौर्णमासी चैत्री साऽस्मिन् मासे अण् । स्वनामख्याते शुक्लप्रतिपदादिदर्शान्तरूपे मासे । ठक् । चैत्रिक । मनुः । चैत्रकौशल पर्वतभेदे च ।

**चैत्ररथ** पु० चित्ररथेन गन्धर्वेण निर्वृत्तम् अण् । कुबेरोद्याने

**चैत्रावली** स्त्री० चैत्रे सम्यक् बलिरस्याम् । चैत्रपौर्णमास्याम्

**चैत्री** स्त्री० चित्रानक्षत्रेण युक्ता पौर्णमासी अण् । चैत्रमासपौर्णमास्याम् तत्रैव तद्योगसम्भवात् ।

**चैद्य** पु० चेदीनां जनपदनामयम् ष्यञ् । शिशुपाले ।

**चोदना** स्त्री० चु० चुद-युच् । 'चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः' इति भट्टोक्ते प्रवर्त्तनावाक्ये 'चोदन लक्षणार्थो धर्म' इति मीमांसासूत्रम् । प्रेरणायां, तर्जनायां, प्रवर्त्तनायाञ्च । [लिं० ।

**चोद्य** न० चुद-ण्यत् । प्रश्ने, पूर्वपक्षे, अद्भुते च । प्रेरणार्हे

**चोपन** न० चुप-ल्युट् । मन्दगमने, तूष्णींभवने मौने च ।

**चोर** पु० चुर-अच् । स्तेयकर्त्तरि परद्रव्यापहारके गन्धद्रव्यभेदे, कृष्णागर्वाञ्च । [ग्रन्थिपर्णवृक्षे ।

**चोरक** पु० चोर इव स्वनामख्यातद्रव्यमिव कायति कै-क ।

**चोरपुष्पी** स्त्री० चोर इव पुष्पमस्याः रात्रिविकाशित्वात् । शङ्खिन्याम् । स्वार्थे कन् अत इत्त्वम् । चोरपुष्पिकाप्यत्र ।

**चोरा** स्त्री० चोरतुल्यं रात्रिविकाशित्वेन पुष्पमस्त्यस्याः अर्श आद्यच् । शङ्खपुष्पिकायाम् ।

**चो(चौ)रिका** स्त्री० चोर+कर्मणि ठन् ठञ् वा । चौर्ये ।

**चोल** न० चुल-घञ् । स्त्रीणां कञ्चुकाख्ये आप्रपदीने वस्त्रे । (चोला) इति ख्याते पुंसां वस्त्रभेदे च द्राविड़कलिङ्गयोर्मध्ये, देशभेदे पु० । [किम्पुपर्णि च ।

**चोलकी** पु० चुल-ण्वुल् गौरा० ङीप् । करीरे, नागरङ्गे,

**चोली** स्त्री० अल्पचोलः ङीप् । कूर्पासके वस्त्रभेदे ।

**चोष्य** त्रि० चूष-ण्यत् पृ० । इक्षुदण्डादौ भक्ष्यभेदे ।

**चौड(ल)** न० चूडा प्रयोजनमस्य अण् । चूडाकर्मणि संस्कारभेदे । वा डस्य लः । [प्रहारके । चोरनामगन्धद्रव्ये पु० ।

**चौर** त्रि० चुरा शीलमस्य चोर एव वा अण् । प्रच्छन्नपरद्रव्या-

**चौर्य** न० चोरस्य भावः कर्म वा ष्यञ् । परद्रव्यापहरणे ।

**च्यवन** पु० च्यु-युच् । ऋषिभेदे ।

**छागल** पु० छगलस्य प्रजाद्यण्। स्वनामख्याते पशौ, छगलस्यापत्यम् अण्। ऋषिभेदे।

**छागवाहन** पु० छागो वाहनमस्य। अग्नौ।

**छात** त्रि० छो-कर्मणि कर्त्तरि वा क्त। छिन्ने, दुर्बले च। छाततराम्बुच्छटेति काव्य० प्र० १उ०।

**छात्र** पु० गुरोर्दोषावरणं छत्रं तच्छीलमस्य ण। शिष्ये,'वरटाः कपिला पीता प्रायोहिमवतो वने। कुर्वन्ति छत्रकाकारं तज्जं छात्रं मधु स्मृत'मित्युक्ते मधुभेदे न०।

**छादन** पु० छद-णिच्-ल्यु। नीलाम्लानवृक्षे। भावे ल्युट्। छादने। करणे ल्युट्। पत्रे न०।

**छान्दस** पु० छन्दोवेदमधीतेऽण्। वेदाध्ययनकर्त्तरि।

**छान्दोग्य** न० छन्दोग+आम्नायाद्यर्थे ञ्य। सामगानां धर्मे आम्नाये, (मन्त्रब्राह्मणात्मके शास्त्रे) समूहे च।

**छाया** स्त्री० छो-य। आतपाभावे, कान्तौ, प्रतिबिम्बे, पालने, उत्कोचे, पङ्क्तौ, संज्ञाप्रतिरूपायां सूर्यभार्यायाम्, एकविंशाक्षरपादके छन्दोभेदे च।

**छायातनय** पु० ६त०। शनैश्चरे 'छायासुतादयोप्यत्र'।

**छायापुरुष** पु० छायया पुरुष इव। आकाशे दृष्टव्ये निजच्छायानुरूपे छायात्मके पुरुषे।

**छायावृक्ष** पु० छायाप्रधानो वृक्षः शाक०। वटादौ वृक्षे।

**छिक्कनी** स्त्री० छिक् इत्यव्यक्तं नासिकाशब्दं कायति शब्दायते अच् गौरा० ङीप्। (नाकछिकनी) वृक्षभेदे।

**छिक्का** स्त्री० छिक् इत्यव्यक्तं शब्दं करोति क ड। क्षुते।

**छित्वर** त्रि० छिद्-ष्वरप् ष्ट० तलुक्च। वैरिणि, धूर्त्ते, छेदके च। स्त्रियां ङीप्। छेदने न०। [अच्छिदत् अच्छित्त,छिदा।

**छिद** द्वैधीकरणे रुधा०उ०सक०अनिट्। छिनत्ति छिन्ते अच्छैत्सीत्-

**छिदिर** पु० छिद्-किरच्। कुठारे पावके, रज्जुभेदे, करवाले च

**छिदुर** त्रि० छिद्-कुरच्। वैरिणि, धूर्त्ते, छेदके, छेदनद्रव्ये च

**छिद्र** भेदने अद० चुरा० उभ० सक० सेट्। छिद्रयति ते अचिच्छिद्रत् त। [ज्योतिषोक्ते लग्नतोऽष्टमस्थाने च।

**छिद्र** न० छिद-रक् छिद्र-अच् वा। दूषणे, गर्त्ते, अवकाशे

**छिद्रान्तर** पु० छिद्रमन्तर्मध्यं यस्य। नले।

**छिद्रित** त्रि० छिद्र-क्त। विद्धे कृतच्छिद्रे।

**छिन्नपत्री** स्त्री० छिन्नं पत्रं यस्याः। अम्बष्ठायाम्। (आकनादी)

**छिन्नमस्ता** स्त्री० छिन्नं मस्तं यस्याः। महाविद्यायां विद्याभेदे

**छिन्नरुह** पु० छिन्नोऽपि रोहति रुह-क। तिलवृक्षे। गुडूच्यां, शल्लक्यां, केतक्याञ्च स्त्री०।

**छिन्नोद्भवा** स्त्री० छिन्नाप्युद्भवति उद्+भू-अच्। गुडूच्याम्।

**छुछुन्दरी** स्त्री० छुछु इत्यव्यक्तं दृणाति अच् पृ०। (छुछुं) जन्तुभेदे गन्धमूषिके।

**छुट** छेदने वा चुरा० उभ० पक्षे तु० कुटा० पर०सक० सेट्। छोटयति ते छुटति। अचुच्छुटत् त अच्छुटीत्।

**छुड** छेदने तु०कु०पर०सक० सेट्। छुडति अच्छुडीत् चुच्छोड

**छुप** स्पर्शे तु०पर०सक०अनिट्। छुपति अच्छौप्सीत्।

**छुप** पु० छुप-क। क्षुपे, स्पर्शे, चपले, युद्धे च।

**छुर** छेदे भ्वा०पर०सक०सेट्। छोरति अच्छोरीत्।

**छुर** लेपने तु०कु० पर०सक०सेट्। छुरति अच्छुरीत्।

**छुरिका** स्त्री० छुर-क्वुन्। अस्त्रभेदे (छुरि)। छुर-क गौ० ङीष्। छुरीत्यप्यत्र।

**छृद** सन्दीपने वा चु-उ०पक्षे भ्वा०पर०सक०सेट्। छर्दयति ते छर्दति। अचच्छर्दत्-अचिच्छृदत् त अच्छर्दीत्।

**छृद** देवने दीप्तौ च अक० वमने सक० रुधा० उभ० सेट्। छृणत्ति छृन्ते अच्छृदत्-अच्छर्दीत्।

**छृप** याचने दिक० शब्दे अक० वा चुरा० उभ० पक्षे भ्वा० पर० सेट्। छर्पयति ते छर्पति। अचिच्छृपत् त-अचच्छर्पत् त। अच्छर्पीत्। [नागरे च त्रि०।

**छेक** पु० छो-डेकन्। स्वहासक्तौ पक्षिणि, मृगे च। विदग्धे,

**छेकानुप्रास** पु० छेकस्य विदग्धस्य प्रियोऽनुप्रासः शाक०। अनुप्रासभेदे शब्दालङ्कारे। [ङ्कारभेदे।

**छेकोक्ति** स्त्री० छेकाया० विदग्धाया उक्तिः। वक्रोक्तिरूपेऽल-

**छेद** छेदने अद०चु० उभ०सक० सेट्। छेदयति ते अचिच्छेदत् त

**छेद** पु० छिद्-घञ्। छेदने छेदके, भाजके च 'छेदं गुणं गुणं छेदमिति लीलावती। कर्मणि घञ्। खण्डे, 'वलाहकच्छेदविभक्तरागा'मिति कुमार'।

**छेदिक** पु० छेदं नित्यं सर्पति ठञ्। वेतसे।

**छो** छेदने दि०पर०सक० अनिट्। छ्यति अच्छात् अच्छासीत्।

**छोटिका** स्त्री० चु० छुट-ण्वुल्। तर्जन्यङ्गुष्ठजनिते शब्दे।

**छ्यु** गतौ भ्वा०आत्म०सक०अनिट्। छ्यवते अच्छ्योष्ट।

## ज

**ज** पु० जि-जन-वा ड। शिवे, विष्णौ, जनके, वेगे, मुक्तौ विषे, छन्दोग्रन्थोक्ते गुरुमध्यगे वर्णत्रये च।

**जक्ष** भक्षणे सक० हासे अक० अदा० जक्षा० पर० सेट्। जक्षिति अजक्षीत्।

**जगच्चक्षुः** पु० जगतां चक्षुरिव सर्वपदार्थदर्शकत्वात्। सूर्ये

**जगत्** पु० गम-क्विप् नि०। वायौ। जङ्गमे त्रि० विश्वे लोके न०।

जगत्प्राण पु० जगतः प्राणो जीवनहेतुत्वात् । वायौ ।
जगत्साक्षिन् पु० जगतः साक्षीव सर्वस्य साक्षाद्दर्शनात् । सूर्ये
जगती स्त्री गम-क्विप् नि० । पृथिव्याम् भुवने, जने, जम्बु
क्षेत्रे, वास्तुभेदे द्वादशाक्षरपादके छन्दोभेदे च ।
जगदाधार पु ६त० । वायौ जगतामाश्रये च 'कालो हि
जगदाधार' इति स्मृतिः । [ह्वाशी]ति स्मृतिः
जगद्धात्री स्त्री० धा-तृच् ६त० । दुर्गाभेदे । षड्ङ्गाश्च जग-
जगद्योनि पु जगतां योनिरुत्पत्तिः यस्मात् । शिवे, विष्णौ
हिरण्यगर्भे, कुमारे च । ६त० पृथिव्याम् । [भैरवभेदे च ।
जगन्नाथ पु० ६त० । विष्णौ, तदीयक्षेत्रभेदे विमलापीठस्थे
जगल पु० गल-अदने यङ् अच् नि० । मद्यकल्के (मदेर गोडा)
मदनद्रुमे पिष्टमद्ये धूर्ते च ।
जग्ध त्रि अद-क्त । भुक्ते ।
जग्धि स्त्री० अद क्तिन् । भोजने, सहभोजने च ।
जघन न हन्त-कर्मणि हन यङ् अच् द्वि । स्त्रीणां श्रोणिपुरो
भागे, श्रोण्यां च । 'पीनस्तनजघनाया' इत्युद्भटः ।
जघनेफला स्त्री० जघने इव मध्यभागे फलमस्याः अलुक्स० ।
काकोदुम्बरिकायाम् ।
जघन्य त्रि हन यङ् अच् पु०, जघनमिव इवार्थे यत् वा ।
अधमे, चरमे गर्हिते च । शूद्रे पु० । जघनमस्मद्योनित
यस्य । पुंसां लिङ्गे ।
जघन्यज पु० जघन्ये चरमे जायते जन-ड । शूद्रे, कनिष्ठे त्रि
जङ्गम त्रि गम-यङ्-अच् । गतिशीलनियत ।
जङ्गल न गल यङ-अच् पु० । वने रहसि च । मांसे पु०
जङ्घा स्त्री० अपयाति कुटिलं गच्छति गमर्थकम् कृते
कौटिल्ये यङ्-अच् पु० । गुल्फजान्वोरन्तराले अवयवे ।
जङ्घाकरिक त्रि कृ अप् कर विक्षेप ६त तत अस्त्यर्थे
ठन् । जङ्घाया लनेनाजीवति धावके (ध उड़े)
जङ्घाल त्रि० जङ्घा वेगवती अस्त्यस्य लच् । धावके जङ्घाजो-
विनि । 'हरिर्वैयाकरङ्गर्यपृष्ठतन्यद्गुरम्बरा । राजीव
तथा सदृशी जङ्घाला परिकीर्तिता' इत्युक्तेषु मृगेषु पु० ।
जङ्घिल त्रि अतिशयेनेगवती जङ्घाऽस्त्यस्य इलच् । वेगव-
ज्जङ्घाविशिष्टे धावके ।
जज युद्धे भ्वा पर सक सेट् । जजति अजाजीत्-अजजीत्
जञ्ज योधने भ्वा पर सक सेट् इदित् । जञ्जति अजञ्जीत्
जट सङ्घाते भ्वा० पर सक सेट् । जटति अजाटीत् अजटीत् ।
जटा स्त्री जट अच् । अन्योन्यसम्बद्धे केशे व्रतिना शिखा
याम्, मूलादेः जटायाम् इत्यादेर्मूले, (जट) जटामांसी,
वेदस्य पाठभेदे, रुद्रजटायाम् लतायाम् शतावर्याश्च ।
जटाजूट पु० ६त० । जटानां जूटे (बन्धे) समूहे च 'जटा-
जूटसमायुक्तामिति दुर्गाध्यानम् । [गन्धद्रव्यभेदे ।
जटामांसी पु० जटा मन्यते मन-स दीर्घश्च । स्वनामख्याते
जटायु(स्) पु० जटा याति या कु जट सहतौ उण् जट
सहतमायुरस्य वा । स्वनामख्याते खगभेदे, गुग्गुलौ च ।
जटाल पु० जटाऽस्त्यस्य लच् । गुग्गुलौ, वटे कर्पूरे, मुष्कके
च । जटायुक्ते त्रि० । जटामांसी स्त्री ।
जटावल्ली स्त्री० जटेव वल्ली । रुद्रजटायाम् । [वा ङीप् ।
जटि(टी) पु० जट-इन् । वटवृक्षे, समूहे च । जटामांसी स्त्री
जटिन् पु० जटा अस्त्यस्य इनि । प्लक्षे (पाकुड़) अश्वत्थवृक्ष
मध्ययुक्ते हस्तिभेदे । जटावति त्रि ।
जटिल पु० जटा अस्त्यर्थे इलच् । सिंहे ब्रह्मचारिभेदे च ।
जटायुक्ते त्रि० । जटामांस्यां, पिप्पल्यां, वचायां, दमन
वृक्षे च स्त्री० । [भेदे मिश्रो (जङुल) ।
जटु(डु)ल पु० जट-उलच् पृ०डस्य ड वा । देहस्थे कृष्णचिह्न
जठर पु० जायते जन्तुगर्भो यस्मिन् जन-अर ठान्तादेशः ।
कुक्षौ । दृढे कठिने च त्रि० ।
जड त्रि० जलति घनीभवति जल-अच् डस्य ल । हिमानि-
हतमितये, हिमार्ते, मूके बुद्धिहीने, अप्रकाशे, वेदग्र-
हणासमर्थे मूर्खे च । जले, सीसके च न० । जडयति तत्-
कारोति णिच्-अच् । भूमिमालवा भूम्यामलक्याश्च स्त्री० टाप्
जतु न० जन च तोन्तादेशः । अलक्तौ, लाक्षायाञ्च ।
जतुका स्त्री० जतु+इवार्थे कन् । (चामचिका) पक्षिभेदे गन्ध
द्रव्यभेदे, जन्या, पर्पट्या, तिर्यक्फलायां, शिलाजतुनश्च ।
जतुकारी स्त्री० जतु करोति कृ अण् ङीप् । जतुकालतायाम्
जतुरस पु० ६त० । अलक्तके ।
जत्रु न० जन रु तान्तादेश । स्कन्धवक्षसोः सन्धौ कण्ठ-
स्याधोभागस्थितयोरस्थ्नोः ।
जन जनने जुहो पर सक सेट् घटा० । जजन्ति । अजजनत्-
अजनीत् अजानीत् । जनयति जनित । [यति जात
जन जनने दिवा अक० सेट् घटा० । जायते अजनिष्ट । जन
जन पु० जन अच् । लोके पामरलोके, महर्लोकादूर्ध्वलोके च
जनक पु पु० जन-णिच्-ण्वुल् । पितरि मिथिलाधिपे राज
भेदे च । कारणे त्रि । [रामपत्न्याम्
जनकसुता स्त्री जनकस्य सुततया ख्याता । सीतादेव्यां
जनता स्त्री जनानां समूहः तल् । जनसमूहे ।
जननि(नी) स्त्री जन अनि वा ङीप् । मातरि जनिकाय

गन्धद्रव्ये, दयायां, कटुकायां, मञ्जिष्ठायाम्, अलक्तके, जटामांस्याञ्च ।

**जनपद** पु० जनाः पद्यन्ते गच्छन्ति यत्र पद-घ । देशे ।

**जनमेजय** पु० जन+एज-णिच्-खश् मुम् च । परीक्षिद्राजपुत्रे नृपभेदे । पु० । जन्मेजयोऽप्यत्र ।

**जनयितृ** पु० जन-णिच्-तृच् । पितरि । मातरि स्त्री० ङीप्

**जनलोक** पु० महर्लोकोपरि भुवनभेदे ।

**जनवल्लभ** पु०६त० । श्वेतरोहितवृक्षे । जनप्रिये त्रि० ।

**जनश्रुति** स्त्री० जनेषु श्रुतिरेव न दृष्टिर्यस्याः । सत्यमिथ्यानावधारणलोकप्रसिद्धौ किम्वदन्त्याम् ।

**जनस्थान** न० दण्डकारण्यस्य समीपे स्थानभेदे, जनाधारस्थाने च । जनस्थाने भ्रान्तमित्युद्भट ।

**जनान्तिक** न०६त० । जनसमीपे, अप्रकाशे, त्रिपताककरेणान्यानपवार्य्यान्तिके जनान् । अन्योन्यामन्त्रणं यत् स्यात् जनानां तज्जनान्तिकमित्युक्ते नाटकेऽभिनयकर्त्रोरन्योन्यसुप्रभाषणे च ।

**जनार्द्दन** पु० जनैरर्द्यते याच्यते स्वाभिष्टमसौ अर्द्द-याचने कर्म्मणि ल्युट्, जनं जननमर्द्दयति वा अर्द्द-हिंसायां ल्यु वा । विष्णौ ।

**जनाश्रय** पु० जनानां लोकानामाश्रयः । मण्डपे ।

**जनि(नी)** स्त्री० जन-भावे इन् वा ङीप् । उत्पत्तौ अभूतप्रादुर्भावे, जायते गर्भोऽस्याम्, नार्य्याम् । मातरि, स्नुषायां, जायायाञ्च । जायते आरोग्यमनया । ओषधिभेदे जतुकायाञ्च

**जनुस्** न० जन-उसि । उत्पत्तौ ।

**जनु(नू)** स्त्री० जन-उ वा ऊङ् । उत्पत्तौ ।

**जनेष्ट** पु० जनानामिष्ट । रुहरवृक्षे । वृद्धिनामौषधौ, जातीपुष्पे, हरिद्रायां जतुकायाञ्च स्त्री० । [त्माभिमानिनि जीवे ।

**जन्तु** पु० जन-तु । जननयोग्ये प्राणिनि अविद्यादोषात् देहा-

**जन्तुका** स्त्री० जन्तुभिः कायति प्रकाशते कै-क । लाक्षायां, तस्याहि कीटैः प्रकाशः । हिङ्गुले च ।

**जन्तुघ्न** पु० जन्तून् कृमीन् हन्ति टक् । वीजपूरे । विडङ्गे, हिङ्गुनि च न० । प्राणिघातके त्रि० ।

**जन्तुफल** पु० जन्तवः फलेऽस्य । उडुम्बरे ।

**जन्तुमारी** स्त्री० जन्तून् कृमीन् मारयति मृ-णिच्-अण् उप०। निम्बुके (निमकी) । [यत्र हि बहुकीटानां स्थितिः ।

**जन्तुला** स्त्री० जन्तून् कीटान् लाति ला-क । काशतृणे

**जन्मन्** न० जन-मनिन् । उत्पत्तौ, आद्यक्षणसम्बन्धे, गर्भवासयोनिनिःसारणेन देहग्रहणे, न्यायादुक्ते अपूर्व्वदेहादिभिः सम्बन्धे, ज्योतिषोक्ते जन्मलग्ने, स्वावधिके दशमे ऊनविंशे च नक्षत्रे, जन्मलग्ने च ।

**जन्ममास** पु०६त० । 'आरभ्य जन्मदिवसं यावत् त्रिंशद्दिनानि च । जन्ममासः स विज्ञेय वर्ज्जितः सर्व्वकर्म्मस्वि'त्युक्ते जन्मदिनावधिके त्रिंशद्दिनात्मके मासे ।

**जन्मान्तर** न० अन्यत् जन्म मयू० । भवान्तरे परलोके ।

**जन्माष्टमी** स्त्री० श्रीकृष्णस्य जन्मतिथौ मुख्यचान्द्रेण भाद्रमास्य कृष्णाष्टम्याम् ।

**जन्मिन्** पु० जन्मास्त्यस्य ब्रीह्यादि० इनि । प्राणिनि जीवे ।

**जन्य** त्रि० जन-कर्त्तरि यत् । जायमाने । जन-णिच्-यत् । उत्पाद्ये, जनके च । जनीं वधूं वहति नयति वा यत् । नवोढाज्ञातिभृत्यादिषु त्रि० । हट्टे, परीवादे, प्रीतौ, युद्धे, देहे च पु० । भावे यत् । जन्ने न० । मातृवद्धायायां स्त्री० । [प्रीत्-अजपीत् ।

**जप** उच्चारणे वाचि च भ्वा० पर० सक० सेट् । जपति अजा-

**जप** पु० जप-अच् । वेदमन्त्रादेरावृत्तौ असकृदुच्चारणे 'जपस्थानामणं ध्येयसम्मुखीकरणं मुने' इत्युक्ते मन्त्रादिभाषणे च ।

**जपा(वा)** स्त्री० जप-अच् वा पस्य वः । स्वनामख्याते वृक्षे तत्पुष्पे च

**जभ** मैथुने भ्वा० पर० सक० सेट् । जभति अजम्भीत् ।

**जभ** मैथुने भ्वा० पर० सक० सेट् इदित् । जम्भति अजम्भीत्

**जभ** जृम्भणे भ्वा० आत्म० अक० सेट् इदित् । जम्भते अजम्भिष्ट

**जभ** नाशे चुरा० उभ० सक० इदित् । जम्भयति-ते अजजम्भत् त

**जभ** जृम्भणे भ्वा० आत्म० सेट् । जभते अजम्भिष्ट । [जान्ता

**जम** भक्षे भ्वा० पर० सक० सेट् । जमति अजमीत् । जमिता-

**जमदग्नि** पु० । परशुरामस्य पितरि मुनिभेदे ।

**जम्पती** पु० द्वि० व० । जाया च पतिश्च द्व० जायाया जम् । दम्पत्योः स्त्रीपुरुषयोः । [पङ्के, शैवाले, केतक्याञ्च ।

**जम्बाल** पु० जम्ब-घञ् जम्बमालाति आदत्ते आ+ला-क ।

**जम्बालिनी** स्त्री० जम्बाल+अस्त्यर्थे इनि । नद्याम् ।

**जम्बीर** पु० जम-विच् वीर-विक्रान्तौ क कर्म० । (गोड़ानेबु) वृक्षभेदे, मरुवके, सिताऽर्ज्जके च ।

**जम्बु(म्बू)** स्त्री० जम-कू नि० नुक् ६प० वा ऊङ् (जाम) । इति ख्याते वृक्षे । तस्याः फले अण् तस्य वा लुप् । जाम्बवम् । वा ह्रस्वे । जम्बु चाप्यत्र ।

**जम्बुक** पु० जम्बुरिव कायति कै-क । (गोलावजाम) इति ख्याते वृक्षे, श्योनाकभेदे च । स्वार्थे कन् जम्बुशब्दार्थे

**जम्बुद्वीप** पु० जम्बुवृक्षचिह्नितो द्वीपः शाक० । सप्तद्वीपमध्ये स्वनामख्याते द्वीपभेदे ।

जम्बूक पु० जम उक्कादि नि० । शृगाले, नीचे, वरुणे, जम्बूकार्थे च (गोलापजाम) द्राक्षाभेदे स्त्री ।

जम्भ पु जभि घञ् । दैत्यभेदे दन्ते जम्बीरे अंशे, हनौ, तूणे च । भावे घञ् । भक्षणे जृम्भणे च । अ । जृम्भायां स्त्री० ।

जम्भभेदिन् पु० जम्भं दैत्यं भिनत्ति भिद-णिनि । इन्द्रे जम्भभेदनादयोऽप्यत्र ।

जम्भला स्त्री जम्भ जृम्भां लाति ला क । राक्षसीभेदे तस्याः स्मरणे ज्वरनाशात् ज्वरनाशे च तत्पूर्व्वाङ्गजृम्भाया अपि नाश 'समुद्रस्योत्तरे तीरे जम्भला नाम राक्षसी'ति ।

जय पु० जि भावे अच् । शत्रूणामभिभावने नारायणपार्षदे 'एतौ तौ पार्षदौ मह्यं जयो विजय एव चे'ति भागवतम् विराटपुरस्थे गुप्तपाण्डवे युधिष्ठिरे च ।

जयढक्का स्त्री जयसूचिका ढक्का । वाद्यभेदे ।

जयद्रथ पु० जयन् रथो यस्य । सिन्धुराजे दुर्योधनभगिनीपतौ स्वनामख्याते नृपे वृक्षे भीमे च ।

जयन्त पु० जि-झच् । इन्द्रस्य पुत्रे चन्द्रे, शिवे, विराटपुरस्थे गुप्तपाण्डवे भीमे च ।

जयन्ती स्त्री० जयति रोगान् अनया जयो धानि वा जि-झच् ङीप् । जरायाम् मादेव्याम् दुर्गाभेदे 'जयन्ती मङ्गला काली'ति मन्त्र । पताकायाम् जयन्तीवृक्षे 'रोहिणीसहिता कृष्णा मासे च श्रावणेऽष्टमी । अर्द्धरात्रादधश्चोर्द्ध्वं कलयापि यदा भवेत् जयन्ती नाम सा प्रोक्ते'त्युक्तलक्षणे योगभेदे च ।

जयपत्र न । जयसूचकं पत्रम् । पूर्व्वोत्तरक्रियायुक्तं निर्णयान्ते यदा नृप । प्रदद्यात् जयिने लेख्यं जयपत्रं तदुच्यते इत्युक्ते पत्रे ।

जयपाल पु० जयेन मलजयेन पालयति पालि अच् । स्वनामख्याते धारकफलके वृक्षे । इन० । विष्णौ, नृपे च ।

जया स्त्री० जि-अच् । हरितक्याम्, जयन्त्याम्, दुर्गायां, तत्सहचर्य्याम्, गणिकारिकायां, विजयायां (भङ्गा) पताकाभेदे, नीलदूर्व्वायाम्, पाल्याद्यर्थे ज्योतिषोक्ते 'त्रयोदश्यष्टमी चैव तृतीया च जया मता'वुक्ते तिथिसमुदाये च ।

जय्य त्रि जेतुं शक्य जि-यत् क्षय्यजय्यौ शक्यार्थे नि० । जेतुं शक्ये

जरठ त्रि० जॄ-अठच् । कर्कशे, कठिने, पाण्डौ, जीर्णे च ।

जरण पु न । जॄ णिच् ल्यु । जीरके, हिङ्गुनि, सौवर्चले, कृष्णोपधौ च । कासमर्दे पु० । कृष्णजीरके स्त्री० ।

जरत् त्रि० जॄ-अतृन् । वृद्धे जीर्णे, जरायुक्ते पुरातने च । स्त्रियां जरती ।

जरत्कारु पु० मनसादेव्याः पत्यौ मुनिभेदे । मनसादेव्यां स्त्री० ।

जरद्गव पु० जरन् गौः अच् समा० । वृद्धोक्षे, गृध्रभेदे च ।

जरन्त पु० जॄ-झच् । महिषे । जीर्णे त्रि० ।

जरा स्त्री० जॄ-अङ् । शैथिल्यापादकावस्थाभेदे ।

जरायु पु० जरामेति इण् उण् । गर्भावरणचर्मणि गर्भाशये जटायौ पक्षिणि च ।

जरायुज त्रि० जरायुतो जायते जन-ड । 'पशवश्च मृगाश्चैव व्यालाश्चोभयतोदत । रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः' इत्युक्ते पश्वादिमनुष्यान्तेषु 'यत्र चर्माकृति सूक्ष्मा जरायु सा निगद्यते । शुक्रशोणितयोर्योगस्तस्मिन् संजायते यतः । तत्र गर्भो भवेद्यस्मात् तेन प्रोक्तो जरायुज' इत्युक्ते गर्भे च । [द्वियुक्तनिहतौ नृपभेदे ।

जरासन्ध, पु० 'जरया सन्धितो यस्मात् जरासन्धस्ततोऽभव

जरूथ पु न० जॄ ऊथन् । मांसे । [अज(र्च)र्च्छी(र्जी)त्

जर्च(र्च्छ)(र्ज) उक्तौ भर्त्सने च तु पर सक० सेट् । जर्च(र्च्छ)(र्ज)ति

जर्ज्जर पु० न० । जर्ज्ज-अरन् । शक्रध्वजे, शैलजे गन्धद्रव्ये च । जीर्णे त्रि० । [द्रव्ये । जीर्णे त्रि०

जर्ज्जरीक त्रि० जर्ज-ईकन् पर्फरीकादि० नि० । बहुच्छिद्रे

जर्भ उक्तौ निन्दायाञ्च तु०पर०सक०सेट् । जर्भति अजर्भीत्

जर्त्तिल पु० जॄ-तिल् कर्म० । आरण्यतिले । [अजल्पीत् ।

जल्प भाषणे उक्तौ रवणे च भ्वा पर सक० सेट् । जल्पति

जल आच्छादने चुरा उभ० सक सेट् । जालयति ते अजीजलत् त । [अजालीत् । जल जाड्य ।

जल तीक्ष्णतादिभवने भ्वा पर० सक सेट् ज्वलादि । जलति

जल त्रि जल-अच् । जडे । उदके ह्रीबेरे गन्धद्रव्ये, ज्योतिषोक्ते लग्नावधिके चतुर्थस्थाने, पूर्व्वाषाढानक्षत्रे च न० ।

जलकण्टक पु० जलस्य कण्टक इव । शृङ्गाटके । (पानफल) कुम्भीरे च ।

जलकपि पु० जले कपिरिव । शिशुमारे जलजन्तुभेदे (शौशक)

जलकरङ्क पु० जलस्य करङ्क इवाधार । नारिकेले, मेघे च । जले करङ्क इव । शङ्खे जलजतायाञ्च ।

जलकाक पु जले काक इव । (पानकौड़ी) पक्षिभेदे ।

जलकुन्तल पु जलस्य कुन्तल केश इव । शैवाले ।

जलचर पु० जलेचरति चर-टच् । ग्राहादिषु जलजन्तुषु ।

जलज पु जले जायते जन ड । शैवले वानीरवृक्षे हिज्जल वृक्षे, मत्स्ये ज्योतिषोक्तेषु कर्कटमीनमकरान्त्याद्धराशिषु च । सारभेदे, पद्मे च न० । शङ्खे पु न । जलजातमात्रे त्रि ।

जलजन्तु पु इत जलस्थेषु ग्राहादिषु प्राणिषु । [(जोंक)

जलजन्तुका स्त्री० जलजन्तु+अल्पार्थे कन् । जलौकायाम्

**जलद्** पु० जलं ददाति दा-क । मेघे, कर्पूरे च जलदातरि त्रि०
**जलदागम** पु० जलदानामागमो यस्मिन् काले । वर्षाकाले
**जलधर** पु० जलानां धरः धृ-अच् । मेघे-कर्पूरे,समुद्रे,तिनिश
वृक्षे च । जलधारिणि त्रि० । [छन्दोभेदे च ।
**जलधरमाला** स्त्री० ६त० । मेघपङ्क्तौ, द्वादशाक्षरपादके
**जलधि** पु० जलानि धीयन्तेऽत्र धा-कि । समुद्रे । तोयधि-
प्रभृतयोऽप्यत्र, चतुःसङ्ख्यायां संख्याभेदे, 'जलधिश्चान्त्यं
मध्यं परार्द्धमि'ति लीलावती । [याम् ।
**जलधिजा** स्त्री० जलधेर्जायते जन-ड । लक्ष्म्याम् । [सङ्ख्या-
**जलनिधि** पु० जलानि निधीयन्तेऽत्र नि+धा-कि । समुद्रे चतु'-
**जलनिर्गम** पु० जलाना निर्गमः । नद्यादेर्जलभ्रमणे,अधःस्थि-
तस्य जलस्योर्द्ध्वगतौ, प्राकारादिषु जलनिःसारणजालके च
**जलनीली** स्त्री० जलं नीलयति नील+तत्करोति णिच्-अण् ।
शैवाले । स्वार्थे कन् जलनीलिकाप्यत्र ।
**जलपृष्ठजा** स्त्री० जलस्य पृष्ठे उपरि जायते जन ड । शैवाले
**जलप्राय** न० जलं प्रायं यत्र । जलबहुले देशे ।
**जलप्लव** पु० जले प्लवते प्लु-अच् । (उदविराल) जलजन्तुभेदे
**जलबुद्बुद** न० ६त० । जलविम्बे । [मत्स्यरङ्कविहगे
**जलमद्गु** पु० जले मद्गुरिव निरन्तरमज्जनोन्मज्जनत्वात् ।
**जलमार्ग** पु० ६त० । प्रणाल्याम् (नाला) (नरदमा)
**जलमुच्** पु० जलानि मुञ्चति मुच-क्विप् । मेघे ।
**जलमोद** न० जलेन जलयोगेन मोदयति सेविनं मुद-णिच्-
अच् । उशीरे (वेणारमूल) । [धारायन्त्रे ।
**जलयन्त्र** न० जलानामुत्क्षेपणार्थं यन्त्रम् । (फोयारा) ख्याते
**जलवल्कल** पु० जलानां वल्कल इव । कुम्भिकायाम् ।
**जलविषुव** न० रवेः तुलाराशिसंक्रान्तौ ।
**जलवेतस** पु० जले जातो वेतसः शाक० । वेतसभेदे । [च
**जलव्याल** पु० जलस्थो व्यालो हिंस्रः । सर्पभेदे,क्रूरकर्मणि जलौ
**जलशायिन्** पु० जले समुद्रजले शेते शी-णिनि । नारायणे ।
**जलशुक्ति** स्त्री० जलस्य शुक्तिरिव । शम्बके ।
**जलशूक** न० जलस्य शूकमस्यम् । शैवाले ।
**जलशूकर** पु० जलस्य शूकर इव । कुम्भीरे । [(जोंक)
**जलसर्पिणी** स्त्री० जले सर्पति सृप-णिनि । जलौकायाम्
**जलहस्तिन्** पु० जले हस्तीव । ग्राहाख्ये जलजन्तौ । ७त० ।
जलस्थे हस्तिरूपे जन्तुभेदे ।
**जलहास** पु० जलानां हास इव शुभ्रत्वात् । फेने, समुद्रफेने च
**जलाधार** पु० ६त० । तडागादौ जलाशये, समुद्रे च । जलमा-
धारो यस्य । शृङ्गाटके । उशीरे न० । जलस्थिते त्रि०

एवं जलाशयादयोऽपि शब्दा अत्रार्थे बोध्याः ।
**जलार्द्रा** स्त्री० जलेनार्द्रा । जलेनार्द्रीकृते व्यजने ।
**जलालुक** न० ६त० । शालूके, पद्मादिकन्दे स्वनामख्याते च ।
**जलावर्त्त** पु० आ+वृत-णिच्-अच् ६त० । स्रोतो जलानां भ्रमणे
**जलूका** स्त्री० जलमोको यस्याः पृ० । जलौकायाम् ।
**जलेचर** त्रि० जले चरति चर-टक् अलुक् स० । हंसादौ ।
**जलेन्धन** पु० जलान्येवेन्धनानि यस्य । वाडवानले । [हृन्नि
**जलेरुहा** स्त्री० जले रोहति-रुह-अच् अलुक् स० । वृद्ध्
**जलेशय** पु० जले शेते शी-अच् अलुक् स० । मत्स्ये ।
**जलेश्वर** पु० ६त० । वरुणे, समुद्रे च ।
**जलोच्छ्वास** पु० जलानुच्छ्वसन्त्येभिः उद्-श्वस-घञ् । प्रवृद्ध-
जलस्य निर्गममार्गे, अधिकजलस्य सर्वतोवहने च ।
**जलोदर** न० जलप्रधानमुदरं यस्मात् ५ब० । उदरामयरोगभेदे ।
**जलोद्भवा** स्त्री० जले उद्भवति उद्+भू-अच् स्वल्पब्राह्मीशाके
**जलोकस्** स्त्री० जलमोको यस्यास्तस्याः । (जोंक) ख्यातायां
रक्तपायाम् । अमरमते ब०व० ।
**जलौकस** पु० जलमोकोऽस्यस्य अच् । (जोंक) रक्तपायां
जलौकसेनेव रक्ताकर्षणनिपुणेन वेश्याजनेनेति वासवदत्ता
**जलौका** स्त्री० उप क नि० क जलमोकः स्थानं यस्याः ।
(जोंक) रक्तपायाम् ।
**जल्प** वाग्विशेषे भ्वा० पर० सक० सेट् । जल्पति अजल्पीत् ।
'मयि जल्पति कल्पनाधिनाथे' इति न्यायशिरोमणिः ।
**जल्प** पु० जल्प-घञ् । परमतनिराकरणपूर्वकं स्वमतस्थापन
रूपे वाक्यभेदे, तत्त्वबुभुत्सोः कथारूपे वादे, कथने च ।
**जल्पाक** त्रि० जल्प-षाकन् । बहुजल्पितवाक्यरटनशीले(वाचाल)
**जव** संघाते चुरा० उभ० अक० सेट् इदित् । जम्बयति-ते अजजम्बत्
**जव** पु० जु-अप् । वेगे ।
**जवन** पु० जु-युच् । वेगवति शीघ्रगे घोटके । देशभेदे, जाति-
भेदे च । [(परदा) ख्याते वस्त्रभेदे ।
**जवनिका** स्त्री० जवन्त्यस्यां जु-ल्युट् स्वार्थे कन् । (कानात्)
**जवस** न० जु-असच् । घासे ।
**जविन्** पु० जवोऽस्त्यस्य इनि । घोटके, उष्ट्रे च । वेगवति त्रि०
**जष** वधे भ्वा० उभ० सक० सेट् । जषति ते अजाषीत्-अजषीत्
**जस** मोक्षणे दिवा० पर० सक० सेट् । जस्यति अजसत्-अजा-
सीत् अजसीत् । [अजीजसत् त ।
**जस** वधे अनादरे च चुरा० उभ० सक० सेट् । जासयति ते
**जस** रक्षणे चु० उभ० सक० सेट् इदित् । जंसयति ते अजजंसत् त
**जहत्स्वार्था** स्त्री० जहत् स्वार्थो यया । लक्षणाभेदे, यथा काष्ठेभ्य

**जहदजहल्लक्षणा** स्त्री० जहच्च अजहच्च स्वार्थोयया तादृशी लक्षणा। वाच्यार्थैकदेशत्यागेनैकदेशवृत्तौ लक्षणायाम् यथा सोऽयं देवदत्त इत्यत्र तत्कालैतत्कालरूपार्थत्यागेन केवलदेवदत्तमात्रार्थबोधनात् वाच्यार्थैकदेशवृत्तिता।

**जहल्लक्षणा** स्त्री० जहत् स्वार्थोयाम् उत्तरपदलोप कर्म०। जहत्स्वार्थायां लक्षणायाम्। यथा आयुर्घृतम्।

**जह्नु** पु० चन्द्रवंशीये राजर्षिभेदे येन गङ्गावतरणकाले गङ्गा पीतेतिपुराणम्। [गङ्गायाम्।

**जह्नुतनया** स्त्री जह्नोस्तनयेव तदुदरं गत्वा ततो नि सरणात्।

**जह्नुसप्तमी** स्त्री० वैशाखशुक्लसप्तम्याम्।

**जागर** पु जागृ-अप्। निद्राभावे जागरणे कवचे च।

**जागरित** न० जागृ क्त। इन्द्रियैर्विषयोपलब्धियोग्यावस्थायाम्। जीवो हि स्वप्नादिहेतुकर्मनाशे इन्द्रियविषयान् अनुमेयान् स्थूलविषयान् व्यावहारिकांश्च पदार्थान् यस्यामवस्थायामनुभवति तज्जागरितम्। कर्तरि-क्त। जागरणयुक्ते त्रि०। [विश्वसंज्ञे जीवे।

**जागरितस्थान** पु० जागरित स्थानमस्य। वेदान्तोक्ते

**जागरूक** त्रि० जागृ ऊक। जागरणशीले, अप्रमत्ते च।

**जागर्य्या** स्त्री जागृ-श। जागरणे। अ। जागराप्यत्र। [रोन्

**जागृ** निद्राभावे अदा पर०अक० सेट् जया। जागर्ति अजागः

**जागृवि** पु० जागृ क्विन्। अग्नौ, नृपे च।

**जाग्रत्** न० जागृ-शतृ। इन्द्रियादिभि विषयज्ञानयोग्यावस्थायाम्। तद्वति त्रि स्त्रियां ङीप्।

**जाङ्गल** पु० जङ्गले भव, तत् शीलित यस्य वा अण्। कपिञ्जले मृगे निर्जलदेशे हरिणादिषु मांसे कुरुदेशसमीपस्थे देशे च तद्देशस्थे त्रि स्त्री० ङ।

**जाङ्गलि** पु जङ्गल परिशीलितमस्य जङ्गल इञ्। विषवैद्ये।

**जाङ्गलिक** पु० जाङ्गुल्या विषविद्यया चरति ठक्। विषवैद्ये।

**जाङ्गली** स्त्री जाङ्गलेरियम् अण् ङीप्। विषविद्यायाम्, शूकशिम्ब्याञ्च।

**जाङ्गुली** स्त्री० गम-यङ् उलच् नि ङीप्। विषविद्यायाम्।

**जाङ्घिक** त्रि जङ्घाभ्यामाजीवति वेतनादि० ठक्। धावके, जङ्घाजीविनि। उष्ट्रे पु०। [च त्रि०।

**जात** न० जन-क्त। समूहे, व्यक्ते जन्मनि च। उत्पन्ने,प्रशस्ते

**जातक** न० जातस्य हितम् कन्। जातस्य शुभाशुभनिर्णायके हस्त्जातकादौ ग्रन्थे, जातकर्मरूपे संस्कारभेदे च।

**जातकर्म्मन्** न० जातस्य कर्म्म सम्बन्धात् यमि प्राशनादि। संस्कारभेदे।

**जातमात्र** त्रि० जात एव मयूर०। सद्योजाते बालकादौ।

**जातरूप** न० जात रूपमस्य। प्रशस्तवर्णे, स्वर्णे।

**जातवेदस्** पु० जातान् प्राणिन विन्दते जठरानलत्वेन विद-लाभे असुन्। वह्नौ चित्रकवृक्षे च।

**जाति** स्त्री० जन-क्तिन्। जन्मनि, अनुगतैकाकारबुद्धिजननसमर्थे, अवयवव्यङ्ग्ये सकृदुपदेशव्यङ्ग्ये च धर्म्मभेदे यथा गोत्व-मनुष्यत्वादि ब्राह्मणत्वशूद्रत्वादि च। व्याकरणोक्ते पौत्राद्यपत्यात्मके गोत्रे, वेदशाखाभेदे च। न्यायोक्ते साधर्म्य वैधर्म्याभ्यां व्याप्तिनिरपेक्षाभ्यां वादिवाक्येषु दूषणदानरूपे वाक्ये, षड्जादिषु सप्तसु स्वरेषु अलङ्कारभेदे, चुल्ल्याम्, आमलक्यां, काम्पिल्ले छन्दसि, जातिफले, मालत्यां,(चामेली) पुष्पप्रधानवृक्षे च।

**जातिकोष** न० जात्याः कोषमिव (जायफल) जात्याम् जय-न्त्याम् स्त्री० ङीष्।

**जातिब्राह्मण** पु जात्या ब्राह्मण। 'तप श्रुताभ्यां यो हीनो जातिब्राह्मण एव स' इत्युक्ते निन्द्ये विप्रे।

**जातिशस्य** न० जात्याः शस्यम (जायफल) जातिफले।

**जातिस्मर** त्रि जाति पूर्वजन्म स्मरति स्मृ-अच्। अतीतजन्मवृत्तान्तस्मृतियुक्ते जने।

**जाती** स्त्री० जन-क्तिच् ङीप्। मालत्याम् (चामेली) तत्पुष्पेऽपि लताभेदे च यस्याः फल (जायफल)।

**जातीफल** न० ह्त (जायफल) इतिख्याते फले।

**जातीय** त्रि० जातौ भव छ। समानजातियुक्ते सजातीये किञ्चिन्न्यूनार्थात् जातीयप्रत्यय। प्रकारार्थे। यथा तार्किकजातीय तार्किकप्रकार। [अविकल्पे, निषेधे च।

**जातु** अव्य जै बध तुन्। कदाचिदर्थे, पदे निन्दायाम्

**जातुधान** पु जातु कदाचिद्गत्वा प्राप्य भग सन्निधानमस्य। राक्षसे। [निर्म्मिते पदार्थे।

**जातुष** त्रि जतुनो विकार अण् षुगागम। जतुविकार-

**जातूकर्ण्य** पु० मुनिभेदे।

**जातेष्टि** स्त्री० यज क्तिन् इष्टि जातस्य संस्काराय कर्त्तव्या इष्टि यागभेद। जातकर्माख्ये संस्कारभेदे।

**जातोक्ष** पु० जात प्राप्तद्वयावस्थ उक्षा टच् समा। युवबृषे

**जात्य** त्रि० जातौ भव यत्। कुलीने, श्रेष्ठे, कान्ते च।

**जात्यन्ध** त्रि०जातौ जन्मप्रभृत्यन्ध। जन्मान्धे 'जात्यन्धोवधि रसवे वि मनु।

**जात्युत्तर** न० जात्या व्याप्तिविधुराभ्यां साधर्म्यवैधर्म्याभ्याम् उत्तरम्। न्यायोक्ते असदुत्तरे।

**जानकी** स्त्री० जनकस्येयम् दुहितृत्वेन अण् । सीतायाम् ।

**जानपद** त्रि० जनपदे भवः, तत आगतो वा अण् । देशस्थे देशादागते च । जनपदाना वृत्तौ स्त्री० ङीप् ।

**जानु** न० जन-ञुण् । ऊरुजङ्घयोर्मध्यभागे (आँठु) स्वार्थे कन् अर्थेवार्थे । [रामे ।

**जामदग्न्य** पु० जमदग्नेरपत्यम् यञ् । जमदग्निपुत्रे परशु-

**जामातृ** पु० जायां माति मिनोति मिमीते वा तृच् । दुहितृ पत्यौ, वल्लभे, स्वामिनि च ।

**जामि** स्त्री०जन-मिण् नि०वृद्धि' । भगिन्यां दुहितरि,स्नुषायां, कुलस्त्रियां,सन्निहितस्त्रियाम्,'जामयो यानि गेहानी'ति मनु

**जाम्बवत्** पु० रामायणप्रसिद्धे भल्लूकराजे ।

**जाम्बवती** स्त्री० जाम्बवतोऽपत्यं स्त्री । कृष्णस्य भार्याभेदे जाम्बवत्कन्यायाम् 'शाम्ब! शाम्ब! महाबाहो! शृणु जाम्बवतीसुते'ति हरिवंश' । नागदमन्याञ्च ।

**जाम्बूनद** न० जम्बुनदे भवम् अण् । स्वर्णे 'तीरमृत् तद्रसं प्राप्य सुखवायुविशोषिता । जाम्बूनदाख्यं भवति सुवर्णं सिद्धभूषणमित्युक्ते सुवर्णभेदे (तद्रसं जम्बुरसम्) धुस्तूरे च

**जायक** न० जयति गन्धान्तरं जि-ण्वुल् । पीतवर्णे सुगन्धिकाष्ठे

**जाया** स्त्री०जन-यक्। 'पतिर्भार्यां संप्रविश्य गर्भोभूत्वेह जायते जायायास्तद्धि जायात्वं यदस्यां जायते पुन'रित्युक्तायां स्त्रियाम्, ज्योतिषोक्ते लग्नत' सप्तमे स्थाने च ।

**जायाजीव** पु० जायया जीवति जीव-क । नटे ।

**जायानुजीविन्** पु० जायामनुजीवति अनु+जीव-णिनि । नटे वेश्यापतौ, बके, दुःस्थे च ।

**जायु** पु० जयति रोगान् जि-उण् । औषधे ।

**जार** पु० जीर्यतेऽनेन जॄ-करणे घञ् । उपपतौ ।

**जारज** त्रि० जारात् जायते जन-ड । अनियुक्तायामुपपति-जाते कुण्डे,गोलके च पुत्रे ।

**जारणी** स्त्री० जारयत्यनया चु०जॄ-करणे ल्युट् । स्थूलजीरके

**जाल** पु०चु० जल सम्वरणे घञ्,जल-घातने, णिच्-अच्,जले-निष्यते इत्यण् वा ।कटम्बद्धे गवाक्षच्छिद्रे 'गवाक्षजालैर-भिनिष्पतन्त्य' इति भट्टि' । मत्स्यधारणार्थे शणसूत्रनिर्मिते स्वनामख्यात आनाये, अस्फुटकलिकायां,क्षुद्रफले, मृग-पक्ष्यादिधारणार्थे पाशे च । गवाक्षे,दम्भे ,समूहे,इन्द्रजाले च न० । स्वार्थे कन् । गवाक्षच्छिद्रे पु० । मोचकफले नव-कलिकासमूहे, चारके च न० ।

**जालकारक** पु० क-ण्वुल् इ०व० । जालस्य मक्षिकादिपातनाय मागकारके-मर्कटे (माकडसा)-ग्राह्यस्य छलिमसञ्च कर्करि त्रि०

**जालन्धर** पु० त्रिगर्ताख्ये देशे तद्देशस्थे जने ब०व० ।

**जालपाद** पु० जालमिव पादोऽस्य पाद्भाव० । हंसे (गदारि) पक्षिभेदे च । [भेदे ।

**जालबर्बुरक** पु० जालाकारो बर्बुरकः । (फांटाबावला) वृक्ष

**जालिक** पु० जालेन चरति जाल+ठन् । वागुरिके जाल-जीविनि, धीवरे, मर्कटके च । जालोपजीविनि त्रि० ।

**जालिनी** स्त्री० जाल+अस्त्यर्थे इनि । चित्रशालायां, कोषातक्याम्, (झिङ्गा) तस्याः पक्कफलकोषे हि जालवत्त्वम् ।

**जाली** स्त्री० जालं विद्यतेऽस्या अच् गौरा० ङीप् । (झिङ्गा) लताभेदे । [आमलक्याञ्च ।

**जाल्म** त्रि० जालयति अपवारयति न । पामरे, मूर्खे, क्रूरे,

**जाबाल** पु० जबालाया अपत्यम् अण् । मुनिभेदे ।

**जाह्नवी** स्त्री० ' जानुद्वारा पुरात्यक्ता अन्तः संपीय कोपतः । तस्य कन्यास्वरूपा च जाह्नवी तेन कीर्त्तिते'त्युक्तनिर्वच-नायां गङ्गायाम् ।

**जि** जये भ्वा० पर० सक० अनिट् । जयति अजैषीत् ।

**जिगीषा** स्त्री० जि-सन् अ । जयेच्छायां, प्रकर्षे, उद्यमे च ।

**जिज्ञासु** त्रि० ज्ञातुमिच्छुः ज्ञा-सन् उ । ज्ञातुमिच्छौ,मुमुक्षौ च

**जित** न० जि-भावे क्त । जये । कर्मणि क्त । अभिभूते पराजिते जयलब्धे, वशीकृते,आयत्तीकृते च ।

**जितकाशिन्** त्रि० जितेन जयेन काशते प्रकाशते णिनि । जिताहवे, जयिनि च । [जितेन्द्रिये ।

**जितात्मन्** त्रि० जित-वशीकृत आत्मा इन्द्रियं मनो वा येन ।

**जितेन्द्रिय** त्रि० जितानि वशीकृतानीन्द्रियाणि येन । 'श्रुत्वा दृष्ट्वा तथा स्पृष्ट्वा भुक्त्वा घ्रात्वा च यो नरः । न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रिय' इत्युक्ते हर्षविषादशून्ये शान्ते जने । कामदवृक्षे पु० ।

**जित्य** पु० जि-क्यप् । हलहले कटभूमिसमीकरणार्थं स्थूलकाष्ठे (मद्र) । अस्य स्त्रीत्वोक्तिः प्रामादिकी ।

**जित्वर** जि-क्वरप् । जयशीले । स्त्रियां ङीप् ।

**जिन** पु० जयति संसारं जि-नक् । बुद्धे,विष्णौ च । जित्वरे त्रि०

**जिम** भक्षे भ्वा० पर० सक० सेट् । जेमति अजेमीत् ।

**जिरि** हिंसायां स्वा०पर०सक० सेट् । जिरिणोति अजिरायीत्

**जिव** प्रीणने भ्वा०पर०सक०सेट् इदित् । जिन्वति अजिन्वीत्

**जिष** सेके भ्वा० पर० सक० सेट् । जेषति अजेषीत् ।

**जिष्णु** पु० जिष-ग्स्नु । अर्ज्जुने, इन्द्रे, विष्णौ, सूर्य्ये, वसुषु च । जित्वरे त्रि० ।

**जिह्म** त्रि० हा-मन् द्वित्वादि नि० । कुटिले, मन्दे,तगरवृक्षे च

**जुग** त्यागे भ्वा०पर०सक०सेट् इदित् । जुङ्गति । अजुङ्गीत्

**जुगुप्सा** स्त्री० गुप-निन्दायां स्वार्थे सन्-अ टाप् । निन्दायाम्

**जुङ्ग** पु० जुगि-अच् । वृद्धदारकवृक्षे वा स्त्री० इति केचित् ।

**जुटिका** स्त्री० जट-संहतौ टाप् पृ०। शिखायां,संहतकेशे च ।

**जुड** प्रेरणे चु०उभ०सक०सेट् । जोडयति ते अजूजुडत् त

**जुड** बन्धे तुदा०कुटा०पर०सक०सेट् । जुडति अजुडीत् जुजोड

**जुड** गतौ तु०पर०सक०सेट् । जुडति अजोटीत् । [जोतत् त

**जुत** दीप्तौ भ्वा० आत्म०अक०सेट् । जोतते अजोतिष्ट। अजु-

**जुन** गतौ तु० पर० सक० सेट् । जुनति अजोनीत् ।

**जुर्व्व** वधे भ्वा०पर०सक०सेट्। जूर्व्वति अजूर्व्वीत् । जूर्त्तः जूर्त्तिः

**जुल** पेषणे चु०उभ०सक०सेट् । जोलयति ते अजूजुलत् त

**जुष** तृप्तौ तर्के च वा चु०उभ० पक्षे भ्वा०पर०सक०सेट् । जोष-
यति ते जोषति अजूजुषत् त अजोषीत् ।

**जुष** हर्षे अक०,सेवने सक०तुदा०आत्म०सेट्। जुषते अजोषिष्ट ।

**जुष्ट** न० जुष-क्त । उच्छिष्टे । सेविते त्रि० ।

**जुहू** स्त्री० जुहोत्यनया हु-क्विप् नि० । पलाशकाष्ठनिर्मिते
अर्द्धचन्द्राकृतिरूपे यज्ञपात्रभेदे, पर्णमये यज्ञपात्रभेदे च
'यस्य पर्णमयी जुहूर्भवती'ति श्रुतिः ।

**जूट** पु० जट बन्धे घ पृ० । बन्धे, समूहे, जटायाञ्च ।

**जूति** स्त्री० जु-क्तिन् नि० दीर्घः । वेगे ।

**जूर** वयोहानौ अक० वधे सक० दिवा० आत्म० सेट् । जूर्य्यते
अजूरिष्ट । जूर्णः ।

**जूर्ण** पु० ज्र्-क्त । (उलुखड़) तृणभेदे ।

**जूर्त्ति** स्त्री० ज्वर-क्तिन् संप्रसारणम् । ज्वरे ।

**जूष** वधे भ्वा०उभ०सक०सेट्। जूषति ते अजूषीत् अजूषिष्ट

**जूष** पु०न० जूष-घञ् अच् वा। मुद्गादीनां क्वाथे (यूष) ।

**जूषण** न० जूष-ल्यु । धातपुष्पाम् (धाइफुल) ।

**जृ** न्यक्कारे भ्वा०पर०सक० अनिट् । जरति अजार्षीत् ।

**जृभ** जृम्भणे (हाइतोला) भ्वादि० आत्म० सक० सेट् इदित् ।
जृम्भते अजृम्भिष्ट ।

**जृभ** जृम्भे भ्वा०आत्म०सक०सेट्। जर्भते अजर्भिष्ट ।

**जृम्भ** पु० जृभि-घञ् । मुखविकाशे (हाइतोला) अ टाप्। अत्रैव
स्त्री०। ततः स्वार्थे कन् अत इत्त्वम् जृम्भिकाप्यत्रैव ।

**जृम्भकास्त्र** न० जृभि-णिच्-ण्वुल् कर्म० । विपक्षस्य जृम्भोप
लक्षितनिद्राकारकेऽस्त्रे ।

**जृम्भिणी** स्त्री० जृभि-णिनि । एलापर्ण्याम् ।

**जॄ** जरायां दिवा०पर०अक०सेट् षडादि० । जीर्य्यति अजरत्
अजारीत् । जीर्णः । जरा । जरयति ।

**जॄ** जरायां वा चुरा०उभ० पक्षे क्र्यादि० षादि० अक०सेट् ।
जारयति ते जृणाति । अजीजरत् अजरत्-अजारीत्

**जेमन** न० जिम-ल्युट् । भक्षणे ।

**जेय** त्रि० जि-कर्म्मणि यत् । जेतव्यमात्रे ।

**जेष** गतौ भ्वा० आत्म०सक०सेट् । जेषते अजेषिष्ट । णिच्
अजिजेषत् त । [अजिजेहत् त

**जेह** यत्ने भ्वा०आत्म० अक० सेट् । जेहते अजेहिष्ट। णिच् ।

**जै** क्षये भ्वा०पर०अक० अनिट् । जायति अजासीत् । जान ।

**जैत्र** त्रि० जेतैव जेतृ प्रज्ञादि० अण् । जयशीले । पारदे पु०।
औषधे न० ।

**जैत्री** स्त्री० जेत्रैव जेतृ+स्वार्थे अण् ङीप् । जयन्तीवृक्षे ।

**जैन** पु० जिनोदेवतास्य अण् । बौद्धधर्म्मावलम्बिनि अर्हदुपासके

**जैमिनि** पु० वेदमीमांसाशास्त्रकर्त्तरि व्यासशिष्ये मुनिभेदे ।

**जैवातृक** पु० जीव-आतृच् ततः-अण् वृद्धिश्च। चन्द्रे, औषधे,
कर्पूरे च। दीर्घायुष्के त्रि० ।

**जोङ्गक** पु०न० । जुगि-वर्ज्जने ण्वुल् नि० । अगुरुचन्दने ।

**जोषम्** अव्य०जुष-अम् । सुखे,प्रशंसायां,तूष्णीमर्थे, लङ्घने च।

**जोषा** स्त्री० जुष्यते जुषते वा जुष-घञ्। नार्य्याम् ।

**जोषित्** स्त्री० जुष-इति । नार्य्याम् ।

**ज्ञ** पु० ज्ञा-क । ब्रह्मणि, पण्डिते, सोमपुत्रे,-बुधे च ।

**ज्ञप** मारणे, आलोके, निशाने,तोषणे, स्तुतौ च चुरा० उभ०
सक० सेट् घटा० । ज्ञपयति ते अजिज्ञपत्-त ।

**ज्ञपित** त्रि० ज्ञप क्त । मारिते, ज्ञापिते च नि० ज्ञप्तोऽप्यत्र ।

**ज्ञप्ति** स्त्री० ज्ञप-क्तिन् । बुद्धौ ।

**ज्ञा** बोधे क्र्या० पर० सक० अनिट् । जानाति अज्ञासीत् ।

**ज्ञा** ज्ञपधात्वर्थे चुरा० उभ० सक० सेट् घटा० । ज्ञपयति ते
अजिज्ञपत् त ।

**ज्ञा** प्रेरणे चुरा०उभ० सक०सेट् । ज्ञापयति ते अजिज्ञपत् त

**ज्ञातसिद्धान्त** पु० ज्ञातः सिद्धान्तः तत्त्वार्थो येन। सिद्धान्तज्ञे

**ज्ञाति** पु०ज्ञा-कर्त्तरि करणे वा क्तिच्। पितरि पितृवंश्ये सपिण्ड
सकुल्यसमानोदकसगोत्रजरूपे एकगोत्रोत्पन्ने पितृव्यादौ।

**ज्ञातेय** न० ज्ञातेर्भाव ढक्। ज्ञातित्वे ।

**ज्ञान** न० ज्ञा-भावे ल्युट् । सामान्यविशेषरूपे बुद्धिमात्रे,
'ज्ञानं द्विधा वस्तुमात्रद्योतकं निर्व्विकल्पकम् । सविकल्पन्तु
संज्ञादिद्योतकत्वादनेकधा । संकल्पसंशयभ्रान्तिस्मृतिसादृ-
श्यनिश्चयाः ऊहोऽनध्यवसायश्च तथा चेदनुभवादय' इत्युक्तेषु
नानाविधेषु बुद्धिपरिणामेषु । [ब्रह्मलाभोपाये निष्ठाभेदे।

**ज्ञानयोग** पु० ज्ञानमेव योगः कौशलं ब्रह्मप्राप्त्युपायो वा ।

**ज्ञानलक्षणा** स्त्री० ज्ञानमेव लक्षणं स्वरूपं यस्या व्याप्तौ । न्यायमते ज्ञानघटनाय अलौकिके सन्निकर्षभेदे । यत्र हि यद्विषयस्य ज्ञानं जननीयं पूर्वं तद्विषयज्ञानमेव तत्र पूर्वं ज्ञानवत्त्वेन प्रत्यासत्तिः ।

**ज्ञानवापी** स्त्री० काश्यां स्थिते तीर्थभेदे ।

**ज्ञानसाधन** न० सिध-णिच्-करणे ल्युट् ६त० । इन्द्रिये ।

**ज्ञानापोह** पु० अप+ऊह घञ् ६त० । विस्मरणे ।

**ज्ञानाभ्यास** पु० ६त० । 'तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् । एतदेकपरत्वञ्च ज्ञानाभ्यासं विदुर्बुधा' इत्युक्ते ध्येयविषयचिन्तादौ ।

**ज्ञानिन्** त्रि० ज्ञानमस्त्यस्य इनि । ज्ञानसामान्यवति तत्त्वज्ञानिनि च 'तथा ज्ञानी नित्ययुक्त' इति गीता । दैवज्ञे पु०

**ज्ञानेन्द्रिय** न० ६त० । श्रवणदर्शनादिज्ञानसाधने श्रोत्रनेत्ररसनानासिकात्वगिन्द्रिये, अन्तःकरणे च ।

**ज्या** जरायां क्र्या० प० अक० अनिट् । जिनाति अज्यासीत्

**ज्या** स्त्री० ज्या-अङ् । धनुषो गुणे मौर्व्याम् मातरि, भूमौ च

**ज्यानि** स्त्री ज्या-क्तिन् । जीर्णतायां, हानौ, नद्याञ्च ।

**ज्यायस्** त्रि० अतिशयेन वृद्धः ईयसुन् ज्यादेशः इत आत्वञ्च । अतिशयवृद्धे । स्त्रियां ङीप् ।

**ज्यु** गतौ भ्वा० आत्म० सक० अनिट् । ज्यवते अज्योष्ट ।

**ज्युत** दीप्तौ भ्वा० पर० सक० सेट् । ज्योतति अज्युतत् अज्योतीत्

**ज्युत** दीप्तौ भ्वा० आत्म० अक० सेट् । ज्योतते अज्योतिष्ट । णिच् । अजुज्युतत् त ।

**ज्येष्ठ** त्रि० वृद्ध+इष्ठन् ज्यादेशः । अतिवृद्धे श्रेष्ठे च । अग्रजे पु० । ज्येष्ठभगिन्याम्, पयोज्येष्ठायां, ज्येष्ठस्य पत्न्यामपि स्त्री० अजादित्वात् टाप् । गङ्गायाम् अलक्ष्म्याम् अश्व्यवधिके अष्टादशे नक्षत्रे च स्त्री गृहगोधिकायां (टिकटिकी) स्त्री० ङीप् 'ज्येष्ठीघृते पुत्रमेव मिति स्मृतिः ।

**ज्येष्ठतात** पु० तातस्य ज्येष्ठः राजदन्तादि० । पितृव्यज्ये (जेठा)

**ज्येष्ठश्वश्रू** स्त्री ज्येष्ठस्य पत्न्या अग्रजत्वेन अतिमान्यत्वात् पत्नीमातृवर्गश्यालको मान्यत्वात् श्वश्रूरिव । पत्न्या ज्येष्ठभगिन्याम् । [मासान्तरे मते च ।

**ज्येष्ठसामन्** न० सुत्राम विशेषसामनि गीते सामनि, तत्-

**ज्येष्ठाश्रम** पु० ज्येष्ठ आश्रमो यस्य । 'यस्मात् त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् । गृहस्थेनैव धार्य्यन्ते तस्मात् ज्येष्ठाश्रमो गृही'त्युक्ते गृहस्थाश्रमे । इनि । गृहस्थाश्रमीत्यस्य । [क्तिन् । समानस्थाने सामन्ताने ।

**ज्येष्ठ** पु ज्येष्ठानक्षत्रेण युक्ता पौर्णमासी ज्यैष्ठी साऽस्मिन् मासे

**ज्यैष्ठी** स्त्री० ज्येष्ठायुक्ता पौर्णमासी अण् । चान्द्रज्येष्ठमास-पौर्णमास्याम् तत्रैव तत्सम्भवात् ।

**ज्यैष्ठ्य** न ज्येष्ठस्य भावः ष्यञ् । ज्येष्ठत्वे 'विप्राणां ज्ञानतो ज्यैष्ठ्य'मिति मनुः । [ज्यवते अज्यास्त ।

**ज्यो** नियमे उपनये व्रतोपदेशे च भ्वा० आत्म० सक० अनिट् ।

**ज्योक्** अ० ज्यो-डोकि । सम्प्रत्यर्थे कालभूयस्त्वे, शीघ्रतायां प्रश्ने च । [युच् । ज्योतिरिङ्गणोऽप्यत्र

**ज्योतिरिङ्ग** पु० ज्योतिरिव इङ्गति इगि-गतौ अच् । खद्योते

**ज्योतिर्विद्** पु० ज्योतिषां सूर्यादीनां गत्यादिकं वेत्ति विद-क्विप् । ज्योतिःशास्त्राभिज्ञे ।

**ज्योतिश्चक्र** न ६त० । सूर्यादीनां ज्योतिषां मण्डले 'सप्तविंशतिभैर्ज्योतिश्चक्रं स्तिमितवायुगमि'त्युक्ते सप्तविंशति नक्षत्रात्मके राशिचक्रे च ।

**ज्योतिश्शास्त्र** न० ६त० । ग्रहनक्षत्रादीनां गतिस्वरूपादि निर्णायके 'पञ्चस्कन्धमिदं शास्त्रं होरागणितसंहिता । केरलि शकुनं चेति ज्योतिःशास्त्रमुदीरित'मित्युक्ते षडङ्गशास्त्रे । [ति शास्त्रे । इनि । ज्योतिषमप्यत्र

**ज्योतिष** न० ज्योतिरधिकृत्य कृतो ग्रन्थः मि० न वृद्धि । ज्यो

**ज्योतिष्क** पु० ज्योतिरिव स्वार्थे कन् । चित्रकवृक्षे मेथिकाबीजे, गणिकारीवृक्षे च । स्वार्थे कन् । ग्रहनक्षत्रादिषु न ब । ज्योतिष्मतीलतायाम स्त्री० मेरौ शृङ्गान्तरे न० ।

**ज्योतिष्टोम** पु० ज्योतींषि स्तोमा यस्य षत्वम् । षोडशर्त्विक्साध्ये यज्ञभेदे ।

**ज्योतिष्मत्** पु० ज्योतिरस्त्यस्य मतुप् । सूर्ये प्लक्षद्वीपस्थे पर्वतभेदे च (मालकाङ्गनी) लताभेदे । रात्रौ योगशास्त्रोक्ते चित्तवृत्तिभेदे च स्त्री० ङीप् । ज्योतिर्युक्ते त्रि ।

**ज्योतिस्** पु० द्योतते द्युत्यतेऽनेन वा द्युत-इसुन् आदेरस्य ज । । सूर्ये, अग्नौ, मेथिकावृक्षे च । नेत्रकनीनिकास्थस्य दर्शनसाधने, प्रदीपे, नक्षत्रे प्रकाशे स्वप्रकाश, सर्वावभासके चैतन्ये च न ।

**ज्योत्स्ना** स्त्री० ज्योतिरस्त्यस्याम् न उपधालोपश्च । कौमुद्याम् चन्द्रकिरणे च । ङीप् । ज्योत्स्नी पूर्णरात्रौ, (झिङ्गा) पटोलिकायां रेणुकानामगन्धद्रव्ये च स्त्री० ।

**ज्यौतिषिक** पु० ज्योतिषं शास्त्रं वेत्त्यधीते वा ठक् । दैवज्ञे ।

**ज्रि** अभिभवे भ्वा० पर० सक० अनिट् । ज्रयति अज्रैषीत् ।

**ज्री** वयोहानौ वा चुरा० उभ० पक्षे क्र्या० प० सक० अनिट् । ज्रापयति ते जिनाति अजिज्रपत् त अज्रैषीत् ।

**ज्वर** रोगे भ्वा० प० अ० सेट् च । ज्वरति अज्वारीत् । ज्वरयति त

तुर न त्वरक। त्वरे, शीघ्रे। वेगे स्तोत्रमपि तुरायाडित्ति-
तुरग पु तुरेण वेगेन गच्छति गम-ड। घोटके, चित्ते च।
तुरगस्कन्ध पु० तुरग+समूहे स्कन्धच्। अश्वसमूहे। हेम०।
अश्वस्कन्धे। [अश्वगन्धायाम्।
तुरगी स्त्री० तुरगस्य रगणक्वोऽस्त्यस्य। अच् गौरा० ङीष्।
तुरङ्ग पु० तुरेण गच्छति गम-ख खच् वा डिच्च। घोटक, चित्ते
डिच्चाभावे तुरङ्गमोऽप्यत्र।
तुरि(री) स्त्री० तुर-इन् वा ङीप्। तन्तुवायस्य कार्पासादिनि-
र्मिते वयनसाधने (माकु) तन्तुवायस्य तुरीति' नैषधम्।
तुरीय त्रि० चतुर्+पूरणे तीय नि०। चतुर्थे वेदान्तोक्ते
शुद्धे निर्गुणे ब्रह्मणि।
तुरीयवर्ण पु० कर्म०। शूद्रे। [द्वयोऽप्यत्र।
तुरङ्गवदन पु० तुरङ्गस्येव वदनमस्य। किन्नरे, तुरङ्गमुखा-
तुरङ्गारि पु हेम०। करवीरे वृक्षे, महिषे च।
तुरासाह् पु० तुरा वेग सहते तुर वेगवन्तम् आसाहयते अभि
भवति वा क्विप् उत्पदे पत्वम्। इन्द्रे।
तुरुष्क पु तुर-उसिन् स्वार्थे कन् दस्सोरिति पत्वम्।
गन्धद्रव्यभेदे (शिलारस)।
तुर्य त्रि चतुर्णां पूरणः यत् नि०। चतुर्थे।
तुर्व्व हिंसे भ्वा०पर सक० सेट्। तूर्वति अतूर्वीत्। तूर्त्वा।
तुर्वसु पु० ययातिनृपतिपुत्रभेदे।
तुल उन्माने वा चुरा उभ पक्षे भ्वा पर सक० सेट्। तोलयति
ते तोलति अतूतुलत् त। तुलयति त तुलाशब्दात् णिच्
तुलसी स्त्री तुलामसति अस-अण् शक। 'यस्या देवि! तुला
नास्ति विश्वेषु अखिलेषु च। तुलसी तेन वा ख्याता" त्युक्ते
स्वनामख्याते वृक्षे।
तुला स्त्री० तुल भिदा०अङ्। साहश्ये मानें, ... दारु
बन्धकार्थे पलशते, भाण्डे, मेषादितः सप्तमे राशौ तोलन
दण्डे दिव्यप्रमाणरूपे 'विवर्जं आयामस्य ...
तुला स्मृते' ति भारद्वोक्ते मानभेदे च।
तुलाकोटि(टी) स्त्री तुलया तुला वा कोटयति कुट परि-
तापे इ वा ङीप्। नूपुरे तुलाकोटिः कर्णरिप्युद्गत।
तुलाधर त्रि० तुलाया मानस्य धर धृ अच्। वणि-
जक, तुलाराशौ तुलादण्डधारके मूर्खे च।
तुलापुरुष पु० षोडशमहादानान्तर्गते दानभेदे विस्तरस्तु
च कृततुलादानादिपद्धतौ। [तुलादण्डे
तुलामान न० तुलार्थं तोलनार्थं मानं योयतेऽनेन मा-ल्युट्।
तुलाबीज न तुलाया बीज यत्रम्। गुञ्जायाम् तदादभवेद् हि
मानं सार्थ्ये दृष्टितं यथा दशार्द्धगुञ्जं प्रवदन्ति माषमिति।
तुलित त्रि० तुला+तत्करोति णिच्-कर्मणि क्त। परिमिते
सदृशीकृते।
तुल्य त्रि० तुलया संमितं यत्। सदृशे। [मिरैकत्र पाने
तुल्यपान न० तुल्येन सजातीयेन सह पानम्। सजातीयैर्वन्धु
तुल्ययोगिता स्त्री अलङ्कारोक्ते अर्थालङ्कारभेदे।
तुवर पु० त्वरति छिनत्ति रोगान् पृ० तु-ष्वरच् नि० गुणा-
भाव। धान्यभेदे कषायरसे च तद्वति त्रि०। आढक्याम्
सौराष्ट्रमृत्तिकायाञ्च स्त्री०। गिरत्वात् ङीष्। स्वार्थे कन्
तुवरिकाप्यत्रैव। [दिताश्रमसहिते
तुवरीशिम्ब पु० तुवर्या आढक्या इव शिम्बा यस्य।
तुष तोषे दिवा पर अक० अनिट्। तुष्यति अतुषत्।
तुष पु० तुष क। विभीतकवृक्षे (बयडा) धान्यत्वचि स्वनाम-
ख्याते द्रव्ये च।
तुषानल पु० तुषस्यानल। तुषजाते अग्नौ। [तद्वति त्रि०।
तुषार पु० अन्तर्भूतण्यर्थे तुष-आरक्। हिमे, कर्पूरे शीते च
तुषित पु० तुष-कितच्। 'तोष प्रतोष सन्तोषो भद्रः शान्ति
रिडस्पति। इध्मः कविर्विभुः स्वाहा सुदेवो रोचनो
द्विषट्। तुषिता नाम ते देवा आसन् स्वायम्भुवेऽन्तरे' इत्यु-
क्तेषु द्वादशसङ्ख्येषु मतान्तरे षट्त्रिंशत्सङ्ख्यकेषु गणदेवेषु।
तुष्टि स्त्री तुष क्तिन्। सन्तोषे 'अकृतार्थस्य लोकस्य कृतार्थोऽ
स्मीति या मति"रित्युक्तायां बुद्धौ तुष्टिर्नवधेति साङ्ख्योक्तासु
आध्यात्मिकबाह्यभेदेन नवभेदासु सिद्धिषु मातृकाभेदेषु च।
तुस शब्दे भ्वा पर० सक सेट्। तोसति अतोसीत्।
तुह्न वधे भ्वा०पर सक०सेट्। तोहति। अतुहत् अतोहीत्।
तुहिन न० तुह-इनन्। हिमे, चन्द्रतेजसि च।
तुहिनांशु पु० तुहिनमंशवो यस्य। चन्द्रे। हिमांशुप्रभृतयोऽप्यत्र
तूड अनादरे भ्वा०पर०सक०सेट्। तूडयति अतूडीत्। णिच्
अतूतुडत् त।
तूण सङ्कोचे चद०चु०उभ०सक०सेट्। तूणयति ते। अतूतूणत् त
तूण सङ्कोचे चु उभ०सक सेट्। तूणयति ते अतुतूणत् त।
तूण पूरणे चु०आ सक०सेट्। तूणयते, अतुतूणत् त।
तूण(णी) पु०स्त्री० तूण-क स्त्रीत्वपक्षे गौ०ङीष्। बाणाधारे
स्वनामख्याते इषुधौ। तूण इ वा ङीप् सङ्कोचे स्त्री।
तूणीर पु तूणीं सङ्कोच राति ददा ति रा-क। तूणे इषुधौ
तूर हिंसे सक० गतौ अक दिवा आत्म सेट्। तूर्यति अतूरिष्ट
तूर्ण न०त्वर-क्त ऊठ् तस्य न। शीघ्रे, तत्परे तद्वति त्रि०।
तूर्य न० तूर-यत्। वाद्यभेदे।

तूल पूरणे चुरा०आ०सक०सेट् । तूलयते अतूतुलत ।

तूल इयत्तापरिच्छेदे निष्काषने च भ्वा० पर० सक० सेट् । तूलति अतूलीत् ।

तूल पु०न० । तूल-क । कार्पासभेदे (तुला) "तूलराशिमिवानल" इति स्मृतिः । आकाशे, (तुंट) वृक्षभेदे च न० । कार्पास्यां स्त्री० । स्वार्थे कन् अत्रैव न० । [योटथल ।

तूलकार्मुक न०६त० । तूलस्फोटनार्थे धनुषि । तूलचापाद-

तूलनाली स्त्री० तूलनिर्म्मिता नाली । पिञ्जिकायाम् (पाइज) स्वार्थे कन् अत्रैवार्थे । [(तुलार गाछ)

तूलपिचु पु० पिच-मर्द्दने कन् तूलप्रधानः पिचुः । तूलवृक्षे

तूलवृक्ष पु० तूलसाधनं वृक्षः शाक० । शाल्मलिवृक्षे ।

तूलि(ली) स्त्री० तूल-इन् वा ङीप् । चित्रसाधने स्वनाम-ख्याते पदार्थे ।

तूलिका स्त्री०तूल+अस्त्यर्थे ठन् । (तोषक) शय्योपकरणभेदे । तूलयति ण्वुल् । चित्रसाधने तूली(द्रव्ये "उन्मीलितं तूलि कयेव चित्र"मिति कु० सुवर्णादेरावर्त्तनपरीक्षोपयोगिपदार्थे वीरणादिशलाकायाञ्च ।

तूलिनी स्त्री० तूल+इनि । शाल्मलिवृक्षे ।

तूलिफला स्त्री० तूलि तूलवत् फलं यस्याः । शाल्मलिवृक्षे ।

तूवर पु० तु-वर दीर्घश्च । कालेऽजातशृङ्गे गवि, अजातश्मश्रुके पुरुषे, कषायरसे च । तद्वति त्रि० । आढक्यां, सौराष्ट्र मृत्तिकायाञ्च स्त्री० ङीप् ।

तूष तुष्टौ भ्वा०पर०सक० सेट् । तूषति अतूषीत् ।

तूष्णींशील त्रि० तूष्णीं शीलं यस्य । मौनावलम्बिनि ।

तूष्णींक त्रि० तूष्णीं शीलं यस्य शीलेऽर्थे कन् मलोपश्च, मौनावलम्बिनि । [तूष्णीकामप्यत्र ।

तूष्णीम् अव्य० तूष-नीमु । मौने । अकच्प्रतिरूपे काम्नि ।

तूस्त न०तुस-तन् दीर्घश्च । जटायां,संहतकेशेषु,धूलौ, सूक्ष्मे च

तृक्ष गतौ भ्वा०पर०सक०सेट् । तृक्षति अतृक्षीत् ।

तृण भक्षे तना० उभ० सक० सेट् । तृणोति तर्णोति तृणुते-तर्णुते । अतर्णीत् अतर्णिष्ट । तर्णित्वा-तृण्ट्वा ।

तृण न० तृह नक् हलोपश्च । नडादौ, खटे (खड)

तृणकाण्ड न० तृणानां समूहः दूर्वा० काण्डच् । तृणसमूहे

तृणकेतु पु० तृणेषु केतुरिव श्रेष्ठत्वात् । वंशवृक्षे, तालवृक्षे, असारत्वेन तृणद्रुमतृणध्वजावप्यत्र ।

तृणजाति स्त्री० तृणमेव जातिः । उलपादौ (खड़) ।

तृणद्रुम पु० तृणजातीया द्रुमा असारत्वात् शाक० । नारिकेले, ताले, गुवाके, ताल्यां, केतक्यां, खर्ज्जूरे, खर्ज्जूर्य्याञ्च ।

तृणधान्य न० तृणमिव धान्यं अल्पफलत्वात् शाक० । नीवारे, श्यामाकादौ च ।

तृणराज पु०तृणेषु राजते राज-अच् ६त०टच् वा । तालवृक्षे

तृणबीज न०६त० । श्यामाके धान्ये ।

तृणसारा स्त्री० तृणस्येव सारोऽस्याः । कदल्याम् तस्याः मध्यभागेऽसारत्वात्तथात्वम् । [धारपत्रयुक्ते तृणभेदे

तृणेक्षु पु० तृणमिक्षुरिव तीक्ष्णधारत्वात् । वल्वजायाम् तीक्ष्ण-

तृणौकस् न०तृणनिर्म्मितमोकः । तृणनिर्म्मिते गृहे (खड़ेरघर)

तृणौषध न० तृणात्मकमौषधम् । एलवालुकाख्ये गन्धद्रव्ये

तृण्या स्त्री० तृणानां समूहः पाशा० य । तृणसमूहे ।

तृतीय त्रि० त्रयाणां पूरणः त्रि+तीय सम्प्रसारणञ्च । त्रया-णां पूरणे-येन त्रित्वसंख्या पूर्य्यते तस्मिन् पदार्थे ।

तृतीयप्रकृति स्त्री० स्त्रीपुंसापेक्षया तृतीया प्रकृतिः प्रकारः । नपुंसके क्लीवे ।

तृतीया स्त्री० चन्द्रमण्डलस्य तृतीयकलायाः सूर्य्यमण्डल-प्रवेशनिर्गमान्यतररूपक्रियात्मिकायां तिथौ ।

तृतीयाकृत त्रि०तृतीयं कृतं त्रिगुणार्थे तृतीय+डाच्+कृ-क्त । त्रिवारकृष्टे क्षेत्रे ।

तृद् अनादरे रु०उभ०सक० सेट् । तृणत्ति तृन्ते । अतर्द्दीत्-अतृदत् अतर्द्दिष्ट । तर्द्दित्वा-तृत्त्वा ।

तृन्प(म्प) प्रीणने तु०पर०सक०सेट् । तृपति तृम्पति अतृम्पीत् ।

तृन्फ(म्फ) प्रीणने तु०प०सक०सेट् । तृफति तृम्फति अतृम्फीत्

तृन्ह हिंसे तु०प०सक०सेट् क्त्वावेट् । तृंहति अतृंहत् ।

तृप प्रीणने स्वा०पर०सक०सेट् । तृप्नोति अतर्पीत् ।

तृप सन्दीपने प्रीणने च वा चुरा०उभ० पक्षे भ्वा०पर०सक० सेट् । तर्पयति ते तर्पति अततर्पत् त अतीतृपत् त । अतर्पीत् । [अताप्सीत्-अतृपत् ।

तृप प्रीणने दि०पर०सक० वेट् । तृप्यति अतर्पीत्-अताप्सीत्-

तृप प्रीणने तु०सु०पर०सक०सेट् । तृपति अतर्पीत् ।

तृप्ति स्त्री० तृप-क्तिन् । अतिशयभक्षणेन भक्षणेच्छानिवृत्तौ ।

तृफ प्रीणने तु० पर०सक०सेट् । तृफति । अतर्फीत् ।

तृ(त्रि)फला स्त्री० त्रयाणां फलानां समाहारः वा समासान्तः-णत्वञ्च । हरितक्यामलकीवयस्थारूपफलत्रये ।

तृष तृष्णायां दिवा०पर०सक०सेट् । तृष्यति अतृषत् अतर्षीत्

तृष्(षा) स्त्री० तृष-क्विप् । भागुरिमते हलन्तत्वात् वा टाप् । तृष्णायां, स्मरपुत्राम्, लाङ्गलिकीवृक्षे च ।

तृषाभू स्त्री० ६त० । क्लोमनि हृदयस्थे स्थानभेदे ।

तृषित त्रि० तृषा जाताऽस्य तार० इतच् । तृष्णान्विते ।

**तृष्णाज्** त्रि० तृष-नजिङ् । तृष्णायुक्ते लुब्धे च । [च ।

**तृष्णा** स्त्री० तृष-न किच्च । पिपासायां, लोभे, अप्राप्ताभिलाषे

**तृष्णाक्षय** पु० तृष्णाया लोभस्य क्षयो यस्मात् ५ब० । शमे, 'तृष्णाक्षयसुखस्यैते नार्हन्ती'ति स्मृति ।

**तृह** हिंसे तु० पर० सक० वेट् । तृहति अतर्हीत् अतृक्षत् ।

**तृंह** हिंसे वा चु०उ पक्षे रुधा०पर०सक०वेट् । तर्हयति ते तृणेढि अतर्त्तृहत् त अतीतृहत् त अतर्हीत् अतृक्षत् ।

**तॄ** तरणे लवने अभिभवे च भ्वा०प०सक०सेट् । तरति अतारीत्

**तेज** निशाने पालने च भ्वा०पर०सक०सेट् । तेजति अतेजीत्

**तेजःफल** पु० तेजस्कर फलं यस्य । (तेजबल) वृक्षभेदे ।

**तेजन** पु० तेजयति शस्त्रमग्निं वा तिज-णिच् ल्यु । वंशे शरे च । मुञ्जाया काण्डे । शराभिधे तृणे, मूर्वायां, ज्योतिष्मत्याञ्च स्त्री० ङीप् ।

**तेजपत्र** न० तेज-अच् तेजः पत्रं यस्य । त्वचे (तेजपात)

**तेजवती** स्त्री० तेजस् तेजः अस्त्यर्थे मतुप् मस्य व । गजपिप्पल्याम् ।

**तेजस्** न० तिज-असुन् । उष्णस्पर्शवति अग्न्यादौ द्रव्यभेदे शास्त्रमते मद्ध्यमांशे भावम्ब(?)हितादृष्टतत्त्वालाङ्कृते भूते दीप्तौ, प्रभावे,पराक्रमे, वीर्य्ये,नवनीताङ्गे घृतादौ तापके ज्योतिषि सूर्यादौ, शरीरकान्तौ, सुवर्णादौ-धातुद्रव्ये मज्जनि, पित्ते, 'अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतमि'त्युक्ते अपमानादेरसहने 'तेजो निसर्गज तत्र वाजिनां स्फुरच्च रज इत्युक्ते अश्वानां स्वाभाविके वेगे, चैतन्यात्मके परमज्योतिषि ब्रह्मणि, सांख्योक्ते सत्त्वगुणे च ।

**तेजस्वती** स्त्री० तेजस्+अस्त्यर्थे मतुप् मस्य व । गजपिप्पल्याम्, चव्ये,(चई) महाज्योतिष्मत्यां,वह्नेः पुर्य्यां, (तेजबल) वृक्षभेदे च ।

**तेजस्विनी** स्त्री० तेजस्+विनि । तेजोयुक्तायां स्त्रियां, ज्योतिष्मत्यां लतायाम्,म् (तेजबल) तेज फलायाञ्च ।

**तेजीयस्** त्रि० तेजस्विन्+अतिशायने ईयसुनि विनेर्लुक् । तेजोयुक्ते 'तेजीयसां न दोषाय वह्नेः सर्वभुजो यथे'ति भागवतम् ।

**तेजोमन्थ** पु० तेजो मथ्नाति मन्थ अण् । गणिकारिकायाम् ।

**तेजोमय** त्रि० तेजस्+प्रचुरार्थे मयट् । तेजः प्रचुरे तेजः प्रधाने ज्योतिर्मये च । स्त्रियां ङीप् । 'तेजोमयी वागि'ति श्रुतिः

**तेजोमात्रा** स्त्री० तेजसो सत्त्वगुणानां मात्रांऽश । इन्द्रियेषु भूतानां सात्विकांशेभ्य एव तेषामुत्पत्तिः शास्त्रसिद्धा ।

**तेप** कम्पे, च्युतौ च भ्वा०आ०अक०सेट् । तेपते अतेपिष्ट ।

**तेम** पु० तिम-घञ् । आर्द्रीभावे ।

**तेमन** न० तिम ल्युट् । आर्द्रीकरणे । कर्मणि ल्युट् । व्यञ्जने ।

**तेव** क्रीडने भ्वा० आ०अक सेट् । तेवते अतेविष्ट ।

**तैजस** न० तेजसोविकार अण् । घृते,धातुद्रव्ये च । सांख्योक्ते सत्त्वगुणोत्पन्ने त्रि० ।

**तैजसावर्त्तनी** स्त्री० तैजसं धातुद्रव्यमावर्त्यतेऽत्र आ-वृत णिच्-आधारे ल्युट् ङीप् । मूषायाम् । (मुची) ।

**तैतिल** पु० गण्डकपशौ । बवादितस्तुर्य्ये करणे न० ।

**तैत्तिरीया** स्त्री० तित्तिरिभ्योऽधिगता छण् । यजुर्वेदीयशाखाभेदे कृष्णयजुषि । याज्ञवल्क्येन हि गुरुतोऽधीत्य तेन सह विवादे मूर्त्तिमानेव यजुर्वेद उद्वान्तः तत्रत्याश्चान्ये तच्छाखिनो(?)वैशम्पायनशिष्याः तित्तिरिपक्षिरूपं धृत्वा तं भक्षितवन्तस्तेभ्यस्तित्तिरिरूपेभ्य एव विप्रेभ्यो या शाखा गृहीता सा तैत्तिरीया शाखेति पुराणादौ प्रसिद्धम् ।

**तैत्तिरीयि(य)क** त्रि० तैत्तिरीया शाखा येनाधीते वा ठक् कन् वा । तैत्तिरीयशाखाध्यायिनि । [भेदयुक्ते ।

**तैमिरिक** न०तिमिर नेत्ररोगभेद अस्त्यस्य ठन् । नेत्ररोग-

**तैर्थिक** त्रि० तीर्थं दर्शनशास्त्रं ज्ञातमनेन ठक् । शास्त्रकार कपिलकणादादौ ।

**तैल** न०तिलस्य विकार अण् । 'तिलादिस्निग्धवस्तूनां स्नेहस्तैलमुदाहृत'मित्युक्ते तिलसर्षपातसीप्रभृतीनां स्निग्धवस्तूनां स्नेहरूपे विकारे । (तैल) सिह्लके च (शिलारस) ।

**तैलकार** पु० तैल करोति कृ-अण् (तेली) (कलु) इति प्रसिद्धे वर्णसङ्करे चाक्रिके तैलिनि । [च ।

**तैलकिट्ट** न०६त० (काट) इति ख्याते तैलमले (खल)पिण्याके

**तैलङ्ग** पु० श्रीशैलं तु समारभ्य चोलेशानुमध्यभागतः तैलङ्गदेशोदेवेशी(?)त्युक्ते देशे । तद्देशस्थे जने ब०व ।

**तैलधान्य** न० तैलोपयोगि धान्य चतुष्प्रकारम् । तिलातसी च तोरी (ड्ढी) च त्रिविधापि सर्षप । द्विधा राजी सर्षपश्चैव सोम(?) कौसुम्भसम्भवम् । एतानि तैलधान्यानीत्युक्तेषु तिलादिषु । [पर्णवृत्ते ।

**तैलपर्णी** पु० तैलाक्तमिव पर्णं यस्य मध्यपदलोपि स । चन्दन-

**तैलपा** स्त्री० तैलं पिबति पा क । (तेलापोका) कीटभेदे ।

**तैलपायिका** स्त्री० पा ण्वुल् ६त० । (तेलापोका) (आरसुला) कीटभेदे ।

**तैलफला** स्त्री०तैलं फले यस्याः । इङ्गुदीवृक्षे, विभीतके च ।

**तैलभाविनी** स्त्री० तैलं भावयति चु० भू शुद्धौ णिनि ।

जातिप्रसङ्गे, तत्पुष्पेण वासितं हि गन्धतैलं भवति ।
तैलस्फाता स्त्री० तिलस्य फातोऽत्र ज नि० समृच् । सधायास्, तद्रूपलक्षिते श्राद्धे च । [गन्धद्रव्यभेदे ।
तैलसाधन न० तैलं साधयत्यनेन सिध-णिच्-ल्युट् (काकला)
तैलीन वि०तिलानां भवनं क्षेत्रं ख । तिलभवनयोग्ये क्षेत्रे ।
तैष पु० तिष्यनक्षत्रयुक्ता पौर्णमासी तैषी सास्मिन् मासे अण् । चान्द्रपौषमासे । [पौषस्य पौर्णमास्याम् ।
तैषी स्त्री० तिष्येण नक्षत्रेण युक्ता पौर्णमासी अण् । चान्द्र
तोक न० स्त्री० तु-क तस्य नेत्त्वम् । अपत्ये पुत्रे,दुहितरि च ।
तोटक न० द्वादशाक्षरपादके छन्दोभेदे । [अनुतोटत् ।
तोड अनादरे भ्वा०पर०सक०सेट् । तोडति अतोडीत् । णिच्
तोडी(री) स्त्री० तड-अच् गौरा०ङीष् वा डस्य रः । खनाम ख्याते तैलसाधने धान्यभेदे । [चानन्दरखे च ।
तोत्त्र न० तुद-ष्ट्रन् । गवादिताडनदण्डे (पाचुनि) गजादि-
तोदन न०तुद्यतेऽनेन ल्युट् । तस्खे दुःखे । भा०वे ल्युट् । व्यथायाम्
तोमर पु०न० तु-विच् तोर्गतो म्रियतेऽनेन मृ-अच् । हस्तक्षेप्ये गल्याग्रे दण्डाकारेऽस्त्रभेदे (रायबांस) । [ले च ।
तोमरिका स्त्री० तोमर+संज्ञायां कन् । आढक्याम् । [नक्ष-
तोय न० स्त्री० तु विच् तं पूर्त्तिं याति या-क । जले पूर्वाषाढा
तोयकाम पु० तोयं कामयते कम-अण् । जलवेतसे । जलाभिलाषुके त्रि० ।
तोयकृच्छ्र न० जलमात्रपानरूपे व्रतभेदे । [जलदातरि त्रि०
तोयद पु० तोयं ददाति दा+क । मेघे,मुस्तके च । घृते न० ।
तोयधि पु० तोयानि धीयन्तेऽत्र धा-कि । समुद्रे तोयनिध्यादयोऽप्यत्र । [लाङ्गल्याम् ।
तोयपिप्पली स्त्री० तोये पिप्पलीव । (कांचडा) शाकभेदे
तोयपुष्पी स्त्री० तोयेन बहुजलदानेन पुष्पमस्याः । पाटला वृक्षे । [ल्यु । कतके (निर्माल्य)
तोयप्रसादन पु० तोयं प्रसादयति फलयोगेन प्र+सद-णिच्-
तोयफला स्त्री० तोयप्रधानं फलं यस्याः । इर्वारौ कर्कटीभेदे
तोयवल्ली स्त्री० तोयसन्निहितस्थाने वल्ली । कारवेल्ले (उच्छे)
तोयसूचक पु० तोयं तोयवर्षं सूचयति रवेण सूच-ण्वुल् । भेके
तोरण पु०न० तुर-युच् । बहिर्द्वारे, स्तम्भोपरिस्थे सिंहाकारे काष्ठे द्वारबाह्यभागे च । कन्धरायां न० ।
तोल पु० न० तुल-अच् । गुञ्जाशीतिपरिमाणे कर्षे । स्वार्थे कन् ण्वुल् वा । तोलकमप्यत्र ।
तौर्य न० तूर्य्ये मुरजादौ वाद्ये भवम् अण् । मुरजादिध्वनौ ।
तौर्य्यत्रिक न०त्रय परिमाणमस्य कन् तौर्य्योपलक्षितं त्रिकम् ।
नृत्यगीतवाद्येषु समुदितेषु 'वनेऽपि तौर्य्यत्रिकमि'ति नैषधम्
तौलिक पु० तूल्या जीवति ठक् । चित्रकरे ।
त्यज हानौ दाने च भ्वा०पर०सक०अनिट् । त्यजति अत्याक्षीत् ।
त्यद् त्रि० त्यज-अदि डिच्च । तच्छब्दार्थे 'येषां त्येषां भवान्य दृषमि'ति वेदभाष्यम् ।
त्यागिन् त्रि० त्यज-घिनुण् । दातरि, शूरे, दुर्जनत्यागिनि, कर्मफलत्यागिनि च 'यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते' इति गीता ।
त्रक गतौ भ्वा० आत्म० सक० सेट् । त्रकते अत्रकिष्ट ।
त्रख गतौ भ्वा० पर०सक०सेट् । त्रखति अत्रखीत् अत्राखीत्
त्रङ्ख गतौ भ्वा०पर०सक०सेट् इदित् । त्रङ्खति अत्रङ्खीत् ।
त्रग गतौ भ्वा० पर०सक० सेट् इदित् । त्रङ्गति अत्रङ्गीत् ।
त्रद चेष्टायां भ्वा०पर०अक०सेट् इदित् । त्रन्दति अत्रन्दीत् ।
त्रप लज्जायां भ्वा०आ०अक० सेट् वा प० । त्रपते अत्रपिष्ट अत्रप्त । णिच् । त्रपयति त्रापयति । त्रपा
त्रपा स्त्री० त्रप-भावे अङ् । लज्जायाम् । अच् । कुलटायाम् । कुले कीर्त्तौ च । [सीसके,रङ्गे च ।
त्रपु न० अग्निं दृष्ट्वा त्रपते लज्जते इव लज्जया द्रवीभवति वा
त्रपुटी स्त्री०त्रप-उटच् गौरा०ङीष् । सूक्ष्मैलायाम् ।
त्रपुष स्त्री० त्रपते क्विप् त्रप् उष-दाहे क क० । कर्कटीवृक्षे गौरा० ङीष् । (खीरा) (शशा) ख्याते वृक्षे ।
त्रपुस् न० त्रप-उसि । रङ्गे ।
त्रय न०स्त्री० त्रयाणामवयवः त्रयोऽवयवा येषां वा अयच् । त्रिसंख्यायाम् 'अपालयत्तमपाकृत्ये'ति मनुः । स्त्रीत्वपक्षे ङीप् । 'असौ नरगिरित्रयो'ति माघः । त्रित्वसंख्याविशिष्टे त्रि० स्त्रियां ङीप् । ऋगादिवेदत्रये, 'त्रयीव नीताङ्गगुणेन विस्तर'मिति नैषधम् । ब्रह्मादिमूर्त्तित्रये, पुरन्ध्र्याम्, सुमतौ, सोमराजीवृक्षे च ।
त्रयीधर्म्म पु० त्रय्या वेदत्रयेण विधीयमानो धर्म्मः शाक० । वैदिके धर्म्मे ज्योतिष्टोमादौ ।
त्रयोदशन् त्रि० त्रयश्च दश च, त्राधिका वा दश । त्राधिक दशसङ्ख्यान्विते । तत्पूरणे तु डट् । त्रयोदशः त्रि० चन्द्रस्य त्रयोदशकलाक्रियारूपे तिथौ स्त्री० ङीप् ।
त्रस धृतौ ग्रहे निषेधे च चुरा०उभ० सक० सेट् । त्रसयति ते अतित्रसत् त ।
त्रस भासे वा० चुरा०उभ० पक्षे भ्वा०पर०अक०सेट् इदित् । त्रंसयति ते त्रंसति अतत्रंसत् त अत्रंसीत् ।
त्रस भये वा दिवा० पक्षे भ्वा० फणा०पर०अक०सेट् । त्रसति

त्रस्यति अत्रसीत् अत्रासीत् त्रेसतुः तत्रसतुः ।

**त्रस** न० त्रस-भये घञर्थे क । वने । त्रस इत्वो अच् । जङ्गमे त्रि०

**त्रसरेणु** पु० त्रस चलो रेणुः क० । 'जालान्तरगते भानौ सूक्ष्मं यद्दृश्यते रजः । प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते' इत्युक्ते गवाक्षान्तर्गतसूर्यकिरणेषु दोधूयमाने परमाणुषट्कात्मके द्व्यणुकत्रयात्मके रजसि ।

**त्रस्त** त्रि० त्रस-क्त । भीते चकिते । भावे न० ।

**त्रस्नु** त्रि० त्रस-क्नु । भीरौ भयशीले ।

**त्रापुष** त्रि० त्रपुणा निर्वृत्तम् अण् । रङ्गमये पात्रादौ ।

**त्रायन्ती** स्त्री० त्रै-शतृ० ङीप् त्रा त्रायति भ्वा० इ-ई-वा शतृ । (बला) ख्यातायाम् लतायाम् ।

**त्रायमाणा** स्त्री० त्रायते त्रै-शानच् । (बला)ख्यातायां लतायाम्

**त्रि** त्रि० ब०व० तॄ ड्रि । त्रित्वसंख्याविशिष्टे । स्त्रियाम् तिसृ देशः । तिस्र इत्यादि ।

**त्रिंश** त्रि० त्रिंशत्+पूरणे डट् । त्रिंशत्पूरणे त्रिंशत्तमे, 'त्रिंशांशकलचादौ भौम' इत्यभिधीयते इति ज्योतिषम् ।

**त्रिंशक** त्रि० त्रिंशता क्रीतं कन् । त्रिंशत्संख्यान्वितद्रव्येण क्रीते पदार्थे । [वा, तत्संख्यान्विते च ।

**त्रिंशत्** स्त्री० त्रयोदश परिमाणमस्य नि० । त्रिंशत्संख्या

**त्रिंशत्पत्र** न० त्रिंशत्संख्यानि पत्राणि दलानि प्रतिपुष्पमस्य । कुमुदे ।

**त्रिक** न० त्रयाणां संघः कन् । त्रित्वसंख्यायाम् पृष्ठवंशाधो भागे कटिभागे त्रिफलायाम् (हरितक्यामलकीविभीतकात्मके) त्रिकटुनि, (शुण्ठीपिप्पलीमरिचात्मके) । मातादिषु मिलितेषु च । त्रिषु कायति कै-क । गोक्षुरे इक्षौ पु ।

**त्रिककुद्** पु० त्रीणि ककुदानि शृङ्गाण्यस्य ककुदस्य अन्त्यलोपः । त्रिकूटाख्ये पर्वतभेदे । [गोक्षुरके ।

**त्रिकट** पु० त्रीन् वातादिदोषान् कटति आवृणोति अच् ।

**त्रिकटु** न० त्रयाणां कटुद्रव्याणां समाहारः । मिलितेषु शुण्ठीपिप्पलीमरिचेषु । [ग्रहे, मत्स्यभेदे च (टेङ्गरा) ।

**त्रिकण्ट** पु० त्रयः कण्टाः कण्टका अस्य । गोक्षुरे, क्षुद्रे

**त्रिकाल** न० त्रयाणां कालानां भूतभविष्यत्कालानां समाहारः । भूतभविष्यद्वर्त्तमानकालत्रये प्रातर्मध्याह्नसायाह्नरूपकालत्रये च । 'त्रिकालं पूजयेद्देवीमिति तन्त्रम् ।

**त्रिकालज्ञ** पु० त्रिकालवर्त्तिपदार्थान् जानाति ज्ञा क । सर्वज्ञे त्रिकालविदादयोऽप्यत्र । [पर्वते ।

**त्रिकूट** पु० त्रीणि कूटान्यस्य । सप्ताद्युत्तरविहिते सुवेलाख्ये

**त्रिकोण** त्रि० त्रयः कोणा अस्य । त्रिकोटियुक्ते पदार्थे, ज्योतिषोक्ते लग्नात् नवमपञ्चमस्थाने न० । 'त्रिकोणगान् गुरुः पश्यति' इति ज्योतिषम् ।

**त्रिकोणफल** न० त्रिकोणं त्रिकोणाकारं फलम् । शृङ्गाटके (पानीफल) । [कन् तत्रैव ।

**त्रिगर्त्त** पु० सुशर्माख्यनृपतेर्देशे । तद्देशस्थे जने ब व० । स्वार्थे

**त्रिगुण** न० त्रयाणां गुणानां समाहारः । सांख्योक्ते प्रधाने । त्रिभिर्गुण्यते गुण-आवृत्तौ घञ् । त्रिभिर्गुणिते त्रि० ।

**त्रिगुणाकृत** त्रि० त्रिगुणं कृत्वा कृष्टं डाच् कृ-क्त । त्रिधाकृष्टेन कृष्टे क्षेत्रादौ ।

**त्रिगुणात्मक** न० त्रयो गुणाः सत्त्वादयः आत्मा स्वरूपं यस्य कप् । सांख्यमतोक्ते प्रधाने, वेदान्तोक्ते अज्ञाने च ।

**त्रिजटा** स्त्री० रामायणप्रसिद्धे राक्षसीभेदे ।

**त्रिणाचिकेत** पु० त्रिः कृत्वो नाचिकेतोऽग्निश्चितो येन । अध्वर्युभेदे 'पञ्चाग्नयो ये च त्रिणाचिकेता' इति श्रुतिः

**त्रिण(ने)त्र** पु० त्रीणि नेत्राण्यस्य । शिवे । पूर्वपदात् संज्ञायामिति णत्वे प्राप्ते गिरिनद्यादित्वात् वा णत्वमिति केचित् । क्षुभ्नादि० नैत्वम् ।

**त्रितय** न० त्रयाणामवयवः त्रयोऽवयवा येषाम् वा तयप् । त्रयशब्दार्थे त्रित्वसंख्यायाम् । त्रित्वसंख्यान्विते त्रि० ।

**त्रिदण्ड** न० त्रयाणां दण्डानां समाहारः । वाङ्मनःकायदण्डेषु, तथादण्डोपलक्षिते सन्न्यासाश्रमे च ।

**त्रिदण्डिन्** त्रि० त्रिदण्डमस्त्यस्य इनि । 'वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च । यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते' इति मनूक्ते सन्न्यासिभेदे ।

**त्रिदला** स्त्री० त्रीणि त्रीणि दलानि प्रतिपत्रं यस्याः । (गोयालिया) गोधापदीलतायाम् ।

**त्रिदश** पु० तिस्रो दशा जन्मसत्ताविनाशाख्या न तु वृद्धिपरिणामक्षया अपराणामिव दशा येषाम् । देवेषु । अथ वा त्र्यधिकाश्चिरादशसाथ दश परिमाणमेषां डच् शाक० अधिकाङ्कशब्दलोप मध्यस्थैव त्रिपदस्य तत्रतयोक्त्वार्थात् उभयार्थपरत्वम् । त्रयस्त्रिंशद्गणवर्त्ति देवे यथा अर्का द्वादश, रुद्रा एकादश, वसवोऽष्टौ, विश्वे देवौ द्वाविति । अयमेव पक्षः श्रुत्यनुगुणः त्रयो च दश चेति छान्दोग्येऽभिहितात् अधिकाङ्कशताद्योतनार्थं त्रयो चेति द्विवचनान्ततया निर्देशः ।

**त्रिदशाधिप** पु० ६त० । इन्द्रे ।

**त्रिदशाध्यक्ष** पु० त्रिदशानां जाग्रत्स्वप्नसुषुप्तीनां त्रि यामां देवानां अध्यक्षः । सर्वसाक्षिणि ब्रह्मणि, विष्णौ च

तोटि(टी) स्त्री० पु० त्रुट-इ वा ङीप् । कट्फले, चञ्चाम्, (पश्चिर-ठोंठ) पक्षिभेदे मत्स्यभेदे च ।

तोत्त्र न० । तुद-ष्ट्रन् । गवादिताड़ने (पांचुनि) लगुडे ।

तौक गत्यां भ्वा० आत्म० सक० सेट् । तौकते अतौकिष्ट । णिच्-। अतुतौकत् त ।

त्र्यम्बक पु० त्रीणि अम्बकानि नेत्राण्यस्य व्युत्पत्त्यनन्तरं रूढ्‌द-भिधाने । शिवे । क्वचित् भाषायामपि त्र्यम्बादेशस्येट्-त्वात् त्रियम्बकोऽप्यत्र 'त्रियम्बकं संयमिनं ददर्श'ति कु०।

त्र्यम्बकसख पु० ६त० पच्समा०। कुबेरे।

त्र्यहस्पर्श पु० त्रयाणामह्नां तिथीनां सर्गो यत्रैकस्मिन् सौर दिने । तिथित्रयस्पर्शयुक्ते एकस्मिन् सौरदिने ।

त्र्यहस्पृश् पु० त्रीणि अहानि वारान् स्पृशति स्पृश-क्विन् । वारत्रयस्पर्शकारिण्यामेकस्यां तिथौ ।

त्र्येणी स्त्री० त्रीणि एतानि कर्बुराणि यस्या ङीप् तस्य न । (सजारुलोम) श्वाविल्लोमनि ।

त्व त्रि० तन-विच् अनश्च व । भिन्ने अन्यार्थे सर्वनामायम्

त्वक्पञ्चक न० त्वचः पञ्चकम् । 'न्यग्रोधोडुम्बराश्वत्थशिरीष सप्लक्षपादपाः । पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक्पञ्चकं मत-मित्युक्ते न्यग्रोधादिवल्कले ।

त्वक्पत्र न० । त्वगिव पत्रमस्य । गुड़त्वचि (दारचिनि) तेज-पत्रे च । हिङ्गुपत्र्यां स्त्री० ङीप् । [स्त्रीत्वे ङीप्

त्वक्पुष्प न० त्वचः पुष्पमिव । रोमाञ्चे ।-किलासरोगे पु०स्त्री०

त्वक्ष कार्श्ये भ्वा०पर०सक०वेट् । त्वक्षति अत्वक्षीत् अत्वाक्षीत्

त्वक्ष संवृतौ भ्वा०पर०सक०सेट्। त्वक्षति अत्वक्षीत् ।[(दारचिनि)

त्वक्सार पु० त्वचि, त्वक् वा सारोऽस्य । वंशे, गुडत्वचि च

त्वग्गन्ध पु० त्वचि फलवल्कले गन्धोऽस्य । नारङ्गे, जम्बीरे ।

त्वग्दोषान्त पु० त्वग्दोषस्यान्तो यस्मात्-५ब०। हस्तिकन्दे ।

त्वच संवरणे तु०पर०सक०सेट् । त्वचति अत्वाचीत् अत्वचीत्

त्वच्(चा) स्त्री० त्वच-संपा० क्विप् वा टाप् । वल्कले, चर्म्मणि, गुडत्वचि च ।

त्वच न०त्वच-अच् । चर्म्मणि, वल्कले,त्वक्पत्रे च (तेजपात)।

त्वचिसार पु० त्वचि सारोऽस्य हलदन्ता०सप्तम्या अलुक्। वंशे

त्वत् त्रि० तन-क्विप् अतो व टक् च । अन्यार्थे सर्वनामायम्

त्वन्च गतौ भ्वा०पर०सक० सेट् । त्वञ्चति अत्वञ्चीत्। त्वञ्चिता त्वक्ता । [ईदित् मतान्तरे क्त्वावेट् अन्यत्र सेट् ।

त्वन्च सङ्कोचे रुधा०पर०सक० वेट् । त्वनक्ति अत्वञ्चीत् अत्वा-

त्वर वेगे भ्वा० आत्म० अक० सेट् घटा० । त्वरते अत्वरिष्ट । णिच्-त्वरयति । त्वरा ।

त्वरा स्त्री० त्वर-अङ् । वेगे, अभीष्टलाभार्थं विलम्बासहने च

त्वरित न० त्वर-क्त । शीघ्रे । तद्वति त्रि० ।

त्वरितोदित त्रि० त्वरितं शीघ्रं यथा तथोदितमुच्चारितम् वद-क्त । शीघ्रोच्चारिते ।

त्वष्टृ पु० त्वक्ष-तृन् । देवशिल्पिनि विश्वकर्म्मणि, द्वादशादित्य मध्ये आदित्यभेदे, तक्षणकारिणि (छुतार) वर्णसङ्करभेदे, चित्रानक्षत्रे च । [क्विप् । तादृक् । एताप्युक्तार्थे

त्वादृश त्रि० तवेव दर्शनमस्य कञ् । त्वत्सदृशे, ट । तादृशः ।

त्वाष्ट्र पु० त्वष्टुरपत्यम् । वृत्रासुरे संज्ञानाम्न्यां सूर्य्यपत्न्याम् स्त्री० ङीप् । त्वष्टा देवताऽस्य अण् । चित्रानक्षत्रे ।

त्विष्(षा) स्त्री० त्विष-सम्प०क्विप् वा टाप्। दीप्तौ । [अत्विक्षत

त्विष दीप्तौ भ्वा०उभ०अक०अनिट् । त्विषति ते । अत्विक्षत्

त्विषांपति पु० ६त० अलुक्स० । सूर्य्ये ।

त्सर छद्मगतौ भ्वा०पर०सक०सेट् । त्सरति अत्सारीत् ।

त्सरु पु० त्सर-उ । खड्गमुष्टौ ।

## थ

थ पु० थुड-ड । पर्व्वते, भयत्रारके, व्याधिभेदे, भयचिह्ने भक्षणे च । रक्षणे, मङ्गले, भये च न० ।

थुड संवृतौ तु०कु०पर०सक०सेट् । थुडति अथुडीत् ।

थुत्कार पु० थुदित्यव्यक्तशब्दस्य कारः कृ-घञ् । निष्ठीवन-त्यागानुकरणशब्दे ।

थुर्व्व वधे भ्वा०पर०सक०सेट् । थूर्वति अथूर्व्वीत् । थूर्त्त ।

## द

द पु० दा-दैप-दो-वा क । पर्व्वते, दत्ते खण्डने च। भार्य्यायाम् स्त्री०। दातरि त्रि०'दे! व'पतिर्विदुषी'ति नैषधम् ।

दंश पु० दन्श-अच् । वनमक्षिकायाम् (डांश) दन्श-करणादौ घञ् । वर्म्मणि, मर्म्मणि, दोषे, खण्डने, सर्पाघाते, दन्ते च ।

दंशन न० दन्श-भावे ल्युट् । दन्तादिना खण्डने । करणे ल्युट् । वर्म्मणि ।

दंशित त्रि० दंशः वर्म्म संजातोऽस्य । कृतसन्नाहे धृतवर्म्मणि

दंष्ट्रा स्त्री० दशतेऽनया दन्श-ष्ट्रन् अजा० न ङीप्। दन्तभेदे दन्तपङ्क्तिद्वयप्रान्तस्थायां द्विगुणाकृतायां दन्तावलौ ।

दंष्ट्रिन् पु०दंष्ट्रा+अस्त्यर्थे इनि । सूकरे, सर्पे च। दंष्ट्रायुक्ते त्रि०

दक्ष वृद्धौ शीघ्रार्थे च भ्वा०आत्म०अक०सेट्। दक्षते अदक्षिष्ट।

दक्ष त्रि० दक्ष-अच् । निपुणे, कार्य्यकुशले, शिक्षिते, अनलसे च कुक्कुटे, शिववृषे, मुनिभेदे, ब्रह्मणः दक्षाङ्गुष्ठाज्जाते प्रजा-

ख्याते 'दद्यात् माता पिता वा यं स पुत्रो दत्तको भवेदि'त्युक्ते पुत्रभेदे पु०।

**दत्ताप्रदानिक** न० दत्तस्याप्रदानं पुनरादानमस्त्यस्मिन् ठन्। अष्टादशविवादान्तर्गते दत्तवस्तुनः पुनरुपादानविषये 'दत्त्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति। दत्ताप्रदानिकं नाम व्यवहारपदं हि तदि'ति नारदोक्ते व्यवहारभेदे।

**दत्तात्मन्** पु० दत्त आत्मा येन। 'दत्तात्मा तु स्वयं दत्त' इत्युक्ते पुत्रभेदे।

**दत्त्रिम** त्रि० दानेन निर्वृत्तः दा-क्त्रि-मप् च। दाननिर्वृत्ते। 'माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुत' इत्युक्ते दत्तकपुत्रे पु०।

**दद** दाने धृतौ च भ्वा० आ० सक० सेट्। ददते अददिष्ट ददद्रे

**दद्रु** पु० दद-रु। रोगभेदे (दाद्) कच्छपे च।

**दद्रुघ्न** पु० दद्रुं हन्ति हन-ठक्। चक्रमर्द्दके। (दादमर्द्दन)।

**दद्रुण** त्रि० दद्रु-अस्त्यर्थे न। दद्रू-न कुलच् वा। दद्रुरोगवति

**दद्रू** पु० दरिद्रा-ऊ नि०। त्वग्रोगभेदे (दाद्)।

**दध** दाने धारणे च भ्वा० आ० सक० सेट्। दधते अदधिष्ट।

**दधि** न० दध-इन्। (दइ) दुग्धविकृतिभेदे, वस्त्रे च। धा-कि द्वित्वम्। धारणकर्त्तरि त्रि०।

**दधिकूर्चिका** स्त्री० 'दध्ना सह पयः पक्वं यत् स्यात्तद्दधिकूर्चिके'त्युक्तायामामिक्षायाम् (छाना)। [(कएतबेल)

**दधित्थ** पु० दधिवद्वर्णस्तिष्ठत्यस्मिन् स्था-क पृ०। कपित्थे

**दधिपुष्पिका** स्त्री० दधिवत् शुभ्रं पुष्पमस्याः कप् अत इत्वम्। श्वेतापराजितायाम्। कवर्भावे ङीप्। कोलशिम्ब्याम्।

**दधिफल** पु० दधिवत् द्रवः फलेऽस्य। कपित्थे।

**दधिमण्ड** पु० ६त०। दध्नः मस्तुनि (मात) ख्याते पदार्थे।

**दधिसक्तु** पु० ब०व०। दध्युपसिक्ताः सक्तवः। दधिमिश्रितसक्तुषु

**दधिसार** न० ६त०। नवनीते।

**दधीच(चि)** पु० अथर्वमुनेरौरसे कर्द्दमप्रजापतिकन्यायां जाते मुनिभेदे, वृत्रासुरवधार्थं यस्यास्थिभिः देवैर्वज्रं निर्मितम्

**दधीचास्थि** न० ६त०। तेन निर्मितत्वेन तत्कार्य्ये। वज्रे तन्नामके हीरके च।

**दध्न** पु० दध-न। यमभेदे 'औडुम्बराय दध्नायेति यमतर्पणमन्त्रः

**दनु** स्त्री० कश्यपपत्न्याम् दक्षप्रजापतेः कन्यायां दानवमातरि

**दनुज** पु० दनोर्जायते जन-ड। असुरे, दनुजस्तनुप्रभृतयोऽप्यत्र

**दन्त** पु० अन्तर्भावितण्यर्थे दम-तन्। चर्व्वणसाधनेऽस्थिभेदे (दांत) कुञ्जे, पर्व्वतनितम्बे, सानुनि, द्वात्रिंशत्संख्यायाञ्च।

**दन्तक** त्रि० दन्ते प्रभितः कन्। दन्तमार्ज्जनोपजीविनि। नागदन्ते, गिरिप्रदेशात् तिर्य्यग्बहिर्गते पाषाणे च पु०। स्वार्थे कन् दन्तार्थे पु०।

**दन्तकर्षण** पु० दन्तान् कर्षति कृष-ल्यु। जम्बीरे।

**दन्तकाष्ठ** न० दन्तशोधनार्थं काष्ठम्। दन्तधावनसाधने काष्ठे। तत् यस्मात् ५ब०। विकङ्कतवृक्षे पु०। [(ठोट)

**दन्तच्छद** पु० दन्ताश्छाद्यन्तेऽनेन छद-णिच्-घ ह्रस्वः। ओष्ठे

**दन्तच्छदोपमा** स्त्री० दन्तच्छदस्योष्ठ उपमीयतेऽनया करणे ड। बिम्बीलतायाम् (तेलाकुचा) तत्फलेन हि ओष्ठस्यौपम्यं प्रसिद्धम्

**दन्तधावन** पु० दन्तान् धावयति शोधयति धाव-ल्यु। खदिरवृक्षे, गुल्मकरञ्जे, वकुले च। भावे ल्युट्। दन्तशुद्धौ।

**दन्तपत्रक** न० दन्त इव शुभ्रं पत्रं दलं यस्य। कुन्दपुष्पे [...]

**दन्तपुष्प** न० दन्त इव शुभ्रं पुष्पमस्य। कुन्दे, कतकफले च।

**दन्तफल** न० दन्त इव शुभ्रं फलम्। कतकफले। दन्तवत् फलमस्य। कपित्थे पु०। पिप्पल्याम् स्त्री० टाप्।

**दन्तमूलिका** स्त्री० दन्त इव शुभ्रं मूलं यस्याः कप्। दन्तीवृक्षे

**दन्तवक्र** पु० दन्तप्रधानं वक्त्रमस्य। करूषदेश्ये नृपतिभेदे।

**दन्तवीजक** पु० दन्तवत् वीजानि यस्य। दाडिमे वृक्षे।

**दन्तशठ** पु० दन्तान् शठति क्लेदयति अच्। जम्बीरे, कपित्थे कर्म्मरङ्गे, नागरङ्गे च। चाङ्गेर्य्यां चुक्राम्लिकायां स्त्री०।

**दन्ताघात** पु० दन्तमाहन्ति आ+हन-अण्। निम्बूके। भावे घञ्। दन्तैराहनने।

**दन्तालिका** स्त्री० दन्तान् अलति भूषयति, तेभ्यो वा पर्य्याप्नोति अल+अण्-ण्वुल् वा। वल्गायाम्। (लागाम)

**दन्तावल** पु० दन्त+अस्त्यर्थे वलच् पूर्व्वदीर्घः। हस्तिनि।

**दन्तिका** स्त्री० दम-तन्+गौरा० ङीप् स्वार्थे कन्। दन्तीवृक्षे।

**दन्तिन्** पु० दन्त-इनि। हस्तिनि।

**दन्तिनी** स्त्री० दन्त-इनि। दन्तीवृक्षे। [सोमधौ च।

**दन्ती** स्त्री० दम-तन् गौरा० ङीप्। उदुम्बरपर्ण्यां, प्रत्यक्पर्ण्यां-

**दन्तीवीज** न० ६त०। रेचके फलभेदे जयपाले।

**दन्तुर** त्रि० उन्नताः दन्ताः सन्त्यस्य दन्त+उरच्। उन्नतदन्तयुक्ते, उन्नतानते विषमे स्थाने च।

**दन्तुरच्छद** पु० दन्तुरः उन्नतानतः छदो यस्य। बीजपूरे।

**दन्तोलुखलिक** पु० दन्ता एव उलुखलं कण्डनसाधनं विद्यतेऽस्य ठन्। तापसभेदे स हि दन्तैरेव व्रीह्यादीन् कण्डयित्वा खादति। इनि। दन्तोलुखलीत्यप्यत्र।

**दन्त्य** त्रि० दन्ते दन्तमूले वा भवः यत्। दन्तदन्त्यमूलयोर्जाते तवर्गादौ वर्णे। दन्तेभ्यो हितः यत्। दन्तहितकारके।

दन्दशूक पु० गर्हितं दशति दंश गर्हार्थे यङ्-ऊक। राक्षसे, सरीसृपे, सर्पे च। [दम्भित्वा दब्ध्वा।

दन्भ दम्भे स्वा० प० अक० सेट्। दभ्नोति अदम्भीत्।

दन्भ सङ्घाते चु० आत्म० अक० सेट्। दम्भयते अददम्भत।

दन्श दशने भ्वा० पर० सक० अनिट्। दशति अदाङ्क्षीत्।

दभ प्रेरणे चु० उभ० सक० सेट् इदित्। दम्भयति ते अददम्भत् त

दभ प्रेरणे चु० उभ० सक० सेट्। दभयति ते अदीदभत् त।

दभ्र न० दन्भ-रक। अल्पे, 'अदभ्रदर्भामधिशय्य' इति भारवि

दम शमे दण्डे च दि० शमा० अक० सेट्। दाम्यति अदमत् अदमीत्। दमित्वा दान्त्वा।

दम पु० दम-घञ्। दण्डे बाह्येन्द्रियाणां श्रेयोविषयव्यतिरिक्तेभ्यो निवर्त्तने, 'निग्रहो बाह्यवृत्तीनां दम इत्यभिधीयते' इत्युक्ते बाह्येन्द्रियव्यापाररोधे, विकारहेतुसन्निधानेऽपि मनसः स्थैर्ये, 'कुत्सितात् कर्म्मणो विप्र! यच्च चित्तनिवारणम्। स कीर्त्तितो दम' इत्युक्ते कुकर्मभ्यो मनसो निवारणे, कर्द्दमे, दमने च। [घोषज' इति माघ

दमघोष पु० शिशुपालपितरि चन्द्रवंश्ये नृपभेदे, 'उदमीदम-

दमघोषसुत पु० ६त०। शिशुपाले। दमघोषजादयोऽप्यत्र।

दमनक पु० दम ल्यु स्वार्थे कन्। (दोना) वृक्षभेदे, कुन्दवृक्षे च

दमनी स्त्री० दम्यतेऽनया ल्युट्। अग्निदमनीवृक्षे।

दमयन्ती स्त्री० दम-णिच्-शतृ। नलराजपत्न्याम्, मल्लिकायाञ्च।

दमित त्रि० दम क्त णि०। दान्ते भारवहनादिशिक्षायुक्ते च।

दमु(मू)नस् पु० दम उनसि वा दीर्घः। अग्नौ, शुक्राचार्य्ये च

दम्पती पु द्वि०व०। जाया च पतिश्च द्वन्द्वे जायाशब्दस्य दमादेशः। मिलितयोः जायापत्योः।

दम्भ पु० दम्भ घञ्। कपटे शाठ्ये।

दम्भोलि पु० दभ्नोति छेदयति दन्भ-ओलि। वज्रेऽस्त्रे।

दम्य पु० दम-यत् क्यप् वा। प्राप्तभारवहनयोग्यवयस्के वत्से, अनडुहि च। दमनीये दमनार्हे शास्ये च त्रि० [अदयिष्ट।

दय गतौ वधे, दाने पालने च भ्वा० आत्म० सक० सेट्। दयते

दया स्त्री० दय-भिदा० अङ्। यतोऽपि परक्लेशं हर्त्तुं वा हृदि जायते। इच्छा भूमिसुरश्रेष्ठ! सा दया परिकीर्त्तिता' इत्युक्तलक्षणेच्छाभेदे। [दयुक्रट।

दयालु त्रि० दय-आलुच्। कृपायुक्ते। 'दयालुरपि च कृष्ण'

दयित पु० दय-क्त। भर्त्तरि। प्रियमात्रे त्रि०। भार्य्यायां स्त्री

दर अव्य० दृ-अप्। ईषदर्थे। भय, गर्त्ते च पु०न०। 'दरादराभ्यां दरकम्पिनी' इति नैषधम्। कन्दरे पु०स्त्री० स्त्रीत्वे ङीप्।

दरकण्टिका स्त्री० दर कण्ट इव स्वार्थे कन्। शतावर्य्याम्

दरद् स्त्री दृ अदि। प्रपाते, भये, पर्वते, तटे, म्लेच्छजातिभेदे, हृदये च।

दरद पु० भये, देशभेदे च। तद्देशस्थे ब०व०। दरदा खशा इति मनुः। दरं भयं ददाति दा क। भयप्रदे त्रि०। हिङ्गुले पु०न०

दरिद्र पु दरिद्रा अच् आलोपः। निर्द्धने, दीने च।

दरिद्रा दुर्गतौ अदा० पर० अक० सेट्। दरिद्राति अदरिद्रीत् अदरिद्रासीत्।

दर्दुर पु० दृणाति कर्णौ शब्दैः उरच् नि०। मेघे, भेके, वाद्यभेदे, पर्वतभेदे मलयपर्वतभेदे च। ग्रामजाले न०।

दर्द्रू स्त्री० दरिद्रा ऊ नि०। (दाद) रोगभेदे।

दर्प पु० दृप-घञ् अच् वा। मृगमदे, गर्वे अहङ्कारे च।

दर्पक पु० दर्पयति दृप-णिच् ण्वुल्। कामदेवे।

दर्पण पु० चु० दृप सन्दीपे ल्यु। रूपप्रतिबिम्बदर्शनाधारे, आदर्शे, पर्वतभेदे च। नेत्रे न०।

दर्भ पु० दृभ ग्रन्थे घञ् दृ भ वा। 'कुशाः काशा बल्वजाश्च तथान्ये तीक्ष्णरोमशाः। मौञ्जाश्च शाद्वलाश्चैव षड् दर्भाः परिकीर्त्तिता' इत्युक्तेषु काशादिषु षट्सु तृणेषु।

दर्वि(र्वी) स्त्री० दृ विन् वा ङीप्। व्यञ्जनादिचालके (हाता) काष्ठादिनिर्म्मिते पदार्थे। स्वार्थे कन्। अल्पार्थे गोजिह्वालतायाञ्च। [वा ह्र अच्। दर्वः।

दर्वीकर पु० दर्वीव करः फणो यस्य दर्वीमिव फणां करोति

दर्श पु० दृश्यते यस्मिन् चन्द्रार्कसङ्गमो यत्र दृश-घञ्। अमावस्यायां तिथौ 'अन्योन्यं चन्द्रसूर्य्यौ तु दर्शनाद्दर्श उच्यते' इत्युक्ते। तत्साध्ये यागभेदे च। दर्शपौर्णमासाभ्यां यजेतेति श्रुतिः। भावे घञ्। दर्शने। दृश-अच्। द्रष्टरि त्रि०।

दर्शक पु० दर्शयति राजानम् आगतान्। दृश णिच् ण्वुल्। द्वारपाले। दर्शयितरि त्रि०। दृश ण्वुल्। द्रष्टरि त्रि०।

दर्शन न० दृश ल्युट्। नेत्रे स्वप्ने, बुद्धौ, धर्मे, उपलब्धौ, दर्पणे अध्यात्मज्ञानोपायेषु न्यायादिषु शास्त्रेषु च।

दर्शनीय त्रि० दृश अनीयर्। मनोहरे दर्शनयोग्ये च।

दर्शयितृ पु० दृश णिच् तृच्। द्वारपाले स हि द्वारागतान् राजानं दर्शयति। दर्शनकारयितरि त्रि०।

दल भेदने भ्वा० पर० सक० सेट् घटा०। दलति अदालीत् णिचि दलयति दालयति।

दल भेदे चुरा० उभ० सक० सेट्। दालयति ते अदीदलत् त।

दल न० दल-अच्। खण्डभेदे अपकृष्टद्रव्ये, पत्रे तमालपत्रे उन्नतायाम्, पत्रे अर्द्धे च। [illegible], उत्सेधवदस्त्रनि च पु०।

दलकोष पु० दलान्येव कोषोयस्य । कुन्दपुष्पवृक्षे तस्य पुष्पे कोषान्तराभावात्तथात्वम् ।

दलनिर्म्मोक पु० दलतीति दलं वल्कलं निर्मोक इव यस्य । भूर्जपत्रवृक्षे तस्य हि वल्कलस्य निर्म्मोकाकारत्वम् ।

दलपुष्पा स्त्री० दलं स्वयं विटोर्णं पुष्पमस्याः । केतक्याम् ।

दलाढक पु० दलेनाढक इव । स्वयंजाततिलवृक्षे, पृश्नग्राम, कुन्दे, नागकेशरे, शिरोषे, करिकर्णे, फेने, खातके, गैरिके च

दलामल न० दलेनामलम् । मरुवके । मदनवृक्षे, दमनवृक्षे च पु०

दलाम्ल न० दलेनाम्लम् । चुक्रे (चुकापालङ्ग) ।

दलित त्रि० दल-क्त । प्रफुल्ले, खण्डिते, अर्द्धीकृते च 'व्येकादलिता विभाजितेष्टेनेति लीला० । [सप्तच्छदवृक्षे ।

दलेगन्धि पु० दले गन्धो यस्याः इत् समा० सप्तम्याअलुक् ।

दव गतौ भ्वा०पर०सक०सेट् इदित् । दन्वति अदन्वीत् ।

दव पु०दुनोति दु-अच् । वने,वनानले च । भावे अप् । उपतापे

दवथु पु० टु-दु- उपतापे अथुच् । संतापे, गात्रादिदाहे च ।

दवाग्नि पु० दवस्य वनस्याग्निः । दावानले ।

दविष्ठ त्रि० अतिशयेन दूरः--इष्ठन् अन्त्यलोपः गुणश्च । अति दूरे । ईयसुनि दवीयस् । अत्रैवार्थे स्त्रियां ङीप् ।

दश दीप्तौ चु०उभ०अक०सेट् इदित् । दंशयति-ते अददंशत्-त

दश दंशने चुरा०आत्म०सक०सेट् इदित् । दंशयते अददंशत ।

दशक न० दश परिमाणमस्य कन् । दशति, दशसङ्ख्यायाम् ।

दशकण्ठ पु०दश कण्ठा यस्य । रावणे । दशकन्धरादयोऽप्यत्र

दशत् पु० दश परिमाणमस्य अति । दशानां वर्गे-दशके दशसङ्ख्यायाम् ।

दशधा अव्य० दशप्रकारम् धाच् । दशविधे ।

दशन् त्रि० दन्श-कनिन् । (दश) सङ्ख्याविशेषे ।

दशन पु० दश्यतेऽनेन नि० नलोप । दन्ते, शिखरे च । करणे ल्युट् । कवचे । भावे ल्युट् । दंशने, दन्तादिनाघाते च ।

दशनोच्छिष्ट न० दशनेनोच्छिष्टं यत्र । अधरादिचुम्बने 'रेवतीदशनोच्छिष्टपरिपूतपुटे' इति माघ० । निश्वासे पु० । दन्तोच्छिष्टे त्रि० ।

दशपुर न० दश दिश पिपर्त्ति पृ-क । कैवर्त्तीमुस्तके । दश पुरो यत्र अच् समा० । मालवदेशैकखण्डे ।

दशबल पु० 'दानशीलक्षमावीर्यध्यानप्रज्ञाबलानि च । उपाय- प्रणिधिर्ज्ञानं दश बुद्धबलानि वै' इत्युक्तानि दश बलानि यस्य । बुद्धमुनौ ।

दशभुजा स्त्री० दश भुजा यस्या' । 'इतिदृत्तं पुराकल्पे मनोः स्वयम्भुवोऽन्तरे प्रादुर्भूता दशभुजा देवी'त्युक्तायां दुर्गायाम्

दशम त्रि० दशानां पूरणः डट् मट् । येन दश सङ्ख्या पूर्य्यते तस्मिन् । स्त्रियां ङीप् ।

दशमिन् त्रि० नवतेरूर्द्ध्वं दशमी साऽवस्थाभेदोऽस्त्यस्य पूरणार्थात् इनि । नवत्यूर्द्ध्ववयस्के अतिवृद्धे ।

दशमी स्त्री० दशानां पूरणी । शतायुर्वै पुरुष इत्युक्ते नराणां शतायुष्यनियमात् तस्यायुषो दशधाविभागे नवत्यधिकवयोऽवस्थायाम् तिष्ठावस्थायाम्, चन्द्रस्य दशमकलायाः प्रवेशनिर्गमान्यतररूपात्मके तिथिभेदे 'आरभ्य तस्यां दशमीञ्च यावदि'ति स्मृतिः 'उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्यु'रिति विरहावस्थाभेदे मरणरूपावस्थायाञ्च ।

दशमीस्थ त्रि० दशम्यामवस्थायां तिष्ठति स्था-क । अतिवृद्धे नवत्यधिकवयस्के-क्षीणरागे-स्मृतिहीने, विश्लेषवशात् मरणावस्थामाप्ते कामिजने च ।

दशमूल न० दश मूलानि यत्र । पाचनभेदे । दशानां मूलानां समाहारः पात्रा० । 'बिल्वश्योनाकगाम्भारीपाटलागणिकारिकाः । शालपर्णी पृश्निपर्णी बृहतीद्वयगोक्षुरम् । उभाभ्यां पञ्चमूलाभ्यां दशमूलमुदाहृत'मित्युक्तेषु बिल्वादिदशकमूलेषु ।

दशरथ पु० दशसु दिक्षु गतो रथो यस्य । सूर्यवंश्ये नृपभेदे

दशरथसुत पु० इत० । रामे एवं दशरथात्मजादयोऽप्यत्र ।

दशहरा स्त्री० दशविधानि दशजन्मार्जितानि च पापानि हरति हृ-ठक् । गङ्गाजन्मदिने ज्येष्ठशुक्लदशम्याम् ज्येष्ठशुक्लदशमीमधिकृत्य 'दशपापहरा यस्मात्तस्मात् दशहरा' स्मृतेत्युक्ताम् ।

दशा स्त्री० दन्श-अङ् नि० नलोपः । अवस्थायां, दीपवर्त्त्याम् 'अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् । परोपकारनिरता मणिदीपा इवोत्तमा' इत्युद्भटः । चित्ते, कालकृतविशेषरूपाया गर्भवासजन्माद्यवस्थायां बाल्ययौवनादिरूपायाञ्च, कामकृते विरहिणां नेत्ररागाद्यवस्थादशके, ज्योतिषोक्ते नक्षत्रानुसारेण सूर्यादिग्रहाणां स्वामित्वेन भोग्यकाले च विस्तरो वृहदभिधाने ।

दशाकर्ष पु० दशया तैलादिकमाकर्षति आ+कृष-अच् । प्रदीपे वस्त्राञ्चले पु० स्त्री० पुंस्त्वे वा०व० ।

दशाङ्गधूप पु० 'मधु मुस्तं घृतं गन्धो गुग्गुल्वगुरुशैलजम् । सरलं सिह्लसिद्धार्थं दशाङ्गोधूप उच्यते' इत्युक्ते धूपभेदे प्रकारान्तरमप्यस्ति विस्तरोवृहदभिधाने । [खण्डे ।

दशापवित्र न०दशा वस्त्राञ्चलं पवित्रमिव । श्राद्धादिदेये वास-

दशारुहा स्त्री० दशसु दिक्षु आरोहति आ+रुह-क । कैव-

पीलुमतके। [दक्षि। देशभेदे। नदीभेदे स्त्री०।
दशार्ण पु० दश ऋणानि दुर्गाणि जलानि वा यत्र ऋणशब्द
दशार्ह पु० यदुराजदेशे। तद्देशस्थे ब०व०।
दशावतार पु०दश मीनाद्योऽवताराय्य। विष्णौ ते चाव-
तारा दृष्टदभिधाने दर्शयिष्यन्ते।
दशाश्व पु० दश अश्वा रथे यस्य। 'रथस्त्रिचक्र सोमस्य
कुन्दाभास्तत्र वाजिनः। वामदक्षिणतो युक्ता दश तेन
चरत्यसाविं'त्युक्ते चन्द्रे। [काशीस्थे तीर्थभेदे।
दशाश्वमेधिक पु०दश अश्वमेधा यत्रापि कृता सन्त्यत्र ठन्।
दशाह पु० दशानामह्नां समाहार टच् समा० नाह्नादेश।
दशसु दिनेषु 'दशाह सूतको भवेदि'ति श्रुति।
दशेन्धन पु० दशा वर्त्तिरेव इन्धनं यस्य। प्रदीपे।
दशेरक पु० मरुदेशे। तद्देशस्थे ब व०।
दस उपक्षेपे दि०पर सक०सेट्। दस्यति। अदसत्-अदासीत्
अदसीत्। दसित्वा दस्त्वा।
दस भासे चु० उभ०सक सेट् इदित्। दसयति ते अददसत् त
दस दर्शने दमने च चु०आ०सक०सेट् इदित्। दसयते अददसत
दस्यु पु० दस-युच् नानादेश। चौरे,रिपौ, महासाहसिके च
दस्र पु० दस रक्। गर्दभे। अश्विनीकुमारयो द्वि व। अश्विनी
तारके च। [अददहत् त।
दह दीप्तौ चक दाहे सक चु उभ० सेट् इदित्। दहयति ते
दह दाहे भ्वा०पर०सक अनिट्। दहति अधाक्षीत्।
दहन पु० दह ल्यु। अग्नौ। चित्रकवृक्षे, भल्लातके, दुष्टचेतसि
च। भावे ल्युट्। दाहे न०।
दहर पु० दह अरन्। मूषायाम् भ्रातृदभ्रावल्पपाले (सवि)
सूक्ष्मे 'दहरोऽस्मिन् अन्तराकाश'इति श्रुति।अल्पे च त्रि०
दहराकाश पु० कर्म। चिदाकाशे ईश्वरे।
दाघ दाने भ्वा०पर०सक०सेट् घ इत्। दक्षति अगात्।
दा दाने जुहो०उभ०सक० सेट्। ददाति दत्ते अदात् अदित
दा खण्डने अदा०पर०सक० अनिट्। दाति अदात्।
दाक्षायणी स्त्री दक्षस्यापत्यं स्त्री फिञ् गौरा०ङीष्। अश्वि
न्यादितारासु, सतीनाम्न्यां शिवपत्न्याम्।
दाक्षिणात्य पु० दक्षिणस्यां दिशि भव दक्षिण+त्यक्। नारि-
केले। दक्षिणदिग्भवमात्रे त्रि०।
दाक्षिण्य न० दक्षिणस्य भाव ष्यञ्। अनुकूलत्वे। दक्षिणा
मर्हति ष्य। दक्षिणार्हे त्रिलिङ्ग। [सनेमार्दि।
दाक्षी स्त्री दक्षस्य गोत्रापत्यं स्त्री इञ् ङीप्। पाणिनि-
दाक्षीसुत पु० ६त०। व्याकरणकर्त्तरि पाणिनिमुनौ।

दाडि(लि)म त्रि०। दल घञ् दाल तेन निर्वृत्त इमप् वा
लस्य ड। दाडिम्ववृक्षे स्त्रियां ङीप्'वियोगिनीमैक्षत दाडि-
मीमसावि'ति नै०। [वृक्षे। ६त०। दाडिम्बपुष्पे न।
दाडिमपुष्प पु० दाडिमस्य पुष्पमिव पुष्पमस्य। रोहितक
दाडिम्ब पु दा-डिम्ब इस्य नेत्वम्। स्वनामख्याते वृक्षे।
दात त्रि० दो तन्। छिन्ने। दैप-क्त। शुद्धे।
दात्यूह पु० दो-क्तिन् दितिं खण्डनं वहति दितिवाट् तस्य
अण् वाह ऊट्-ततोऽवेरित आत्वम्। कालकण्ठके पक्षिभेदे।
दात्र न०दा-ष्ट्रन्। छेदनसाधने(दा)यस्त्रे। [अदीदाविष्ट
दान कजुताकरणे, छेदने च। भ्वा०उभ०स्वार्थे सन्। दीदांसत
दान न० दो-दै दा-वा ल्युट्। हस्तिमदजले, पालने, छेदने,
शुद्धौ, त्यागे च।
दानव पु० दनोरपत्यम् अण्। असुरे।
दानवारि पु०६त०। देवे,विष्णौ च। कर्म०। हस्तिमदजले न०
दानशील त्रि० दाने शीलं सततमनुष्ठानं यस्य। बहुदातरि।
दानशौण्ड त्रि०दाने शौण्ड दक्ष। बहुप्रदे। [दृषिकृते च
दापित त्रि० दा णिच् क्त। साधिते, धनादिना मर्षीकृते,
दामन् स्त्री०न० दो मनिन्। दोहनकाले पशुबन्धनरज्जौ
रज्जुमात्रे,मालायाञ्च। स्त्रीत्वे वा ङप्। दामा दाम्ने।
दामनपर्व्वन् न ६त०। दमनभञ्जनतिथौ चैत्रशुक्लचतुर्दश्याम्
दामनी स्त्री० दामैव प्रज्ञा०अण् वा ङीप्। पशुबन्धनरज्जौ
दामोदर पु० 'दामानि लोकनामानि तानि यस्योदरान्तरे।
तेन दामोदरो देव' इत्युक्ते विष्णौ।
दाम्भिक त्रि० दम्भेन चरति धर्म्मं ठञ्। लोकेषु कौशलादि-
ख्यापनार्थं धर्म्मचारिणि वैडालव्रतिनि, दम्भयुक्ते च।
वकपक्षिणि पु०। [अदायत त
दाय दाने भ्वा० आ सक० सेट्। दायते अदायिष्ट णिच्-
दाय पु० दा कर्म्मणि घञ्। 'विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र
प्रकल्प्यते' इत्युक्ते पित्रादिस्वत्वध्वंसे तदुपरमे तत्सम्ब
न्धिभि पुत्रादिभि विभजनीये द्रव्ये, विवाहकाले जामा-
त्रादिभ्यो देये धने च। भाव घञ्। दाने। दो भावे
घञ्। खण्डने। दैप करणादौ घञ्। अम्बुनि, स्थाने,
लये शोकपूर्णवाक्ये च।
दायभाग पु०दायस्य सम्बन्धिस्वामिकधनस्य तत्सम्बन्धिमरणा
दौ तस्य सम्बन्धिभि पुत्रादिभिर्भाग विभजन शुक्त्यापाता
दिना व्यञ्जनम्। अष्टादशविवादान्तर्गते विवादभेदे, तादृ
शविवादविषये पुत्रादिभि पित्रादिधनस्य विभजने च।
दायाद पु० दाय विभजनीयधनमादत्ते आ+दा क। पुत्रे।

दायमन्ति अद्-अण् उपपदसमासः। समिधि।

**दार** पु० व०व० दारयन्ति भ्रातस्नेहम् दृ-णिच्-अच्। पत्न्याम् सा हि पत्युः भ्रातस्नेहं भिनत्तीति लोकप्रसिद्धम्

**दारक** पु०दृणाति भिनत्ति उदरं दृ-ण्वुल्।बालके बालिकायां स्त्री० टाप् अत इत्त्वम्। भेदके त्रि०। ग्रामसूकरे पु०।

**दारकर्मन्** पु० दारौपयिकं दारसम्पादकं कर्म्म०। विवाहे 'सवर्णाग्रे द्विजातीनां दारकर्म्मणी'ति स्मृतिः।

**दारद** पु० दरदि देशे भवः अण्। विषभेदे,पारदे,हिङ्गुले च दरदा देशेन एकदिक् अण्। दरद्देशसन्निकृष्टे समुद्रे।

**दारु** न० दृ-उण्। काष्ठे, पित्तले, देवदारौ च। शिल्पिनि, दारके च त्रि०। [काष्ठे च न०।

**दारुक** पु० कृष्णसारथौ। दारु-स्वार्थे कन्। देवदारुवृक्षे,

**दारुगन्धा** स्त्री० दारुणि गन्धो यस्याः। (चीडा) गन्धद्रव्ये।

**दारुण** पु० दारयति चित्तं दृ-भये उनन्। चित्रके,रौद्ररसे, भयानकरसे च। भयावहे,दुःसहे,भीषणे, भयहेतौ च त्रि०

**दारुनिशा** स्त्री० दारुमयी-निशा पत्रम्। दारुहरिद्रायाम्

**दारुपत्री** स्त्री० दारुमयं पत्रं यस्याः ङीप्। हिङ्गुपत्र्याम्।

**दारुपुत्रिका** स्त्री० दारुमयी पुत्रिका। काष्ठपुत्तलिकायाम्।

**दारुसार** न० दारुषु सारं श्रेष्ठम्। चन्दने। [पदार्थे।

**दारुसिता** स्त्री० दारुमयी सिता मधुरत्वात्। (दारचिनी)-

**दारुहरिद्रा** स्त्री० दारुमयी हरिद्रा। स्वनामख्यातायाम् हरिद्रायाम्।

**दारुहस्तक** पु० हस्त इव कन् दारुमयः हस्तकः। काष्ठनिर्म्मिते हस्ताकारे (हाता) पदार्थे।

**दार्वट** न० दारुवत् निश्चलतया निरूपणीयविषयनिश्चयार्थमटन्त्यत्र अट-घञर्थे क। चिन्तागृहे, मन्त्रगृहे च।

**दार्व्वाघाट(त)** पु० दारूणि आहन्ति हन-अण् वा टान्तादेशः। (काठठोकरा) पक्षिभेदे।

**दार्व्विका** स्त्री० दारयति उलादि० नि० दार्वी दारुहरिद्रा तस्या विकारः ठक्। दारुहरिद्राक्वाथोद्भवे तुत्थे। दार्व्वी +संज्ञायां कन् ह्रस्वो ह्रस्वः। गोजिह्वालतायाम्।

**दार्व्वी** स्त्री० दृ-उण् गौ० ङीष्। देवदारुणि। उला०नि०। हरिद्रायाम् गोजिह्वायाम् दारुहरिद्रायाञ्च।

**दाल** पु० पु० दल-अच्। कोद्रवे (कोदो) धान्यभेदे,मधुभेदे च। देवतालीलतायां स्त्री० ङीप्।

**दाव** पु० दुनोति दु-ण। वने, वनभवेऽग्नौ, वह्निमात्रे च भावे घञ्। तापे। [ताद्योऽप्यत्र।

**दावाग्नि** पु० दावस्य वनस्याग्निः। वनोद्भवेऽग्नौ। दावान-

**दाविक** त्रि० देविकायां नद्यां भवः। अण् देविकादेरेत आत्त्वम्। देविकानदीभवे। [शो(सो)त्।

**दाश्(स)** हिंसने स्वा० पर० सक० सेट्। दाश्नो(स्नो)ति अदा-

**दाश** दाने चु०उभ०सक० सेट्। दाशयति-ते अदिदाशत्-त

**दाश** दाने भ्वा०उ०सक०सेट्। दाशति-ते अदाशीत् अदाशिष्ट। णिच् अदिदाशत्-त।

**दाश(स)** पु० दशति मत्स्यान् दन्श घञ् नि०, दासते मूल्यमस्मै दास-घञ् वा। मत्स्योपजीविनि धीवरे।

**दाश(स)पुर** न० दाशा(सा)न् कैवर्त्तान् पिपर्त्ति पालयति पृ-क। कैवर्त्तीमुस्तके। [रघाय मैथिली'ति नाटकम्।

**दाशरथ** पु० दशरथस्येदम् अण्। श्रीरामे 'प्रदीयतां दाश-

**दाशरथि** पु० दशरथस्यापत्यम् अत इञ्। दशरथस्यापत्येषु श्रीरामादिषु चतुर्षु। [वा। विष्णौ, दशार्हदेशजे त्रि०।

**दाशार्ह** पु० दाशं दानमर्हति अर्ह-अण् दशार्हवंशे भवः अण्

**दाशेरक** पु० मालवदेशे। तद्देशस्थे जने व०व०।

**दास** दाने भ्वा०उभ०सक० सेट्। दासति ते अदासीत् अदासिष्ट। णिच् अददासत् त।

**दास** पु० दास-अच्। शूद्रे, ज्ञातात्मनि, धीवरे, दानपात्रे शूद्रस्योपाधौ 'शूद्रे दासं प्रयोजयेदि'ति स्मृतिः। दास्यते दीयतेऽस्मै भक्तादि दास-घञ्। भृत्ये सेवके च हि०। स्त्रियां ङीप् दासी।

**दासी** स्त्री० दस चेष्टे कर्म्मणि घञ्। झिण्ट्याम्, काकजङ्घायाम्, नीलझिण्ट्यां, वेश्याञ्च। दासस्य पत्नी ङीप्। शूद्रपत्न्यां, कैवर्त्तभार्य्यायाञ्च।

**दासेय** पु०दास्या अपत्यं ढक्। दासीगर्भजाते दासे। दासस्य धीवरस्यापत्यम् ढक्। व्यासजनन्यां स्त्री०।

**दासेर** पु० दास-एरक्। उष्ट्रे। दास्या अपत्यं ढक्। दासीपुत्रे दासे। स्वार्थे कन्। अत्रैवार्थे।

**दाह** पु० दह-घञ्। भस्मीकरणे, गात्रादिसन्तापे च।

**दाहक** पु० दह-ण्वुल्। चित्रकवृक्षे, रक्तचित्रके च। दाहकर्त्तरि त्रि०। स्त्रियां दाहिका।

**दाहहरण** न० दाहो ह्रियतेऽनेन ल्युट् णिच्-कर्त्तरि ल्यु वा। वीरणमूले (विणार मूल)। दाहनाशके त्रि०।

**दिकर** पु० दिक्षु कीर्य्यतेऽसौ कॄ-अण्। तरुणे। युवत्यां स्त्री०

**दिक्पति** पु०६त०। दिशामधीश्वरेषु 'इन्द्रो वह्निः पितृपति नैर्ऋतो वरुणो मरुत्। कुबेर ईशः पतयः पूर्व्वादीनां मधीश्वराः' इत्युक्तेषु इन्द्रादिषु 'सूर्य्यः शुक्रः क्षमापुत्रः सैंहिकेयः शनिः शशी। सौम्यस्त्रिदशमन्त्री च पूर्व्वादीनां

मधीश्वरा' इत्युक्तेषु सूर्य्यादिषु च । 'पवनो दिक्पतिर्भूमि
रिति मन्त्र । एव दिक्पालादयोऽपि इन्द्रादिष्वेव ।
दिगम्बर पु० दिक् शून्यमेवाम्बरं यस्य । शिवे क्षपणकभेदे,
'दिगम्बरा मध्यमतमाङ्गुरापादमलकम् । चैतन्यस्वामि-
मदष्टे दा नद्याम्यनेत्यो'त्युक्ते जीवस्य देहपरिमाणाङ्गी-
कारके,बौद्धभेदे च । नग्ने त्रि० । कालिकायां स्त्री०ङीप् ।
दिगामम्बरत्वमिवावरकत्वात् । तमसि न० ।
दिग्गज पु इत०। 'ऐरावत पुण्डरीक वामन कुमुदोऽञ्जन
पुष्पदन्त सार्वभौम सुप्रतीकश्च दिग्गजा' इत्युक्तेषु पूर्वा-
दिदिक्षु भूमिधारणाय स्थितेषु ऐरावतादिषु गजेषु ।
दिग्ध पु० दिह-क्त । विषाक्तबाणे वह्नौ,स्नेहे च । भावे क्त।
लेपे लेपने च न०। कर्मणि क्त। लिप्ते त्रि०। [भावे लि०
दिङ्मात्र न० दिगेवेतीतिमात्रा यत्र । एकदेशे । इव०।
दिति(ती) स्त्री० दो अवखण्डने क्तिन् वा ङीप्। दैत्यमा-
तरि काश्यपपत्न्याम् । भावे क्तिन् न ङीप् । खण्डने ।
दितिज पु० दितेर्जायते जन-ड । असुरे। दितिसुतादयोऽप्यत्र
दिधिषु(षू) पु० दिधिषूमात्मन इच्छति क्यच् क्विप् उ० वा
ऊङ् । द्विरूढायाः स्त्रिया पत्यौ ।
दिधिषू स्त्री दधाति धाम धियते वा धा धिष-वा ऊ नि०,
दिधि धैर्य्यं स्यति षो ऊ वा यतम् । द्विरूढाया स्त्रिया पुनर्भू
स्त्रियाम्, 'ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा ।
सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषू' रित्युक्तायां
ज्येष्ठायामनूढायां सत्याम् ऊढायां कनिष्ठभगिन्याम् ।
दिधिषूपति पु० इत । 'भ्रातुर्मृतस्य भार्य्यायां योऽनुरज्येत
कामत । धर्म्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपति रि
त्युक्ते पुनर्भूपतौ । ज्येष्ठ विवाहात् प्रागूढाया कनिष्ठाया
भगिन्या पत्यौ च ।
दिन न० द्यति तम । सूर्य्यकिरणोपलक्षिते पञ्चदशमुहूर्त्तात्मके
तद्विशिष्टे वा षष्टिदण्डात्मके काले । तत्र मनुष्याणां षष्टि-
दण्डात्मकम् पितॄणाम् सौरमासात्मकं तेषां हि
चन्द्रलोकोपरिस्थितेः कृष्णाष्टम्यामेव सूर्य्यस्य तल्लोके
किरणसम्पातात् शुक्लाष्टम्यां पुनर्दर्शनाभावात् न
तत्सम्भवः । देवानामसुराणाञ्च सौरवर्षकालात्मकं तद्
विभागश्च ज्योतिषेऽभिधाने । ब्रह्मणो दिव्यमानेन युगसहस्र-
रूपकालात्मकमिति विवेक ।
दिनकर पु० दिनं करोति ग्नोदर्तेन ह टक्, दिने-कर ।
किरणो यस्य वा । सूर्य्ये ।
दिनक्षय पु० 'एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा
तदा दिनक्षय प्रोक्त' इत्युक्ते एकसावनदिनस्पृष्टतिथि-
त्रयरूपे काले ।
दिनपति पु० इत० । सूर्य्ये, अर्कवृक्षे च । दिनेशादयोऽप्यत्र ।
दिनमणि पु० दिने मणिरिव प्रकाशकत्वात् । सूर्य्ये अर्कवृक्षे च
दिन्भ सघाते चु०आत्म०अक सेट् । दिम्भयते अदिदिम्भत
दिनादि पु० इत० । प्रात काले ।
दिनान्त पु इत०। दिवावसाने सायकाले । [अदिदिम्भत स
दिम्भ प्रेरणे चुरा० उभ सक० सेट् इदित् । दिम्भयति ते
दिम्प सघाते चुरा०उभ०सक०सेट्। दिम्पयति ते अदिदिम्पत्-त
दिलीप पु० सूर्य्यवंश्ये नृपभेदे रघो पितरि ।
दिव प्रीतौ भ्वा०पर०सक०सेट् इदित् । दिन्वति अदिन्वीत् ।
दिव, जिगीषायां पणे व्यवहारे इच्छायां धात्वर्थाश्च दिवा०
पर अक सक०च सेट। दीव्यति अदेवीत्। देवित्वा द्यूत्वा
दिव कूजने चु०आत्म०सक०सेट् । देवयते अदिदेवत ।
दिव चार्दे चु०उभ०पक०सेट् । देवयति ते अदीदिवत त ।
दिव् स्त्री० दिव-डिवि । स्वर्गे आकाशे च । [दिवसे, वने च
दिव न०दिव क । स्वर्गे, 'दिवौकस' इत्यत्रादन्तता। आकाशे,
दिवस पु० दीव्यन्त्यत्र दिव असच् किच्च । 'नाडीषष्ट्यात
त्वत्र सावनो दिवस स्मृत ।त्रिंशभागोऽर्कराशेस्तु दिवस
सौर उच्यते । चान्द्रस्तु तिथ्यवच्छिन्नो भौमो भपरिभ्र
मेण' इत्युक्तेषु सावनादिषु दिनेषु ।
दिवसमुख न० इत० । प्रभाते ।
दिवस्पति पु० इत० अलुक् स० षत्वञ्च । इन्द्रे ।
दिवस्पृथिवी स्त्री० द्वि०व० । दिवञ्च पृथिवी च नि० सुट् ।
मिलितयो भूमिस्वर्गयो रोदस्यो ।
दिवा अव्य दिव-का । दिवसे ।
दिवाकीर्त्ति पु दिवैव कीर्त्ति रस्य यस्य रात्रौ क्षुरकर्म्म-
निषेधात । नापिते । [भद्भुजाया दिवातनीमि'तिभट्टि
दिवातन त्रि दिवा भव ट्यु तुट् च। दिवाभव। स्त्रियां ङीप्।
दिवान्ध पु० दिवा दिने अन्ध दर्शनाभावात । पेचकादौ
'दिवान्धा प्राणिन केचि'दिति सप्तशती ।
दिवाभीत पु० दिवा दिवसे भीत । चौरे पन्ने, पेचके च ।
'दिवाभीतमिवान्धकार'मि ति कुमार ।
दिवि पु० दिव कि । चाषपक्षिणि ।
दिविज पु० दिवि जायते जन ड इन० अलुक् स । स्वर्गीय
- त्रिदिवसादयोऽप्यत्र । [दिविजादयोऽप्यत्र ।
दिविषद् पु० दिवि सीदति क्विप् षत्वमादि० षत्वम । देव
दिवो(वौ)कस्(स) पु दिव दिवम् वा ओकस् यस्य ष

अटनातम्। देवे। 'तारकेण दिवौकस' इति कुमारः

**दिवोदास** पु० चन्द्रवंशीये काशिराजे नृपभेदे।

**दिव्य** न० दिवि भवं यत्। लवङ्गे चन्दने, गक्षधरूपे, अलौकिक प्रमाणभेदे गुग्गुलौ, तन्त्रोक्ते भावभेदे च। नायकभेदे पु०। दीव्यतेऽनेन दिव-क्यप्। मनोहरे द्योतनात्मके च त्रि०

**दिव्यगन्ध** पु० दिव्यो मनोहरो गन्धोऽस्य। गन्धके। लवङ्गे न०। स्थूलैलायां स्त्री०। कर्म०। उत्तमगन्धे पु०।

**दिव्यगायन** पु० कर्म०। गन्धर्वे।

**दिव्यतेजस्** स्त्री० दिव्यं तेजो यस्याः। ब्राह्मीलतायाम्।

**दिव्यदोहद** न० 'यत् दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये। उपयाचितकं दिव्यदोहदं तद्विदुर्बुधाः' इत्युक्ते अभीष्टसिद्धये देवेभ्यो देये द्रव्ये।

**दिव्यपुष्प** पु० दिव्यं पुष्पमस्य। करवीरे। महाद्रोणायां स्त्री०

**दिव्यलता** स्त्री० कर्म०। मूर्वालतायाम्।

**दिव्यसार** पु० दिव्यः सारो यस्य। शालवृक्षे।

**दिव्या** स्त्री० दीव्यतेऽनेन दिव-क्यप्। वन्ध्याकर्कोट्यां, शता-वर्याम्, महामेदायां, आमलक्याम्, श्वेतदूर्वायां, श्वेतजीरके, हरितक्याञ्च।

**दिव्योदक** न० कर्म०। मेघजले।

**दिव्योपपादुक** पु० उपपद्यते मातृपित्रादिद्वारकारणमनपेक्ष्यैव अदृष्टसहकृताणुभ्य एव उत्पद्यते उप+पद-उकञ् पिशा-चादिव्यावृत्तये दिव्य इति विशेषणं तेषाञ्च मातृपित्रा-दिद्वारकारणापेक्षाभावेऽपि दिव्यत्वाभावान्न तथात्वम्। देवे

**दिव्यौषधि** स्त्री० कर्म०। मनःशिलायाम्।

**दिश** दाने आज्ञापने च तु० उभ० सक० अनिट्। दिशति अदिक्षत

**दि(श्)शा** स्त्री० दिश-क्विप् वा टाप्। आशायाम् ककुभि।

**दिश्य** त्रि० दिशि भवं दिग्भ्य उपनीतं वा यत्। दिग्भवे, दिग्भ्य उपनीते च। [काले पु०। उपदिष्टे त्रि०।

**दिष्ट** न० दिश-क्त। भाग्ये 'न दिष्टमिदं कुरुते' इति माघः।

**दिष्टान्त** पु० दिष्टस्य भाग्यस्यान्तः। भाग्यस्यान्तोपलक्षिते मरणे

**दिष्ट्या** अव्य० दिश-क्तच् अव्ययादि० नि०। मङ्गले, हर्षे, भाग्ये-नेत्यर्थे च। [अधिक्षत-अदिग्ध।

**दिह** लेपने अदा० उभ० सक० अनिट्। देग्धि दिग्धे अधिक्षत्

**दी** क्षये दि० आत्म० अ० अनिट्। दीयते अदास्त। दिग्ये। दीन।

**दीक्ष** मौण्ड्ये, यागे, उपनयने, नियमव्रतयोरादेशे च भ्वा० आ० सक० सेट्। दीक्षते अदीक्षिष्ट।

**दीक्षणीया** स्त्री० दीक्ष-अनीयर्। सोमसाध्ये यज्ञभेदे।

**दीक्षा** स्त्री० दीक्ष-अ। नियमे, संस्कारे 'विवाहदीक्षां निरवर्त्तयद्गुरुः' इति रघुः। 'दीयते विमलं ज्ञानं क्षीयते कर्म्मवा-सना तेन दीक्षेति सा प्रोक्ते'ति तन्त्रोक्ते अभीष्टमन्त्र-ग्रहणे, तदुपदेशे, यागे च।

**दीक्षागुरु** पु० दीक्षायां गुरुरुपदेष्टा। मन्त्राद्युपदेष्टरि।

**दीक्षान्त** पु० दीक्षायाः प्रधानयागस्य अन्तः अन्तोपलक्षित-तत्समापको यागभेदः। अवभृथाख्ये यागभेदे।

**दीक्षित** त्रि० दीक्ष-क्त। सोमयागादौ संकल्पं विधाय कृतनियमे। दीक्षा तन्त्रोक्ता संजाताऽस्य इतच्। तान्त्रिकदीक्षायति।

**दीदिवि** पु० दिव-क्विन् अभ्यासोदीर्घश्च। वृहस्पतौ। अन्ने पु०न०। उदिते त्रि०। [जिरणे

**दीधिति** स्त्री० दिधी-क्तिन् ग्रहादित्वादिट् इकारलोपश्च।

**दीधी** दीप्तिदेवने दीप्तौ च अदा० उभा० आत्म० अक० सेट्। दीधीते अदीधिष्ट। [भूमिकायां स्त्री०।

**दीन** त्रि० दी-क्त तस्य नः। दुःखिते, भीते च। तगरपुष्पे न०।

**दीनार** पु० दी-आरक् नुट् च। स्वर्णभूषणे, स्वर्णाया, सुवर्ण-कर्षद्वये, निष्कमाने, द्वात्रिंशद्रक्तिकापरिमितकाञ्चने च।

**दीप** दीप्तौ दि० आत्म० अक० सेट्। दीप्यते-अदीपि-अदी-पिष्ट। दीप्तः। णिच् अदीदिपत् त अदिदीपत् त। [ज्वलिते

**दीप** पु० दीप-क। प्रदीपे तैलादिस्नेहयोगेन वर्त्तिकादाहकशिखा

**दीपक** पु० दीप+स्वार्थे कन्। प्रदीपे, श्येनपक्षिणि, रागभेदे च। कुङ्कुमे अर्थालङ्कारभेदे च न०। दीपयति णिच् ण्वुल्। यमान्याम्, स्त्री०। कार्य्यप्रकाशके, कुशले च त्रि०। स्त्रियां टाप् अत इत्त्वम् यन्यभेदे।

**दीपन** पु० दीपयति भक्षणात् जठराग्निमुत्तेजयति दीप-णिच् ल्यु। पलाण्डौ, काशमर्द्दने, मयूरशिखाख्या शालिकशाके, तगरमूले, कुङ्कुमे च। दीपनकर्त्तरि त्रि०। पाठायां, मेथिकायां, ताल्याञ्च स्त्री० ङीप्।

**दीपपुष्प** पु० दीप इव पुष्पमस्य। चम्पकवृक्षे।

**दीपमालिका** स्त्री० दीपानां माला यस्याम् कप् अत इत्त्वम्। दीपान्वितायाममावस्यायाम्। इत०। दीपसमूहे।

**दीपवृक्ष** पु० स्वार्थे कन् दीपस्याधारो वृक्षः। (पिलसुज) दीपाधारे तैजसे काष्ठादिनिर्म्मिते वा पदार्थे।

**दीपान्विता** स्त्री० दीपैरन्विता। गौणचान्द्रेण कार्त्तिकस्य, मुख्यचान्द्रेणाश्विनस्यामावस्यायाम्।

**दीप्त** पु० दीप-क्त। निम्बूके, सिंहे च। स्वर्णे हिङ्गुनि च न०। ज्वलिते, दग्धे भासिते, दीप्तिमति च त्रि०। लाङ्गलिकायाम्, अग्निशिखोषधौ, ज्योतिष्मत्याञ्च स्त्री० टाप्।

**दीप्तजिह्वा** स्त्री० दीप्ता ज्वलन्ती जिह्वा यस्याः। उल्कामुख्यां

न्यायमते आत्मधर्मभेदे, पीडायां, कष्टे च । दुःखसाधने पदार्थे, तद्वति च त्रि० । [दुःखानां त्रित्वे ।

**दुःखत्रय** न० ६त० । आध्यात्मिकाधिदैविकाधिभौतिकरूपे

**दुःशासन** पु० दुःखेन शिष्यतेऽसौ शास-खल् । धृतराष्ट्रपुत्रे भारतप्रसिद्धे दुर्योधनस्यानन्तरानुजे धृतराष्ट्रसुते ।

**दुःषमम्** अव्य० दुष्टं समम् तिष्ठद्गु० अव्ययीभावः । गर्हे ६त० असमम् । असमसमे त्रि० ।

**दुःसहा** स्त्री० दुःखेन सह्यते दुर्+सह-खल् । नागदमन्याम्

**दुःस्थ** त्रि० दुःखेन तिष्ठति स्था-क । दीने मूर्खे, कुत्से च ।

**दुःस्थित** त्रि० दुर्+स्था-क्त । अनवस्थिते, दुःखेन स्थिते च

**दुःस्पर्श** पु०स्त्री० दुःखेन स्पृश्यतेऽसौ दुर् स्पृश-खल् । दुरालभायाम् । लताकरञ्जे पु० । कण्टकार्य्याम्, कपिकच्छ्वाम्, आकाशवल्ल्याञ्च स्त्री० । दुःस्पर्शवस्तुमात्रे त्रि० ।

**दुकूल** न० दु-कलच् कुक् च दुष्टं कूलति कूल-आवरणे क वा ष० । क्षौमाम्बरे, अत्युत्तमे, सूक्ष्मवस्त्रे च ।

**दुग्ध** न० दुह-क्त । पयसि क्षीरे, स्त्रीजातिस्तननिःस्यन्दिद्रवे द्रव्ये । कर्म्मणि क्त । कृतदोहनायां धेन्वादौ स्त्री० । प्रपूरिते त्रि० । भावे क्त । दोहने न० ।

**दुग्धपाषाण** पु० दुग्ध निर्यासः पाषाणस्य यस्य । (शिरगोला) ख्याते वृक्षभेदे । स्वार्थे कन् । तदर्थे ।

**दुग्धिका** स्त्री० दुग्धं दुग्धमिव निर्यासोऽस्त्यस्याः ठन् । (दुधि) (क्षीरा) इति ख्याते वृक्षभेदे ।

**दुग्धी** स्त्री० दुग्धमिव निर्यासोऽस्त्यस्य अर्शआद्यच् गौ० ङीष् । दुग्धिकायाम् (दुधि) ।

**दुद्रुम** पु० दुष्टो द्रुमः ष० । हरितपर्णे पलाण्डौ ।

**दुन्दुभि** पु० दुन्दु इति शब्देन उभति पूरयति उभ-क शक० । डक्कढक्कायां, भेर्य्यां, वरुणे दैत्यभेदे, राक्षसभेदे, विषे, ६०वर्षमध्ये 'शालिना जायते पृथ्वी दुन्दुभौ वरवर्णिनी' इत्युक्तलक्षणे वत्सरभेदे च । पाशके स्त्री० ।

**दुर(स्)** अव्य०दु रुक् सुक् वा । दुष्टे निन्दायां, निषेधे, दुःखे च

**दुरक्ष** पु० दुष्टोऽक्ष प्रा० कपटपाशके । दुष्टोऽक्षो यत्र दुष्टद्यूते

**दुरत्यय** त्रि० दुःखेनातीयते दुर्+अति-इ-खल् । दुरतिक्रमणीये, दुस्तरे च । [दुर्गमे, दुर्ज्ञेये च ।

**दुरदृष्ट** न० दुष्टमदृष्टं प्रा० । दुर्भाग्ये पापे । [दुष्प्राप्ये

**दुरधिगम** त्रि० दुःखेनाधिगम्यते दुर् अधि+गम-खल् ।

**दुरध्व** पु० दुष्टोऽध्वा प्रा० अच् । दुष्टवर्त्मनि ।

**दुरन्त** त्रि० दुष्टोऽन्तोऽवसानं यस्य । मृगयाद्यूतपानादिषु व्यसनेषु तानि हि प्रथमं सुखयित्वा अन्ते दुःखयन्ति ।

दुर्निग्रहेऽनाः परिच्छेदे यस्य । दुर्बोधे, गभीरे च ।

**दुरभिग्रह** पु० दुःखेनाभिगृह्यतेऽस्य स्पर्शोऽस्मात् खल् । अपामार्गे । दुःखेन ग्राह्ये त्रि० । दुरालभायां, कपिकच्छ्वाञ्च स्त्री० ।

**दुराग्रह** पु० दुष्ट आग्रहः निर्बन्धः दुरभिनिवेशेऽभिनिवेशे, ६त० । तद्वति त्रि० ।

**दुराचार** पु० दुष्ट आचारः प्रा० । निन्दिताचरणे । ६ब० । तदाचारवति त्रि० । 'अपि चेत् सुदुराचार' इति गीता ।

**दुरात्मन्** त्रि० दुष्ट आत्मा चित्तं यस्य । दुश्चरित्रे जने ।

**दुराधर्ष** पु० दुष्टान् रामस्मात् आधर्षयति अच् । श्वेतसर्षपे तत्फलत्वे ... धृतराष्ट्रसुते ... दर्शितम् । दुःखेन केनापि धर्षितुमशक्यम् दुर्+आ+धृष-खल् । धर्षयितुमशक्ये त्रि० । कटुम्बिनीवृक्षे स्त्री० ।

**दुरारुह** पु०दुःखेनारुह्यतेऽसौ दुर्+आ+रुह-खल् कर्म्मणि क । बिल्वे, नारिकेले च । खर्ज्जूर्य्यां स्त्री० ।

**दुरारोह** पु० दुःखेनारुह्यते दुर्+आ+रुह-खल् । तालवृक्षे । क्षीरवल्ल्यां स्त्री० । दुरारोहमात्रे त्रि० ।

**दुरालभा(म्भा)** स्त्री० दुःखेनालभ्यते स्पृश्यते असौ दुर्+आ+लभ-खल् वा मुम् । (आल्कुशी) लतायाम् ।

**दुरालाप** पु० दुष्ट आलापः प्रा० । दुष्टवचनकथने गालिप्रदाने च । ६ब० । तद्वति त्रि० ।

**दुरासद** त्रि०दुःखेनासद्यते गम्यतेऽसौ दुर्+आ+सद-खल् । दुर्गमे, दुर्धर्षे च 'स बभूव दुरासदः' इति रघुः ।

**दुरित** न० दुष्टमितं गमनं नरकादिस्थानप्राप्तिरनेन । पापे ।

**दुरुक्त** न० दुष्टमुक्तम् । पापे । [दुर्निवारे ।

**दुरुच्छेद** त्रि० दुःखेन उच्छिद्यतेऽसौ दुर्+उद्+छिद-खल् ।

**दुरुत्तर** त्रि० दुःखेन उत्तीर्य्यते दुर्+उद्+तॄ-खल् । दुस्तरे दुष्टमुत्तरम् प्रा० । दुष्टे उत्तरे न० ।

**दुरूह** त्रि० दुःखेन ऊह्यते वितर्क्यते ऊह-खल् । दुर्विज्ञेये

**दुरोदर** पु० दुष्टम् समन्तादुदरमस्य । द्यूतकारे, पणे, अक्षे च । द्यूते न० । 'दुरोदरच्छद्मजितामि'ति भारविः ।

**दुर्ग** पु० दुःखेन गम्यतेऽसौ कर्म्मणि ड । असुरभेदे, तद्धन्त्र्यां देव्यां स्त्री० । 'तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् दुर्गादेवीति विख्यातमिति चण्डी । अपराजितायां, नीलाञ्च । गुग्गुलौ पु० । दुःखेन गच्छत्यत्र दुर्+गम-आधारे ड । पर्व्वतादिभिर्दुर्गमे पुरे, कोट्टे (केल्ला) (गड) ख्याते न० । दुर्गमदेशे, उच्छ्रिते, दुःखेन सम्पाद्ये च त्रि० । कामक्रोधादिदुःखेन दुस्तरे संसारे न० ।

**दुर्गत** त्रि० दुर्गच्छति दुर्+गम क्त । दरिद्रे दोषंगते च ।

दुष्प्रवेशा स्त्री० दुःखेन प्रवेशो यत्र । कन्थारीवृक्षे । [पतौ ।
दु(ष्य)ष्मन्त पु० चन्द्रवंशीये राजभेदे भरतराजपितरि शकुन्तला-
दुह दोहे अदा० उभ० द्विक० अनिट् । दोग्धि दुग्धे ।
अधुक्षत् अधुक्षत अदुग्ध ।
दुह वधे भ्वा० पर०सक० सेट् । दोहति अदुहत्-अदोहीत् ।
दुहितुःपति पु० ६त० अलुक् स० । जामातरि ।
दुहितृ स्त्री० दुह-तृच् गुणाभावः इट् च नि० । सुतायाम्
दू खेदे दिवा०आत्म०अक० सेट् । दूयते अदविष्ट । दून० ।
दूत पु० दु-क्त दीर्घश्च । सन्देशहरे वार्त्ताहरे ।
दूति(ती) स्त्री० दू-क्तिच् वा ङीप् । स्त्रीपुंसयोः सन्देशहारि-
कायां स्त्रियाम् । 'रतिदूतिपदे निवेशिते'ति कुमारः ।
दूत्य न० दूतस्य दूत्या वा भावः कर्म वा यत् । दूतकर्मणि
दूतस्वभावे च । [दूने दमने मितापो'ति नैषधम् ।
दून त्रि० दू-क्त । अध्वगत्यादिना श्रान्ते, सन्तप्ते च 'चित्तेन
दूर त्रि० दुःखेनेयते प्राप्यते दुर्+इण्-रक् इणो लोपश्च ।
विप्रकृष्टे अगोचरे च ।
दूरदर्शन पु० दूरात् पश्यति दृश-युच् । गृध्रे ।
दूरदर्शिन् पु० दूरात् कार्यान्तरं प्राक् पश्यति दृश-णिनि ।
पण्डिते । दूरात् दर्शके त्रि० ।
दूरमूल पु० दूरपर्यन्तं मूलमस्य । मुञ्जतृणे (मुञ्ज) ।
दूर्वा स्त्री० दुर्व्व-हिंसायां घ । स्वनामख्याते घासभेदे ।
दूर्वाकाण्ड न० दूर्वाणां समूहः काण्डच् । दूर्वासमूहे ।
दूर्वाष्टमी स्त्री० भाद्रशुक्लाष्टम्यां तद्दिने दूर्वया देवार्च्चनस्य
स्मृतौ विधानात्तथात्वम् । दूर्वाप्यत्र 'श्रावणी दौर्गनवमी
दूर्वा चैव हुताशनी'ति स्मृतौ तत्रार्थं दूर्वाशब्दप्रयोगात् ।
दूषण पु० रावणस्य मातृष्वस्रेये राक्षसभेदे । दूष-णिच-ल्युट् ।
दोषदाने न० । [नेत्रमले (पिचुटि)
दूषिका स्त्री० दूषयति नेत्रं क्लिन्नं करोति दुष-णिच-ण्वुल् ।
दूषित त्रि० दुष-णिच्-क्त । अभिशस्ते, निन्दिते, दत्तदोषे च
दूष्य न० दुष-णिच्-य । वस्त्रनिर्मिते गृहे । दूषणीये त्रि०
'दूष्यं वचोमम पुनर्निपुणं विभाव्ये'ति शिरोमणिः । कक्षायां
गजमध्यबन्धनरज्ज्वाञ्च स्त्री० ।
दृ वधे स्वा०पर०सक०अनिट् । दृणोति अदार्षीत् ।
दृ आदरे तुदा०आ०सक०अनिट् आङ्पूर्व्वः । आद्रियते आदृत
दृक्प्रसाद स्त्री० दृशं प्रसादयति प्र+सद-णिच-अच् । कुल-
त्थायां तदञ्जनेन हि दृशः प्रसादो भवति ।
दृढ न० दृह-क्त नि० इडभावः । लौहे रूपककाव्यभेदे, अति-
शये, नितान्ते च । तद्वति, स्थूले, प्रगाढे, बलवति, शक्ते,
कठिने च त्रि० । [वृक्ष छत्रभेदे
दृढ़कण्टक पु० दृढः कण्टकोऽस्य । (धनाकारडा) क्षुद्रकण्टक
दृढ़काण्ड पु० दृढः कठिनः काण्डः स्कन्धोऽस्य । वंशवृक्षे
दीर्घरोहितके न० ।
दृढ़क्षुरा स्त्री० दृढं क्षुराग्रमग्रं यस्याः । बल्वजायाम् तृणभेदे
दृढ़ग्रन्थि पु० दृढो ग्रन्थिः पर्व्वास्य । वंशे ।
दृढ़तृण पु० दृढं कठिनं तृणं कर्म० । मुञ्जतृणे । बल्वजायां स्त्री०
दृढ़नीर पु० कालेन दृढतां प्राप्तं नीरं यस्य । नारिकेले
तस्य जलमेव हि क्रमशः कठिनत्वमुत्पद्यते ।
दृढ़पत्र पु० दृढं पत्रं यस्य । वंशे । बल्वजायां स्त्री० गौरा०
ङीष् । [तृणभेदे ।
दृढ़पादा स्त्री० दृढः पादो मूलमस्या ङीप् । (भुइ आमला)
दृढ़प्ररोह पु० दृढः प्ररोहः अङ्कुरोऽस्य । प्लक्षवृक्षे ।
दृढ़फल पु० दृढानि फलानि यस्य । नारिकेले । [श्यामायाम्
दृढ़बन्धिनी स्त्री० दृढं बध्नाति बध्नाति स्वाश्रयं णिनि ।
दृढ़भूमि त्रि० दृढा भूमिरस्य । योगविशेषेण संस्कृतान्तःकरणे
विषयदृष्टरागादिना चालयितुमशक्ये चित्ते ।
दृढ़मुष्टि पु० दृढा मुष्टिः यत्र, यस्मात् वा । खड्गे, खड्गेन
हि मुष्टेर्दृढता । दृढा अत्यागिनी मुष्टिः, यस्य । कृपणे ।
स हि धनादिकं मुष्टौ निधाय अटितया दृढतरं बध्नाति ।
दृढ़मूल पु० दृढं मूलमस्य । मुञ्जतृणे, नारिकेले च ।
दृढ़वल्कल पु० दृढं वल्कलमस्य । पूगवृक्षे । अम्बष्ठायां स्त्री०
तत्र दृढत्वचापि ।
दृढ़वीज पु० दृढं वीजमस्य । बदरे, चक्रमर्द्दे, बर्बुरे च ।
दृढ़व्रत त्रि० दृढं व्रतं नियमोऽस्य । आफलोदयं प्रारब्धकार्य्या-
त्यागिनि । [संहते
दृढ़सन्धि त्रि० दृढः सन्धिः सन्धानं यस्य । निश्छिद्रतया
दृढ़सूत्रिका स्त्री० दृढं सूत्रं यस्याः स्वार्थे कन् अत इत्वम् ।
मूर्व्वालतायाम् ।
दृढ़स्कन्ध पु० दृढः स्कन्धोऽस्य । क्षीरिकावृक्षे ।
दृता स्त्री० द्रियते दृ-क्त । जीरके ।
दृति पु० दृ-क्तिच् । चर्म्मनिर्म्मितोदकपात्रे, चर्म्मनोदनचर्म्म-
यन्त्रे (भिस्ति) मत्स्यभेदे च ।
दृतिहर पु० दृतिं चर्म्मपात्रं हरति हृ-ट । कुक्कुरे ।
दृन्फ क्लेशे तु० पर०अक०सेट् । दृफति दृम्फति अदृम्फीत् ।
दृन्भू पु० दृभ-ऊ नि० । नृपे, वज्रे, सूर्य्ये, सर्पे, चक्रे च ।
दृप बाधने तु०पर०सक०सेट् । दृपति अदर्पीत् ।
दृप सन्दीपने वा चुरा०उभ०पक्षे भ्वा०पर०सक०सेट् । दर्प-

**देवधान्य** न० देवानां योग्यं धान्यम् । (देधान) धान्यभेदे ।

**देवन** पु० दीव्यत्यनेन दिव-करणे ल्युट् । पाशके । भावे ल्युट् । क्रीडायां, दीप्तौ, व्यवहारे, जिगीषायां, स्तुतौ च न० । दीव्यत्यत्राधारे ल्युट् । लीलोद्याने, पद्मे च ।

**देवनदी** स्त्री० ६त० । गङ्गायाम् 'असंबाधा देवनदी'ति महाभा० ।

**देवनिर्म्मिता** स्त्री० देवैः निर्म्मिता । गुडूच्याम् ।

**देवपथ** पु० देवैरर्च्चिरादिभिरातिवाहिकैरुपलक्षितः पन्थाः अच् समा० । उत्तरमार्गे । देवानां पन्थाः । छायापथे (यमनाला)

**देवपुरोधस्** पु० ६त० । बृहस्पतौ ।

**देवप्रिय** पु० ६त० । पीतभृङ्गराजे । बकपुष्पे न० ।

**देवबला** स्त्री० देवानामिन्द्रियाणां बलं यस्याः ५ब० । सह-देवीलतायाम् ।

**देव(ब)ल्लभ** पु० ६त० । पुन्नागवृक्षे ।

**देवभवन** न० देवानां भवनमिव । अश्वत्थवृक्षे । ६त० । स्वर्गे

**देवभूय** न० देवस्य भावः भू-क्यप् । देवत्वे देवसायुज्ये ।

**देवमणि** पु० देवेषु मणिरिव प्रकाशकत्वात् । शिवे, अश्वस्य कण्ठस्थे रोमावर्त्ते, कौस्तुभमणौ, महाश्वेतायाञ्च ।

**देवमातृक** त्रि० देवः पर्ज्जन्यरूपीन्द्रःमातेव पालकोऽस्य । वृष्टिजलसम्पन्नव्रीहिपालिते देशे ।

**देवयान** न० ६त० । देवरथे देवैरुपलक्षितं यानं मार्गः । अर्च्चि-रादिमार्गे शुक्राचार्यकन्यायां स्त्री० ङीप् । देवांशभूते ।

**देवयोनि** पु० देवा एव योनि कारणमस्य । विद्याधरादौ

**देवर** पु० देव-अर । पत्युः कनिष्ठभ्रातरि ।

**देवरथ** पु० ६त० । देवानां नभोगमनसाधने विमानादौ याने ।

**देवराज** पु० देवानां राजा टच् समा० । इन्द्रे देवाधिपादयोऽप्यत्र

**देवरात** पु० देवा एनं रायासुः क्त च् । अभिमन्युसुते परीक्षिन्नृपे

**देवर्षि** पु० वेदद्रष्टा ऋषिः देव एव सन् ऋषिः । नारदादिमुनौ

**देवल** पु० मुनिभेदे व्यासशिष्ये धौम्यस्य ज्येष्ठभ्रातरि, देवान् जीविकार्थं लाति ला-क । देवोपजीविनि । स्वार्थे कन् अत्रैव 'देवकोपोपजीवी च नाम्ना देवलको भवे'दित्युक्ते विप्रे ।

**देवलता** स्त्री० दीव्यति प्रकाशते देवो कर्म्म० । नवमल्लिकायाम्

**देवलोक** पु० ६त० । स्वर्गे । देवस्य ईश्वरस्य सम्पद्रूपो लोकः । 'भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महर्जनः । तपः सत्यञ्च सप्तैते देवलोकाः प्रकीर्त्तिता' इत्युक्तेषु भूरादिषु सप्तसु लोकेषु

**देववर्द्धकि** पु० ६त० । विश्वकर्म्मणि । [वृक्षेषु, गुग्गुलौ च ।

**देववृक्ष** पु० दीव्यति देवः कर्म्म० । सप्तपर्णवृक्षे, ६त० मन्दारादि

**देवव्रत** पु० देवम् इन्द्रियसंयमनं व्रतमस्य । भीष्मे । [धीने च

**देवसात्** अव्य० देवेभ्यो देयं तदधीनं साति वा देवेभ्योदेये, तद-

**देवसायुज्य** न० युनक्ति युज-क्विप् युजेन सयुजः तस्य भावः सायुज्यं देवेन सायुज्यमेकात्मनयोगिता । देवभक्तयोगे ।

**देवसेना** स्त्री० इन्द्रस्य सुतायां षष्ठीनाम्न्यां कार्त्तिकेयपत्न्याम्, मातृकाभेदे । ६त० । देवानां सेनायाञ्च ।

**देवसेनापति** पु० ६त० । कार्त्तिकेये । इन्द्रसुते, देवसेनानामाप्यत्र

**देवस्व** न० 'यद्धनं यज्ञशीलानां देवस्वं तद्विदुर्बुधा' इत्युक्ते धने

**देवहूति** स्त्री० स्वायम्भुवमनोः कन्यायाम् ।

**देवा** स्त्री० दिव-अच् । पद्मचारिण्यां लतायाम्, अशनपर्ण्याञ्च ।

**देवागारिक** त्रि० देवागारे नियुक्तः ठन् । देवागारे नियुक्ते

**देवाजीव** त्रि० देवं देवप्रतिमाद्रव्यमाजीवति जीव-अण् । (पुजारी) देवले । णिनि देवाजीवोऽप्यत्र ।

**देवात्मन्** पु० देवो विष्णुरात्मा यस्य । अश्वत्थे तस्य विष्णुरूपत्वम् अश्वत्थरूपी भगवानिति मन्त्रात् सिद्धम् ।

**देवानांप्रिय** पु० । अलुक् समासः । छागे । मूर्खे त्रि० ।

**देवापि** पु० चन्द्रवंश्ये नृपभेदे ।

**देवार्ह** न० देवानर्हति अण् । सुरपर्णे । सहदेवीलतायां स्त्री० । देवयोग्यमात्रे त्रि० । [देवायतनमप्यत्र ।

**देवालय** पु० देवानामालयः । स्वर्गे, देवप्रतिमादीनां गृहे च

**देवावास** पु० ६त० । अश्वत्थवृक्षे ।

**देविका** स्त्री० दिव-ण्वुल् । "अर्द्धयोजनविस्तारां पञ्चयोजन-मायताम् । एतावद्देविकामाहु"रित्युक्ते नदीभेदे धुस्तूरे च ।

**देवी** स्त्री० दीव्यति दिव अच् गौ० ङीप् । दुर्गायाम्, मूर्वायां, पृक्कायाञ्च । देवस्य पत्नी ङीप् । देवपत्न्यां, नाट्योक्तौ कृता-भिषेकायां राजवनितायां, विप्रस्त्रीणामुपाधौ च देव्यन्ता विप्रयोषित' इत्युक्तेः ।

**देवृ** पु० दिव-तृ । देवरे स्वामिनः कनिष्ठ भ्रातरि ।

**देवेश** न० ६त० । महादेवे । तत्पत्न्यां दुर्गायां स्त्री० ङीप् ।

**देवेष्ट** पु० देवानामिष्टः । गुग्गुलौ । दैत्यभेदजातत्वात् देवप्रिय-त्वमस्य । वनबीजपूरके स्त्री० ।

**देवोद्यान** न० ६त० देवोद्यानानि वैभ्राजं मिश्रकं मिश्रका-रणम् । नन्दनञ्चेति चत्वारीत्युक्तेषु चतुर्षु वनेषु ।

**देश** पु० दिश-अच् । भूगोलविभागमात्रे कुरुपञ्चालादिषु प्रसि-द्धजनपदेषु स्थानमात्रे च ।

**देशरूप** न० देशनं देशः प्रशस्तदेशः उचिते समञ्जसे ।

**देशिनी** स्त्री० दिशति दिश-करणस्य कर्त्तृत्वविवक्षायां णिनि । तर्ज्जन्याम् ।

**देशान्तर** न० अन्योदेशः मयूर० । 'वाचो यत्र विविद्यन्ते गिरि र्वा व्यवधायक । महानद्यन्तरं यत्र तद्देशान्तर-

**दोला** स्त्री० दुल-अच् टाप् अ वा। (डोली) यानभेदे, उद्यानादौ क्रीडार्थं दोलनयन्त्रे च। स्वार्थे कन्। अत्रार्थे।

**दोलायमान** त्रि० दोलां दोलनमाचरति अय-शानच्। दोलनं कुर्वति दोलायमानाच्छदे।

**दोष** पु० दुष-घञ्। दूषणे पापे च 'वात पित्त कफश्चेति त्रयो-दोषाः समासत' इत्युक्तेषु वातादिषु, अलङ्कारोक्ते रसापकर्षाधायके दुष्टशब्दादिभेदे न्यायाद्युक्तेषु रागद्वेषमोहेषु च

**दोषग्राहिन्** त्रि० दोषानेव गृह्णाति न गुणान् ग्रह-णिनि। दोषग्राही गुणत्यागी चालनीव हि दुर्जन' इत्युक्ते दुर्जने

**दोषज्ञ** त्रि० दोषान् जानाति ज्ञा-क। पण्डिते, वातादि-दोषज्ञे चिकित्सके च।

**दोषत्रय** न० दोषाणां त्रयम्। वातपित्तकफेषु।

**दोषा** अव्य० दुष-आच्। रात्रौ।

**दोषाकर** पु० दोषा रात्रिं करोति तस्मिन् करः किरणो यस्य वा। चन्द्रे। दोषाणामाकरः दोषाश्रये पु०। [रिकायाम्

**दोषाक्लेशी** स्त्री० दोषा रात्रौ क्लिश्यति अच् टाप्। वनवर्बु

**दोषैकदृक्** त्रि० दोषेष्वेव न गुणे एकादृग् यस्य। खले।

**दोस्(षा)** पु० दम करणे डोसि। भुजे, भागुरिमते टापि मतम्

**दोह** पु० दुह-कर्मणि घञ्। दुग्धे 'अदोहयदाटमेदिनी'ति स्मृति'। आधारे घञ्। दोहनपात्रे। भावे घञ्। दोहने।

**दोहद** पु०न० द्वयोः गर्भिणीतदपत्ययोर्हृदयमत्र नि०। गर्भे तदर्हिणा दोहदलक्षणमिति रघु'। दोहमाकर्षं ददाति दा-क। (साद) गर्भिणाभिलाषे लालसायाञ्च। चिह्ने, गर्भलक्षणे च न०। इ० औत्। दौहृदमप्यत्र।

**दोहदिनी** स्त्री० दोहदोऽस्त्यस्याः इनि। गर्भिण्याम् 'ताञ्च द्विहृदया नारीमाहुर्दौहृदिनीमित्युक्तेः।

**दोहनी** स्त्री० दुह्यतेऽत्र आधारे ल्युट् ङीप्। दोहनपात्रे।

**दोहा** स्त्री० न त्राहत्तभेदे। [मणि च।

**दौत्य** न० दूतस्य भाव' कर्म वा ष्यञ्। दूतस्य भावे तत्क-

**दौर्भागिनेय** पु० दुर्भगाया अपत्यम् ढक् इनङादेशः द्विपदवृद्धि'। दुर्भगापुत्रे।

**दौर्मनस्य** न० दुर्मनसो भाव' ष्यञ्। बाह्याभ्यन्तरकारणैर्मनसः दौस्थ्ये, सर्वभावे दु खहेतुके चित्तस्यावसादे च।

**दौवारिक** पु० द्वारे नियुक्त ठक्। द्वारपाले। प्रतीहार्यां स्त्री०

**दौष्कुलेय** त्रि० दुष्कुलस्यापत्यम् ढक्। निन्दितकुलजाते।

**दौहित्र** पु० दुहितुरपत्यम् अण्। दुहितुः सुते 'दौहित्रं खड्गमित्याहुरपर्णं दुहितृत्तिलाः। कपिलाया घृतञ्चैव दौहित्रमिति चोच्यते इत्युक्तेषु खड्गादिषु न०।

**द्यावापृथिवी** स्त्री० द्वि०व०। द्यौश्च पृथिवी च द्व० द्यावा-देशः। स्वर्गपृथिव्योर्मिलितयो एवं द्यावाभूम्यादयोऽप्यत्र द्यावाभूमी जनयन्निति श्रुतिः।

**द्यु** अभिसर्पणे अदा० पर० सक० अनिट्। द्यौति अद्यौषीत्।

**द्यु** पु० दिव-क्विप् इ० ऊत्वः। अग्नौ, सूर्ये, अर्कवृक्षे च आकाशे, दिवसे च न०।

**द्युत** दीप्तौ भ्वा० आत्म० अक० सेट्। द्योतते अद्युतत् अद्योतिष्ट

**द्युति(ती)** स्त्री० द्युत-इन् वा ङीप्। कान्तौ, दीप्तौ, शोभायाम् प्रकाशे च। [द्युभवाटयोऽप्यत्र।

**द्युपति** पु० ६त०। सूर्ये अर्कवृक्षे च एवं दिवोमणिरिव

**द्युम्न** न० दिव मनति म्ना-क। धने, बले च।

**द्यूत** न० दिव-क्त। (जुया) पाशकक्रीडायाम् अप्राणिकारणक क्रीडायां, कैतवे च।

**द्यूतकर** त्रि० द्यूतं करोति कृ-ठक्। पाशकादिक्रीडाकारके (जुयारी) अन्न्। द्यूतकारकोऽप्यत्र। क्विप्। द्यूतकृदप्यत्र

**द्यूतपूर्णिमा** स्त्री० द्यूतस्य द्यूतार्थं पूर्णिमा। आश्विनपौर्ण-मास्यां कोजागरपौर्णमास्याम्।

**द्यूतप्रतिपद्(दा)** स्त्री० चतुर्थ्यर्थे ६त०। कार्त्तिकशुक्लप्रति-पदि। 'द्यूतप्रतिपदा नाम तत्र भावी महोत्सव' इति स्मृतिः

**द्यूतवृत्ति** पु० द्यूतमेव वृत्तिर्जीविका यस्य। सभिके।

**द्यै** तिरस्कारे भ्वा० पर० सक० अनिट्। द्यायति अद्यासीत्।

**द्यो** स्त्री० द्युत-डो। स्वर्गे, आकाशे च।

**द्योत** पु० द्युत-घञ्। प्रकाशे, आतपे च। [दार्ढ्ये।

**द्रढिमन्** पु० दृढस्य भावः इमनिच् द्रढादेशः। दृढत्वे

**द्रप्स(ख)** न० दृप्यन्त्यनेन स(ख) अम् च। घनभिन्ने द्रवीभूते दधि

**द्रम** गतौ भ्वा० पर० सक० सेट्। द्रमति अद्रमीत्।

**द्रम्म** पु० 'वराटकानां दशकद्वयं यत सा काकिणी ताश्च पणश्चतस्र' ते षोडश द्रम्म'इत्युक्ते परिमाणभेदे (काहन)।

**द्रव** पु० द्रु-अप्। रसे पलायने, गतौ, वेगे परीहासे च।

**द्रवज** पु० द्रवात् रसात् जायते जन-ड। गुड़े। द्रव्यजात-मात्रे त्रि०।

**द्रवत्व** न० द्रवति स्यन्दते द्रु-अच् तस्य भाव'। 'न्यायोक्ते स्यन्दनकारणे पृथिवीजलतेजोवृत्तौ गुणभेदे।

**द्रवद्रव्य** न० द्रवतीति द्रवं कर्म०। दुग्धदधिघृतादौ निष्य-न्दिनि द्रव्ये। [पर्यायश्च।

**द्रवन्ती** स्त्री० द्रु-शतृ। नद्याम्। शतमूलिकायां मूषिक

**द्रविड** पु० देशभेदे। तद्देशस्थे व०व०।

**द्रविण** न० द्रु-इनन्। वित्ते, काञ्चने, पराक्रमे, बले च।

**द्रुविणनाशन** पु० द्रविणं बलं नाशयति नश-णिच् ल्यु । शोभाञ्जनवृक्षे ।

**द्रव्य** न० द्रु यत् । पित्तले, वित्ते विलेपनद्रव्ये, भेषजे, भव्ये, जतुनि, विनये मद्ये, न्यायोक्तेषु पृथिव्यादिषु गुणवत्सु नवसु । व्याकरणोक्ते लिङ्गसंख्यान्वयिनि पदार्थे । द्रोर्वृक्षस्य विकारः तस्येदम् वा यत् । वृक्षविकारे तत्सम्बन्धिनि च त्रि० ।

**द्रष्टृ** त्रि० दृश तृच् । विचारकुशले चेतने, साक्षिणि, द्रष्टा दृष्टे । कर्त्तरीयुक्ते दर्शनकर्त्तरि च ।

**द्रा** स्वप्ने पलायने अदा०अक०अनिट् । द्राति अद्रासीत ।

**द्राक्** अव्य० द्रा कु । शीघ्रे झटित्यर्थे । [अद्राङ्क्षीत् ।

**द्राक्ष** काङ्क्षायां भ्वा० पर० सक० सेट् इदित् । द्राङ्क्षति

**द्राक्षा** स्त्री० द्राक्षि-अ नि० नलोप । मृद्वीकायाम् (किस-मिस्) 'द्राक्षे । द्रक्ष्यन्ति के त्वामिति जयदेव ।

**द्राख** शोषणे अलमर्थे च भ्वा पर०सक०सेट् । द्राखति अद्रा खीत् । णिच् अदद्राखत् । [अद्राघीत् । णिच् अदद्राघत्

**द्राघ** आयासे गतौ भ्रमे च भ्वा पर सक सेट् । द्राघति

**द्राघिमन्** पु दीर्घस्य भावः इमनिच् द्राघादेश । दीर्घत्वे ।

**द्राघिष्ठ** त्रि० अतिशयेन दीर्घः इष्ठन् द्राघादेश । अतिदीर्घे । ईयसुन् द्राघीयस् इत्यप्यत्र । स्त्रियां ङीप् ।

**द्राड** विभेदे भ्वा०आ० सक० सेट् । द्राडते अद्राडिष्ट ।

**द्रावक** पु०द्रु-ण्वुल । चन्द्रकान्तमणौ, जारे विदग्धे रसभेदे च ।

**द्राविडी** स्त्री द्रविडे जाता अण् । क्षुद्रैलायाम् ।

**द्राह** जागरे भ्वा०आत्म अक सेट् । द्राहते अद्राहिष्ट णिच् अदद्राहत् ।

**द्रु** गतौ भ्वा पर०सक०अनिट् । द्रवति अदुद्रुवत् त ।

**द्रु** अनुभावे स्वा० पर० सक अनिट् । द्रुणोति अद्रौषीत् ।

**द्रु** पु० द्रवत्यर्थं द्रु-कु डु वा । वृक्षे, शाखायाम् । गतौ स्त्री० ।

**द्रुघण** पु द्रु-र्हन्ति अनेन हन करणे अप् द्रुघ्नः कुठार । परश्वधे, ब्रह्मणि चतुर्मुखे भूमिचम्पके च ।

**द्रुड** मज्जने भ्वा० पर० अक० सेट् । द्रोडति अद्रोडीत् ।

**द्रुड** मज्जने त क पर अक० सेट् । द्रुडति अद्रुडीत् ।

**द्रुण** कुटिलीकरणे त पर०सक० सेट् । द्रुणति अद्रोणीत् ।

**द्रुणस्** त्रि द्रुरिव दीर्घा नासिकास्य नसादेश णत्वञ्च । दीर्घ नासिके जने । [कच्छप्याम्' कर्णजलौकायाञ्च ।

**द्रुणी** स्त्री० द्रुण क गौरा० ङीष् । काष्ठाम्बुवाहिन्याम्

**द्रुत** पु० द्रवणूर्द्धम् द्रु क्त । वृक्षे । शीघ्रेषु नृत्यगीतवाद्येषु शीघ्रे च न० । शीघ्रतायुते द्रवीभूते पलायिते च त्रि० ।

**द्रुपद** पु० चन्द्रवंश्ये युधिष्ठिरादेः श्वशुरे नृपभेदे ।

**द्रुम** पु० द्रु शाखास्त्यस्य म । वृक्षे, पारिजाते, कुबेरे च ।

**द्रुमामय** पु० द्रुमस्यामय इव । लाक्षायाम् । [कर्णिकारे ।

**द्रुमोत्पल** पु० द्रुमेषु मध्ये उत्पलमिव तदाकारपुष्पमस्य ।

**द्रुमस्लक** पु० द्रुषु मल्लक इव । प्रियालवृक्षे ।

**द्रुह** अनिष्टचिन्तने दिवा० पर० वेट । द्रुह्यति अद्रुहत् । द्रोहिता द्रोग्धा द्रोढा ।

**द्रुहिण** पु द्रुह-इनन् किच्च । जगत्स्रष्टरि चतुर्मुखे ।

**द्रू** वधे गतौ च स्वा क्र्या०उ सक सेट । द्रूणोति द्रूणुते द्रूणाति द्रूणीते अद्रावीत् अद्रविष्ट । [किट । णिच् अदिद्रेकत्

**द्रेक** स्वने उत्साहे च भ्वा० आत्म अक० सेट् । द्रेकते अद्रे

**द्रै** स्वप्ने भ्वा०पर०अक० अनिट् । द्रायति अद्रासीत् ।

**द्रोण** पु०द्रुण-अच् द्रु-न वा । भारतप्रसिद्धे स्वनामख्याते योद्धृ भेदे द्रोणकाके (डाडकाक) वृश्चिके मेघभेदे (घलघसिया) वृक्षभेदे आढकचतुष्टयरूपे परिमाणे जलाशयभेदे च तडागभेदे स्त्रीत्वम् द्रुटव्यम् ।

**द्रोणकाक** पु०कर्म० । काकभेदे (डाडकाक) । [द्रोणायाम् ।

**द्रोणगन्धिका** स्त्री द्रोणपुष्पस्येव गन्धो यस्याः स्वार्थे कन् ।

**द्रोणि(णी)** स्त्री० द्रुण-इन् वा ङीप् । जलाद्याधारे पत्रभेदे, नदीभेदे शैलजनामगन्धद्रव्ये, काष्ठाम्बुवाहिन्याम् ।

**द्रोणीदल** पु० द्रोणीव दलमस्य । केतकीवृक्षे ।

**द्रोह** पु० द्रुह घञ् । अनिष्टचिन्तने ।

**द्रोहचिन्तन** न० द्रोह एव चिन्तनम् । परानिष्टचिन्तने ।

**द्रौणायन** पु द्रोणस्यापत्यं फक् । अश्वत्थाम्नि ।

**द्रौणिक** त्रि० द्रोणं तत्मितम् सम्भवति अवहरति पचति वा ठञ् । द्रोणमितधान्यवपनयोग्ये क्षेत्रे द्रोणपचनयोग्ये पात्रे च ।

**द्रौपदी** स्त्री द्रुपदस्यापत्यम् स्त्री अण् । द्रुपदराजात्मजायाम्

**द्वन्द्व** पु० द्वौ द्वौ सहाभिव्यक्तौ 'द्वन्द्व रहस्यमर्य्यादेत्या' दिना नि । व्याकरणोक्ते उभयपदार्थप्रधाने समासभेदे । 'सुखदुःखे शोकमोहौ रागद्वेषौ तथैव च । कामक्रोधप्रभृतयो द्वन्द्व-शब्देन वर्णिता' इत्युक्ते परस्परविरुद्धे, शोकाशोकादौ शीतोष्णादौ रहस्ये, कलहे, युद्धे, मिथुने दुर्गे च ।

**द्वन्द्वचर** पु० द्वन्द्वीभूय चरति चर पचाद्यच् । चक्रवाके

**द्वय** न० द्वाववयवावस्य द्ववयव वा द्वि-अयट् । द्वित्वपर्य्याप्ते न०स्त्री० ङीप् 'अतद्वयोर्विषये'ति मे 'स्तनद्वय चारु तये'ति पु० द्वित्वसंख्यान्विते त्रि । द्वय गत समनीति पु० स्त्रियां ङीप् । [स्था कर्त्तरि क । द्वा (द्वाः)स्थितोऽप्यत्र

**द्वा (द्वाः)स्थ** पु०द्वारि तिष्ठति स्था-क वा विसर्गलोप । द्वारपाले

**द्वाचत्वारिंशत्** स्त्री० द्व्यधिका चत्वारिंशत् द्वौ च चत्वारिंशच्च वा आत्वम्। (बेयालिश) संख्याभेदे द्वात्रिंशदादयोऽप्यत्र।

**द्वादश** त्रि० द्वादशानां पूरणः डट्। येन द्वादशसंख्या पूर्य्यते तस्मिन्। [संख्याभेदे द्विराहत्ता दश विंशतिसंख्यायाम्

**द्वादशन्** पु० द्वौ च दश च द्व्यधिका वा दश आत्वम् (बारो)

**द्वादशकर** पु० द्वादश करा हस्ता यस्य। कार्त्तिकेये बृहस्पतौ च द्वादशहस्तादयोऽप्यत्र। [द्वादशलोचनादयोऽप्यत्र।

**द्वादशनेत्र** पु० द्वादश नेत्राण्यस्य। षडानने कार्त्तिकेये।

**द्वादशाङ्गुल** पु० द्वादश अङ्गुलयः प्रमाणमस्य तद्धितार्थे द्विगुः तद्धितस्य लुकि अच् समा०। वितस्तिप्रमाणे। [च।

**द्वादशात्मन्** पु० द्वादश आत्मानो मूर्त्तयोऽस्य। सूर्य्ये, अर्कवृक्षे

**द्वादशायुस्** पु० द्वादश वर्षमायुर्यस्य। कुक्कुरे।

**द्वापर** पु० द्वौ परौ प्रकारौ विपर्यौ वा यस्य पृ० आत्वम्। संशये सत्यत्रेतानन्तरे युगभेदे। द्व्यङ्कसंख्यान्वितपाशकपार्श्वे च।

**द्वापराय** पु० पाशकस्य द्व्यङ्कसंख्यान्वितं पार्श्वं द्वापरं तस्य अयः उत्तानतया पतनम्। द्यूतभेदे द्व्यङ्कान्वितपार्श्वस्योत्तानतया पतने। [गौतमे मुनौ च।

**द्वामुष्यायण** पु० द्वयोरमुयोरपत्यम्। नि०। द्वयोः पुत्रे।

**द्वार्** स्त्री० दृ-वरणे णिच्-विच्। गृहादि निर्गमनस्थाने, मनोद्वारे, उपाये, मुखे च। [उपाये, मुखे च

**द्वार** न० दृ-णिच् अच्। गृहादिनिर्गमनस्थाने, मनोद्वारे,

**द्वारका** स्त्री० द्वारेण प्रशस्तद्वारेण कायति कै-क। समुद्रसन्निकृष्टे तीर्थभेदे द्वारवत्यादयोऽप्यत्र।

**द्वारकेश** पु० ६त०। श्रीकृष्णे। [ण्वुल् च। एतावद्युक्तार्थे।

**द्वारप** त्रि० द्वारं पाति रक्षति पा-क। द्वारपाले। पाल-अण्,

**द्वारयन्त्र** न० ६त०। तालके। (ताला) (कुलुप) ख्याते पदार्थे

**द्वारावती** स्त्री० द्वाराणि मोक्षोपायाः सन्त्यस्याम् मतुप् पूर्व्व दीर्घः। तीर्थभेदे पुरी द्वारावती चैव सप्तैता इति पुराणम् द्वार+अस्त्यर्थे इनि। द्वारिकाप्यत्र।

**द्वारिन्** त्रि० द्वारं पात्यत्वेनास्त्यस्य इनि। द्वारपाले।

**द्वाविंशति** स्त्री० द्व्यधिका विंशतिः द्वौ च विंशतिश्च आत्वम्। (बाइस) सङ्ख्याभेदे।

**द्वि** त्रि० द्वि०व०। दृ-ड। द्वित्वसङ्ख्यान्विते।

**द्विक** पु० द्वौ कौ ककारौ यत्र। काके, कोके, द्वयवयवम् कन् द्वित्वसङ्ख्यायाम् तद्वति च न०। एकं द्विकं त्रिकञ्चेति कारिका।

**द्विककुद्** पु० द्वे ककुदे यस्य अन्त्यलोपः। उष्ट्रे।

**द्विगु** पु० व्याकरणोक्ते समासभेदे। ६त०। गोद्वयस्वामिनि त्रि०

**द्विगुण** त्रि० द्वाभ्यां गुण्यते गुण-वर्जने क। द्वाभ्यां गुणिते

**द्विगुणाकृत** त्रि० द्विगुणं कृत्वा कृष्टम् डाच्+कृ-क्त। द्विवारकृष्टे क्षेत्रे।

**द्विज** पु० द्विर्जायते जन ड इत्वौ मद्यादौ वारार्थेदम्। ब्राह्मणे ब्राह्मणादिवर्णत्रये, 'जन्मना जायते शूद्रः संस्कारैर्द्विज उच्यते' इति स्मृतिः। दन्ते, अण्डजे पिङ्गाटौ, तुम्बुरुवृक्षे च

**द्विजकुत्सित** पु० ३त०। श्लेष्मातकवृक्षे तत्फलस्य द्विजानामभक्ष्यत्वात् तन्निन्द्यत्वम्।

**द्विजदेव** पु० द्विजेषु देवइव। ब्राह्मणे, भृगौ च।

**द्विजन्मन्** पु० द्वे जन्मनी यस्य। ब्राह्मणक्षत्रियवैश्यरूपवर्णत्रये, 'मातुरग्रेऽधिजननं द्वितीयं मौञ्जीबन्धने' इति स्मृतिः दन्ते, अण्डजे च।

**द्विजबन्धु** पु० द्विजो बन्धुर्यस्य तद्योनोत्पन्नत्वात्। स्वकार्य्यरहितेषु जन्ममात्रोपजीविषु अधमेषु ब्राह्मणक्षत्रियवैश्येषु

**द्विजराज** पु० ६त० टच् समा०। चन्द्रे, अनन्ते, गरुडे च।

**द्विजवर** पु० द्विजेषु वरः। विप्रे। द्विजवर्य्यद्विजोत्तमादयोऽप्यत्र

**द्विजशस्त** पु० ३त०। राजमाषे (वरवटी)। [कागन्धद्रव्ये च।

**द्विजा** स्त्री० द्विर्जायते जन-ड टाप्। पालङ्क्यां भार्ग्यां, रेणु-

**द्विजाति** पु० द्वे जाती जन्मनी यस्य। 'ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातय' इति मनूक्ते वर्णत्रये 'मातुरग्रेऽधिजननं द्वितीयं मौञ्जीबन्धने' इत्युक्तेस्तेषां तथात्वम्।

**द्विजिह्व** पु० द्वे जिह्वे यस्य। सर्पे। खले, चौरे, दुःसाध्ये च त्रि०

**द्वितय** त्रि० द्वाववयवावस्य द्व्यवयवं वा द्वि-तयप्। द्वित्वसङ्ख्यान्विते 'यदि यावौ द्वितयेऽपि ते ऽचला' इति भारविः स्त्रियां ङीप्। द्वित्वसङ्ख्यायाञ्च न०।

**द्वितीय** त्रि० द्वयोः पूरणः तीय। द्वयोः पूरणे। चन्द्रस्य द्वितीयकलाक्रियारूपे तिथौ स्त्री० भागार्थेऽण्। द्वितीये भागे। [रुष्टे क्षेत्रे।

**द्वितीयाकृत** त्रि० द्वितीयं कृत्वा कृष्टम् डाच्+कृ-क्त। द्विवा-

**द्विदत्** त्रि० द्वौ दन्तावस्य वयसि दन्तस्य दत्रादेशः। द्विदन्तोपलक्षितवयस्के वृषादौ स्त्रियां ङीप्।

**द्विदैव** पु० द्वौ देवावस्य अण् उत्तरपदवृद्धिः। विशाखानक्षत्रे तस्याः शक्राग्निदेवतात्वात् तथात्वम्।

**द्विधा** अव्य० द्विप्रकारम् द्वि+धाच्। द्विप्रकारे।

**द्विधालेख्य** पु० द्विधा लेखां रेखामर्हति यत्। हिन्तालवृक्षे। द्विप्रकारलेखनीये त्रि०।

**द्विप** पु० द्वाभ्यां मुखशुण्डाभ्यां पिबति पा-क। हस्तिनि।

**द्विपद्** पु० द्वे पदे यस्य। मनुष्ये, देवे, पक्षिणि, राक्षसे, च

**द्वैमातुर** पु० द्वयो मात्रोरपत्यम् अण् उत्वं रपरत्वम्। दुर्गा-चामुण्डाभ्यां पालिते गणेशे, जरासन्धे न्टपे च।

**द्व्यणुक** न० द्वयोरण्वोः संयुक्तयो र्भव. कन्। परमाणुद्वय-जाते द्रव्यभेदे।

**द्व्यष्ट** न० द्वे द्वैमरूप्ये अश्नुते व्याप्नोति अश-क्त। ताम्रे।

**द्व्यामुष्यायण** पु० असुष्य प्रसिद्धस्यापत्यम् फक् आमुष्यायणः द्वयोरामुष्यायणः इत०। 'उभयोरप्यसौ रिक्थी पिण्ड-दाता च धर्मत' इत्युक्ते तत्र, मम चायमिति समयेन परि-गृहीते पुत्रभेदे। [द्व्यहजाते ज्वरादौ।

**द्व्याह्निक** त्रि० द्वयोरह्नोः समाहारः द्व्यह' तत्र भवः ठञ्।

## ध।

**ध** पु० धे धा-वा ड। धर्मे, कुवेरे, ब्रह्मणि च। धने न०।

**धक्क** नाशने चुरा०उभ०सक०सेट्। धक्कयति-ते अदधक्कत्-त

**धट** पु० धन अच् टान्तादेशः। तुलायां (तराजु) दिव्यप्रमाण-रूपे परीक्षाभेदे च।

**धटक** पु० द्विचत्वारिंशद्रक्तिकात्मके परिमाणभेदे।

**धण** ध्वाने भ्वा०पर०सक०सेट्। धणति अधाणीत् अधणीत्।

**धत्तूर** पु० धयति धातून् धा-ऊर ष्ठ०। धुस्तूरे। [अधनीत्

**धन** धान्योत्पादने जुहो० पर०अक० सेट्। दधन्ति अधानीत्

**धन** रवे भ्वा० पर० अक० सेट्। धनति अधानीत् अधनीत्।

**धन** न० धन-अच्। वसुनि अर्थे, स्नेहे, धनिष्ठानक्षत्रे च।

**धनञ्जय** पु० धनं जयति जि-खच् मुम् च। अर्ज्जुने, वह्नौ, नागभेदे, पोषणकरे देहव्यापिवायौ, ककुभवृक्षे चित्रकवृक्षे च

**धनद** पु० धनं दयते दे-पालने। कुवेरे हिज्जलवृक्षे च। दा-क धनदातरि त्रि०। [तदनुचरत्वम्

**धनदानुचर** पु० इत० यक्षे कुवेरस्य यक्षराजतया यक्षाणां

**धनदानुज** पु० इत०,। रावणे।

**धनपति** पु० इत०। कुवेरे।

**धनपिशाची** स्त्री० धने पिशाचीव। धनाशायां धनलोभे

**धनहरी** स्त्री० धनं हरति अच् गौरा० ङीष्। चोरनामक गन्धद्रव्ये। [प्रत्याद्ययोश्च।

**धनाधिप** पु० इत०। कुवेरे। धनानामधिपे त्रि०। धनाधि-

**धनिक** पु० न० धनिवत् कायति कै-क। धन्याके। धने पु०। धनं विद्यतेऽस्य ठन्। धनस्वामिनि उत्तमर्णे त्रि० 'धनिकस्य दयाक्रुची'ति स्मृतिः। स्त्रियां टाप्। सा च प्रियङ्गुवृक्षे, वध्वाञ्च। [ख्याते नक्षत्रभेदे।

**धनिष्ठा** स्त्री० अतिशयेन धनवती इष्ठन् इनेर्लुक्। स्वनाम

**धनुष्पाट** पु० धनुषइव पाटो विस्तारोऽस्य। पियालवृक्षे।

**धनुर्गुण** पु० इत०। मौर्व्याम्।

**धनुर्द्रुम** पु०इत०। वंशे, तत एव धनुर्योजननात्।

**धनुर्द्धर** पु० धनुर्धारयति धृ-अच्। धानुष्के (तीरन्दाज)

**धनुर्दु:ख** पु० धनुषः मार्द्धनं दुःखः। भल्लातके, वंशे, अर्द्धले च

**धनुर्वेद** पु०धनुष० उपचारात् तत्सद्देमसणोवास्त्रप्रयोगादे० उप-योगी वेदः। यजुर्वेदस्योपवेदे यस्मान्मन्त्रयोगोपसंहारप्रति-मारकमन्त्रसहिते शास्त्रभेदे।

**धनुष्क** पु० धनु'करे यस्य पतन्। धानुष्के (तीरन्दाज)

**धनुष्मत्** पु० धनुरस्त्यस्य मतुप् पत्वम्। धानुष्के।

**धनुस्** पु० धन-उसि। पियालवृक्षे धनुर्द्धरे त्रि०। चापे, मेषादितो नवमे राशौ च न०।

**धन्य** पु० धनाय हितम् धनं लब्धा धनस्य निमित्तं संयोगः उत्पातो वा धनं प्रयोजनमस्य वा यत्। अश्वकर्णवृक्षे। श्लाघ्ये, कृतार्थे, पुण्यशीले, धनोपयोगिन्यर्थशास्त्रे, धनाय हिते, धनस्य कारणे च त्रि०। आमलक्याम्, धन्याके च स्त्री० टाप्। [ख्याते वृक्षे।

**धन्याक** न० धन-आकन् पिनाकादि० नि०। (धनिया) इति

**धन्वदुर्ग** न० धन्वना मरुणा कृतं दुर्गम्। चतुर्दिशं पञ्चयोजन मरुभूमिष्ठते दुर्गभेदे।

**धन्व** न० सौ० धन्व अच्। चापे।

**धन्वन्** न०सौ० धन्व कनिन्। धनुषि, मरुदेशे च।

**धन्वन्तरि** पु० धन्वन् शिल्पशास्त्रं तस्यान्तमियर्ति ऋ-इन् शक०। 'नारायणांशो भगवान् स्वयं धन्वन्तरिर्महान्। पुरा समुद्रमथने समुत्तस्थौ महोदधे'रित्युक्ते स्वर्गवैद्यभेदे, दिवोदासे काशिराजे, विक्रमादित्यसभासदे पण्डित-भेदे च 'धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टेत्यादि

**धन्वन्तरिग्रस्ता** स्त्री० ३त०। (कट्की) कटुकायाम् रोगोपशम भाव तेन तस्याप्यासः कृतः। [त्रिभायाम्।

**धन्वयवास** पु० धन्वनो मरुभूमेर्यवासः तत्रोत्पन्नत्वात्। दुरा-

**धन्वयास** पु० धन्वनो यासो निर्यास इव। दुरालभायाम्।

**धन्वी** पु० धन्वं विद्यतेऽस्य इनि। अर्ज्जुने, ककुभद्रुमे, दुरा-लभायाम्, वकुले च। विदग्धे, धानुष्के त्रि०।

**धन्विस्थान** न० इत०। 'वैष्णवं समपादञ्च वैशाखं मण्डलं तथा। प्रत्यालीढ तथालीढं स्थानान्यष्टेतानि धन्विनामि-त्युक्तेषु धानुष्कस्थितिभेदेषु।

**धम** ध्माने सौ०पर०सक०सेट्। धमति अधमीत्। [त्रि०

**धमन** पु० ध्मायतेऽनेन धम-ल्यु। नले, भस्त्राध्मापके,क्रूरे च

**धमनि(नी)** स्त्री॰ धम-अनि वा ङीप्। नाड्यां शिरायां,हट्ट विलासिन्यां, ग्रीवायां, हरिद्रायाञ्च। [(खोधा)

**धम्मिल्ल** पु॰ स्त्री॰ धम-विच् मिल क ष॰ कर्म॰। संयतेषु केशेषु

**धर** पु॰ धृ-अच्। पर्व्वते कूर्म्मराजे, वसुभेदे कार्पासतूले च।

**धरण** पु॰ धृ युच्। पर्व्वतभेदे, लोके, सेतौ, धान्ये दिवाकरे स्तनौ च। चतुर्विंशतिरत्तिकामाने दशरत्तिकापरिमाणे च।

**धरणि** पु॰ धृ अनि वा ङीप् भूमौ, कन्दविशेषे, कन्दाख्ये वनकन्दे च स्त्री॰।

**धरणि(णी)धर** पु॰ धरणिं(णीं) धरति धृ-अच्। पर्व्वते विष्णौ, कच्छपे च। [नाड्याम्

**धरा** स्त्री धृ-अच्। पृथिव्याम् गर्भाशये जरायौ मेदोवहायां

**धराधर** पु॰ धरां धारयति धृ-अच्। पर्व्वते वराहरूपे विष्णौ च

**धरामर** पु॰ धरायाममर इव। ब्राह्मणे एव भूदेवादयोऽप्यत्र।

**धरित्री** स्त्री॰ धृ इत्र गौरा॰ ङीष्। भूमौ।

**धर्म्म** पु॰न॰। धृ मन्। शास्त्रविहितकर्म्मानुष्ठानजन्ये भावि-फलसाधनभूते शुभादृष्टे 'श्रुतिस्मृतिभ्यामुदित यत् स धर्म्मः' इत्युक्ते श्रौते स्मार्त्ते कर्म्मणि। 'विहितक्रियया साध्यो धर्म्मः पुंसां गुणो मतः' इत्युक्ते कर्म्मजन्ये अदृष्टे च आत्मनि, देहधारणात्, शौचे, आचारे, वस्तुगुणरूपे, स्वभावे, उप मायाम्, यागादौ, अहिंसायां न्याये उपनिषदि, यमे सोमाध्यायिनि, सत्सङ्गे धनुषि, ज्योतिषोक्ते लग्नात् नवमस्थाने च। दानादौ न॰।

**धर्म्मक्षेत्र** न॰'मध्यवेदिः कुरुक्षेत्र यच्चुरामहदान्तरम्। धर्म्मक्षेत्र कुरुक्षेत्रे द्वादशयोजनावधी'त्युक्ते कुरुक्षेत्रे। इत। धर्म्मस्थाने

**धर्म्मघट** पु धर्म्मार्थो घट। वैशाखे मासे दातव्ये सुग-न्धोदकपूर्णे घटे। [भार्य्यायाम्

**धर्म्मचारिणी** स्त्री॰ धर्म्मं दाम्पत्यधर्म्मं चरति चर णिनि।

**धर्म्मदान** न॰ 'पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम्। केवलं धर्म्मबुद्ध्या यत् धर्म्मदानं प्रचक्षते' इत्युक्ते प्रयोजना नपेक्षया दाने।

**धर्म्मद्रवी** स्त्री धर्म्मजनको द्रवो यस्याः। 'विष्णुपादाब्जसम्भूते। गङ्गे त्रिपथगामिनि। धर्म्मद्रवीति विख्याते' इत्युक्तायां गङ्गायाम्। [जटादिधारिणि

**धर्म्मध्वजिन्** त्रि॰ धर्म्मध्वजमिवास्त्यस्य इनि। लैङ्गिके

**धर्म्मपत्नी** स्त्री धर्म्माय पत्नी। प्रथम मूढायां सवर्णायाम् स्त्रियां,कीर्त्तौ शान्ति ख्यातौ, मेधायां,धृतौ,क्षमायाञ्च।

**धर्म्मपुत्र** पु॰६त॰। युधिष्ठिरे। [क्षमा॰। यमे, युधिष्ठिरे च।

**धर्म्मराज** पु॰धर्म्मेण राजते पचाद्यच्। धर्म्मस्य राजा वा टच्

**धर्म्मलक्षण** न॰ धर्म्मो लक्ष्यतेऽनेन लक्ष ल्युट्। 'धृति क्षमा दमोऽस्तेय शौचमिन्द्रियनिग्रह। धीर्विद्या सत्यमक्रोध दशकं धर्म्मलक्षण'मित्युक्ते धृत्यादौ दशके।

**धर्म्मवाणिजिक** पु॰ वणिगेव स्वार्थे ठक् वाणिजिक ७त॰। पुण्यकर्म्मफलाभिलाषुके। [ताय दातरि

**धर्म्मवैतंसिक** पु॰ पापेन धनमुपार्ज्यात्मनो धार्म्मिकत्वख्याप-

**धर्म्मशास्त्र** न॰ धर्म्मप्रतिपादकं शास्त्रम्। मन्वादिप्रणीते स्मृतिशास्त्रे।

**धर्म्मशील** त्रि॰ धर्म्मं शीलं सततमनुष्ठेयं यस्य। धार्म्मिके।

**धर्म्मसंस्थापन** न॰ धर्म्मस्य सम्यक् अधर्म्मनिराकरणेन स्थाप-नम्।' वेदोदितधर्म्मव्यवस्थापने धर्म्मसंस्थापनार्थाय सम्भ वामि युगेयुगे इति पुराणम्।

**धर्म्मसंहिता** स्त्री धर्म्मार्थं संहिता बद्धा रचिता सम्+धा-क्त। मन्वादिप्रोक्ते धर्म्मप्रतिपादनार्थे शास्त्रे।

**धर्म्मात्मन्** पु धर्म्म आत्मा स्वभावो यस्य। धर्म्मानुगतचित्ते।

**धर्म्माधिकरण** पु॰ धर्म्मार्थमधिक्रियतेऽसौ कर्म्मणि ल्युट्। 'सम शत्रौ च मित्रे च धर्म्मशास्त्रविशारद। विप्रमुख्य कुलीनश्च धर्म्माधिकरणो भवे'दित्युक्ते धर्म्माध्यक्षे। इत॰। 'धर्म्मशास्त्रानुसारेण अर्थशास्त्रनिरूपणम्। यत्राधिक्रियते स्थाने धर्म्माधिकरणं हि त'दित्युक्ते विचारस्थाने न।

**धर्म्माध्यक्ष** पु॰ 'कुलशीलगुणोपेत सर्व्वकर्म्मपरायण। प्रवीण प्रेषणाध्यक्षो धर्म्माध्यक्षोऽभिधीयते' इत्युक्ते धर्म्मा धिकरणे। इत॰। सर्व्वधर्म्मस्य साक्षिणि परमेश्वरे च।

**धर्म्माभास** पु धर्म्मवदाभासते आ-भास-अच्। 'श्रुतिस्मृति-भ्यामुदित यत् स धर्म्म प्रकीर्त्तित। अन्यशास्त्रेषु यः प्रोक्तो धर्म्माभास स उच्यते' इत्युक्ते अन्यशास्त्रोक्ते अप्रशस्ते धर्म्मे।

**धर्म्मासन** न॰ इत॰। राज्ञो धर्म्मतो दण्डनायासने।

**धर्म्मिन्** त्रि धर्म्म+अस्त्यर्थे इनि। पुण्यवति वस्तुगुणस्वरूप धर्म्मयुक्ते त्रि॰।

**धर्म्मिष्ठ** त्रि अतिशयेन धर्म्मी इष्ठन् इनेर्लुक्। अत्यन्तधर्म्मवति

**धर्म्म्य** त्रि धर्म्मादनपेत धर्म्मेण प्राप्यो वा यत्। धर्म्मयुक्ते, धर्म्मलभ्ये च। [हिंसायाञ्च।

**धर्ष** पु॰ धृष-घञ्। प्रागल्भ्ये, अमर्षे, शक्तिबन्धने, षण्ढे,

**धर्षण** न धृष-भावे ल्युट्। परिभवे, रमणे असहनार्थे च। कर्म्मणि ल्युट्। अभिसारिकायां स्त्रियाम स्त्री॰ङीप्।

**धर्षित** न॰ धृष-भावे क्त। मैथुने। कर्म्मणि क्त। कृतधर्षणे तिरस्कृते च त्रि॰। असत्यां स्त्रियाम् स्त्री॰।

**धव** गतौ भ्वा॰पर॰सक॰ सेट् इदित्। धन्वति अधन्वीत।

**धव** पु० धवति धुवति धुनोति धुनाति वा धु-धू-वा अच् । पत्यौ, धूर्त्ते, नरे, स्वनामख्याते वृक्षे च । भावे अप् । कम्पने ।

**धवल** पु० धवं कम्पं लाति ला—क । धवटक्षे, वीरणवृक्षे श्वेतमरिचे, वृषश्रेष्ठे, चीनकर्पूरे, श्वेतवर्णे च । तद्वति, सुन्दरे च त्रि० । शुक्लवर्णायां गवि स्त्री० टाप् गौरा० ङीष् वा ।

**धवलपक्ष** पु० धवलौ पक्षौ यस्य । हंसे । कर्म० । शुक्लपक्षे

**धवलमृत्तिका** स्त्री० कर्म० । खटिन्याम् । (खडि)

**धवलोत्पल** न० कर्म० । कुमुदे ।

**धवित्र** न० धूयतेऽनेन धू-इत्र । व्यजने ।

**धा** धारणे पोषणे दाने च जुहो० उभ० सक० अनिट् । दधाति धत्ते अधात् अधित । धत्रिमम् । [(धाइ) गुल्मभेदे ।

**धातकी** स्त्री० धातुं करोति णिच् कुन् पिप्पल्यादि० ङीष् ।

**धातु** पु० धा-तुन् । 'धारणाद्धातवस्ते स्युर्वातपित्तकफास्त्रय' इत्युक्तेषु वातादिषु 'रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातव' इत्युक्तेषु, रसादिषु, 'सुवर्णरूप्यताम्राणि हरितालं मनःशिला । गैरिकाञ्जनकासीससीसलोहं सहिङ्गुलम् । गन्धकोऽभ्रकमित्याद्या धातवो गिरिसम्भवा' इत्युक्तेषु स्वर्णादिषु, 'हेमतारारनागाश्च ताम्ररङ्गे च तीक्ष्णकम् । कांस्यकं कान्तलौहञ्च धातवो नव कीर्त्तिता इत्युक्तेषु हेमादिषु नवसु. 'हिरण्यं रजतं कांस्यं ताम्रं सीसकमेव च । रङ्गमायसं रैत्यञ्च धातवोऽष्टौ प्रकीर्त्तिता इत्युक्तेषु अष्टसु, 'सुवर्णं रजतं ताम्रं लौहं काम्यञ्च मारदम् । रङ्गं सीसकञ्चैव इत्यष्टौ देवसम्भवा' इत्युक्तेषु अष्टसु वस्तुषु, लोकेषु सर्व्वधारणात् परमेश्वरे स एव चिद्धातुरिति श्रुतिः । व्याकरणोक्ते गणपठिते क्रिया वाचके भूभ्रभृतौ शब्दभेदे च ।

**धातुघ्न** न० धातून् हन्ति हन-टक् । काञ्जिके ।

**धातुद्रावक** न० धातून् द्रावयति स्वसम्बन्धात् द्रु-णिच् ण्वुल् । (सोहागा) टङ्कणे ।

**धातुपुष्पिका** स्त्री० धातुरिव पुष्पमस्त्यस्य ठन् । (धाइफुल) धातुपुष्पग्राम् । [पुष्पग्राम् ।

**धातुपुष्पी** स्त्री० धातुरिव पुष्पमस्या ङीष् । (धाइफुल) धात-

**धातुभृत्** पु० धातून् बिभर्त्ति भृ-क्विप् । पर्व्वते देहस्य धातु पोषके रसरूपे प्रथमे धातौ च ।

**धातुमाक्षिक** न० धातुषु मध्ये माक्षिकम् । माक्षिके उपधातुभेदे

**धातुमारिणी** स्त्री० धातून् स्वर्णादीन् मारयति मृ-णिच् । णिनि । सर्ज्जिकायां (सोहागा)

**धातुवैरिन्** पु० ६तत० । गन्धके ।

**धातुशेखर** न० धातूनां शेखरमिव । कासीसे उपधातुभेदे ।

**धातृ** पु० दधाति धा-तृच् । चतुर्मुखे ब्रह्मणि विष्णौ च । धारणकर्त्तरि, पालके च त्रि० ।

**धातृपुष्पी** स्त्री० धातृ पोषकं पुष्पं यस्याः । (धाइफुल) वृक्षभेदे । स्वार्थे कन् ह्रस्व० । अत्रैवार्थे ।

**धात्री** स्त्री० धीयते पीयतेऽसौ धा-ष्ट्रन् षित्त्वात् ङीष् । मातरि, आमलक्याञ्च । स्वार्थे कन् । आमलक्याम् ।

**धात्रीपत्र** न० धात्र्या इव पत्रमस्य । तालीशपत्रे । ६तत० । आमलकीदले । [स्वार्थे कन् ह्रस्वः । तत्रैवार्थे ।

**धात्रेयी** स्त्री० धात्री+ स्वार्थे ढक् । उपमातरि (धाइमा)

**धानक** न० धीयते कर्मणि ल्युट् संज्ञायां कन् । धन्याके ।

**धाना** स्त्री० धा-न-टाप् । धन्याके, अङ्कुरे, चूर्णे सक्तुषु च । भृष्टयवे न० ब० ।

**धानाचूर्ण** न० धानानां भृष्टयवानां चूर्णम् । सक्तुषु (छातु)

**धानी** स्त्री० धीयतेऽस्याम् आधारे-ल्युट् ङीप् । आधारे यथा राजधानी मत्स्यधानीत्यादि । पीलुवृक्षे च ।

**धानुष्क** त्रि० धनुःप्रहरणमस्य ठक् धनुषा जीवति ठञ् वा । धनुर्द्धरे । अपामार्गे स्त्री० ।

**धानुष्य** पु० धनुषे हितः यञ् । वंशे ।

**धानेय** न० धानाय साधु ढक् । धन्याके ।

**धान्य** न० धाने पोषणे साधु यत् । सतुषे तण्डुलादौ शालितिलयवादौ च तद्भेदो वृहदभिधाने । धन्याके, चतुस्तिलपरिमाणे पूर्व्वहारस्पष्टे च ।

**धान्यकोष्ठक** न० ६तत० । धान्यरक्षार्थे स्थाने (गोला) ।

**धान्यत्वच्** स्त्री० ६तत० । तुषे ।

**धान्यपञ्चक** न० ६तत० । 'शालिधान्यं व्रीहिधान्यं शूकधान्यं तृतीयकम् । शिम्बिधान्यं क्षुद्रधान्यमित्युक्तं धान्यपञ्चक मित्युक्तेषु शाल्यादिषु ।

**धान्यराज** पु० धान्येषु राजा टच् समा० । यवे । [वार्द्धुषिकत्वे

**धान्यवर्द्धन** न० धान्यस्य ऋणप्रयुक्तस्य वर्द्धनं यत्र । (वाडी)

**धान्यवीर** पु० धान्येषु वीर इव बलहेतुत्वात् । माषे ।

**धान्यशीर्षक** न० ६तत० । धान्यस्य मञ्जर्याम् धान्यायाद्योप्यत्र

**धान्याक** न० धान्यमिवाकति अक-कुटिलगतौ अच् । धन्याके

**धान्याचल** पु० दानार्थं विधानेन धान्यनिर्म्मिते पर्व्वते । तत् प्रकारस्तु वृहदभिधाने ।

**धान्याम्ल** न० धान्येषु अभिषुतमम्लम् शाक० । काञ्जिके ।

**धान्योत्तम** पु० धान्येषूत्तमः । शालिधान्ये ।

**धामन्** न० धा-मनिन् । गेहे, देहे, रश्मौ, आश्रये, स्थाने

जन्मनि, लिपि, ज्योतिषि, प्रभावे, स्थ प्रकाशे च ।

**धामनिधि** पु० धामानि तेजांसि निधीयन्तेऽत्र नि+धा कि । सूर्य्ये, अर्कवृक्षे च । [याम् धोयके च

**धामार्गव** पु० धाम्ना र्ग्वति गा-क । अपामार्गे,पीतघोषा-

**धाय्या** स्त्री० धीयते पुष्यतेऽग्निरनया धीयतेऽर्प्यते समिदनया धा धा ण्यत् नि० । अग्निज्वालनार्थायामृचि सामिधेन्याम् ।

**धार** न० धाराभिर्निर्वृत्तम् अण् । 'धाराभि पतितं तोय स्फीत स्फीतयासरा' शिलायां वसुधायां वा धौतायां पतितश्च यत्' इत्युपक्रम्य 'भाजने स्थापयेत् तथापि स्थापित धारमुच्यते' इत्युक्ते शिलादिभाजनष्टते वर्षोद्भवे जले ।

**धारणा** स्त्री० धृ-णिच्-युच् । 'यमादिगुणसंयुक्ते मनस स्थिति रात्मनि । धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदैरि'त्युक्तायामात्मनि चित्तस्य स्थितौ,मर्य्यादायां न्याय्यपथस्थितौ, निश्चये च । धृ णिच् ल्युट् । नाड्यां श्रेण्यां च स्त्री० ङीप् ।

**धारा** स्त्री० धृ णिच्-अङ् । घटादिच्छिद्रे,सन्ततौ, द्रवद्रव्यस्य सन्तत्या पतने, खङ्गादेर्निशिताग्रे, उत्कर्षे यशसि, अति-वृष्टौ,समूहे, मेघस्तासारवर्षणे वृष्टौ,पुरीभेदे,'अश्वानान्त गतिर्धारा विभिन्ना सा च पञ्चधे'त्युक्ते अश्वानां गतिभेदे, 'इतीव धारामवधीर्य्ये ति मे । सैन्याग्रिमस्कन्धे च ।

**धाराकदम्ब** पु० धाराकालिक कदम्ब शाक । प्रावृषेण्ये कदम्बभेदे । धाराया कदम्ब समूहो यत्र । मेघे ।

**धाराट** पु० धारार्थमटति धारां धारया वा अटति अच् । चातके, अश्वे, मेघे मत्तमातङ्गे च ।

**धाराधर** पु धारां धारयति धृ णिच्-अच् तस्य । मेघे 'धाराधर ! धरा वारिधारये'ति चातकाष्टकम् ।

**धाराफल** पु०धारायुक्तानि श्रेणीभवानि फलान्यस्य । मदनवृक्षे

**धारावाहिन्** त्रि०धारया सन्तत्या वहति वह णिनि । सन्ततत्या पातुके, क्रमेणाविच्छेदेन आयमाने च । स्वार्थे कन् । धारावाहिकोप्यत्रार्थे ।

**धारासम्पात** पु० धाराणां सम्पात पतनम् । महावृष्टौ ।

**धारास्नुही** स्त्री धारायुता स्नुही शाक० । त्रिधारायां स्नुह्याम् (तेकाटासिजु) ।

**धारिणी** स्त्री० धृ-णिनि । भूमौ, शाल्मलिवृक्षे च ।

**धारिन्** पु० धृ णिनि । पीलुवृक्षे । धारयकर्त्तरि त्रि० ।

**धार्त्तराष्ट्र** पु० धृतराष्ट्रे धृतराष्ट्रस्येम अब अण् । सर्पभेदे कृष्णवर्णचञ्चुचरणोपलक्षिते श्वेतकाय हंसे च । धृतराष्ट्र-स्यापत्यम् अण् । दुर्य्योधनादौ 'निपतन्ति धार्त्तराष्ट्रा' इति वेणीसंहारम् ।

**धार्म्मिक** त्रि०धर्म्मं चरति सततमनुशीलयति ठक् । धर्म्मशीले

**धार्ष्ट्य** न० धृष्टस्य भाव ष्यञ् । निर्लज्जत्वे ।

**धाव** जवे सक० शुद्धौ च भ्वा०आत्म० शीघ्रगतौ अक०सेट् । धावते अधाविष्ट । सर्व्वधावादेशस्तु पर० ।

**धावक** पु० धाव-णिच्-ण्वुल् । रजके । धाव ण्वुल् । शीघ्रगे । धावनकर्त्तरि त्रि० (धाउङ्गिया) ।

**धावन** न० धाव ल्युट् । शोधने,शीघ्रगमने च । [कार्य्यान्न

**धावनि(नी)** स्त्री० धाव अनि वा ङीप् । पृश्निपर्ण्यां कण्ट

**धि** धृतौ तु०पर०सक अनिट् । धियति अधैषीत् ।

**धिक्** अव्य० धा बाहु वा डिकि । अनिष्टशब्दैर्भर्त्सने निर्भर्त्सने निन्दायाम् 'धिगधिक् शक्रजितमि'ति नाटकम् । निन्दनीये च । तद्योगे तु न द्वितीया धिक्च कथिते स्पष्टम् ।

**धिक्कार** पु० धिक्+कृ-घञ् । तिरस्कारे ।

**धिक्कृत** त्रि० धिक् निन्दनीय कृत कृ-क्त । निर्भर्त्सिते ।

**धिक्ष** सन्दीपने सक० क्लेशे जीवने अक भ्वा० आत्म० सेट् । धिक्षते अधिक्षिष्ट । [धिन्वेति अधिन्वीत् ।

**धिव** प्रीणने अक० गतौ सक स्वा० पर० सेट् इन्ति ।

**धिष** शब्दे जु०पर०अक० सेट् । दिधेष्टि अधेषीत् ।

**धिषण** पु धृष-क्यु धिषादेश । बृहस्पतौ ।

**धिषणा** स्त्री० धृष्णोत्यनया धृष क्यु धिषादेश । बुद्धौ ।

**धिष्ण्य** न० धृष-यत् नि । स्थाने, गृहे, शक्तौ, नक्षत्रे च । अग्नौ अग्निभेदे, शुक्रे च पु । [अधेष्ट । धीन ।

**धी** अनादरे आराधने च दिवा०आत्म सक०अनिट् । धीयते

**धी** स्त्री ध्यै-क्विप् सम्प्रसारणञ्च । बुद्धौ ज्ञाने ।

**धीगुण** पु द्व० । 'शुश्रूषा श्रवणञ्चैव ग्रहण धारण तथा । ऊहापोहार्थविज्ञान तत्त्वज्ञान च धीगुणा' इत्युक्तेषु अष्टसु बुद्धिधर्म्मेषु । [पण्डिताऽयमि त्रि

**धीमत्** पु० धी प्रशास्त्यस्य मतुप् । बृहस्पतौ । बुद्धिमति

**धीर** अवज्ञायां अद० चुरा०उभ०सक सेट् । नित्यमवपूर्व्व । अवधीरयति ते अवादिधीरत् त । अवधीर्य्य ।

**धीर** त्रि धियं राति रा-क, धियमीरयति ईर-अण् धी क्रन् वा । धैर्य्यान्विते विनीते,बलयुते,पण्डिते च । अवभोपधौ, बलिराज्ञे बुद्धिप्रेरके बुद्धिसाक्षिणि परमेश्वरे च पु । कुङ्कुमे न० । नायिकाभेदे, काकोल्यां, महाज्योतिष्मत्यां, क्षीरकाकोल्यां विशल्यायां च स्त्री० ।

**धीराधीरा** स्त्री० धीरा च अधीरा च । नायिकाभेदे ।

**धीरोदात्त** पु नायकभेदे ।

**धीवर** पु० दधाति मत्स्यान् धा ष्वरच् नि० । कैवर्त्ते ।

**धीशक्ति** स्त्री० ६त० । शुश्रूषादिषु अष्टसु धीगुणशब्दे दर्शितेषु बुद्धिगुणेषु ।

**धीसख** पु० धियः सखा टच्समा० । अमात्ये धीसचिवे ।

**धु** कम्पने स्वा० उभ०सक० अनिट् । धुनोति धुनीते । अधौषीत् अधोष्ट ।

**धुक्ष** सन्दीपने भ्वा०आत्म०सक०सेट् । धुक्षते । अधुक्षिष्ट ।

**धुत** त्रि०धु-क्त । त्यक्ते, कम्पिते च ।

**धुनि(नी)** स्त्री० धुनोति वेतसादीन् धु-निक् वा ङीप् । नदीमात्रे

**धुन्धुमार** पु० बृहदश्वपुत्रे, इन्द्रगोपे कीटे, गृहधूमे (झुल)च

**धुर्(रा)** स्त्री०धुर्व क्विप् वा टाप् । चिन्तायाम्, रथाद्यग्रभागे, यानमुखे, भारे च ।

**धुरन्धर** त्रि० धुरं धारयति धृ-णिच्-खच् मुम् ह्रस्वश्च । भारवाहके वृषादौ, भारसहे च । धवलवृक्षे पु० ।

**धुरीण** त्रि० धुरं वहति ख । भारवाहके, श्रेष्ठे च ।

**धुर्य** त्रि० धुरं वहति यत् । भारवाहके, श्रेष्ठे च ।

**धुर्व** हिंसे भ्वा० पर०सक०सेट् । धूर्वति अधूर्वीत् । धूर्त्तः ।

**धुवित्र** न० कृ०धु-इत्र । यज्ञादौ वह्निसंधुक्षणे ।

**धु(धू)स्तू(स्त)र** पु० धुस-क्विप् तुर-क कर्म्म० ष० वा ह्रस्वः । (धुतरा) ख्याते वृक्षे । [अधोष्ट

**धू** कम्पने भ्वा० उभ० सक० वेट् । धवतिते अधावीत् अधविष्ट

**धू** कम्पने वा०चुरा०उभ० पक्षे तुदा० कु०पर०सक० सेट् । धूनयति ते धुवति अदूधुनत् अधुवीत् ।

**धू** कम्पने स्वा० क्र्यादि० प्वादिश्च उभ० सक०वेट् । धूनोति धूनुते धुनाति धुनीते । अधावीत् अधविष्ट अधोष्ट 'धूनोति चम्पकवनानि धुनोत्यशोक'मिति । 'वायुर्विधूनयती'ति च कविरहस्यम् ।

**धूत** त्रि० धू-क्त । भर्त्सिते, कम्पिते, तर्किते, त्यक्ते च ।

**धूनक** पु० धूनयति संधुक्षते वह्निम् धु० धू-ण्वुल् नुगागमः । यक्षधूपे (धुना) । [अदूधुपत्-त ।

**धूप** दीप्तौ चुरा०उभ० अक० दीपने सक० सेट् । धूपयति-ते ।

**धूप** तापे अक०तापने सक०भ्वा०पर०सेट् । धूपायति अधूपायीत् अधूपीत् । [गन्धद्रव्योत्थे धूमे, तत्साधनद्रव्ये च ।

**धूप** पु० धूपयति रोगान् दोषान् वा धूप-अच् । गुग्गुलुप्रभृति

**धूपन** पु० धूप-ल्यु । यक्षधूपे (धुना) ।

**धूपवृक्ष** पु० ६त० सरलवृक्षे । धूपोऽङ्गमस्य । धूपाङ्गमप्यत्र ।

**धूपित** त्रि० धूप-क्त वा आयाभाव । अध्वादिगमनेन श्रान्ते, सन्तापिते च । [ध्वजे पटार्थे ।

**धूम** पु० धू-मक् । आर्द्रकाष्ठजाते मेघकज्ज्वलयोः कारणे वह्नि

**धूमकेतन** पु० धूम-केतनो यस्य । वह्नौ । धूम इव केतनः । तारापुञ्जात्मके धूमकेतौ उत्पातभेदे ।

**धूमकेतु** पु० धूमइव केतुः । उत्पातरूपेऽशुभसूचके तारापुञ्ज भेदे । ६त० । वह्नौ. धूमध्वजादयोऽप्यत्र ।

**धूमगन्धिक** न० धूमस्येव गन्धोऽस्त्यस्य ठन् । रोहिषतृणे ।

**धूममहिषी** स्त्री० धूमस्य महिषीव । कुज्झटिकायाम् ।

**धूमयोनि** पु० धूमोयोनिरस्य । मेघे,मुस्तके च । ६त० । वह्नौ आर्द्रकाष्ठे च । [तद्वति त्रि० ।

**धूमल** पु० धूमं धूमवर्णं लाति ला-क । कृष्णलोहिते वर्णे ।

**धूमाभ** पु० धूमस्येवाभा यस्य । धूम्रवर्णे । तद्वति त्रि० ।

**धूमावती** स्त्री० महाविद्याभेदे । [हितं यत् । धूमसाधने त्रि०

**धूम्या** स्त्री० धूमानां समूहः पाशादि० य । धूमसमूहे । धूमाय-

**धूम्याट** पु० धूम्या इव अटति अट-अच् । (फिङ्गा) पक्षिभेदे

**धूम्र** पु० धूमं तद्वर्णं राति रा-क०ष० । शिह्लके, खरलोमवर्णाभे कृष्णलोहिते वर्णे च । तद्वति त्रि० ।

**धूम्रक** पु० धूम्रइव कायति कै-क । उष्ट्रे । [मतिभेदे च

**धूम्रलोचन** पु०धूम्रे लोचने यस्य । कपोते, महिषासुरसेना-

**धूम्रवर्ण** पु० धूम्रो वर्णोऽस्य । शिह्लके, कृष्णलोहितवर्णे च । तद्युक्ते त्रि० । [वृक्षे तस्या धूम्रसारत्वात्तथात्वम् ।

**धूम्रिका** स्त्री० धूम्रोवर्णः सारेऽस्त्यस्य ठन् । (शिशु) शिंशपा

**धूर** वधे गतौ च दि०आ०सक०सेट् । धूर्यते अधूरिष्ट । धूर्त्तः

**धूर्जटि** पु० जट-संघाते इन् धुरस्त्रैलोक्यचिन्ताया जटिः सङ्घातोऽत्र । शिवे ।

**धूर्त्त** पु० धुर्व-धूर-वा क्त । धुस्तूरवृक्षे, चोरकवृक्षे, नायकभेदे, 'धूर्त्तोऽपरां चुम्बती'ति सा० द० । लौहकीटे, विड्लवणे च । द्यूतकारके, वञ्चके च त्रि० ।

**धूर्त्तक** पु० धूर्त्तइव वञ्चकइव इवार्थे कन् । शृगाले ।

**धूर्वह** त्रि० धुरं वहति वह-अच् रेफे इणो दीर्घः । भारवाहके धुरन्धरे । धुर्वह इति ह्रस्वयुक्तत्वलेखनं प्रामादिकम् ।

**धूलि(ली)** स्त्री० धू-लिक् वा ङीप् । रजसि परागे ।

**धूलिध्वज** पु० धूलिरेव ध्वजोऽस्य । वायौ ।

**धूलिपुष्पी** स्त्री० धूलिप्रचुरं पुष्पमस्या ङीप् । केतक्याम् । स्वार्थे कन् ह्रस्व' । अत्रार्थे ।

**धूलिकदम्ब** पु० धूलीनां कदम्बं यत्र । कदम्बवृक्षे, वरुणवृक्षे, तिलिशवृक्षे च । ६त० । धूलीसमूहे न० ।

**धूश(ष)(स)** शोभने चुरा०उभ०सक०सेट् । धूश(ष)(स)यति ते अदूधुश(ष)(स)त् त ।

**धूसर** पु० धू-सर किञ्च न यलम् । गर्दभे, उष्ट्रे, कपोते,

तैलकारे, ईषत्पाण्डुवर्णे, कृष्णश्वेतवर्णे, शुक्लपीतवर्णे च तत्तद्वर्णवति त्रि० । [हस्तिशुण्डयाम् ।

धूसरपत्रिका स्त्री० धूसर पत्रमस्याः कन् । (हातिशुँडा)

धृ पतने भ्वा०आ०अक० अनिट् । धरते अधृत ।

धृ स्थितौ अक० धृतौ सक भ्वा० उभ० अनिट् । धरति ते अधार्षीत् अधृत ।

धृ स्थितौ अक० धृतौ सक० तुदा०आ०अनिट् । म्रियते अधृत

धृ धारणे चुरा०उभ सक अनिट् । धारयति ते अदीधरत् त

धृज गतौ भ्वा०पर०सक०सेट् इदित् । धृञ्जति अधृञ्जीत् [च

धृतराष्ट्र पु० चन्द्रवंश्ये दुर्योधनपितरि नृपभेदे नागभेदे, पक्षिभेदे

धृति स्त्री० धृ क्तिन् । तुष्टौ, धारणे, धाने, विष्कम्भादिके अष्टमे योगे, सुखे, धारणायाम्, अवसादेऽपि शरीरादेः स्थापकत्वे, अष्टादशाक्षरपादके छन्दोभेदे अष्टादशसंख्या याम् । [धर्षिता स्त्री ।

धृष सङ्घाते अक० हिंसे सक०भ्वा०पर०सेट् । धर्षति अधर्षीत्

धृष प्रागल्भ्ये स्वा पर०अक० सेट । धृष्णोति अधर्षीत् । धृष्ट

धृष सामर्थ्यबन्धने चुरा०आत्म अक सेट् । धर्षयते अदीधृषत अदधर्षत ।

धृष क्रोधे अभिभवे च वा चु उभ० पक्षे भ्वा० सक० सेट् । धर्षयति ते धर्षति अदीधृषत् त अदधर्षत् त अधर्षीत् ।

धृष्णज् त्रि० धृष-न क्षज् । प्रगल्भे निर्लज्जे बेधुदेवे च (कठ्ठी)

धृष्णु त्रि धृष क्नु । प्रगल्भे निर्लज्जे च ।

धृष्ट त्रि० धृष क्त । निर्लज्जे, प्रगल्भे, नायकभेदे च ।

धृष्टद्युम्न पु० धृष्ट प्रगल्भ द्युम्न बलं यस्य । द्रुपदनृपपुत्रे ।

धेनु स्त्री० धयति सुतान् धे-नु इच् । नवप्रसूतायां गवि ।

धेनुक पु० धेनुरिव इवार्थे कन् । असुरभेदे । हस्तिन्यां स्त्री०। स्वार्थे कन् । धेनौ । धेनुकादयोऽप्यत्र

धेनुकसूदन पु० धेनुकं सूदयति हिनस्ति सूद-ल्यु । श्रीकृष्णे

धेनुदुग्धकर पु० धेनोर्दुग्धमिव किरति कॄ अच् । गर्जरे (गाजर)

धेनुष्या स्त्री० धेनु+ष्यत् यां यत् षुक् च । ऋणशोधनार्थं उत्तमर्णाय बन्धकत्वेन दीयमानायां धेनौ ।

धैनुक न० धेनूनां समूहः ठञ् । धेनुसमूहे ।

धैर्य न धीरस्य भावः ष्यञ् 'लिङ्गविकारोऽवृतिर्धैर्यम् तद्धैर्यमिति गी.यत'इत्युक्ते मनसः स्थैर्ये, धीरत्वे, 'मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु'इत्युक्ते मनसो विकाराभावे अव्याकुलत्वे, विपद्यपि व्यितावपि प्रारब्धापरित्यागहेतौ चित्तवृत्तिभेदे च ।

धैवत पु० ??? नाभेरयोभाग वस्ति मायोर्द्धग उर्ध्व । धावन्निव च यो याति कण्ठदेशं स धैवत' इत्युक्ते कण्ठोत्थिते स्वरभेदे । [णिच् अदुधोरत् त

धोर गतिचातुर्ये भ्वा०पर०अक०सेट् । धोरति अधोरीत् ।

धोरण न० धोरत्यनेन धोर-ल्यु ल्युट् वा । हस्त्यश्वरथादौ याने । भावे ल्युट् । अश्वगतिभेदे ।

धोरणि(णी) स्त्री० धोर-अनि वा ङीप् । परम्परायाम् 'सदा खलन्मधुरीधाराधोरणिधौतधामनी'त्युद्भट ।

धौत त्रि० धाव क्त ऊठ । मार्जिते, प्रक्षालिते उत्तेजिते, शुभ्रे च । रजते न० ।

धौतकौषेय न कर्म० । प्रक्षालिते कृमिकोषजाते वस्त्रे ।

धौरित न० धोर-क्त प्रज्ञाद्यण् । अश्वानां चतुरायां गतौ । स्वार्थे कन् । तदर्थे ।

धौरेय त्रि० धुरं वहति ढक् । भारवाहके वृषादौ ।

ध्मा अग्निसंयुतौ दीर्घश्वासैतवे शब्दभेदे भ्वा पर० शब्दे अक० वादने सक० अनिट् । धमति अध्मासीत् ।

ध्मात त्रि० ध्मा क्त । शब्दिते दीर्घश्वासेनाग्निसंयुक्ते ।

ध्माङ्क्ष आकाङ्क्षे सक० घोररवे अक भ्वा पर० सेट् इदित् । ध्माङ्क्षति । अध्माङ्क्षीत् । [काकोलिकायां स्त्री०गौ०ङीष्

ध्माङ्क्ष पु० ध्माङ्क्ष अच् । काके, मत्स्यभक्षके पक्षिभेदे भिक्षुके च

ध्माङ्क्षोली स्त्री ध्माङ्क्ष ओल गौ० ङीष् । काकोलीलतायाम्

ध्यान न ध्यै ल्युट् । चिन्तने, ध्येयवस्तुविषयचिन्तने, चित्तैकतानप्रवाहे अहम्ब्रह्मास्मीति बुद्ध्या निरालम्बतया स्थिति । ध्यानशब्देन विख्याता परमानन्ददायिनी'ति वेदान्तोक्ते ब्रह्मविषये चिन्तने, 'ध्यै चिन्तायां स्मृतो धातुश्चिन्ता तत्त्वेन निश्चला । एतद् ध्यानमिह प्रोक्त'मिति तन्त्रोक्ते ध्येयस्य चित्तस्थिरतया निश्चये च ।

ध्याम न० ध्यायते दृशि ध्यै-मन् । गन्धतृणे दमनकवृक्षे च । स्वार्थे कन् । रोहिषतृणे ।

ध्यै चिन्तने भ्वा०पर सक०अनिट् । ध्यायति अध्यासीत् ।

ध्रज गतौ भ्वा पर०सक०सेट् । ध्रजति अध्राजीत् अध्रजीत् अयमिदित् ध्रञ्जति अध्रञ्जीत् ।

ध्रण ध्वाने भ्वा पर अक सेट् । ध्रणति अध्रणीत्-अध्राणीत्

ध्रस कणश आदाने क्र्या०पर०सक०सेट् । ध्रस्नाति अध्रसीत् अध्रासीत् । ध्रसित्वा ध्रस्त्वा । [ध्रसति ते अदिध्रसत् त

ध्रस उञ्छे कणश आदाने च चुरा०उभ०सक० सेट । ध्रास

ध्राक्ष काङ्क्षे घोररवे च भ्वा प०अ०सेट् इदित् । ध्राङ्क्षति अध्राङ्क्षीत् । [ध्रस घञ् । वक्रि अट्टालिका ।

ध्राड् शोषणे अनमर्षे च भ्वा० पर०सक सेट् । ध्राघति

ध्राघ गतौ भ्वा०आ०अक० सेट्। ध्राघते अध्राघिष्ट। घटि अटभावत्।

ध्राड विभेदे भ्वा०आत्म०सक०सेट्। ध्राडते अध्राडिष्ट।

ध्रिज गतौ भ्वा०पर०सक०सेट्। ध्रेजति अध्रेजीत्।

ध्रु स्थैर्य्ये अक० सर्पणे सक० तु० कु० पर० अनिट्। ध्रुवति अध्रुवीत् दुध्राव।

ध्रु स्थैर्य्ये अक०सर्पणे सक०भ्वा०पर०अनिट्। ध्रवति अध्रौषीत्

ध्रुव पु०कु० ध्रु-अच्। शङ्कौ, विष्णौ, हरे, उत्तानपादनृपपुत्रे वसुभेदे, ज्योतिषोक्ते योगभेदे, नासाग्रे, स्थाणौ, ललाटस्थे आवर्त्तभेदे, भूगोलस्योत्तरदक्षिणकेन्द्रद्वयोपरिस्थे, स्थिरे ताराभेदे च। निश्चिते, तर्के, आकाशे, उत्तरात्रयरोहिणी नक्षत्रेषु च न०। सन्तते, अपरिणामिनित्ये, स्थिरे च लि०। मूर्वायाम्, शालपर्ण्याञ्च स्त्री०। गर्वादिपक्षिणि पुंस्त्री०। स्रुवायां कन्। गीतिभेदे न० (ध्रुया)

ध्रेक उत्साहे शब्दे च भ्वा० आत्म० अक०सेट्। ध्रेकते अध्रेकिष्ट। चङि न ह्रस्वः।

ध्रै तृप्तौ भ्वा० पर०अक० अनिट्। ध्रायति अध्रासीत्।

ध्रौव्य न० ध्रुवस्य भावः ष्यञ्। स्थैर्य्ये।

ध्वंस पु० ध्वन्स घञ्। विनाशे।

ध्वंसन न० ध्वन्स ल्युट्। अधःपतने, गमने, नाशे च।

ध्वज गतौ भ्वा०पर०सक०सेट्। ध्वजति अध्वजीत् अध्वाजीत् अयमिदिदपि। ध्वञ्जति अध्वञ्जीत्।

ध्वज पु० ध्वज-अच्। शौण्डिके, सर्पे च। चतुष्कोणाकारे वंशदण्डोपरिस्थे वस्त्रखण्डे, खट्वाङ्गे, मेढ्रे च पु० न०।

ध्वजद्रुम पु० ध्वजाकारः द्रुमः। तालवृक्षे।

ध्वजभङ्ग पु० ध्वजस्य मेढ्रस्य भङ्गः रमणसामर्थ्यहीनता यत्र। क्लीवत्वसूचके रोगभेदे।

ध्वजाहृत न० ध्वजेन सहाहृतः। 'संग्रामादाहृतं यत्तु विजित्य द्विषतां कुलम्। स्वाम्यर्थं जीवितं त्यक्त्वा तद् ध्वजाहृत मुच्यते' इत्युक्ते धनविशेषे। तादृशे दासे पु०।

ध्वजिन् पु० ध्वज+अस्त्यर्थे इनि। न्यमे, रथे, ब्राह्मणे, तुरङ्गे, सर्पे, मद्यविक्रयोपजीविनि शौण्डिके, मयूरे च।

ध्वजिनी स्त्री० ध्वजः अस्त्यस्याः इनि। सेनायाम्।

ध्वण ध्वने भ्वा०पर०अक०सेट्। ध्वणति अध्वाणीत् अध्वणीत्

ध्वन रवे भ्वा०पर०अक०सेट् वा घटादि। ध्वनति अध्वानीत्-अध्वनीत्। ध्वनयति ध्वानयति। [अध्वनयीत्।

ध्वन शब्दे अद०चु० उभ०सक०सेट्। ध्वनयति अदिध्वनत्

ध्वन पु०चु० ध्वन-घञ्। शब्दे।

ध्वनि पु० ध्वन+इन्। अव्यक्ते मृदङ्गादिशब्दे, अलङ्कारोक्ते उत्तमकाव्ये च। [विकारे काकुप्रभृतौ।

ध्वनिविकार पु० ध्वनेर्विकारः। शोकादिना शब्दस्य

ध्वन्स गतौ भ्रंशे अधःपतने च भ्वा०आत्म०अक०सेट्। ध्वंसते अध्वंसत्। क्त्वा वेट्।

ध्वस्त लि० ध्वन्स-क्त। च्युते, नष्टे, गलिते च। [अध्वाङ्क्षीत्

ध्वाक्ष(ङ्क्ष) घोररवे च भ्वा०पर०अक० सेट् इदित्। ध्वाङ्क्षति

ध्वाङ्क्ष पु० ध्वाक्षि अच्। काके, वके, भिक्षुके, गृहे च।

ध्वान पु० ध्वन-घञ्। शब्दे।

ध्वान्त न० ध्वन-क्त नि०। अन्धकारे।

ध्वान्तारि पु० ६त०। सूर्य्ये अर्कवृक्षे, चन्द्रे, वह्नौ च।

ध्वान्तोन्मेष पु० ध्वान्ते अन्धकारे उन्मेषोऽस्य। खद्योते।

## न

न अव्य० नह बन्धने ड। निषेधे। तत्र क्रियायोगे अभावे तद्धित योगे भेदे उपमायाञ्च। बन्धे, प्रस्तुते, रत्ने च पु०।

नकुल लि० नास्ति कुलमस्य। निष्कुले। सर्पवैरिणि बभ्रौ, शिवे, चतुर्थपाण्डवे च पु०। कुक्कुर्य्यां जटामांस्यां गन्धिन्यां कुङ्कुमे च स्त्री० ङीप्।

नकुलेष्टा स्त्री०६त०। रास्नायां तस्या नकुलप्रियत्वात्तथात्वम्

नक्क नाशने चु०उभ०सक०सेट्। नक्कयति-ते अननक्कत्-त।

नक्त न०नज-क्त। रात्रौ, सर्व्वदिनातिक्रमेण रात्रिभोजनरूपे व्रते च

नक्तक पु० नज-तकन्। (न्याकड़ा) कर्पटे जीर्णवस्त्रखण्डे।

नक्तचारिन् पु० नक्तं रात्रौ चरति चर-णिनि। पेचके, बिडाले च। रात्रिचारिमात्रे त्रि०।

नक्तञ्च(ञ्चा)र पु० नक्ते, नक्तं वा चरति टक्। राक्षसे, चौरे, पेचके, बिडाले च। रात्रिचरे त्रि० स्त्रियां ङीप्।

नक्तन्दिव न० नक्तञ्च दिवा च नि०। सप्तम्यर्थवृत्तौ अहोरात्रे।

नक्तम् अव्य० नज-बाहु० तम्। रात्रौ।

नक्तमाल पु० नक्तम् रात्रौ आ अलति अच्। करञ्जवृक्षे।

नक्तव्रत न० 'नक्तं निशायां कुर्व्वीत गृहस्थो विधिसंयुतः। निशि नक्तं तु विज्ञेयं यामार्द्धे प्रथमे सदे'त्युक्तलक्षणे, दिवा-भोजनाभावविशिष्टे रात्रौ प्रथमयामार्द्धे भोजनरूपे व्रते।

नक्र पु० न क्रामति दूरस्थलम् न+क्रम-ड। कुम्भीरे। (भरण काट) द्वारोपकाष्ठे, नासिकायाञ्च न०।

नक्रराज पु० ६त० टच् समा०। (हाङ्गर) जलजन्तुभेदे।

नक्षत्र न० नक्ष-अत्रन्। अश्विन्यादितारकासु।

नक्षत्रचक्र न० नक्षत्रघटितं चक्रम्। अश्विन्यादिसप्तविंशति

जन्मनाडिकायां पु०। विस्तरस्तु वृहदभिधाने। तगरमूले न०।

**नतद्रुम** पु० कर्म०। लताशालवृक्षे।

**नतनासिक** त्रि० नता नासिकाऽस्य। चिपिटनासिके (खान्दा)

**नताङ्गी** स्त्री० स्तनजघनभारात् नतमङ्गमस्याः ङीष्। नार्य्याम्

**नति** स्त्री० नम-क्तिन्। नम्रतायाम् 'त्रिकोणमथ षट्कोणमर्द्ध-चन्द्रं प्रदक्षिणम्। दण्डमष्टाङ्गमुग्रञ्च सप्तधा नतिलक्षण-मित्युक्ते प्रणमभेदे नमनभेदे च एतल्लक्षणं वृहदभिधाने।

**नद** सम्बोधे भ्वा०पर०अक० सेट् इदित्। नन्दति अनन्दीत् नन्दथुः। प्रनन्दति।

**नद** पु० नद-अच्। सिन्धुभैरवशोणादौ अकृत्रिमे जलप्रवाहे

**नदी** स्त्री० नद-अच् नदट् इति निर्द्देशात्। टित्वात् ङीप्। गङ्गायमुनादिषु गुरुलघुजलप्रवाहेषु 'धनुःसहस्राख्यष्टौ च गतिर्यासां न विद्यते। न ता नदीशब्दवहा' इत्युक्ते धनुः-सहस्राष्टकान्यूनदेशवाहिन्यामेव नदीशब्दप्रवृत्तिः। तासु च 'सर्व्वा गुर्व्वी प्राक्स्रुती वाहिनी स्यात् नदी पश्चा-द्वाहिनी निश्चयेन' इति 'प्रायो मृदुवहा गुर्व्वो लघ्व्यः शीघ्रवहाः स्मृता' इति च विशेषः।

**नदीकान्त** पु० नदी कान्ता यस्य। समुद्रे, हिज्जलवृक्षे, सिन्धु-वारके च। जम्बूवृक्षे काकजम्ब्वोषधौ च स्त्री०।

**नदीकूलप्रिय** पु० नदीकूलं प्रियं यस्य। जलवेतसे।

**नदीज** पु० नद्याः समीपे जायते जन-ड। अर्ज्जुनवृक्षे अग्निमन्थवृक्षे च। हिज्जलवृक्षे, स्रोतोऽञ्जने च न०। नदी-जातमात्रे त्रि०। 'नदीज! लङ्केशवनारिकेतु'रिति भारतम्

**नदीन** पु० ६त०। समुद्रे, वरुणे च। नदीभिन्ने त्रि०।

**नदीमातृक** त्रि० नदी मातेव पोषिकाऽस्य। नदीजलसम्पन्न व्रीहिपालित देशे।

**नदीष्ण** त्रि० नद्यां स्नातुं जानन्ति स्ना क षत्वम्। नदी स्नानकुशले यस्यां यस्या नद्यां यथावतरणीयं तज्ज्ञानयुक्ते

**नदीसर्ज्ज** पु० नद्यां सृज्यतेऽसौ सृज-घञ्। अर्ज्जुनवृक्षे।

**नद्ध** त्रि० नह-क्त। बद्धे, उद्धृते च।

**नद्ध्री** स्त्री० नह्यतेऽनया ष्ट्रन् ङीप्। चर्म्मनिर्मितरज्ज्वाम्।

**ननान्दृ** स्त्री० न नन्दति कृतायामपि सेवायां न तुष्यति न+नन्द-ऋन्। भर्त्तृभगिन्याम् (ननद) पृ० वृद्धौ। ननान्द्राप्यत्र।

**ननु** अव्य० न नुदति नुद-डु। प्रश्ने, अवधारणे, निश्चये, अनुमतौ अनुनयायाम्, अनुनये, सान्त्वने, सम्बोधने, आमन्त्रणे, पर-कृतौ, अधिकारे, सम्भ्रमे, दुष्टोक्तौ, सम्यग्वादे, स्तुतौ, आक्षेपे, प्रत्युक्तौ, उत्प्रेक्षायाञ्च।

**ननुच** अव्य० ननु च च समाहार द्व०। विरोधोक्तौ।

**नन्द** पु० नन्द-अच्। श्रीकृष्णस्य पितरि गोपभेदे. महानन्दि सुते नृपतिभेदे, आनन्दे, निधिभेदे, प्राग्दक्षिणद्वारगृहे, वास्तुभेदे च।

**नन्दक** पु० नन्दयति नन्द-णिच् ण्वुल्। हरेः-खड्गे, भेके च। आनन्दजनके, कुलपालके च त्रि०।

**नन्दकिन्** पु० विद्यामयो नन्दकोऽसिरस्य इनि। विष्णौ।

**नन्दगोपित** स्त्री० ३त०। रास्नायाम्। [भट्टिः

**नन्दथु** पु० नन्द-अथुच्। आनन्दे 'यशसो तस्य नन्दथु'रिति

**नन्दन** पु० नन्दयति नदि-णिच्। पुत्रे, भेके, पर्व्वतभेदे 'वङ्क-चीरास्तथा गावो नन्दनं नन्दने प्रिये।' इत्युक्ते ६०वर्षमध्ये वत्सरभेदे च। इन्द्रोद्याने न०। आनन्दकारके त्रि०।

**नन्दननन्दन** पु० नन्दस्य नन्दनः। श्रीकृष्णे, नन्दसुतादयोऽप्यत्र

**नन्दनन्दिनी** स्त्री० ६त०। दुर्गायाम् 'नन्दगोपगृहे जाता यशोदागर्भसम्भवे'ति चण्डी। नन्दसुतादयोऽप्यत्र।

**नन्दा** स्त्री० नन्द-अच्। 'नन्दते सुरलोकेषु नन्दने वसतेऽथवा। हिमाचले महापुण्ये नन्दा देवी ततोऽभव'दित्युक्तायां गौर्य्याम् अलिञ्जरे, (नाद) सम्पदि, 'प्रतिपदेकादशी षष्ठी नन्दा-ज्ञेया मनीषिभिरित्युक्तेषु तिथिभेदेषु, 'स्थिरे जीववारे तु नन्दे'ति संज्ञेति, सूर्य्यसंक्रान्तिभेदे, ननान्दरि, तीर्थभेदे च।

**नन्दि** पु० नन्द-इन्। स्वनामख्याते वृषे आनन्दे 'कौशल्या-नन्दिवर्द्धनो रामः' इति रामायणम्। महादेवस्य पार्श्व-चरभेदे नन्दिकेश्वरे। द्यूताङ्गे पु०न०।

**नन्दिकेश्वर** पु० शिवस्य पार्श्वचरभेदे। तेन प्रोक्तमण् तस्य लुक्। पुराणभेदे। [नन्दिवृक्षादयोऽप्यत्र।

**नन्दितरु** पु० नन्दयति णिच्-णिनि कर्म०। धववृक्षे।

**नन्दिन्** पु०नन्द-णिनि। शिवद्वारपाले। गर्द्दभाण्डे, वटद्रुमे च

**नन्दिनी** स्त्री०नन्दयति नन्द-णिनि। वशिष्ठधेनौ, सुतायाम्, उमायां, गङ्गायां, ननान्दरि, व्याडिमातरि, रेणुकौषधौ च

**नन्दिनीसुत** पु०६त०। व्याकरणस्य संग्रहकारके व्याडिमुनौ

**नन्दिपुराण** न० नन्दिना प्रोक्तं पुराणम्। उपपुराणभेदे।

**नन्दिवर्द्धन** पु० नन्दिं नन्दं नन्दिनं वा वर्द्धयति वृध-णिच् ल्यु। तनये, मित्रे, शिवे च। आनन्दवर्द्धके त्रि०।

**नन्दीवृक्ष** पु० नन्द-इन् वा ङीप् कर्म०। अश्वत्थभेदे, तुने, (तुट) कुवेरके, मेषशृङ्ग्याञ्च। [नन्दीश्वरादयोऽप्यत्र।

**नन्दीश** पु० नन्दी ईश इव। शिवद्वारपाले। ६त०। शिवे

**नन्द्यावर्त्त** पु० 'दक्षिणानुगतालिन्दलयं यत् पश्चिमामुखम्। पूजनीयोत्तरस्थाय नन्द्यावर्त्तं वदन्ति त'दित्युक्ते गृहस्य गृह-भेदे, तगरवृक्षे, मत्स्यभेदे च।

नपुंसक पु०न० न स्त्री न पुमान् नि० । 'स्तनकेशवती नारी लोमशः पुरुषः स्मृतः । उभयोरन्तरं यच्च तदभावे नपुंसकम्'इत्युक्तलक्षणे क्लीवे । शब्दे तद्व्यवहारस्तु स्त्रीपुंभ्यां भिन्नत्वेन शास्त्रेऽनिर्दिष्टत्वात् । [illegible]

नप्तृ पु० न पतन्ति पितरोऽनेन न+पत-तृच् नि० । पौत्रे दौहित्रे च । पौत्र्यां, दौहित्र्याञ्च स्त्री० ङीप् ।

नभ न० नभ-अच् । आकाशे । श्रावणे मासि पु० ।

नभ (स्)सद् पु० नभसि सीदति सद-क्विप् । देवे ।

नभश्चर पु० नभसि चरति अच् । मेघे,वायौ,पक्षिणि, विद्याधरे,ग्रहादिषु चरेषु राक्षसे च । आकाशगामिनि त्रि० [आकाशे न० ।

नभस न० नभ-असच् । आकाशे ।

नभस् पु० नभ असि । श्रावणे मासि, मेघे, प्रावृषि च ।

नभसङ्गम पु० नभसं गच्छति गम खच् मुम् च । पक्षिणि ।

नभस्य पु० नभसि मेघे साधु यत् । भाद्रपदमासि ।

नभस्वत् पु० नभोऽस्यस्याश्रयत्वेन मतुप् मस्य वः । वायौ ।

नभोमणि पु०नभस आकाशस्य मणिरिव प्रकाशकत्वात् । सूर्य्ये

नभोरजस् न० नभसो रज इव ह्रस्वाधकारत्वात् । अन्धकारे

नभ्राज् पु० न भ्राजति भ्राज क्विप् । मेघे ।

नमस् अव्य० नम-असि । नतौ, त्यागे, स्तुतौ च ।

नमस्कार पु० नमस्+कृ घञ् । कराभ्यां शिरःसंयोगविशेषेण स्वापकर्षसूचके व्यापारभेदे ।

नमस्य त्रि० नमस् करोति नमस्+क्यच्-नमस्य कर्मणि यत् । नमस्कारणीये । भावे च । नतौ,पूजायाञ्च स्त्री ।

नमुचि पु० न मुञ्चति न+मुच-कि । शुम्भनिशुम्भयोः कनिष्ठभ्रातर्यसुरभेदे ।

नमुचिद्विष् पु०इत० । इन्द्रे, नमुचिसूदनादयोऽप्यत्र ।

नमेरु पु० नम एरु । सुरपुन्नागवृक्षे, रुद्राक्षे च ।

नम्ब गतौ भ्वा०पर०सक० सेट् । नम्बति अनम्बीत् ।

नम्र त्रि० नम र । नते, विनयान्वित च ।

नम्रक पु० नम्र इव कायति कै क । स्वार्थे कन् वा । वेतसे स्वार्थे कन् । नम्रे त्रि० ।

नय गतौ भ्वा० आत्म० सक० सेट् । नयते अनयिष्ट ।

नय पु० नी अच् । नीतौ शुक्राचार्य्यादिप्रणीते शास्त्रभेदे द्यूतभेदे च । कर्त्तरि अच् । नेतरि न्याय्ये च त्रि० । [प्रापणे ।

नयन न नीयतेऽनेन करणे ल्युट् । नेत्रे चक्षुषि । भावे ल्युट्

नर पु० नॄ-ऋ वा अच् । परमात्मनि 'आपो वै नरसूनवः' इति मनुः । विष्णौ, नरावतारे अर्ज्जुने, ऋषिभेदे, मनुष्ये, गणितशास्त्रोक्ते छायासाधनशङ्कौ, पुंसि, शङ्कौ च ।

नरक पु० नॄ वुन् । भूमिगर्भे वराहाज्जाते दैत्यभेदे पापिनां दुःखभोगस्थानभेदे रौरवप्रभृतौ च । तेषां विभेदो बृहदभिधाने । [बृहदभिधाने ।

नरककुण्ड न०इत० । पापिनां यातनाभोगकुण्डेषु । विस्तरस्तु

नरकजित् पु० नरकं नरकासुरं जितवान् जि भूते-क्विप् । श्रीकृष्णे । नरकान्तकादयोऽप्यत्र ।

नरदेव पु० नरो देव इव । नृपतौ ।

नरनारायण पु०द्वि० । नरश्च नारायणश्च द्व० । 'कृष्णार्ज्जुन'योः नारायणे मुनिभेदयोः । भगवतोऽवतारभेदे एकरूपभेदे द्व० ।

नरपति पु इत० । राजनि । नरेशादयोऽप्यत्र ।

नरपुङ्गव पु० पुमान् गौः पुङ्गवः इव नरः पुङ्गव इव भारवहनयोग्यत्वात् । मनुष्यश्रेष्ठे श्रेष्ठे च ।

नरमाला स्त्री० नराणां तन्मुण्डानां माला । नरमुण्डनिर्म्मितायां मालायां 'नरमालाविभूषणे'ति चण्डी ।

नरमेध पु०नरो मेध्यते बध्यते मोक्षणादिभिः संस्क्रियते यत्र । नरमांसद्रव्यकरणके यागभेदे ।

नरवाहन पु० नरा वाहनान्यस्य । कुवेरे स हि मनुष्यैरुह्यते । मनुष्यवाह्ययाने त्रि० ।

नरसिंह पु० नरश्चासौ सिंहश्च । अवयवभेदेन नरसिंहयोराकारयुक्ते हिरण्यकशिपोर्नाशार्थमाविर्भूते भगवदवतारभेदे नरहर्य्यादयोऽप्यत्र । नरः सिंह इव शौर्य्यादिमत्त्वात् । नरश्रेष्ठे । [द्योऽप्यत्रार्थे ।

नरस्कन्ध पु० नर+समूहे स्कन्ध । नरसमूहे एव मनुष्यस्कन्धा

नरेन्द्र पु नर इन्द्र इव । राजनि, विषवैद्ये एकविंशत्यक्षरपादके छन्दोभेदे च ।

नरोत्तम पु० नरेषु उत्तम । पुरुषोत्तमे नारायणे, 'य स्वकात् परतो वेह जातनिर्वेद आत्मवान् । हृदि कृत्वा हरिं गेहात् प्रव्रजेत् स नरोत्तम' इत्युक्ते वैराग्यवति पुरुषे श्रेष्ठे च 'नराणाञ्च नरोत्तम' इति गीता ।

नर्त्तक पु नृत-ण्वुल् । चारणे, नलतृणे च 'यश्च नृत्यपात्रस्थानं गीतयोग्य च ताडनम् । अलङ्कारधारणात् पात्रं नर्त्तक परिकीर्त्तित' इत्युक्ते नृत्याभिज्ञे नटे त्रि० । षित्वात् स्त्रियां ङीष् ।

नर्त्तन न० नृत ल्युट् । नृत्ये । [न चालम् प्रनर्हति ।

नर्द शब्दे भ्वा० गतौ सक० भ्वा० पर० सेट् । नर्दति अनर्दीत्

नर्म्मद पु नर्म्म परिहासं ददाति दा क । देशविशेषे । परिहासदायके त्रि० । सोमोद्भवायां दक्षिणस्थायां नद्यां स्त्री० ।

नर्म्मन् न० नृ मनिन् । परीहासे केलौ ।

**नल** बन्धे भ्वा०पर०सक०सेट् वा घटा०। नलति अनालीत्। णिच् नलयति नालयति।

**नल** पु० नल-अच्। तृणभेदे, चन्द्रवंश्ये, नृपभेदे, वानरभेदे, श्राद्धदेवे, पितृगणभेदे, 'कव्यवालस्तथा नल' इति पुराणमन्त्रः दैत्यभेदे च। पद्मे न०। [पदार्थे, पर्व्वणि च

**नलक** न० नल इव इवार्थे कन्। शाखास्थ्नि, नाडीवत् सच्छिद्रे

**नलकिनी** स्त्री०नलकं सच्छिद्रमस्थि अस्य इनि। जङ्घायाम्

**नलकूवर** पु० नलः कूवरो युगन्धरोऽस्य। कुवेरपुत्रे।

**नलद** न० नलं बन्धं गतिं वा द्यति दो-क। उशीरे। 'स्वादस्या नलदं विने'ति नैषधम्। पुष्परसे, जटामांस्यां च स्त्री०।

**नलपट्टिका** स्त्री० नलनिर्म्मिता पट्टिकेव। (दरमा)। कटभेदे।

**नलमीन** पु० नलाश्रय० मीन। (चिङ्गुड़ी) मत्स्यभेदे। [च

**नलिका** स्त्री०नल-स्वार्थे कन् टाप्। नाड्याम्, सुगन्धिद्रव्यभेदे

**नलित** पु० नल-क्त। (नालता) शाकभेदे।

**नलिन** न० नल-इनन्। पद्मे,शैवाले,तोये च। [नलिकायाञ्च

**नलिनी** स्त्री० नला' सन्त्यस्या इनि। पद्मसंघे, पद्मयुक्तदेशे,

**नलिनीखण्ड** न० नलिनी+समूहे खण्ड। पद्मिनीसमूहे।

**नली** स्त्री० नल-अच् गौरा० ङीष्। मनःशिलायां, विद्रुमलतायाम्, नलिकायाञ्च। (नालताशाक)।

**नल्व** पु० नल-व। चतुःशतहस्तमितदेशे, हस्तचतुःशते च।

**नव** पु० नु-अप्। स्तवे, रक्तपुनर्नवायाञ्च। अच्। नूतने त्रि०।

**नवग्रह** पु० कर्म्म० संज्ञात्वात् न द्विगुः। 'सूर्य्यचन्द्रौ मङ्गलश्च बुधश्चापि बृहस्पतिः। शुक्रः शनैश्चरो राहुः केतवश्च नवग्रहा' इत्युक्तेषु नवसु ग्रहेषु तेषां स्नानादि बृहदभिधाने

**नवति** स्त्री० नव दशतः परिमाणमस्य नि०।(नब्बुइ) संख्याभेदे

**नवदल** न०कर्म्म०। कमलकर्णिकासमीपस्थे दले, नूतने पत्रे च

**नवदुर्गा** स्त्री०कर्म० संज्ञायात् न द्विगु। 'प्रथमा शैलपुत्री च द्वितीया ब्रह्मचारिणी। तृतीया चन्द्रघण्टेति कुष्माण्डेति चतुर्थिका। पञ्चमी स्कन्दमातेति षष्ठी कात्यायनीति च। सप्तमी कालरात्रिश्च महागौरीति चाष्टमी। नवमी सिद्धिदा प्रोक्ता नव दुर्गाः मता भुवी'त्युक्तासु शैलपुत्र्यादिषु नवसु दुर्गामूर्त्तिषु।

**नवद्वारपुर** न०नव द्वाराणि यत्र तादृशं पुरम्। देहे तत्र हि द्वे श्रोत्रे, चक्षुषी,नासिके च मुखमेकमिति ऊर्द्धस्थानि सप्त, द्वे पायूपस्थे अध' इति नवछिद्ररूपाणि द्वाराणि सन्ति। 'नवद्वारपुरे देही'ति गीता।

**नवधा** अव्य० नवन्+प्रकारे धाच्। नवप्रकारे।

**नवधातु** पु० कर्म० संज्ञात्वात् न द्विगुः। 'हेमताराऽरनागाश्च ताम्ररङ्गे च तीक्ष्णकम्। कांस्यञ्च कान्तलौहञ्च धातवो नव कीर्त्तिता' इत्युक्तेषु हेमादिषु नवसु।

**नवन्** त्रि०ब०। नु-कनि। (नय) संख्याभेदे।

**नवनीत** न०नवं नीयते स्म नी-क्त। (माखन) पयःसारभेदे

**नवनीतक** न० नवनीतस्य विकारः कन्। घृते।

**नवपत्रिका** स्त्री० कदली दाड़िमी धान्यं हरिद्रा मानकं कचुः। बिल्वोऽशोको जयन्ती च विज्ञेया नवपत्रिका' इत्युक्तासु नवसु कदल्यादिषु पत्रिकासु।

**नवमल्लिका** स्त्री० कर्म०। नवमालिकायाम् पुष्पप्रधाने वृक्षभेदे

**नवम** त्रि० नवानां पूरणः डट् मट्। नवसंख्या येन पूर्य्यते तस्मिन्,चन्द्रस्य नवमकलाक्रियारूपे तिथिभेदे स्त्री०ङीप्

**नवमालिका** स्त्री० कर्म०। स्वनामख्याते पुष्पप्रधाने वृक्षभेदे

**नववधू** स्त्री० कर्म०। नवोढ़ायां स्त्रियाम्।

**नववध्वागमन** न० ६त०। नववध्वा प्रथमतः पितृगृहात् पतिगृहे आगमने।

**नवरत्न** न० नवानां रत्नानां समाहारः। 'मुक्तामाणिक्यवैदूर्य्य गोमेदा वज्रविद्रुमौ। पद्मरागं मरकतं नीलञ्चे'त्युक्तेषु नवसु रत्नेषु। 'धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासाः। ख्यातो वराहमिहिरश्च नवापि रत्ना न्यासंस्तथावररुचिरि'त्युक्तेषु नवसु विक्रमादित्यसभ्य बुधेषु

**नवरात्र** न०नवानां रात्रीणां समाहार अच्समा०। आश्विन्यादिमासेषु शुक्लप्रतिपदावधिशुक्लनवमीपर्य्यन्तेषु नवसु तिथिषु तद्दिवसेषु कर्त्तव्ये व्रतभेदे च। 'चैत्रेऽश्विने तथाषाढे माघे कार्य्यो महोत्सवः। नवरात्रे महाराजे'ति देवीभागवते नवसु दिवसेष्वपि नवरात्रशब्दप्रयोग।

**नववस्त्र** न० कर्म०। अनाहते नूतने वसने।

**नवशायक** पु० 'गोपो माली तथा तैली तन्त्री मोदकवारुजी। कुलाल कर्मकारश्च नापितो नव शायका' इत्युक्तेषु जातिभेदेषु।

**नवश्राद्ध** न० कर्म्म०। एकादशाहकर्त्तव्ये श्राद्धे।

**नवसूतिका** स्त्री० नवं सूत प्रसवोऽस्त्यस्याः ठन्। धेनौ, नूतनप्रसूतायां गवि।

**नवान्न** न०कर्म०। नवीनान्ने नवमन्नं यत्र। नवान्नागमकाले 'नवोदके नवान्ने च गृहप्रच्छादने,तथा पितरः स्पृहन्त्यन्नमिति स्मृतिः

**नवीन** त्रि० नव+ख। नूतने।

**नवोदक** न०कर्म०। नवजले। नवमुदकं यत्र। रवेरार्द्रानक्षत्रस्थिति समये सौराषाढ़स्य कतिपयदिने।

**नवोद्धृत** न०कर्म०। नवनीते, नूतनोद्धृतमात्रे त्रि०।

परायणा । नन्दन्ति देवता यस्मात्तस्मान्नान्दी प्रकीर्त्तिते' त्युक्ते मङ्गलाचरणभेदे [illegible] ।

**नान्दीमुख** पु नान्द्यर्थं वृद्ध्यर्थं श्राद्धनान्वितं मुखं यस्य । कूपा-न्मुखबन्धने पटे । नान्दी वृद्धिनिमित्तश्राद्धं मुखे यस्य । नान्दीश्राद्धभुजि पितृगणे । मालादौ स्त्री ङीप् ।

**नान्दीवादिन्** पु० नान्द्यर्थं वदति वादयति वा । नाटकादौ नान्दीकरे सूत्रधारे, सर्वत्र तूर्य्यादिवादके नटादौ च ।

**नापित** पु क्षुरकर्म्मकारके जातिभेदे ।

**नाभि** पु० नह्यन्ते यत्र नह्यतेऽनेन वा नह इञ् भान्ता-देश । चक्रमध्यस्थपिण्डिकायाम्, रथचक्रस्य मध्ये, क्षत्रिये च । मृगमदे स्त्री०। प्राण्यङ्गभेदे (नाइ) पु०स्त्री० । स्त्रीत्वे वा ङीप् । प्रधाने, मुख्ये त्रि० ।

**नाभिज** पु० नाभौ विष्णुनाभौ जायते जन-ड । चतुर्मुखे ब्रह्मणि, नाभिजन्मादयोऽप्यत्र ।

**नाम** अव्य०नामयति नम णिच् ड । स्वीकारे विस्मये स्मरणे सम्भावनायां, निन्दायां, प्राकाश्ये, विकल्पे, अलीके, कोपे च

**नामकरण** न० नाम क्रियतेऽत्र कृ-ल्युट् । 'दशम्येकादशीऽहनि पिता नाम कुर्य्या'दिति स्मृत्युक्ते दशमादिदिने कर्त्तव्ये संस्कारभेदे

**नामधेय** न० नामैव स्वार्थे धेय। नामनि नामकरणे संस्कारे 'वाचारम्भणं विकारो नामधेय'मिति श्रुतिः ।

**नामन्** न० नम्यतेऽभिधीयतेऽर्थोऽनेन नामनुसीमन्निति नि०। व्याकरणादिप्रसिद्धार्थबोधके शब्दभेदे आख्यायाम् तानि च पञ्च 'उपाधाम कृदन्तं च तद्धितान्तं समासजम् । मन्त्रा-नुकरणं चेति नाम पञ्चविधं स्मृत'मित्युक्तेः ।

**नामशेष** त्रि न शेषं गोत्रं न देहादिरस्य । मृते । नाम-मात्रं शेषो यत्र । मरणे पु ।

**नायक** पु० नी-ण्वुल्। नेतरि, स्वामिनि,प्रभौ हारमध्यमणौ, सेनापतौ, शृङ्गाररसालम्बने पुरुषभेदे च । मार्ग-नेतरि च त्रि ।

**नायिका** स्त्री०नी-ण्वुल । शृङ्गाररसालम्बने भार्य्यादौ, दुर्गा-या अष्टशक्तिषु उग्रचण्डादिषु च ।

**नार** पु०नरस्येदम् अण् । वत्से,जले च। 'आपो नारा इति प्रोक्ता' इति मनु । नरस्यायमित्यर्थे मनुष्यसम्बन्धिनि च त्रि 'नारं स्पृष्ट्वा तु सस्नेह'मिति स्मृति । नराणां समूह अण् । नरसमूहे न० ।

**नारक** पु० न कृश् प्रशस्यम् । नरके । नरके भव अण् । नरकस्थे त्रि० । [प्राणिनि कोषे ।

**नारकिन्** त्रि नारकं भोग्यत्वेनास्त्यस्य इनि। नरकयातना

**नारङ्ग** पु० न अरङ्ग अरङ्गं यस्य । स्वनामख्याते जम्बीर-भेदे, पिप्पलीरसे, विटे च । गर्जरे न० ।

**नारद** पु० नार जलं ददाति दा क । 'नारं पानीय मित्युक्तं तत् पितृभ्यः सदा भवान् । ददाति तेन ते नाम नारदेति भविष्यती'त्युक्तनिर्वचनयुते मुनिभेदे । नारमज्ञानं द्यति दो-क, नारं ज्ञानं ददाति दा क वा । मुनिभेदे तत्प्रोक्ते पञ्चविंशतिसहस्रात्मके महापुराणे न० ।

**नारदीय** न० नारदेन प्रोक्तम् छ। उपपुराणभेदे ।

**नारसिंह** न० नरसिंहमधिकृत्य कृतं ग्रन्थं तस्येदम् अण्। उपपु-राणभेदे । [लौहमये अस्त्रभेदे ।

**नाराच** न० नराणां समूह नारमाचामति चम ड । सर्व-

**नारायण** पु० 'आपो नारा इति प्रोक्ता आपो वै नरसू-नव । ता यदस्यायनं पूर्वं तेन नारायणः स्मृत ' इति मनूक्तनिर्वचनवति विष्णौ ।

**नारायणक्षेत्र** न०६त० । 'प्रवाहमवधि कृत्वा यावद्धस्तचतु-ष्टयम् । अत्र नारायण स्वामी'त्युक्ते गङ्गाया प्रवाहा वधिहस्तचतुष्टयमितस्थाने । [चिन्तात्मके विधानभेदे ।

**नारायणबलि** पु० स्मृत्युक्ते मृतानां पापपङ्कादीनां प्राय

**नारायणी** स्त्री० 'जलायना नराधारा सम्बद्धमयनापि वा । नारायणी समाख्याता नरकादी प्रकीर्त्ति'त्युक्तायां विष्णुपत्नी लक्ष्म्या दुर्गायां, 'नारायणि नमोऽस्तु ते' इति चण्डी गङ्गायां, शतावर्य्यां च ।

**नारिकेल** पु० नल-इण् नालि कोण वायुना जलेन वा इलति चलति इल-क कर्म० रलयोरैक्यम् । स्वनामख्याते वृक्षे

**नारीष्टा** स्त्री० नारीभिरिष्टा । मल्लिकायाम् ।

**नाल** न० नल ज्वलादि० ण। काण्डे, उत्पलादिदण्डे, स्वनाम्ने न०स्त्री । 'नाला कण्टकास्यभुजो भजाम' इति नै ।

**नालि(ली)** स्त्री० नल-इण वा ङीप् । देहस्थशिरायाम्, शाकभेदे, पद्मादिदण्डे च । घटिकायां मान् । श्वेतकलम्बायाम् नालीपाके, चर्मामयकशायाम्, करिकर्णवेधन्याम्, नाडी सुषिरच्छिद्रे, वेणुभाजने, दण्डात्मके काले च ।

**नालिता** स्त्री० नल,णिच् क्त । स्वनामख्याते शाकभेदे ।

**नालीक** पु० नाल्या कायति कै क । शल्यभेदे लौहमुखे अनग्निकृते शरभेदे, शरीरे च । पद्मखण्डे न०।

**नाविक** पु० नावा चरति ठक् । कर्णधारे ।

**नाव्य** त्रि० नावा तीर्य्यतेऽसौ नौ यत् । नौतार्य्ये देशे ।

**नाश** पु नश-घञ् । पलायने, अदर्शने,निधने, अनुपलम्भे च

**नासत्य** पु०द्वि व० । नास्ति असत्यं ययो नञ् प्रकृत्या, नासौ

व्यजत' व्यज-ड नि० वा। अश्विनीकुमारयो' तौ हि सूर्य्य-
तेजोऽसहमानाया· संज्ञाया' उत्तरकुरुषु अश्वरूपं धृत्वा
तपस्यन्त्या' अश्वरूपधारिणा सूर्य्येण संगतायाः स्वन्य-
पुरुषधिया तद्रेतो नासारन्ध्रेण त्यजन्त्यामश्वायामागेन
जाताविति पुराणकथा।

**नासा** स्त्री० नास-शब्दे अ। नासिकायां गन्धग्राहकेन्द्रिय-
भेदे, शब्दे च। [(भ्रनकाठ)

**नासादारु** न० नासायै शब्दाय दारु। द्वारोर्द्ध्वस्थे काष्ठखण्डे

**नासालु** पु० नासायै नासिकाशब्दाय अलति पर्य्याप्नोति अल-
उण्। कट्फलवृक्षे तत्फलचूर्णयोगे हि नासिकाशब्दो भवति

**नासिका** स्त्री० नास-ण्वुल्। गन्धग्राहकेन्द्रियभेदे नासायाम्

**नासिक्य** त्रि० नासिकायै हित तत्र भवो वा यत्। नासाभवे,
नासिकाहिते च। नासाभवयोरश्विनीकुमारयो' पु० द्वि०व०

**नासीर** न० नास-ईरन्। अग्रसरे सैन्ये,सेनामुखे च। अग्रसरे त्रि०

**नास्ति** अव्य० अस्तीति विभक्तिप्रतिरूपकमव्ययं सुप् सुपेति
नञ् शब्देन स०। अविद्यमानतायां, सत्त्वाभावे, यथा
नास्तिक्षीरा गौ', 'अस्ति नास्ति न जानाती'ति वाग्व्यः

**नास्तिक** त्रि० नास्ति परलोकस्तत्साधनमदृष्टं, तत्साक्षीश्वरो वा
इति मतिरस्य ठन्। परलोकाभाववादिनि तत्साधना-
दृष्टाभाववादिनि, तत्साक्षिण ईश्वरस्याभाववादिनि च
चार्वाकादौ। [भावज्ञानस्य मिथ्यात्वात्।

**नास्तिकता** स्त्री० नास्तिकस्य भावः। मिथ्यादृष्टौ परलोकाद्य

**नास्तिक्य** न० नास्तिकस्य भाव· कर्म्म वा यत्। शास्त्रोक्तेषु
फलवत्कर्म्मसु अफलताबुद्धौ।

**नि** अव्य० नह-डि। निश्चये, भृशार्थे, नित्यार्थे, संशये,कौशले,
क्षेपे, उपरमे, सामीप्ये, आदरे, दाने, मोक्षे, अन्तर्भावे,
बन्धने, राशौ, अधोभागे, विन्यासे, निश्चये, निषेधे च।

**निःशलाक** त्रि० निर्गतः शलाकायाः निर्गता शलाका यस्मात्
वा। निर्जने रहसि। [हि शीघ्रं शल्यं निर्गच्छति।

**निःशल्या** स्त्री० निर्गतं शल्यं यस्याः ब०व०। दन्तीवृक्षे।तत्सेवने

**निःशेष** त्रि० निर्गता शेषात् प्रा०स०। निखिले समस्ते। च

**निःशोध्य** त्रि० निर्गतं शोध्यमस्मात् ब०व०। निर्मले, स्वच्छे,शोधिते

**निःश्रयणी** स्त्री० नि·शेषेण श्रयत्यनया श्रि-ल्युट् ङीप्।
अधिरोहिण्याम्(मइ)। [पाने, खर्ज्जुरीवृक्षे च।

**निःश्रेणि(णी)** स्त्री० निर्गता श्रेणिः पंक्तिरत्र। वंशनिर्मिते सो-

**निःश्रेयस** न० नितराम् श्रेय' नि० अच् समा०। मोक्षे,
मङ्गले, विज्ञाने, भक्तौ, अनुभावे च।

**निःश्वास** पु० निर्+श्वस-घञ्। मुखनासाभ्यां निर्गते वायौ।

**निःसत्त्व** त्रि० निर्गतं सत्त्वं यत्र। धैर्य्यशून्ये, बलशून्ये,
प्राणिशून्ये च।

**निःसम्पात** पु० निर्गतः सम्पातो गतागतं यस्मात्। अर्द्धरात्रे।

**निःसरण** न० निःसरत्यनेन अस्मात् निर्+सृ अपादाने ल्युट्।
गेहादिद्वारे। भावे ल्युट्। निर्गमे, मरणे, निर्वाणे च।
करणे ल्युट्। उपाये।

**निःसार** पु० निर्गतः सारात्। शाखोटवृक्षे, श्योनाकवृक्षे च।
साररहिते त्रि०। कदलीवृक्षे स्त्री०। [द्विभ्यो निर्गमद्वये

**निःसारण** न० नि सार्य्यतेऽनेन निर्+सृ-णिच्-ल्युट्। गेहा

**निःस्नेहा** स्त्री० निर्गच्छति स्नेहो यस्मात्। अतसीवृक्षे
(तसिना) स्नेहशून्ये त्रि०।

**निःस्राव** पु० नि·स्रवति स्रु-ण। (माड़) भिस्सा भक्तरसे।

**निःस्व** पु० नास्ति स्वमस्य। दरिद्रे। [निवर्द्धे च।

**निकट** न० नि+नक्षार्थे कटच्। नि+कट-अच् वा। समीपे

**निकर** पु० नि+कृ-अप्। समूहे,सारे,न्यायदेये,वित्ते,निधौ च।

**निकर्षण** न० निर्गत' कर्षणात्। ग्रामादौ क्रीडादिस्थानार्थं
परिच्छिन्ने देशे, बहिर्विहरणभूमौ च।

**निकष(स)** पु० नि+कष(स) अच् घ वा। (कषटीपातर) कष-
पाषाणे, शाणे, अस्त्रादितीक्ष्णतासाधने पाषाणादौ च।

**निकषण** न० नि+कष-भावे ल्युट्। उल्लेखने। [स्त्री०

**निकषा** अव्य० नि+कष आ। निकटे, मध्ये च। राक्षसमातरि

**निकषात्मज** पु० ६त०। राक्षसे निकषाया जातयोग्यत्व।

**निकषोपल** पु० कर्म्म०। शाणे। स्वर्णादिकषणसाधने प्रस्तरे
(कषटीपातर)च।

**निकाम** न० नि+कम-घञ्। यथेप्सिते, इच्छानतिक्रमे, अति-
शये, निकामतृप्तो'ति कु०व्टे, परमात्मनि च। [च

**निकाय** पु० नि+चि-घञ् कुत्वम्। समानधर्म्मप्राणिसंघे, निवासे

**निकाय्य** न० निचीयतेऽत्र नि+चि ण्यत् कुत्वम्। गृहे।

**निकार** पु० नि-कृ-घञ्। परिभवे, अपकारे, तिरस्कारे च।
कृ-घञ्। धान्यादेरुर्द्ध्वक्षेपे।

**निकार** पु० नि+कृ-णिच् घञ्। मारणे, परिभवकरणे।

**निकुञ्ज** न० निशेषेण को जायते जन-ड ष०। लतादिपिहितस्थले

**निकुम्भ** पु० नि-स्कुम्भ-अच् ष०। कुम्भकर्णराक्षससुते, दन्ति-
वृक्षे च गौरा० ङीष् निकुम्भीत्यत्र'। [स्थाया देव्याश्च

**निकुम्भिला** स्त्री० लङ्कायां पश्चिमभागस्थायां गुहायां तत्-

**निकुरम्ब** न० नि+कुर-शब्दे अम्बच्। समूहे।

**निकृत** त्रि० नि+कृ-क्त। परिभूते, उपद्रुते, प्रत्याख्याते,
वञ्चिते, नीचे, शठे च।

क्रियमाणत्वेन विधिनोधिते, प्रत्यवायसाधनाभावप्रतियोगिनि कर्माणि, यथा अहरहः सन्ध्यामुपासीतेति अत्र सन्ध्याभावे प्रत्यवायसाधनत्वम्। अविच्छिन्नपरम्पराके, उत्पत्तिविनाशरहिते च यथा वर्णा नित्या'। तद्वति, शाश्वते, कालत्रयस्थे, वस्तुनि च त्रि०। समुद्रे पु०। [नादौ।

**नित्यकर्म्मन्** न० कर्म्म०। अकरणे प्रत्यवायसाधने सन्ध्यावन्द-

**नित्यतृप्त** त्रि० नित्यं तृप्त· नित्येन ब्रह्मानन्देन वा तृप्त। परमानन्दलाभेन सततत्तृप्ते 'नित्यतृप्तो निराश्रय इतिगी०

**नित्यदा** अव्य० नित्य+दाच्। सातत्ये, सदेत्यर्थे। [त्तनि।

**नित्यमुक्त** पु० नित्य' मुक्तः। कालत्रयेऽपि बन्धशून्ये परमा-

**नित्ययज्ञ** पु० कर्म्म०। फलयोगं विना जीवनमात्रनिमित्तेन विहिते यथाकथञ्चित् प्रतिनिध्यादिना यतुरसद्द्रव्येण चानुष्ठेये, अग्निहोत्रादौ यज्ञे।

**नित्यसत्त्वस्थ** त्रि० नित्यमचलं यत् सत्त्वं धैर्य्यं गुणभेदो वा तत्र तिष्ठति स्था-क। धैर्य्यावलम्बिनि, रजस्तमसी अभिभूय सदा सत्वगुणावलम्बिनि च।

**नित्यसमास** पु० कर्म्म०। व्याकरणोक्ते समस्यमानयावत्पद रहितविग्रहवाक्यस्त्रचिते समासभेदे।

**नित्यानध्याय** पु० सर्व्वथा वर्ज्जनीयवेदपाठकालादौ। 'द्वावेव वर्ज्जयेन्नित्यमनध्यायौ प्रयत्नतः। स्वाध्यायभूमिञ्चाशुद्धा मात्मानं चाशुचिं द्विजः' इति 'इमान्नित्यमनध्यायानधीयानो विवर्ज्जयेदि'तिमनुना प्रदर्शितेऽनध्यायभेदे।

**नित्याभियुक्त** त्रि० नित्यमभि समन्तात् युक्तः योगे व्यापृतः। देहयात्रामात्रार्थं प्रयतमाने, इतरत्यागासक्ते योगिनि

**निदर्शन** न० नि+दृश-ल्युट्। उदाहरणे, दृष्टान्ते च अर्थालङ्कारभेदे स्त्री० टाप्।

**निदाघ** पु०नितरा दह्यतेऽत्र नि+दह-घञ् न्यङ्क्वादि०कुत्वम्। उष्णे, वर्म्मे, घर्म्मकाले ज्यैष्ठाषाढमासयोः, घर्म्मजले च।

**निदाघकर** पु० निदाघं घर्म्मं करोति क-अच्। सूर्य्ये।

**निदाघकाल** पु० इत०। ग्रीष्मर्त्तौ ज्यैष्ठाषाढमासयोः।

**निदान** न० नितरामसाधारणया दीयते दा-ल्युट्। आदिकारणे, कारणमात्रे, शुद्धौ, तपसः फलयाचने, वत्सदामनि, अवसाने, रोगनिर्णायके ग्रन्थभेदे, रोगहेतौ च।

**निदिग्ध** त्रि० नि+दिह-क्त। उपचिते, लेपादिना वर्द्धिते च एलायां स्त्री०। तत संज्ञायां कन्। कण्टकारिकायां स्त्री०

**निदिध्यासन** न० 'निरन्तरं विचारो यः श्रुतार्थस्य गुरोर्मुखात्। तन्निदिध्यासनं प्रोक्त'मिति निरुक्ते विचारभेदे 'ताभ्यां निर्विचिकित्सेऽर्थे चित्तस्य स्थापितस्य यत्। एकतानत्वमेतद्धि निदिध्यासनमुच्यते' इत्युक्ते ध्यानभेदे च।

**निदेश** पु०नि+दिश-घञ्। शासने, आज्ञायां, कथने निकटे, भाजने च।

**निद्रा** स्त्री० नि+द्रा-अङ्। शयने 'यदा तु मनसि क्लान्ते कर्म्मात्मानः क्लमान्विताः। विषयेभ्यो निवर्त्तन्ते तदा स्वपिति मानवः' इत्युक्तरीत्युक्ते विषयेभ्यो कर्म्मेन्द्रियाणां व्यापारोपरमरूपे जीवस्यावस्थाभेदे स्वप्ने।

**निधन** पु०न० नि+धा-क्यु। मरणे, नाशे, कुले, ज्योतिषोक्ते लग्नावधिके अष्टमस्थाने।

**निधान** न० नि+धा-ल्युट्। महापद्मादौ निधौ, 'निधानकुम्भस्य यथेति रघु'। आश्रये, कार्य्याप्रमाने च।

**निधि** पु० नि+धा-कि। धनाधिदेवमहापद्मादिभेदे। विष्णरस्यदृष्टविधाने। 'पुनरादायाय क्वचित्प्रदेशे अर्पणे, अत्रामिकी द्रव्यभेदे च। आधारे कि। आधारे। यथा गुणनिधि'। वारिधिरित्यादि समुद्रे, नलिकानामगन्धद्रव्ये च पु०।

**निधीश** पु० इत० कुबेरे निधिपत्यादयोऽप्यत्र।

**निधुवन** न० नितरां धुननं हस्तादिकम्पनं यत्र। सुरते स्त्रीपुंसयोः केलिभेदे। 'निधुवननिर्नोदेन च नक्त'मिति श्यामाश्वोलम्। [च।

**निन(ना)द** पु० नि+नद-अप, घञ् वा। ध्वनौ शब्दे, रवघोषे

**निन्दा** स्त्री० निन्द-अ। अपवादे, गर्हायां कुत्सायां, दूषणे च

**निप** पु०न०। नियत पिबत्यनेन पा क। कलसे, कदम्बवृक्षे पु०।

**निपत्या** स्त्री० निपतत्यत्र आधारे क्यप्। पिच्छिलभूमौ, युद्धभूमौ च। [चादिषु, प्रादिषु च।

**निपात** पु०निकृष्ट' पातः। अन्तिमपतने मरणे, व्याकरणोक्तेषु

**निपान** न० नियतं पीयतेऽत्र। कूपसमीपस्थे जलाशये, कूपोद्धृतजलाधारस्थाने, गोदोहनपात्रे च।

**निपीडित** त्रि० नितरा पीडित नि+पीड-क्त। (निंगड़ान) कृतनिष्पीडने।

**निपुण** त्रि० नि+पुण-कर्म्मणि क। प्रवीणे, क्रियासु दक्षे।

**निफला** स्त्री०निकृष्टं फलं यस्याः। ज्योतिष्मत्याम् लतायाम्

**निबन्ध** पु० नि+बन्ध-घञ्। कालविशेषे देयत्वेन प्रतिश्रुते वस्तुनि, 'निबन्धो द्रव्यमेवमवे'ति स्मृतिः संग्रहग्रन्थभेदे, मूत्ररोधरूपे रोगभेदे, बन्धने च। 'निबन्धायासुरी मते'ति गीता। निबध्नाति कोष्ठम् अच्। निम्बवृक्षे तत्सेवने हि कोष्ठरोधो भवति।

**निबन्धन** न० निबध्यतेऽनेनात्र वा ल्युट्। हेतौ, वीणायाकाम्बोनिबन्धनोर्द्धभागे च। भावे ल्युट्। बन्धने।

**निरवग्रह** त्रि० निर्गतोऽवग्रहात् । निष्प्रतिबन्धे ।

**निरवद्य** त्रि० निर्गतोऽवद्यात् । दोषशून्ये, उत्कृष्टे च ।

**निरवयव** पु० निर्गतोऽवयवात् । परमाणौ । आकारशून्ये आकाशादौ त्रि० ।

**निरवशेष** त्रि० निर्गतोऽवशेषो यस्मात् । सर्वस्मिन् ।

**निरवसित** त्रि० निर्+अव+सो-क्त । पात्रबहिष्कृते (यस्य भोजनपात्रं संस्कारेणापि न शुध्यति तस्मिन्) चाण्डालादौ नीचवर्णे । [निष्कासने च ।

**निरसन** न० निर्+अस-ल्युट् । परित्यागे, प्रतिक्षेपे वधे,

**निरस्त** त्रि० निर्+अस-क्त । त्वरितोच्चारिते, निष्ठ्यूते, क्षिप्ते, प्रतिहते, भर्त्सिते च ।

**निराकरण** न० निर्+आ+कृ-ल्युट् । निवारणे, दूरीकरणे च

**निराकरिष्णु** त्रि० निर्+आ+कृ-इष्णुच् । निवारणशीले प्रतिक्षेपकर्त्तरि च ।

**निराकृत** त्रि० निर्+आ+कृ-क्त । दूरीकृते, निवारिते च ।

**निराकृति** स्त्री० निर्+आ+कृ-क्तिन् । निवारणे ।

**निरामय** त्रि० निर्गत आमयात् । रोगरहिते । वनच्छगले, शूकरे च पु० ।

**निरामालु** पु० नितरां रमतेऽत्र रम-आलु । कपित्थवृक्षे ।

**निरालम्बा** स्त्री० निर्गत आलम्बोऽस्मात् । आकाशलम्बिन्यां मांस्याम् । [नास्तिके त्रि० ।

**निरीश** न० निर्गतमीशाया । फाले । ईश्वरशून्यतावादिनि

**निरुक्त** न० निश्चयेनोच्यतेऽत्र । निर्+वच-क्त । 'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्त'मित्युक्तदिशा प्रकृतिप्रत्ययाद्यवयवार्थनिर्वचनप्रतिपादके वेदाङ्गे ग्रन्थभेदे ।

**निरुक्ति** स्त्री निर्+वच क्तिन् । निर्वचने प्रकृतिप्रत्ययाद्यवयवार्थकथनद्वारा समुदितार्थबोधने ।

**निरुपाख्य** त्रि० निर्गता उपाख्या यस्मात् । असत्पदार्थे वन्ध्यापुत्रादौ, वाचोमनसश्च विषयतयोल्लेखनायोग्ये अस्फुटस्वरूपे च ब्रह्मणि । [शब्दे ।

**निरूढ** पु० निर्+रुह-क्त । शक्तितुल्यलक्षणयाऽर्थबोधके

**निरूढलक्षणा** स्त्री० निरूढा शक्तितुल्या लक्षणा । व्याकरणकोषादिहेतुतः प्रसिद्धार्थे शक्तितुल्यायां लक्षणारूपायां शब्दस्यार्थबोधनायक्तौ ।

**निरूढि** स्त्री० निर्+रुह-क्तिन् । प्रसिद्धौ ।

**निरूपण** न० नि+रूप-ल्युट् । तत्त्वज्ञानानुकूलशब्दप्रयोगे विचारे, निदर्शने, आलोके च ।

**निरूपित** त्रि० नि+रूप क्त । नियुक्ते, कृतनिरूपणे, कल्पिते, न्यायोक्ते निरूपकतासंबन्धेन सम्बन्धिनि च ।

**निरोध** पु० नि+रुध-घञ् । नाशे, 'न निरोधो नचोत्पत्तिरि'ति पुराणम् । प्रलये, प्रतिरोधे च । [रोधने

**निरोधन** न० नि+रुध-ल्युट् । कारागारादौ प्रवेशनेन गति-

**निर्ऋति** नियता ऋतिर्घृणा यत्र । दक्षिणपश्चिमदिक्पतौ । अलक्ष्म्याम् स्त्री० । निरुपद्रवे त्रि० । [शाल्मलिवृक्षे ।

**निर्गन्धपुष्पी** स्त्री० निर्गन्धं गन्धशून्यं पुष्पं यस्याः ङीष् ।

**निर्गुण** पु० निर्गतो गुणेभ्यः । सत्त्वरजस्तमोरूपगुणत्रयशून्ये निर्धर्मके परमात्मनि । निर्गताः गुणाः शौर्यादयोरूपादयो वा यस्मात् । गुणहीने त्रि० ।

**निर्गुण्डी** स्त्री० निर्गता गुडात् वेष्टनात् ष० गौरा० ङीष् । नीरसे, कलिकायां, सिन्धुवारवृक्षे, पद्मकन्दे च ।

**निर्ग्रन्थ** पु० निर्गतो ग्रन्थेभ्यः । क्षपणके, दिगम्बरे, बौद्धभेदे, द्यूतकारे, मुनिभेदे च । निर्धने, मूर्खे, निःसहाये, निर्वेदं गते च त्रि० । स्वार्थे कन् । क्षपणे, निष्फले च पु० । वस्त्ररहिते त्रि० ।

**निर्ग्रन्थन** न० निर्+ग्रथि-कौटिल्ये ल्युट् । मारणे ।

**निर्ग्रन्थिक** पु० निर्गतो ग्रन्थिर्वस्त्रग्रन्थिर्यस्य कप् । क्षपणके । निर्गुणे, ग्रन्थिहीने च त्रि० ।

**निर्घात** पु० निर्+हन-घञ् । 'पवनः पवनाभिहतो, गगनादवनौ यदा पतति । भवति तदा निर्घात' इत्युक्ते पवनाहतपवनजन्ये शब्दभेदे । 'निर्घाते भूमिचलने' इतिस्मृतिः

**निर्घृण** त्रि० निर्गता घृणा दया यस्मात् । निर्दये ।

**निर्घोष** पु० निर्+घुष-घञ् । शब्दमात्रे ।

**निर्जन** त्रि० निर्गतो जनो यस्मात् । जनैरनाकीर्णे विजने

**निर्जर** पु० निर्गता जरा यस्मात् । देवे । जराशून्ये त्रि० । ५ व० । अमृते न० ।

**निर्जरा** स्त्री० निर्गता जरा यस्याः ५ व० । गुडूच्यां, तालपर्ण्यां च

**निर्झर** पु० निर्+झॄ-अप् । पर्वतान्निःसृतजलप्रवाहे (झरणा)

**निर्झरिणी** स्त्री० निर्झरः पर्वतान्निःसृतजलप्रवाहः कारणत्वेनास्त्यस्या इनि । नद्याम् ।

**निर्णय** पु० निर्+नी-अच् । निश्चये, तदभावाप्रकारिका सति तद्ग्राहिणि ज्ञाने, सन्देहे यथा भावाभावौ द्वावेव विषयतया भासेते नैवं निश्चये तत्र एकविध एवावभासते । विरोधपरिहारे, मीमांसोक्ते पञ्चावयवन्यायमध्ये चरमावयवे, न्यायोक्ते 'सन्दिह्य पक्षप्रतिपक्षयोः साधनबाधनाभ्यामर्थावधारणे च ।

निर्वृत्त त्रि० निर्+वृत-क्त । निष्पन्ने । निर्गता वृत्तिर्यस्य । वृत्तिरहिते त्रि० ।

निर्वेद पु० निर्+विद-घञ् । स्वावमाने, बहुकालेनाप्यसिद्धे पदार्थे निष्प्रयोजनत्वेन अनुतापे, औदासीन्ये, वैराग्ये, 'तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य चे'ति गीता अलङ्कारोक्ते शान्तिरसस्य स्थायिभावे च ।

निर्वेश पु० निर्+विश-घञ् । भोगे,वेतने, मूर्च्छने, विवाहे च

निर्व्यथन न० व्यथ-भावे ल्युट् निश्चयेन व्यथनं भयं चलनं वा यत्र। छिद्रे,शोकस्थाने,व्यसनादौ, दुःखोत्पादके व्यापारे च

निर्व्यूढ त्रि० निर्+वि-वह-क्त । त्यक्ते, असमाप्ते, यत् वस्तु सम्यग्भूमिपर्याप्तं तस्मिन् च। यथा पत्न्यादीनां भर्त्तृधने न सम्यक् स्वत्वं यथेष्टदानासामर्थ्यात् इति न तस्य निर्व्यूढत्वं भवति च दौहित्रादेः स्वत्वं सम्यगेव पर्याप्तमतस्तन्निर्व्यूढम् । [निष्पादने च ।

निर्हरण न० निःशेषेण हरणम् । दाहार्थं शवादिहरणे,

निर्हार पु० निर्+हृ-घञ् । निखातशल्यादेः उद्धरणे, मलमूत्रादित्यागे, 'आहारनिर्हारविहारयोगा' इति स्मृतिः । प्रेतदेहस्य दाहार्थं बहिर्नयने, यथेष्टविनियोगे च । 'न निर्हारं स्त्रियः कुर्युरि'ति मनुः ।

निर्हारिन् पु० निर्हरति दूरं गच्छति निर्+हृ-णिनि । दूरगामिगन्धे । निर्हरणकर्त्तरि त्रि० ।

निर्ह्राद पु० निश्चयेन ह्रादः ह्रद-घञ् । शब्दे ।

निलय पु० निलीयतेऽत्र ली-अच् । गृहे, आवासस्थाने च

निवचने अव्य० वचननियमे । निवचनेकृत्य वाचं नियम्येत्यर्थः

निवपन न० निवतं वपनम् । पित्राद्युद्देशेन दाने ।

निवर्त्तन न० उभयतो विंशतिवंशमिते क्षेत्रादौ 'निवर्त्तनं विंशतिवंशसंख्ये'रिति स्त्री०। नि+वृत-णिच-ल्युट्। निवारणे

निवर्हण न० नितरां वर्हण बर्ह हिंसायां ल्युट् । मारणे ।

निवसति स्त्री० नि+वस-आधारे अतिच् । गृहे ।

निवसथ पु० न्युष्यतेऽत्र नि+वस-अथच् । ग्रामे ।

निवसन न० न्युष्यतेऽत्र ल्युट् । गृहे । नि+वस-आच्छादने ल्युट् । वस्त्रे । [सप्तवायुमध्ये वायुभेदे ।

निवह पु० नितरामुह्यते वह-घ । समूहे । नि+वह-अच् ।

निवात पु० निवृत्तो निरुद्धो वा वातोऽस्मात् । दृढकवचे शस्त्राद्यभेद्यकवचे, आश्रये च । वातशून्ये देशे त्रि० ।

निवातकवच पु०हिरण्यकशिपो पुत्रस्य संह्रादस्य दैत्यस्य पुत्रे दैत्यभेदे ।

निवाप पु०न्युप्यते नि+वप-घञ् । पित्रुद्देशेन दाने,दानमात्रे च

निवास पु० नि+वस-आधारे घञ् । गृहे, आश्रये च 'जगन्निवासो वसुदेवसद्मनी'ति माघः ।

निविड त्रि० नितरां विडति संहन्यते नि+विड-क । सान्द्रे घने, नीरन्ध्रे, दृढे च । निनता नासिका नि+नासायाः विडच् । नतनासिकायाम् स्त्री० ।

निवीत न० नि+व्यत्र-क्त । कण्ठलम्बिते यज्ञसूत्रे । व्येञ् संवरणे क्त संप्रसारणादि । प्रावृतवस्त्रे ।

निवृत्त नि+वृत-भावे क्त । निषेधे,'निवृत्तं पदार्थे' इति भाष्यम् कर्त्तरि क्त । विरते त्रि० । [संहापञ्जे ति मनुः ।

निवृत्ति स्त्री० नि+वृत-क्तिन् । उपरमे,विरतौ च 'निर्वृत्तिस्तु

निवेदन न० नि+विद-णिच्-ल्युट्। सम्मानपूर्वकं ज्ञापने, समर्पणे च । [निवेशने, उद्वाहे,स्थाने च ।

निवेश पु० नि+विश-घञ् । विन्यासे, शिविरे,आगन्तुकसैन्य-

निवेशन न० नि+विश-आधारे ल्युट् । गेहे । भावे ल्युट् । प्रवेशे, स्थितौ च । [रात्रौ, हरिद्रायाञ्च

निश् स्त्री० नितरां श्यति तनूकरोति व्यापारान् शो-क ट० ।

निश(शा)मन न० नि+शम-णिच्-ल्युट् वा ह्रस्वः । श्रवणे, दर्शने च ।

निशा स्त्री० नितरां श्यति व्यापारान् शो-क । रात्रौ हरिद्रायाम्, 'अजगोमिथुनकर्किधन्विनृगा निशा' इति ज्योतिषोक्तेषु मेषादिराशिषु च।

निशाकर पु० निशां करोति कृ-ट । चन्द्रे, कुक्कुटे च ।

निशाचर पु० निशायां चरति चर-ट । राक्षसे, शृगाले, पेचके,सर्पे,पिशाचे,चक्रवाके,चौरे च । रात्रिचरमात्रे त्रि०। ङीप् । राक्षस्याम् कुलटायां केशिनीनामगन्धद्रव्ये च स्त्री०

निशा(शि)त त्रि० नि+शो-क्त वा इत्वम् । तेजिते तीक्ष्णीकृते

निशान न० नि+शो-ल्युट् । तीक्ष्णीकरणे ।

निशान्त न० निशायामस्यते स्म अम-गतौ कर्मणि क्त । गृहे । नितरां शान्ते त्रि०।

निशापति पु० ६त०। चन्द्रे, कर्पूरे च ।

निशिपुष्पा स्त्री० निशि रात्रौ पुष्प्यति पुष्प-अच् अलुक्स०। शेफालिकायाम् । निशिपुष्पीत्याद्ययोऽप्यत्र ।

निशीथ पु०निशेरतेऽत्र नि+शी-थक्। अर्द्धरात्रे, रात्रिमात्रे च

निशीथिनी स्त्री० निशीथोऽस्त्यस्या इनि । रात्रौ ।

निशुम्भ पु०नि+शुम्भ-अच् वञ् वा । शुम्भासुरानुजे दैत्यभेदे। मर्द्दने च 'प्रागप्राप्तनिशुम्भशाम्भवधनु'रिति वीरचरितम् ।

निशुम्भमर्द्दिनी स्त्री० निशुम्भं मर्द्दयति मृद-णिनि ६त० । दुर्गायाम् ।

निश्चय पु० निर्+चि अच् । सम्यगयथार्थनिर्णये, सिद्धान्ते, इदमेवेति विषयपरिच्छेदे च ।

निश्चल त्रि० निर्+चल-अच् । स्थिरे, अचले, असम्भावना-विपरीतभावनारहिते च । भूमौ, शालपर्ण्यां स्त्री टाप् ।

निश्वास पु नि+श्वस घञ् । मुखनासिकाभ्यां प्राणवायोर्निःसरणे

निषङ्ग पु नितरां सजन्ति शरा यत्र सम्+सञ्ज-घञ् । तूणीरे

निषङ्गिन् त्रि निषङ्ग+अस्त्यर्थे इनि । धनुर्द्धरे ।

निषद्या स्त्री० निषीदन्त्यस्याम् जना सद क्यप् । पण्यविक्रय-शालायां (हाटचाला) हट्टे, क्षुद्रखट्वायाञ्च ।

निषद्वर पु० नि+सद+क्विप् निषद् आसन ता इयर्त्ति वर आवरक ह अच् । जम्बाले कर्दमे ।

निषध पु० नि+सद-अच् ष० । कठिने देशभेदे च तद्देशस्थे ब०व० । तद्देशराजे, निषादस्वरे, इलावृतस्य मर्यादा-पर्वते च पु ।

निषाद पु० निषीदति मन , पाप वा अस्मिन् सद-घञ् । 'निषाद रौति कुञ्जर' इत्युक्ते तन्त्रीकण्ठोत्थिते स्वरभेदे, चण्डाले, ब्राह्मणात् जातायां शूद्रायामुत्पन्ने वर्णसङ्करे च । [इनि । हस्तिपाले

निषादिन् पु० निषादयति उपवेशयति हस्तिन नि+सद-णिच्

निषिद्ध त्रि० नि+षिध क्त । निषेधविषये, इष्टसाधनताज्ञान निषेधकेन नञ्पदेन, अनिष्टसाधनत्वज्ञानप्रदेन वा बोध्ये, पदार्थे, बाधिते च । [निषिद्ध ।

निषेक पु नि सिच घञ् । गर्भाधाने 'निषेकादि श्मशानान्त'

निषेध पु नि+षिध-घञ् । निवृत्तौ, प्रतिषेधे, नञादिना बोधितार्थे । [नादिभ्यो न णत्वम् ।

निष्क माने चु० आत्म०सक०सेट् । निष्कयते अनिनिष्कत ।

निष्क पु०न० निश्चयेन कायति कै क । अष्टोत्तरशत परिमितसुवर्णानामसाधिकसते, व्यवहारिकरूपके दीनारे, (टाका) चतुर्भि सुवर्णपरिमिते मानभेदे षोडशद्रम्म (काहन)परिमाणे, वक्षोभूषणे हेममाने, पलपरिमाणे च

निष्कण्ठ पु०निर्गत कण्ठोऽस्मात् । कण्ठशून्ये वरुणाख्ये द्रुमे

निष्कर्ष पु० निर्+कृष घञ् । इयत्तापरिच्छेदे निश्चये च ।

निष्कल त्रि० निर्गता कला यस्मात । कलाशून्ये, नष्टवीर्ये च । आधारे पु० । कलावयवशून्ये ब्रह्मणि न० । निष्कलस्याद्वितीयस्ये'ति पुराणम् । विगतार्त्तवायाम् वृद्धायां स्त्रियां स्त्री वा गौरा०ङीष् ।

निष्काषित त्रि० निस्+कस गतौ णिच क्त । नि सारिते ।

निष्कुट पु० निस्+कुट-क । गृहसमीपस्थे उपवने, केदारे क्षेत्रे, राज्ञाम् अन्तःपुरे च । [वा ङीप् । एलायाम्

निष्कुटि(टी) स्त्री० कुट इन् कौटिल्यम् निर्गता कुटिर्यस्याः

निष्कुषित त्रि० निर्+कुष-क्त । खण्डिते निस्त्वचीकृते च 'काकैर्निष्कुषित'मिति मल्लिनाथ ।

निष्कुह पु० नि भृशेन कुह्यते विस्माययति कुह क । वृक्षा-दिस्थे स्वय जाते रन्ध्रे कोटरे ।

निष्कृति स्त्री० निर्+कृ क्तिन् । निस्तारे, निर्मुक्तौ, पापादिभ्य उद्धारे च 'कृतघ्ने नास्ति निष्कृति'रिति स्मृति ।

निष्कृष्ट त्रि० निर्+कृष-क्त । सारांशे ।

निष्कोषण न०निर्+कुष-ल्युट् । अन्तरवयवानां बहिर्निःसारणे

निष्क्रम पु० निर+क्रम-घञ् । बुद्धिसम्पत्तौ, निर्गमे, दुष्कुले च

निष्क्रमण न निर्+क्रम ल्युट् । बहिर्गमने, चतुर्थे मासि शिशो कर्त्तव्ये संस्कारभेदे च 'चतुर्थे मासि कर्त्तव्य शिशो-र्निष्क्रमणम् गृहा'दिति मनु ।

निष्ठा स्त्री० नि+स्था-अङ । आद्योत्पन्नमस्तकवाक्यार्थाप्तौ निष्पत्तौ, नाशे अन्ते, याच्ञायाम्, उत्कर्षे, व्यवस्थायाम्, क्लेशे, व्रते, गुरुचरणादौ, तत्परतायां धर्मादौ श्रद्धायां च 'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता' निश्चयेन स्थितौ च 'तेषां निष्ठा तु का' इति गीता । [इत्यादौ व्याकरणे

निष्ठान न० निष्ठीयतेऽत्र स्था ल्युट् । भक्ताद्यमोपसेचने

निष्ठीव(ष्ठे)व पु०नि+ष्ठिव-घञ् वा दीर्घ । मुखेन श्लेष्मनिरसने । ल्युट् वा दीर्घ । निष्ठीवननिष्ठेवने एते अप्यत्र ।

निष्ठुर न० नि+स्था-उरच् । परुषवाक्ये । कठोरे, त्रि० । 'गुह्याद्धर्मेध्यमन्त्राणां वचन निष्ठुर विदु । यदन्यद्वा वचो नीच स्त्रीषु यद्गुणाश्रय निष्ठुरोक्ते, परुषवाक्ये न । तद्वि-शिष्टे त्रि ।

निष्ठ्यूत त्रि० नि+ष्ठिव-क्त । क्षिप्ते ।

निष्णात त्रि०नितरां स्नात पारं गत शुद्धो वा नि+स्ना क्त षत्वम् । निपुणे, पारङ्गते च ।

निष्पक्व त्रि निरतिशय पक्वम् । अतिशयेन पक्वे क्वथिते दशमूलादौ । पक्व पाक निरा०स० । पाकशून्ये त्रि० ।

निष्पत्ति स्त्री० निर्+पद क्तिन् । समाप्तौ, सिद्धौ च ।

निष्पत्राकृति स्त्री० पत्र उद्ध्वमस्त्यस्य अच् पत्र शरः तस्य परपार्श्वे निष्कासन तत्र करोति । 'सपत्रनिष्पत्रा अत्यन्तव्यथने' इति डाच्-कृञ् । अतिव्यथायाम् ।

निष्पत्रिका स्त्री० निर्गत पत्र यस्याः ब०व० । करीरवृक्षे (टाउरकाटा) ।

निष्पन्न त्रि० निर्+पद क्त । सिद्धे समाप्ते च ।

**निष्परिग्रह** त्रि० निर्गतः कन्याकौपीनपुस्तकाद्यतिरिक्तः परिग्रहोऽस्मात्। परमहंसे परिव्राजके। त्यक्तसङ्गे त्रि०।

**निष्पाव** पु० निष्पूयते तुषाद्यपनयनेन शोध्यतेऽनेन निर्+पू-करणे घञ्। सूर्पादिवायौ तेन हि खलस्थधान्यादिकं कडङ्गरादिशून्यं करोति। कर्म्मणि घञ्। कडङ्गरे (त्राग-डा) राजमाषे (वरवटी) श्वेतशिम्बिधान्ये, शिम्बीमात्रे च। निर्विकल्पे त्रि०। [शौतादिवह्निशून्ये त्रि०।

**निष्पावक** पु० निर्+पू-ण्वुल्। श्वेतशिम्बायाम् (वरवटी)

**निष्पावी** स्त्री०निर्+पू-घञ् गौ०। श्वेतशिम्बीधान्ये (वरवटी)

**निष्पृह** त्रि०निवृत्ता स्पृहा यस्य। वैषयिके सुखे इच्छाशून्ये।

**निष्पेष** पु० निर्+पिष-घञ्। संघर्षे। रहिते च।

**निष्प्रतिभ** त्रि० निर्गतः प्रतिभायाः। जडे, अज्ञे, प्रागल्भ्य

**निष्प्रवाणि** त्रि० प्रोयतेऽस्यामनया वा प्र+वेञ्-ल्युट् ङीप् प्रवाणी तन्त्रवायशलाका निर्गतः प्रवाण्याः निरा०स०। नवाम्बरे, अभिनवे। (तात्तकाटा) वसने।

**निष्फल** त्रि० निर्गतं फलं यस्मात्। फलरहिते। पलाले फल-शून्ये धान्यकाण्डे(नाडा) पु०। विगतार्त्तवायां स्त्रियां स्त्री०

**निस्** अव्य० नि+सो-क्विप् ह०। निषेधे, निश्चये, साकल्ये, अतीते च।

**निसर्ग** पु० नि+सृज-घञ्। स्वभावे, स्वरूपे, सृष्टौ च।

**निसिन्धु** पु० नितरां सिन्धुरिव बहुद्रवपत्रादिमत्त्वात्। सि-न्धुवारे (निसिन्दा)।

**निसूदन** न० नि+सूद-ल्युट्। मारणे वधे।

**निसृता** स्त्री० नितरां सृता सृ-क्त। त्रिवृतायाम् (तेओड़ि)

**निसृष्ट** त्रि० नि-सृज क्त। न्यस्ते, मध्यस्थे च।

**निसृष्टार्थ** पु० 'उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम्। सन्दिष्टः कुरुते कार्य्यं निसृष्टार्थस्तु स स्मृतः'इत्युक्ते दासभेदे

**निस्तरण** न० निर्+तृ-करणे ल्युट्। उपाये। भावे ल्युट्। निस्तारे, पारगमने, तरणे, निर्गमे च।

**निस्तर्हण** न० नि+स्तृह-हिंसायां ल्युट्। मारणे।

**निस्तल** त्रि० निरस्तं तलं प्रतिष्ठा यस्य। वर्तुले, तलशून्ये,चले च। गौरा० ङीष्। वटिकायाम् स्त्री०। नितरां तलम्। तले न०। [अभीष्टप्राप्तौ च।

**निस्तार** पु० निःशेषेण तारः पारगमनम्। उद्धारे,पारगमने,

**निस्तुषक्षीर** पु० निस्तुषमन्नं भक्ष्यं क्षीरमिव शुभ्रं यस्य। गोधूमे तस्य हि चूर्णं क्षीरवत् शुभ्रम्।

**निस्तुषित** त्रि० निस्तुष+करोति णिच्-क्त। त्वग्विहीने कृते तण्डुलादौ, लघूकृते, त्यक्ते च।

**निस्त्रिंश** पु० निर्गतस्त्रिंशद्भ्योऽङ्गुलिभ्यः डच् समा०। खड्गे, त्रिंशदङ्गुल्यधिकस्यैव खड्गत्वात् ततो न्यूनत्वे छुरिका। तत्तुल्यत्रिंसकत्वात् निर्दये त्रि०।

**निस्त्रिंशपत्रिका** स्त्री० निस्त्रिंशइव पत्रमस्यस्याः ठन्। (मनसा) स्नुहीभेदे।

**निस्त्रैगुण्य** त्रि० निष्क्रान्तः त्रैगुण्यात् त्रिगुणकार्यात् संसा-रात् त्रिगुणकार्येभ्यः कामादिभ्यो वा। कामनादिशून्ये संसारातीते च 'निस्त्रैगुण्यो भवार्जुने'ति गीता। [कार्याम्

**निस्स्नेहफला** स्त्री०निःस्नेहं स्नेहशून्यं फलं यस्याः। श्वेतकण्ट-

**निस्य(ष्य,न्द** पु० निस्य(ष्य)+न्द-घञ् वा षत्वम्। स्यन्दने ईषत्क्षरणे निष्क्रान्तं स्यन्दनं यस्मात्। स्यन्दनशून्ये त्रि०

**निस्र(स्रा)व** पु० नि+स्रु-अप्, संज्ञायां घञ् वा। भक्तमण्डे (माड़) अपक्षरणे च।

**निस्व(स्वा)न** पु० नि+स्वन-अप् घञ्, वा। शब्दे।

**निहनन** न० नि+हन ल्युट्। वधे।

**निहव** पु०नि+ह्वे-अप् संप्रसारणञ्च। आह्वाने। [कायाम्

**निहाका** स्त्री०नियतं जहाति भुवं हा कन् न ह्रस्वः।गोधि

**निहित** त्रि० नि+धा-क्त। स्थापिते, गुप्ते,स्थिते, निक्षिप्ते च। नितरां हितं। अत्यन्तहिते।

**निह्नव** पु० नि+ह्नु-अप्। शाठ्ये अन्यथा स्थितस्य वस्तुनो न्यथात्वेन सूचने अपलापे। ह्नु-क्तिन्। आपह्नुतिरप्यत्र

**निह्राद** पु० नितरां ह्रादः नि+ह्रद-घञ्। अव्यक्ते शब्दे।

**नीकाश** पु० नि+काश-घञ् दीर्घः। निश्चये। पचाद्यच्। सदृशे किन्तु निभादिवत् परपदस्थतयैवास्य प्रयोगोनान्यथा वज्रनीकाशइत्यादि।

**नीच** त्रि० निकृष्टामीं लक्ष्मी चमति चम-ड। पामरे, निम्ने वामने च। चोरनामके गन्धद्रव्ये पु०।

**नीचभोज्य** पु० ३त०। पलाण्डौ। पामरभक्ष्यमात्रे पु०।

**नीचैस्** अव्य० निकृष्टं चीयते चि-डैसि दीर्घश्च। नीचे, अल्पे, क्षुद्रे च। [निवासस्थाने पक्षिणां कुलाये च

**नीड** पु० निचिता इलाऽत्र इल-क डलयोरैक्यात् लस्य ड।

**नीडज** पु० नीडे जायते जन-ड। विहगे नीडोद्भवादयोऽप्यत्र

**नीति** स्त्री० नीयन्ते उन्नीयन्तेऽर्था अनया नी-क्तिन्। शुक्रा-द्युक्तशास्त्रविद्यायां कार्य्यकारणयोरभेदात् तच्छास्त्रे च। भावे क्तिन् प्रापणे।

**नीतिशास्त्र** न० नीतिबोधकं शास्त्रं शाक० गुरुशुक्रकामन्दक-पञ्चतन्त्रमहाभारतहितोपदेशादौ शास्त्रे।

**नीध्र(ध्र)** न० निश्चयेन धरति वृणोति वा जलादि-धृ-वृ वा

'स्फुरत्परागपरागतपङ्कज'मिति माघ । स्नानीयद्रव्ये-कुङ्कुमचूर्णादौ उपरागे, चन्दने च ।

**पराङ्मुख** त्रि॰ पराक् प्रत्यावृत्तं मुखं यस्य । विमुखे आर अकार्य्यात् निवृत्ताङ्मुखे ।

**पराच्** त्रि॰ परा अञ्चति अनुच क्विन् प्रत्यकत्वभिन्ने-दृष्ट व्यवहारविषये-वाह्ये वस्तुनि ।

**पराचित** त्रि॰ परेणाचित पुष्ट आप्तो वा आ+चि क्त । परेण प्रतिपालिते, सम्यग्व्याप्ते च ।

**पराचीन** त्रि पराग्भव पराच्+ख । पराङ्मुखे, परकालिके च

**पराजय** पु॰ परा+जि-अच् । पराभवे (हारि) ।

**पराधीन** त्रि॰ परेऽधि इति वाक्ये समासे अध्युत्तरपदात् ख, परस्याधीनो वा । परायत्ते । [अन्यस्मिन् न॰

**परान्न** त्रि॰ परस्यान्नमेवान्नमस्य । परान्नोपजीविनि । ६त॰।

**पराभव** पु परा+भू अप् । तिरस्कारे, अभिभवे, विनाशे च

**परामर्श** पु॰ परा+मृश-घञ् । युक्तौ, विवेचने, व्यायाद्युक्ते व्याप्तिविशिष्टतया पक्षस्य ज्ञाने च यथा वह्निव्याप्यधूमवान् पर्वत इत्यादि ज्ञानम् ।

**परायण** न॰ परमयन यस्य । अत्यन्तासक्तौ, उत्तमाश्रये च ६त॰। अत्यासक्ते, यथा धर्मपरायण धर्मे अत्यन्तासक्त । तत्परे, अभीष्टे च त्रि॰ ।

**परारि** अव्य पूर्व्वतरे वर्षे पूर्व्वतर+आरि परादेश नि॰ । पूर्व्वतरवत्सरे गततृतीयवत्सरे । परोऽरि । अत्यन्तशत्रौ पु॰

**परारु** पु॰ परामृच्छति परा+ऋ उण् । कारवेल्लके (करला) ।

**परार्द्ध** न॰ अर्ध-अच् कर्म॰। चरमसंख्यायां 'पारेपरार्द्ध गणित यदि स्यादि'ति नैषधम् । कर्म । ब्रह्मण आयुषोद्वितीयार्द्धे । [यत् । श्रेष्ठे 'परार्द्ध्यवर्णास्तरणे'ति रघु ।

**परार्द्ध्य** त्रि॰ परार्द्ध चरमसंख्यापर्यन्तात् श्रेष्ठत्वमर्हति

**परावर्त्त** पु॰ परा+वृत घञ । परीवर्त्ते विनिमये ।

**परावह** पु॰ परा+वहति परा+वह अच् । सप्तवायुमध्ये परिवहवायोरूर्द्ध्वस्थे वायुभेदे ।

**पराशर** पु॰ व्यासपितरि मुनिभेदे ।

**पराश्रया** स्त्री परमाश्रयति आ+श्रि अच् । वन्दाकाम् (परगाछा) अन्याश्रयिणि त्रि॰ ।

**परासन** न॰ परा+अस ल्युट । मारणे ।

**परासु** त्रि॰ परागता असवो यस्य । मृते ।

**परास्कन्दिन्** पु परान् आस्कन्दति णिनि । चौरे ।

**परास्त** त्रि॰ परा+अस-क्त । निरस्ते पराजिते च ।

**पराह्ण** पु॰ परमह्नः एकदेशिस॰ टच् समा॰ अह्नादेश णत्वम् । दिवसस्य चरमभागे, मध्याह्नोत्तरकाले च ।

**परि** अव्य॰ पृ-इन् । सर्व्वत इत्यर्थे वर्ज्जने, व्याप्तौ, शेषे, कञ्चित प्रकार प्राप्ते, निरसने, पूजायां, भूषणे, उपरमे, शोके सन्तोषभाषणे, अतिशये, त्यागे, नियमे च ।

**परिकर** पु परि+कृ अप् । पर्य्यङ्के परिवारे, समारम्भे, समूहे प्रगाढगात्रबन्धे विवेके, सहचारिणि च ।

**परिकर्म्मन्** न॰। कर्म संस्कारादि, तद्यस्माद्वा ५ब देहसंस्कारे कुङ्कुमाद्यङ्गोद्वर्त्तनीयद्रव्ये, भूषणे च गणितानुगुणेषु सङ्कलनव्यवकलनगुणनभागहारादिषु अष्टविधेषु संस्कारेषु च । ६ब॰। सेवके त्रि ।

**परिक्रम** पु॰ परि+क्रम घञ् न वृद्धि । क्रीडादौ, पूजादौ प्रदक्षिणीकरणाद्यर्थं पादेन गमने च ।

**परिक्रिया** स्त्री॰ परित क्रिया वेष्टनम् । परिखादिना दुरादेर्वेष्टने । [भेदे परिक्षितोऽप्यत्र ।

**परिक्षित्** पु॰ अर्ज्जुनेन सुभद्रायामुत्पादिते कुरुवंश्ये नृपति-

**परिखा** स्त्री॰ परित खन्यत खन ड । पुरादौ दिपुरुषतोमा दुर्ग्ग वेष्टनादिकृते गर्त्तरूपाया जलाधारस्थाने वेष्टनाकारभूमौ । [वेष्टिते, गर्त च ।

**परिगत** त्रि॰ परि+गम क्त । प्राप्ते, ज्ञाते, विस्मृते, वेष्टिते,

**परिग्रह** पु॰ परि+ग्रह-अप् । स्वीकारे, दैन्यपदालागे च कर्मणि च । भार्य्यायां, परिजने च । करणे अप् । मूले, शपथे च ।

**परिघ** पु परि+हन क नि । परिघातास्त्रे लौहमुद्गरादौ, लौहबद्धे लगुडे-मुद्गरे कूपे, काचघटे, घटे, विष्कम्भादधिक ऊनविंशतितमे योगे च । [प्रणये च ।

**परिचय** पु॰ परि+चि-अच् । ज्ञातस्य पौन पुन्येन ज्ञाने, संस्तवे,

**परिचर्य्या** स्त्री परिचर+यत् । सेवायाम् ।

**परिचाय्य** पु॰ परिचीयते संस्क्रियतेऽसौ चि ण्यत् । यज्ञाग्नौ ।

**परिचारक** त्रि॰ परि+चर ण्वुल् । शिष्ये भृत्ये ।

**परिच्छद** पु॰ परि+छद-णिच्-घ ह्रस्व । उपकरणे कृत्ये च रथपटादौ, वस्त्रादिभूषणे, परिवारे च । 'हैमापरिच्छद लक्ष्मी'ति रघु ।

**परिच्छेद** पु॰ परि+छिद-घञ् । विशेषरूपेण स्वरूपाकरणे, ग्रन्थादिस्थाशौचे सन्धान विच्छेदस्थाने च ।

**परिजन** पु॰ परिगतो जन । परिवारे प्रतिपाल्ये जने ।

**परिणत** त्रि॰ परि+नम क्त णत्वम । परिपक्वे वृद्धि गते, अव स्थान्तर प्राप्ते, तिर्य्यग्दन्तप्रहारिणि गजे च ।

**परिणय** पु॰ परि+नी अच् । विवाहे ।

परिणाम पु० परि+नम-घञ् । प्रकृतेरन्यथाभावे विकारे, भेदे, अर्थालङ्कारभेदे च ।

परिणाह पु० परि+नह-घञ् । विस्तारे ।

परिणेतृ पु० परि+नी-तृच् । विवाहकर्त्तरि भर्त्तरि ।

परितस् अव्य० परि+तसिल् । सर्व्वत इत्यर्थे चतुर्दिक्षु ।

परिताप पु० परितप्यते, अत्र वा भावादौ घञ् । दुःखे, उष्णतायाम्, शोके, भये,कम्पे,नरकभेदे च । [वारणे च ।

परित्राण न० परि+त्रै-ल्युट् । रक्षणे,अनिष्टे प्रहरणस्य नि-

परिदान न० परिवर्त्तेन दानम् दा-ल्युट् । विनिमये द्रव्या-न्तरग्रहणेन द्रव्यान्तरदाने ।

परिदेवन न० परि+दिव-ल्युट् । अनुशोचने, विलापे,स्वस्य कर्म्मणोऽनुचितत्वधियानुतापे च । णिच्-युच् । परिदेवना-प्यत्र, ताभे च स्त्री० । [स्थले नाभेरधोदेशगमने ।

परिधान न० परिधीयते परि+धा कर्म्मणि ल्युट् । परिहित-

परिधि पु० परि+धा-कि । चन्द्रसूर्य्ययोर्मध्ये मेघादिसन्नि कर्षात् जायमाने वेष्टनाकारे मण्डले (सूर्य्यसभा) (चन्द्र सभा) यज्ञियपशुबन्धनार्थं निखाताया यज्ञियतरोः पला-शादेः शाखायाम्,गोलमण्डलस्य परितो वेष्टनस्थलमाने, परित' मार्गे च ।

परिधिस्थ त्रि० परिधौ तिष्ठति स्था-क । परिचारके, युद्धादौ रथिनो रक्षार्थं परितः स्थिते सैन्यादौ च ।

परिपण न० परिपण्यते व्यवह्रियतेऽनेन पण-घञ् । मूलधने

परिपन्थक पु० परिपन्थयति दोषास्थानं गच्छति ण्वुल्, पन्थानं वर्ज्जयित्वा गच्छति वा कर्तृ पन्थादेशः । शत्रौ ।

परिपन्थिन् पु० परि+पन्थ-इनि । शत्रौ ।

परिपाक पु० परि+पच-घञ् । नैपुण्ये, उत्तमपाके च ।

परिपाकिनी स्त्री०परिपाक+अस्त्यर्थे इनि । त्रिवृति (तेओटी)

परिपाटि(टी) स्त्री० परि+चु०पट-इन् । अनुक्रमे,आनुपूर्व्याम्

परिपुष्करा स्त्री० परित' पुष्करं चर्म यस्याः । (गोमुक) गोडुम्बायाम् । [यमाने सुक्ताकारे पदार्थे ।

परिपेल न० परि+पेल-अच् । कैवर्त्तीमुस्तके शैवलमध्ये जा-

परिपेलव न० परितः पेलवं मृदुता यस्य । कैवर्त्तीमुस्तके ।

परिप्लव न० परि+प्लु-अच् । चञ्चले अस्थिरे ।

परिबर्ह पु० परि+बर्ह-घञ् । नृपयोग्ये हस्त्यश्वरथादिपरिच्छदे

परिभ(भा)व पु०परि+भू-अप्,घञ् वा । अनादरे, तिरस्कारे च

परिभाषण न०परि+भाष-ल्युट् । निन्दया दुष्टवचने आलापे, नियमे च । [मनादृत्य सङ्केतायार्थे विशिष्टसंज्ञायाम् ।

परिभाषा स्त्री० परि+भाष-अ । शक्तिमसंज्ञायाम् अवयवार्थ-

परिभूत त्रि० परि+भू-क्त । तिरस्कृते, अनादृते च ।

परिमण्डल त्रि० परिगतो मण्डलम् । वर्त्तुलाकारे ।

परिमल पु० परि+मल-अच् । कुङ्कुमचन्दनादिमर्द्दने, मर्द्दनो त्थिते सुगन्धौ,परितः सम्मर्द्दे च । 'कला परिमल' इत्युदाहृतः

परिमाण न० परिमीयतेऽनेन परि+मा-ल्युट् । मान, तुलाङ्गु प्रस्थादिभिर्द्रव्यस्य परिच्छेदे । [इयत्तायां परिमाणे च ।

परिमित त्रि० परि+मा क्त । कृतपरिमाणे, युक्ते, अल्पा-

परि(री)रम्भ पु० परि+रभ-घञ् मुमू च वा दीर्घः । आलिङ्गने

परिवत्सर पु० संवत्सरपञ्चकान्तर्गते वत्सरभेदे ।

परिवर्जन न० परित्यज्यतेऽनुमितदेनेन वृज-णिच्-ल्युट् । मारणे । वृज-भावे-ल्युट् । त्यागे ।

परि(री)वर्त्त पु० परि+वृत भावे घञ् वा दीर्घः । विनिमये । आधारे,घञ् । युगान्ते काले,ग्रन्थपरिच्छेदे अध्यायादौ च कर्त्त-रि अच् । कूर्म्मराजे । भावे ल्युट् । परिवर्त्तने विनिमये ।

परिवह पु० परि+वह-अच् । सप्तवायुमध्यपातिनि वायुभेदे ।

परि(री)वाद पु० परि+वद-घञ् वा दीर्घ । अपवादे 'गुरो-र्यत्र परीवाद' इति मनुः ।

परिवादिनी स्त्री० परितो वदति स्पष्टाक्षरमिव नदति वद-णिनि । सप्ततन्त्रीयुक्तायां,वीणायाम् अपवादकर्त्र्यांस्त्रियाञ्च

परि(री)वाप पु० परि+वप-घञ् वा दीर्घ । वपने । वप-णिच्-घञ् । मण्डने । ल्युट् । परिवापणमप्यत्र ।

परिवापित त्रि० परि+वप-वा-णिच्-क्त । मुण्डिते ।

परि(री)वार पु० परिव्रियतेऽसौ अनेन वा परि+वृ-घञ् वा दीर्घः । परिजने कुटुम्बादौ,खड्गकोषे, (खाप) परिवाटे च ।

परि(री)वाह पु० परि+वह-घञ् वा दीर्घ । जलोच्छ्वासे परितः समन्तात् जलानां वहनात् तथा त्वम् ।

परिविन्न त्रि० परिविद्यतेऽसौ कर्म्मणि-क्त । अनुजस्य विवाहकाले अनूढे ज्येष्ठे । तादृश्यां भगिन्यां स्त्री० । ज्येष्ठा-नूढताकालेऽनुजोद्वाहरूपः दोषः परिवेदनं तेन दुष्यत इति तस्य परिवेदनकर्म्मत्वम् ।

परिवित्ति पु० परिविद्यते परिवेदनाज्जदोषेण दुष्यतेऽसौ परि+विद-कर्म्मणि क्तिच् । प्रागूढानुजस्यानूढे ज्येष्ठे

परिवृढ त्रि० परि+वृह-क्त । अधिपे प्रभौ ।

परिवेत्तृ पु० परि+विद-तृच् । ज्येष्ठेऽनूढे प्रागविवाहरूपपरि वेदनकर्त्तरि अनुजे भ्रातरि ।

परिवेदन न०परि वर्ज्जयित्वा उचितकालं वेदनं विवाहः लाभो वा । ज्येष्ठे,अनूढे,अकृताग्न्याधाने च कनिष्ठस्य विवाहकरणे, अग्न्याधानकरणे च दुरदृष्टजनके स्त्युक्ते दोषे ।

**परिवेदनी** स्त्री॰ परिविद्यते यया परि+विद-करणे ल्युट् ङीप्। यामूढ्वा परिवेदनदोषो भवति तस्यां स्त्रियाम्, 'परिवेत्ता परिवित्तिः यया च परिविद्यते। सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः' इति मनुः।

**परिवेश** पु॰ परि+विश-व्याप्तौ भावे घञ्। वेष्टने, मेघादि सम्पर्काज्जायमाने चन्द्रार्कमण्डलस्य वेष्टनाकारे। 'वाताद्यैर्मण्डलीभूता सूर्य्याचन्द्रमसोः कराः। मालाभा व्योम्नि दृश्यन्ते परिवेशस्तु स स्मृतः' इत्युक्ते मण्डले पदार्थे।

**परिवेषण** न॰ परि+विष-णिच् ल्युट्। भोजनार्थमन्नादेः भोजनपात्रे दाने।

**परिव्याध** पु॰ परि+व्यध-कर्त्तरि ण। जलवेतसे।

**परिव्राज्** पु॰ परि+व्रज-क्विप् नि॰। सर्वकर्माणि परित्यज्य आत्ममात्रशरणमिच्छु चतुर्थाश्रमिणि यतौ।

**परिव्राज(क)** पु॰ परित्यज्य सर्वकर्माणि व्रजति व्रज-घञ् ण्वुल् वा। चतुर्थाश्रमिणि यतौ। [प्रतिपादके ग्रन्थे।

**परिशिष्ट** न॰ परि+शिष-क्त अवशेषे स्वार्थे अण्। अवशिष्टार्थ

**परिश्रम** पु॰ परि+श्रम-घञ् न वृद्धिः। आयासे क्लेशकारके व्यायामे।

**परिश्रय** पु॰ परि+श्रि-आधारे अच्। सभायाम्।

**परिषद्** स्त्री॰ परितः सीदन्त्यस्याम् सद क्विप्। सभायां, धर्मोपदेशकपण्डितसमुदाये च। [पार्श्वचरे परिजने च।

**परिषद** पु॰ परितः सीदति गच्छति सद अच्। अनुचरे

**परिषद्वल** त्रि॰ परिषद्+अस्त्यर्थे वलच्। सभासदे।

**परिष्क(ष्क)न्द** त्रि॰ परिस्कद्यते पुष्यते परि+स्कन्द घञ् वा। षत्वम्। परपुष्टे। क्त। परिस्कन्नस्य न वा षत्वे परिष्कन्नश्च।

**परिष्कार** पु॰ परि+कृ घञ् सुट् षत्वं च। भूषणे विद्यमानस्य गुणान्तरस्य सञ्चारणे, संस्कारे च। [गात्रादिसंस्कारे च।

**परिष्कृत** त्रि॰ परि+कृ क्त सुट् षत्वं च। भूषिते वेष्टिते, शतमाख्ये

**परिष्वङ्ग** पु॰ परि+स्वञ्ज घञ्। आलिङ्गने।

**परिसर** पु॰ परि+सृ अप्। नदीनगरपर्वतादेः समीपस्थाने, मृत्यौ, विधाने च। [ज्ञात् गमने च।

**परिसर्ग** पु॰ परितः सृज्यते सृज-घञ्। परितोवेष्टने सम

**परिसर्य्या** स्त्री॰ परि सृ-यत्। सर्वतो गमने।

**परिस्पन्द** पु॰ परि+स्पन्द-घञ्। सम्यगास् चलने, कुसुमप्रस्तारे रचनाभेदे परिष्कारे, परिजने च।

**परि(री)स्रुत्** स्त्री॰ परिस्रवति माक्षिका निर्गलति स्रु क्विप् वा दीर्घः। मदिरायाम्। क्त। परिस्रुतमाध्वम्। [अवादरे च

**परि(री)हार** पु॰ परि+हृ घञ् वा दीर्घः। त्यागे, गोपनकरणे,

**परि(री)हास** पु॰ परि+हस-घञ् वा दीर्घः। केलौ।

**परीक्षक** त्रि॰ प्रमाणेन परीक्षते परि+ईक्ष ण्वुल्। प्रमाणोपन्यासेन विषयनिरूपके।

**परीक्षण** न॰ परि+ईक्ष-ल्युट्। प्रमाणेन वस्तुनिरूपणे।

**परीक्षा** स्त्री॰ परि+ईक्ष-अ। दुष्टादुष्टत्वावशोधने प्रमाणेन वस्तुनिरूपणे, स्मृत्युक्ते दुष्टादुष्टत्वसाधके तुलादिप्रमाणे च

**परीष्टि** स्त्री॰ परि+इष क्तिन्। अन्वेषणायाम्, परिचर्य्यायां च

**परीसार** पु॰ परि+सृ-घञ्। सर्वतोगमने।

**परुत्** अव्य॰ पूर्वस्मिन् वर्षे उत् परद्भावादेशः। गतवत्सरे

**परुत्न** त्रि॰ परुद्भव त्न। गतवर्षभवे पदार्थे।

**परुष** न॰ पृ उषन्। निष्ठुरवचने। नीलीझिण्ट्याम् पु॰। चित्रवर्णे, कठोरे च त्रि॰।

**परुस्** न॰ पृ-उसि। पर्व्वणि, (गांठ) पर्वणि च।

**परेत** त्रि॰ परा+इण क्त। मृते। [क्विप् वा। यमे।

**परेतराज(ज्)** पु॰ ६त टच् समा॰, परेतेषु राजते राज अच्

**परेद्यवि** अव्य॰ परस्मिन्नहनि नि॰। परदिवसे इत्यर्थे।

**परेद्युस्** अव्य॰ परस्मिन्नहनि पर+एद्युस्। परदिने। [गवि।

**परेष्टुका** स्त्री॰ परैरिष्यते इष-तु स्वार्थे कन्। बहुप्रसूतायां

**परैधित** त्रि॰ परैरेधितः एध-णिच् क्त। अन्यपालिते।

**परोक्ष** अव्य॰ अक्ष्णः परम् अव्य॰ टच् नि॰। असमक्षे, अप्रत्यक्षे। तद्विषये त्रि॰।

**परोष्णी** स्त्री॰ परा-उष्णा-अर्ध घोरा॰ ङीप्। तैलपायिकायाम्

**पर्कटि** स्त्री॰ पृच-अटि न्यङ्क्वा॰ कुत्वम् (पाकड़) प्लक्षवृक्षे।

**पर्कटिन्** पु॰ पृच अटिनि नि॰ कुत्वम्। प्लक्षवृक्षे। [(पाकड़)।

**पर्जन्य** पु॰ पृषु सेचने अन्य आद्यादेशः। इन्द्रे मेघे, 'यज्ञाद्भवति पर्जन्यः' इति मनुः। मेघशब्दे च। दारुहरिद्रायां स्त्री

**पर्ण** हरितभावे अद॰ चु॰ उभ॰ सक॰ सेट्। पर्णयति-ते अपपर्णत् त

**पर्ण** न॰ पॄ-न, पर्ण अच् वा। पत्रे पक्षे च 'सुपर्णो गरुडो मत' इति। पलाशवृक्षे पु॰। ताम्बूले न॰। पत्रयुक्ते त्रि॰।

**पर्णारुह** पु॰ पर्णमेव सञ्जायते यस्य पुष्पहीनत्वात्। पुष्प होमे वनस्पतौ वृक्षे।

**पर्णचोरक** पु॰ पर्णं चोरयति चुर ण्वुल्। चोरनामगन्धद्रव्ये

**पर्णनर** पु॰ पर्णनिर्म्मित नराकार मय। अस्थ्यलाभे आहुतिके दाहे मृतप्रतिनिधिभूते पर्णनिर्मिते नराकारे।

**पर्णभेदिनी** स्त्री॰ पर्णानि भिनत्ति भिद णिनि। प्रियङ्गुवृक्षे

**पर्णलता** स्त्री॰ पर्णप्रधाना लता शाक॰। ताम्बूलीलतायाम्।

**पर्णवल्ली** स्त्री॰ पर्ण प्रधाना वल्ली शाक॰। पलाशीलतायाम्।

**पर्णशाला** स्त्री॰ पर्णनिर्मिता शाला शाक॰। पर्णनिर्मिते

टानरूपे उत्तरते । पश्चिमारोहणमप्यत्र ।

पश(ष) बाधे भ्वा०उभ०आ०सक०सेट् । पश(ष)ति ते अप-
  शी(षी)त् अपाशी(षी)त् अपशि(षि)ष्ट ।

पश(ष) स्पर्शे, गतौ, अनुपसर्गात् बन्धे, बाधे च चुरा०उभ०
  सक०सेट् । पश(ष)यति ते अपपश(ष)त् त ।

पश(ष) बन्धे चुरा०उभ०सक०सेट् । पाश(ष)यति ते अपीपश(ष)त

पशु पु० सर्वमविशेषेण पश्यति दृश-कु पशादेशः । छागादौ
  लोमवल्लाङ्गूलवति जन्तुभेदे, देवे च । दर्शनार्थेऽव्ययम् ।

पशुपति पु०पशूनां सर्वेषां समदर्शिनां देवानां पतिः । महादेवे

पशुराज पु०पशूनां राजा टच्समा० । सिंहे । [आम्रातकवृक्षे

पशुहरितकी स्त्री० पशूनां हरीतकीव हितकारित्वात् ।

पश्चात् अव्य० अपर+प्रथमापञ्चमीसप्तम्यर्थे आति पश्चादेशः ।
  प्रथम-द्यर्थदृत्तेरपरशब्दस्यार्थे, चरमे, अधिकारे च ।

पश्चात्ताप पु० पश्चात् चरमस्तापः । अनुतापे कृतस्य कर्मणो
  ऽनुचितत्वधिया अनुशोचने ।

पश्चार्द्ध पु०अपरमर्द्धं पश्चादेशः । देह ह्रदे अपरभागे, 'पश्चार्द्धेन
  प्रविष्टः शरपतनभया'दिति शकुन्तला ।

पश्चिम त्रि०पश्चात् भवः डिमच् । शेषभवे० प्रतीच्यामस्ताचल
  सन्निकटायां दिशि स्त्री० । [चौरभेदे

पश्यतोहर पु०पश्यन्तमनादृत्य हरति हृ-अच् अलुक् तत० ।

पश्यन्ती स्त्री० दृश-शतृ-ङीप् । परादिशब्दचतुष्टयमध्ये
  शब्दभेदे विमर्शे दृष्टाभिधाने ।

पश्वाचार पु० पशुर्देवः समदर्शी तस्येवाचारः । तन्त्रोक्ते
  वैदिकमार्गानुसारिणि आचारे । [अपासीत् अपसिष्ट

पस बाधे, बन्धे च भ्वा०उभ०सक०सेट् । पसति ते अपसीत्-

पस नाशने चु०उभ०सक०सेट् इदित् । पंसयति ते अपपंसत्-त

पह्नव पु० श्मश्रुधारिम्लेच्छजातिभेदे, 'शका जवनकाम्बोजाः
  पारदाः पह्नवास्तथे'ति मनु । [यति ।

पा पाने भ्वा०पर०सक०अनिट् । पिबति अपात् । णिच् पाय-

पा रक्षणे अदा०पर०सक०सेट् । पाति अपासीत् । णिच्-पालयति

पांशव पु०पांशोर्विकारः अण् । (पाङ्गा) लवणभेदे,पांशुजातत्वाप्यत्र

पांशु(सु) पु० पश-पसि-वा कु-दीर्घ० । धूलौ,पश्चार्थं चिरसञ्चिते
  शुष्कगोमये, कर्पूरभेदे च ।

पांशुपत्त्र न० पांशुभिः सञ्चितगोमयैः पत्त्रमस्य । वास्तूकशाके

पांशुर पु०पांशु राति-रा क । खञ्जे, दंशके च (डांश) ।

पांशुल पांशु पांशुतुल्यं पापमस्त्यस्य । पापवति,पुंश्चले च
  कुलटायां स्त्री० । 'अपांशुलानां धुरि कीर्त्तनीये'ति रघुः ।
  विभूतियुक्ते शिवे पु० । धूलियुक्ते त्रि० । 'तेषां निदघे पटं
  समुद्रमस्य पांशुले' इति श्रुतिः ।

पांसन त्रि० पसि-ल्यु ह० । दूषके ।

पाक पु० पच भावे घञ् । पचने, कोटने, कोटनेन निष्पादने
  निष्पत्तौ, परिणामे च आधारे घञ् । स्थाल्यादौ, पेचके,
  शब्दादिभेदे, भये च । पिबति स्तनं पा-क । शिशौ त्रि०
  स्त्रियां पाका ।

पाककृष्ण पु० फलपाके कृष्णः । (पानीआमला) वृक्षभेदे ।

पाकद्रुष्णफल पु० पाके परिणामे कृष्णं फलं यस्य । (पानी
  आमला) वृक्षभेदे । [त्रि० ।

पाकज न०पाकाज्जायते जन-ड । काचलवणे । पाकजातमात्रे

पाकयज्ञ पु० पाकप्रधानो यज्ञः । सदृशपाकसाध्ये वृषोत्सर्गादौ
  कर्मणि । [तिक्तपत्ते

पाकरञ्जन न० पाकं पक्वमात्रं रञ्जयति रञ्ज-णिच्-ल्युट् ।

पाकल न० पाकं लाति ला-क । कुष्ठौषधौ (कुड़) । वह्नौ,
  पावौ च पु० । कर्कोट्यां स्त्री०गौरा०ङीष् । [कोलस्

पाकशाला स्त्री० ६त० । पाकस्थाने । पाकशक्तपाकस्थानादि-

पाकशासन पु० पाकं तन्नामासुरं शास्ति शास-ल्यु । इन्द्रे ।

पाकिम त्रि० पाकेन निर्वृत्तम् इमन् । पाकनिष्पन्ने । [पु० ।

पाक्य न० पच-यत् कुत्वम् । विड्लवणे पांशुलवणे च । यवक्षारे

पाक्षिक त्रि० पक्षतः प्राप्तः ठण् । पक्षतः प्राप्ते, प्राप्त्यप्राप्ति
  सम्भावनाविषये एकतरपक्षे दृष्टवृत्ते नियमे, 'नियमः
  पाक्षिके सती'ति मीमांसा ।

पाचक पु० पचति पच-ण्वुल् । वह्नौ । पाककर्त्तरि सूदादौ,
  भुक्तान्नजारकौषधौ च त्रि० । पित्ताख्ये धातुभेदे न० ।

पाचन न० पच-णिच्-ल्युट् । पित्तादिदोषनाशके वैद्यकोक्ते
  क्वाथभेदे, प्रायश्चित्ते च । पच-णिच्-कर्त्तरि ल्यु । वह्नौ,
  अम्लरसे, रक्तैरण्डे च पु० । हरितक्यां स्त्री० ङीप् ।

पाञ्चजन्य पु० पञ्चजने दैत्यभेदे भवः यत् । विष्णुशङ्खे 'पाञ्च-
  जन्यं हृषीकेशः' इति गीता । [ङीप् पाञ्चाली ।

पाञ्चाल त्रि० पञ्चालदेशे भवः अण् । पञ्चालदेशभवे । स्त्रियां

पाटच्चर पु० पटच्चर एव स्वार्थे प्रज्ञादित्वादण् । चौरे ।

पाटल पु० पाटयति पट-णिच्-कलच् । श्वेतरक्तवर्णे । तद्वति
  त्रि० (पारुल) ख्याते वृक्षे स्त्री० । तत्पुष्पे,आशुधान्ये च न०

पाटलि स्त्री० पट-णिच् अलि वा ङीप् । (पारुल) ख्याते वृक्षे
  'पाटलिसंसर्गसुरभिवनवाताः' इति शकुन्तला । घण्टापाटलौ च

पाटलिपुत्र न० (पाटना) इतिख्याते नगरभेदे ।

पाटव न० पटोर्भावः अण् । पटुतायाम् क्रियायोग्यतायाम्
  आरोग्ये च 'अपाटवाद्यशौचाद्यै'रिति स्मृतिः ।

**पाटी** स्त्री पट-णिच् इन् ङीप्। धारायां व्यक्तगणनायां लीलावत्यादौ (पाता) इति ख्याते क्षुपे च। [आरम्भे च

**पाठ** पु० पठ-घञ्। अक्षराणामुच्चारणे गुरूच्चारणश्रवणपूर्वको-

**पाठक** पु० पठति पाठयति वा ण्वुल्। अध्येतरि, अध्यापके च

**पाठशाला** स्त्री० ६त०। पाठमन्दिरे।

**पाठा** स्त्री०पठ-कर्मणि घञ् टाप्। विद्धकर्ण्याम् (आकनादि)

**पाठिन्** पु० पठ-णिनि। चित्रकवृक्षे। पाठके त्रि०।

**पाठीन** पु० पाठिं पृष्ठं नमयति नम ड दीर्घः। गुग्गुलुवृक्षे मत्स्यभेदे च (बोयाल) 'पाठीनरोहितावाद्यौ'इति मनुः। पठ-ईनण्। पाठके त्रि०। पण्यवीथ्याम्, हट्टे च स्त्री०।

**पाणि** पु०पण-इण् आयाभावः। करे,कुलिके हट्टे च (उबेरवाड़ा)

**पाणिगृहीती** स्त्री०पाणिर्गृहीतो यस्याः ङीप्। भार्यायाम्

**पाणिग्रहण** न० पाणिर्गृह्यतेऽत्र ग्रह-आधारे ल्युट्। विवाहे। 'पाणिग्रहणसंस्कारः सवर्णास्वपदिश्यते' इति मनुः। पाणिपीडनादयोऽप्यत्र।

**पाणिघ** पु० पाणि हन्ति,पाणिना वा हन्ति वादयति हन-टक् कुत्वम्। पाणिताडके, पाणिना मृदङ्गादिवादके च।

**पाणिनि** पु० पणिन पणी ततः अपत्यार्थे इञ् तदपत्यम् अण् तस्य छात्र इञ्। अष्टाध्यायीव्याकरणादिकारके दाक्षीपुत्रे शालातुरीयनामभवे मुनिभेदे।

**पाणिनीय** त्रि० पाणिनिना प्रोक्तम्, तस्येदम् वा छ। पाणिनिना कृते अष्टाध्यायीरूपादौ व्याकरणादौ।

**पाणिभुज्** पु० पाणिरिव भुज्यते मोट्यते भुज-मोटने क्विप्। उडुम्बरवृक्षे। पाणिना भुङ्क्ते भुज क्विप्। हस्तेन भक्षके त्रि०।

**पाणिवाद** पु० पाणि, पाणिना वा मृदङ्गादिकं वादयति वद-णिच् अण् अच् वा। करताडके, हस्तेन मृदङ्गादिवादके च। ण्वुल्। पाणिवादकोऽप्यत्र।

**पाणिसर्ग्या** स्त्री० पाणिना सृज्यतेऽसौ सृज-ण्यत्। रज्ज्वौ

**पाण्डर** पु०पडि-अरन् दीर्घश्च। मरुवकवृक्षे श्वेतवर्णे च। तद्वति त्रि०। कुन्दपुष्पे, गैरिके च न०। [पुत्रे युधिष्ठिरादौ।

**पाण्डव** पु० पाण्डोरपत्यम् अण्। चन्द्रवंश्यनृपभेदस्य क्षेत्रजे

**पाण्डु** पु० पडि कु नि०दीर्घः। चन्द्रवंश्ये नृपभेदे श्वेतवर्णे,केतकीधूलिसन्निभे पीतश्यामेत्यर्थे वर्णभेदे च। तद्वति त्रि०नागभेदे, श्वेतहस्तिनि, रोगभेदे, पटोलवृक्षे च पु०। माषपर्ण्यां स्त्री०

**पाण्डुकण्टक** पु०पाण्डुवर्णानि कण्टकानि यस्य। अपामार्गे

**पाण्डुकम्बल** पु० कर्म०। श्वेतवर्णप्रावारे। कम्बल इव। पाण्डु राजः। प्रस्तरभेदे। [वर्णकम्बलमाहते रथे।

**पाण्डुकम्बलिन्** पु० पाण्डुकम्बल+अस्त्यर्थे इनि। पाण्डु

**पाण्डुतरु** पु०कर्म०। धवद्रुमे। [हस्तिनि,श्वेतसर्पे च।

**पाण्डुनाग** पु० नाग इव पाण्डुः राज०। पुन्नागवृक्षे, श्वेत-

**पाण्डुफल** पु० पाण्डूनि फलान्यस्य। पटोले। चिर्भटा स्त्री

**पाण्डुर** पु० पाण्डुवर्णोऽस्त्यस्य र। श्वेतपीतमिश्रिते वर्णे। पडि-उरच् पृ० वृद्धिः। श्वेतवर्णे च। तद्वति त्रि०। कामलाख्ये रोगे, श्वित्ररोगे च न०। माषपर्ण्यां स्त्री०टाप्।

**पाण्डुरङ्ग** पु० पाण्डुरङ्गमस्य यस्य। (काटरङ्गा) शाके

**पाण्डुरद्रुम** पु० कर्म०। कुटजवृक्षे (कुड़ची)।

**पाण्डुराग** पु० पाण्डुः रागो वर्णो यस्य। दमनकवृक्षे।

**पाण्डुलोमशा** स्त्री० पाण्डूनि लोमानीवाङ्गानि सन्ति यस्याः श। माषपर्ण्याम्। श्वेतलोमवति त्रि०।

**पात** पु० पत-घञ् पतने। पा-क्त। रक्षिते त्रि०। पत-ण। ज्योतिषोक्ते क्रान्तिसाम्यसम्पादके राहुरूपे ग्रहभेदे।

**पातक** न० पातयति अधो गमयति पत-णिच्-ण्वुल्। पातित्यसम्पादके पापे, पापजनके प्राणिवधादौ च।

**पातञ्जल** न० पतञ्जलिना प्रोक्तम् अण्। पाणिनिसूत्रवार्तिकव्याख्यानरूपे 'अथ शब्दानुशासन'मित्यादिके महाभाष्ये, 'अथ योगानुशासन'मित्यादिके योगशास्त्रे च।

**पाताल** न० पत-आलञ्। धरायास्तलस्थे भुवने, ज्योतिषोक्ते लग्नावधिचतुर्थे स्थाने च।

**पातालनिवास** पु० नि+वस-आधारे घञ् पातालं निवासो यस्य। दैत्ये पातालनिलयादयोऽप्यत्र।

**पातुक** त्रि०पत उकञ् पतनशीले। प्रपाते,जलहस्तिनि च पु०

**पात्र** न०स्त्री० पाति रक्षत्याधेयम्, पिबत्यनेन वा पा-ष्ट्रन् स्त्रियां ङीप्। जलाद्याधारे भोजनयोग्ये अमत्रे, विद्यादियुक्ते दानयोग्ये ब्राह्मणे 'ब्राह्मणं पात्रमाहु'रिति स्मृतिः यज्ञिये स्रुवादौ तीरद्वयमध्यवर्त्तिनि जलाधारस्थाने, नाट्ये ऽभिनेये नायकादौ च न०।

**पात्रीय** त्रि० पात्रे यज्ञपात्रे योग्यं छ। यज्ञद्रव्ये। स्वार्थे छ। योग्ये, 'विप्र पात्रीयतामियादि'ति स्मृतिः।

**पात्रेसमित** त्रि० पात्रे भोजनपात्रावच्छिन्नकाले एव समितः सङ्गतः। भोजनमात्रस्थायि अनुपस्थिते कार्यादौ। [च

**पाथ** न० पीयतेऽम्बु च। जले। पाति रक्षति च। अग्नौ सूर्ये

**पाथस्** न० पाति रक्षति,पीयते वा पा-पाने,रक्षणे वा असुन् थुक् च। जले अन्ने च अन्नभोजने हि देहरक्षा।

**पाथेय** त्रि० पथि हितं ढञ्। पथि भोजनोचिते द्रव्ये।

**पाद्** पु० पद् णिच् क्विप्। चरणे पादे। [श्लोकादेर्भूले च।

**पाद** पु० पद्यते गम्यतेऽनेन करणे घञ्। चरणे, चतुर्थांशे,

पादकटक पु० पादस्य कटक इव । नूपुरे ।
पादकृच्छ्र पु० पादमितचतुर्थांशमित॰ कृच्छ्रः शाक० । 'उपवासेन चैकेन पादकृच्छ्रउदाहृत' इत्युक्ते व्रतभेदे ।
पादग्रहण न० पादयोः ग्रहणं यत् । पादग्रहणपूर्वके प्रणामभेदे 'अनूप्य पादग्रहणं गुरुवत्स्वाभिवादन'मिति मनुः
पादचारिन् पु० पादेन चरति चर-णिनि ३त० । पदातौ । पद्भ्यां गन्तरि त्रि० ।
पादत्राण न० पादौ त्रायेते येन त्रै-करणे ल्युट् । पादुकायाम्
पादप पु० पादेन मूलेन पिबति सिक्तं जलम् पा-क । वृक्षे । पादं पाति रक्षति पा-क । पादपीठे । (गाद्या)
पादपरुहा स्त्री० पादपं रोहति रुह-क । वन्दायाम् (पर-
पादपीठ न०६त० । पादस्थापनासने । 'सिंहासनं तस्य सपादपीठ'मिति भट्टिः । पादुकायां स्त्री०टाप् ।
पादमूल न० ६त० । चरणस्याधोभागे ।
पादरोह पु० पादेन मूलेन रोहति रुह अच् । वटवृक्षे ।
पादवल्मीक न० पादस्य वल्मीकमिव । श्लीपदरोगे (गोद)
पादविक त्रि० पदवीं धावति ठक् । पथिके पथिधावके ।
पादविरजस् स्त्री० पादौ विरजसौ धूलिशून्यौ यस्याः । ५व०। पादुकायाम् । [मोया) दानादौ ।
पादशस् अव्य० पादं पादं ददाति करोति वा शस् । (मोया-
पादशैल पु० पादाकारः शैलः । प्रत्यन्तपर्वते ।
पादस्फोट पु० । पादौ स्फोटयति अण् । रोगभेदे ।
पादाग्र न० ६त० । चरणाग्रभागे प्रपदे ।
पादाङ्गद न० पादस्य अङ्गदमिव । नूपुरे ।
पादात न० पदातीनां समूहः अण् । सैन्यसमुदाये पादाभ्यामतति गच्छति अच् । पदातौ सैन्ये । पादातिपादातिकोऽप्यत्र
पादुका स्त्री० पद-णिच्-क ततः स्वार्थे कन् ह्रस्वः । चर्ममये पादाच्छादने पदार्थे (जुता) । कनभावे पादूरप्यत्र ।
पादुकाकार पु० पादुकां करोति कृ-अण् उप० । चर्मकारे पादूकृत्पादुकाकृदादयोऽप्यत्र ।
पाद्य न० पादाय पादप्रक्षालनाय साधु यत् । पादप्रक्षालनार्थे जले । अर्घा स्त्रीत्वेन स्त्रीलिङ्गमपि । 'पाद्याः पाद्या इत्यादि पाद्यदानमन्त्रः । [आधारे ल्युट् । पानपात्रे ।
पान न० पा-ल्युट् । द्रवद्रव्यस्य गलाधःसंयोजने, रक्षणे च
पानगोष्ठी स्त्री० पानार्थं गोष्ठी सभा । (चक्र) पानार्थं सभायाम्
पानभाजन न० पीयतेऽस्मिन् पा-ल्युट् कर्म० । पानपात्रे पानपात्रादयोऽप्यत्र ।
पानीय न० पीयते यत् पा-अनीयर् । जले । पातव्ये रक्षितव्ये च त्रि० । [(पाना) कुम्भराम् ।
पानीयपृष्ठज पु० पानीयपृष्ठे जलोपरि जायते जन-ड ।
पानीयफल न० ६त० । (माखना) जलकन्दफलभेदे ।
पानीयमूलक न० पानीये मूलं यस्य कप् । सोमराज्याम् ।
पानीयशालिका स्त्री० पीयतेऽस्याम् आधारे अनीयर् तादृशी पानीयवितरणार्थं या या शाला स्वार्थे कन् । प्रपायाम् (जलछत्रगृहे) ।
पानीयामलक न० कर्म० । (पानिआमला) वृक्षभेदे ।
पान्थ पु० पन्थानं गच्छति पथिन्+अण् पन्थादेश० । पथिके ।
पाप न० पाति रक्षति आत्मानमस्मात् पा-अपादाने प । नरकहेतौ दुरदृष्टे, तत्साधने हिंसादौ, ज्योतिषोक्तेषु क्षीणचन्द्ररविप्रभृतिषु ग्रहेषु । [पापनाशके त्रि० ।
पापघ्न पु० पापं हन्ति ठक् । तिले तस्य हि दानेन पापनाशकत्वम् ।
पापचेली स्त्री० पुनःपुनः पचति पच-यङ्-अच् पापचोवायुस्तमीरयति ईर-अण् रस्य लः । (आकनादि) पाठालतायाम्
पापपुरुष पु० पापात्मकः पुरुषः पुरुषाकारः । तन्त्रोक्ते वामकुक्षिस्थे पापात्मके ध्येये नराकारे पदार्थे ।
पापशमनी स्त्री० पापं शम्यतेऽनया शम-णिच्-करणे ल्युट् । ङीप् । शमीवृक्षे ।
पापात्मन् पु० पापयुक्त आत्मा अन्तःकरणं यस्य । पापान्विते जीवे 'पापात्मा पापसम्भव' इति पुराणम् ।
पाप्मन् पु० आप्नोति व्याप्नोति आप-मनिन् नि० । पापे ।
पामन् न० पा-मनिन् । विचर्चिकायां (खोस पावडा) स्त्रीत्वमपि मनन्तात् ङीप् । पामाप्यत्र ।
पामघ्न पु० पामां हन्ति हन-टक् । गन्धके । कटुक्यां स्त्री० ङीप् ।
पामन त्रि० पामास्त्यस्य अस्त्यर्थे न । पामरोगवति ।
पामर त्रि० पाति क्विप् पाः त्रयीधर्मः स म्रियतेऽनेन मृ-घ । मूर्खे, नीचे, खले च । [टाप् । गुडूच्याम् ।
पामरोद्धारा स्त्री० पामरमुद्धरति उद्-हृ-अण् अजादित्वात्
पामारि पु० ६त० । गन्धके तत्सेवने हि पामरोगनाशः ।
पायस पु० पयसि दुग्धे संस्कृतः अण् । परमान्ने । पयःसम्बन्धिनि त्रि० 'पायसं दधिसक्तव'इति स्मृतिः । चन्दने च ।
पायु पु० पा-उण् । अपानवायुस्थाने ।
पाय्य न० मीयतेऽनेन मा-ण्यत् नि० प०देशः । परिमाणे । पानीये न० । निन्दनीये त्रि० । [अमपारत् त ।
पार कर्मसमाप्तौ अद०चु०उभ०सक० सेट् । पारयति ते
पार न० परमेव अण् पारं परं तीरं पृ-घञ् वा । नदीलङ्घने न माधे परे तीरे । पार-अच् घञ् । प्रान्तभागे ।

**पारिश** पु० पिपर्त्ति पृ-णिनि पारी तं श्यति शो-क । (पलाश पिपुल) ख्याते वृक्षे ।

**पारिषद** त्रि० परिषदि भवः तिष्ठति वा अण् । सभास्थे सभ्ये । ण्य । पारिषद्योऽप्यत्र । [ष्यञ् । वलये, कटके ।

**पारिहार्य्य** पु० परिह्रियतेऽसौ परि+हृ-कर्मणि घञ् स्वार्थे

**पारीण** त्रि० पारं गच्छति पार-खञ् । पारगे, कर्मसमाप्तिकारके । [अर्ज्जुने वृक्षे, पृथिवीपतौ च

**पार्थ** पु० पृथायाः अपत्यम् अण् । पृथापुत्रे, युधिष्ठिरादौ,

**पार्थिव** पु० पृथिव्याः ईश्वरः अण् । राजनि । पृथिव्याविकारः इदं वा अण् । भूमिभवे त्रि० । सीतायां स्त्री० । तगरपुष्पे न०

**पार्वण** त्रि० पर्वणि पूर्णिमादौ भवः अण् । पूर्णिमादिभवे 'न शारदः पार्वणशर्वरीश्वर' इति नैषधम् पर्वणि अमावस्यादौ विहितम् अण् । मृतोद्देशे श्राद्धभेदे न० । पृ-वनिप् प्रज्ञाद्यण् । मृगभेदे पु० ।

**पार्वत** पु० पर्वते भवः अण् । (घोड़ानिम) निम्बभेदे, पर्वते जातमात्रे त्रि० । मल्लक्यां, गोपालपूतिकायां, जीवन्त्यां, गौरी-इक्षुतिक्तिकायाम्, क्षुद्रपाषाणभेदायां, धातक्यां, दुर्गायाञ्च स्त्री० ङीप् ।

**पार्वतीनन्दन** पु० ६त० । कार्त्तिकेये, पार्वतीसुतादयोऽप्यत्र ।

**पार्वतेय** न० पर्वते भवं ढक् । सौवीराञ्जने । सूर्य्यावर्त्तवृक्षे पु०

**पार्श्व** पु०न० स्पृश-श्वण् धातोः पृ च । कक्षाधोभागे, समीपे, चक्रे, पाशे च । पर्शूनां पार्श्वास्थ्नां समूहः पर्शु+अण् । पर्शुसमूहे न० ।

**पार्श्वपरिवर्त्तन** न० पार्श्वेन परिवर्त्तनम् । यत्पार्श्वमधःस्थापयित्वा शयितं तत्पार्श्वस्योर्द्ध्वनयने (पाशमोड़ा) पार्श्वस्य परावृत्तौ । तद्रूपस्य हरेः भाद्रशुक्लद्वादश्यां कर्त्तव्ये पार्श्वपरिवर्त्तनाख्ये उत्सवभेदे च ।

**पार्श्वस्थास्थि** न० कर्म० । (पांजर) शरीरपार्श्वस्थिते अस्थि ।

**पार्षद** पु० परिषदि भवस्तत्र स्थितो वा अण् । सभास्थे । ण्यञ् पार्षद्योऽप्यत्र ।

**पार्ष्णि** पु०स्त्री० पृष-नि नि० वृद्धि । पादग्रन्थेः गुल्फस्याधोभागे । (गोडालि) पृष्ठे, सैन्यपृष्ठे, जिगीषायाञ्च पु० ।

**पार्ष्णिग्राह** पु० पार्ष्णिं पृष्ठपटं गृह्णाति अण् । विजयार्थं जिगमिषोः पश्चात्पश्चाद्वाहिनि पृष्ठस्थे राज्ञौ ।

**पाल** रक्षणे चु०उ०स०सेट् । पालयति ते अपीपलत् त

**पाल** त्रि० पालयति पाल-अच् । रक्षके 'पालदोषविनाशे च पाले दण्डो विधीयते' इति स्मृतिः ।

**पालक** पु० पालयति पाल-ण्वुल् । अश्वरक्षके, चित्रकवृक्षे च ।

**पालघ्न** पु० पालं छत्रं हन्ति हन-टक् । छत्राख्ये जलजतृणभेदे

**पालङ्क** पु० पाल-सम्प० क्विप् पाला अङ्क्यते अङ्क-घञ् । (पालङ्) शाकभेदे स्त्रीत्वमपि ङीप् । अत्रैव । कुन्दुरुवृक्षे स्त्री० गौ० ङीष् । कर्मणि यत् पालङ्क्याप्यत्र ।

**पालाश** न० पलाशं पर्णमस्त्यस्य प्रज्ञाद्यण् । तेजपत्रे । तद्वर्णोऽस्यस्य । हरिद्वर्णे पु० तद्वति, पलाशस्येदम् अण् । पलाशसंबन्धिनि च त्रि० । 'ब्राह्मणस्य पालाशोदण्ड' इति स्मृतिः

**पालि(ली)** पाल-इन् वा ङीप् । कोणे, पङ्क्तौ, यूकावास्, सेतौ, प्रान्तभागे, प्रशंसायां, क्रोड़े च । स्वार्थे कन् । कोणे, कर्णपत्रे च

**पालिन्द** पु० पालिं ददाति दा-क पृ० ह्रस्व । कुन्दुरुवृक्षे । श्यामालतायां स्त्री० गौरा० ङीष् ।

**पावक** पु० पुनाति पू-ण्वुल् । वह्नौ, वैद्युताग्नौ च ।

**पावकि** पु० पावक+अपत्यार्थे इञ् । कार्त्तिकेये स हि शिववीर्य्यात् वह्नौ निक्षिप्ताज्जात इति पुराणम् ।

**पावन** पु० पावयति पू-णिच्-ल्यु । अग्नौ, व्यासे, सिह्लके, पीतभृङ्गराजे च । गोमये, प्रायश्चित्ते, कृच्छ्रसाध्ये कर्मणि, च न० । पाव्यतेऽनया ल्युट् ङीप् । गङ्गायां, हरीतक्यां, तुलस्याञ्च स्त्री० । पवित्रतासाधके त्रि० ।

**पाश** पु० पश्यते बध्यतेऽनेन पश-घञ् । मृगविहगादिबन्धने रज्जुभेदे (फांद) रज्जुमात्रे च । केशाद्युत्तरं भागः सघार्थः । यथा केशपाशः । कर्णात् परः शोभार्थः । यथा कर्णपाशः शोभनकर्ण इत्यर्थः । छात्रादिभ्यः पाशप् । अपकृष्टछात्र इत्याद्यर्थे ।

**पाशक** पु० पश-ण्वुल् । द्यूतक्रीडासाधने गुडिकादौ (पाशा) ।

**पाशपाणि** पु० पाशः पाणौ यस्य । वरुणे पाशहस्तादयोऽप्यत्र पाश+इनि । पाशीत्यप्यत्र ।

**पाशुपत** पु० पशुपतेरिदं, सोऽस्य देवता वा अण् । वकवृक्षे । व्रतभेदे, अस्त्रभेदे च न० । तद्भक्ते त्रि० । [विस्वधर्म्मे ।

**पाशुपाल्य** न० पशून् पालयति अण् तस्य भावः ततः ष्यञ् ।

**पाश्चात्त्य** त्रि० पश्चाद् भवः त्यक् । पश्चिमदेशभवे ।

**पाश्या** स्त्री० पाशानां समूहः यत् । पाशसमूहे ।

**पाष(ख)ण्ड** पु० पाति रक्षति दुरितेभ्यः पा-क्विप् पाः वेदधर्म्मस्तं षण्डयति निष्फलं करोति, खण्डयति वा । 'पालनाच्च त्रयीधर्म्मः पाशब्देन निगद्यते (ष)खण्डयन्ति तु तं यस्मात् पा(ष)खण्डस्तेन कीर्त्तिता' इत्युक्ते वेदाचारत्यागिनि

**पाषण्डिन्** पु० पां वेदधर्मं षण्डयति षण्ड+णिच् इनि । पाषण्डे

**पाषाण** पु० पिनष्टि पिष-संचूर्णने आनच् पृ० । प्रस्तरे अल्पार्थे ङीप् । (वाटखारा) तुलामानपाषाणे ।

**पाषाणदारक** पु० पाषाणं दारयति दृ-ण्वुल् । टङ्काख्ये

(पाथरकाटाछेनी) । युच् । माषाणदारणोऽप्यत्र।

पाषाणभेदन पु० पाषाणं भिनत्ति ल्यु । (हाडजोडा) वृक्ष-
भेदे । [वृक्षभेदे ।

पाषाणभेदिन् पु० पाषाणं भिनत्ति भिद्-णिनि (पाथरकुचि)

पि गतौ तु०सक० पर अनिट् । पियति । अपैषीत् ।

पिक पु० अपि-कायति कै क अपेरल्लोप । कोकिले ।

पिकप्रिया स्त्री० ६त । महाजम्ब्वाम् ।

पिकबन्धु पु० ६त० । आम्रवृक्षे ।

पिङ्ग पु० पिजि वर्णे-अच् न्यङ्क्वा० कुत्वम् । मूषके दीपशि-
खाभे पिङ्गलवर्णे च । तद्वति त्रि० । हरिताले न० ।
गोरोचनायां, नालिकायां, दुर्गायाम् हरिद्रायां, हिङ्गुनि,
वंशरोचनायाञ्च स्त्री० टाप् । यमीहके स्त्री० ङीप् ।

पिङ्गल पु० पिङ्ग लाति ला-क, पिजि-कलच् वा कुत्वम् ।
नागभेदे रुद्रे, सूर्यपारिपार्श्विके, वानरे, निधिभेदे, मुनि-
भेदे, मङ्गले यक्षे, स्थावरविषभेदे, क्षुद्रोलूके ६०वत्सरमध्ये
'पिङ्गले चारुपताकिनी । दुर्भिक्षं नर्मदातटे' इत्युक्तलक्षणे
वत्सरभेदे, प्राकृतच्छन्दोग्रन्थकारके, नागभेदे, मुनिभेदे,
दीपशिखासदृशे वर्णे च तद्वति त्रि० । 'कुमुदादिग्गजस्य
योषिति' नाडीभेदे, राजनीतौ, शिंशपावृक्षे वामनाख्य-
दिग्गजस्य योषिति, वेश्याभेदे च स्त्री०टाप् । 'यथा छन्दि
कान्तानां तथा तथाप पिङ्गले' ति पुराणम् ।

पिङ्गलतीक्ष्ण न० लौह धातु कर्म्म । पित्तले ।

पिङ्गाक्ष पु पिङ्गे अक्षिणी यस्य षच् समा० । शिवे तस्य
ललाटनेत्रस्याग्निरूपत्वात्तथात्वम् । पिङ्गलाक्षोऽप्यत्र ।

पिचण्ड पु० अपि+चम-ड तस्य नेत्वम् अपेरल्लोप । उदरे,
पशोरवयवे च । इ इत्वम् । पिचिण्डोऽप्यत्र । [वृहत्कुक्षौ

पिच(चि)ण्डिल त्रि० पिच(चि)ण्ड+मत्वर्थे इलच् । तुन्दिले

पिचव्य पु० पिचवे तूलाय साधु यत् । कार्पासवृक्षे ।

पिचु पु० पच-उ इ० । कार्पासतूले (तुला) कुष्ठभेदे कर्षे,
असुरभेदे, गणभेदे च ।

पिचुक पु० पिचुरिव कायति कै क । मदनवृक्षे (मयना)

पिचुतूल न० ६त० । तूले (तुला) । [निम्बवृक्षे ।

पिचुमन्द(र्द) पु० पिचु कुष्ठ मन्दयति मर्द्दाति वा अच् ।

पिचुल पु० पिचु माति मा-क । झावुकवृक्षे (झाउ) इज्जले
तूले जलवायसे च ।

पिच्च छेदे चु०उभ०सक०सेट् । पिच्चयति ते अपिपिच्चत त ।

पिच्चट न० पिच्च-अटन् । सीसके रङ्गे, नेत्ररोगभेदे च ।

पिच्छ बाधे तु०प०सक सेट् । पिच्छति अपिच्छीत् ।

पिच्छ न० पिच्छ-अच् । मयूराङ्गे, चूडायाञ्च । लाङ्गूले पु ।
शाल्मलिवृक्षे, पूगे, परम्परायाम्, कोषे, मोचायां, भक्तभत
मण्डे । पङ्क्तौ । शिंशपावृक्षे, कोषिकायाम्, अश्वस्य
चरणरोगभेदे च स्त्री० टाप् ।

पिच्छल त्रि० पिच्छ-कलच् । (पिचल) स्निग्धे मसृणे ।

पिच्छलदला स्त्री० पिच्छलं दलं यस्याः । बदरीवृक्षे, पिच्छि-
लपत्रादयोऽप्यत्र । [शिंशपायाम्

पिच्छितिका स्त्री० पिच्छ-क्विप् इ० इट् तत स्वार्थे कन् ।

पिच्छिल त्रि० पिच्छा+मत्वर्थे इलच् । (पेचल) मसृणे स्निग्धे
पिच्छिलानि च दधीनी'ति काव्यप्र० । भक्तमण्डे, शरत्-
व्यञ्जनरूपादौ, मण्डयुक्तभक्ते च । लेसलातकवृक्षे पु ।

पिच्छिलत्वच् पु० पिच्छिला श्लक्ष्णा त्वक् यस्य । नागरङ्गवृक्षे

पिच्छिलसार पु पिच्छिलः सारोऽस्य । मोचरसे ।

पिज दीप्तौ भासे, बधे च अक०हिंसायां दाने च सक० चु०
उभ०सेट इदित् । पिञ्जयति ते अपिपिञ्जत् त ।

पिञ्ज न पिजि अच् । बले। कर्पूरभेदे पु० । व्याकुले त्रि ।
तूले, हरिद्रायां,अहिंसायां च स्त्री०। भावेऽच् । बधे पु०।

पिञ्जट पु० पिजि अटन् । नेत्रमले (पिचुटि) ।

पिञ्जर न० पिजि अरच् । हरिताले, स्वर्णे नागकेशरे, विह-
गादिबन्धनस्थाने, देहास्थिबन्धे च । अश्वभेदे पु । पीत-
रक्तवर्णे पीतवर्णे च पु० । तद्वति त्रि० ।

पिञ्जल न० पिजि-कलच् । हरिताले, कुशपत्रे च । अत्यन्ता
कुलवैकल्यादौ पु । कुशान्तरवेष्टिते साग्रकुशपत्रद्वये स्त्री०
ङीप् । [(पाइज) ।

पिञ्जिका स्त्री० पिजि-ण्वुल् अत इत्वम् । तूलनालिकायां

पिट शब्दे सङ्घाते च भ्वा०पर अक०सेट् । पेटति अपेटीत्

पिट(क) पु० पिट क, । वंशवस्त्रादिनिर्मिते पात्रभेदे (पेटरा
विस्फोटे त्रि० । स्वार्थे कन् अत्रैव ।

पिठ क्लेशे, अक०बधे सक०भ्वा०पर सेट् । पेठति अपेठीत्

पिठर पु०पिठ करन् । वृक्षभेदे । स्थाल्यां, मन्थानदण्डे च
न० । स्थाल्यां पु०स्त्री० स्त्रीत्वे ङीप ।

पिड सङ्घातकरणे भ्वा० आत्म० सक० सेट् इदित् । पिण्डत
अपिपिण्डत । अयं चुरादिरपि उभ० । पिण्डयति ते
अपिपिण्डत् त ।

पिण्ड त्रि पिडि घञ् अच् वा। कठिने घने च। देहे देहैकदेशे
सहैकदेशे, पितृगणानां पितृभ्यो देये गोलाकारे अन्ने गोल-
पिष्टके बोलाह्ले गन्धे कवले गजकुम्भे, मदनवृक्षे च पु० ।
आजीवने, भौष्ट्रे, यजुर्वेदोक्ति पितृभ्यो देय आहि विक्रा-

पिपासु त्रि० पातुमिच्छु पा सन् उ। पानेच्छावति तृषिते।
पिपीतकी स्त्री० वैशाखशुक्लद्वादश्याम्। विप्रभेदे पु०।
पिपीलक पु० अपि-पील ण्वुल् अल्लोप। (डेयोपिपडा) ख्याते कीटे (क्षुद्रपिपडा) ख्याते कीटे स्त्री० टाप्।
पिप्पल न० पा-अलच् पृ०। जले, वस्त्रखण्डभेदे च। अश्वत्थ-वृक्षे, वस्त्रनग्नन्ये पक्षिणि च पु०। कणायां (पिपुल) स्त्री० ङीप् वा ह्रस्व पिप्पलि पिप्पली चात्र। [वृक्षे।
पिप्पलीमूल न० पिप्पल्या इव मूलमस्य। (पिपुलमूल) ख्याते
पिप्लु पु० अपि+प्लु-ड अपेरल्लोप। जडुले। [वृक्षभेदे।
पियाल पु० पी पाने कालन्। प्रियाले (पेयाशाल) (चरगा)
पिल प्रेरणे चु० उभ०सक०सेट्। पेलयति ते अपीपिलत्-त
पिलुक पु० पिल कु ततः कन्। पीलुवृक्षे।
पिलुपर्णी स्त्री० पिलु पर्णमस्याः ङीप्। मोरटालतायाम्।
पिल्ल न० क्लिद ल पिलादेश। क्लिन्नचक्षुषि। तद्युक्ते त्रि०।
पिव सेचने भ्वा० पर०सक सेट् इदित्। पिन्वति अपिन्वीत्।
पिश अवयवे तु०प०पर०सक०सेट्। पिशति अपेशीत्।
पिशङ्ग पु० पिश अङ्गच् किच्च। पद्मधूलितुल्ये पिङ्गलवर्णे तद्वति त्रि०। [प्रेते च।
पिशाच पु० पिशितमश्नाति अश अण् पृ०। देवयोनिभेदे,
पिशाचद्रु पु० इत०। शाखोटवृक्षे। पिशाचकाद्ययोप्यत्र।
पिशित न० पिश क्त। मांसे। जटामांस्यां स्त्री० वा ङीप्।
पिशुन न० पिश उनन् किच्च। कुङ्कुमे। नारदे, काके च पु०। सूचके क्रूरे च त्रि०। (पिङ्डिङ्) शाकभेदे स्त्री० टाप्।
पिष चूर्णने रु० पर० सक० अनिट्। पिनष्टि अपिषत्।
पिष्ट न० पिष क्त। सीसके, पिष्टके च। चूर्णिते त्रि०।
पिष्टक पु०न० पिष्टानां, तण्डुलचूर्णानां विकारः कन्। (पिठे) खाद्यभेदे। [पाकपात्रे कटाहादौ।
पिष्टपचन न० पिष्टं पच्यतेऽनेन पच करणे ल्युट्। पिष्टक-
पिष्टप पु०न०। पिष्यते, पिष्यते वात्र पिष पिष-वा प किं। भुवने
पिष्टात पु० पिष्टमतति अत-अण्। पटवासनार्थे चूर्णगन्धद्रव्ये।
पिष्टिक न० पिष्टे भव ठ। (पिठालि) तण्डुलचूर्णजाते दुग्धा-कारे द्रवे पदार्थे। द्विदलपिष्टजाते स्त्री० टाप्।
पिस गतौ भ्वा पर०स सेट्। पेसति अपेसीत् चङि न ह्रस्व
पिस दीप्तौ वा चु० उभ पक्षे भ्वा पर अक० सेट् इदित्। पिंसयति ते अपिपिंसत् त। पक्षे पिंसति अपिंसीत्।
पिस बाधे बधे च अक० सधे दाने गतौ च सक चु० उभ० सेट्। पेसयति—ते अपीपिसत त।
पिहित त्रि० अपि धा क्त अल्लोप। तिरोहिते आच्छादिते च

पी पाने दि०आत्म०अनिट्। पीयते अपेष्ट। ल्यप् निपीय।
पीठ पु० न० पीयते पिबते वा अत्र पा-ठक् पिठ-क वा पृ० दीर्घ। (पोंड़ि) आसनभेदे व्रतिनामासने च।
पीठसर्पि त्रि० पीठेन सर्पति सृप-णिनि। खञ्जे।
पीड़ वधे विलोडने च चु०उभ०सक०सेट्। पीडयति-ते अपि पीडत्-त अपीपिडत्-त।
पीडन न० पीड ल्युट्। परराष्ट्रस्य नृपादिनाऽभिभवे, शत्रु-नृपादिना आक्रमणे, दुःखोत्पादने च।
पीडा स्त्री पीड-अ। व्यथायां, दुःखे च।
पीडित त्रि० पीड़-क्त। मर्द्दिते, यन्त्रिते दुःखिते च।
पीत न० पा क्त। पाने, हरिताले च। हरिद्रावर्णे पु०। कर्म्मणि क्त। पानकर्म्मणि, पीतवर्णवति च त्रि०।
पीतक न० पीत+स्वार्थे कन्। कुङ्कुमे, हरिताले च। अगु-रुणि पद्मकाष्ठे, पित्तले, माक्षिके श्योनाकभेदे, किरातवृक्षे नान्दीवृक्षे, पीतसाले च पु०। अव्यक्तनामार्थे सङ्ख्याभेदे न०
पीतकदली स्त्री० कर्म०। स्वर्णकदल्याम् (चापाकला)।
पीतकन्द न० पीत कन्दो यस्य (गर्जरे) (गाजर)।
पीतकावेर न० कुत्सित वेर कावेर पीत कावेर यस्मात् ५त०। कुत्सितान्न पीत कुर्व्वति कुङ्कुमे, पित्तले च।
पीतकाष्ठ न० कर्म०। पीतचन्दने पीतागुरुणि।
पीतघोषा स्त्री० कर्म०। पीतपुष्पवत्यां घोषातक्याम्।
पीततण्डुल पु० पीतस्तण्डुलो यस्य। (काङ्गनी) धान्यभेदे। चोरिकाख्ये स्त्री० टाप्।
पीततैला स्त्री पीत तैल यस्याः। ज्योतिष्मतीलतायाम्।
पीतदारु न० कर्म०। सरलवृक्षे, देवदारुणि, हरिद्रुवृक्षे च।
पीतद्रु पु० कर्म०। सरलवृक्षे, दारुहरिद्रायाञ्च।
पीतन न० पीत करोति पीत+णिच् ल्यु। कुङ्कुमे, हरिताले पीतदारुणि च। प्लक्षे आम्रातके च पु०। स्वार्थे कन्। आम्रातके (आमड़ा) पु०।
पीतपर्णी स्त्री० पीत पर्ण यस्याः। (विछुटी) लतायाम्।
पीतपुष्प पु० पीत पुष्प यस्य। कर्णिकारवृक्षे। आढक्याम् इन्द्रवारुण्याञ्च स्त्री० टाप्। मद्धपुष्पा सहदेव्यां, महा-कोषातक्यां त्रपुष्यां, (शशा) च स्त्री ङीप् वा टाप्।
पीतफल(क) पु० पीत फलं यस्य वा कप्। शाखोटवृक्षे, कर्म्मारवृक्षे च।
पीतवालुका स्त्री पीता वालुकेव चूर्णनात्। हरिद्रायाम्।
पीतमुद्ग पु० कर्म०। (सोनामुग) मुद्गभेदे।
पीतयूथी स्त्री कर्म०। स्वर्णयूथ्याम्।

**पुनर्वसु** पु० पुनर्+वस-उ । विष्णौ, शिवे च । अश्विन्यवधिके सप्तमे नक्षत्रे द्विव० ।

**पुन्नाग** पु० पुमान् नाग इव श्रेष्ठः प्रधानत्वात् स इव । स्वनामख्याते पुष्पप्रधाने वृक्षभेदे, श्वेतोत्पले, जातीफले, पाण्डुवर्णहस्तिनि, नरश्रेष्ठे च । [पुन्नाडोऽप्यत्र ।

**पुन्नाट** पु० पुमानिव नाटयति नट-अच् । चक्रमर्दे । नड-अच् ।

**पुन्नामनरक** पु० पुत् इति नाम यस्य कर्म्म० । परदाराभिगमनादिभिः येऽष्टभिः पातकैः भोग्ये नरकभेदे, परदारादिकं प्रकृत्य 'एतैस्तु पापैः पुरुषः पुन्नामनरके पतेदि'ति पुराणम् ।

**पुमस्** पु०. पाति पा-डुमसुन् । पुरुषे, मनुष्ये च । व्याकरणोक्ते संस्कारविशेषाधारे शब्दभेदे च ।

**पुर** अग्रगतौ तु०पर०सक०सेट् । पुरति अपोरीत् ।

**पुरःसर** त्रि०पुरोऽग्रे सरति सृ-ट । अग्रगामिनि स्त्रियां ङीप् ।

**पुर** न० पुर-अग्रगमने क । गेहे देहे पाटलिपुत्रे नगरभेदे, कुसुमदलवृत्तौ, नागरमुस्तायां, चर्म्मणि, गृहोपरिगृहे च । बहुग्रामीणव्यवहारस्थाने बहुहट्टादियुक्ते प्रधानग्रामे न० स्त्री० । स्त्रीत्वे ङीप् । राशौ, पीतभिण्टायाम्, गुग्गुलौ च पु० ।

**पुर्** स्त्री० पिपर्त्ति पॄ-दीर्घे क्विप् । नगर्य्याम् ।

**पुरञ्जन** पु०पुरं देहं स्वादृष्टेन स्वसान्निध्येन वा जनयति खच् । जीवे तददृष्टेन तत्सान्निध्ये न च हि देहारम्भः ।

**पुरञ्जय** पु० काकुत्स्थाख्ये सूर्य्यवंश्ये नृपभेदे ।

**पुरतस्** अव्य० पुर-अतसुच् । अग्रत इत्यर्थे ।

**पुरद्विष्** पु० पुराणां मयनिर्म्मितानां नगराणां दाहकत्वात् द्विट् द्विष-क्विप् । शिवे । पुरारिप्रभृतयोऽप्यत्र ।

**पुरन्दर** पु०पुरं दारयति दृ-खच् । इन्द्रे, चौरे, (चइ) चव्ये च

**पुरन्ध्रि(न्ध्री)** पुरं गेहं धारयति पालयति धृ-खच् गौरा० ङीषो०वा ह्रस्व० । बहुकुटुम्बवत्याम्, पतिपुत्रवत्याञ्च स्त्रियां, 'स्वर्गेच्छे व्यग्रपुरन्ध्रिवर्गमि'ति कुमार ।

**पुरस्** अव्य०पूर्व्वस्मिन् कालादौ असि पुरादेशः । अग्रत इत्यर्थे

**पुरस्कार** पु० पुरस्+कृ-घञ् । अग्रकरणे, पूजने च ।

**पुरस्कृत** त्रि० पुरस्+कृ-क्त । पूजिते, अग्रकृते च । 'पशुना-प्यपुरस्कृतेने'ति नैषधम् । अभियुक्ते, अरियस्ते, स्वीकृते, सिक्ते च त्रि० ।

**पुरस्तात्** अव्य० पूर्व्व-अस्ताति पुरादेशः । दिग्देशकालवृत्तेः प्रथमापञ्चमीसप्तम्यन्तस्य पूर्व्वशब्दस्यार्थे, अग्रत इत्यर्थे च ।

**पुरा** अव्य० पुर-का । अविच्छेदेन क्रियाकरणे, पुराणे अतीते, भाविनि, निकटे, पुरावृत्ते च । पुर+क टाप् । पूर्व्वस्यां दिशि, सुगन्धिद्रव्यभेदे च स्त्री० ।

**पुराण** त्रि०पुरा-भवः ट्यु नि०तुट् न, पुरा नीयते नी-ड वा पूर्व्व० णत्वम्, पुराभवे । 'सर्गश्च प्रतिसर्गश्च वंशोमन्वन्तराणि च । वंशानुचरितञ्चैव पुराणं पञ्चलक्षणमि'त्युक्ते व्यासादिप्रणीते शास्त्रभेदे न० ।

**पुरातन** त्रि० पुरा भवं पुरा ट्युल्+तुट् च । पुराभवे ।

**पुराणपुरुष** पु० पुराणैरुपस्तुत्यः पुरुषः शाक०, कर्म्म० वा । विष्णौ, वृद्धे पुरुषे च ।

**पुरावृत्त** न० पुरा पूर्व्वस्मिन् काले यत् वृत्तं भूतं लक्षणया तदाश्रितकथादि । इतिहासे, तत्प्रतिपादकग्रन्थे महाभारतादौ च । [तत्राथाम् ।

**पुरासिनी** स्त्री० पुरं स्थूहमस्यति अस णिनि । सहदेवी

**पुरीतत्** स्त्री०न० पुरीं देहं तनोति तन-क्विप् । देहारम्भके (आंत) अन्त्राख्ये नाडीभेदे ।

**पुरीमोह** पु० पुरीं देहं मोहयति मुह-णिच्-अण् । धुस्तूरे ।

**पुरीष** न० । पॄ-दीर्घे ईषन् किच्च । विष्ठायाम् ।

**पुरु** पु० पॄ-दीर्घे कु । ययातेर्न्नृपस्य कनिष्ठपुत्रे यद्वशात् कुरूणां पौरवेति संज्ञा । स्वर्गे, परागे, दैत्यभेदे, नदीभेदे च । प्रचुरे त्रि० । ['दैवं पुरुषकारश्चे'ति स्मृतिः

**पुरुषकार** पु० पुरुषस्य कारः कृप-घञ् । पौरुषे पुरुषचेष्टिते

**पुरुषद्घ्न** त्रि० पुरुष उन्मानं यस्य दघ्नच् । पुरुषतुल्योन्माने, द्वयसच् । पुरुषद्वयसोऽप्यत्र स्त्रियां ङीप् । [नागादयोऽप्यत्र

**पुरुषसिंह** पु० पुरुषः सिंह इव उपमि० । नरश्रेष्ठे एवं पुरुष

**पुरुषार्थ** पु०६त० । धर्म्मार्थकाममोक्षरूपेषु पुरुषप्रयोजनेषु

**पुरुषोत्तम** पु० पुरुषेषु उत्तमः कर्म्म० वा । विष्णौ, उत्तमपुरुषे च । 'अथ भक्तिं पुरुषोत्तमादि'ति नैषधम् ।

**पुरुह** त्रि० पुरु+हन-ड । प्रचुरे । हु । पुरुहूरप्यत्र ।

**पुरुहूत** पु० पुरूणि प्रचुराणि हूतानि नामान्यस्य । इन्द्रे ।

**पुरूरवस्** पु० बुधेनेलायामुत्पादिते उर्व्वशीकान्ते चन्द्रवंश्ये नृपे

**पुरोग** त्रि०पुरोऽग्रे गच्छति गम-ड । अग्रगामिनि प्रधाने च । खच् । पुरोगमः, णिनि । पुरोगामीतिचाप्यत्र ।

**पुरोडाश(ष)** पु० पुरोद:श्यते दाश-कर्म्मणि क्विप्, घञ् वा । हविषि यज्ञियद्रव्ये ।

**पुरोधस्** पु० पुरोऽग्रे धीयते धा-असि किच्च । पुरोहिते ।

**पुरोभागिन्** त्रि० पुरः पूर्व्वं भजते भज-घिनुण् । गुणत्यागेन दोषमात्रग्राहिणि । अग्रभागवति त्रि० ।

**पुरोहित** पु० पुरोऽग्रे दृष्टादृष्टफलेषु कर्म्मसु धीयतेऽसौ धा-क्त । राज्ञां दृष्टादृष्टफलकेषु कर्म्मसु पुरस्कृते जने ।

**पूर्व्व** पूर्त्तौ भ्वा०पर०सक०सेट् । पूर्व्वति अपूर्व्वीत् ।

पुर्व्व निकेतने चुरा० पर० उभ० सेट्। पूर्व्वयति ते, अपुपूर्व्वत् त।

पुल्ल उच्छ्रितौ वा चु० उभ० पक्षे तु० प० अक० सेट्। पोलयति ते पुलति अपूपुलत् त अपोलीत्। [न०

पुल महत्त्वे भ्वा० प० अक० सेट्। पोलति ते अपोलीत्। [पुलाके

पुल(क) पु० पुल क तत स्वार्थे कन् वा। रोमाञ्चे, कह्रुके च

पुलकिन् पु० पुलकस्तदाकार पुष्पमस्त्यस्य इनि। धाराकदम्बे।

पुलस्ति(स्त्य) पु० मुनिभेदे।

पुलह पु० मुनिभेदे। [धान्ये, मक्तपुलिकायां, चिपे च।

पुलाक पु० पुल+अक अण्। कथिते, मस्तम्बुन्ये (आगड़ा)

पुलायित न० पुल+क्यष् क्त। अश्वगतिभेदे।

पुलिन न० पुल इनन् किच्च। तोयाद्दुत्थिते तटे (चड़ा)

पुलिन्द पु० पुल किन्दच्। चाण्डालभेदे।

पुलोमजा स्त्री० पुलोमा असुरभेदस्तस्मात् जायते जन ड। इन्द्राण्यां, शच्याम्। [शचीमिन्द्र उपयेमे।

पुलोमन् पु० इन्द्रस्य हेव्ये असुरभेदे य जित्वा तत्कन्यां

पुलोमारि पु० ६त०। इन्द्रे पुलोमशत्रुप्रभृतयोऽप्यत्र।

पुष पुष्टौ अक० पोषणे सक० दि० पर० अनिट्। पुष्यति अपुषत्

पुष पुष्टौ अक० पोषणे सक० क्र्या० प० सेट्। पुष्णाति अपोषीत्

पुष भ्वा० पर० अक० सेट्। पोषति अपोषीत्।

पुष धृतौ चु० उभ० सक० सेट्। पोषयति ते अपूपुषत् त।

पुषा स्त्री० पुष्णाति पुष क टाप्। लाङ्गलीवृक्षे।

पुषित त्रि० पुष-क्त। पुष्टे, प्रतिपालिते पक्षिशावादौ।

पुष्कर न० पुष-करन् कस्य नेत्वम्। गजकराग्रे, वाद्यभाण्डे, मुखे, जले, आकाशे, खड्गफलके, पद्मे, तीर्थभेदे कुष्ठौषधौ, पद्मकोषे, द्वीपभेदे, युद्धे च। नागभेदे, रोगभेदे, नृपभेदे, सारसपक्षिणि च पु०। [न्याम्। पुष्करनाभोऽप्यत्र।

पुष्करकर्णिका स्त्री० पुष्करस्येव कर्णिकास्याः। स्थलपद्मि-

पुष्करिणी स्त्री० पुष्कर+समूहार्थे अस्त्यर्थे च इनि। स्थलपद्मिन्याम्, पद्मसमूहे, तद्युक्तसरसि च। पुष्करमूले, शतधनुः परिमितदीर्घविस्तारे जलाशयभेदे च।

पुष्करिन् पु० पुष्करं शुण्डाग्रमस्त्यस्य इनि। गजे।

पुष्कल त्रि० पुष कलच् कस्य नेत्वम्। 'चत्वारिंशन्मिता कुञ्चिः कुञ्चयोऽष्टौ च पुष्कल' मित्युक्ते परिमाणभेदे। श्रेष्ठे, बहु उपस्थिते च त्रि०।

पुष्टि स्त्री० पुष क्तिन्। पोषणे वृद्धौ, वर्द्धिष्णुतायां धनगर्व्वाण्यां, इत्यादौ पूज्यषोडशमातृकामध्ये मातृकाभेदे च।

पुष्टिदा स्त्री० पुष्टिं ददाति दा क। अश्वगन्धायाम् वृद्धौ, पोषणदात्र्यां, स्त्रियाञ्च।

पुष्प विकासे दि पर० अक० सेट्। पुष्प्यति अपुष्पीत्।

पुष्प न० पुष्प-अच्। कुसुमे स्त्रीरजसि, विकासे, कुवेरस्य विमाने नेत्ररोगभेदे च। स्वार्थे कन्। कुवेरस्य विमाने, नेत्ररोगभेदे, रत्नमयकङ्कणे, रसाञ्जने, लौहकासे, मद-द्वारयोः मध्ये, काशीसे च। [चयमपात्रे

पुष्पकरण्डक न० ६त०। (कुवेरस्यापि) वस्त्रादिनिर्म्मिते पुष्प-

पुष्पकेतु पु० पुष्पनिर्म्मितः केतुरस्य। कुसुमाञ्जने।

पुष्पचाप पु० पुष्पमयं चापमस्य। कामदेवे पुष्पधन्वादयोऽप्यत्र

पुष्पचामर पु० पुष्पं चामर इव यस्य। मदनकदम्बे।

पुष्पदन्त पु० वायुकोणस्थे दिग्गजे विद्याधरभेदे च।

पुष्पदन्तक पु० महिम्न इत्यादिस्तवकर्त्तरि गन्धर्वभेदे।

पुष्पपुर न० पाटलिपुत्रनगरे कुसुमपुरे (पाटना)

पुष्पफल पु० पुष्पयुक्तं फलमस्य। कपित्थे।

पुष्पमास पु० पुष्पप्रधानो मासः शाक०। चैत्रे वसन्तसमये।

पुष्परस पु० ६त०। मकरन्दे कुसुमनिर्यासे।

पुष्पराग पु० पुष्पस्येव रागो वर्णो यस्य। मणिभेदे (पद्मराग)

पुष्परोचन पु० पुष्पं रोचनेव यस्य। नागकेसरे। [धात्र

पुष्पलिह् पु० पुष्पं लेढि लिह क्विप्। मधुकरे। क। पुष्पलिट्

पुष्पवती स्त्री० पुष्पं स्त्रीरजः अस्त्यस्य मतुप् मस्य व। ऋतुमत्यां स्त्रियाम्। पुष्पवन्तौ द्वि० दिवाकरनिशाकरयोः मिलितयोः द्विव।

पुष्पवाटी स्त्री० ६त०। पुष्पोद्याने। स्वार्थे कन्। अत्रैव। 'दक्षिणेन पुष्पवाटिकामवाम इव श्रूयते' इति शकुन्तला।

पुष्पवाण पु० पुष्पाण्येव वाणा यस्य। कामे पुष्पशरादयोऽप्यत्र

पुष्पशरासन पु० पुष्पमयं शरासनं धनुर्यस्य। कामे।

पुष्पशून्य पु० ६त०। उडुम्बरे। पुष्परहितमात्रे त्रि०।

पुष्पसमय पु० ६त०। वसन्ते ऋतौ।

पुष्पाजीव पु० पुष्पमाजीवति आ+जीव-अण्। मालाकारे।

पुष्पाञ्जन न० ६त०। कुसुमाञ्जने (कोमलाञ्जन)। [तयात्वम्

पुष्पासव न० ६त० रीतौपुष्पे तस्य पुष्पोद्भवत्वात् मादकत्वाच्च

पुष्पाह्वा स्त्री० पुष्पमित्याह्वा यस्याः। शतपुष्पायाम्।

पुष्पिताग्रा स्त्री० अर्द्धसमे छन्दोभेदे।

पुष्य पु० स्त्री० कार्य्यं पुष्यति पुष-कर्त्तरि यत् नि०। अश्विन्यादि (२७) नक्षत्रमध्ये अष्टमे नक्षत्रे, स्त्रीत्वे टाप्।

पुष्यरथ पु० कर्म्म० यात्रोत्सवाद्यर्थे रथे।

पुष्यलक पु० पुष-इन् पुषि पुष्टिस्तत्र अलति पर्याप्नोति अल अच्। गन्धमृगे चणभेदे। कोऽपि पुष्यलकोऽप्यत्र' इति।

पुष्यस्नान न० पुष्यनक्षत्रे स्नानम्। शास्त्रोक्तविधानेन

पुष्पनक्षत्रयुक्तकालेऽभिषेकभेदे । [ते अपुपुस्तत् त ।

पुस्त वधे, अनादरे, आदरे च चु०उभ०सक०सेट् । पुस्तयति

पुस्त न०पुस-क्त । 'मृदा वा दारुणा वापि वस्त्रेणाप्यथ चर्मणा लोहरत्नैः कृतं वापि पुस्तमित्यभिधीयते' इत्युक्ते लिप्यादिशिल्पकर्मणि । स्वार्थे कन् । लिप्याधारे ग्रन्थे, पु०स्त्री० स्त्रीत्वे ङीप् ।

पू शोधे दि०आत्म सक०सेट् । पूयते अपविष्ट ।

पू शोधे भ्वा०आ०सक०सेट् । पवते अपविष्ट । [अपविष्ट

पू शोधे क्र्यादि० प्वा० उभ० सक०सेट् पुनाति पुनीते अपावीत् ।

पूग पु० पू-गन् कित्त्व । (सुपारि) वृक्षे, समूहे छन्दसि, भावे कण्टकिवृक्षे च ।

पूज पूजने चु०उभ०सक०सेट् । पूजयति ते अपूपुजत् त ।

पूजा स्त्री० पूज-अ । अर्चने । ल्युट् । पूजनमप्यत्र न० ।

पूजार्ह त्रि० पूजामर्हति अण् । पूजनयोग्ये ।

पूज्य पु० पूज-यत् । श्वशुरे । पूजनीयमात्रे त्रि० ।

पूण राशीकरणे चु०उभ०सक०सेट् । पूणयति ते अपूपुणत् त

पूत न०पू-क्त । अपनीततुषे, (आगड़ारहित) बहुलीकृते धान्ये च । व्रतादिना शुद्धे त्रि० । सत्ये । शङ्खे, श्वेतकुशे, विकङ्कतवृक्षे च पु० । दूर्वायां स्त्री० टाप् ।

पूतक्रतायी स्त्री०पूतक्रतोरिन्द्रस्य पत्नी ङीप् ऐङ् च । शच्याम्

पूतक्रतु पु० क्रतुभिः पूतः, पूताः पवित्रतास्मात्काः क्रतयो यस्याः यस्य वा । इन्द्रे ।

पूतगन्ध पु० पूतोगन्धो यस्य । वर्वरे (वावुइतुलसी)

पूतकुशा न० कर्म० । श्वेतकुशे ।

पूतना स्त्री० पूतं करोति पूत+णिच्-युच् । हरीतक्यां, गन्धमास्यां, बकासुरभगिन्यां, या विषाक्तं स्तन्यं पाययन्ती कृष्णेन हता । रोगभेदे,बालकमातृकाभेदे च 'पूतना जम्भकादयः'

पूतनारि पु० ६त० । श्रीकृष्णे ।

पूतफल पु० पूतानि फलान्यस्य । पनसे (कांटाल) ।

पूति न० पू-क्तिच् । रोहिषतृणे । क्तिन् । पवित्रतायाम् । पूयविशरणे दुर्गन्धे च क्तिच् । दुर्गन्धे । दुर्गन्धवति त्रि० ।

पूतिक न० पूत्या दुर्गन्धेन कायति कै-क । विष्ठायाम्, पूतिकरञ्जे पु० । शाकभेदे स्त्री०(पुइ) 'पूतिका मलघातिके'ति स्मृतिः

पूतिकरज(ञ्ज) पु० पूतियुक्तः करजः(ञ्जः) (नाटाकरमजा) करञ्जभेदे । [दारुणि । संज्ञायां कन् । सरलवृक्षे पु० ।

पूतिकाष्ठ ६त० पूतेः पावनार्थं काष्ठम् चतुर्थ्यर्थे ६त० । देव

पूतिगन्ध पु० पूतिर्दुष्टो गन्धो यस्य । गन्धके, इङ्गुदीवृक्षे च । कर्म० । दुर्गन्धे पु० ।

पूतिगन्धि पु० पूतिर्दुष्टोगन्धो यस्य इत् समा० । दुर्गन्धवति ।

पूतितैला स्त्री० पूति दुर्गन्धं तैलं यस्याः । ज्योतिष्मत्याम् ।

पूतिपत्त्र पु० पूतीनि पत्त्राण्यस्य । श्योनाकभेदे । [जम्बीरभेदे

पूतिपुष्पिका स्त्री० पूतीनि पुष्पाण्यस्याः । मातुलुङ्गायाम्

पूतिफला(ली) पूतीनि फलान्यस्याः वा ङीप् । सोमराज्याम् ।

पूतिमयूरिका स्त्री० पूतिर्मयूरीव ततः इवार्थे कन् । अजमोदायाम् । [युक्तवायौ पु० ।

पूतिमेद पु० पूतिर्मेदोऽस्य । अरिमेदे विट्खदिरे । [दुष्टगन्ध

पूतिवात पु० पूत्यै पवित्रतायै वातोऽस्य । बिल्ववृक्षे । कर्म०।

पूतिवृक्ष पु० कर्म० । श्योनाकवृक्षे ।

पूप पु० पू पक् । पिष्टके (पिठा) ।

पूपाष्टका स्त्री० अष्ट परिमाणं यस्याः कन् अष्टका अष्टमी उपचारात् तत्कर्तव्यं श्राद्धम् पूपद्रव्यसाधनाष्टका । कर्म० अग्रहायण्याः परतः कृष्णाष्टमीविहिते श्राद्धे ।

पूय दुर्गन्धे अक० भेदने विशरणे च सक० दिवा० आत्म०सेट् । पूयते अपूयिष्ट ।

पूय न० पूय-अच् । व्रणादिनिःसृते रक्तविकारभेदे (पूज) ।

पूयारि पु०६त० । निम्बवृक्षे पुत्रनागकादयोप्यत्र । [अपूरिष्ट

पूर पूर्तौ प्रीणने च दिवा० आत्म० सक० सेट् । पूर्यते अपूरि-

पूर पु० पूर-क । जलसमूहे, खाद्यभेदे, व्रणशुद्धौ च ।

पूरक पु० पूर-ण्वुल् । वीजपूरे, जम्बीरभेदे (टावा लेवु) अङ्कशास्त्रप्रसिद्धे गुणके, तन्त्रादिप्रसिद्धे प्राणायामाङ्गे वायूत्कर्षण रूपे व्यापारभेदे च । पूरणकर्तरि त्रि० । मृतस्यातिवाहिकदेहोत्तरं प्रेतदेहनिर्वाहकेदशाहमध्ये देये पिण्डदशकेन०

पूरण न० पूर-ल्युट् । अङ्कशास्त्रप्रसिद्धे गुणने, वृष्टौ, कुटन्नटे, वापतन्तुषु च । ल्यु । सेतौ, समुद्रे च पु० । सङ्ख्यापूरणे पूरयितरि च त्रि० । यथा द्वयोः पूरणः । द्वितीय० ।

पूरणी स्त्री० पूर्यतेऽनया । पूरणसङ्ख्यायां यथा द्वयोः पूरणी द्वितीया । शाल्मलिवृक्षे च ।

पूरित त्रि० पूर-क्त । पूर्णे, गुणिते च ।

पूरुष पूर उषन् । पुरुषे, नरे ।

पूर्ण त्रि० पूर-क्त नि० । पूरिते, सकले, समग्रे च ज्योतिषोक्तासु उभयपक्षयोः पञ्चमीदशमीपञ्चदशीषु च स्त्री० ।

पूर्णकोष्ठा स्त्री० पूर्णं कोष्ठं यस्याः । नागरमुस्तायाम् ।

पूर्णपात्र न० कर्म० । हर्षकाले पुत्रजननोत्सवजहर्षात् व्याकृष्य वस्त्रादेर्ग्रहणे, होमान्ते ब्रह्मदक्षिणार्थतया देये 'अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम् । पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते' इत्युक्तमानवति तण्डुलादौ ।

**पूर्णमास** पु० पूर्णमास्यां विहित अण् । पूर्णिमायां कर्त्तव्ये यागभेदे दर्शपूर्णमासाभ्यां यजेतेति श्रुतिः । [तिथौ ।

**पूर्णमासी** स्त्री० पूर्णोमासश्चन्द्रमा यस्यां गौरा० ङीष् । पूर्णिमा-

**पूर्णबीज** पु० पूर्णानि बीजान्यत्र । बीजपूरे । (टावानेबु)

**पूर्णिमा** स्त्री० पूर् क्तिन् नि० पूर्त्तिं पूरणं चन्द्रकलापूरणं मिमीते मा क । चन्द्रस्य पञ्चदशकलापूरणायां तिथौ ।

**पूर्त्त** न० पूर क्त नि० । खातादिकर्मणि विश्वजनोद्देशेन जला-शयदानादौ । भावे क्त । पूरणे न० । कर्मणि क्त, पूरिते त्रि० ।

**पूर्व(र्ब)** निवासे अक० निमन्त्रणे सक० चुरा० उभ० सेट् पक्षे भ्वा० पर० । पूर्व(र्ब)यति पूर्व(र्ब)ति अपुपूर्व(र्ब)त् । अपूर्वी(र्बी)त्

**पूर्व(र्ब)** त्रि० पूर्व(र्ब) अच् । प्रथमे, आदौ-दिग्देशकाले, समस्ते ज्येष्ठे भ्रातरि च । सर्वनामतास्य [भगिन्यां स्त्री० ङीप् ।

**पूर्व(र्ब)ज** पु० पूर्व(र्ब) जायते जन-ड । ज्येष्ठभ्रातरि । ज्येष्ठ-

**पूर्व(र्ब)दिक्पति** पु० ६त० । इन्द्रे ।

**पूर्व(र्ब)दिश्** स्त्री० कर्म० । प्रथमसूर्य्योदयसम्बन्धायां दिशि ।

**पूर्व(र्ब)देव** पु० पूर्व(र्ब) देव पश्चात् पापाचारणात् भ्रष्ट, अथ वा पूर्व(र्ब) श्चासौ देव । असुरे ।

**पूर्व(र्ब)देश** पु० कर्म० । प्राच्यामवस्थिते जनपदे ।

**पूर्व(र्ब)पक्ष** पु० कर्म० । ऋणादानविवादरूपे व्यवहारे प्रतिज्ञारूपे प्रथमेऽवयवे, 'पूर्व(र्ब)पक्षोभवेद्यस्य भवेत्तस्य साक्षिणः' इति स्मृतिः । 'विषयो विशयश्चैव पूर्व(र्ब)पक्षस्तथोत्तरम् । निर्ण-यश्चेति सिद्धान्तः शास्त्रेऽधिकरणं स्मृतमिति' मीमांसोक्ते न्यायावयवभेदे सिद्धान्तविरुद्धकोटिप्रतिपादके वाक्ये ।

**पूर्व(र्ब)पद** न० कर्म० । व्याकरणोक्ते उत्तरपदात्प्राग्वर्त्तिनि प्रात्त्यिकि समासस्य प्रथमावयवे च सुप्तिङन्तरूपे पदे ।

**पूर्व(र्ब)पर्वत** पु० कर्म० । उदयाचले । यत्र सूर्य्यस्य प्रथमदर्शनं तस्य पर्वते । स चानियतस्थितिकोऽपि यत्र स्थाने प्रथमं सूर्य्योदर्शनयोग्यो भवति तदेव स्थानं पर्वत इति व्यव-ह्रियते । पूर्व(र्ब)शैलादयोऽप्यत्र ।

**पूर्व(र्ब)फल्गुनी** स्त्री० द्विग० । अश्विन्यवधिके एकादशे नक्षत्रे ।

**पूर्व(र्ब)भाद्रपद** पु० स्त्री० । अश्विन्यादिनक्षत्रेषु पञ्चविंशतितमे नक्षत्रे । [विधायैव सूत्रधारो निष्क्रामति इति वा रूप०

**पूर्व(र्ब)रङ्ग** पु० नाट्यशाले नटकर्त्तव्ये सङ्गीतादौ । 'पूर्वरङ्ग

**पूर्व(र्ब)राग** पु० रञ्ज-घञ् नलोप कर्म० । नायकयोर्मिलनात् प्राग्दर्शनश्रवणादिजन्यरतिभेदे । नायिका सख्यादौ विप्रलम्भे । 'श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः । दशाविशेषो योऽप्राप्तौ पूर्व(र्ब)रागः स उच्यते' इत्युज्ज्व-लमणौ अवस्थाभेदे ।

**पूर्व(र्ब)रूप** न० कर्म० । वैद्यकोक्ते भाविरोगनिर्णायकचिह्नभेदे ।

**पूर्व(र्ब)वादिन्** पु० व्यवहारे पूर्व(र्ब) प्रथमं वदति वद-णिनि । प्रथमाभियोक्तरि वादिनि (फैरादी) ।

**पूर्वा(र्बा)षाढा** स्त्री० अश्विन्यादिषु नक्षत्रेषु विंशतितमे नक्षत्रे ।

**पूर्वा(र्बा)ह्ण** पु० पूर्व(र्ब)मह्नः एकदेशिस० टच् समा० अह्नादेश णत्वम् । त्रिधा विभक्तदिवसस्य प्रथमे भागे, 'पूर्वाह्णो वै देवानामिति श्रुतिः । प्रथमे अर्द्धदिने च 'अश्वत्थं वन्दये-न्नित्यं पूर्वा(र्बा)ह्णे प्रहरद्वयं' इति पुराणम् । [दिवसे

**पूर्वे(र्बे)द्युस्** अव्य० पूर्व(र्ब)स्मिन् दिवसे पूर्व+(र्ब)+एद्युस । प्रथम

**पूल** सङ्घाते वा चु० उभ० पक्षे भ्वा पर० सक० सेट् । पूलयति ते पूलति । अपूपुलत् त अपूलीत् ।

**पूष** वृद्धौ अक० भ्वा० पर० सेट् । पूषति अपूषीत ।

**पूष** पु० पूष क । महादारुवृक्षे (तूत) ण्वुल् । पूषकोऽपि अत्रैव ।

**पूषन्** पु० पूष-कनिन् । सूर्य्ये । [व्याप्रियते व्यापृत ।

**पृ** व्यापारे तु० आत्म० अक० अनिट् प्रायेणायम् व्याङ्पूर्व ।

**पृ** प्रीतौ स्वा पर० सक० अनिट् । पृणोति अपार्षीत् ।

**पृ** पालने जुहो० पर० सक० अनिट् वा दीर्घ । पिपर्त्ति पिपृत-पिपुर्त्त । अपार्षीत्-अपारीत् । पप्रतु -रपरतु ।

**पृ** पूर्त्तौ चु० उभ० सक० सेट । पारयति ते अपीपरत्-त ।

**पृक्का** स्त्री० पृच-कन् न्यङ्क्वा० कत्वम् । (पिडिङ) शाकभेदे ।

**पृच** सम्पर्के अदा आत्म० अक० सेट् । पृक्ते अपर्चिष्ट । क्त । पृक्त ।

**पृच** सम्पर्के रु० पर स० सेट् । पृणक्ति अपर्चीत् । क्त । पृक्त ।

**पृच** संयमने सक० सम्पर्के अक चु उभ पक्षे भ्वा० पर सेट् । पर्चयति-ते पर्चति । अपीपृचत्-त अपपर्चत्-त अपर्चीत ।

**पृच्छा** स्त्री० प्रच्छ अङ् सम्प्रसारणम् । प्रश्ने ज्ञातुमिच्छया कथनाय प्रेरणे ।

**पृज** सम्पर्के, अदा आ० सक० सेट् । पृक्ते अपर्जिष्ट । क्त पृक्त ।

**पृड** हर्षे तु० पर० अक० सेट् । पृडति । अपर्डीत् ।

**पृण** प्रीणने तु० पर० सक० सेट । पृणति अपर्णीत ।

**पृतना** स्त्री० पृ तनन् किच्च । सेनायाम् सङ्ख्याविशेषान्वित-रथहस्त्यश्वादिसैन्यभेदे च (रथा २४३ गजाः २४३ अश्वाः ७२९ पदात्य १२१५ )।

**पृतनाषाह्** पु० पृतनां साहयते सह णिच् क्विप् । इन्द्रे । तत्र प्रथमे षत्व षत्वम् नात्वम् । [अपपर्थत् त ।

**पृथ** प्रक्षेपे चुरा उभ० सक० सेट् । पार्थयति ते अपीपृथत् त

**पृथक्** अव्य० पृथ-कञि । भिन्ने नानार्थे, विनार्थे च ।

**पृथक्त्व** न० पृथक् शब्दस्य भाव त्व । वैशेषिकोक्ते पृथगिति-बुद्धिसाधारणे गुणभेदे ।

**पृथक्त्वचा** स्त्री० पृथक् त्वचा यस्याः । मूर्वायाम् ।

पृथक्पर्णी स्त्री० पृथक् पर्णान्यस्याः ङीप् । (चाकुलिया) क्षुपभेदे । [भेदे, विभेदे ।
पृथगात्मता स्त्री० पृथक् आत्मा स्वरूपं यस्य तस्य भावः तल् ।
पृथगात्मिका स्त्री० पृथक् भिन्न आत्मा यस्याः कप् । व्यक्तौ सामान्यधर्मा स्व यथा सर्व्वत्र समरूपतया सर्व्वत्रानुगमकत्वम् नैवं व्यक्ते स्तस्याः भिन्नभिन्नात्मत्वात् ।
पृथग्जन पु० पृथक् भिन्नो जनो यस्मात् । नीचे, मूर्खे, पामरे च
पृथग्विध त्रि० पृथक् भिन्ना भिन्ना विधा यस्य । नानारूपे ।
पृथग्बीज पु० पृथक् बीजान्यस्य । भल्लातकवृक्षे (भेला) ।
पृथा स्त्री० कुन्तिभोजकन्यायाम् कुन्त्याम् ।
पृथाज पु० पृथाया जायते जन-ड । कुन्तीपुत्रे युधिष्ठिरादौ, अर्ज्जुनवृक्षे च । पृथासूनादयोऽप्यत्र ।
पृथि(थ)वी स्त्री० प्रथते विस्तारमेति प्रथ-षिवन् (ष्वन्)वा नि० संप्रसारणं षित्त्वात् ङीप् । धरायाम् क्षितौ ।
पृथिवीपति पु० ६त० । नृपतौ भूपतौ । पृथिवीपालादयोऽप्यत्र
पृथु पु० प्रथ-कु । सूर्य्यवंश्ये वेनराजस्य दक्षिणबाहुमन्थनजाते नृपभेदे, कृष्णजीरके च । महति, स्थूले, दक्षे च त्रि० । स्त्रियां ङीप् वा ।
पृथुक पु०न० । पृथुवत् कायति कै-क । चिपिटके, 'हिंस्त्रिभक्तं पृथुकमिति स्मृतिः' । बालके पु० । 'पृथुकार्त्तस्वरपात्र'मिति हिङ्गुपत्त्रा, बालिकायाञ्च स्त्री० ।
पृथुकोल पु० कर्म्म० राजबदरे ।
पृथुपत्त्र पु० पृथूनि पत्त्राण्यस्य । रक्तलशुने ।
पृथुपलाशिका स्त्री० पृथूनि पलाशान्यस्याः गौ० ङीप् स्वार्थे कन् । शट्याम् ।
पृथुरोमन् पु० पृथूनि रोमाणि रोमस्थानीयशल्कान्यस्य । मत्स्ये
पृथुल त्रि० पृथु+स्वार्थे लच्, पृथु पृथुत्वमस्त्यस्य लच् वा । स्थूले । हिङ्गुपत्त्रा स्त्री० ।
पृथुशिम्ब पु० पृथ्वी शिम्बा यस्य । श्योनाकभेदे ।
पृथूदर पु० पृथु-उदरं यस्य । मेषे, वृहज्जठरे त्रि० ।
पृथ्वी स्त्री० पृथुल गुणयुक्ता स्त्री ङीप् । भूमौ, हिङ्गुपत्र्यां, स्थूलैलायाम्, पुनर्नवायां, कृष्णजीरके च । स्वार्थे कन् । पृथ्वीका । वृहदेलायाम् हिङ्गुपत्र्यां, कृष्णजीरके च ।
पृथ्वीकुरुवक पु० पृथ्व्या भूमौ कुरुवक इव शुभ्रत्वात् । श्वेतमन्दारके । [गले, चित्रके वृक्षे च ।
पृदाकु पु० पर्द्द-गतौ काकु संप्रसारणम् । सर्पे, वृश्चिके व्याघ्रे
पृश्नि त्रि० स्पृश-नि, प्रच्छ-नि वा पृ० । खर्व्वदुर्बलाल्पके, खले च । रश्मौ, देवक्यां, रश्मौ च स्त्री० । संज्ञायां कन् । कुम्भिकायां (पाना) स्त्री० वा ङीप् । [लतायाम् ।
पृश्निगर्भ पु० ६ब० । देवकीसूनौ श्रीकृष्णे । [विष्णुदाश
पृश्निपर्णी स्त्री० पृश्नि स्वल्पं पर्णमस्याः ङीप् । (चाकुलिया)
पृष सेके भ्वा०आ०सक०सेट् । पर्षते अपर्षिष्ट ।
पृषत् न० पृष-अति किच्च । बिन्दौ । श्वेतबिन्दुके त्रि० ।
पृषत पु० पृष-अतच् किच्च । शुभ्रबिन्दुमति मृगभेदे, बिन्दौ च
पृषताम्पति पु० ६त० अलुक् स० । वायौ ।
पृषताश्व पु० पृषतो मृगभेदोऽश्वइव गतिसाधनं यस्य । वायौ
पृषत्क पु० पृषत्+संज्ञायां कन् । वाणे ।
पृषदश्व पु० पृषतो बिन्दोरश्व इव वाहकत्वात् । वायौ ।
पृषदाज्य न० पृषद्युक्तं दधिबिन्दुयुतं दधिमिश्रयुक्तं वा आज्यम् शाक० । दधिमिश्रे घृते ।
पृषन्ति पु० पृष-झिच् किच्च । बिन्दौ ।
पृषोदर त्रि० पृषदुदरे यस्य पृषो० नि० । बिन्दुगर्भिते । [भेदे च
पृष्ठ न० स्पृश-थक् सलोपः । तनौ पश्चाद्भागे, स्वप्रसिद्धे लोक-
पृष्ठतस् अव्य० पृष्ठ+तसिल् । पश्चाद्भागे इत्यर्थे ।
पृष्ठदृष्टि पु० पृष्ठे पश्चात् दृष्टिरस्य । भल्लूके ।
पृष्ठवंश पु० ६त० । पृष्ठस्थे दण्डाकारेऽस्थ्नि । [वृषादौ
पृष्ठवाह् पु० पृष्ठेन वहति वह-ण्वि । पृष्ठेन शकटादिवाहके
पृष्ठ्य न० पृष्ठानां स्तोत्राणां समूहः यत् । स्तोत्रसमूहे । तद्वति यागभेदे, पृष्ठेन वहति यत् । पृष्ठवाहकाश्वादौ च त्रि० ।
पृष्णि स्त्री० प्रच्छ-निङ् संप्रसारणं षत्वम् । प्रश्निपर्ण्यां, पार्ष्णौ च
पॄ पालने पूर्त्तौ च क्र्या०प्वा०पर०सक०सेट् । पृणाति अपारीत्
पॄ पूर्त्तौ चु०उभ०सक०सेट् । पारयति-ते अपीपरत् त ।
पेचक पु० पच-वुन् इच्च । (पेंचा) उलूके, गजपुच्छमूलभागे, पर्य्यङ्के, यूके, मेघे च ।
पेचुली स्त्री० पच-उलच् इच्च गौ० ङीप् । (कचु) शाकभेदे ।
पेटक पु० न० पिट-ण्वुल् । पुस्तकादीनां स्थापनार्थे वेत्रादिनिर्म्मिते पदार्थे, समूहे च । [कारफलयुते वृक्षे ।
पेटिका स्त्री० पेटीव कायति कै-क पृ० । (टेपारी) पेटका-
पेटी स्त्री० पिट-अच् गौरा० ङीप् । स्वल्पपेटके ।
पेण गतौ पेषे च सक० शोषे अक० भ्वा० पर० सेट् । पेणति अपेणीत् । चङि न ह्रस्वः । [चङि व ह्रस्वः ।
पेल कम्पे अक० गतौ सक० भ्वा० पर० सेट् । पेलति अपेलीत् ।
पेल न० पेल-अच् । पुंसचिह्ने अण्डभेदे (अण्डकोष) । [च
पेलव त्रि० पेल-घञ् पेलं वाति वा-क । कोमले, कृशे, विरले
पेव सेवने भ्वा०आत्म०सेट् । पेवते अपेविष्ट । चङि न ह्रस्वः
पेश(स)ल त्रि० पिश(स)-अलच् । सुन्दरे, दक्षे, कोमले च ।

प्युष-स्पर्शे पु० उभ०सक०सेट् । प्योषयति ते । अपुप्युषत् त ।

प्युष विभागे दि०पर०सक०सेट् । प्युष्यति अप्युषत् अप्योषीत् ।

प्यै वृद्धौ भ्वा० आ०अक० अनिट् । प्यायते अप्यास्त ।

प्र अव्य०प्रथ-ड । आरम्भे, गतौ, उत्कर्षे, प्राधान्ये, सर्वतोभावे, उत्पत्तौ, ख्यातौ, व्यवहारे च ।

प्रकट त्रि० प्र+कट-अच् । स्पष्टे । [नरकभेदे च ।

प्रकटित त्रि० प्र+कट-क्त । प्रकाशिते । [मिरे', इति माघः

प्रकम्पन पु० प्र+कपि-णिच्-युच् । 'वायौ प्रकम्पनेनानु चक-

प्रकर पु० प्र+कृ-भावे अप् । समूहे अधिकारे च । कर्मणि अप् । प्रकीर्णे पुष्पादौ त्रि० ।

प्रकरण न० प्र+कृ-ल्युट् । प्रस्तावे, अभिनेयनायकादिके दृश्य काव्यभेदे, ग्रन्थसन्धौ, एकार्थप्रतिपादकग्रन्थांशे च ।

प्रकर्ष पु० प्र+कृष-घञ् । उत्कर्षे ।

प्रकाण्ड पु०प्रकृष्ट काण्डः प्रा० । वृक्षस्य मूलादारभ्य शाखान्ते भागे । प्रशस्ते न० । [अव्यये ऽनुमतौ च अव्य०

प्रकाम त्रि०प्रगत कामम् प्रा०स० । यथेष्टे । प्र+कम-घञ् ।

प्रकार पु० प्र+कृ-घञ् । भेदे, सादृश्ये च ।

प्रकाश पु० प्र+काश-कर्त्तरि अच् घञ् वा । आतपे, विकाशे च । कर्त्तरि अच् । विकाशयुक्ते त्रि० ।

प्रकाशात्मन् पु० प्रकाशः आतपः अवभासो वा आत्मा स्वरूपं यस्य । सूर्ये, परमेश्वरे च । व्यक्तस्वरूपे त्रि० ।

प्रकीर्ण न० प्र+कृ-भावे क्त । चामरे,भिन्नजातीयानां मिश्रणे च प्रकीर्णकः पु० कर्मणि क्त । विक्षिप्ते, विस्तृते भिन्नजातीयैः मिश्रिते च त्रि० । स्वार्थे कन् । तत्र चामरे न० अश्वे पु० । [भेदे । व्याप्ते त्रि० ।

प्रकीर्य्य पु० प्रकीर्य्यतेऽसौ प्र+कृ-क्यप् । (नाटाकरमजा) करञ्ज

प्रकृत त्रि० प्र+कृ-क्त । अधिकृते, आरब्धे, प्रकरणप्राप्ते च ।

प्रकृति स्त्री० प्रकरोति प्र+कृ-क्तिच् । सांख्यमतसिद्धे जगदारम्भके सत्वरजस्तमोरूपगुणत्रयात्मके प्रधाने, उपादानकारणे, 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा'दिति शारीरकसूत्रम् । 'स्वभावे प्रकृतिस्त्वां नियोक्ष्यती'ति गीता । लिङ्गे, स्वामिनि, अमात्ये, सुहृदि, कोषे, राष्ट्रे, स्वाम्यादौ राज्याङ्गे, पौरश्रेणौ, 'नृपतिः प्रकृतीरवेक्षते'ति रघु दुर्गे, बले, शिल्पिनि, शक्तौ, योषिति, परमात्मनि,पञ्चभूतेषु करणे, गुह्ये, जन्तौ, एकविंशत्यक्षरपादके छन्दोभेदे मातरि, व्याकरणोक्ते प्रत्ययोत्पत्तिनिमित्ते शब्दभेदे च ।

प्रकृष्ट त्रि० प्र+कृष-क्त । उत्कर्षयुक्ते ।

प्रकोष्ठ पु० प्रगतः कोष्ठं प्रा० स० । कूर्परस्याधोभागस्य मणिबन्धपर्यन्ते हस्तावयवे, राजद्वारप्रकोष्ठे च ।

प्रक्रम पु० प्र+क्रम-घञ् न वृद्धिः । क्रमे, आरम्भे, उपक्रमे च

प्रक्रिया स्त्री० प्र+कृ-श । अधिकारे, प्रकरणार्थे, राज्ञां चामरधूननादिव्यापारे च ।

प्रक्वाण(ण) पु० प्र+क्वण-अप् घञ् वा । वीणायाः शब्दे ।

प्रक्ष्वेडन पु० प्र+क्ष्वेड-ल्यु । नाराचास्त्रे ।

प्रखर त्रि० प्रकृष्टः खरः प्रा०स० । अत्युष्णे । हयसन्नाहे, कुक्कुरे, अश्वतरे च पु० ।

प्रख्य त्रि० प्र+ख्या-क । सादृश्ये । प० । उत्तरपदस्थः तुल्यार्थे यथा पितृप्रख्य' एवं निभादयोऽप्यत्र ।

प्रगण्ड पु० गडि वदनैकदेशे अच् प्रकृष्टो गण्डः प्रा०स० । कूर्परोपरिस्कन्धपर्यन्तभागे । बहिःप्राकारे दुर्गप्राकारभित्तौ, सैन्यानां निवेशनस्थाने च स्त्री० गौरा० ङीप् ।

प्रगल्भ त्रि० प्र+गल्भ-अच् । प्रत्युत्पन्नमतौ, प्रतिभान्विते च नायिकाभेदे स्त्री० ।

प्रगाढ त्रि० प्रकर्षेण गाढम् गाह-क्त । अत्यन्तकृच्छ्रे, दृढे च ।

प्रगुण त्रि०प्रकृतो गुणः येन प्रकृष्टो गुणो यस्य वा । ऋजुतायति, दक्षे च । प्रकृष्टगुणोऽप्यत्र । [योग्ये पदे ।

प्रगृह्य न० प्र+ग्रह-क्यप् । व्याकरणोक्ते स्वरसन्धिरहित

प्रगे अव्य० प्रगीयतेऽत्र प्र+गै-के । अतिप्रातःकाले ।

प्रघण(न) न० प्र+हन अप् नि० कुत्वणत्वे । बहिर्द्वारप्रकोष्ठके अलिन्दे । मतान्तरे घणत्वम् ।

प्रग्र(ग्रा)ह पु० प्रगृह्यते प्र+ग्रह+अप् घञ् वा । प्रग्रहे अश्वादीनां रज्ज्वौ, किरणे, तुलासूत्रे, बन्द्याम्, नियमने, भुजे, कर्णिकारवृक्षे च ।

प्रचक्र न० प्रगतचक्रं प्रा०स० । स्वचक्रात् परचक्रंप्रति चलिते,

प्रचण्ड त्रि०प्रकर्षेण चण्ड प्रा । दुर्द्धर्षे, दुर्वहे, दुरन्ते, प्रतापान्विते च । श्वेतकरवीरे पु० । दुर्गाया नायिकाभेदे स्त्री०

प्रचण्डमूर्त्ति पु० प्रचण्डा मूर्त्तिरस्य । वरुणवृक्षे । भयानकदेहे त्रि० । [संयोगे च ।

प्रचय पु० प्र+चि-अच् । समूहे, उपचये, तज्जनके शिथिल-

प्रच(चा)र पु० प्रचरत्यत्र प्र+चर-अप् घञ् वा । पथि । भावे घञ् । प्रसारे गतौ च । [निद्रादिना घूर्णिते ।

प्रचलायित त्रि० प्रचलवदाचरितः प्रचल+क्यच्-क्त ।

प्रचुर त्रि० प्र+चुर-क । बहुले ।

प्रचेतसी स्त्री० प्रकर्षेण चेतयति मूर्च्छितं चित-णिच्-असिच् ङीप् । कट्फले तच्चूर्णस्य हि मूर्च्छानाशकता वैद्यकसिद्धा ।

प्रचेतस् पु० प्र+चित-असि च । वरुणे,मुनिभेदे, प्रकृष्टहृदयेलि०

तुल्ये, प्रतिरूपे, अनुरोधे च । [रूपतायां सादृश्ये च ।

**प्रतिच्छाया** स्त्री॰ प्रतिरूपा छाया प्रा॰ । प्रतिमायां, प्रति-

**प्रतिजागर** पु॰ जागरस्य प्रतिनिधिः । प्रत्यवेक्षणाय रक्षणसे-
चस्वेति नियोगे । [कारे मांसपिण्डे । (आलजिव) ।

**प्रतिजिह्वा** स्त्री॰ प्रतिरूपा जिह्वा । तालूमूलस्थे जिह्वा-

**प्रतिज्ञा** स्त्री॰ प्रति+ज्ञा-अ । कर्त्तव्यतयोपदेशे, साध्यवत्त्वेन पक्षनिर्द्देशे, यथा पर्व्वतोवह्निमान् इत्यादिवाक्यम् अनेन वह्निमत्त्वेन पर्व्वतस्य निर्द्देशः । व्यवहारे पक्षाभिधायके 'इदमनेन मम गृहीतं न ददाती'ति वाक्ये च । ल्युट् प्रतिज्ञानमप्यत्र न॰ ।

**प्रतिज्ञात** त्रि॰ प्रति+ज्ञा-क्त । प्रागुक्तप्रतिज्ञाविषये 'ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधन'मिति स्मृतिः ।

**प्रतिदान** न॰ प्रतिरूपं तुल्यरूपं दानम् प्रा॰स॰ । विनिमये तुल्यरूपदाने, न्यस्तस्य द्रव्यस्य प्रत्यर्पणे च । [विगन्धे'तिभट्टि

**प्रतिध्वनि** पु॰ प्रतिरूपोध्वनिः । प्रतिशब्दे 'प्रतिध्वनीनात्मकृता

**प्रतिध्वान** पु॰ प्रति+ध्वन-घञ् । प्रतिशब्दे ।

**प्रतिनप्तृ** पु॰ प्रतिनिहितो नप्ता पौत्रः प्रा॰ । प्रपौत्रे ।

**प्रतिनिधि** पु॰ प्रति+निधीयते तुल्यरूपतया स्थाप्यते प्रति+नि+धा-कि । प्रतिरूपे, प्रतिमायां च ।

**प्रतिपक्ष** पु॰ प्रतिकूलः पक्षो यस्य । शत्रौ, व्यवहारे विरुद्ध-पक्षे प्रतिवादिनि च । प्रा॰स॰ । सादृश्ये ।

**प्रतिपत्ति** स्त्री॰ प्रति+पद-क्तिन् । प्रवृत्तौ, प्रागल्भ्ये, गौरवे प्राप्तौ पदप्राप्तौ, कर्त्तव्यताज्ञाने च 'विषादलुप्तप्रतिपत्ति विस्मितमि'ति रघुः । [(छोटइन्द्रे)

**प्रतिपन्नफला** स्त्री॰ प्रतिपन्नं फलं यस्याः । क्षुद्रकारवेल्ले ।

**प्रतिपद्** स्त्री॰ प्रतिपद्यते उपक्रम्यते पक्षोऽनया प्रति+पद-क्विप् । पक्षारम्भके तिथौ ।

**प्रतिपन्न** त्रि॰ प्रति+पद-क्त । अवगते, स्वीकृते, 'प्रतिपन्नं हि विचेतनैरपी'ति कुमारः । विक्रान्ते च । [च

**प्रतिपादन** न॰ प्रति+पद-णिच्-ल्युट् । दाने, बोधने, प्रतिपत्तौ

**प्रतिप्रसव** पु॰ प्रति+प्र+सू-अप् । निषिद्धस्य पुनःप्राप्तिसम्भावनायाम् । [रोधके त्रि॰ ।

**प्रतिबन्ध** पु॰ प्रति+बन्ध-घञ् । कार्य्यप्रतिघाते । ण्वुल् । प्रति-

**प्रतिबन्धि(वन्दि)** पु॰ प्रति+बन्ध-(वन्द) वा इन् । अनिष्टा-न्तरप्रसञ्जके वाक्ये ।

**प्रतिबल** पु॰ प्रतिकूलं बलं यस्य । 'शत्रौ प्रतिबलजधे'रिति वेणी॰ । प्रतिरूपं बलं यस्य । तुल्यबले त्रि॰ 'यो मे प्रतिबलो लोके' इति चण्डी ।

**प्रतिभय** त्रि॰ प्रतिगतं भयमस्मात् । भयहेतौ भयङ्करे ।

**प्रतिभा** स्त्री॰ प्रति+भा-अ । बुद्धौ, प्रत्युत्पन्नबुद्धौ च ।

**प्रतिभू** पु॰ प्रतिनिधि र्भवति भू-क्विप् । लग्नके (जामिन) ।

**प्रतिमा** स्त्री॰ प्रति+मा-अ । गजदन्तस्य बन्धे, सदृशीकरणे, सदृशस्त्रित्वाशिलादिमूर्त्तौ । 'प्रतिमायां शिलाबुद्धि'रिति पुराणम् । ब॰ । उत्तरपदस्थः । सदृशे त्रि॰ । यथा देवप्रतिमः

**प्रतिमान** न॰ प्रतिमीयतेऽनेन प्रति-मि-मा-वा ल्युट् । प्रतिबिम्बे, प्रतिमायां, गजकुम्भस्याधोभागेतद्दन्तयोर्मध्यस्थाने च

**प्रतिमुक्त** त्रि॰ प्रति+मुच-क्त । परिहिते, परित्यक्ते च ।

**प्रतियत्न** पु॰ प्रति+यत-नङ् । वाञ्छायाम्, उपग्रहे, निग्रहादौ, वन्द्यां सतो गुणान्तराधानरूपे संस्कारे, यत्नके, प्रतिप्रदे च । प्रतिरूपो यत्नो यस्य ब॰ । प्रतियत्नयुक्ते त्रि॰

**प्रतियातना** स्त्री॰ प्रति+यात्यतेऽनया चु॰ यत-युच् । प्रतिमायाम् प्रा॰स॰ । तुल्यरूपयातनायाम् ।

**प्रतियोगिन्** त्रि॰ प्रतिरूपं युज्यते प्रति+युज-घिनुण् । प्रतिकूलसम्बन्धवति । यथा अभावस्य प्रतिकूलसम्बन्धवत्त्वात् घटादिस्तस्य प्रतियोगी । विरुद्धपक्षे च ।

**प्रतिरूप** न॰ प्रतिगतं रूपम् । प्रतिच्छायायां, प्रतिबिम्बे च प्रतिगतं रूपमस्य ब॰ । सदृशे त्रि॰ । स्वार्थे कन् । अत्रैव ।

**प्रतिरोध** पु॰ प्रति+रुध-भावे घञ् । बाधे प्रतिबन्धे, निरोधे, तिरस्कारे, चौर्य्ये च । कर्त्तरि अच् । चौरे । स्तुल्‌गिन्दनावध्वल

**प्रतिलोम** त्रि॰ प्रतिगतं लोम आनुकूल्यमस्मात् प्रति+लोमन् अच् समा॰ । वामे विपरीते ।

**प्रतिलोमज** पु॰ प्रतिलोमात् जातः जन-ड । उत्तमवर्णस्त्रियाम् अधमवर्णात् जाते सङ्कीर्णवर्णे । [वाक्ये च ।

**प्रतिवचन** न॰ प्रतिरूपं वचनम् । प्रतिवाक्ये, उत्तरे, विरुद्ध-

**प्रतिवात** त्रि॰ प्रतिगतो वातो यत्र । यस्मात् प्रदेशात् वायुः प्रत्यागच्छति तस्मिन् देशे 'प्रतिवातेऽनुवाते चे'ति मनुः ।

**प्रतिवादिन्** पु॰ त्रि॰ प्रतिकूलं वदति वद-णिनि । प्रतिपक्षे व्यवहारे प्रत्यर्थिनि अभियोज्ये (आसामी) 'कारये प्रतिवादिनी'ति स्मृतिः ।

**प्रतिवासि(वेशि)न्** त्रि॰ प्रत्यासन्नं वसति (विशति) प्रति+वस-(विश) वा णिनि । (पड़सि) गृहासन्नवासिनि । स्त्रियां ङीप् । 'इदं हि प्रतिवासि(वेशि)नी'ति सा॰द॰३प॰ ।

**प्रतिविधान** न॰ प्रति+वि+धा ल्युट् । प्रतीकारे ।

**प्रतिबिम्ब** न॰ प्रतिरूपं बिम्बम् । बिम्बसादृश्ये प्रतिच्छायायाम्

**प्रतिविषा** स्त्री॰ प्रतिषिद्धं विषं यया । अतिविषायाम् (आतइच्)

**प्रतिशासन** न॰ प्रति+शास-ल्युट् । भृत्यादेर्निकृष्टस्य नियोगे

**प्रत्यादेश** पु० प्रति+आ+दिश-घञ् । निराकरणे ।

**प्रत्यालीढ** न० प्रति+आ+लिह-क्त । 'आलीढं दक्षिणं पादं प्रत्यालीढन्तु वामक'मित्युक्तो वामपादमग्रेण दक्षिणपाद-प्रसारणरूपे धन्विनां स्थितिविशेषे । आस्वादिते त्रि०।

**प्रत्यासन्न** त्रि० प्रति+आ+सद-क्त । अतिनिकटस्थे ।

**प्रत्याहार** पु० प्रति+आ+हृ-घञ् । योगशास्त्रप्रसिद्धे इन्द्रियाणां स्वस्वविषयेभ्यो निराकरणे ।

**प्रत्युत्क्रम** पु०प्रति+उद्+क्रम-घञ् न वृद्धिः । युद्धार्थोद्योगे, प्रधानप्रयोजनोद्देशेनाप्रधानारम्भे च ।

**प्रत्युत्तर** न० प्रतिरूपमुत्तरस्य । उत्तरस्योत्तरवाक्ये ।

**प्रत्युत्थान** प्रति+उद्+स्था-ल्युट् । अभ्युत्थाने आगतस्य सम्माननार्थमासनादुत्थितौ । [तत्कालोचितबुद्धौ ।

**प्रत्युत्पन्नमति** त्रि० प्रत्युत्पन्ना तत्कालोचिता मतिर्यस्य ।

**प्रत्युद्गमनीय** न० प्रति+उद्+गम-अनीयर् । धौतवस्त्रयुग्मे, 'स्टहे ततप्रत्युद्गमनीयवस्त्रे'ति कुमारः पाठान्तरं मद्ये वेति न गुरुत्वम् सम्मुखस्थानयोग्ये, पूजनीये च त्रि० ।

**प्रत्यूप** पु० प्रत्यूषति रुजति कामुकान् जप-रुजायां क । प्रभाते, अष्टवसुमध्ये वसुभेदे च । अषि । प्रत्यूषम् । प्रभाते

**प्रत्यूह** पु० प्रति+ऊह-घञ् । विघ्ने ।

**प्रथ** ख्यातौ भ्वा०आ०सक०सेट् घटा० । प्रथते अप्रथिष्ट णिच् प्रथयति । अङ् प्रथा । [अपप्रथत् त ।

**प्रथ** ख्यातौ अक०विक्षेपे सक० चुरा० उभ० सेट् । प्रथयति-ते

**प्रथम** त्रि० प्रथ-अमच् । प्रधाने, आद्ये च । जसि सर्वनामतास्य

**प्रथा** स्त्री० प्रथ-अङ् । ख्यातौ ।

**प्रथित** त्रि० प्रथ-क्त । ख्याते । [स्थूलत्वे ।

**प्रथिमन्** पु० पृथोर्भावः पृथु-इमनिच् प्रथादेश । पृथुत्वे

**प्रथुक** पु० प्रथ-कुकन् । चिपिटके । [च ।

**प्रदर** पु० प्र+दृ-अप् । विदारणे,भङ्गे, नारीणां योनिरोगभेदे

**प्रदीप** पु० प्र+दीप-क । दीपे ।

**प्रदीपन** पु० प्रदीपयति जठराग्निम् प्र+दीप+णिच्-ल्यु । स्थावरे विषभेदे । प्रकाशके त्रि० ।

**प्रदेश** पु० प्र+दिश+घञ् । एकदेशे, 'पितुः प्रदेशास्तवे'ति कुमारः । देशमात्रे च तर्ज्जन्यङ्गुष्ठसम्मिते माने, भित्तौ च ।

**प्रदेशन** न० प्रदिश्यते दिश-ल्युट् । नृपादेरुपहारे (भेटी) ।

**प्रदेश(शि)नी** स्त्री० प्रदिश्यतेऽनया प्र+दिश-करणे ल्युट् ङीप्। तर्जन्यां तया हि वस्तु निर्द्दिश्यते शिनि। प्रदेशिनी अत्रैव । [चतुर्व्यूहात्मकविष्णोरंशभेदे च ।

**प्रद्युम्न** पु० प्रकृष्टं द्युम्नं बलं यस्य । कन्दर्पे वैष्णवागमोक्ते

**प्रद्रव** पु० प्र+द्रु-अप् । पलायने, घञ् । प्रद्रावोऽप्यत्र ।

**प्रधन** न० प्र+धा-क्यु । युद्धे ।

**प्रधान** न० प्र+धा-ल्युट् । साङ्ख्यमतसिद्धायाम् सत्त्वरजस्तमोरूपगुणत्रयात्मिकायां प्रकृतौ, तत्कार्य्ये बुद्धितत्त्वे, परमात्मनि, प्रमाके, सचिवे च । सेनापत्यध्यक्षे पु० । श्रेष्ठे त्रि०

**प्रधि** पु० प्रधीयन्ते काष्ठान्यत्र प्र+धा-कि । चक्रावयवकाष्ठ-सन्धानस्थाने रथनाभौ ।

**प्रधूपिता** स्त्री० प्र+धूप-क्त । सन्तापितायां 'व्यसनप्रधूपिता'-मितिकुमारः । ज्योतिषोक्तायां सूर्य्यगन्तव्यायां दिशि च।

**प्रपञ्च** पु० प्र+पचि-विस्तारे घञ् । विस्तारे, वैपरीत्ये, सञ्चये, प्रतारणे, संसारे च ।

**प्रपथ्या** स्त्री० प्रकृष्टा पथ्या प्रा०स० । हरीतक्याम् ।

**प्रपद** न० प्रारब्धं पदम् प्रा०स० । पादस्याग्रभागे ।

**प्रपन्न** त्रि०प्र+पद-क्त । शरणागते,'प्रपन्नार्त्तिहरे देवी'ति चण्डी

**प्रपा** स्त्री० प्रपीयतेऽस्या पा-ड । पानीयशालायां (जलसत्रघर)

**प्रपाठक** पु० प्रकृष्टः पाठोऽत्र कप् । वेदस्याध्यायावयवेऽंशभेदे

**प्रपात** पु० प्रपतत्यस्मात् पत-घञ् । तटरहिते निरवलम्बे पर्वतस्थाने, निर्झरे, कूले, अवस्कन्दे च । भावे-घञ् पतने

**प्रपितामह** पु०प्रजात पितामहो यस्मात्, प्रकृष्ट पितामहो वा । दक्षादिप्रजापतिरूपाणां प्रजाजनकानामुत्पादके चतुर्मुखे ब्रह्मणि, पितामहपितरि च । तत्पत्न्याम् स्त्री०ङीप्

**प्रपुन्नाड(ट)** पु०पुमांसं नाडयति नाटयति नड-भ्रंशे नट-अवस्यन्दने वा अण् प्रकृष्टः पुन्नाडः (पुन्नाटः) प्रा० । चक्रमर्द्दे (चाकुन्दा) वृक्षे । डस्य लत्वे प्रपुन्नालोऽप्यत्र दद्रुमर्द्दने च

**प्रपूरिका** स्त्री० प्रकर्षेण पूर्य्यते कण्टकैः । पूर-घञ् टाप् स्वार्थे कन् । कण्टकार्य्याम् ।

**प्रपौण्डरीक** पु० पुण्डरीक+स्वार्थेऽण् । प्रकृष्टं तदिव पुष्पं यस्य । गजमनुष्याणां चक्षुर्हितकारके शालपर्णीतुल्यपत्रके क्षुपभेदे । [तत्र-दायां स्त्री० ङीप् ।

**प्रपौत्र** पु० प्रगतः कारणतया पौत्रम् । पौत्रस्य पुत्रे,

**प्रफुल्ल** त्रि०प्र+फुल्ल-विकाशने अच् । विकाशयुक्ते । प्र+फल-क्त उत्वभावे अत उत्त्वम् । प्रफुल्लतमप्यत्र । 'लोभद्रुमं शाखमत प्रफुल्ल (ल्लत)'मि ति रघुः ।

**प्रबन्ध** पु० प्र+बन्ध-अच् । संदर्भे, ग्रन्थादेः रचने च ।

**प्रबन्धकल्पना** स्त्री० ६त०। 'प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथा विदु'रित्युक्तलक्षणायामल्पसत्याया बहुमिथ्याकथायाम्

**प्रबाल** न० प्रकर्षेण बलति अवकम्पते ज्वलादित्वात् णः । नवपल्लवे 'पुष्पं प्रबालोपहितं यदि स्यादि'ति कुमारः ।

रक्तवर्णे मणिभेदे, (सुगा) शोणादखण्डे च ।

प्रबोध पु० प्र+बुध घञ् । प्रकृष्टबुद्धौ, निद्राराहित्ये च ।

प्रबोधन न० प्र+बुध-णिच् ल्युट् । कालादिहेतुभि पूर्वगन्धस्य न्यूनतायां प्रयत्नविशेषेण तदुद्दीपने ।

प्रबोधनी स्त्री० प्र+बुध्यतेऽनया प्र+बुध ल्युट् । इराखभायाम् प्रबुध्यते हरिरत्र । कार्त्तिकशुक्लैकादश्याम् । प्र+बुध णिच्-णिनि ङीप् । प्रबोधिनी तत्रैव ।

प्रभञ्जन न० प्रभनक्ति वृक्षादीन् प्र+भन्ज-युच् । वायौ ।

प्रभद्र पु० प्रकृष्टं भद्रमस्मात् ५ब० । निम्बवृक्षे ।

प्रभव पु० प्रभवत्यस्मात् प्र+भू अप् । आद्यप्रकाशस्थाने, उत्पादके । 'क्व सूर्यप्रभवो वंश' इति रघु । ६०वर्षमध्ये वत्सरभेदे च । प्र+भू-भावे अप् । पराक्रमे जन्मनि च ।

प्रभा स्त्री० प्र-भा अङ् । दीप्तौ ।

प्रभाकर पु प्रभां करोति कृ-अच्, सूर्ये मीमांसकभेदे च ।

प्रभाञ्जन पु० प्रभयाञ्जयति अञ्ज णिच्-ल्यु । शोभाञ्जने ।

प्रभात न० प्र+भा भावे क्त प्रकृष्टं भातमत्र । प्रातःकाले प्र+भा कर्त्तरि क्त । प्रभायुक्ते त्रि० ।

प्रभाव पु० प्र+भू घञ् । राज्ञां कोषदण्डजाते तेजसि, तेजसि, सामर्थ्ये, विक्रमे, शान्तौ, उद्भवे च । [च ।

प्रभाष पु० प्र+भाष-अच् । अष्टवसुमध्ये वसुभेदे, प्रकृष्टकथने

प्रभास पु० तीर्थभेदे 'प्रभासं पुष्कराणि चे'ति स्नानमन्त्र ।

प्रभिन्न पु० प्र+भिद क्त । मत्तमदे गजे । प्रभेदवति त्रि० ।

प्रभु पु० प्र+भू-डु । विष्णौ, शब्दे, पारदे च । स्वामिनि, अधिपतौ च त्रि ।

प्रभूत त्रि० प्र+भू-क्त । प्रचुरे, उद्गते, भूते उद्भूते च ।

प्रभृति अव्य० प्र+भृ क्तिच् । तदारभ्येत्यर्थे । ब०उत्तरपदस्थ । तदादिके त्रि० । [भेदे

प्रभेद पु०प्रभिद्यतेऽनेन प्र+भिद घञ् । प्रकारे । भावे घञ्

प्रभ्रष्टक न प्र+भ्रन्श क्त तत कन् । चूडातोलम्बमाने माल्ये

प्रमथ पु०प्र+मथ अच् । शिवानुचरभेदे अश्वे च । हरीतक्यां स्त्री

प्रमथन न प्र+मथ ल्युट । वधे, क्षोभने, विलोडने च ।

प्रमथाधिप पु० ६त० । शिवे महादेवे ।

प्रमद पु प्र+मद अप् । हर्षे । प्रमाद्यत्यनेन अप । धुस्तूरफले न० । कर्त्तरि अच् । प्रमत्ते त्रि० ।

प्रमद्वन न० प्रमदस्य हर्षस्य वनम् । राज्ञोऽन्तःपुरस्थे वने ।

प्रमदा स्त्री प्रमाद्यत्यनया अप् । उत्तमयोषिति ।

प्रमदावन न० प्रमदाया उचितं वनम् । यत्र पुरुषैकयोग्ये वने प्रमदाकाननादयोऽप्यत्र ।

प्रमनस् त्रि० प्रहृष्टं मनो यस्य हृष्टपदलोप । प्रहृष्टचित्ते ।

प्रमा स्त्री० प्र+मा अङ् । यथार्थज्ञाने भ्रमभिन्ने ज्ञाने ।

प्रमाण न० प्रमीयतेऽनेन । प्रमाज्ञानसाधने इन्द्रियादौ, मर्यादायाम शास्त्रे सत्यवादिनि, हेतौ प्रमातरि च । 'न प्रमाण यदोन्दु'रिति शुद्रारातत्वम् । भावे ल्युट् । यथार्थज्ञाने ।

प्रमातामह पु० प्रारब्धो मातामहो येन । आरब्धपदलोप । मातामहपितरि । तत्पत्न्यां स्त्री० ङीप् ।

प्रमाद पु०प्र+मद घञ् । कर्त्तव्ये अकर्त्तव्यत्वधिया ततो निवृत्तौ, अकर्त्तव्ये कर्त्तव्यत्वधिया तत्र प्रवृत्तौ वा अनवधानतायाम्

प्रमापण न० प्र+मीञ् हिंसायां स्वार्थे णिच्-आत्वे पुक् ल्युट् । मारणे ।

प्रमिति स्त्री० प्र+मा क्तिन् । प्रमायां यथार्थज्ञाने ।

प्रमीत त्रि० प्र+मीञ् हिंसायां क्त । हते । 'प्रमीतौ पितरौ यस्ये'ति स्मृति यज्ञार्थे हतपशौ च ।

प्रमीला स्त्री० प्र+मील अ । तन्द्रायाम् ।

प्रमुख न०प्रकृष्टं मुखमारम्भ । तदादित्वे । ब० उत्तरपदस्थ । तदादिके, मान्ये, प्रथमे, प्रधाने, श्रेष्ठे च त्रि० । पुन्नागवृक्षे, समूहे च पु० ।

प्रमुद् त्रि० प्रकृष्टा मुद् यस्य । हृष्टे हर्षयुक्ते ।

प्रमुदित त्रि० प्र+मुद-क्त । हृष्टे हर्षयुक्ते ।

प्रमेह पु० प्र+मिह घञ् । रोगभेदे ।

प्रमोचनी स्त्री० प्रकर्षेण मुच्यते निस्तुषीक्रियते भोजनार्थम् मुच-कर्म्मणि ल्युट् ङीप् । गोडुम्बायाम् (गोमुक) ।

प्रमोद पु० प्र+मुद हर्षे घञ् । हर्षे ।

प्रयत त्रि० प्र+यम क्त । पवित्र, नियमयुक्ते च ।

प्रयत्न पु० प्र+यत-नङ् । कार्यानुकूले यत्नभेदे । 'प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारण'मिति न्यायोक्ते त्रिविधयत्ने स चात्मगुण इति वैशेषिकादय बुद्धिधर्म इति सांख्यादय । प्रयासे च ।

प्रयाग पु० प्रकृष्टो यागो यस्मात् ५ब० । गङ्गायमुनयो सङ्गम जाते तीर्थभेदे, इन्द्रे शतक्रतौ च । ५ब० । अश्वे अश्वमेधयज्ञस्याश्वस्य तथात्वम् । कर्म० । प्रकृष्टे यज्ञे ।

प्रयाम पु० प्र+यम घञ् । महार्घतावशात् धान्यादौ जनानामादरातिशये ।

प्रयास पु०प्र+यस घञ् । प्रयत्नबन्धाये, आयासे च । [चौलावली

प्रयुत न०दशलक्षसंख्यायां तद्युक्ते च 'दशप्रयुतकोटय' इति

प्रयोक्तृ त्रि० प्र-युज तृच् । प्रयोगकर्त्तरि अपादानादौ धा-प्रयोगकर्त्तरि उत्तमर्णे, प्रयोजकमात्रे च ।

प्रयोग पु० प्र+युज-घञ् । अनुष्ठाने वशीकरणे, निदर्शने,अश्वे च
प्रयोजक त्रि० कार्यादौ भृत्यादीन् प्रयुङ्क्ते प्र+युज-ण्वुल् । निकृष्टस्य भृत्यादेः प्रेरके, व्याकरणोक्ते हेतुसंज्ञे कर्त्तरि च
प्रयोजन न० प्र+युज-ल्युट् । कार्य्ये, उद्देश्ये, हेतौ च ।
प्रयोज्य त्रि० प्रयोक्तुं शक्यते प्र+युज-शक्यार्थे यत् । नियोज्ये निकृष्टे भृत्यादौ । [घञ् । प्ररोहे
प्ररूढ़ त्रि० प्र+रुह-क्त । प्रवृद्धे, बद्धमूले, जाते च । भावे
प्ररोह पु० प्र+रुह-अच् । अङ्कुरे 'सद्यःप्ररोह इवे'ति रघुः । आरोहे च ।
प्रलम्ब पु० दैत्यभेदे । प्र+लम्ब-अच् । प्रकर्षेण लम्बमाने त्रि० ।
प्रलम्बघ्न पु०प्रलम्बं हन्ति हन-टक् । बलदेवे प्रलम्बहादयोप्यत्र
प्रलय पु० प्रलीयतेऽस्मिन् प्र+ली-अच् । सृष्टपदार्थानां नाशाधिकरणे काले, ब्रह्मणोदिनावसाने च । भावे घञ् । नाशे, चेष्टाक्षये च 'प्रलयान्तोन्मिषिते विलोचने' इति कुमारः ।
प्रलाप पु० प्र+लप-घञ् । अनर्थकवाक्ये, निष्प्रयोजने उन्मत्तादिवाक्ये च ।
प्रलापघ्न पु० प्रलापं हन्ति हन-क्विप् । कुलत्थजातेऽञ्जने ।
प्रवचन न० प्र+वच-ल्युट् । वेदार्थज्ञाने, प्रकृष्टवाक्ये च ।
प्रव(ब)ण पु० प्र+व(ब)ण-अच् । चतुष्पथे निम्नस्थाने, उदरे च नम्रे, आयते, प्रगुणे क्षणे, प्लुते, स्निग्धे, आसक्ते, क्षीणेच त्रि०
प्रवयस् त्रि० प्रकृष्टं वयोऽस्य । प्रवृद्धे ।
प्रवर पु०प्र+वृ-अप् । सन्ततौ, गोत्रे, गोत्रप्रवर्त्तकमुनिव्यावर्त्तके मुनिगणे च । श्रेष्ठे त्रि०। अगुरुचन्दने न० ।
प्रवर्ग पु० प्र+वृज-घञ् । होमाग्निभेदे ।
प्रवर्त्तक त्रि० प्रवर्त्तयति प्र+वृत-णिच्-ण्वुल् । प्रवृत्तिजनके ।
प्रवर्त्तना स्त्री० प्र+वृत-णिच्-युच् । प्रवृत्तिजनकव्यापारे विध्यादौ 'अस्ति प्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपी'ति भर्तृहरिः
प्रवर्ह त्रि० प्र+वृह-अच् । श्रेष्ठे, प्रधाने च ।
प्रवह पु० प्रवह-अच् । वायुभेदे । भावे अप् । नगराद्बहिर्गमने
प्रवहण न० प्र+वह-करणे ल्युट् । मनुष्यवाह्ये वस्त्राच्छादिते स्त्रीवाहने कर्णीरथे (महापाल) ।
प्रवाणी स्त्री० प्र+वे-ल्युट् ङीप् । तन्तुवायशलाकायाम् (नाळ)
प्रवाद पु० प्र+वद-घञ् । परम्परागतवाक्ये, परस्परकथोपकथने च । [वस्तुनो दाने ।
प्रवारण न० प्र+वृ-णिच्-ल्युट् । काम्यदाने काम्यस्य उत्तम-
प्रवास पु० प्र+वस-घञ् । विदेशवासे ।
प्रवासन न० प्र+वस-णिच्-ल्युट् । विदेशवासने-'सीताप्रवासनपटो'रित्युत्तरचरितम् । मारणे च ।
प्रवासिन् त्रि० प्र+वस-णिनि । विदेशे वासिनि, 'प्रवासी सुतस्मायाती'ति पट्पञ्चाशिका । [उत्तमाङ्गे च ।
प्रवाह पु० प्र+वह-घञ् । प्रवृत्तौ, जलस्रोतसि, व्यवहारे,
प्रवाहिका स्त्री० प्रवाहयति मलं ण्वुल् । ग्रहणीरोगे ।
प्रवाहु पु० प्रकृष्टो बाहुः । कुर्परस्याधोभागे । [आमोदे च ।
प्रविदारण न० प्र+वि+दृ-णिच्-ल्युट् । युद्धे, विदारणे,
प्रविश्लेष त्रि० प्रकर्षेण विश्लेषो यस्य । विधुरे, परमविश्लेषे च।
प्रविषा स्त्री० प्रकृतं विषं यया । अतिविषायाम् । (आतइच्)
प्रवीण त्रि० वीणया प्रगायति प्र+वीणा+णिच्-ईच् । निपुणे
प्रवृत्ति स्त्री० प्र+वृत-क्तिन् । प्रवाहे, वार्त्तायाम्, अवन्त्यादि देशे, हस्तिमदे, न्यायोक्ते चिकीर्षाकृतिसाध्यताज्ञानाधीने प्रयत्नभेदे च ।
प्रवृद्ध त्रि० प्र+वृध-क्त । वृद्धियुक्ते, प्रौढे च ।
प्रवेक त्रि० प्र+विच-घञ् । प्रधाने । [कम्बले
प्रवे(णि)णी स्त्री० प्र+वेण-इन् वा ङीप् । गजस्कन्धस्थे चित्र-
प्रवेल पु० प्र+वेल-अच् । पीतमुद्गे (सोनामुग)
प्रवेश पु० प्र+विश-घञ् । अन्तर्गमने ।
प्रवेशन न० प्रविश्यतेऽनेन विश-करणे ल्युट् । प्रधानद्वारे, सिंहद्वारे च । भावे ल्युट् । प्रवेशे ।
प्रवेट पु० प्र+वेट-अच् । याही, दाङ्गनीचभागे हस्तिदन्तमांसे। गजपृष्ठस्थाने च । [तापसाश्च स्त्री० ।
प्रव्रजित पु० प्र+व्रज-क्त । सन्न्यासिनि । मांस्या, मुण्डीर्य्यां,
प्रव्रज्या स्त्री० प्र+व्रज-क्यप् । सन्न्यासे, सर्व्वकर्म्मत्यागेन विधानेनाश्रमान्तरगमने ।
प्रव्रज्यावसित पु० प्रव्रज्यातः संन्यासात् अवसितः च्युतः अव+सो-क्त । सन्न्यासभ्रष्टे ।
प्रशंसा स्त्री० प्र+शन्स अ । गुणाविष्कारेण स्तुतौ ।
प्रशमन न० प्र+शम-णिच्-ल्युट् । वधे, शान्तकरणे च 'लब्धप्रशमनस्वस्थमि'ति रघुः । शान्तौ च 'सर्व्वाबाधाप्रशमनमि'ति चण्डी ।
प्रशस्त त्रि० प्र+शन्स-क्त । प्रशंसनीये, श्रेष्ठे, श्रेये च ।
प्रश्न पु० प्रच्छ-नङ् । जिज्ञासायाम् ज्ञातुमिच्छया कथनाय प्रेरणे
प्रश्नी स्त्री० प्रच्छ+निङ् ङीप् । कुम्भिकायाम् (पाना) ।
प्रश्रय पु० प्र+श्रि-अच् । प्रणये ।
प्रश्रित त्रि० प्र-श्रि-क्त । विनीते ।
प्रष्ठ त्रि० प्र+स्था-क नि० षत्वम् । अग्रगामिनि, श्रेष्ठे च ।
प्रष्ठौही स्त्री० प्रष्ठं प्रथमगर्भं वहति वह-क्विप् । प्रथमगर्भिण्याम्
प्रष्ठवाह् पु० प्रष्ठं वहति ण्वि । युगपार्श्वस्थे वृषादौ, युगपार्श्वे

प्रथमयोजिते, द्रव्ये च । [व्यापिष्ट । णिच् प्रसयति

प्रस प्रसवे ततौ च सक० दिवा० आ० सेट् घटा० । प्रसते

प्रसक्त त्रि० प्र+सन्ज-क्त । प्रसङ्गविषये ।

प्रसक्ति स्त्री० प्र+सन्ज क्तिन् । प्रसङ्गे, आपत्तौ, अनुमितौ च

प्रसङ्ग पु० प्र+सन्ज घञ् । आपत्तौ, सम्बन्धभेदे स्वतसोपेक्षा-नर्हत्वरूपे सङ्गतिभेदे, स्मृत्युक्ते च योगेनैव लतकर्मणा-न्यस्य सिद्धिरूपे प्रसक्तकार्य्यनिर्वाहे, प्रसक्तौ, प्रस्तावे च

प्रसत्ति स्त्री० प्र+सद क्तिन् । नैर्मल्ये प्रसन्नतायाम् । [स्त्री०

प्रसन्न त्रि०प्र+सद क्त । निर्मले, सन्तुष्टे, कृतानुग्रहभेदे च सुरायां

प्रसन्नता स्त्री० प्रसन्नस्य भाव तल् । प्रसादे अनुग्रहभेदे ।

प्रसभ न० प्रगता सभा सभाधिकारोऽस्मात् । बलात्कारे, 'प्रसभोद्धृतारि'रिति रघु ।

प्रसर पु० प्र+सृ-अप्-अच् वा । प्रणये, वेगे, समूहे, युद्ध नीवारे निकटाभिगमने प्रणादेर्विस्तारे सैन्यादे सर्वतो व्याप्तौ च । [स्त्रीत्वञ्च तत्र ङीप्

प्रसर्पण न० प्र+सृप ल्युट् । सैन्यानां सर्वतोव्याप्तौ अस्त्र

प्रसव पु०प्र+सू-अप् । गर्भमोचने । उत्पत्तौ, कार्य्यरूपे फले च 'यदक्षरावर विश्व प्रसवस्तव गीयते' इतिकुमार ।

प्रसवबन्धन न० प्रसवस्य पुष्पस्य बन्धनम् बध्य करणे ल्युट् । वृन्ते (बोंटा) ।

प्रसविनी स्त्री० प्र+सू-तृच् । जनन्याम् ।

प्रसव्य त्रि० प्रगत सव्य वामत्वम् । प्रतिकूले ।

प्रसहा स्त्री० प्र+सह अच् । कण्टकार्य्याम् ।

प्रसह्य अव्य० प्र+सह ल्यप् । हठादित्यर्थे । 'प्रसह्य तेजोभि रसङ्ख्यता गते'रिति माघ । [कामचौरे

प्रसह्यचौर पु० प्रसह्य बलात्कारेण चोर । (डाकाइत) । प्र-

प्रसाद पु० प्र+सद-घञ् । नैर्मल्ये, अनुग्रहे, काव्यगुणभेदे, स्वास्थ्ये, प्रसन्ने देवनैवेद्ये, गुरुजनभुक्तावशिष्टे च ।

प्रसादना स्त्री प्र+सद णिच्-युच् । सेवायाम् ।

प्रसाधक त्रि० प्रसाधयति भूषयति प्र+सिध णिच् ण्वुल् । निष्पादकेऽलङ्कर्त्तरि च स्त्रियां टाप् । 'प्रसाधिकालम्बित-मग्रपाद'मिति रघु । नीवारे स्त्री टाप् ।

प्रसाधन न० प्र+सिध णिच् ल्युट् । कङ्कतभूषणे वेशे । करणे ल्युट् । कङ्कतिकायाम् स्त्री० ङीप् ।

प्रसाधित त्रि प्र+सिध-णिच् क्त । अलङ्कृते, निष्पादिते च ।

प्रसारण न० प्र+सृ-णिच्-ल्युट् । विस्तारकरणे क्रियाभेदे च

प्रसारणी स्त्री०प्र+सृ-णिच् ल्यु गौरा० ङीप् । (गन्धभादाल) लताभेदे ।

प्रसारिणी स्त्री० प्र+सृ-णिनि । लज्जालुलतायाम् ।

प्रसारिन् त्रि० प्र+सृ-णिनि । विस्तारकारके ।

प्रसित त्रि० प्र+षो क्त । आसक्ते । [निगडादौ

प्रसिति स्त्री प्र+षि-बन्धने करणे क्तिन् । बन्धनसाधने,

प्रसिद्ध त्रि० प्र+सिध-क्त । भूषिते, ख्याते च ।

प्रसू स्त्री प्र+सू क्विप् । जनन्याम्, कदल्यां, वीरुधि, घोटक्याञ्च

प्रसूति स्त्री० प्रसू-क्तिन् । प्रसवे, अपत्ये, उदरे, मातरि च ।

प्रसूतिका स्त्री प्रसूतेव कन् । जातसन्तानायां स्त्रियाम् ।

प्रसूतिज न० प्रसूत्या जायते जन ड । दुःखे, प्रसवादिजन्य दुःख हि सर्वलोकविदितम् । [त्रि० ।

प्रसून न० प्र+सू-क्त तस्य न । पुष्पे, फले च । जातमात्रे

प्रसृत पु० प्र+सृ क्त । अर्द्धाञ्जलौ, प्रसृते, प्रसादिते, विनीते, वेगित, गते, नियुक्ते च त्रि० । जङ्घायां स्त्री ।

प्रसेवक पु० प्र+सिव-ण्वुल् । वीणामान्तम(?)ध्ये काष्ठे ।

प्रस्कन्न पु० ऋषिभेदे । स्कन्द-क्त तस्य नः । अवस्कन्दयुक्ते त्रि०

प्रस्तर पु० प्र+स्तृ अच् । पाषाणे, मणौ च ।

प्रस्तार पु० प्र+स्तृ-घञ् । तृणवने, पल्लवादिरचितशय्यायां, छन्दो-ग्रन्थोक्ते व्यक्तिभेदसङ्ख्याज्ञानार्थे 'प्रस्तारे तु लघु न्यस्य प्रथ मस्य गुरोरध । यथोपरि तथा शेष'मित्युक्ते प्रक्रियाभेदे च

प्रस्ताव पु० प्र+स्तु-घञ् । अवसरे प्रकरणे, प्रसङ्गे च ।

प्रस्तावना स्त्री० प्र+स्तु-णिच्-युच् । आरम्भे, सूत्रधारेण नट्यादिभि सह प्रकृताभिनेयकथाप्रसङ्गाय कथनीये वाक्य कोमे 'नटी विदूषको वापीत्या दि सा० द०' ।

प्रस्तुत त्रि० प्र+स्तु-क्त । प्रकरणप्राप्ते, प्रासङ्गिके, उपस्थिते, उद्यते, प्रतिपन्ने, प्रकर्षेण स्तुते च ।

प्रस्थ पु० प्र+स्था-क । चतुःकुडवात्मके आढकचतुर्थांशे वा धान्या दे परिमाणभेदे विस्तारे च । पर्वतस्य सानयोग्यभूमौ पु न

प्रस्थान न प्र+स्था ल्युट् । जिगीषोर्युद्धार्थगमने, गमनमात्रे च

प्रस्फोटन न० प्र+स्फुट-करणे ल्युट् । शूर्पे । भावे ल्युट् । ताडने, विकासने, पाके च । [स्नु । प्रस्नवति पर्वते पु०

प्रस्रवण न० प्र+स्रु ल्युट् । अविच्छेदेन पयःस्रावे, उत्से, स्वेदे च ।

प्रस्राव पु० प्रस्रु-घञ् । मूत्रे । [व्याटमे भागे ।

प्रहर पु० प्रह्रियते यस्मिन्कटकादिरधिकृत् प्र+हृ अप् । दिवस-

प्रहरण न० प्रह्रियतेऽनेन हृ-ल्युट् । अस्त्रे कर्पूरिये च । आधारे ल्युट् । युद्धे । भावे ल्युट् । प्रहारे, दमे च ।

प्रहर्षणी स्त्री० प्रहृष्यत्यनया हृष-ल्युट ङीप् । हरिद्रायाम् त्रयोदशाक्षरपादके छन्दोभेदे च । तत्र प्रहर्षिणीत्यन्ये । [द०

प्रहसन न०प्र+हस-ल्युट् । हास्ये, दृश्यकाव्यरूपकभेदे च । सा०

**प्रहसन्ती** स्त्री० प्र+हस-शतृ ङीप्। यूथिकायां, वासन्त्याञ्च।

**प्रहस्त** पु० प्रकृष्टो हस्तः प्रा०। विस्तृताङ्गुलिके पाणौ, रावणसेनापतिभेदे च। [मांसरोहिण्याम्।

**प्रहारवल्ली** स्त्री० प्रहारस्य वेदनोपशमना वल्ली शाक०।

**प्रहि** पु० प्रहियतेऽत्र प्र+हृ-इन् डिच्च। कूपे।

**प्रहित** त्रि० प्र+हि-क्त। क्षिप्ते, निरस्ते, प्रेरिते च। सूपे न०

**प्रहेलिका** स्त्री० दुर्बोधार्थज्ञानाय प्रश्ने (हेयालि) 'तरुण्यालिङ्गितःकण्ठे नितम्बस्थानमाश्रितः। गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहु'रित्यादिरूपे, कलसोत्तरम् 'दूपदपूर्णजल० कलसः

**प्रह्लाद** पु० प्र+ह्लद-घञ्। हिरण्यकशिपोर्दैत्यस्य पुत्रभेदे

**प्रह्व** त्रि० प्र+ह्वे-क। नम्रे विनीते, आसक्ते च।

**प्रांशु** त्रि० प्रकृष्टा अंशवोऽस्य। उच्चे, उन्नते।

**प्राकाम्य** न० प्रकामस्य भावः ष्यञ्। अष्टविधैश्वर्यमध्ये, इच्छानभिघातरूपे ऐश्वर्ये स्वाच्छन्द्यानुमतौ च। 'प्राकाम्यं ते विभूतिषि'ति कुमार०। [कारे प्राचीरादौ।

**प्राकार** पु० प्रकीर्य्यते कृ-घञ् दीर्घः। इष्टकादिरचिते वेष्टना-

**प्राकृत** त्रि० प्रकृष्टमकृतमपकार्यं यस्य। नीचे। प्रकृतेरयम् अण्। प्रकृतिसम्बन्धिनि। प्रकृत्या स्वभावेन निर्वृत्तः अण्। स्वभावसिद्धे। प्रकृतेः संस्कृतशब्दात् आगतः अण्। नाटकादौ प्रसिद्धे अपभ्रंशशब्दभेदे।

**प्राकृतप्रलय** पु० कर्म्म०। कार्य्यब्रह्मणो नाशे तेन सह कार्य्यजातस्य प्रकृतौ लये, तत्काले च।

**प्राकृतमित्र** कर्म्म०। स्वभावसिद्धे मित्रे, विषयानन्तरस्वनृपरूपात् प्राकृतशत्रोः कव्यवहितोत्तरविषयस्थे नृपे।

**प्राकृतशत्रु** पु० कर्म्म०। विषयानन्तरवर्त्तिनि नृपे।

**प्राक्तन** त्रि० प्राचि काले, देशे, प्राच्यां दिशि वा भवः ट्यु तुट् च। प्राग्भवे। 'मनोदूरे प्राक्तनजन्मविद्या' इति कु०।

**प्रागभाव** पु० प्राग्वर्त्ती अभावः। इह कपाले घटो भविष्यतीत्यादिप्रतीतिसिद्धे अभावभेदे।

**प्रागुदीची** स्त्री० प्राच्या उदीच्याश्चान्तराला दिक्। दिङ्नामान्यन्तराले इति स०। पूर्व्वोत्तरदिशि ईशानकोणे।

**प्राग्ज्योतिष** न० कामरूपदेशे तद्देशस्थे व० व०।

**प्राग्भार** पु० प्रकृष्टो भारः प्रा०। उत्कर्षे परभागे, 'मांसमस्तिष्कपङ्क 'प्राग्भारः इति प्रबोधचन्द्रोदयः। पर्व्वतापभागे च।

**प्राग्रहर** त्रि० प्रकर्षेण अग्रे ह्रियतेऽसौ अप्। श्रेष्ठे।

**प्राग्र्य** त्रि० प्रकर्षेणाग्रे भवः यत्। श्रेष्ठे।

**प्राग्वंश** पु० प्राक् वंशः सपत्नीकयजमानादिसमुदायोऽत्र। हविर्गेहात् पूर्व्वभागस्थे यजमानादिस्थित्यर्थे गृहे।

**प्राघार** पु० प्र+घृ-क्षरणे घञ् दीर्घः। यज्ञादौ वर्हिरुपरि घृतादेः क्षरणे। [विवादे च।

**प्राघुण** पु० प्र+आ-घुण-क। अतिथौ। [अजिरे, पच-

**प्राङ्गण** न० प्रकृष्टमङ्गनं पूर्व० णत्वम्। गृहभूमौ (उठान)

**प्राङ्न्याय** पु० 'आचारेणावसन्नोऽपि पुनर्लेखयते यदि। सोऽभिधेयो जितः पूर्वं प्राङ्न्यायश्च स उच्यते' इत्युक्ते व्यवहारस्थे उत्तरभेदे।

**प्राच्** त्रि० प्र-अन्च्-क्विन्। पूर्व्वस्मिन् काले देशे च। स्त्रियां ङीप् प्राची। सा च पूर्व्वस्यां दिशि, तन्त्रोक्ते पूज्यपूजकयो र्मध्यदेशे च।

**प्राचीन** त्रि० प्राक्+भवार्थे ख। पूर्व्वदिग्देशादौ भवे। (आकनादि) वनतिक्तायाम्, रास्नायाञ्च स्त्री० टाप्।

**प्राचीनवर्हिस्** पु०। इन्द्रे, नृपभेदे च।

**प्राचीनामलक** न० कर्म्म०। पानीयामलके।

**प्राचीनावीत** न० 'सव्यं बाहुं समुद्धृत्य दक्षिणे तु द्विजातयः।' 'प्राचीनावीतमित्युक्तं पैत्रे कर्म्मणि योजये'दित्युक्ते श्राद्धादौ वामकरे वहिष्कृते सति दक्षिणस्कन्धार्पिते यज्ञसूत्रादौ।

**प्राचीर** न० प्राचीयते प्र+आ-चि-क्रन् दीर्घश्च। सर्व्वतो वेष्टनाकारे इष्टकादिनिर्म्मिते आवरणे (पाचिर)। [पुंसि च

**प्राचेतस** पु० वाल्मीकिमुनौ प्राचीनवर्हिषो नृपस्य पुत्रे, वरुणस्य

**प्राच्य** पु० प्राचि भवः। शरावत्या नद्याः प्राग्दक्षिणे देशे।

**प्राजक** पु० प्र+अज-ण्वुल् वीभावाभावः। सारथौ।

**प्राजन** न० प्र+अज-ल्युट्। तोदने पश्वादेश्चालनदण्डे (पाचनी)

**प्राजापत्य** पु० प्रजापतिर्देवताऽस्य यञ्। अष्टविवाहमध्ये विवाहभेदे, 'त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्। त्र्यहं परञ्च नाश्नीयात् प्राजापत्यमितिस्मृतमिति' इत्युक्ते द्वादशाहसाध्ये व्रतभेदे न०। प्रजापत्यधिदेवताके पश्वादौ त्रि०। प्रव्रज्याङ्गे सर्व्वस्वदक्षिणकेष्टिभेदे स्त्री०।

**प्राजितृ** पु० प्र-अज-तृच् वीभावाभावः। सारथौ।

**प्राज्ञ** पु० प्रकर्षेण जानाति प्र-ज्ञा-क स्वार्थे अण्। पण्डिते। राजशुके च। प्रज्ञाऽस्त्यस्य अण्। बुद्धिमति, दक्षे च त्रि०। प्रज्ञा+स्वार्थे अण्। बुद्धौ, प्राज्ञस्य पत्नी ङीप्। प्राज्ञपत्न्यां स्त्री०। [प्रचुरे त्रि०।

**प्राज्य** न० प्रकृष्टमाज्यं प्र+अन्ज-क्यप् वा। प्रकृष्टघृते।

**प्राञ्जल** त्रि० प्र+अन्ज-अलच्। सरले, सुबोधे च।

**प्राड्विवेक** पु० अर्थिप्रत्यर्थिनौ पृच्छति प्रच्छ-क्विप् प्राट्, तयोर्वाक्यं विरुद्धाविरुद्धतया विवेचयति वि+विच-घञ् कर्म्म०। राजनियुक्ते व्यवहारदर्शके, 'विवादानुगतं पृष्ट्वा पूर्व्ववाक्य

प्रयत्नत । विचारयति येनासौ प्राड्विवेकस्तत स्मृत' इति स्मृति अत्र प्राड्विवाक इति केचित् पठन्ति ।

प्राण पु० प्र+अन-घञ् । हृदयस्थे नासापवर्त्तिनि वायौ, काव्यजीवने रसे, गन्धरसे, बले च । पञ्चवृत्तिके देहस्थे वायुभेदे इन्द्रिये च ब०व० ।

प्राणद पु० प्राण ददाति दा-क । जले, रक्ते च । जीवकवृक्षे पु० । हरितक्यां, ऋद्धिवृक्षे च स्त्री० । प्राणदातरि त्रि० 'प्राणदा यमदूतिके त्युक्त ।

प्राणनाथ पु० । पत्यौ ।

प्राणमयकोष पु० रागादिकर्मेन्द्रियसहित प्राणपञ्चकमयुर कोषवदाच्छादकत्वात् कोष इव । वेदान्तोक्ते जीवस्वरूपाच्छादके, कर्मेन्द्रियसहिते प्राणपञ्चके ।

प्राणसंयम पु० प्राणस्य प्राणरूपवृत्तिभेदस्य नासाग्रवर्त्तिनो वायो संयमो यत्र व्यापारे । प्राणायामे तेन हि व्यापारेण प्राणवायोर्वहिर्निःसरणप्रतिरोधेन प्राणसंयम इति योगशास्त्रादिप्रसिद्धम् । [प्रत्याम् ।

प्राणसमा स्त्री० प्राणै समा तुल्या प्रियत्वात् । प्रियतमाया

प्राणायाम पु० प्राण प्राणवायुरायम्यते संयम्यते येन आ+यम-घञ् । योगादिशास्त्रप्रसिद्धे प्राणवायोर्निरोधसाधने व्यापारे । बहि स्थप्राणवायोराकर्षणरूपपूरणेन, देहस्थस्य तस्य कुम्भवत् निश्चलतया रोधेन, निरुद्धस्य तस्य क्रमेण बहिर्निःसारणरूपरेचनेन च प्राणवायोर्यथेष्टविनियोगरूप वशतासम्पादनविषयो व्यापारसमुदाय प्राणायाम इत्युच्यते 'प्राणायामानिह वशमभ्यासात् कुरुते तु यत् । प्राणायाम स विज्ञेय' इत्युक्तलक्षणे प्राणायामशब्दस्य पूरण कुम्भकरेचनरूपव्यापारसमुदाये रूढिरिति मत्त्व प्रत्येकस्मिन्नपि रूढिरित्यन्ये विवादो शब्ददभिधाने ।

प्राणिद्यूत न० प्राणिभिः मेषकुक्कुटादिभि पणपूर्व द्यूत देवनम् दिव भावे क्त । प्राणिभि पणपूर्वके देवने ।

प्राणिन् पु० प्राण+अस्त्यर्थे इनि । जीवे चेतने ।

प्रातःकृत्य न प्रात प्रभाते कृत्य कर्त्तव्यम् । प्रभाते कर्त्तव्ये शौचस्नानादौ । [प्रातरुपास्ये सन्ध्याख्ये देवभेदे ।

प्रातःसन्ध्या स्त्री० प्रातरुपास्या सन्ध्या । वैदिके तान्त्रिके च

प्रातर् अव्य०प्र+अत-अरः । प्रभाते 'प्रात कालो मुहूर्त्तां स्त्रीनि ति श्रयुक्ते सूर्योदयावधिमितमुहूर्त्तकाले च ।

प्रातराश पु० अश्यते भुज्यते अश-घञ् प्रात प्रभात आशो भोजनम् । प्रात काले भोज्ये ।

प्रातिका स्त्री० प्र+अत-ण्वुल् टाप् । जवापुष्पे ।

प्रातिपदिक पु० प्रतिपदि हूयते ठञ् । अग्नौ, 'इन्द्राग्नी यत्र हूयेते इति श्रुतौ यत्र प्रतिपदीत्यर्थ । व्याकरणोक्ते 'अर्थवद् अधातुरप्रत्यय प्रातिपदिकमि'त्याद्युक्ते प्रत्ययप्रत्ययान्तभिन्ने धातुभिन्ने कृत्तद्धितसमासनिष्पन्ने च शब्दभेदे न० ।

प्रातिभाव्य न० प्रतिभुवो भाव । (जामिनी) प्रतिभुवोभावे 'प्रातिभाव्यागत सुत' इति स्मृति । [व्यापाधारणे धर्म

प्रातिस्विक न० प्रतिस्वे एकैकस्मिन् भव ठक् । प्रत्येकपदार्थे

प्रातिहारिक त्रि० प्रतिह्रियतेऽनेन प्रतिहार कापट्य माया च प्रयोजनमस्य ठक् । मायाकारके । [वेदाध्ययनादौ ।

प्राथमकल्पिक त्रि० प्रथमकल्पे भव ठक् । प्रथमारम्भोचिते

प्राथमिक त्रि० प्रथमे भव ठञ् । प्रथमकालभवे । स्त्रियां ङीप्

प्रादुर्भाव पु० प्रादुस्+भू घञ् । प्रकाशे आविर्भावे ।

प्रादुस् अव्य० प्र+अद्-उसि । स्फुटत्वे, प्रकाशे, नाम्नि, सम्भावनायां, हस्तौ च ।

प्रादेश पु० प्र+दिश-घञ् दीर्घ । तर्ज्जनीसहितविस्तृताङ्गुष्ठे देशमात्रे च 'अङ्गुष्ठस्य प्रदेशिन्या व्यास प्रादेश उच्यते' इत्युक्ते परिमाणभेदे च ।

प्रादेशन न० प्र+आ+दिश ल्युट् । दाने ।

प्राध्व पु० प्रगतोऽध्वानम् अच् समा० । रथादौ, प्रकृष्टोऽध्वा प्रा स० प्रकृष्टे पथि । नम्रे, बद्धे च त्रि० । [तायाम्

प्राध्वम् अव्य० प्र+आ+ध्वन-डमि । आनुकूल्ये, बन्धने, नम्र

प्रान्त पु० प्रकृष्टोऽन्त । शेषसीमायाम् । ।

प्रान्तर न० प्रकृष्टमन्तर व्यवधानं यत्र । दूरशून्ये पथि । छायादिशून्ये पथि, वने, कोटरे च ।

प्राप्तपञ्चत्व त्रि० प्राप्त पञ्चत्व मरणं येन । मृते ।

प्राप्तरूप त्रि० प्राप्त रूप येन । मनोहरे, पण्डिते च ।

प्राप्ति स्त्री० प्र+आप क्तिन् । ऋद्धौ, लाभे, स्थानान्तरगतौ, संहतौ, अणिमाद्यैश्वर्य्यमध्ये ऐश्वर्य्यभेदे, उदये च ।

प्राप्य त्रि प्र+आप ण्यत् । गम्ये, लभ्ये च । व्याकरणोक्ते 'क्रियाकृतविशेषाणा सिद्धिर्यत्र न विद्यते दर्शनादनुमानाद्वा तत् प्राप्यमिति कथ्यत' इत्युक्ते कर्मभेदे न० ।

प्राभृत न० प्र+आ+भृ क्त । उपढौकनद्रव्ये । स्वार्थे कन् अत्रैव

प्रामाद्य पु० प्रमादाय हित अण् । वासकवृक्षे ।

प्रामाणिक त्रि० प्रमाणेन निर्वृत्त सिद्ध ठञ् । प्रत्यक्षादि प्रमाणसिद्धे, शास्त्रसिद्धे च स्त्रियां ङीप् ।

प्रामाण्य न० प्रमाणस्य भाव । तद्वति तत्प्रकारकत्वरूपे ज्ञानधर्मे तच्च न्यायमते परतोग्राह्य मीमांसकादिमते स्वत, प्रमाणस्य वा ग्राह्यमिति भेदः विचारो शब्ददभिधाने ।

सारथौ, प्लवपक्षिणि, शिरीषवृक्ष च । [भेदे,प्लक्षवृक्षे च
प्लवङ्ग पु० प्लवन् सन् गच्छति गम-ड खच् ष्ट० । वानरे,मृग-
प्लवङ्गम पु० प्लवन् सन् गच्छति गम खच् ष्ट० । वानरे,भेके च ।
प्लाक्ष न० प्लक्षस्य समूहः, तस्य विकारः,मास्य,फलं वा अण् न
लुप् । प्लक्षवृक्षफले, तद्विकारे, तत्समुदाये च ।
प्लावन न० प्लु-णिच्-ल्युट् । (उच्छ्वान) द्रवद्रव्यस्य समन्तात्कृतौ
प्लावित त्रि० प्लु-णिच्-क्त । जलादिना समन्तात् व्याप्ते ।
प्लिह गतौ भ्वा० आ०सक०सेट् । प्लेहते अप्लेहिष्ट ।
प्लि(प्ली)हन् पु० प्लिह्-कनिन् ष्ट० वा दीर्घः । (पिला) वामकुक्षि-
पार्श्वस्थे मांसखण्डे, तद्वृद्धिहेतुके रोगभेदे च ।
प्ली गतौ क्र्या०पर०सक० अनिट् । प्लीनाति अप्लैषीत् ।
प्लीहघ्न पु० प्लीहानं हन्ति हन-क । (रोहा) दाडिमतुल्य-
कुसुमवति वृक्षभेदे । प्लीहशत्रुप्रभृतयोऽप्यत्र ।
प्लीहारि पु०६त० । अश्वत्थवृक्षे (रोहा) वृक्षभेदे च । [अप्लोष्ट
प्लु सर्पणे उत्प्लुत्य गतौ च भ्वा०आत्म०अक० अनिट् । प्लवते
प्लुत न० प्लु-क्त । तिर्य्यग्गतौ, भम्पेन, गतौ, अश्वगतिभेदे च ।
प्लुष दाहे भ्वा०पर०सक०सेट् । प्लोषति अप्लोषीत् । क्त्वा वेट् ।
प्लुष दाहे दिवा०पर०सक०सेट् । प्लुष्यति अप्लुषत् । [अप्लोषीत्
प्लुष स्नेहे पूर्त्तौ च सक०अक० स्नेहे क्र्या० पर०सेट् । प्लुष्णाति
प्लुष्ट त्रि० प्लुष-क्त । दग्धे । [सत्-अप्लोषीत् ।
प्लुस दाहे विभागे च दिवा०पर०सक० सेट् । प्लुस्यति अप्लु-
प्लेव सेवने भ्वा०आ०सक०सेट् । प्लेवते अप्लेविष्ट । चङि न ह्रस्वः
प्लोष पु० प्लुष-घञ् । दाहे ।
प्सा भक्षणे अदा०पर०सक० अनिट् । प्साति अप्सासीत् ।
प्सात त्रि० प्सा-क्त । भक्षिते ।

## फ

फ न० फक्क-ड । रूक्षकथने, निष्फलवाक्ये, फुत्कारे च । झञ्झावाते
वर्द्धके, जृम्भाविस्फारे, फललाभे च पु० । [अफक्कीत् ।
फक्क असदाचारे, मन्दगतौ च भ्वा०पर०अक०सेट् । फक्कति
फक्किका स्त्री० फक्क-धातुनिर्द्देशे भावे ण्वुल्-टाप् अतइत्वम् ।
असद्व्यवहारे (फाकि) तत्त्वनिर्णयार्थं पूर्व्वपक्षे च । 'फणि-
भाषितभाष्यफक्किके'ति नैषधम् । [(वामनहाटि) वृक्षे
फञ्जिका स्त्री० भञ्जति रोगान् भञ्ज-मर्द्दने ण्वुल् ष्ट० ।
फञ्जिपत्त्रिका स्त्री० भञ्ज-णिनि ष्ट० फञ्जि रोगमर्द्दि पत्त्रं
यस्याः । आखुपर्ण्याम् (इन्दुरकानि) । [वामनहाटि
फञ्जि(ञ्जी) स्त्री० भञ्ज-इन् ष्ट० वा ङीप् । भार्ग्याम् ।
फट पु० स्त्री० स्फुट-विकाशे अच् ष्ट० । सर्पाणां फणायाम्
स्त्रियां टाप् । सा च दन्ते, कितवे च । [भेदे च ।
फट् अव्य० स्फुट-क्विप् ष्ट० । योगे, तन्त्रोक्ते अस्त्रनामके मन्त्र-
फण अनायासेनोत्पत्तौ भ्वा०पर०सक०सेट् घटा० । फणति
अफाणीत्-अफणीत् । फेणतुः-पफणतुः ।
फण गतौ भ्वा०पर०सक०सेट् । फणति अफाणीत्-अफणीत्
वा घटादि० । णिचि फाणयति फणयति ।
फण पु०स्त्री० फण-अच् । दर्व्वीकारे सङ्कोचविकाशवति सर्पमस्तके
फण(णा)धर पु० फणं(णा) धरति धृ-अच् । सर्पे । फण(णा)-
भृदादयोऽप्यत्र । [सामान्ये च ।
फणिज्झक पु० फणिनमुज्झति ण्वुल् ष्ट० । तुलसीभेदे, जम्बीर
फणिप्रिय पु० फणिनां प्राणप्रदत्वात् प्रियः । वायौ । सर्पा-
णां वायुभक्षकत्वेन वायोस्तत्प्रियत्वम् ।
फणिफेन न० फणिनां फेनमिव । (आफिङ्) अहिफेने ।
फणिवल्ली स्त्री० फणिसदृशी दीर्घा,फणिलोकस्था वा वल्ली ।
नागवल्ल्याम् (पानलता) । [कुल्याम् ।
फणिहन्त्री स्त्री० फणिनं हन्ति हन-तृच् ङीप् । गन्धना-
फणिहृत् स्त्री० फणिनं हरति अपसारयति हृ-क्विप् । क्षुद्र-
दुरालभायाम् ।
फणिन् पु० फणोऽस्त्यस्य इनि । सर्पे । फणवदादयोऽप्यत्र ।
फणीश्वर पु०६त० । अनन्ते, वासुकौ च ।
फल भेदने भ्वा० पर० सक०सेट् । फलति अफालीत् फेलतुः
आरम्भे क्त । फुल्लतः । अन्यत्र फलितः । [फलित० ।
फल निष्पत्तौ भ्वा० पर० अक० सेट् । फलति अफालीत् । क्त
फल गतौ भ्वा०पर०सक०सेट् । फलति अफालीत् । ज्वला०
कर्त्तरि वा णः फल० फाल० ।
फल न० फल-अच् । वृक्षादीनां सस्ये, लाभे, फलके, (ढाल)
कार्य्ये, उद्देश्ये, प्रयोजने, जातीफले, त्रिफलायां, कक्कोले,
बाणाग्रे, फाले, दाने, मुष्के च । कुटजवृक्षे पु० । स्वार्थादौ
कन् । (ढाल) इति ख्याते चर्म्मणे अस्त्रप्रतिघातनिवारके
पदार्थे । अस्थिखण्डे, नागकेशरे, काष्ठादिपट्टके च पु० ।
फलकपाणि पु० फलकः पाणौ यस्य । (ढाली) चर्म्मिणि ।
फलकर्कशा स्त्री० फलेन कर्कशा कठोरा । वनकोल्याम् ।
फलकृष्ण पु० फलेन कृष्णः । पानीयामलके ।
फलकेशर पु० फले केशरा इवास्य । नारिकेलवृक्षे ।
फलत्रय(त्रिक) न०६त० । वयस्यामलकीहरीतकीरूपेषु द्राक्षा-
परूषकाश्मीररूपेषु च त्रिषु फलेषु ।
फलद पु० फलं ददाति दा-क । वृक्षमात्रे । फलदातरि त्रि०
फलपाक पु० फलेषु पाको यस्य । करमर्द्दके, पानीयामलके च

## व

व पु० वल-ड । सूचने, सन्तसन्ताने, वपने, वरुणे, घटे, समुद्रे, योनौ, जले च । गमने स्त्री० ।

वंहिष्ठ त्रि० अतिशयेन व(ब)ढ इष्ठन् वंहादेशः । अतिशयव(ब)ढले । [वि(व)ढवे ।

वंहीयस् त्रि० अतिशयेन बढ० ईयसु वंहादेश० । अतिशय-

वट हृष्टौ सामर्थ्ये च भ्वा०पर०अक०सेट् । वटति । अवटीत्-अवाटीत् । वेटत । [अश्विनीनक्षत्रे, दासाञ्च ।

वडवा स्त्री०बलं वाति वा-क लस्य ड' । घोटक्याम्, तद्रूपताके

वडवाक्र(हृ)त न० वडवया दास्या क्रतः (हृत०) वा । दास भेदे 'भक्तदासश्च विज्ञेयस्तथैव वडवाहृ(क्र)त' इति स्मृतिः ।

वडवाग्नि पु०वडवाया' शिवक्रोधाग्नावासुरस्तोऽग्नि । समुद्रस्थिते घोटकीमुखस्थे कालानले । वडवानलादयोऽप्यत्र ।

वडवामुख पु० वड़वाया मुखं स्थानत्वेनास्त्यस्य अर्श आदित्वादच् । समुद्रस्थे कालानले ।

वडवासुत पु०द्वि०व० ६त० । अश्विनीकुमारयो । [वेगतः

वण शब्दे भ्वा०पर०सक०सेट् । वणति अवाणीत्-अवणीत् ।

वणिक्पथ पु० ६त० अच्समा० । हट्टे ।

वणिग्बन्धु पु० वणिजां बन्धुरिव मोधकत्वात् । नीलीरक्षे ।

वणिग्भाव पु०६त०।वाणिज्ये आजीवनार्थं क्रयविक्रयकरणे

वणिज(ज) पु० पणायते व्यवहरति पण-इजि इतो वा पस्य वः । आजीवनार्थं क्रयविक्रयव्यवहारकर्त्तरि,ज्योतिषोक्ते ववादित षष्ठे करणे च ।

वणिज्य न० वणिजो भाव० कर्म० वा य । वाणिज्ये आजीवनार्थं क्रयविक्रयादिव्यवहारे, स्त्रीत्वमपि। 'चतुरेण चतुर्वर्गचिन्तामणिवणिज्ययेति सुक्ताफलम्। [अवटीत् । वेटतुः ।

वद् स्थैर्य्ये निश्चलभवने भ्वा०पर०सक०सेट् । वदति अवाटीत्-

वद् भाषणे वा चु० उभ०पक्षे भ्वा० पर०सक० सेट् । वादयति-ते अवीवदत्-त । पक्षे वदतीत्यादि ।

व(ब)दर पु० व(ब)द अरच् । कोलिवृक्षे । देवसर्षपवृक्षे,कार्पासबीजे च न० । वराहक्रान्तायां स्त्री० टाप् ।

व(ब)दरफली स्त्री०व(ब)दरस्येव फलमस्याः । भूमिव(ब)दर्याम्

व(ब)दरवल्ली स्त्री० व(ब)दरफलप्रधाना वल्ली शाक० । भूमिव(ब,दरीतिख्याते लताभेदे ।

व(ब)दरामलक न० व(ब)दरमिवामलकम् । प्राचीनामलके ।

व(ब)दरि(री) स्त्री० व(ब)द-अरि वा ङीप् । कोलिवृक्षे, कार्पासां, कपिकच्छ्वाञ्च ।

व(ब)दरिकाश्रम पु०न०। वदरी+स्वार्थे कन् तस्याः समीपे, तच्चिह्नितोवाश्रमः । तीर्थविशेषे । व(ब)दरीशैलोऽप्यत्र ।

व(ब)दरीच्छदा स्त्री० व(ब)दर्य्या इव छदो यस्याः । हस्तिकोलवृक्षे ।

व(ब)दरीपत्त्र पु० व(ब)दर्य्या इव पत्त्रमस्याः । नखीनामगन्धद्रव्ये। स्वार्थे कन् । तत्रैव । [शिम्बिकायाम् ।

व(ब)दरीफला स्त्री० व(ब,दर्य्या इव फलमस्याः । नील-

वद्धफल पु० वद्धानि फलान्यस्य । करञ्जवृक्षे । [कृपणे ।

वद्धमुष्टि त्रि० वद्धः अमुक्तः दानाद्यप्रसारितो मुष्टिर्यस्य ।

वद्धशिख पु० वद्धा शिखा यस्य । शिशौ । शिखावन्धनयुक्ते त्रि० । उच्चटायां स्त्री० । [व्यापारे ।

वध पु० हन-अप् वधादेशः । हनने प्राणवियोगफलके

वध संयमने चु०उ०सक०सेट् । बाधयति-ते अवीवधत्-त ।

वध निन्दायां बन्धने च भ्वादि०आत्म०सक० सेट् । बीभत्सते अवीभत्सिष्ट ।

वधिर त्रि० बन्ध-किरच् । श्रुतिशक्तिशून्ये श्रवणेन्द्रियरहिते

व(ब)धू स्त्री० बध्नात्यन्यया बन्ध-ऊ नलोप०, उह्यते वह-ऊ धश्चान्तादेशः वा । नार्याम्, स्नुषायां, गव्याम्, नवोढायाम्, भार्य्यायां, शक्कायाञ्च।

व(ब)धू(टि)टी स्त्री० अल्पा व(ब)धु० अल्पार्थे टि वा ङीप् । अल्पवयस्कायां नार्य्याम् 'गोमय(व)धूटीड्कूलचौरादेरि'ति भाषापरिच्छेदः । [प्रसव'पत्त्रादिर्यस्य। रक्ताम्लाने ।

व(ब,धूत्सवप्रसव पु० व(ब)ध्वा उत्सव आर्त्तवम् रजः मद्रव

वध्य त्रि० वधमर्हति वध+यत् । बधार्हे ।

वध्यभूमि स्त्री० हन-भावे यत् वधादेशः वध्यस्य भूमि' । श्मशाने वधस्थाने । वध्यस्थानादयोऽप्यत्र ।

वध्र न० बन्ध-ष्ट्रन् नलोप । सीसके, चर्म्मनयरज्ज्वां स्त्री० ङीष् । ष० नस्य र । वर्घ्रीत्यप्यत्र स्त्री० ।

वन याचने तना०आत्म०द्विक०सेट् । वनुते अवनिष्ट । क्ता वेट्

वन्ध वन्धने क्र्या० पर०सक०अनिट् । बध्नाति अबान्त्सीत् ।

वन्ध संयमने चुरा०उभ०सक०सेट् । बन्धयति ते अबबन्धत् त

वन्ध पु० वन्ध-घञ् । संयमने निगडादिना गतिरोधने रज्ज्वादिवेष्टनस्थले च । कर्म्मणि घञ् । देहे, ऋणशोधनविश्वासाय स्थापिते द्रव्ये आधौ च ।

वन्धक पु० वन्ध-ण्वुल् । विनिमये तुल्यरूपद्रव्यदानेन द्रव्यान्तरग्रहणरूपे परिवर्त्ते आधौ न० । 'अशीतिभागो वृद्धिः स्यात् मासिमासि सबन्धके' इति स्मृति० पुंश्चल्यामसत्यां स्त्रियाम् स्त्री० गौरा० ङीष् ।

दिविक्ष्ये तस्यावश्यमङ्गीकार्यत्वात् ।
वलात्कार पु० वलात्+कृ-घञ्। बलपूर्वककरणे, हठात्करणे च
वलालिका स्त्री० वलमेवात्मा स्वरूपं कारणत्वात् यस्याः स्वार्थे कन् अतइत्त्वम् । (हातियुडा) हस्तिशुण्डीवृक्षे ।
वलाढ्या स्त्री० बलाय आढ्या । (बिलियाड़ा) क्षुपभेदे ।
वलानुज पु० अनुजायते अनु+जन-ड इत०। श्रीकृष्णे ।
वलामोटा स्त्री० बलनामोटयति आ+मुट-अच् । नागदमन्याम् । अपरान्तोक्तिः प्रामादिकी तथात्वे ङीप् स्यात् ।
वलाय पु० बलस्यायः स्थानम् अय-घञ् । वरुणवृक्षे ।
वलाराति पु०बलस्य तन्नामासुरस्यारातिः । इन्द्रे । वलगतु प्रभृतयोऽप्यत्र । [खुल् । पानीयामलके
वलाहक पु० बलाय सामर्थ्याय चलति पर्याप्नोति अच-
वलाहक पु० बलं कम्पनमाजहाति आ+हा-कुन् । मेघे मुस्तके, पर्वते, दैत्यभेदे, नागभेदे च । [कन्द' । गुलुञ्चकन्दे
वलाह्वकन्द पु० बलं सामर्थ्यमाह्वयति आ+ह्वे-क तादृशः
वलि पु०वल-इन् । पूजोपहारे, इदत 'स्त्री वलिं चैव निजगात्रात्समुचित'मिति चण्डी राजग्राह्ये भागे, उपप्लवे, चामरदण्डे, गृहस्थकर्त्तव्यपञ्चयज्ञमध्ये भूतयज्ञे, 'वलिकर्म्म ततः कुर्यादिति स्मृतिः । दैत्यभेदे विरोचनपुत्रे च 'येन बद्धो वलीराजा दानवेन्द्रो महाबली'ति रक्षाबन्धनमन्त्रः । जरया श्लथचर्म्मणि स्त्री० वा ङीप् । 'गृहस्थस्तु यदा पश्येत् वलीपलितमात्मन' इति स्मृति' । उदरावयवे । 'वलित्रयं चारु बभार बाले'ति कुमार' । गुह्यस्ये अङ्कुराकारे मांसपिण्डे, गृहदारुभेदे च (पाड) स्त्री०स्वार्थे कन्। तत्र, अतिवलायाञ्च ।
वलिध्वंसिन् पु० वलिं ध्वंसयति स्वस्थानात् पातयति ध्वन्सणिच्-णिनि । विष्णौ वामनावतारेण हि तस्य तथात्वम् ।
वलिन(भ) त्रि०वलि+अस्त्यर्थे-इन भ वा। जरया शिथिलचर्मवति
वलिन् त्रि० वलमस्त्यस्य इनि । बलवति । उष्ट्रे, महिषे, वृषे, शूकरे, वलरामे कुन्दवृक्षे, कफे, माषे च पु० । (वेलियाडा) क्षुपे स्त्री०ङीप् ।
वलिपुष्ट पु० वलिना पूजोपहारद्रव्येण पुष्टः पुष-क्त। काके
वलिप्रिय पु० वलिनं प्रीणाति प्री-क । लोध्रद्रुमे ।
वलिभुज् पु० वलिं पूजोपकरणद्रव्यं गृहस्थदत्तवलिं वा भुङ्क्ते क्विप् । काके ।
वलि(ली)मुख पु० वलि(ली)युक्तं मुखमस्य शाक० । वानरे ।
वलिष्ठ त्रि० अतिशयेन वली वलिन्+इष्ठन् । अत्यन्तवलवति । उष्ट्रे पु० ।
वलिसद्मन् न० इत०। पाताले वलिपुरादयोऽप्यत्र । [प्रान्ते(छाँद)
वलीक पु० न० वालयति आप्नोति वल ईकन् नि० । पटल
वलीयस् त्रि० अतिशयेन बली वलिन्+ईयसु। अत्यन्तबलवति
वलीवर्द पु०वृ-क्विप् बर् ई लक्ष्मीश्च वय ईवरौ तौ ददाति दा-क ईवर्दः बली चासौ ईवर्द्दश्चेति। वृषे ।
वल्य न०वलाय हितं वल+यत् । प्रधानधातौ, शुक्रे, वलसाधने च । अश्वगन्धायाम्, अतिवलायां, प्रसारिण्याञ्च स्त्री० ।
वल्ह स्तुतौ दाने, वधे, च सक० याचने द्विक० भ्वा० आत्म० सेट् । वल्हते अवल्हिष्ट ।
वष्क(स्क)यि(णी)नी स्त्री०वस्क गतौ अयन् ष्ट०मस्य वः -ह्रस्व वा यत्वम् 'वष्क(स्क)योऽस्यास्ति इनि ङीप् पक्षध्वत्वे णत्वम् । चिरप्रसूतायां गवि। वष्क(स्क)यं नयतीति नी-ड गौ०ङीप् पक्षध्वत्वे पूर्व्व०णत्वम् । वष्क(स्क)यणी(नी)त्यप्यत्र
व(ब)ह वृद्धौ भ्वा०आत्म०अक०सेट् इदित् । वं(बं)हते अवं(बं)हिष्ट । 'महिषाहर्यादवमोष्ठ्यादिरितिपाणिनीयाः । दन्त्योष्ठ्यादिरिति वोपदेवः ।
व(ब)हु त्रि० बं(बं)हि-कु नलोपः । त्रिप्रभृत्यनेकसङ्ख्यान्विते, विपुले च । स्त्रियां वा ङीप् व(ब)ह्वी ।
व(ब)हुकण्टक पु० व(ब)हूनि कण्टकान्यस्य । क्षुद्रगोक्षुरे । (गोखुरी) क्षुपभेदे । [कण्टकारिकायाम्
व(ब)हुकण्टा स्त्री० व(ब)हवः कण्टाः कण्टकाः यस्याः ।
व(ब)हुकन्द पु० इव० । सूरणे (ओल) । कर्कट्यां स्त्री० ।
व(ब)हुकर त्रि० व(ब)हूनि किरति कॄ-अच् । (फरास) मार्ज्जनकरे । सम्मार्ज्जन्यां स्त्री०गौ०ङीप् । कृ-अच् इत० उष्ट्रे । अनेककार्यकरे त्रि० ।
व(ब)हुकर्णिका स्त्री०व(ब)हव'कर्णा इव पर्णान्यस्य । आखुकर्ण्याम् । [यूथ्यां, चम्पककलिकायां, जीरके च स्त्री० ।
व(ब)हुगन्ध पु० इव० । कुन्दुरुके । त्वचे, (तेजपात) न० ।
व(ब)हुगन्धदा स्त्री० व(ब)हुगन्धं ददाति दा-क । मृगभेदे ।
व(ब)हुग्रन्थि पु० इव० । झावुके (झाउ) ।
व(ब)हुच्छिन्ना स्त्री० व(ब)हु यथा स्यात् छिद्यते स्म छिद-क्त तस्य, दस्य च न० । कन्दगुडूच्याम् ।
व(ब)हुतिक्ता स्त्री० व(ब)हु यथा तथा वाऽल्पेन वा तिक्ता । काकमाच्याम् ।
व(ब)हुतिथ त्रि० व(ब)हूनां पूरणः व(ब)हु+डट् तिथुक् च। अनेकसंख्याने, 'काले गते वहुतिथे, इत्युद्भटः ।
व(ब)हुत्र अव्य० व(ब)हुषु त्रल् । अनेकेषु कालादिषु ।
व(ब)हुत्वच् पु० इव० । भूर्ज्जपत्रवृक्षे । स्वार्थे कन् तत्रैव ।

ब(व)हुदुग्ध पु० ब(व)हूनि दुग्धानीव चूर्णानि यस्मात् कणेभ्यः यस्य । गोधूमे । प्रचुरक्षीरवत्यां गवि, स्नुहीवृक्षे च स्त्री०। स्वार्थे कन् अत इत्वम् । स्नुहीवृक्षे ।

ब(व)हुधा अव्य० ब(व)हु+प्रकारे-धाच् । अनेकप्रकारे

ब(व)हुपत्र पु ६ब० । पलाण्डौ अनेकपर्णयुक्ते त्रि० ।
त्रिङ्गिन्याम् इन्द्रकुमार्य्यां, तुलस्यां, हत्त्यां गोरक्ष दुग्धायां, मत्तकायाञ्च स्त्री गौ० ङीप् । तत स्वार्थे कन् । भूम्यामलक्यां, मेथिकायां, महाशतावर्य्याञ्च ।

ब(व)हुपर्णी पु ६ब । सप्तच्छदवृक्षे तस्य प्रतिपर्वं सप्तसप्तपर्णव- त्त्वात् । अनेकपर्णयुक्ते त्रि०। मेथिकायां स्त्री० ङीप्। तत स्वार्थे कन् । आखुकर्णी स्त्री०टाप् । [क्त्वात्तथात्वम्

ब(व)हुपाद्(द) पु ६ब०। वा अन्त्यलोप । वटवृक्षे अनेकपिका-

ब(व)हुपुत्र ब(व)हव पुत्रा-इव पर्णान्यस्य। सप्तच्छदे। अनेक- पुत्रादिक भूतान्यस्य । शतमूल्यां स्त्री० ङीप् ।

ब(व)हुपुष्प पु०६ब । निम्बवृक्षे । स्वार्थे कन् अत इत्वम्। धातक्यां स्त्री० । [तुच्छप्रचुरत्वपुष्पत्वात् तथात्वे पु०

ब(व)हुप्रज त्रि ६ब० । बहुसन्तानवति। शूकरे पु । प्रजा

ब(व)हुफल पु०६ब० । कदम्बवृक्षे विकङ्कते, तेजपत्रे च । अनेकफलयुक्ते त्रि०। माषपर्ण्यां, क्षविकायां, काक- माच्यां, त्रिपुष्यां, (गमा) क्षुद्रकारवेल्लाः भूम्यामलक्याञ्च स्त्री० । स्वार्थे कन् अत इत्वम् । भूमिबदर्य्यां स्त्री० । आमलक्यां स्त्री ङीप् ।

ब(व)हुमञ्जरी स्त्री ६ब सप्तम्यार् न कप् । तुलस्याम् ।

ब(व)हुमल पु० ६ब० । सीसके। अनेकमलयुक्ते त्रि० ।

ब(व)हुमूर्त्ति स्त्री०६ब० । वनकार्पासे । नानाकारवति त्रि०

ब(व)हुमूल त्रि०६ब०। अनेकमूलवति । शिग्रौ पु०। स्वार्थे कन्। उशीरे न०। शतावर्य्यां स्त्री० टाप्। माकन्द्यां ङीप्

ब(व)हुरसा स्त्री०६ब०। महाज्योतिष्मत्याम्। नानारसवत्यां त्रि

ब(व)हुरूप पु ६ब । सर्ज्जरसे (धुना) शिवे, विष्णौ, हिर- ण्यगर्भे, कामे, केशे च । नानारूपवति त्रि ।

ब(व)हुरोमन् त्रि० ६ब० अनेकरोमवति रोमशे । मेषे पु ।

ब(व)हुल त्रि ब(व)हि-कुलच् नि० नलोप । अनेकसंख्या- न्विते प्रचुरे । ब(व)हूनि लाति ला क । अग्नौ कृष्णवर्णे च पु । महति त्रि । कृष्णपक्षे पु० ब(व)हुलेऽपि गते निशाकर' इति कुमारः। आकाशे न । नीलिकायां नील- वर्णायां गवि च स्त्री । कृत्तिकासु स्त्री० ब०व० । प्रचुरे त्रि । अग्निदैवतत्वात् कृत्तिकानक्षत्रे स्त्री उ ष् ब०व० ।

बहुलगन्धा स्त्री० ६ब । एलायाम् ।

ब(व)हुलच्छद पु० ६ब० । रक्तशोभाञ्जने ।

ब(व)हुलीकृत त्रि० ब(व)हुल+च्वि कृ क्त। (व्यागडा) बुषस्या- पसारणेन राशीकृते खलस्थे धान्ये, राशीकृतमात्रे च ।

ब(व)हुवल्क पु० ६ब । प्रियाले । (पियाशाल) ।

ब(व)हुवारक पु० ब(व)हूनि वारयति अण्, तत कन्, ण्वुल वा । श्लेष्मातके (लोना आता) ।

ब(व)हुविस्तीर्णा स्त्री० ब(व)हु यथा तथा विस्तीर्णा वि+ स्तृ क्त । (कुकुर) कुचिकावृक्षे । [त्रि०

ब(व)हुवीज पु० ६ब०। (आता) आतृप्ये वृक्षे । प्रचुरवीजवति

ब(व)हुवीर्य्य पु० ६ब । विभीतके, (नयना) तण्डुलीयशाके (मटेशाक) शाल्मलिवृक्षे, मरुबके च। भूम्यामलक्यां स्त्री ।

ब(व)हुव्रीहि त्रि ६ब० । अनेकधान्यादियुक्ते । व्याकरणोक्ते प्रायेण अन्यपदार्थप्रधाने समासभेदे पु० ।

ब(व)हुशस् अव्य० ब(व)हु+शस् । अनेकवारानित्यर्थे 'गुण लब्धे ब(व)हुशो नियोजिता' इति कुमार ।

ब(व)हुशल्य पु० ६ब० । रक्तखदिरे। अनेककीलयुक्ते त्रि० ।

ब(व)हुशाल पु० ब(व)हुभि शाल्यते शल-सज्ञायां कर्त्तरि घञ । स्नुहीवृक्षे । [युक्ते त्रि०

ब(व)हुशिखा स्त्री ६ब । जलपिप्पल्याम् । अनेकशिखा

ब(व)हुसार पु० ६ब । खदिरे । अनेकसारवति त्रि० ।

ब(व)हुसुता स्त्री० ब(व)हव सुता इव मूलान्यस्याः । शत- मूल्याम । अनेकपुत्रवति त्रि० । [नानायुक्ते त्रि०

ब(व)हुसूति स्त्री०६ब । अनेकप्रसववत्यां गवि । ब(व)हुभि

ब(व)हुस्रवा स्त्री ब(व)हु यथा तथा स्रवति स्रु अच । शल्ल- कीवृक्षे । अनेकधा क्षरणवति त्रि० ।

ब(व)हृच पु०६ब अच् समा०। ऋग्वेदे । तज्ज्ञे न० । तदभिज्ञे त्रि० । तत्पत्न्यां स्त्री० । [आम्रा(म्रा)तके ।

बा(वा)ड आप्लावने सक स्नाने अक०भ्वा आ०सेट् । बा(वा)डते

बाडव न बडवानां समूह अण् । घोटकसमुदाये । बाड भज् बल-भज् वसु ड वा बाडो दृढ़ि त याति या क । ब्राह्मणे पु० । बडवायां जात अण् । और्व्वे समुद्रस्थे कालाग्निभेदे पु । बाडवाग्न्याद्योऽप्यत्र पु ।

बाडवेय पु०द्वि० बडवाया अपत्ये-ढक्। अश्विनीकुमारयो ।

बाडव्य न बाडव+समूहे यत् । विप्रसमुदाये ।

बा(वा)ण पु बण शब्दे बण-गतौ वा सज्ञायां कर्त्तरि घञ् । शरे शायके, (बांट) विरोचनसुत दैत्यभेदे, केवले च । शरपुङ्खे स्त्री०। नीलझिण्ट्याम् पु स्त्री० । मेदिन्याम् टनोत्तु बादिषु पठित वायवत्यादय बणशब्दे इति धातु-

प्रकृतिकत्वमाऽऽरतोऽस्त्रोभयविधादित्यम् ।

वा(बा)णलिङ्ग बाणदैत्येन संपूज्याविसृज्य नर्मदायां निक्षिप्ते शिवलिङ्गभेदे । विस्तरो हृहदभिधाने ।

वाणिज्य न० वणिजो भाव, कर्म वा ब्राह्मणादित्वात् ष्यञ् । क्रयविक्रयादौ 'वाणिज्येन गतस्य मे व्यहपते'रिति सा०श्य०

वाणि(णी) वण-इ णिच् । वस्त्रादीनां वयनक्रियायाम् । वा ङीप् । वस्त्रादीना वयनक्रियाया, वाक्ये, सरस्वत्याञ्च ।

वा(बा)दर पु० स्त्री० व(ब)दर+स्वार्थेऽण् । कार्पासवृक्षे, व(ब)दरस्येदं तस्य विकारो वा अण् । कार्पासस्त्रे न० । तद्वस्त्रादौ त्रि० । [बा(वा)दरिरप्यत्र ।

वा(बा)दरायण पु० ब(व)दर्य्यां भव' फक् । वेदव्यासे । ऋषि ।

वाध पु० वाध-घञ् । प्रतिरोधे । न्यायमते साध्याभाववत्पदार्थे । यथा वह्निमुद्भो वह्न्यभाववान् ह्रदो बाधः । वाध-कर्त्तरि अच् । प्रतिबन्धके त्रि० । भावे घञ् । बोधप्रतिबन्धे, पीडने, उपद्रवे च । [चङि न ह्रस्वः ।

वाध विहतौ भ्वादि०आत्म०सक० सेट् । वाधते अववाधिष्ट ।

वाधक त्रि० वाध-ण्वुल् । प्रतिबन्धके । स्त्रीणां ऋतुकाले प्रजाजननशक्तिप्रतिरोधके रोगभेदे पु० ।

वाधिर्य्य न० वधिरस्य भाव' ब्राह्मणादित्वात् ष्यञ् । श्रवणशक्तिराहित्ये रोगभेदे । [अपत्ये ।

वान्धकिनेय पु०स्त्री०वन्धक्या अपत्य' ढक् इनङ् च । असत्या

वान्धव पु० वन्धु+स्वार्थे, इदमर्थे वा अण् । वन्धुशब्दार्थे, पितृमातृसम्बन्धिनि मातुलादौ च ।

वाल पु०न० (वाला) गन्धद्रव्यभेदे । मूर्खे, शिशौ च त्रि० । केशे पु० । अर्श आदित्वादस्त्यर्थे अच् । अश्वशिशौ, अश्ववालधौ, हस्तिवालधौ, नारिकेले, पशुपुच्छे च पु० ।

वालक वाल+स्वार्थे कन् । शिशौ, (वाला) गन्धद्रव्ये च । अङ्गुरीयके न० । अश्वकरिपुच्छयो', वलये च पु० ।

वालकप्रिया स्त्री० वालकं प्रीणाति प्री-क । इन्द्रवारुण्यां (राखालशशा) कदल्याञ्च ।

वाल(लि)खिल्य पु० अङ्गुष्ठपर्वमितेषु षष्टिसहस्रसंख्येषु पुलस्त्यकन्यायां क्रतो' पुत्रेषु मुनिभेदेषु ।

वालग्रह पु०६त० वालानां पीडके उपग्रहभेदे 'वालग्रहाभिभूतानां वालानां शान्तिकारक'मिति चण्डी ।

वालतनय पु० वालास्तनया इव पत्राण्यस्य । खदिरे वालदलवाल्लिपत्राद्योप्यत्र पु० ।

वालधि पु० वाला धीयन्तेऽत्र धा-कि । केशयुक्तलाङ्गूले ।

वालपुष्पी स्त्री० वालानि क्षुद्राणि पुष्पाण्यस्याः ङीप् । यूथिकायाम् । स्वार्थे कन् । तत्रैव ।

वालभोज्य पु० ६त० । चणके । वालकभक्षणीये त्रि० ।

वालमूषिका स्त्री० कर्म० । क्षुद्रमूषिकायाम् ।

वालव्यजन न० वाला एव व्यजनम् । चामरे । 'कुर्वन्ति वालव्यजनैश्चमर्य्य' इति कुमारः ।

वालहस्त पु० वालानां केशानां समूह' वाल+हस्त । केशसमूहे । वाला हस्तइव यत्र । पशूनां लाङ्गूले ।

वाला स्त्री० वालाः केशाकाराः पदार्थाः सन्त्यस्य अच । नारिकेले, हरिद्रायां मल्लिकाभेदे, वलये, त्रुटौ एतकुमार्य्यां (वाला) गन्धद्रव्यभेदे, अम्बष्ठायां, नीलझिण्ट्याम्, षोडशवर्षीयायां स्त्रियां, कन्यायाञ्च । स्वार्थे कन् । तत्रैव वालिकायां, कर्णभूषणे (कानवाला) एलायाञ्च । [त्यप्यत्र ।

वालि पु० वल-इन् णिच् । इन्द्रपुत्रे कपिराजे । स्त्रिनि । वाली-

वालिश त्रि० वाड-इन् वाडि वृद्धिं श्यति शो-क डस्य ल' । मूर्खे, शिशौ च 'वालिशमालि ! शयान'मिलुण्ट' । वालाः सन्त्यस्य इनि वाली मूर्द्धा शेतेऽत्र शी-ड । उपधाने न० । [वालिहन्त्राद्योप्यत्र पु० ।

वालिहन् पु० वालिं वालिनं वा हन्ति हन-क्विप् । रामे

वालु पु० वल-उण् । एलवालुकनामगन्धद्रव्ये । स्वार्थे कन् । तत्रैव न० । पानीयामलके पु० । सिकतासु स्त्री० ।

वालुकायन्त्र न० ६त० । औषधपाकार्थे यन्त्रभेदे ।

वालुकी स्त्री०पु० वल-उक गौरा०ङीष् । कर्कटीभेदे । ट० लुक् । वालुङ्कीत्यप्यत्र ।

वालेय पु० वलेरपत्यं, वलये हितं वा ढक् । रासभे, दैत्यभेदे, अङ्गारवल्ल्यां च । कोमले, वलिहिते च त्रि० ।

वालेयशाक पु०वलये हित० ढक् कर्म० (वाननहाटि) शाकभेदे

वालेष्ट पु० वालानामिष्टः इष-क्त । व(ब)दरे । वालकाभीष्टे त्रि०

वाल्य न० वालस्य भाव, कर्म वा वयोवचनत्वात् ष्यञ् । 'आषोडशाद्भवेद्बाल' इत्युक्ते अवस्थाभेदे ।

वाष्प(ष्प) पु० वाध-प० पतं सृतं वा । नेत्रजले, ऊष्मणि च

वा(बा)ह प्रयत्ने भ्वादि० आत्म० अक० सेट् । वाहते अवाहिष्ट । चङि न ह्रस्वः ।

वाहु पु० वाध-कु धस्य ह । भुजे कक्षावध्यङ्गुलिपर्य्यन्तेऽवयवे

वाहुज पु०वाहुभ्यां ब(ब्र)ह्मवाहुभ्यां जायते जन-ड । क्षत्रिये 'वाहू राजन्योऽभव'दिति श्रुतिः । [विद्ध लौहचर्म्मादौ ।

वाहुत्र पु०न० वाहु' त्रायते त्रै-क । अस्त्राघातवारणार्थं हस्त-

वाहुदा स्त्री० (करतोया) नदीभेदे । सा हि अवगाहनात् लिखितस्य मुनेः छिन्नहस्तं पुनर्ददाविति पुराणम् ।

प्रिपल्यां तया हि मूर्च्छितो बोध्यते। कार्त्तिकैकादश्यां तत्र हि हरेर्बोधनम्।

**बोधि** पु॰बुध-इन्। अश्वत्थवृक्षे, समाधिभेदे च। ज्ञातरि त्रि॰।

**बोधितरु** पु॰ कर्म॰। अश्वत्थवृक्षे। बोधिद्रुमादयोऽप्यत्र पु॰।

**बौद्ध** न॰ बुद्धेन प्रोक्तमण्। बुद्धप्रणीते निरीश्वरवादे शास्त्रे। तदधीयते इति पुरनण्। बौद्धागमाध्येतरि त्रि॰। [पत्-त

**ब्युष** उत्सर्गे विभागे च चु॰उ॰सक॰सेट्। ब्योषयति-ते अबुब्युब्रण शब्दे भ्वा॰पर॰सक॰सेट्। ब्रणति। अब्रणीत्-अब्राणीत्।

**व्र(ब्र)तति** स्त्री॰प्रतनोति प्र+तन-क्तिच् पृ॰पस्य व॰। लतायाम् व्रतमिव करोतीति णिच् व्रति। दन्त्योष्ठ्यादित्वमपि।

**व्र(ब्र)ध्न** पु॰ बन्ध-नक् ब्रवादेश॰। सूर्य्ये, अर्कवृक्षे, शिवे, वृक्षमूले च। मेदिनीकरेण दन्त्योष्ठ्यवादित्वेन लिखनात्तथात्वमपि तन्मूलं मृग्यम्।

**व्र(ब्र)ह्मकूर्च** न॰'अहोरात्रोषितोभूत्वा पौर्णमास्यां विशेषतः। पञ्चगव्यं पिबेत् प्रातः व्र(ब्र)ह्मकूर्च्चमिति स्मृतमि'त्युक्ते व्रतभेदे

**ब्रह्मकोशी** स्त्री॰ व्र(ब्र)ह्मणः कोशीव। अजमोदायाम्।

**व्र(ब्र)ह्मचर्य्य** न॰ व्र(ब्र)ह्मणे वेदलाभाय चर्य्यते चर-यत्। वेदज्ञानार्थमुपनयनोत्तरमाश्रमे, मैथुनराहित्ये च।

**व्र(ब्र)ह्मचारिणी** स्त्री॰ व्र(ब्र)ह्म चर्य्यतेऽनया चर-णिच् करणे ल्युट्-ङीप् ६त॰। व्र(ब्र)ह्मयष्ट्यां भार्ग्याम्।

**व्र(ब्र)ह्मचारिन्** व्र(ब्र)ह्मणे वेदाय तद्ग्रहणाय चरति चर-णिनि। उपनयनानन्तरं प्रथमाश्रमयुक्तेषु विप्रादिषु त्रिषु वर्णेषु, कारणीवृक्षे, मैथुनराहित्यादि व्र(ब्र)ह्मचर्य्यव्रतधारिण्यां स्त्रियां च स्त्री॰ङीप्। 'आसीता मरणात् क्षान्ता नियतं व्र(ब्र)ह्मचारिणी'ति स्मृतिः। [नकवृक्षे

**व्र(ब्र)ह्मजटा** स्त्री॰ व्र(ब्र)ह्मणो जटेव संहतशाखत्वात्। दम-

**व्र(ब्र)ह्मज्ञ** त्रि॰ व्र(ब्र)ह्म वेदं, तुरीयं शुद्धचैतन्यं वा जानाति वेत्ति ज्ञा-क। वेदज्ञे, तुरीयशुद्धचैतन्यज्ञे च।

**ब्रह्मज्ञान** न॰ ६त॰। त्रिगुणावच्छिन्नातीततुरीयशुद्धचैतन्यविषयज्ञाने विस्तरो वृहदभिधाने।

**व्र(ब्र)ह्मण्य** न॰ व्र(ब्र)ह्मणे वेदाय प्रभवति शुद्धचैतन्यज्ञानाय वा साधु व्र(ब्र)ह्मणो हितो वा यत्। विप्रवेदरक्षणकर्त्तरि विष्णौ, 'नमो ब्रह्मण्यदेवाये'ति विष्णुप्रणाममन्त्र'। विप्रधर्म्मे व्र(ब्र)ह्मदारुवृक्षे च।

**व्र(ब्र)ह्मतीर्थ** न॰ ६त॰। पुष्करतीर्थे, पुष्करमूले च।

**व्र(ब्र)ह्मत्व** न॰ व्र(ब्र)ह्मणो भावः त्व। ऋत्विग्विशेषस्य व्र(ब्र)ह्मणो धर्म्मे, शुद्धतुरीयव्र(ब्र)ह्मभावे च।

**व्र(ब्र)ह्मदण्ड** पु॰६त॰ विप्रकृते अभिशापरूपे दण्डने 'व्र(ब्र)ह्मदण्डहता ये चे'ति स्मृतिः। विप्रस्य यष्टौ च।

**व्र(ब्र)ह्मदर्भा** स्त्री॰ व्र(ब्र)ह्मणो दर्भो यन्यनमस्याः। यमान्याम्

**व्र(ब्र)ह्मदाय** पु॰ व्र(ब्र)ह्मणि(णे)वा वेदाध्ययनसमाप्तौ, विप्राय वा राज्ञा दीयते दा कर्म्मणि घञ्। समाहूतविप्राय देये धने 'व्र(ब्र)ह्मदायागतां भूमिं हरेयुर्ब्रा(व्रा)ह्मणीसुता' इति स्मृतिः। [कारे वृक्षभेदे।

**व्र(ब्र)ह्मदारु** पु॰ व्र(ब्र)ह्मणो विप्रस्य हितः दारुः अश्वत्था-

**व्र(ब्र)ह्मन्** न॰ वृह-मनिन् दृंहेर्नोऽच्चेति नकारस्याकारेत्वम्। वेदे, तपसि, सत्ये, तत्त्वे, यथार्थे, तुरीये सर्व्वगुणातीते विशुद्धे चित्स्वरूपे च। हिरण्यगर्भे विप्रे ऋत्विग्विशेषे च पु॰। उज्ज्वलदत्तेन दन्त्योष्ठ्यादित्वमेव साधितम् मेदिनीकरेण ओष्ठ्यादित्वेन कीर्त्तनात्तथात्वमपि किन्तु तन्मूलं मृग्यम्।

**व्र(ब्र)ह्मनाल** न॰ काश्यां मणिकर्णिकासमीपस्थे तीर्थभेदे।

**व्र(ब्र)ह्मनिर्वाण** न॰ व्र(ब्र)ह्मणि निर्वाणं निर्वृतिः। व्र(ब्र)ह्मभावलाभे सकलानर्थनिवृत्तिरूपे परमानन्दे।

**व्र(ब्र)ह्मपर्णी** स्त्री॰ व्र(ब्र)ह्मेव विस्तीर्णं मूलादारभ्य स्थितानि पर्णा-न्यस्याः ङीप्। पृश्निपर्ण्याम्।

**व्र(ब्र)ह्मपवित्र** पु॰ व्र(ब्र)ह्मेव वेदोक्तकर्म्मणि वा पवित्रः। कुशे

**व्र(ब्र)ह्मपादप** पु॰ व्र(ब्र)ह्मणः प्रियः वैदिककर्म्मयोग्यत्वात् विप्रव्र(ब्र)ह्मचारिवार्य्यदण्डार्थत्वाद्वा। पलाशवृक्षे।

**व्र(ब्र)ह्मपुत्र** पु॰ व्र(ब्र)ह्मणः पुत्र इव कपिलवर्णत्वात्। विषभेदे, उत्तरदेशप्रसिद्धे नदभेदे, क्षेत्रभेदे च। सरस्वत्यां नद्यां स्त्री॰। तस्याः पितामहजातत्वं पुराणप्रसिद्धम्।

**व्र(ब्र)ह्मपुरी** स्त्री॰ ६त॰ ब्रह्मोपासनास्थाने हृदये, तदाधारस्थाने सत्यलोके, काश्याञ्च।

**व्र(ब्र)ह्मबन्धु** पु॰ व्र(ब्र)ह्मा विप्रो बन्धुरुत्पादको यस्य। विप्राचाररहिते निन्द्यकर्म्मकारिणि जात्या विप्रे, विप्रतुल्ये भट्टादौ च। [युज्ये च

**व्र(ब्र)ह्मभूय** न॰ ब्रह्मणो भावः भू क्यप्। व्र(ब्र)ह्मभावे तत्सा

**व्र(ब्र)ह्मयज्ञ** पु॰ व्र(ब्र)ह्मनिमित्तकस्तदध्ययनतदध्यापनानिमित्तको यज्ञः। वेदाध्ययनाध्यापनादौ। [हाटि) वृक्षे

**व्र(ब्र)ह्मयष्टि** स्त्री॰ व्र(ब्र)ह्मणो यष्टिरिवालम्बनत्वात् (वामन

**व्र(ब्र)ह्मरन्ध्र** न॰६त॰ उत्तमाङ्गस्थिते ब्राह्मप्राप्तिहेतुके छिद्रस्थाने। तच्छिद्रेण निष्क्रमणे हि जीवस्य व्र(ब्र)ह्मप्राप्तिः श्रूयते

**व्र(ब्र)ह्मराक्षस** पु॰ व्र(ब्र)ह्मा विप्रोऽपि कुकर्म्मभिः राक्षसः। राक्षसरूपतां प्राप्ते भूतभेदे 'अपहृत्य च विप्रस्वं भवति व्र(ब्र)ह्मराक्षस' इति मनुः।

नो कुर्यात् ब्रा(ब्रो)ह्मणत्वं न उच्यते' इत्युक्ते सदाचारवति विप्रे । [स्वार्थे कन् । अल्पे च विप्रदण्डे च ।

ब्रा(ब्रो)ह्मणयष्टि स्त्री० इत०। वा ङीप् (वामनहाटी) वृक्षभेदे

ब्रा(ब्रो)ह्मण्य न० ब्रा(ब्रो)ह्मणानां समूहः भावो वा यञ् । विप्रसमूहे । ब्राह्मणवर्णे, विप्रत्वे च ।

ब्रा(ब्रो)ह्ममुहूर्त पु० ब्रा(ब्रो)ह्मा देवतास्य अण् तयोः कर्म०। अरुणोदयात् प्राग्वर्तिनि 'रात्रेश्च पश्चिमे यामे मुहूर्तो ब्रा(ब्रो)ह्म उच्यते ' इत्युक्ते दण्डद्वयात्मके काले ।

ब्रा(ब्रो)ह्मीकन्द पु० इत० । ब्रा(ब्रो)ह्मी इव कन्दो यस्य । वाराहीकन्दे । [चत् अवोचत ।

ब्रू कथने अदा० उभ० द्विक० सेट् । ब्रवीति-आह ब्रूते । अवो-

भ

भ न० भा-क । नक्षत्रे, मेषादिराशौ, ग्रहे च । शुक्राचार्ये पु० । भस-ड । भ्रमरे, भ्रान्तौ । छन्दोग्रन्थोक्ते आदिगुरुके अन्त्यौ लघू तद्युक्ते वर्णत्रिके च पु० । [च त्रि०।

भक्त पु०न० भज-क्त। अन्ने ओदने । भक्तियुक्ते तदात्मके, विभक्ते

भक्तदास पु० भक्तेन अन्नमात्रलाभेन दासः अङ्गीकृतदासभावः । पञ्चदशदासान्तर्गते दासभेदे । भक्तदासश्च विज्ञेय' इति स्मृतिः ।

भक्तमण्ड पु०न० इत० । भक्तस्य निस्रावे (माड) ।

भक्ति स्त्री० भज-क्तिन् । सेवायाम् आराधनायां, तदेकाग्रचित्तवृत्तिभेदे, विभागे, गौण्यां वृत्तौ, उपचारे, अवयवे, भङ्ग्याम्, श्रद्धायाम्, रचनायाञ्च, 'भवति विरलभक्ति'रिति रघु०

भक्तियोग पु० भक्तिरेव योगः एकाग्रचित्तवृत्तिभेदः । तदेकाग्रचित्तताख्ये योगे । [भवात्मके रतिभेदे ।

भक्तिरस पु० भक्तिरेव रस आस्वादः । भक्तिरूपे ध्येयानु-

भक्ष अदने चु०उभ०सक०सेट् । भक्षयति-ते अबभक्षत्-त भ्वादित्वमपीच्छन्ति भक्षति अभक्षीत् ।

भक्ष्यकार पु० त्रि० भक्ष्यं करोति कृ-अण् । भक्ष्यपिष्टकादिविक्रयोपजीविनि आपूपिके ।

भक्ष्यपत्त्री स्त्री० भक्ष्यं पत्त्रं यस्याः । ताम्बूल्याम् ।

भक्ष्यालाबू स्त्री० कर्म० । राजालाबाम् ।

भग पु०न० भज-घ । सूर्ये, अणिमाद्यष्टविधैश्वर्ये, वीर्ये, यशसि, श्रिया, ज्ञाने, वैराग्ये, योनौ, इच्छायाम् माहात्म्ये, यत्ने, धर्मे, मोक्षे, सौभाग्ये, कान्तौ चन्द्रे च । ज्योतिषोक्ते योनिनक्षत्रदैवते पूर्वफल्गुनीनक्षत्रे गुह्यमुष्कयोर्मध्यस्थाने च पु० ।

भगदत्त पु० महाभारतप्रसिद्धे कामरूपदेशाधिपे नृपभेदे ।

भगन्दर पु० भगं गुह्यमुष्कमध्यस्थानं दारयति दृ-णिच्-खच् मुम् च । व्रणाकारव्याते रोगभेदे ।

भगवत् त्रि० भगं 'ऐश्वर्यस्य समग्रस्य, वीर्यस्य, यशसः, श्रियः ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना' इत्युक्तम् ऐश्वर्यादिकमस्त्यस्य मतुप् मस्य व' । ऐश्वर्यादियुक्ते परमेश्वरे, दुर्गायां स्त्री० ङीप् । 'भगवत्या कृतं सर्व्वमिति चण्डी ।

भगाङ्कुर पु० भगे गुह्यस्थानेऽङ्कुर इव । अर्शोरोगे ।

भगिनी स्त्री० भगं यत्नः पित्रादितो द्रव्यादानेऽस्य स्याः इनि । सोदरायाम् स्वसरि ।

भगीरथ पु० सूर्य्यवंश्ये दिलीपराजपुत्रे नृपभेदे । येन गङ्गा भूमितलमवतारिता । [र्गुणैरपकृतमि'ति नाटकम् ।

भग्न त्रि० भन्ज-क्त । पराजिते, खण्डिते च भग्नं 'शम्भुधनु-

भग्नप्रक्रम पु०भग्नः प्रक्रमो यत्र। अलङ्कारोक्ते काव्यदोषभेदे

भङ्ग पु० भन्ज-घञ् । पराजये, खण्डे, भेदे, तरङ्गे, कौटिल्ये, भये, पत्ररचनाभेदे, गमने, जलनिर्गमे च । मातुल्याम्, शणाख्ये शस्ये, त्रिवृत्तायां (तेउडी) विजयाञ्च (भाङ्) स्त्री०

भङ्गि(ङ्गी) स्त्री० भन्ज-इन् इ० कृतम् वा ङीप् । विच्छेदे, कौटिल्ये, विन्यासे, कल्लोले, भेदे, व्याजे च ।

भङ्गुर त्रि० भन्ज-घुरच् । कुटिले, स्वयं भञ्जनशीले, नदीनां वक्रे च । प्रियङ्गौ, अतिविषायाम् च (आतइच्) स्त्री० ।

भङ्ग्य न० भङ्गानां भवनं क्षेत्रं यत् । भङ्गाभवनयोग्ये क्षेत्रे ।

भज भागे सेवायाञ्च भ्वा० उभ०सक०अनिट् । भजति-ते अभाक्षीत् । भेजतु' भेजे ।

भज पाके दाने च चु०उ०सक०सेट् । भाजयति-ते अबीभजत्

भज दीप्तौ चु०उभ०अक०सेट् इदित् । भञ्जयति-ते अबभञ्जत्-त

भजमान त्रि० भज-शानच् । न्यायागतद्रव्यादौ, विभाजके, सेवके च । [भाषणेऽयं चटा० । णिचि भटयति ।

भट पोषणे भ्वा० पर०सक०सेट् भटति । अभाटीत्-अभटीत् ।

भट पु० भट-अच् । योद्धरि, 'वहुटचातुरीलहरी'ति नैषधम् । वीरे, म्लेच्छभेदे, नीचभेदे, रजनिचरे च । इन्द्रवारुण्यां (राखालशसा) स्त्री० ।

भटित्र न० भट-इत्र । शूलपक्के मांसादौ (काबाब) ।

भट्ट पु० भट-तन् । स्तुतिपाठकवृत्तिमति (भाट) जातिभेदे स्वामित्वे, वेदाभिज्ञे पण्डिते च ।

भट्टार पु० भट्टं स्वामित्वमृच्छति ऋ-अण् । पूज्ये । संज्ञायां कन् । सूर्ये । [नाट्योक्तौ नृपे ।

भट्टारक पु० भट-भाषणे क्विप् तृ-णिच्-ण्वुल् कर्म० ।

वणिके द्वितीये नक्षत्रे, पोषणकर्त्तायाञ्च स्त्री० ङीप् ।

**भरण्य** न० भरणाय हितम् यत् । मूल्ये, वेतने च । स्त्रीत्वमपि

**भरण्यभुज्** त्रि० भरण्यं वेतनं भुङ्क्ते भुज-क्विप् । वैतनिके कर्मकरे

**भरत** पु० भरं तनोति तन-ड । (जडभरत) इति ख्याते मुनिभेदे, नाट्यशास्त्रस्य, अलङ्कारशास्त्रस्य च कर्त्तरि मुनिभेदे । शबरे, तन्तुवाये, क्षेत्रे, कैकयीसुते रामानुजे च । भरतेन प्रोक्तम् भारतं नाट्यशास्त्रमधीयते अण् तस्य लुक् । नटेषु । दुष्मन्तेन शकुन्तलायामुत्पादिते नृपभेदे पु० तस्यापत्यानि इञ् तस्य बहुषु लुक् । भरतवंश्ये नृपे पु० ब० व० ।

**भरतखण्ड** न० भरतस्य नृपस्य चिह्नितं खण्डम् । भारतवर्षान्तर्गते कुमारिकाख्ये खण्डे ।

**भरतवर्ष** न० ६त० । भारते वर्षे ।

**भरताग्रज** पु० ६त० । दशरथज्येष्ठसुते श्रीरामे ।

**भरद्वाज** पु० ज्येष्ठस्य भ्रातुरुतथ्यस्य पत्न्यां ममतायां बृहस्पतिना जनिते मुनिभेदे । [तस्य गोत्रस्य । भरितो

**भरित** पु० भृ-इतच् । हरिद्वर्णे । तद्वति त्रि० स्त्रियां ङीप्

**भर्ग** पु० भ्रस्ज-घञ् मन्यादेर्न कुत्वम् । शिवे, ज्योतिःपदार्थे, आदित्यान्तर्गते ऐश्वरे तेजसि, 'आदित्यान्तर्गतं वर्चो भर्गाख्यं तन्मुमुक्षुभिः । जन्ममृत्युविनाशाय दुःखस्य त्रितयस्य च ध्यानेन पुरुषैर्यच्च द्रष्टव्यं सूर्यमण्डले' इति याज्ञवल्क्यः । तस्य तेजस ऐश्वरत्वं 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमि'ति गीतायामुक्तम् । भावे घञ् भर्जने च । [धातरि च त्रि० ।

**भर्त्तृ** पु० भृ-तृच् । स्वामिनि, अधिपतौ, राजनि च । पोषके,

**भर्त्तृदारक** पु० भर्त्तुरधिपस्य राज्ञः दारकः पुत्रः । नाट्योक्तौ राजकुमारे । तत्कन्यायां स्त्री० कन् । भर्त्तृदारिका ।

**भर्त्तृहरि** पु० भर्त्ता हरिरिव । स्वनामख्याते वाक्यपदीयादि ग्रन्थकर्त्तरि विक्रमादित्यस्य ज्येष्ठे भ्रातरि राजभेदे ।

**भर्त्स** अधिक्षेपे, चुरा० उभ० सक० सेट् । भर्त्सयति ते अबभर्त्सत् त

**भर्त्सन** न० भर्त्स-ल्युट् । अपकारवचने अधिक्षेपे तिरस्कारायापकारार्थकवाक्योक्तौ । युच् । भर्त्सनाप्यत्र स्त्री० ।

**भर्त्सपत्त्रिका** स्त्री० भर्त्स्यं निन्दनीयं पत्त्रमस्याः कप् अत इत्त्वम् । महानीलोटचे ।

**भर्भ** हिंसायां भ्वा० पर० सक० सेट् । भर्भति अभर्भीत् ।

**भर्मन्** न० भृ-मन्, मनिन् वा । स्वर्णे, भृतौ, नाभौ, धुस्तूरे च

**भर्व** हिंसे भ्वा० पर० सक० सेट् । भर्वति अभर्वीत् ।

**भल** वधे दाने निरूपणे च भ्वा० आ० सक० सेट् । भलते अभलिष्ट

**भल** निरूपणे चु० आ० सक० सेट् । भालयते अबीभलत ।

**भलता** स्त्री० भाति-भा-क कर्म० । राजवनालतायाम् । [ल्लीत्

**भल्ल** दाने, वधे, निरूपणे च भ्वा० प० सक० सेट् । भल्लति अभ-

**भल्ल** पु० भल्ल-अच् । भल्लूके । अस्त्रभेदे पु० न० । स्वार्थे कन् भल्लुके पु० । वा गौरा० ङीप् तत्रैव । स्वार्थे कन् । भल्लकाप्यत्र

**भल्लपुच्छी** स्त्री० भल्लस्य पुच्छमिव पुष्पमस्याः ङीप् । (गोरक्षतण्डुला) क्षुपभेदे ।

**भल्लात** पु० भल्ल भल्लास्त्रमिवातति स्पर्शिनम् अत-अच् । (भेला) वृक्षभेदे स्वार्थे कन् । अत्रैव गौ० ङीप् । भल्लातक्यप्यत्र ।

**भल्ल(ल्लू)क** पु० भल्ल-ऊ(उ) क । (भालुक) जन्तुभेदे ।

**भव** पु० भू-भावे अप् । जन्मनि, सत्तायाम्, प्राप्तौ च । भवत्यस्मात् अपादाने अप् । जलमूर्त्तिधरे महादेवे, जलस्य सृष्टिहेतुत्वेन तद्रूपस्य शिवस्य जगद्धेतुत्वम् । आधारे अप् । संसारे । कर्त्तरि अच् । भव्ये, (चालता) वृक्षे, मङ्गले च ।

**भवत्** त्रि० भा-डवतु । युष्मदर्थे, सर्वनामता चास्य । भवान् भवन्तौ० पुत्र भवत्पुत्र० । भू-शतृ । वर्त्तमानकालार्थे भवत् कर्त्तरि च भवन् स्त्रियामुभयत्र ङीप् शत्रन्तस्य नुम् ।

**भवदीय** त्रि० भवत इदम् छ पदत्वम् जश्भावः । तत्सम्बन्धिनि । [जन्मनि, सत्तायाञ्च ।

**भवन** न० भू-आधारे ल्युट् । गृहे । भावे ल्युट् । भावे,

**भवादृश(श)(क्ष)** त्रि० भवतेव दर्शनमस्य भवत्+दृश-क्विप् टक्, क्स वा । भवत्तुल्ये जने । [दुर्गायाम् ।

**भवानी** स्त्री० भवस्य पत्नी भव+ङीप् आनुक् च । शिवभार्यायाम्

**भवाभीष्ट** पु० भवस्य महादेवस्य अभीष्टः अभि+इष-क्त । गुग्गुलौ । [तद्वति त्रि० ।

**भविक** न० भवाय हितम् ठन् । कुशले । अर्श आद्यच् ।

**भवितव्य** न० भू भविष्यति कर्त्तरि च नि० तव्यत् । अवश्य भव्ये 'भवितव्यं भवत्येव यद्विधेर्मनसि स्थितमि'ति । [च

**भवितव्यता** स्त्री० भवितव्यस्य भावः तल् । अवश्यम्भावे, भाव्ये

**भविष्णु** त्रि० भू-इष्णुच् । भवनशीले ।

**भविष्य(त्)** पु० भू-लृट् स्यहोति शतृ-लृट् च ष्ठ० वा तल्लोपः । भाविनि काले । तत्कालवर्त्तिनि पदार्थे त्रि० । स्त्रियाम् ङीप् नुम् च 'अव्याक्षेपो भविष्यन्त्या' इति रघु । तल्लोपपक्षे क्लीवता । उत्तरपदस्थः त्रि० । 'यद्भविष्यो विनश्यती'ति पञ्चतन्त्रम् । भविष्यमधिकृत्य कृते पुराणभेदे न० ।

**भव्य** त्रि० भू-कर्त्तरि नि० यत् । भाविनि 'अवश्यभव्येष्वनवग्रहग्रहेति नैषधं (चालता) फलभेदे मङ्गले च न० । शुभे, सत्ये, योग्ये च न० तद्वति त्रि० । कार्मरङ्गे, गजपिप्पल्यां च स्त्री० ।

**भष** कुक्कुरशब्दे भ्वा० पर० सक० सेट् । भषति अभषीत्-अभाषीत् [अबभषीत् ।

**भषक** पु० भष-क्वुन् । कुक्कुरे ।

**भस** दीप्तौ अक० भर्त्सने सक० जु० पर० सेट् । बभस्ति । अभासीत्-अभसीत् ।

**भस्त्रा** स्त्री० भस-ष्ट्रन् । चर्म्मप्रसेविकायाम् अग्निसन्धुक्षणे चर्म्मनिर्म्मिते यन्त्रभेदे । (यांता) गौ० ङीष् । अत्रैव । स्वार्थे कन् टाप् न ह्रस्वम् । भस्त्रकाप्यत्रैव ।

**भस्मक** न० भस्म करोति कृ-ड । (भस्मकीट) बहुभोजनकारके रोगभेदे । भस्मेव इवार्थे कन् । कलधौते स्वर्णे विडङ्गे च ।

**भस्मगन्धा** स्त्री० भस्मन इव गन्धोऽस्याः । रेणुकाख्यगन्धद्रव्ये । स्वार्थे कन् अत इत्त्वम् । तत्रैव । [गन्धद्रव्ये ।

**भस्मगन्धिनी** स्त्री भस्मन इव गन्धोऽस्त्यस्या इनि । रेणुकाख्ये

**भस्मगर्भ** पु भस्म गर्भे यस्य । तिनिशवृक्षे, कपिलशिंशपायां च । रेणुकाख्यगन्धद्रव्ये स्त्री० टाप् ।

**भस्मन्** न० भस-मनिन् । (छाइ) दग्धगोमयादिविकारे ।

**भस्मरोहा** स्त्री० भस्मनि रोहति रुह अच् । दग्धिकायाम् ।

**भस्मसात्** अव्य० भस्म कार्त्स्न्येन सम्पन्नं करोति भस्मन्+साति । साकल्येन भस्मरूपकरणे ।

**भा** दीप्तौ अदा० पर० अक० अनिट् । भाति । अभासीत् ।

**भा** स्त्री० भा अङ् । टाप् । दीप्तौ ।

**भाक्त** त्रि० भक्तेः गौण्योक्तेरागतः अण् । औपचारिके गौण्योक्त्या बोधितेऽर्थे । भक्ताः शालयोऽस्य अण् । अन्नसम्बन्धिनि त्रि० ।

**भाग** पु० भज-भावे घञ् । भजने । कर्म्मणि घञ् । अर्द्धे, इष्टवस्तुनोऽर्द्धे, एकदेशे भाग्ये, 'त्रिंशांशकलया राशेर्भाग इत्यभिधीयते' इति ज्योतिषोक्ते राशेः त्रिंशांशे च ।

**भागधेय** न० भाग+स्वार्थे धेय अभिधानात् नपुंसकत्वम् । भाग्ये । भागेन धीयतेऽसौ धा-यत् । राजदेये करे । भागो धीयतेऽस्मै धा-सम्प्रदाने यत् । दायादे सपिण्डे ।

**भागवत** त्रि भगवत भगवत्या वा इदम् सोऽस्य देवता वा अण् भगवतः भगवत्या वा भक्ते तत्सम्बन्धिनि च 'भक्त्या सर्वभागवता भवन्तीत्युद्दिष्ट' तयोः सम्बन्धिगुणवर्णने पुराणे उपपुराणे च न 'येन स्तुतं भागवतं पुराणमि'ति पुराणम् तत्र कस्य पुराणत्वं कस्य चोपपुराणत्वं तद्बृहदभिधाने विस्तरेण निरूपयिष्यते । [दायादे ।

**भागशस्** अव्य० भागं भागं इति वीप्सार्थे शस् । एकैकभागेन

**भागहर** त्रि० भागमंशं हरति अविभक्तत्वेन गृह्णाति हृ-अच् । अंशपाहिणि ।

**भागहार** पु० भज्यते इति भागो विभाज्यधनस्य हारो हरणम् हृ-घञ् । अङ्कशास्त्रोक्ते भाज्यस्य विभागकरणे ।

**भागिन्** त्रि भज-घिनुण् । अंशविशिष्टे । [स्त्री० ङीप् ।

**भागिनेय** पु० भगिन्या अपत्यम् ढक् । स्वसृपुत्रे । तत्कन्यायां

**भागीरथी** स्त्री० भगीरथेन निर्दिष्टा आनीता तत्सम्बन्धिनी वा अण् । गङ्गायाम् । 'भागीरथीनिर्झरशीकराणा'मिति कु०

**भागुरि** पु स्मृतिव्याकरणादिकर्त्तरि मुनिभेदे ।

**भाग्य** न० भज-ण्यत् कुत्वम् । शुभाशुभसूचके कर्म्मणि । भागं प्रयोजनमस्य यत् । भागयुक्ते त्रि० ।

**भाङ्गीन** न० भङ्गायाः विजयायाः भवनं क्षेत्रं खञ् । (भाङ) भङ्गाभवनयोग्ये क्षेत्रे । यञ् । भाङ्ग्यमप्यत्र । [भाजत् त

**भाज** पृथक्करणे, अद० चु० उभ० सक० सेट् । भाजयति ते अब

**भाजन** न० भाज्यतेऽनेन भाज ल्युट् । पात्रे, आधारे, योग्ये च

**भाजी** स्त्री० भाज-कर्म्मणि घञ् गि० ङीप् । भक्ष्यव्यञ्जनभेदे ।

**भाज्य** त्रि० भाज्यते विभज्यते भाज कर्म्मणि यत् । विभजनीये 'भाज्यो हरः शुध्यति यद्गुणः स्यादि'ति लीलावती ।

**भाटक** न० भट-पोषणे ण्वुल् । परगृहयानादेरुपभोगार्थं तत्स्वामिने दीयमाने धने । (भाड़ा)

**भाण** पु० भण-घञ् । 'भाणः स्याद्धूर्त्तचरित' इत्याद्युक्तलक्षणे दृश्यकाव्यभेदे साहि० द० ।

**भाण्ड** न० भा अण्डच्, भण-ड-स्वार्थे अण् वा । पात्रे तैजसाद्याधारे भाजने, (भाड़) मूलधने, (भाड़ार) 'भस्माण्डभाण्डोदरे'ति वीरचरितम् । वणिजां मूलधने, अश्वभूषा, नदीकूलद्वयमध्ये पात्रे च । गर्दभाण्डे वृक्षे पु० । भण्डस्य भावः अण् । भण्डचरित्रे न (भाड़ामि) ।

**भाण्डारिन्** पु भाण्डमृच्छति ऋ-णिनि । (भाण्डारी) धनादिद्रव्यस्थलेषु तदधिकारे ।

**भाण्डिवाह** पु० भाण्डि क्षुराद्याधारं (भाण्डि) वहति अण् । नापिते । भाण्डि+अस्त्यर्थे वन् । भाण्डिवोऽप्यत्र । [भेदे च

**भाण्डीर** पु० भण्ड ईरन् पृ०। वटवृक्षे, वृन्दावनस्थे वटवृक्ष-

**भाति** स्त्री भा-क्तिन् । शोभायाम् ।

**भाद्र** पु० भद्राभिर्युक्ता पौर्णमासी भाद्री सा यस्मिन् मासे अण् । चैत्रादितः षष्ठे चान्द्रे मासे । भद्रासौरयपौर्णमास्यां स्त्री० ङीप् । भद्रैव स्वार्थे अण् । पूर्वोत्तरभाद्रपदाख्यनक्षत्रे न । 'भाद्रपदे सागरे' इति ज्योतिषम् ।

**भाद्रपदा** स्त्री० ब०व० । भद्रपदा एव स्वार्थे अण् भाद्र भाद्रमिव पदमासाम् । अश्विन्यर्धिके पूर्वा उत्तरा च भाद्रपदाख्यनक्षत्रयोः । तद्युक्ता पौर्णमासी अण् ङीप् । भाद्रमासस्य पौर्णमास्याम् । साऽस्य मासे अण् । चान्द्रे भाद्रे मासि । [नक्षत्रे

भाद्रमातुर पु० भद्रायाः सत्याः मातुः अपत्यम् अण् उरच्।
भानु पु० भा-नु। सूर्य्ये, अर्कवृक्षे, किरणे, प्रभौ, राजनि च।
भानुफला स्त्री०भानुरिव दीप्तिमत् फलं प्रभवो यस्याः। कद-ल्याम् तस्याः मोचकस्य सूर्य्यतुल्यवर्णत्वात्तथात्वम्। [त्वियत्व
भानुमत् पु० भानुः किरणोऽस्त्यस्य मतुप्। सूर्य्ये। भानुमाली
भानुमती स्त्री० विक्रमादित्यनृपतेः पत्न्याम्।
भाम क्रोधे भ्वा०आत्म०अक०सेट्। भामते, अभामिष्ट।
भाम पु० भाम-घञ्। क्रोधे, दीप्तौ च। कर्त्तरि अच्। सूर्य्ये। कोपवत्यां स्त्रियां स्त्री० टाप्। [च
भामिनी स्त्री० भाम-णिनि। कोपशीलायां स्त्रियां, स्त्रीमात्रे
भार पु० भृ-घञ्। गुरुत्वपरिमाणे, तद्वति द्रव्ये विंशतितुला-परिमाणे (अष्टसहस्रतोलकपरिमाणे) च पु०।
भारत न० भरतान् भरतवंश्यानधिकृत्य कृतो ग्रन्थः अण्। भार' वेदादिशास्त्रेभ्योऽपि सारांशः अस्त्यस्य त वा। वेद-व्यासप्रणीते लक्षश्लोकात्मके ग्रन्थभेदे। भरतेन चिह्नितं, तस्येदं वा अण्। 'हिमाह्वं दक्षिणं वर्षं भरताय ददौ पिता। तस्माच्च भारतं वर्षमित्युक्ते जम्बुद्वीपान्तर्गते वर्षभेदे। भरतस्य गोत्रापत्यम् अण्। भरतनृपस्य वंश्ये। भरतेन मुनिना प्रोक्तमण्। भरतमुनिकृते नाटकशास्त्रादौ न०। तदधीयते पुनरण्। नटे, अग्नौ च।
भारती स्त्री० भृ-अतच् स्वार्थे प्रज्ञाद्यण्। वाक्ये तदधिदेव-तायां सरस्वत्यां, पक्षिभेदे, 'भारती संस्कृतप्रायो वाग्व्या-पारो नराश्रय' इति सा०द०उक्ते अलङ्कारोक्ते वृत्तिभेदे च।
भारद्वाज पु० भरद्वाजस्य गोत्रापत्यम् अण्। गोत्रप्रवर्त्तके मुनिभेदे, द्रोणाचार्य्ये, अगस्त्यमुनौ, व्याघ्राटविहगे, बृहस्पतिपुत्रे च। वनकार्पास्यां स्त्री०ङीप्। ष०। भारद्वा-जीत्यप्यत्र। [कृतदखे (वांक)।
भारयष्टि स्त्री० भारस्य वहनार्था यष्टिः शाक०। भारव-
भारवाह(ह) पु०भारं वहति अण्, णिच वा। भारवाहिनि। ण्वुल्। भारवाहकोऽप्यत्र।
भारवि पु० किरातार्ज्जुनीयकाव्यकारके कविभेदे।
भारवृक्ष पु० भारीभूतो वृक्षः। काचीनामगन्धद्रव्ये।
भारिक पु० भारं वहति भार+ठक्। भारवाहके।
भार्गव पु० भृगोरपत्यम् तद्गोत्रापत्यं वा अण्। शुक्राचार्य्ये, परशुरामे,धन्विनि, गजे च। तेन प्रोक्ता तेनाधीता ज्ञाता वा अण्। वेदप्रसिद्धे विद्याभेदे, पार्व्वत्यां लक्ष्म्यां दूर्व्वायां च स्त्री० ङीप्।
भार्गी स्त्री० भर्गस्येयमण्। (वामनहाटि) वृक्षभेदे।

भार्य्या स्त्री० भृ-ण्यत्। विधिनोढायां स्त्रियाम् भरणीये त्रि०
भाल न० भा-लच्। ललाटे भ्रुवोरूर्द्ध्वभागे।
भालदर्शन न० भाले दृश्यते कर्म्मणि ल्युट्। सिन्दूरे।
भालनेत्र पु०भाले नेत्रमस्य। शिवे। भाललोचनादयोऽप्यत्र।
भालाङ्क पु० भालमिवाङ्को यस्य, भाले अङ्को यस्य वा। शाक-भेदे, करपत्त्रेऽस्त्रे (करात्) रोहितमत्स्ये, महापुरुष-चिह्नयुक्ते पुरुषभेदे, शिवे, कच्छपे च।
भाल्ल(ल्लु)क पु० भल्लूक+स्वार्थे अण् वा पृ० ह्रस्व। जन्तुभेदे भल्लूके। पृ०। भालुकोऽप्यत्र।
भाव पु०भावयति चिन्तयति पदार्थान् पु०भू-अच्। नाट्योक्तौ नानापदार्थचिन्तके पण्डिते। भावयति ज्ञापयति हृदयग-तम् भू-णिच्-अच्। हृद्गतस्यावेदके मानसविकारे स्वेद-कम्पादौ, व्यभिचारिभावे। भू-घञ्। साध्यरूपे सिद्धरूपे वा क्रियारूपे धात्वर्थे, रागे आशये च। [उत्पादके च त्रि०
भावक पु० भाव-स्वार्थे कन्। मानसविकारे। पदार्थचिन्तके।
भावत्क पु० भवतोऽयं ठक्। भवत्सम्बन्धिनि। [चिन्ताभेदे च
भावन न० भू-णिच्-ल्यु। (चालता) फलभेदे, भावे ल्युट्। युच्। चिन्तायाम्, अधिवासने, ध्याने, पर्य्यालोचनायां, वैद्यकोक्ते औषधसंस्कारभेदे स्त्री०।
भावबोधक भावस्य रत्यादेर्बोधकः अनुमापकः। रत्याद्यनु-मापके भ्रूभङ्गादिदेहचेष्टाविशेषे, मुखरागादौ च।
भावानुगा स्त्री० भावं पदार्थकाशयं वानुगच्छति गम-ड। छायायाम् अभिप्रायानुगन्तरि त्रि०। [मिश्रिते च
भावित त्रि० भू-णिच्। वासिते, प्राप्ते, शुद्धे चिन्तिते
भाविनी स्त्री० भावः हृदयचेष्टाभेदोऽस्त्यस्या इनि। स्त्री-भेदे, स्त्रीमात्रे च। भू-णिनि। भविष्यत्कालवर्त्तिनि त्रि० स्त्रियां ङीप्।
भावुक न० भू-उकञ्। मङ्गले, तद्वति त्रि०। नाट्योक्तौ भगिनीपतौ पु०। भावनायुते त्रि० 'उज्ज्वलो रसिका-भुवि भावुका' इति भागवतम्। [न ह्रस्वः।
भाष वचने भ्वा०आत्म०द्विक०सेट्। भाषते अभाषिष्ट। चङि
भाषा स्त्री० भाष-अ। वाक्ये, संस्कृतादिवाक्ये च। 'अष्टादश भाषावारविलासिनीभुजङ्ग' इति का०प्र०। व्यवहारे प्रतिज्ञासूचकवाक्ये 'यदावेद्यते राज्ञे तद्भाषेत्यभिधीयते' इति स्मृतिः। [वाक्यरूपे प्रथमेंऽशे।
भाषापाद पु० कर्म्म० चतुष्पाद्व्यवहारे प्रतिज्ञासूचके
भाषित न०भाष-भावे-क्त। कथने। कर्म्मणि-क्त। कथिते त्रि०। 'भाषितपुंस्का'दिति पाणिनिसूत्रम्।

भीरु त्रि० भी-क्रु । भयशीले । क्रुकन् । तत्र । भल्लूके पु० ।

भीषण पु० भीषयते भी-णिच्-ल्यु षीपादेशः । भयानकरसे, कुन्दुरुके, हिन्ताले, शल्लकीवृक्षे । महादेवे-कपोते च पु० । गाढे दारुणे च त्रि० ।

भीष्म पु० भी-मक् षुक् च । भयानकरसे । भयहेतौ त्रि० । गङ्गागर्भजे शान्तनुसुते स्वनामख्याते कुरुवंश्ये क्षत्रिये पु० ।

भीष्मजननी स्त्री० ६त० । गङ्गायाम् । भीष्मसूप्रभृतयोऽप्यत्र ।

भीष्मपञ्चक न० भीष्मेणोपदिष्टं पञ्चकम् । कार्त्तिकशुक्लैकादश्यादिषु पञ्चसु तिथिषु, तत्कर्त्तव्ये व्रतभेदे च ।

भीष्माष्टमी स्त्री० ६त० । भीष्मस्य देहत्यागदिवसे माघशुक्लाष्टम्याम् अतस्तस्मिन् दिने सर्ववर्णैस्तस्य तर्पणं कार्य्यम् ।

भुक्त त्रि० भुज-कर्म्मणि क्त । भक्षिते । भावे-क्त । भक्षणे न० ।

भुक्तसमुज्झित त्रि० पूर्वं भुक्तं पश्चात् समुज्झितं त्यक्तम् । भोजनोत्तरं त्यक्ते अन्नादौ ।

भुक्ति स्त्री०भुज-क्तिन् । भोजने भोगे, 'चागमो निष्फलस्तत्र भुक्ति स्तोकापि यत्र नो' इति स्मृतिः ।

भुक्तिप्रद पु० भुक्तिं भोगं भोजनं वा प्रददाति सत्त्वायासभक्ष्यत्वात् । मुद्गे ।

भुग्न त्रि० भुज-मोटने क्त । रोगादिना कुटिलीकृते । [भुग्न

भुज मोटने तु० प० सक० अनिट् । भुजति अभौक्षीत् । क्त

भुज भक्षणे आ० पालने पर०सक०रुधा० अनिट् । भुङ्क्तेऽन्नम् अभौक्षीत् । भूमिं भुनक्ति पालयति । 'दिवं मरुत्वानिव भोक्ष्यते महीमिति रघुः भुक्तः ।

भुज पुंस्त्री०भुज्यतेऽनेन भुज-घञर्थे क । बाहौ, करे, त्रिकोणचतुष्कोणादिक्षेत्रस्याधरेखाविशेषे लीलावत्यादौ प्रसिद्धे 'तथायते तद्भुजकोटिघात' इति लीलावती ।

भुजग पु० भुज-वक्रणे क भुजः कुटिलीभवन् सन् गच्छति गम-ड । सर्पे, अश्लेषानक्षत्रे च ।

भुजगान्तक पु० ६त० । गरुडे । भुजगनाशनादयोऽप्यत्र ।

भुजगाशन पु० भुजगान् अश्नाति अश-ल्यु । गरुडे, भुजगभक्षकादयोऽप्यत्र । [अश्लेषानक्षत्रे च ।

भुजङ्ग पु० भुजं सन् गच्छति गम-खच् डिच्च । सर्पे, जारे,

भुजङ्गप्रयात न० । द्वादशाक्षरपादके छन्दोभेदे ।

भुजङ्गम पु० भुजः कुटिलीभवन् सन् गच्छति गम-खच् मुम् । सर्पे, अश्लेषानक्षत्रे च । सीसके न० । [ङीप् । रास्नायाम् ।

भुजङ्गाक्षी स्त्री० भुजङ्गस्येवाक्षि पुष्पं यस्याः षच् समा०

भुजङ्गाख्य पु० भुजङ्गतुल्या आख्या यस्य । नागकेशरे ।

भुजशिरस् पु० ६त० । स्कन्धदेशे ।

भुजान्तर न० भुजयोरन्तरं मध्यम् । क्रोडे ।

भुजिष्य पु०भुज-किष्यन् । दासे, रोगे, स्वतन्त्रे, हस्तसूत्रे च । दास्यां, वेश्यायाञ्च स्त्री० । [ईशसंख्यायाञ्च ।

भुवन न० भवत्यत्र भू-क्युन् । जगति, जले, आकाशे, चतु-

भुवनकोष पु०भुवनस्य कोष इव । भूगोले ज्योतिषग्रन्थभेदे च

भुवर् अव्य० भू-असुन्-तुट् किच्च । आकाशात्मके द्वितीये लोके ।

भुवर्लोक पु० कर्म० । भूरादिसप्तलोकमध्ये द्वितीयलोके ।

भू प्राप्तौ चु० आ० सक० सेट् । भावयते अबीभवत ।

भू प्राप्तौ भ्वा०उ०सक०सेट् । भवति-ते अभूत् अभविष्ट ।

भू शुद्धौ अक० चिन्तने मिश्रणे च सक० चुरा० उभ० सेट् । भावयति-ते अबीभवत् त ।

भू सत्तायां भ्वा०पर०अक०सेट् । भवति अभूत् । [यज्ञाग्नौ च

भू स्त्री० भू-संप० क्विप् । पृथिव्याम्, एकसंख्यायां, स्थानमात्रे,

भूकन्द पु० भुवः कन्द इव । (चुलकुड़ि) । महाश्रावणिकायाम्

भूकदम्ब पु० भुवि कदम्ब इव । (कोकशिम) अलम्बुषायाम् ।

भूकदम्बक पु० भुवि कदम्ब इव कायति कै-क । यवान्याम् ।

भूकम्प पु० ६त० । लोकानामनिष्टसूचके अद्भुतरूपे पृथिव्याः स्वयं चलने ।

भूकुम्भी स्त्री० भुवि कुम्भीव । भूमिपाटल्यौ ।

भूकुष्माण्डी स्त्री० भुवि कुष्माण्डीव । विदार्याम् ।

भूकेश पु० भुवः पृथिव्याः केश इव । वटे, शैवाले च ।

भूखर्जूरी स्त्री० भुवि लग्ना खर्जूरी शाक० । क्षुद्रखर्जूर्याम् भूमिखर्जूर्यादयोऽप्यत्र ।

भूगोल पु० भूर्गोल इव । गोलाकारे भूमण्डले तत्प्रमाणस्वरूपादिकं तदभिधाने 'मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति । बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिका'मिति सूर्य्यसिद्धान्तः ।

भूच्छाया स्त्री० भुवश्छाया । सूर्यकिरणसम्पर्काभावात् । जायमाने राहुग्रहाभिधाने तमसि अन्धकारे ।

भूजम्बू स्त्री०भुवो जम्बूरिव स्वादुत्वात् । गोधूमे, विकङ्कतफले च (बइंचि) ६त० । क्षुद्रजम्ब्वाम् । भूमिजम्ब्वादयोऽप्यत्र स्त्री०

भूत न० भू-क्त । न्याय्ये, उचिते, पृथिवीजलतेजोवायुगगनरूपेषु गन्धादिविशेषगुणवत्सु द्रव्येषु, जन्तुसत्त्वे, यथार्थे, वास्तविके, 'भूतमप्यनुपन्यस्तं हीयते व्यवहारत' इति स्मृतिः तत्त्वानुध्याने च 'छलं निरस्य भूतेने'ति स्मृतिः । पिशाचादौ, कुमारे, योगीन्द्रे, कृष्णपक्षे प्राणिनि च पु० । अतीते वृत्ते, सदृशे, प्राप्ते, सत्ये च त्रि० । कृष्णचतुर्दश्यां स्त्री० टाप् ।

भूतकेश पु० भूतानां केश इव । (भूतकेश) नामके तृणभेदे

स्त्रीत्वमपि, सा च तत्र, पिशाचिकायां च टाप्। नीलसिन्धुवारे ङीप्।
भूतगन्धा स्त्री० भूतः प्रभूतः गन्धो यस्याः। मुरानामगन्धद्रव्ये
भूतघ्न पुं० भूतं हन्ति हन टक्। भूर्जपत्रे तद्धारणे हि बालग्रह-
भूतादिनिवारणम्। भूतं प्राकृतं गन्धं हन्ति अण् करोति
लशुने, उष्ट्रे च। भूतनाशके त्रि०। तुलस्यां स्त्री० ङीप्।
भूतचतुर्दशी स्त्री० भूतप्रिया चतुर्दशी तदुद्देशेन तस्याः दीप-
दानात्। आश्विनकृष्णपक्षचतुर्दश्याः दीपान्वितायां वा
स्वापूर्व्वतिथौ यमचतुर्दश्याम्।
भूतजटा स्त्री० भूतस्य जटेव। जटामांस्याम्।
भूतद्राविन् पुं० भूतान् द्रावयत्यपसारयति द्रु णिच् णिनि।
रक्तकरवीरवृक्षे भूताङ्कुशवृक्षे, शाखोटवृक्षे च।
भूतद्रुम पुं० भूतेष्टः द्रुमः। श्लेष्मातकवृक्षे। भूतवृक्षादयोऽप्यत्र
भूतधात्री स्त्री० भूतानि जन्तून् धारयति धा-तृच् ङीप्।
पृथिव्याम्। [बटुकस्तोत्रम्। भूतेशभूतपत्यादयोऽप्यत्र
भूतनाथ पुं० हरे। शिवे, बटुकभैरवे च। 'भैरवो भूतनाथश्चे'ति
भूतनाशन न० भूतान् नाशयति नश णिच् ल्यु। रुद्राक्षे।
सर्षपे, भल्लातके च पुं०।
भूतपक्ष पुं० भूतप्रियः पक्षः अन्धकारमयत्वात्। कृष्णपक्षे।
भूतपत्री स्त्री० भूतस्य लग्नं पत्रं यस्याः। कृष्णतुलस्याम्।
भूतपुष्प पुं० भूतस्य लग्नं पुष्पं यस्य। श्योनाकवृक्षे।
भूतभावन पुं० भूतानि पृथिव्यादीनि भावयति जनयति भू
णिच् ल्यु, भूता सत्या यथार्था भावना यस्य वा। विष्णौ,
बटुकभैरवे च 'भूतात्मा भूतभावन' इति। तयोः स्तोत्रे।
भूतयज्ञ पुं० भूतान् प्राणिनो वायसादीन् उद्दिश्य यज्ञो
बलिः। नित्यं गृहस्थकर्त्तव्यपञ्चयज्ञान्तर्गते बलिवैश्वदेव
कर्म्मणि 'भूतेभ्यो बलिहरणं भूतयज्ञ' इति स्मृतिः।
भूतल न० भूरेव तलम्। पृथिव्याम्। हरे। पाताले भूमेरधोभागे
भूतलिका स्त्री० भूतलं पातालं मूलेनाक्रम्य ठन्। पृक्का-
याम् (पिडिङ्शाक) बहुदूरगमूलत्वात्तस्यास्तथात्वम्।
भूतवास पुं० हरे। (बयड़ा) विभीतकवृक्षे। भूतावासादयोऽप्यत्र
भूतशुद्धि स्त्री० भूतानां देहारम्भकपृथिव्यादीनां शुद्धिर्भावना
विशेषात् शोधनम्। तन्त्रादौ प्रसिद्धे देहारम्भकचतुर्विंशति
तत्त्वानां भावनाविशेषेण क्रमादेव देवरूपतासम्पादने।
भूतसार पुं० भूतस्य लग्नं सारोऽस्य। श्योनाकवृक्षे।
भूतहन्त्री स्त्री० भूतान् लक्षय हन्ति हन तृच् ङीप्। वन्ध्या-
कर्कोट्यां, श्वेतदूर्वायाश्च तद्धारणे हि स्त्रीणां प्रमादादि
दोषकभूतभयनाश।
भूतहर पुं० भूतान् हरति अपसारयति हृ अच्। गुग्गुलौ
भूतहारिन् पुं० भूतान् हरति स्थानान्तरं नयति हृ णिनि।
देवदारुवृक्षे। [स्वनामख्याते वृक्षे
भूताङ्कुश पुं० भूतानां पिशाचानामङ्कुश इव अपसारकत्वात्।
भूतात्मन् पुं० भूतानि पृथिव्यादीनि पञ्च द्रव्याणि आत्मा स्वरूपं
यस्य। देहे। भूतानि पञ्च द्रव्याणि भूताः प्राणिनश्च आत्मा
स्वरूपं यस्य। परब्रह्मणि, 'सर्व्वं खल्विदं ब्रह्म तज्जला-
नि'ति श्रुतिः। सर्व्वभूतात्मके हिरण्यगर्भे, विष्णौ बटुक
भैरवे च 'भूतात्मा भूतभावन' इति तयोः स्तोत्रे।
भूतारि पुं० हरे। हिङ्गौ तद्गन्धेन हि भूतापसरणम्।
भूताली स्त्री० भूतानीव अलति पर्य्याप्नोति अल-अच् गौरा०
ङीष्। भूमिशाखी, सूपत्याञ्च। [विभीतकवृक्षे च
भूतावास पुं० भूतानां प्राणिनामावासः अधिष्ठानत्वात्। विष्णौ
भूति स्त्री० भू क्तिन्। भस्मनि, अणिमाद्यष्टविधैश्वर्य्ये, पिशाङ्ग
भस्मनि, भूलवे, सम्पत्तौ जात्यां वृद्धिनामौषधे च।
भूतिक पुं० भूत्या सम्पत्त्या कायति कै-क। भूनिम्बे, यमान्याञ्च
चन्दने, कट्फले कत्तृणे च न०। पृ० वा दीर्घः। भूतीकोऽप्यत्र
भूतृण न० भुवः तृणं गन्धवत्त्वात् (गन्धतृण) तृणभेदे। रोहि-
षतृणे पुं०। [कण्ट्याम् (छत्राकाणि)
भूदरीभवा स्त्री० भूदर्य्यां भूमिविवरे भवति भू अच्। आखु-
भूदार पुं० भुवं दारयति खनति दन्ताग्रेण दृ-अण्। शूकरे
भूदेव पुं० भुवि देव इव। विप्रे।
भूधर पुं० भुवं धरति धृ-अच्। पर्व्वते। [लक्याम्
भूधात्री स्त्री० भुवि लग्ना धात्री आमलकी शाक०। भूम्याम-
भूनिम्ब पुं० भुवि लग्नः निम्बः शाक०। (चिराता) क्षुपभेदे।
भूनीप पुं० भुवि लग्नो नीपः शाक०। भूमिकदम्बे।
भूप पुं० भुवं पाति पा क। भूमिपाले भूमिपादयोऽप्यत्र।
भूपद पुं० भुवि पदं मूलं यस्य। वृक्षमात्रे। मल्लिकायां स्त्री० ङीप्
भूपलाश पुं० भुवि पलाशं यस्य। शिघ्र्यन्याकारके क्षुपभेदे
भूपाल पुं० भुवं पालयति पाल अण्। भूपतौ।
भूपेष्ट पुं० भूपस्येष्टः। राजादनीवृक्षे (पियाशाल) तद्बीजस्य
चिरञ्जि इति ख्यातस्य राजप्रियत्वात्तथात्वम्।
भूभुज् पुं० भुवं भुङ्क्ते भनक्ति पालयति वा भुज क्विप्। भूपाले
भूभृत् पुं० भुवं बिभर्त्ति धारयति, पालयति वा भृ क्विप्।
पर्व्वते, भूपाले च।
भूमन् पुं० बहोर्भावः इमनिच् नि० बहोर्भ्वादेशः। बहुत्वे।
भूमि(मी) स्त्री० भवन्त्यस्मिन् भूतानि भू मिक् वा ङीप्। पृथि-
व्याम् स्थानमात्रे, जिह्वायां, योगशास्त्रोक्ते योगिनां चित्त-
स्यावस्थाभेदे, एकसङ्ख्यायाञ्च।

भृङ्गप्रिया स्त्री० ६त०। माधवीलतायां मधुरमधुमत्त्वात् तत्प्रियत्वम्। [नलोपः। भृङ्गराजे (केशुरिया)।

भृङ्गरज पु० भृङ्गान् रञ्जयति अन्तर्भूतण्यर्थे रन्ज-अच् ष०

भृङ्गरजस् पु भृङ्गान् रञ्जयति अन्तर्भूतण्यर्थे रन्ज-असुन् नलोपः। भृङ्गराजे। [(केशुरिया)। क्षुपभेदे।

भृङ्गराज पु० भृङ्गान् राजयति राज णिच् कनिन् नि०। ६त०।

भृङ्गरिट(टि) पु० भृङ्ग इव रटति अच्, इन वा पृ०अतस्त्वम्। शिवपार्श्वचरभेदे। [भेदे

भृङ्गरोल पु० भृङ्ग इव रौति रु लच्। (भेमरुल) ख्याते कीटे

भृङ्गवल्लभ पु० ६त०। धाराकदम्बे, भूमिकदम्बे च। भृङ्ग इव वल्लभ। भूमिजम्बाम् स्त्री०। [यूथिकायाम् (युइ)

भृङ्गानन्दा स्त्री० भृङ्गान् आनन्दयति आ+नन्द+णिच्-अण्।

भृङ्गाभीष्ट पु अभि+इष क्त ६त। आम्रवृक्षे।

भृङ्गार पु० बिभर्ति जलं भृ-आरक् नि०। स्वर्णमयजलपात्रे, जलपात्रभेदे च (झारी)। भृङ्ग इव ऋच्छति ऋ अच्। भृङ्गराजे। लवङ्गे सुवर्णे च न०। झिल्लीनामकीटे स्त्री० गौरा०ङीष्। स्वार्थे कन्। तत्रैव।

भृङ्गि पु भृ-गिक् नुट् च। शिवपार्श्वचरभेदे।

भृङ्गिन् पु० भृङ्ग अस्त्यर्थे इनि। शिवपार्श्वचरभेदे वटवृक्षे च।

भृङ्गी स्त्री० भृ गन् कित् नुट् च गौरा ङीष्। अतिविषायाम्

भृङ्गीफल पु० भृङ्ग्या अतिविषाया इव फलमस्य। आम्रातके

भृङ्गेष्टा स्त्री० ६त। घृतकुमार्यां, भार्ग्यां, तरुण्यां, काकजङ्घायां

भृज भर्जने भ्वा आत्म० सक सेट्। भर्जते अभर्जिष्ट। निष्ठायां सेट् भृक्त। [(भाजनाखोला) भर्जनपात्रभेदे

भृज्जन पु० भृज्जतेऽनेन भ्रस्ज-ल्युट् पृ सम्प्रसारणम्।

भृतक त्रि भृ-क्त स्वार्थे कन्। वेतनेन कर्मकरे भृतकाध्यापको यश्चे'ति मनुः। [मूल्ये च।

भृति स्त्री भृ क्तिन्। भरणे, पोषणे च करणे क्तिन्। वेतने,

भृतिभुज् त्रि भृतिं वेतनं भुङ्क्ते भुज क्विप्। वेतनोपजीविनि कर्मकरे।

भृत्य पु भृ-क्यप् तुक् च। दासे। भरणीये त्रि०। भावे क्यप्। भरणे स्त्री टाप्। कुमारभृत्याकुशलैरिति रघुः।

भृ(भ्र)मि पु भ्रम इन् पृ वा सम्प्रसारणम्। (घूर्णी) वायुभेदे भ्रमणे च। किमु चक्रभ्रमिकारिता गुणै इति नैषधम्

भृश अध पतने दि०पर अक सेट्। भृश्यति। अभृशत् अभ्रशीत्। क्त्वा वेट्।

भृश न भृश क। अतिशये। तद्वति त्रि।

भृष्ट त्रि भ्रस्ज-क्त। जलोपसेकं विना बालुकाग्निसंयोगेन पक्वे

भॄ भर्जने भर्त्सने भरणे च क्र्यादि०श्ना पर सक सेट्। भृणाति अभारीत्। [मण्डूकपर्ण्यां स्त्री० ङीप्।

भेक पु० भी-कन् कस्य नेत्वम्। (ब्याङ) जन्तुभेदे, मेघे च।

भेकपर्णी स्त्री० भेक इव पर्णमस्याः ङीप्। मण्डूकपर्ण्याम्

भेड पु० भी-ड तस्य नेत्वम्। मेषे, (भेडा)

भेद पु० भिद-घञ्। पृथक्करणे अन्यतो विशेषे राज्ञां विपक्षसाधनाय तत्पक्षीयामात्यादिभेदने, न्यायमतोक्ते अन्योन्याभावे च यथा घटात् पटस्य भेद (तादात्म्येनाभाव)

भेदक त्रि भिद-ण्वुल्। रेचके, विदारके, भेदकारके, विशेषणे च

भेदन त्रि० भेदयति भिद णिच् ल्यु। विरेचने, विशेषणे च हिङ्गौ अम्लवेतसे पु न। भिद भावे ल्युट्। विदारणे

भेदित त्रि भिद णिच्-क्त। विदारिते, भिन्ने च। [यदि'त्यमरः

भेद्य त्रि भिद-ण्यत्। विदार्ये विशेष्ये च। त्रिवेषा भेद्यगामि

भेरि(री) स्त्री० भी क्रि वृद्धा० त्रि वा ङीप्। ढक्कायाम् पटहे 'रवः प्रगल्भाहतभेरिसम्भवः' इति कुमारः हत्यु ञ्चकदस्त ततः शङ्खाश्च भेर्य्यश्चे'ति गीता।

भेल पु भी रन् रस्य ल। नद्यादितारणार्थे प्लवे (भेला) ख्याते, मन्दे। स्वार्थे कन् तत्रैव। [भद्रि न ह्रस्व

भेष भये भ्वा०उभ०अक०सेट् भेषति ते अभेषीत् अभेषिष्ट।

भेषज न० भेष-अच् भेष रोगभयं जयति जि ड। औषधे।

भेषजाङ्ग न० ६त०। औषधस्य अनुपेये वस्तुनि।

भैक्ष न भिक्षैव तत्समूहो वा अण्। भिक्षायां, भिक्षासमूहे च

भैक्षचर्य्या स्त्री० चर-भावे क्यप् ६त। भिक्षाक्रियाकरणे।

भैक्ष्य न० भिक्षाणां समूह ष्यञ्। भिक्षासमूहे।

भैमी स्त्री भीमेनोपासिता तस्येदं वा अण् ङीप्। माघशुक्लैकादश्याम भीमराजस्य पुत्र्यां दमयन्त्याञ्च। विहाय भैमीमपदर्थ्या कथे'ति नैषधम्।

भैरव न भीरोरिदम् अण्। भये, तद्वति त्रि। काव्यादिप्रसिद्धे भयानके रसे। भयसाधने त्रि०स्त्रियां ङीप्। शङ्करे, तदवतारभेदे रागभेदे, नदभेदे च पु०। शिवपत्न्यां स्त्री०ङीप्

भैषज्य न भेषजमेव भिषजः कर्म वा ष्यञ्। औषधे।

भो अव्य भा डो। सम्बोधने।

भोग पु० भुज कर्मादौ घञ्। सुखे, सुखदुःखाद्यनुभवे, पण्यस्त्रीणां भाटकादिरूपे वेतने, सर्पस्य फणायां, तत्काये, धने, पालने, आहारे च। अर्श आद्यच्। सर्पे। आधारे घञ्। देहे, माने च। ज्योतिषोक्ते ग्रहाणां तत्तद्राशिस्थितौ भूम्यादिषु स्वस्वद्रव्यविनियोगे, यदृच्छविनियोगे च 'बन्धूनामविभक्तानां भोगं नैव प्रदापयेदि'ति स्मृतिः।

**भोगदेह** पु० भुज्यते सुखदुःखादिकमत्र भुज-आधारे घञ् कर्म०। पुण्यपापफलभोगार्थे देहे,'प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते' इति स्मृतिः।

**भोगभूमि** स्त्री० भोगस्यैव भूमिः स्थानं। भारतवर्षातिरिक्ते वर्षे तत्र हि भोगएव न कर्म इति शास्त्रे स्थितम्।

**भोगवती** स्त्री० भोगः सर्पशरीरं भूम्नाऽस्त्यस्याम् मतुप् मस्य व। पातालगङ्गायाम् 'भोगवती च पाताले' इति पुराणम्

**भोगिन्** स्त्री० भोग+अस्त्यर्थे इनि। सर्पे, नृपे, ग्रामाध्यक्षे, नापिते च। भोगयुक्ते त्रि०। भोगवदादयः सर्पे। भोगयुक्ते त्रि०

**भोगिवल्लभ** पु० ६त०। चन्दने।

**भोगीन्द्र** पु० भोगिनामिन्द्रः स्वामित्वात्, भोगी इन्द्र इव वा ; अनन्तदेवे वासुकौ च भोगीशादयोप्यत्र।

**भोग्य** न०भुज-ण्यत् कुत्वम्। धने, धान्ये च। भोगार्हे त्रि०। भोगार्हस्त्रियां, वेश्यायाञ्च स्त्री०।

**भोज** पु० भुज-अच्। स्वनामख्याते देशभेदे धारापुरस्थ नृपभेदे 'धन्यः श्रीभोजराजस्त्रिभुवनविजयी'त्युद्भटः।

**भोजकट** पु० भोजाख्ये देशे।

**भोजन** न० भुज-ल्युट्। कठिनद्रव्यस्य गलबिलाधःसंयोजने।

**भोज्य** त्रि०भुज-ण्यत् भक्षणार्थत्वान्न कुत्वम्। भक्षणीयद्रव्यमात्रे

**भोटाङ्ग** पु० (भोटान) देशभेदे।

**भोस्** अव्य० भा-डोसि। सम्बोधने,प्रश्ने विषादे च।

**भौतिक** त्रि० भूतानि पृथिव्यादीनि पिशाचान् वा अधिकृत्य जातानि ठक्। भूताधिकारेण जाते उपद्रवे व्याध्यादौ।

**भौम** पु० भूमेरपत्यं तस्या इदं वा अण्। नरकासुरे 'त्वयि भौमं गते जेतुमिति माघः'। मङ्गलग्रहे च। भूमिभवे त्रि०।

**भौमरत्न** न० भौमप्रियं रत्नं शाक०। प्रवाले।

**भौमिक** त्रि० भूमौ अधिकृत ठक्। भूम्यधिकारिणि।

**भौरिक** त्रि० भूरिणि स्वर्णे अधिकृतः ठन्। स्वर्णाध्यक्षे।

**भ्यस** भये भ्वा०आ०अक०सेट्। भ्यसते अभ्यसिष्ट।

**भ्रण** शब्दे भ्वा०पर०सक०सेट्। भ्रणति अभ्राणीत् अभ्रणीत्

**भ्रकुं(ग)स** पु० भ्रुवा कुं(गा)सो यस्य पृ०नि०। भ्रकुसशब्दार्थे।

**भ्रकुटि(टी)** स्त्री० भ्रुवः कुटिर्भङ्गः पृ० वा ङीप्। भ्रूभङ्गे।

**भ्रम** चलने भ्वा० पर०सक०सेट्। भ्रमति अभ्रमत् अभ्रमीत्

**भ्रम** चलने दिवा०पर०सक०सेट् शमा०। भ्राम्यति अभ्रमीत्

**भ्रम** चलने, भ्वा०पर०अक०सेट्। भ्रमति अभ्रमीत् फणा० भ्रेमतुः बभ्रमतुः (चङि न ह्रस्वः। ज्वला०भ्रम भ्रामः।

**भ्रम** पु० भ्रम-घञ्। मिथ्याज्ञाने (अन्यथाभूतस्य वस्तुनोऽन्यथारूपेण ज्ञाने) जलनिर्गमस्थाने,कुन्दे, (कुंद) भ्रमणे च।

**भ्रमर** पु० भ्रम-करन्। मधुकरे।

**भ्रमरक** पु० भ्रमर इव कायति कै-क। ललाटलम्बिते भ्रमरतुल्ये चूर्णकुन्तले। स्वार्थे कन्। भ्रमरे,कन्दे,बालक्रीडनकायाञ्च

**भ्रमरप्रिय** पु० ६त०। धाराकदम्बे।

**भ्रमरातिथि** पु० भ्रमरः अतिथिर्यस्य। चम्पके।

**भ्रमरानन्द** पु० भ्रमरान् आनन्दयति आ+नन्द-णिच्-अच्। वकुले। [ललाटस्थिते भ्रमरतुल्ये चूर्णकुन्तले।

**भ्रमरालक** पु० भ्रमर इव अलति पर्याप्नोति अल-ण्वुल्।

**भ्रमरी** स्त्री० भ्रम-करन् गौ०ङीष्। जतुकायां भ्रमरभार्यायाञ्च

**भ्रमरेष्ट** पु० ६त०। श्योनाकवृक्षे। भार्ग्यां भूमिजम्ब्वाञ्च स्त्री०

**भ्रमरोत्सवा** स्त्री०भ्रमराणामुत्सवो यतोऽत्र। माधवीलतायाम्

**भ्रश** अधःपतने दि०पर०सक०सेट्। भ्रश्यति अभ्राशीत् अभ्रशीत्। ञ्या वेट्।

**भ्रष्ट** त्रि० भ्रश-क्त। च्युते अधःपतिते। [बभ्रज्ज

**भ्रस्ज** पाके तु०उ०सक०अनिट्। भृज्जति अभ्राक्षीत्। बभर्ज-

**भ्राज** दीप्तौ भ्वा०आत्म०फणा०अक०सेट्। भ्राजते अभ्राजिष्ट भ्रेजे बभ्राजे। चङि वा ह्रस्व। अबु भ्राजत्'।

**भ्राजिष्णु** त्रि० भ्राज-इष्णुच्। दीप्तिशीले।

**भ्रातृ** पु० भ्राज-तृच् नि०। एकपितृजाते (भाइ) इति ख्याते स्वसा सहोक्तौ। भ्रातृभगिन्योः द्वि०व०।

**भ्रातृज** पु०भ्रातुर्जायते जन-ड। भ्रातुःसुते। तत्कन्यायां स्त्री०

**भ्रातृव्य** पु० भ्रातुः पुत्रः भ्रातृ+व्यत्। भ्रातुःसुते, शत्रौ च

**भ्रातृश्वशुर** पु०भ्रातापि पत्युर्ज्येष्ठभ्राता पि श्वशुरस्थानीयस्तत् पितृतुल्यत्वात्। (भासुर) भर्त्तुर्ज्येष्ठभ्रातरि 'भर्त्तृश्वशुरता ज्येष्ठे' इति भारतान्तरम्। [त्रि०

**भ्रात्रीय** पु०भ्रातुरपत्यमिदं वा छ। भ्रातुःपुत्रे भ्रातृसम्बन्धिनि

**भ्रान्त** न० भ्रम-भावे क्त। भ्रमणे 'जनस्थाने भ्रान्तमि'ति नाटकम्। कर्त्तरि क्त मिथ्याज्ञानयुक्ते, भ्रमणयुक्ते च त्रि०। धुस्तूरे पु०।

**भ्रान्ति** स्त्री० भ्रम-क्तिन्। भ्रमणे, अयथार्थज्ञाने च।

**भ्रान्तिमत्** पु० अलङ्कारोक्ते अर्थालङ्कारभेदे।

**भ्रामक** पु० भ्रमयति भ्रम-ण्वुल्। शृगाले, धूर्त्ते, सूर्य्यावर्त्ते मणौ, अयस्कान्ते प्रस्तरे च।

**भ्रामर** न० भ्रमरेण संभृतं सम्पादितम् अस्येदं वा अण्। मधुनि। भ्रमरसम्बन्धिनि त्रि०। अयस्कान्ते पु०। 'भ्रामरं रूपं कृत्वासंख्येयषट्पदं'मित्युपक्रम्य 'भ्रामरीति च मां लोकाः' इति चण्डाप्रोक्ते चण्डीमूर्त्तिभेदे।

**भ्राश** भासे भ्वा० प०फणा०अक०सेट्। भ्राशति भ्राश्यति अभ्रा-

मस्य वः। इन्द्रे मघवन्तौ मघवतः। तत्पत्न्यां ङीप् मघवती। [तत्पत्न्यां ङीप् मघोनी।

**मघवन्** पु० मह-कनिन् नि०। इन्द्रे मघवा मघवानौ। मघोनः।

**मघा** स्त्री० मह-घ हस्य घत्वम्। अश्विन्यवधिके दशमे नक्षत्रे तस्याश्च पञ्चतारात्मकत्वात् बहुत्वमपि 'पितरः स्वाहय-न्त्यन्नमष्टकासु मघासु चेति स्मृतिः। मघा सूनस्य वर्ज्जये, दिति मघायां पिण्डदानञ्चेति स्मृतिस्तु समुदायसंकेता-भिप्रायेण।

**मघात्रयोदशी** स्त्री० मघानक्षत्रेण युक्ता त्रयोदशी। भाद्र-कृष्णत्रयोदश्यां तत्रैव मघानक्षत्रसंयोगसम्भवात् 'प्रौष्ठ-पद्यामतीतायां मघायुक्ता त्रयोदशी'मिति स्मृतिः।

**मघी** पु० मघानक्षत्रे भवः अण् हस्वी ष्ट० ह्रस्वः ङीप्। मघानक्षत्रस्य रविभुक्त्यमानयुक्ते काले सौरभाद्रमासे जाय-माने (आउस) धान्ये।

**मङ्कुर** पु० मकि-उरच्। दर्पणे।

**मङ्क्षु** अव्य०मस्जि-उन्। शीघ्रे, कृत्स्नार्थे च। ष्ट०मस्य त्वमपि

**मङ्गल** पु० मगि-अलच्। भूमिसुते, ग्रहभेदे प्रशस्ते अभीष्टार्थ-सिद्धौ च। तद्वति त्रि०। दुर्गायां, हरिद्रायां, दूर्व्वायां, पतिव्रतायाञ्च स्त्री०। [दुर्गाभेदे।

**मङ्गलचण्डिका** स्त्री० मङ्गलवारे पूज्यायां चण्डिकायां

**मङ्गलच्छाय** पु० मङ्गला प्रशस्ता छाया यस्य। वटवृक्षे।

**मङ्गलपाठक** पु० मङ्गलार्थं स्तुतीः पठति पठ-ण्वुल्। स्तुति-पाठके 'आ इयामङ्गलपाठक! गैलूषापसदेति वेणीसंहारः।

**मङ्गलप्रदा** स्त्री० मङ्गलं प्रददाति प्र+दा-क। हरिद्रायाम्।

**मङ्गल्य** न० मङ्गलाय हितं यत्। चन्दने, मङ्गलागुरुणि, स्वर्णे, सिन्दूरे, दध्नि च। रुचिरे मङ्गलकरे च त्रि० 'सर्व्व-मङ्गलमङ्गल्ये' इति चण्डी। अश्वत्थे, बिल्वे, जीरके, मसू-रके, नारिकेले, कपित्थे, रीठाकरञ्जे, त्रायमाणौषधे च पु०

**मङ्गल्यक** पु० मङ्गलमङ्कस्य प्रियः तद्दोषनिवारणार्थं दीयमान-त्वेन शास्त्रविधानात्। मसूरे।

**मङ्गल्यकुसुमा** स्त्री० मङ्गल्यं कुसुमं यस्याः। शतपुष्पाम्।

**मङ्गल्या** स्त्री० मङ्गलाय हिता यत्। जीवन्त्या, मल्लिकागन्ध-युक्तागुरुणि, रोचनायाम्, अधःपुष्प्याम्, शम्यां, शुक्ल-वचायां, प्रियङ्गौ, माषपर्ण्यां, शतपुष्प्याम्, ऋद्धिनामौषधौ, हरिद्रायां, दूर्व्वायां, दुर्गायाञ्च स्त्री०। [अमञ्चिष्ट।

**मच** दम्भे शाठ्ये च अक० भ्वा०आ० सेट् इदित्। मञ्चते

**मच** उच्चताकरणे, धारणे, पूजायां च सक० दीप्तौ अक० भ्वा० आत्म० सेट् इदित्। मञ्चते अमञ्चिष्ट।

**मचर्चिका** स्त्री० चर्च-घ तद्वर्थनिर्देशे ण्वुल्, मस्य गम्भीरेऽ चर्चिका ध्यानम्। प्रशस्ते। अव्ययत्वेऽप्यमित्येके।

**मज्जकृत्** न० मज्जानं करोति कृ-क्विप्। देहस्थे अस्थिकृति कोषे अन्नादिषु भुक्तेषु रसादिपरिपाकेन क्रमेण शोणित-मांसवसास्थिमज्जशुक्राणामुत्पत्तेः अस्थ्न् मज्जाकरत्वम्

**मज्जन्** पु० मस्ज-कनिन्। अस्थिजाते अस्थिमध्यस्थे स्नेहा-कारे पदार्थे, इक्ष्वादेः सारांशे च।

**मज्जन** न० मस्ज-ल्युट्। स्नाने।

**मज्जसमुद्भव** न० मज्जः समुद्भवति सम्+उद्+भू-अच् ५त०' शुक्रे तस्य मज्जजातत्वम् मज्जशब्दे द्रष्टव्यम्।

**मज्जा** स्त्री० मस्ज-अच् टाप्। अस्थिसारे इक्ष्वादेः सारांशे च

**मज्जाज** न० मज्जातो जायते जन-ड। भूमिजे गुग्गुलौ।

**मज्जारस** पु० मज्जायाः रसः परिपाकः। शुक्रे तस्य मज्जा सम्भवत्वं मज्जशब्दे उक्तम्।

**मञ्च** पु० मचि-उच्छ्राये घञ्। खट्वायाम् (माचा) वंशनिर्म्मिते उच्चासने, उद्धमण्डपभेदे 'मञ्चस्थं रघुनन्दनमि'ति पुरा-णम्। स्वार्थे कन्। 'तत्रैव दृष्टोऽस्य' पतिरेव मञ्चकगत-' इति मा०३प०।

**मञ्जर** पु० मनुज-अरच्। तिलकवृक्षे, मुक्तायाञ्च।

**मञ्जरि(री)** स्त्री० मञ्जु ऋच्छति ऋ-इन् शक० पर०वा ङीप्। अभिनवोद्गतायां सुकुमारायां पल्लवाङ्कुररूपायां वल्लर्य्याम् (बौल)ल, तल, मुक्तायां, तिलकलतायां, तुलस्याञ्च।

**मञ्जरीनम्र** पु० मञ्जर्य्येव तदस्यायामपि नम्रः। वेतसे।

**मञ्जि(ञ्जी)** स्त्री० मनुज-इन् वा ङीप्। मञ्जर्य्याम्।

**मञ्जिफला** स्त्री० मञ्जिः मञ्जरी फले यस्याः। कदल्याम्

**मञ्जिष्ठा** स्त्री० अतिशयेन मञ्जिमती इष्ठन्। स्वनामख्यातायां लतायाम्।

**मञ्जीर** न० मनुज-ध्वनौ ईरन्। नूपुरे, 'मञ्जुमणिमञ्जीरे कलगम्भीरे' इति गी०१०प०। दधिमन्थनदण्डबन्धस्तम्भे च

**मञ्जु** त्रि० मनुज-उन्। मनोहरे।

**मञ्जुघोष** पु० तन्त्रोक्ते उपास्यदेवभेदे।

**मञ्जुल** त्रि० मनुज-उलच्। मनोहरे, निकुञ्जे शैवले च न०।

**मञ्जूषा** स्त्री०मनुज ऊषन्। (पेटरा) पेटिकायाम् मञ्जिष्ठायाञ्च

**मट** सादे भ्वा०पर०सक०सेट्। मटति अमटीत् अमाटीत्।

**मटची** स्त्री० मट-अचि ङीप्। पाषाणवृष्टौ 'मटचीहतेषु कुरुषि'ति छान्दोग्यश्रुतिः। [ठीत्

**मठ** वासे अक०मर्द्दने सक०भ्वा०पर०सेट्। मठति अमठीत्-अमा-

**मठ्** आध्याने आ०अक० सेट् इदित्। मण्ठते अमण्ठिष्ट।

**मत** त्रि० मन-क्त। सम्मते, अभिप्रेते, ज्ञाते, अर्चिते च। भावे-क्त। सम्मतौ, अभिप्राये, ज्ञाने, अर्च्चायाञ्च न०।

**मतङ्ग** पु० माद्यति अनेन मद-अङ्गच् दस्य त'। मेघे, मुनिभेदे च

**मतङ्गज** पु० मतङ्गात् अपेजातः जन-ड। गजे।

**मतल्लिका** स्त्री० मतं मतिमलति भूषयति ण्वुल् टा०। प्रशस्ते अव्युत्पन्नोऽयमित्येके। [आर्य्यै, शाकभेदे च

**मति** स्त्री०मन-भावे क्तिन्। ज्ञाने, इच्छायां स्मृतौ च। [क्तिच्।

**मतिदा** स्त्री० मतिं ददाति दा-क। ज्योतिष्मतीलतायाम्। (गिरुडी)। [भ्रंशे भ्रान्तौ

**मतिभ्रम** पु० मतेर्भ्रमः अयथार्थविषयत्वेन भ्रमणम्। बुद्धि-

**मतिविभ्रम** पु० मतिं बुद्धिं विभ्रमयति वि+भ्रम-णिच् अण्। उन्मादरोगे,।

**मत्कुण** पु० मद-क्विप् स्वार्थे कन्। मत्कुणे (छारपोका) मयेदम् कन्। मत्सम्बन्धिनि 'नैतन्मतं मत्कमि'ति भट्टिः।

**मत्कुण** पु० मद-क्विप् कुणयति कुण-अच् कर्म्म०। कीटभेदे (छारपोका)। [नागः

**मत्कुणारि** पु० ६त०। (सिद्धि) भङ्गायां तत्सम्पर्केण हि तस्य

**मत्त** पु० मद-क्त। हर्षेद्दे गजे। क्षीवे, मदयुक्ते, हृष्टे च त्रि०।

**मत्तकाशि(सि)नी** स्त्री० मत्तेव क्षीवेव काशते कमति गच्छति वा णिनि ङीप् ह्रस्वः। उत्तमयोषिति, स्त्रीमात्रे च।

**मत्तमयूर** पु० मत्तो मयूरो यस्मात्। मेघे, छन्दोभेदे च।

**मत्तवारण** पु० कर्म०। मत्तहस्तिनि। मत्तं वारयति वृ-णिच्-ल्यु। प्रासादवरण्डे न०। (वारेण्डा)

**मत्तालम्ब** पु० मत्तैरालम्ब्यते आ+लबि-घञ्। (वारेण्डा) प्रासादवरण्डे।

**मत्र** गुप्तभाषणे चु०आ०सक० सेट् इदित्। मन्त्रयते अममन्त्रत

**मत्सर** पु० मद-सर। अन्यशुभद्वेषे, परसम्पत्त्यसहने, क्रोधे च तद्वति, कृपणे च त्रि०। मक्षिकायां स्त्री०। [मत्सी

**मत्स्य** पु० मद-स्यन्। जलजन्तुभेदे (माछ)जातौ स्त्रियां ङीप्।

**मत्स्यकरण्डिका** स्त्री०मत्स्यानां करण्डिकेवाधारः'। (खालुइ) मत्स्यरक्षणाधारे पात्रभेदे। [वल्याम्, जलपिप्पल्याञ्च

**मत्स्यगन्धा** स्त्री० मत्स्यस्येव गन्धोऽस्याः। व्यासमातरि, सत्य-

**मत्स्यण्डी** स्त्री० मन्दं स्यन्दते अच् ङीप्। खण्डविकारे (मिछरि) स्वार्थे कन्। अत्रैव।

**मत्स्यधानी** स्त्री० मत्स्या धीयन्तेऽस्यां धा-ल्युट् ङीप्। मत्स्यरक्षणाधारे (खालुइ) पात्रभेदे। [हिङ्ग्वाम् (कटुकी)

**मत्स्यपित्ता** पु०मत्स्यस्य पित्तमिव रसोऽस्यस्याः अच्। कटुरो-

**मत्स्यरङ्ग** पु० मत्स्येन रजति रञ्ज-कर्त्तरि संज्ञायां घञ्। (माछराङा) पक्षिभेदे लिपुञ्जविटिनो ञा मत्स्यरङ्ग इत्युक्तः

**मत्स्यराज** पु० ६त०। रोहितमत्स्ये।

**मत्स्यविन्ना** स्त्री० विद-लाभे क्तः मत्स्योमत्स्यरसो विन्नो यया तत्प्रतिकृत्यात्। कटुकायाम्।

**मत्स्यवेधन** न० मत्स्योविध्यतेऽनेन विध-ल्युट्। बडिशे स्त्रीत्वमपि ङीप्। मद्गुपक्षिणि (मानकौड़ि) पु०।

**मत्स्याक्षी** पु०मत्स्यस्याक्षीव पुष्पमस्या। ब्राह्मा (वामनहाटि) सोमलतायां, गण्डदूर्व्वायां, छिन्नमोचिकायाञ्च।

**मत्स्याङ्गी** स्त्री० मत्स्यस्य तत्तिक्तमिवाङ्गं तिक्तत्वात् यस्याः। छिन्नमोचिकायाम्। [जलपिप्पल्याम्।

**मत्स्यादनी** स्त्री० मत्स्यः खाद्यते आस्वाद्यते अद-कर्म्मणि ल्युट्।

**मत्स्योदरी** स्त्री० मत्स्यगन्धयुक्तमुदरमस्याः। व्यासमातरि, मत्स्यगन्धायां, काशीस्थे तीर्थभेदे च। [स', मथ: माथः

**मथ** विलोडने भ्वा०पर०सक० सेट्। मथति अमथीत् व्यञ्जना० वा

**मथ** वधे मन०क्लेशे चाक०भ्वा०पर०सेट् इदित्। मन्थति। अमन्थीत्

**मथन** न० मथ-ल्युट्। वधे, क्लेशे, विलोडने च। 'क्षीरोदमथनोद्भूत' इति पुराणम्। [कारिकाहत्ते

**मथन** पु० मथ्यतेऽग्निर्यथनार्थममौ मथ-कर्म्मणि ल्युट्। गणि-

**मथित** न० मथ-क्त। निर्ज्जलतक्रे। पीड़िते, हते च त्रि०।

**मथुरा** स्त्री० मथ-उरच्। स्वनामख्यातायां नगर्य्याम्।

**मद** हर्षे दि०पर०अक० सेट् शमा०। माद्यति अमदत् अमादीत् अमदीत्। निष्ठायामनिट् पुषादिरयं तेन अमददित्येवेति माधवीया'। घटा०मदयति। [घटा० मदयति

**मद** गर्व्वे दैन्ये च भ्वा०पर०अक०सेट्। मदति अमादीत्-अमदीत्

**मद** तर्पणे चु०आ०सक०सेट्। मादयते। अमीमदत।

**मद** जाड्ये, स्वप्ने, मदे च। आमोदे स्तुतौ दीप्तौ यथायथं अक० सक० च भ्वा० आत्म० इदित्। मन्दते अमन्दिष्ट।

**मद** पु० मद-अच्। हस्तिगण्डजले, आमोदे गर्व्वे रेतसि, मृगमदे, मत्ततायाम्, मद्ये, मत्तताकरे वस्तुनि च।

**मदकट** पु० मदेन कटति कट-अच्। षण्डे (षांड) मदोत्कटे त्रि०

**मदकल** पु० मदेन कलति कल-अच्। मत्तहस्तिनि-मदोत्कटे अव्यक्तमधुरकारिणि च त्रि०। [मदिरायां स्त्री० टाप्।

**मदगन्ध** पु० मदस्य हस्तिदानस्येव गन्धोऽस्य। सप्तच्छदवृत्ते

**मदघ्नी** स्त्री०मदं मदिरायां मत्ततां हन्ति-हन-ट ङीप्। पूतिकायाम्। [ङीप्।

**मदन** पु०माद्यत्यनेन मद-करणे ल्युट्। कामदेवे, सुरायां स्त्री०

**मदनक** पु० मदयति मद-णिच्-ल्युट् स्वार्थे कन्। दमनकवृत्ते

**मदनचतुर्द्दशी** स्त्री० मदनस्य तदुपासनायां चतुर्द्दशी। चैत-

**मधुपर्णी** स्त्री० मधु इव हितकरं पर्णं यस्याः। गुडूच्यां, गाम्भार्य्यां, नीलीवृक्षे, वराहक्रान्तायाम्, मधुवीजपूरे च।

**मधुपालिका** स्त्री० मधूनि पालयति पाल-ण्वुल्। गाम्भार्य्याम्

**मधुपीलु** पु० कर्म०। मधुरपीलौ।

**मधुपुरी** स्त्री० मधोर्दैत्यस्य पुरी। मथुरायाम्।

**मधुपुष्प** पु०मधुप्रचुरं पुष्पं यस्य। मधुद्रुमे,(मौल)शिरीषवृक्षे, अशोकवृक्षे, वकुलवृक्षे च। दन्तीवृक्षे, नागदन्तीवृक्षे च स्त्री० टाप्। [भूमिजम्बूवृक्षे।

**मधुप्रिय** पु० मधु मधुरं प्रियं यस्य। बलरामे। मधुइव प्रियः।

**मधुफल** पु० मधुरं फलं यस्य। मधुनारिकेले। मधुखर्जूरिकायां स्त्री० टाप्।

**मधुवल्ला** स्त्री० मधु बल्लं यस्य। माधवीलतायाम्। [याम्

**मधुमक्षिका** स्त्री० मधुसञ्चायिका मक्षिका (मौमाछि) सरघा-

**मधुमज्जन्** पु० मधुरं मज्ज सारोऽस्य। आखोटकवृक्षे।

**मधुमत्** त्रि० मधुर्मधुररसोऽस्त्यस्य मतुप्। माधुर्य्यवति 'मधुमत् पार्थिवं रज' इति मधुसूक्तम्। नदीभेदे, योगशास्त्रप्रसिद्धे योगिनां चित्तवृत्तिभेदे, वैदिकप्रसिद्धे 'मधु वाता' इत्यादौ ऋक्त्रये, तन्त्रोक्ते देवी नायिकाभेदे च स्त्री०ङीप्।

**मधुमर्कटी** स्त्री० मधुजाता मर्कटी शाक०। (मिताखण्ड) मधुजाते खण्डे। [मालत्याम्। स्वार्थे कन्। तत्रैव।

**मधुमल्लि(ल्ली)** स्त्री० मल्ल-इन् वा ङीप् मधुप्रधाना मल्लिः(ल्ली)

**मधुमूल** न० मधुरं मूलम्। (मौआलु) आलुभेदे। [वा ङीप्

**मधुयष्टि** स्त्री०मधुरा यष्टिः काण्डम्। इक्षौ। यष्टिमधौ स्त्री०

**मधुयष्टिका** स्त्री० मधुरा यष्टिरिव इवार्थे कन्। यष्टिमधौ।

**मधुर** पु० मधु माधुर्य्यं राति रा-क, अस्त्यर्थे र वा। गुडादिस्थे मिष्टरसे,माधुर्य्यरसवति,इक्ष्वादौ,मनोहरे, 'मधुरया-मधुवोधितमाधवी'ति माघः प्रिये च त्रि०। रक्तशिग्रौ, राजाम्रे, रक्तेक्षौ,गुडे,शालौ,जीरके च पु०। वङ्गे, वीसे च न० स्वार्थे कन्। जीरके शतपुष्प्यां यष्टिमधौ, काकोल्यां, शतावर्य्यां वृहज्जीवन्त्यां, मधुकर्कटिकायां, मधूल्यां,मेदायां, पालङ्कशाके (मौरी) मिश्यायाञ्च स्त्री०। स्वार्थे कन् अत इत्वम्। मिश्यायाम् स्त्री०।

**मधुरजम्बीर** पु० कर्म०। (कमलालेवु) जम्बीरभेदे।

**मधुरत्वच** पु० मधुरा त्वचा यस्य। धवदृक्षे।

**मधुरफल** पु० मधुरं फलमस्य। राजवदरे।

**मधुरवल्ली** स्त्री० कर्म०। मधुवीजपूरे, जम्बीरभेदे च।

**मधुरस** पु० मधुन इव रसो यस्य। इक्षौ,जले च। मूर्व्वायां, द्राक्षायां, इङ्गिकायां, गाम्भार्य्याञ्च स्त्री०।

**मधुरस्रव** स्त्री० मधुरं स्रवति स्रु-अच्। पिण्डखर्जूर्य्याम्।

**मधुराम्लक** पु०कर्म०। आम्रातके।

**मधुलग्न** पु० मधुर्मधुररसो लग्नो यत्र। रक्तशोभाञ्जने।

**मधुलिका** स्त्री० मधु माधुर्य्यं लिटति गाहते लिट-क ष्ट०। राजिकायां (राइसर्षा)। [णिनि। मधुलेहीत्यप्यत्र

**मधुलिह्** पु० मधु लेढि आस्वादयति लिह-क्विप्। भ्रमरे

**मधुवन** न० मधुदैत्याधिष्ठितं वनम्। मथुरान्तिकस्थे वनभेदे किष्किन्धास्थे मधूप्रचुरे वनभेदे च।

**मधुवल्ली** स्त्री० मधुप्रधाना वल्ली। यष्टिमधौ।

**मधुवार** पु० मधुनो मद्यस्य वारः क्रमः। पुनःपुनर्मद्यपानक्रमे

**मधुवीज** पु० मधु मधुरं वीजं यस्य। दाडिमे।

**मधुवीजपूर** पु० कर्म० (लेवुभेदे) मधुकर्कटिकायाम्।

**मधुव्रत** पु० मधु तत्सञ्चयो व्रतं सततानुशीलनं यस्य। भ्रमरे

**मधुशाख** पु० मधुर्मधुरा शाखाऽस्य। (मौल) वृक्षे।

**मधुशिग्रु** पु० मधुः मधुरः शिग्रुः। रक्तशोभाञ्जनवृक्षे।

**मधुशेष** पु० न०मधुनः शेषः उच्छिष्टम्। सिक्थके (मोम)।

**मधुश्रेणी** स्त्री० मधुनः श्रेणीव। मूर्व्वायाम्।

**मधुश्वासा** स्त्री० मधुन इव श्वसित्यस्मात् श्वस-अपादाने घञ्। जीवन्तीवृक्षे। [सारथ्यादयोऽप्यत्र।

**मधुष्ठील** पु० मधु ष्ठीवे गर्भेऽस्य। (मौल) गुडपुष्पवृक्षे। [मधु-

**मधुसख** पु० मधोर्वसन्तस्य सखा सहचरः अच् स०। कामदेवे

**मधुसूदन** पु० मधु तन्नामासुरं सूदयति, मधु,जीवानां शुभाशुभकर्म्म, ज्ञानदानेन सूदयति वा सूद-ल्यु। श्रीकृष्णे। 'भक्तानां कर्म्मणाञ्चैव सूदनात् मधुसूदन' इति निरुक्तेः मधु माध्वीकं सूदयति भक्षयति। भ्रमरे। मधुइव सूद्यते भक्ष्यते ल्युट् ङीप्। पालङ्कीशाके।

**मधुस्रव** पु०मधूनि मद्यानि स्रवन्त्यस्मात् स्रु-अप्। (मौलवृक्षे)

**मधुस्रवस्** पु० मधु स्रवति अस्मात् स्रु-असुन्। (मौल) वृक्षे।

**मधुस्वर** पु० मधुर्मधुरः स्वरोऽस्य। कोकिले। मधुरस्वरवति त्रि० [क्विप्। विष्णौ।

**मधुहन्** पु० मधुनामासुरं कर्मफलं वा ज्ञानद्वारा हन्ति हन्

**मधूक** न० मह-ऊक हस्य धः। यष्टिमधौ। (मौल) वृक्षे पु०।

**मधूच्छिष्ट** न० मधुन उच्छिष्टमवशिष्टम्। (मोम) सिक्थके मधूज्झितमप्यत्र।

**मधूपघ्न** पु०न० मधुदैत्यस्योपघ्नमाश्रयः। मथुरानगरे।

**मधूल** पु०मधु लाति ला-क ष्ट०। जलजगिरिजमधूकवृक्षयोः। मधुकर्कट्याम् आम्रे च स्त्री०गौरा०ङीष्। स्वार्थे कन् अत इत्वम् टाप्। मूर्व्वायाम्।

मनागभूदि'ति नैषधम् । [रुभेदे । ईषत्करे त्रि०

**मनाक्कर** न० मनाक् करोति कृ-अच् । मल्लिकागन्धयुक्ते अगु-

**मनावी** स्त्री० मनोः पत्नी वा ङीप् औङ् च । मनोः पत्न्याम्

**मनित** त्रि० भ्वा०मन-क्त । ज्ञाते ।

**मनीषा** स्त्री० ईष-अङ् मनस ईषा शक० । बुद्धौ ।

**मनीषिन्** पु०मनीषा अस्त्यस्य इनि । पण्डिते । बुद्धियुक्ते त्रि०

**मनु** स्त्री० मन-उ । पृक्कायाम् (पिडिङ्गशाक) मनुपत्न्याञ्च ।

प्रजापतिभेदे, धर्मशास्त्रकर्त्तरि स्वायम्भुवे मुनिभेदे च पु०

**मनुज** पु० मनोः स्वायम्भुवात् जायते जन-ड । मनुष्ये

स्त्रियां जातौ ङीप् । [जातौ ङीप्

**मनुष्य** पु०मनोरपत्यं यत् षुक् च । मानवे जातिभेदे । स्त्रियां

**मनुष्यधर्मन्** पु० मनुष्यस्येव धर्म्मो यस्य नरवाहनत्वात् अ-

निच् समा० । कुवेरे । [मनःशिलायाम् ।

**मनोगुप्ता** स्त्री० मनसा मनःशब्देन तच्छब्दवाच्यत्वात् गुप्ता ।

**मनोजव** त्रि० जु-अच् मनो जवं वेगवत् गमनाय यस्मिन् ।

पितृतुल्ये । मनस इव जवो यस्य । अतिवेगवति त्रि० ।

अग्निजिह्वायां स्त्री० । [ऽब्दिवृक्षे ।

**मनोजवृद्धि** पु० मनोजस्य कामस्य वृद्धिर्यस्मात् ५व० । काम-

**मनोज्ञ** त्रि० मनो जानाति ज्ञापयति बोधनाय प्रवणीकरोति

अन्तर्भूतण्यर्थे ज्ञा-क । मनोहरे । मनःशिलायां,वन्ध्याक-

र्कोट्यां, कटभ्यां, जीरके, मदिरायाञ्च स्त्री० ।

**मनोभव** पु० मनसि भवति भू-अच् । कामदेवे मनोजमनो-

भूप्रभृतयोप्यत्र । [प्रापकत्वात् । इच्छायाम्

**मनोरथ** पु० मनएव रथोऽत्र, मनसो रथइव वा इष्यमाण

**मनोरम** त्रि० मनोरमयति रम-णिच्-अच् उप० । मनोहरे ।

गोरोचनायां स्त्री० ।

**मनोहत** त्रि० मनो हतं यस्य । प्रतिहते, प्रतिबद्धे च ।

**मनोहर** त्रि०मनो हरति सदर्शनाय हृ-अच् । रुचिरे । कुन्द-

वृक्षे पु० जात्यां, स्वर्णयूथ्यां च स्त्री० । स्वर्णे न० । णिनि ।

मनोहारीति मनोहरे ।

**मनोह्वा** स्त्री०मनःशब्देनाह्वयते ह्वे-घञर्थे क । मनःशिलायाम्

**मन्ज** मार्ज्जने सक०भ्वनौ अक०भ्वा०पर०सेट् । मञ्जति अमञ्जीत्

**मन्तु** पु० मन-क्तु तुट् च । अपराधे, मनुष्ये, प्रजापतौ च ।

**मन्त्र** पु०मन्त्रि-अच् । गुप्तभाषणे, रहसि कर्त्तव्यावधारणार्थमुक्तौ

देवादीनां साधनार्थे तन्त्राद्युक्ते शब्दभेदे,वेदविभागभेदे च

**मन्त्रजिह्व** पु०मन्त्रएव जिह्वा आस्वादनसाधनं यस्य । अग्नौ,

मन्त्रेण दत्तहविरास्वादकत्वात्तस्य तथात्वम् ।

**मन्त्रदात** पु० दा-तृच् ६त० । गुरौ ।

**मन्त्रिन्** पु० मन्त्रयते णिनि । धीसचिवे येन सह रहसि

कर्त्तव्यमवसीयते तस्मिन् अमात्ये ।

**मन्थ** क्षोभे अक० विलोड़ने सक०भ्वा०पर०सेट् । मन्थति अमन्थीत्

**मन्थ** विलोडे क्र्या०पर०द्विक०सेट् । मथ्नाति अमन्थीत् ।

**मन्थ** पु० मन्थ-करणे घञ् । मन्थनदण्डे । 'सक्तुभिः सर्पिषा-

भ्यक्तैः शीतवारिपरिप्लुतैः । नात्यच्छो नातिसान्द्रश्च मन्थ

इत्यभिधीयते' इत्युक्ते पेयभेदे,सूर्य्ये,अर्कवृक्षे, नेत्रमले, कि-

रणे च । भावे घञ् । आलोडनादौ ।

**मन्थज** न० मन्थात् दधिमन्थनात् जायते जन-ड । नवनीते

**मन्थन** पु० मथ्यतेऽनेन करणे ल्युट् । मन्थानदण्डे ।

**मन्थर** न० मन्थ-करच् । कुसुम्भराम् । कोपे,फले, वाधे मन्था-

नदण्डे च पु० वक्रे, नीचे,जड़े, मन्दे च त्रि० । 'मदर्थसन्देश

मृणालमन्थर' इति नै० । कैकेय्याः दास्यां स्त्री० ।

**मन्थशैल** पु०६त० । समुद्रमन्थनाय मन्थनदण्डरूपेण कल्पिते

मन्दरपर्व्वते । [न्दाल

**मन्थान** पु० मन्थ-आनच् । मन्थनदण्डे, आरग्वधवृक्षे च (सो-

**मन्द** त्रि० मदि-अच् । मूर्खे स्वैरे, अभाग्ये, रोगिणि, अल्पे,

स्वतन्त्रे, खले च । शनिग्रहे,हस्तिभेदे,यमे, प्रलये च पु० ।

ज्योतिषोक्ते रविसंक्रान्तिभेदे स्त्री० ।

**मन्दग** त्रि० मन्दं गच्छति गम-ड । मृदुगामिनि शनि,ग्लानि-

पुरुष,वृष,हंस,गज,वरस्त्रिय इत्येते स्वभावान्मन्दगतय' ।

णिनि मन्दगामीत्यप्यत्र त्रि० । स्त्रियां ङीप् ।

**मन्दट** पु०मन्दं टीकते टीक-ड । पारिभद्रवृक्षे । (पालदेमादार)

**मन्दता** स्त्री० मन्दस्य भावः तल् । आलस्ये,जाड्ये,मन्दभावे च

'उच्चैरस्यति मन्दतामरसता'मिति चन्द्रालोकः ।

**मन्दर** पु० मदि-अरन् । समुद्रमन्थाने पर्व्वतभेदे, मन्दारवृक्षे,

स्वर्गे, हारभेदे, दर्पणे च । बहुले, मन्दे च त्रि० ।

**मन्दाकिनी** स्त्री० मन्दमकति अक-णिनि । स्वर्गगङ्गायां

'स्वर्गे मन्दाकिनी तथे'ति पुराणम् ।

**मन्दाक्रान्ता** स्त्री० सप्तदशाक्षरपादके छन्दोभेदे ।

**मन्दाक्ष** न०मन्दं सङ्कुचितमक्षि यस्माद् षच् समा० । लज्जायाम्

**मन्दाग्नि** पु० मन्दं पचने अल्पशक्तिकः अग्निः अनलः, स

यस्माद्वा । देहस्थे अपाचनशक्तिकेऽनले तद्धेतौ रोगभेदे च ।

**मन्दार** पु०मदि-आरक् । स्वर्गस्थे देववृक्षभेदे, पारिभद्रवृक्षे च

**मन्दिर** न० मन्दन्तेऽत्र मदि-किरच् । वेश्मे,पुरे च । तस्य द्विलिङ्ग

त्वमित्येके । समुद्रे जानुपश्चाद्भागे च पु० । (माइर)

**मन्दुरा** स्त्री० मदि-उरच् । अश्वशालायाम्, शयनीयकटे च

**मन्दोदरी** स्त्री० मयदानवकन्यायां रावणमहिष्याम् ।

**मरुभूरुह** पु० मरुभुवि निर्जलभूमौ रोहति रुह-क। करीरे

**मरुव** पु० मरुं निर्जलदेशं वाति कारणत्वेन वा-क। (गालटाना) (मरुआ) वृक्षभेदे। स्वार्थे कन्। तत्र, वृक्षभेदे, (मयना) खलपत्रतुलस्याम्, जम्बीरभेदे, पुष्पप्रधाने वृक्षभेदे, (मरुयाफुल) व्याघ्रे, राहौ, भयानके च।

**मरुसम्भवा** स्त्री० मरौ सम्भवति अच्। क्षुद्रदुरालभायाम् मरुस्यादयोऽप्यत्र। [क्षुद्रखदिरे च।

**मरूद्भवा** स्त्री० मरौ उद्भवति उद्+भू-अच्। कार्पास्यां,

**मर्क** गतौ सौ० पर०सक० सेट्। मर्कति अमर्कीत्।

**मर्कट** पु० मर्क-अटन्। वानरे। ऊर्णनाभे (माकड़सा) स्थावरविषभेदे (काडगिला) पक्षिभेदे च स्वार्थे कन्। तत्रैव।

**मर्कटतिन्दुक** पु० मर्कटप्रियस्तिन्दुक शाक०। कुपीलौ।

**मर्कटपिप्पली** स्त्री० मर्कटप्रिया पिप्पली शाक०। अपामार्गे

**मर्कटप्रिय** पु० ६त०। क्षीरवृक्षे (खिरु)।

**मर्कटवासस्** पु० ६त०। (माकडसाजाल) लूतातन्तौ।

**मर्कटशीर्ष** न० मर्कटस्य वानरस्य शीर्षमिव। हिङ्गुले। [लि०

**मर्कटास्य** मर्कटस्य वानरस्यास्यमिव रक्तत्वात्। ताम्रे तद्वति

**मर्कटी** स्त्री०मर्कटोऽस्त्यस्याः स्निग्धत्वेन अच् गौ०ङीप्। अपामार्गे, अजमोदायाम्, करञ्जभेदे (माकडाकरमचा) वानरयोषिति च। [ज्ञानाय चक्रभेदे।

**मर्कटीजाल** न० छन्दोग्रन्थोक्ते प्रस्तावे लघुगुरुस्थानविवेक-

**मर्कर** पु० मर्क-अरच्। भृङ्गराजे (केशुरिया) भाण्डे सुरङ्गायां, वन्ध्यायां-स्त्रियाञ्च स्त्री०टाप्।

**मर्च** ग्रहणे चु०उभ०सक०सेट्। मर्चयति-ते अममर्चत्-त।

**मर्त्त** पु०मृ-तन्। मनुष्ये भूलोके च। तत्र भवः यत्। मर्त्यः। मनुष्ये।

**मर्द्दन** न० मृद-ल्युट्। गात्रपादादिसंवाहने, चूर्णने च।

**मर्द्दल** पु०मृद-घञ् मर्द्दं लाति ला-क। वाद्यभेदे (मादल)।

**मर्द्दित** त्रि० चु० मृद-क्त। चूर्णिते, मथिते च।

**मर्ब** गतौ भ्वा०पर सक०सेट्। मर्बति अमर्बीत्।

**मर्म्मज्ञ** पु० मर्म जानाति ज्ञा-क। तत्त्वज्ञे। मर्मविदादयोऽप्यत्र

**मर्म्मन्** न० मृ-मनिन्। जीवनस्थाने सन्धिस्थाने तात्पर्ये च 'अपि धर्म्मागममर्म्मपारगैरि'ति नैषधम्।

**मर्म्मर** पु० मृ-अरन् सुट् च। वस्त्रपर्णानां शब्दे (मडमड) इत्यव्यक्तशब्दे। पीतदारुणि, हरिद्रायाञ्च स्त्री०गौ०ङीष्।

**मर्म्मस्पृश्** त्रि० मर्म्म प्राणस्थानं स्पृशति स्पृश-क्विन्। अरुन्तुदे मर्मपीडके। [तीक्ष्ण। मर्मपीडके।

**मर्माविध्** त्रि० मर्म सन्धिस्थानं विध्यति व्यध-क्विप् पूर्व

**मर्य्या** अव्य० म्रियते-ऽवगिम्यतेऽत्र मृ-यत्। सीमायाम् स्त्रीत्वमपि। कर्त्तरि यत्। मनुष्ये पु०। 'मेषो मर्य्या अपगमे' इति वेदमन्त्र० मर्य्या मनुष्या इति माधवभाष्यम्।

**मर्य्यादा** स्त्री०मर्य्यायां सीमायां दीयते दा-अङ् मर्य्यादीयते वा परि+आ-दा-अङ् पृ० षस्य मः। न्याय्यपथस्थितौ, सीमायाम् कूले च।

**मर्ष** मर्षणे भ्वा०पर०सक०सेट्। मर्षति अमर्षीत्।

**मल** धृतौ भ्वा०आ०अक०सेट्। मलते अमलिष्ट।

**मल** पु० मृज्यते शोध्यते मृज-कल-टिलोप। पापे, पुरीषे, लौहादीनां किट्टे,कलङ्के, मलजूरादौ, देहजाते, स्वेदश्लेष्मादौ, कर्पूरे, कृपणे, वातपित्तकफेषु च।

**मलघ्न** पु० मलं विष्ठां हन्ति रेचयति हन-क। शाल्मलीकन्दे क्लिप्। मलहाप्यत्र। नागदमन्यां स्त्री० ङीप्।

**मलदूषित** त्रि० ३त०। मलिने। [तत्फलस्य रेचकत्वात्।

**मलद्राविन्** पु०मलं द्रावयति रेचयति द्रु-णिच् अण्। जयपाले

**मलपू** स्त्री०मलं मलस्थानं पुनाति पू-क्विप्। काकोदुम्बरिकायाम्

**मलभेदिनी** स्त्री० मलं भेदयति रेचयति भिद्-णिच्। कटुकायाम्। (कटकी)।

**मलमास** पु० मलो दुष्टोमासः। 'अमावस्याद्वयं यत्र रविसंक्रान्तिवर्ज्जितम् मलमासः स विज्ञेय' इत्युक्ते रविसंक्रान्तिशून्ये शुक्लप्रतिपदादिदर्शान्तरूपे चान्द्रे मासे।

**मलय** पु० मल-कयन्। दक्षिणस्थे पर्व्वतभेदे। यत्र चन्दनजन्म तत्पर्व्वतान्तिकस्थे देशभेदे, उपवने, नन्दनवने नवसु द्वीपेषु मध्ये द्वीपभेदे, ऋषभदेवस्य पुत्रभेदे च।

**मलयज** न० मलये पर्व्वते जायते जन-ड। चन्दने। मलयदेशजाते वायौ पु०। तद्देशजाते त्रि०। [(तेओडि)।

**मलया** स्त्री०मलयो देशोऽस्त्यस्याः कारणत्वेन अच्। त्रिवृतायां

**मलविनाशिनी** स्त्री० मलं तद्दोषं विनाशयति वि+नशणिच्-णिनि। शङ्खपुष्प्याम्।

**मलारि** पु० मलस्य कलङ्ककिट्टादेररिः। सर्ज्जिक्षारद्रव्ये।

**मलिन** त्रि० मल+अस्त्यर्थे इनच्। मलयुक्ते, दूषिते, कृष्णे च इति। मलीमसमप्यत्र, दोषे, टङ्कणे, (सोहागा)।

**मलिनमुख** पु० मलिनं मुखं यस्य। वह्नौ, तस्मादौ धूमाय मानत्वेन कृष्णत्वात् वानरे च। क्रूरे, खले च त्रि०।

**मलिम्लुच** पु०मलो वैदिककर्मानर्हत्वेन दुष्टः सन् म्लोचति गच्छति म्लुच-क। मलमासे, वायौ, अग्नौ, चौरे च।

**मलीमस** त्रि० मल-ईमस च्। मलिने, लौहे, पुष्पकासीसे च

**मल्ल** धृतौ भ्वा०आ०अक०सेट्। मल्लते अमल्लिष्ट।

लोके तत्परिमाणादिकं वृहदभिधाने दर्शयिष्यते ।

**महर्षि** पु० कर्म्म० । परमर्षिशब्दार्थे वेदव्यासादौ ।

**महस्** न० मह-असुन् । तेजसि, यज्ञे, उत्सवे च ।

**महा** स्त्री० मह-अच् । (गोरक्षचाकलिया) गोपवल्ल्याम् ।

**महाकण्टकिनी** स्त्री० महत् कण्टकमस्त्यस्य इनि ङीप् । (फणिमनसा) वृक्षभेदे ।

**महाकन्द** पु० कर्म० । लशुने, राजपलाण्डौ, मूलके च ।

**महाकपित्थ** पु० कर्म्म० । विल्ववृक्षे ।

**महाकरञ्ज** पु०कर्म० । करञ्जभेदे (कांटाकरमचा) ।

**महाकर्णिकार** पु० कर्म० । आरग्वधे (सोंदाल ।

**महाकाय** पु० ६ब० । शिवानुचरभेदे नन्दिनि, हस्तिनि च । विपुलदेहवति त्रि०। कर्म० स्थूलदेहे पु० ।

**महाकार्त्तिकी** स्त्री० कार्त्तिकीमधिकृत्य 'प्राजापत्यं यदाऋक्षं तथैतस्यां नराधिप । सा महाकार्त्तिकी प्रोक्ते'त्युक्तायां रोहिणीनक्षत्रयुक्तायां कार्त्तिकपौर्णमास्याम् ।

**महाकाल** पु०कर्म० । अनवच्छिन्ने काले,शिवे च 'महाकालेन च समम्'इतिकालिकाध्यानम् (माकाल) लताभेदे, भैरवभेदेच 'महाकालं यजेद्देव्या दक्षिणे धूम्रवर्णक'मिति तन्त्रम् ।

**महाकाव्य** न० कवे० कर्म काव्यं कर्म० । सर्गबन्धरूपे अष्टाधिकसर्गके ग्रन्थभेदे तल्लक्षणं साहित्यदर्पणे ६प०।

**महाकुम्भी** स्त्री० महती कुम्भीव (पाना) कट्फले ।

**महाकुल** न०कर्म०। 'दशपुरुषविख्यातं श्रोत्रियाणां महाकुल'मिति मनुनोक्ते दशपुरुषावधिवेदाध्यायिवंशे ।

**महाकुलीन** त्रि० महाकुले भवः खच् । महाकुलोद्भवे।

**महाकोशफला** स्त्री० कर्म्म० । देवदालीलतायाम् ।

**महाकोषातकी** स्त्री० कर्म० । हस्तिघोषायाम् ।

**महागन्ध** न०महान् गन्धोऽस्य। हरिचन्दने, वोले च। जलवेतसे वृक्षे पु० । नागवलायां, कविकायां, कुटजे च स्त्री० ।

**महागुरु** पु० कर्म० । 'त्रयः पुरुषस्यातिगुरवो भवन्ति पिता माता चाचार्य्यश्चे'ति स्मृत्युक्ते पुरुषस्य पित्रादौ 'पतिरेको-गुरुः स्त्रीणा'मित्युक्ते दत्तकन्याया भर्त्तरि, अदत्तकन्यायाः पितरि, मातरि च । महागुरुनिपाते च 'काम्यं किञ्चिन्नाचरेदि'ति स्मृतिः ।

**महागुल्मा** स्त्री० महान् गुल्मोऽस्याः । सोमवल्ल्याम् ।

**महागुहा** स्त्री० महती गुहेव मूलमस्याः । पृश्निपर्ण्याम् ।

**महाग्रीव** पु० महती ग्रीवास्य । उष्ट्रे । दीर्घग्रीवायुक्ते त्रि० ।

**महाघोषा** स्त्री० घुष्यते कर्म्मणि घञ् कर्म० । कर्कटशृङ्ग्याम् । (काकड़ाशिङे) । कुन्दुरुकायाञ्च। महान् घोषोऽस्य । विपुलशब्दवति त्रि० । [विपुलावयववति त्रि०। कर्म । विपुलाङ्गे न०

**महाङ्ग** पु० महदङ्गमस्य । उष्ट्रे । गोक्षुरके रक्तापित्रिके च ।

**महाच्छद** पु० महान् छदोऽस्य । देवदारुवृक्षे । [त्रि०

**महाच्छाय** पु०महती छाया यस्य। वटवृक्षे। विपुलच्छायायुक्ते

**महाच्छिद्रा** स्त्री०महत् छिद्रमस्याः । महामेदायाम् ।

**महाजटा** स्त्री० महती जटा यस्याः । रुद्रजटावृक्षे । विपुलजटावति त्रि० । कर्म० । वृहत्यां, जटायाम् स्त्री०।

**महाजन** पु० कर्म्म० । वेदनाख्येषु श्रद्धावति जने । 'महाजनो येन गतो स पन्था' इति भारतम् ।

**महाजम्बू** स्त्री० कर्म०। राजजम्ब्वाम् ।

**महाजाली** स्त्री० कर्म०। पीतवर्णघोषायाम् ।

**महाज्यैष्ठी** स्त्री०'ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा । पूर्णिमा रविवारेण महाज्यैष्ठी प्रकीर्त्तिते'त्याद्युक्तलक्षणायां ज्यैष्ठपौर्णमास्याम् । 'महाज्यैष्ठ्यां तु यः पश्येत् पुरुषः पुरुषोत्तमम्' इति पुराणम् ।

**महाज्योतिष्मती** स्त्री० (वडमालकाङ्गिनी) लताभेदे । [त्रि०

**महाढ्य** पु० महेन उत्सवेनाढ्यः । कदम्बे कर्म०। महाधनवति

**महातरु** पु०कर्म०। स्नुहीवृक्षे विपुलवृक्षे च ।

**महातल** न०कर्म०। अधःस्थेषु पातालेषु मध्ये पञ्चमे पाताले

**महातारा** स्त्री०कर्म०। तन्त्रोक्ते तारिणीभेदे, जिनदेव्याञ्च

**महाताली** स्त्री० कर्म० । विपुलतालीभेदे राजताल्याम् ।

**महातिक्त** पु०कर्म०। निम्बवृक्षे । अतिशयतिक्तरसवति त्रि०। यवतिक्तायां स्त्री० ।

**महातीक्ष्णा** स्त्री०कर्म० । भल्लातकवृक्षे (भेला) अतितीव्रे त्रि०

**महातेजस्** पु० महत् तेजोऽस्य । पारदे । अतितेजस्विनि त्रि० कार्त्तिकेये वह्नौ च पु० ।

**महात्मन्** त्रि०महान् आत्मा स्वभाव आशयो यस्य। महाशये

**महादान** न०कर्म० । विनायकादिस्तुक्तजपाङ्गे तुलापुरुषादि षोड़शपदार्थदाने 'अथातः संप्रवक्ष्यामि महादानस्य लक्षण'मित्युपक्रम्य 'आद्यन्तु सर्व्वदानानां तुलापुरुषसंज्ञकमि'त्यादिना षोडशदानान्यभिधाय 'विनायकादिग्रहलोकपालवस्वष्टकादित्यमरुद्गणानाम्। ब्रह्माच्युतेशार्कवनस्पतीनां स्वमन्त्रतोहोमचतुष्टयं स्यात् । जप्यानि सूक्तानि तथैव चैषामनुक्रमेणापि यथास्वरूप'मित्युक्तं मात्स्ये । विस्तरस्तु मत्कृततुलादानादिपद्धतौ ज्ञेयः ।

**महादारु** न० कर्म० देवदारुणि ।

**महादेव** पु०कर्म०। 'ब्रह्मादीनां सुराणाञ्च मुनीनां ब्रह्मवादिनाम् तेषां महत्त्वात् देवोऽयं महादेवः प्रकीर्त्तित' इति

इत्युक्ते, 'महतो पूजिता विश्वे मूलप्रकृतिरीश्वरी तस्या देव
पूजितत्र महादेवस्तत स्मृत' इत्युक्ते च शिवे। [वृहद्वृक्षे च

**महाद्रुम** पु० कर्म । अश्वत्थवृक्षे। तस्य विष्णुरूपत्वात् महत्त्वम्

**महाधन** न० महत् मूल्यरूप धनमस्य । बहुमूल्ये । सुवर्णे, सिह्लके, मनोज्ञवस्त्रे च । कृषौ पु०। अतिधनवति त्रि०।

**महाधातु** पु कर्म०। स्वर्णे।

**महानदी** स्त्री०। ओड्रदेशस्थे नदीभेदे, समुद्रगामिन्या नद्याञ्च

**महानन्द** पु० महान् अतिवृहत् आनन्दो यत्र। मोक्षे कर्म० कतिपयानन्दे पु० 'माघमासस्य या शुक्ला नवमी लोक पूजिता । महानन्देति सा प्रोक्ते त्युक्तायां माघशुक्लनवम्या धरायां नदीभेदे च स्त्री० ।

**महानन्दि** पु कलौ क्षत्रान्तकरस्य महपद्मनृपभेदस्य पितरि

**महानवमी** स्त्री कर्म०। आश्विनशुक्लमधिकृत्य 'ततोऽन्त नवमी यस्मात् सा महानवमी स्मृता' इत्युक्तायाम् आश्विनशुक्लनवम्याम्

**महानस** न महदन अन्नानाम् अत्र । पाकस्थाने । [का दृप०

**महानाटक** न दृश्यकाव्यनाटकभेदे 'एतदेव यदा सर्व्वैस्त्वादि

**महानाद** पु महान्+नादोऽस्य । गजे, गर्जन्मेघे, सिंहे, उष्ट्रे च

**महानिद्रा** कर्म० । मरणे तत्र पुन प्रत्युत्थानाभावात् ।

**महानिम्ब** पु० कर्म । (घोडानिम) वृक्षभेदे ।

**महानिशा** स्त्री० 'महानिशा तु विज्ञेया मध्यमप्रहरद्वय'मित्युक्ते रात्रेर्मध्यमप्रहरद्वये । [तन्त्रभेदे न० ।

**महानील** पु कर्म० । भृङ्गराजे, मणिभेदे नागभेदे, महाजम्ब्वाञ्च

**महानुभाव** पु० महान् अनुभाव आशयो यस्य । महाशये

**महापक्षविष** 'शृङ्गी च कालकूटश्च वत्सको मस्तनाभक । पद्मकर्णीति योगोऽयं महापद्मविषाभिध' इत्युक्ते पञ्चविधे विषे

**महापत्त्रा** स्त्री० महत् पत्त्रमस्या । महाजम्बूवृक्षे । [पथे च

**महापथ** पु कर्म० । राजमार्गे, हिमालयोत्तरस्थे स्वर्गारोहण

**महापद्म** पु० कर्म० अष्टनागमध्ये, नागभेदे कुबेरस्य निधिभेदे 'अर्बुदमब्ज खर्व्वनिखर्व्वमहापद्मे ति' लीलावत्युक्तायाम् अयुतकोटिसंख्यायां, तत्संख्यान्विते, नृपभेदे च ।

**महापातक** न० ब्रह्महत्या सुरापान स्तेय गुर्व्वङ्गनागम महान्ति पातकान्याहुस्तत्संसर्गश्च पञ्चम इत्युक्तेषु पञ्चसु पातकेषु ।

**महापिण्डीतरु** पु कर्म । कृष्णवर्णे विपुलम,मन्दवे ।

**महापीलु** पु कर्म० । मधुपीलौ अतिमधुरत्वात्तस्य हि महत्त्वम्

**महापुराण** न० 'सृष्टिश्चापि विसृष्टिश्च स्थितिस्तेषाञ्च पालनम् । कर्म्मणा वासना वार्त्ता मनूनाञ्च क्रमेण च । वर्णन प्रलयानाञ्च मोक्षस्य च निरूपणम् । उत्कीर्त्तन हरेरेव देवानाञ्च पृथक् पृथक् । महापुराण विज्ञेयमेकादशक लक्षणमि'त्युक्ते व्यासप्रणीते पुराणभेदे ।

**महापुरुष** पु०कर्म०। परमेशे, नारायणे च। 'वन्दे महापुरुष ! ते चरणारविन्दमि'ति भागवतम् ।

**महापुरुषदन्ता** पु० महापुरुषस्य विष्णो दन्ता इव महत्त्वात् मूलान्यस्य । शतमूल्याम् ।

**महापुष्पा** स्त्री० महत् यन्त्रपुष्पत्वेन प्रशस्त, पत्त्रापेक्षया स्थूल वा पुष्प यस्या । अपराजितायाम् ।

**महाप्रलय** पु०कर्म० । ब्रह्मणो दिनावसाने जायमान सर्वभूतनाश प्रलय तस्यैव स्वमानेन शतवर्षावसाने जायमानस्तु महान् प्रलय तस्मिन्, तद्भवत्स्थिते, जन्यद्रव्यानधिकरणीभूते काले च । जन्यभावानधिकरणीभूते काले इत्यन्ये।

**महाप्रसाद** पु० 'पादोदकञ्च निर्म्माल्य नैवेद्यञ्च विशेषत । महाप्रसाद इत्युक्त्वा ग्राह्य विष्णो प्रयत्नत' इत्युक्ते देवनैवेद्यादौ विपुलप्रसन्नतायाञ्च ।

**महाप्राण** पु० महान् बहुकालस्थायित्वात् श्रेष्ठ प्राणोऽस्य । द्रोणकाके कर्म०। वर्णोच्चारणस्य बाह्यप्रयत्नभेदे, स च वर्ग्य द्वितीयचतुर्थवर्णानां शषसहानाञ्चोच्चारणप्रयत्न तेषाञ्चोच्चारणे हि प्राणवायोर्भूयान् प्रयास इति तेषामपि महाप्राणत्वमुपचारात् ।

**महाफल** पु०महत् पत्त्रापेक्षया वृहत् फलमस्य । बिल्ववृक्षे । इन्द्रवारुण्या (राखालशशा) स्त्री० ।

**महाबल** पु० महत् बल यस्य । वायौ, बुद्धे च बलवति त्रि० महत् बल यस्मात् पुष्प । सीसके न । पीतबलायामपि स्त्री

**महाभारत** पु न 'चत्वार एकतो वेदा भारतञ्चैतदेकत । पुरा किल सुरै सर्व्वै समेत्य तुलया धृतम् । चतुर्भ्य सरहस्येभ्यो वेदेभ्योऽभ्यधिक यदा । तदा प्रभृति लोकेऽस्मिन् महाभारतमुच्यते । महत्त्वात् भारतत्वाच्च महाभारतमुच्यते इत्युक्तलक्षणे व्यासप्रणीते शतसाहस्रिके ग्रन्थभेदे ।

**महाभीता** स्त्री कर्म । लज्जालुलतायाम् स्पर्शेन तस्या हि सङ्कोचेन तस्या अतिभीतत्वम् । अतिभीते त्रि ।

**महाभूत** न कर्म०। सर्व्वेषां पञ्चात्मकतामापन्ने स्थूलतापन्नेषु इन्द्रियग्राह्येषु पृथिव्यप्तेजोवाय्वाकाशेषु पञ्चसु भूतेषु । 'त वेधा विदधे नून महाभूतसमाधिने'ति रघु ।

**महाभृङ्ग** पु कर्म । नीलभृङ्गराजे ।

**महामनस्** त्रि महदुदार मनश्चद्व्यापारोऽस्य । महाशये ।

**महामात्र** पु० 'सर्व्वकर्मणि भूयसाम् वित्ते माने परिच्छदे ।

माला तु महती येषां महामालास्तु ते स्मृता' इत्युक्ते। प्रधानामात्ये।

**महामाया** स्त्री०कर्म० अन्यस्मिन् अन्यधर्मावभासो हि माया सर्व्वजगन्मूलत्वात्तस्या महत्त्वम्। जगत्कारणभूतायाम् अविद्यायां तदधिष्ठात्र्यां दुर्गायाञ्च 'महामाया हरेश्चैषा यया संमोह्यते जगदि'ति चण्डी।

**महामात्र** पु०कर्म०। राजमात्रे मुख्यामात्ये तस्य हि महत्त्वम्

**महामूत्र** पु० महत् वेर्य्यकारित्वात् श्रेष्ठं मूत्रमस्य। राजपलाण्डौ। [पशुषु महत्त्वात् तथात्वम्।

**महामृग** पु० महान् मृगः पशुः। गजे, शरभे च तयोर्हि

**महामेद** पुंस्त्री० द्व्य०। वैद्यकप्रसिद्धाष्टवर्गोक्ते ओषधिभेदे।

**महामोह** पु० महान् मोहः भ्रान्तिहेतुको वस्तुतोऽनिष्टेऽपि राग। संसारतद्विषयकारणरूपेऽज्ञानभेदे 'तमोऽविवेको मोहः स्यादन्तःकरणविभ्रमः। महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणे'त्युक्ते मैथुनादिसुखभोगेच्छारूपे अन्तःकरणवृत्तिभेदे च वैषयिकसुखस्य वस्तुतोऽनिष्टत्वात् तथात्वम्

**महाम्ल** न० कर्म०। अत्यम्ले, तिन्तिडीफले च तद्वृक्षे पु०।

**महायज्ञ** पु०कर्म०। नित्यं गृहस्थकर्त्तव्ये वेदाध्ययनाग्निहोत्रयज्ञपितृतर्पणभूतबलिकर्मातिथिपूजनरूपेषु पञ्चसु कर्मसु।

**महारजत** न०कर्म०। काञ्चने। तस्य हि रञ्जकत्वात् महत्त्वम्, दक्षद्वीपे धुस्तूरे च पु०।

**महारजन** न० रज्यतेऽनेन ल्युट् कर्म०। कुसुम्भपुष्पे, स्वर्णे च।

**महारथ** पु० 'एकोदश सहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च विज्ञेयः स महारथः' इत्युक्ते योधभेदे। [काञ्जिके न०।

**महारस** पु० द्व्य०। खर्ज्जूरे, कशेरुणि, इक्षौ, पारदे च।

**महाराज(जि)क** पु० महान् सन् राजते वुन् ष्ठ० इत्वं वा। विंशत्यधिकशतद्वयसंख्याते गणदेवभेदे।

**महाराजद्रुम** पु० कर्म०। आरग्वधे (सोन्दाल)।

**महारात्रि** स्त्री०'ब्रह्मणश्च निपाते च महाकल्पो भवेन्नृप!। प्रकीर्त्तिता महारात्रि'रित्युक्ते महाकल्पात्मके महाप्रलये 'अर्द्धरात्रात् परं यत्तु मुहूर्त्तद्वयमुच्यते। सा महारात्रिरुद्दिष्टे'ति तन्त्रोक्ते अर्द्धरात्रोपरि मुहूर्त्तद्वयात्मके रात्रिकाले

**महाराष्ट्र** पुं०कर्म०। (महाराष्ट्रा) देशभेदे। तद्देशः कारणेन-अस्त्यस्या अच् गौ ङीष्। जलपिप्पल्याम्, शाकभेदे च स्त्री०

**महारिष्ट** पु०कर्म०। गिरिजाते निम्बभेदे। अत्यशुभे न०।

**महारोग** पु०कर्म०। 'उन्मादो राजयक्ष्मा च श्वासस्त्वग्दोष एव च। मधुमेहश्चाश्मरी च तथोदरभगन्दरौ। इत्येतेऽष्टौ महारोगा महापातकसम्भवा' इत्युक्ते महापातकजन्येषु उन्मादादिषु रोगेषु।

**महारौरव** पु० रुरोरयम् अण् कर्म०। 'महारौरवसंज्ञस्तु अर्द्धायस्ताम्रसंपुटे। धम्यते खदिराङ्गारैः पच्यते कालमव्यय'मित्युक्ते नरकभेदे।

**महार्घ** त्रि० महानर्घो मूल्यं यस्य। बहुमूल्ये।

**महार्णव** पु० कर्म०। महासमुद्रे।

**महार्द्रक** न० कर्म०। वनार्द्रके।

**महालय** पु० महान् आत्यन्तिको लयो यत्र। परमात्मनि कर्म०। इष्टालये तीर्थस्थाने, विहारे, सौराश्विनकृष्णपक्षे च न०। 'तस्यां दद्यात् न चेद्दत्तं पितॄणां वै महालये इति स्मृतिः।

**महालक्ष्मी** स्त्री०कर्म०। चण्ड्यादितीयचरितदेवतारूपे 'देवैः ऐरिमर्हिनीमिह महालक्ष्मीं सरोजस्थिता'मित्युक्तलक्षणे अष्टादशभुजान्विते दुर्गामूर्त्तिभेदे, तन्त्रोक्ते लक्ष्मीभेदे च।

**महालोध्र** पु० कर्म०। लोध्रभेदे (पाटिया लोध)।

**महावरा** स्त्री० वृणोति विस्तृणाति वृ-अच् कर्म०। दूर्वायाम्

**महावराह** पु०कर्म०। वृहद्वराहरूपधारिणि भगवदवतारभेदे

**महावरोह** पु० महान् अवरोहोऽस्य। वटवृक्षे।

**महावल्ली** स्त्री० कर्म०। माधवीलतायाम्।

**महावाक्य** न० कर्म०। परस्परसंबद्धार्थके वाक्यसमुदायरूपे एकवाक्ये 'वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते'इति मीमांसकाः। वेदान्तोक्ते ब्रह्मविद्याप्रतिपादके 'तत्त्वमस्या'-दिप्रतिमहावाक्ये, दानादौ अभिलापवाक्ये च।

**महाविद्या** स्त्री० कर्म०। 'काली तारा महाविद्या षोड़शी भुवनेश्वरी भैरवी, छिन्नमस्ता च विद्या धूमावती तथा। बगला सिद्धविद्या च मातङ्गी कमलात्मिका। एताः दशमहाविद्या'इत्युक्तासु काल्यादिषु दशसु देवीषु।

**महाविषुव** न० रवेर्मेषसंक्रमणे। तत्संक्रमणञ्च स्वरूपतः संक्रमणं, प्रमाणुकस्य संक्रमणं वा। तत्र प्रमाणुकसंक्रमणमयनांशानुसारेण अष्टनवाधिकषट्षष्टिवत्सरैरेकैकांशं परित्यज्य ततः पश्चात्पश्चात्कराद्रौ स्थाने भवति इदानीं च पश्चादयनं, पूर्व्वायने तु पूर्व्वपूर्व्वतराद्रौ स्थाने भविष्यति। इत्यतस्तस्यानियतस्थानत्वात् स्वरूपसंक्रमस्य स्थिरः सर्व्वदैकस्थाने जायमानत्वात्।

**महावीचि** पु० नास्ति वीचिः सुखं यत्र स अवीचिः कर्म०। सुप्रदरङ्गिते, 'यत्र महोर्मिन नीयते' इत्युक्ते वा नरकभेदे।

**महावीर** पुं०कर्म०। गरुड़े, हनुमति, सिंहे, यज्ञाग्नौ, वज्रे

श्वेतार्के, कोकिले, मत्कुणे, एकवीरवृक्षे, महाम्बुदे च क्षीरकाकोलीवृक्षे स्त्री० ।

महावीर्य्य पु०६ब० । वाराहीकन्दे, परमात्मनि च, अतिवीर्यवति त्रि० । वनकार्पास्याम्, संज्ञायां सूर्यपत्न्याञ्च स्त्री ।

महावृहती स्त्री० कर्म० । वार्त्ताक्याम् ।

महावृक्ष पु० कर्म । स्नुहीवृक्षे, वृहन्तरौ च ।

महाव्याधि पु० कर्म० । महारोगे, कुष्ठादौ रोगे च ।

महाव्याहृति स्त्री० कर्म० । वैदिके भूर्भुवःस्वरात्मके मन्त्रत्रये

महाव्रण न० कर्म । (नालिघा) दुष्टव्रणे ।

महाव्रत न० कर्म०। अतिशयव्रते शारदीयदुर्गापूजादौ 'महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितमि'ति पुराणम् । द्वादशवार्षिके प्रायश्चित्तात्मके व्रतभेदे च ।

महाशङ्ख पु० कर्म०। तन्त्रे वीराचारप्रसिद्धे नरकपालास्थिजाते 'नरललाटास्थिखण्डैन रचिता जपमालिका । महाशङ्खमयी माला ताराविद्याजपे प्रिये' इत्युक्ते मालाभेदे, ह्रदशङ्खे च । 'पौण्ड्रं दध्मौ महाशङ्खमि'ति गीता ।

महाशठ पु० कर्म० । राजधत्तूरे । अतिधूर्त्ते त्रि० ।

महाशणपुष्पी स्त्री० शणस्येव पुष्पमस्य ङीप् कर्म० । वृहच्छणपुष्प्याम् । स्वार्थे कन् । तत्रैव ।

महाशता स्त्री शत मूलानि सन्त्यस्य अच् कर्म०। वृहच्छतावर्य्याम्

महाशतावरी स्त्री० कर्म । वृहच्छतावर्य्याम् ।

महाशय त्रि० महान् उदार आशयो यस्य । महानुभावे ।

महाशाखा स्त्री० महती शाखाऽस्या । नागबलायाम् ।

महाशालि पु० कर्म० । स्थूलशालौ । [अतिशीतले त्रि० ।

महाशीता स्त्री० महती शीता शीतवीर्य्या । शतमूल्याम्

महाशुक्ति स्त्री०महती शुक्राकारत्वेन प्रायत्याम् शुक्ति । मुक्ताप्रसूशुक्तौ । [ङीप्

महाशूद्र पु० कर्म० । आभीरे (आहोर) जातिभेदे तत्स्त्र्यां

महाश्मशान न कर्म०। काश्याम् प्रलयकालेऽपि शवसमस्तजीवानां सम्पादनात् नामाधारत्वात् तथात्वम् ।

महाश्यामा स्त्री०कर्म० । वृद्धदारकलतायां शिंशपाभेदे च।

महाश्रावणिका स्त्री० कर्म० (मुनकुडो) मुण्डीभेदे ।

महाश्वेता स्त्री कर्म० । सरस्वत्याम्, श्वेतभूमिकुष्माण्डे च ।

महाष्टमी स्त्री० कर्म०। 'आश्विने शुक्लपक्षस्य भवेद्या तिथिरष्टमी । महाष्टमीति सा प्रोक्ता' इत्युक्तायामाश्विनशुक्लाष्टम्याम्

महासर्ज्ज पु० कर्म० । असनवृक्षे पनसवृक्षे च (काठाल)

महासह पु०कर्म । अम्लानपुष्पे कुब्जकवृक्षे माषपर्ण्याम्, कण्टकारिकायाम्, चकृष्णे च स्त्री । अतिक्षमे त्रि० ।

महासान्तपन न० । कर्म०। स्मृत्युक्ते व्रतभेदे ।

महासार पु० महान् सारोऽस्य । हरिखदिरे ।

महासुगन्धा स्त्री०महान् गन्धोऽस्याः कर्म० । गन्धनाकुल्याम् अतिसुगन्धयुक्ते त्रि० ।

महासेन पु०महती सेनाऽस्य। कार्त्तिकेये। वृहत्सेनाधिपतौ त्रि०

महास्कन्ध पु० महान् स्कन्धोऽस्य । जम्बूवृक्षे ।

महाहास पु० कर्म० । अट्टहासे उच्चैर्हासे ।

महाहिगन्धा पु० अहेर्गन्धो हिंसा यस्मात् अहिगन्धो नकुल तत्तुल्येन गन्धोऽस्य अच् कर्म० । गन्धनाकुल्याम् ।

महाह्रस्वा स्त्री०कर्म । कपिकच्छ्वाम् (आलकुशी) अतिखर्वे त्रि०

महि(ही) स्त्री० मह-इन् वा ङीप् । पृथिव्याम् । जीवलदृष्टमालवदेशस्थे नदीभेदेऽपि ।

महिका स्त्री० मह्यते मह-क्वुन् । हिमे ।

महिमन् पु०महतो भावः इमनिच् टिलोपे टिलोप । महत्त्वे, ऐश्वर्य्यभेदे च ।

म(मि)हिर पु० मह (मिह-) किरच् । सूर्य्ये ।

महि(हे)ला स्त्री मह-इलच् । योषिति, प्रियङ्गुलतायां, रेणुकागन्धद्रव्ये, संज्ञायां स्त्रियाञ्च। एलच्। महेलापि योषिति।

महिष पु० मह-टिषच् । स्वनामख्याते पशुभेदे, महिषासुरे च । राज्ञः कृताभिषेकायां स्त्रियां, महिषजातिस्त्रियाम्, ओषधिभेदे च स्त्री० ङीप् । [स्वार्थेऽणादयोऽपत ।

महिषध्वज पु० महिषो ध्वजचिह्नं वाहनत्वेनास्य। यमे । महि

महिषमर्द्दिनी स्त्री० महिषं महिषासुरं मर्द्दयति मर्द णिनि ङीप् इत०। दुर्गाभेदे । [तत्रैव ।

महिषाक्ष पु० महिषस्याक्षीव अच्। गुग्गुलुभेदे। स्वार्थे कन्।

महिषासुर पु० रम्भासुरेण महिष्यामुत्पादिते असुरभेदे, महिषाक्षगुग्गुलौ च । [भू अच् । भूमिजगुग्गुलौ

महिषासुरसम्भव पु० महिषासुरात्तन्मेदसः सम्भवति

महीक्षित् पु मही क्षयते इष्टे क्षि-ऐश्वर्ये क्विप् तुक् च। नृपे

महीज न० मह्या जायते जन-ड । आर्द्रके । मङ्गलग्रहे, नरकासुरे च पु० ।

महीध्र पु०मही धारयति ध्र क । पर्वते। अच्। महीधरोऽप्यत्र

महीप्राचीर न० मह्याः प्राचीरमिवावरकत्वात् । समुद्रे ।

महीभृत् पु मही बिभर्ति धारयति पालयति वा भृ-क्विप् । पर्वते भूमिपाले च । ['महती मह्येयानि'ति श्रुति

महीयस् त्रि० अतिशयेन महान् महत्+ईयसु । अतिमहति

महीयमान त्रि० महीयते मही+क्यङ् कर्मणि यक् शानच् । पूज्ये, वृद्धे च 'महीयमाना भवताऽविमानमि'ति भट्टिः

महीरुह पु० मह्यां रोहति रुह-क । वृक्षे, शाके च ।

महीलता स्त्री० मह्या लतेव । (केंचो) किञ्चुलुके ।

महेच्छ त्रि० महती इच्छा यस्य । महाशये ।

महेन्द्र पु० महान् इन्द्रः इन्द्रस्यापि नियन्तृत्वात् । परमेश्वरे, महैश्वर्यवति इन्द्रे, जम्बुद्वीपस्थपर्वतभेदे च ।

महेन्द्रकदली स्त्री० महेन्द्रप्रिया तद्वर्णा वा कदली । कदलीभेदे ।

महेन्द्रपुरी स्त्री० ६त० । अमरावत्याम् । महेन्द्रनगर्यादयोऽप्यत्र

महेन्द्रवारुणी स्त्री० महेन्द्रय वरुणय तयोरियं प्रियत्वात् अण् 'देवताद्वन्द्वे उत्तरपदवृद्धि' । (माकाल) लताभेदे ।

महेरणा स्त्री० महं गलोत्सवमीरयति ल्यु । शल्लकीवृक्षे ।

महेश पु० कर्म० । शिवे । महेश्वरोऽप्यत्र 'महेश्वरस्त्र्यम्बक एव नापर' इति रघुः ।

महेशबन्धु पु० ६त० । बिल्ववृक्षे ।

महेला स्त्री० कर्म० । स्थूलैलायाम् (बड़एलाची)

महोक्ष पु० महान् उक्षा अच् समा० । वृहद्वृषे, 'महोक्षं वा महाजं वा श्रोत्रियाय प्रकल्पयेदि'ति मनुः ।

महोटी स्त्री० महान्ति फलानिवया स्थूलानि उटानि पर्णान्यस्याः' ङीप् । वृहत्यां, उत्पले च ।

महोत्पल पु० कर्म० । पद्मे, सारसपक्षिणि च ।

महोत्सव पु० कर्म० । सन्ततसुखसम्पादकव्यापारे ।

महोत्साह त्रि० महान् उत्साहो यस्य । अत्यन्तोद्यमयुक्ते ।

महोदधि पु० कर्म० । समुद्रे ।

महोदय पु० महान् उदयो वृद्धिराधिपत्यं वा यत्र । कान्यकुब्जदेशे । तद्देशस्थे पुरभेदे न० । सत्यन्ताद्र्योदययोगात् 'अमार्कपाते श्रवणमि'त्यादिलक्षणात् 'किञ्चिदूने महोदय' इत्युक्ते किञ्चिदूने योगभेदे पु० । नागवल्ल्यां स्त्री० ।

महोदरी स्त्री० महदुदरं यस्याः । शतमूल्याम् वृहदुदरयुक्ते त्रि० ।

महोन्नत पु० कर्म० । तालवृक्षे । अत्यन्तोन्नतियुक्ते त्रि० ।

महोरग पु० कर्म० । वृहत्सर्पभेदे महोरगाकारोऽस्त्यस्य अच् । तगरमूले न० ।

महोल्का स्त्री० कर्म० । वृहदुल्कायाम् ।

महौषध न० कर्म० । शुण्ठ्याम्, लशुने, वाराहीकन्दे, वत्सनाभविषे, पिप्पल्याम्, अतिविषायां, वीर्यवदौषधमात्रे च ।

महौषधि स्त्री० कर्म० । दूर्वायां, लज्जालुक्षुपे 'सहदेवी तथा व्याघ्री बला चातिबला तथा । शङ्खपुष्पी तथा सिंही अष्टमी च सुवर्चला । महौषधाष्टकं प्रोक्त'मित्युक्ते देवादीनां स्नानद्रव्यभेदे । श्वेतकण्टकार्यां ङीप् ।

मा शब्दे अक० माने सक० जु० आ० अनिट् । मिमीते अमित ।

मा माने अदा० प० सक० अनिट् । माति अमासीत् ।

मा माने दि० आ० सक० अनिट् । मायते अमास्त ।

मा अव्य० ङिदनुबन्धात् दैवादिकात् माधातोः क्विप् । वारणे । धातोर्ङित्त्वेन शब्दे ङित्त्वव्यवहारात् न माङ्योगे इति पाणिनिसूत्रम् । ङिदनुबन्धान्यधातुनिष्पन्नस्य न ङित् तेन तद्योगे अडागमः स्यादेव 'मा निषाद । प्रतिष्ठा त्वमगमः' इति रामायणम् । मा-क-टाप् । लक्ष्म्याम्, मातरि च स्त्री० । मा-भावे क्विप् । माने स्त्री० ।

मांस न० मन-स दीर्घश्च । 'मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् । इति मांसस्य मांसत्व'मित्युक्ते प्राणिदेहस्थशोणितपरिपाकजे धातुभेदे । [मांसरोहिण्यां लतायाम्

मांसच्छदा स्त्री० मांसं छादयति छद-णिच्-अच् ह्रस्व' ।

मांसज न० मांसाज्जायते जन-ड । देहस्थे मांसजन्ये मेदसि

मांसदलन पु० मांसं ग्रीहात्मकं मांसं दलयति दल-णिच्-ल्यु । ग्रीष्मघातकवृक्षे ।

मांसद्राविन् पु० मांसं द्रावयति णिच्-णिनि । अम्लवेतसे

मांसपेशि स्त्री० ६त० । गर्भस्थावयवभेदे । वा ङीप् तत्रैव ।

मांसफला स्त्री० मांसमिव कोमलं फलं यस्याः । वार्त्ताक्याम् ।

मांसमासा स्त्री० मस-परिणामे घञ् मांसस्य परिणामो यस्याः ५ब० । माषपर्ण्याम् । [पुरु । सुगन्धिद्रव्यभेदे (चामकषा)

मांसरोहिणी स्त्री० मांसं रोपयति रुह-णिच् णिनि वा न

मांसल त्रि० मांस+बलत्यर्थे लच् । बलवति, स्थूले, पुष्टे च ।

मांसलफला स्त्री० मांसलं पुष्टं फलमस्याः । वार्त्ताक्याम् ।

मांससार पु० ६त० । मेदसि । मांसस्नेहादयोऽप्यत्र ।

मांसहासा स्त्री० मांसेन हसते कर्मणि घञ् । देहस्थचर्मणि

मांसिक त्रि० मांसं पण्यमस्य ठक् । मांसविक्रयोपजीविनि । (कसाइ) । [जटामांस्याम् ।

मांसिनी स्त्री० मांसकदाकारलङ्घतुल्यं वाऽस्त्यस्याः इनि ।

मांसी स्त्री० मांसमस्त्यस्य अच् गौ० ङीप् । जटामांस्याम् ।

माकन्द पु० माति मा-क्विप् मा० परिमितः कन्दोऽस्य । आम्रे । आमलक्यां, पीतचन्दने, (बडमूली) चन्दने, नगरभेदे च स्त्री० गौरा० ङीप् ।

माकरी स्त्री० मकरस्य तत्स्थरविकालस्य इयम् अण् । मकरस्थितरविकाले तदारम्भमाघमासस्य शुक्लसप्तम्यां 'तस्मै रोकश्च शोकश्च माकरी हन्त सप्तमी'ति स्मृतिः ।

माक्ष सूचाया भ्वा० पर० सक० सेट् इदित् । माङ्क्षति अमाङ्क्षीत् ।

माक्षि(क्षी)क न० मक्षिकाभिः सम्भृत्य कृतम् अण् पृ० वा दीर्घः । उपधातुभेदे मधुनि, तत्तुल्यगुणे स्वर्णमाक्षिके रौप्यमाक्षिके च ।

**मालावृत्त** न० मालया कृतं वृत्तम्। आर्यादौ छन्दोभेदे।
**मात्सर्य्य** न० मत्सरस्य भावः ष्यञ्। परगुणद्वेषे 'मात्सर्यमुत्सार्य्य विचार्य्येति साहि०। [ष्मीत्।
**माथ** वधे सक० क्लेशे अक०भ्वा०प०सेट् इदित्। मान्थति अमा
**माथ** पु० मथ-घञ्। पथि, मन्थने च।
**माथुर** त्रि० मथुरायां भवो मथुरायाः आगतो वा अण्। मथुरानगरीभवे, तत आगते च।
**माद्** पु० मद-घञ्। दर्पे, हर्षे च।
**मादक** त्रि० मादयति मद-णिच् ण्वुल्। मत्तताकारके द्रव्ये मादयति कर्त्तरि ण्वुल्। दात्यूहे पु०।
**मादन** न० मादयति मद-णिच्-ल्यु। लवङ्गे। कामदेवे, मदन वृक्षे च पु०। विजयायां, माकन्याञ्च स्त्री० गौ० ङीप्।
**मादृक्ष(श्)** त्रि० ममेव दर्शनमस्य दृश-क्सट क्विप्, वा। मम तुल्यदर्शने मत्सदृशे। [अतिविषायाञ्च।
**माद्री** स्त्री० मद्रे भवा अण्। पाण्डुराजस्य द्वितीयपत्न्याम्
**माधव** पु०माया धवः। नारायणे। मधु+स्वार्थे अण्। वसन्ते 'स माधवेनाभिमतेन सख्ये'ति कुमारः। मधुने पुष्परसाय मद्याय वा हितः अण्। वैशाखे तस्य बहुपुष्पवत्त्वाम् तद्धितत्वम्। मधूकवृक्षे च तत्पुष्पेण हि मद्यसम्भवः। मधु बाहुल्येनास्त्यस्याः अण्। वासन्तीलतायाम् स्त्री० ङीप्।
**माधवीलता** स्त्री०कर्म०। स्वनामख्यातायां लतायाम्।
**माधवेष्टा** स्त्री० माधवे वैशाखे माधवस्य कृष्णस्य वा इष्टा। वाराहीकन्दे।
**माधवोचित** न० माधव उचितो यस्य। कक्कोलके।
**माधवोद्भव** पु० माधवे वैशाखे उद्भवति फलवत्त्वेन उद्+भू-अच्। (पियाल) राजादन्याम्।
**माधुर** न० मधु-राति भ्रमरेभ्यो ददाति रा क-स्वार्थे अण्। मल्लिकापुष्पे।
**माधुरी** स्त्री० मधुरस्य भावः ष्यञ् माधुर्य्य षित्त्वात् स्त्रीत्वपक्षे ङीप् यलोपः। 'माधुर्य्यं, मधुरत्वे, सदाखलमाधुरी भारे'त्युद्भटः। मधुर+स्वार्थे अण्। मदिरायाम्।
**माध्यन्दिन** न० मध्यन्दिनमेव-अण्। मध्यमदिने तदधिकृत्य कृतो ग्रन्थ' अण् शुक्लयजुर्वेदीयशाखाभेदे।
**माध्वीक** स्त्री० मधुना मधूकपुष्पेण निर्वृत्तम् ईकक्। मधूकपुष्पजाते मद्ये। मधु एव स्वार्थे ईकक् द्राक्षाफले 'माध्वी माध्वीक! चिन्ता विजहतीति जयदेवः। [क्लिबे
**माध्वीकफल** पु० माध्वीकमिव मधुरं फलमस्य। मधुनारि
**माध्वीमधुरा** पु०माध्वीकमिव मधुरा पु०कलोपः। मधुरख-
खर्जूरिकायाम्। [अमीमांसिष्ट
**मान** विचारे भ्वा० आ० सक०सेट् स्वार्थे सन्। मीमांस
**मान** अर्च्चे वा चु०उ०पक्षे०भ्वा०पर०सक० सेट्। मानयति मानति अमीमनत्-त अमानीत्।
**मान** न० मा-ल्युट्। परिमाणे कृष्णलामस्त्वादौ व्यपिच्छेदे, प्रमाणे गानाङ्गे कालक्रियायां तालविरामोपचिते कालव्यापारे च। मन-घञ्। आत्मनि उत्कर्षाभिमानात्मिकायां चित्तसमुन्नतौ। 'स्त्राभीष्टश्लेषयीत्यादिविरोधं मान उच्यते' इत्युक्ते अनुरक्तदम्पत्योः अवस्थाभेदे 'कुरु मयि मानमनिदानमि'ति जयदेवः सम्माने च।
**मानग्रन्थि** पु० मानस्य ग्रन्थिर्बन्धनं यस्मात्। अपराधे।
**मानरन्ध्रा** स्त्री० मानाय कालप्रमाणज्ञानाय रन्ध्रं यस्याः। ताम्रनिर्मिते सच्छिद्रे कालज्ञानहेतौ घटीयन्त्रभेदे।
**मानव** पु० मनोरपत्यम् अण्। मनुष्ये स्त्रियां जातौ ङीप्।
**मानस** न० मन एव अण्। मनसि, कैलासान्तिकस्थे ब्रह्मणा कृते सरोवरभेदे च।
**मानसव्रत** न०मनसा कृतं मानसं कर्म०। 'अहिंसासत्यमस्तेयं ब्रह्मचर्य्यमकल्कता। एतानि मानसानिस्तु व्रतानीत्युक्तेषु अहिंसादिषु।
**मानसौकस्** पु० मानसमोको यस्य। हंसे।
**मानिनी** स्त्री० मान-इनि। फलीवृक्षे, मानवत्यां स्त्रियां च
**मानुष** पु०मनोरयम् अण् षुक् च। मानवे, ततोजातौ स्त्रियां ङीप् मानुषी।
**मानुष्य** न० मानुषस्य भाव' यत्। मनुष्यत्वे।
**मान्द्य** न० मन्दस्य भावः ष्यञ्। रोगे, मन्दतायाञ्च।
**मान्धातृ** पु०मामिन्द्रं धयति धे-तृच्। 'मामयं धास्यतीत्यस्मात् मान्धाताधी प्रकीर्त्तित' इति निरुक्तेः युवनाश्वराजपुत्रे नृपभेदे।
**मान्य** पु० मान-अर्च्चायां कर्म्मणि ण्यत्। पूज्ये।
**मामक** त्रि०मम-इदम् अस्मद्+कन् ममादेशः। मत्सम्बन्धिनि खञ्। मामकीनोप्यत्र।
**माया** स्त्री० मा-य नैरुक्तम्। छद्मनि, कापट्ये, इन्द्रजालादौ, मिथ्याबुद्धिहेतवज्ञानभेदे, कृपायां, दम्भे, लक्ष्म्यां बुद्धमातरि, ईश्वरस्योपाधौ, अघटनघटनसाधिकायां शक्तौ। [(बाजीकर)।
**मायाकृत्** पु० मायामिन्द्रजालं करोति कृ-क्विप्। मायाकरे
**मायादेवीसुत** पु० ६त०। बुद्धे।
**मायावत्** त्रि०माया+अस्त्यर्थे मतुप् मस्य वः। मायाविशिष्टे कंसराजे पु०। कामपत्न्यां स्त्री० ङीप्। [ङीप्

**मालसी** स्त्री० मालं मलनं जटादिना दुष्टत्वं स्यति सो-क गौ० ङीप्। केशपुटिकारके हवे, रागिणीभेदे च।

**मालाकण्ट** पु० मालाकारः कण्टः कण्टको यस्य। अपामार्गे।

**मालाकन्द** पु० मालाकारः कन्दो यस्य। मूलभेदे।

**मालाकार** पु० मालां करोति कृ-अण्। (माली) वर्णसङ्कर भेदे। माल्यकारके त्रि०।

**मालाग्रन्थि** पु० मालया ग्रन्थिरस्य। मालादूर्वायाम्।

**मालातृण** न० मालाकारं तृणम्। भूतृणे। स्वार्थे कन्। तत्रैव

**मालादीपक** न० अलङ्कारोक्ते अर्थालङ्कारभेदे।

**मालादूर्वा** स्त्री० मालाकारा दूर्वा। (गाठिदूर्वा) दूर्वाभेदे

**मालारिष्टा** स्त्री० मालाभूतमरिष्टं यस्याः ५ब०। माच्याम्

**मालाली** स्त्री० मालामलति भूषयति अल-अण् ङीप्। स्पृक्कायां (पिडिङ्गशाके) स्वार्थे कन्। तत्रैव।

**मालिक** पु० माला तन्निर्माणं शिल्पमस्य ठन्। मालाकारे जातिभेदे, पक्षिभेदे, रञ्जके च। माल्यकारके त्रि०।

**मालिका** स्त्री० मालैव कन् अत इत्त्वम्। नवमल्लिकायां, ग्रीवालङ्करणे, नदीभेदे सुरायां अतस्याम्, पुष्पमाल्ये, च। 'पाशाक्षमालिकाम्भोजेति लक्ष्मीध्यानम्।

**मालिन्** पु० माला शिल्पमस्त्यस्य इनि। मालाकारे,माल्यवति त्रि० मालाकारपत्न्यां, पञ्चदशाक्षरपादके, छन्दोभेदे, गौर्याम् चम्पानगर्यां, मन्दाकिन्यां, कण्वाश्रमान्तिकस्थे नदीभेदे, अग्निशिखावृक्षे, दुरालभायां च स्त्री० ङीप्।

**मालु** स्त्री० मल-उण्। पत्रलतायां (पातलता) नार्याञ्च।

**मालुधान** पु० मालुरिव पत्रलतेव धीयतेऽसौ धा-कर्मणि ल्युट्। (मालुयासाप) सर्पभेदे। लताभेदे स्त्री०ङीप्।

**मालूर** पु०मा लक्ष्मीं परेषां लुनाति लू-रक्। विल्वे, कपित्थे च

**मालेय** त्रि० मालायां साधु० ढक्। मालारचनानिपुणे।

**माल्य** न० मालायै हितं यत्। पुष्पे। स्वार्थे ष्यञ्। पुष्पमालायाम्, मूर्द्धिस्थायां पुष्पमालायाञ्च।

**माल्यपुष्प** पु० मालायै हितं पुष्पमस्य। शणवृक्षे शणपुष्प्याम् स्त्री० ङीप्। स्वार्थे कन्। तत्रैव।

**माल्यवत्** त्रि० माल्यमस्त्यस्य मतुप् मस्य वः। माल्ययुक्ते केतुमालेलावृतवर्षयोः सीमाभूते पर्व्वतभेदे, सुकेशराक्षस पुत्रे रावणमन्त्रिणि राक्षसभेदे च। [कारके

**माशब्दिक** त्रि० मेति शब्दं निषेधाय करोति ठक्। निषेध-

**माष** पु० मष-संघायां घञ्। (माषकलाइ) व्रीहिभेदे 'दशार्द्ध-गुञ्जं प्रवदन्ति माषमि'त्युक्ते गुञ्जाभिर्दशभिर्माष इत्युक्ते च परिमाणभेदे।

**माषकलाय** पु० माषाख्यः कलायः। स्वनामख्याते व्रीहौ

**माषपर्णी** स्त्री० माषस्येव पर्णान्यस्याः ङीप्। वनमाषे।

**माषभक्तबलि** पु० माषमिश्रितं भक्तमेवबलिः पूजोपहार द्रव्यम्। माषमिश्रिते भक्तरूपे पूजोपहारे।

**माषवर्द्धक** पु०माषं माषपरिमितं स्वर्णं वर्द्धयति आच्छिनत्ति अपहरति वर्द्ध छेदने ण्वुल्। स्वर्णकारे।

**माषीण** न० माषाणां भवनं क्षेत्रं खञ्। माषव्रीहिभवन योग्ये क्षेत्रे। यत्। माष्यमप्यत्र।

**मास्** पु० माति परिच्छिनत्ति स्वगत्या कालम् मा-असुन्। चन्द्रे त्रिंशदिनात्मककालरूपे मासे च।

**मास** पु०मा एव अण्। चन्द्रे त्रिंशद्दिनात्मके काले च। स च सौरसावनचान्द्रनक्षत्रभेदाच्चतुर्विधः। मासश्चन्द्रयस्यायम् अण् चान्द्रे मासे तु मुख्यः। मस्यते परिमीयते मस-परिमाणे कर-णे घञ्, पञ्चगुञ्जात्मके पञ्चार्थे माष स्वार्थे कन् तत्रैव।

**मासन** न० मासं नयति नी-ड। सोमराजीलतायाम्।

**मासप्रमित** पु० मासं प्रमन्तुमारब्धः। प्र+मा-क्त। काला० इति स०। प्रतिपच्चन्द्रे। [भक्तमस्य

**मासर** पु०मस-परिणामे घञ् मासं परिणामं राति रा-क।

**मासान्त** पु० मासस्य सौरस्य चान्द्रस्य वाऽन्त० अवसानम्। मासावसाने संक्रान्त्यादौ।

**मासिक** त्रि० मासे भवः कालाट्ठञ्। मासभवे, प्रेतोद्देशेन स्वतसजातीयतिथौ, प्रतिमासमृअमावस्यायां च कर्त्तव्ये श्राद्धे न०। मासिकानि स्वकीये त्वि'ति स्मृतिः। 'पितॄणां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधा इति स्मृतिः।

**मास्** अव्य० मस-खिच् मुम्। निवारणे।

**माह** माने भ्वा०उभ०सक०सेट्। माहति ते अमाहीत् अमा-हिष्ट। चङि न ह्रस्व। [महाकुलीनोप्यत्र

**माहाकुल** त्रि०महाकुले भवः अण्। महाकुलोद्भवे। खञ्।

**माहात्म्य** न० महात्मनो भाव० ष्यञ्। महिमनि महत्त्वे।

**माहिष** न० महिष्या इदम् अण्। महिषीदुग्धादौ महिषस्ये-दम् अण्। तच्छृङ्गादौ त्रि०। [सङ्करजातिभेदे।

**माहिष्य** पु० महिष्या भव० ष्यञ्। क्षत्रेण वैश्यायामुत्पन्ने

**माहेन्द्र** पु० महेन्द्रस्यायम् अण्। ज्योतिषोक्ते महेन्द्रादिसम्ब न्धिनि दण्डभेदे। पूर्व्वस्यां दिशि, इन्द्रपत्न्या, गवि च स्त्री० ङीप्। [स्त्रीगव्यां स्त्री० ङीप्

**माहेय** पु०मह्या अपत्यम् मही+ढक्। मङ्गले नरकासुरे च

**माहेश्वर** त्रि० महेश्वरादधिगतम् ततः आगत अण्। महे-श्वरतः प्राप्ते। यवतिक्तायां स्त्री० ङीप्। तस्येदम् अण्।

'माहेश्वरी वृषारूढा, इत्युक्ते मातृभेदे दुर्गामात्रे स्त्री०ङीप्
मि क्षेपे स्वा०उभ०सक०अनिट् । मिनोति मिनुते अमासीत् अमास्त । क्त मत् च मितिषम् ।
मिच्छ बधे भ्वा पर०सक सेट् । मिच्छति अमिच्छीत् ।
मित त्रि०मि मा-वा-क्त । परिमिते, मन्दिते, अवच्छिन्ने, क्षिप्ते च
मितङ्गम पु० मित परिमित मङ्-गच्छति गम-खच् मुम् च । गजे । परिमितगामिनि त्रि० ।
मितद्रु पु० मित द्राति द्रवति वा कु'मि० । समुद्रे । [त्रि०
मितम्पच पु मित पचति पच-खच् मुम् च । कृपणे । परिमितपाचके
मिति स्त्री० मा-मि-वा क्तिन् । माने, माने, अवच्छेदे, विक्षेपे च
मित्त्र न मेद्यति स्निह्यति मिद्-क्त । स्नेहाश्रिते सुहृदि, राज्ञा विषयानन्तरितत्वपादितवर्त्तिनृ राजनि तयोर्द्वयोरपि मध्यस्थत्वमस्य राज्यहरणच्छैककार्यकरत्वात् मित्रत्वम् । मि क्त । सूर्य्ये ।
मित्त्रयु पु० मित्त्र याति या कु । मित्त्रवत्सले ।
मिथ बधे मेधायाञ्च सक०भ्वा०उभ०सेट् । मेथति-ते अमेथीत् अमेथिष्ट । ऋदित् न ह्रस्व ।
मिथस् अव्य० मिथ असुन् । रहसि, अन्योन्यस्मिन्नित्यर्थे ।
मिथिला स्त्री० मिथ-किलच् । स्वनामख्यातायां राजधान्याम्
मिथुन न मिथ उनन् किच्च । स्त्रीपुंसयो मेषादितस्तृतीये राशौ च
मिथ्या अव्य० मिथ क्यप् । अयथार्थे असत्ये ।
मिथ्यादृष्टि स्त्री० मिथ्या सफलस्यापि अफलत्वेन दृष्टिः । नास्तिकतायां सफलस्यापि वैदिककर्म्मणो मिथ्यात्वज्ञाने ।
मिथ्यानिरसन न० मिथ्या निरस्यतेऽनेन निर्+अस-क्षेपे करणे ल्युट् । शपथे ।
मिथ्याभियोग पु० मिथ्याभूतेनार्थेनाभियोग राज्ञोऽन्तिके वेदनम् अभि युज घञ् । यत्र मे धारयतीत्यसत्यस्य राज्ञोऽन्तिके अभियोगे ।
मिथ्याभिशंसन न० मिथ्याभूतेनार्थेनाभिशंसनम् अपवाद । 'त्वया स्वर्णमपहृतमि'त्यपवादकथने ।
मिथ्याभिशाप पु० मिथ्याभूतेनार्थेनाभिशापोऽपवाद । मिथ्यापवादे । [असद्वृत्ति तद्वचन ज्ञाने ।
मिथ्यामति स्त्री० मिथ्याभूतस्य मति मन क्तिन् । भ्रान्तौ
मिथ्योत्तर न कर्म० व्यवहारे 'मिथ्यैतत् नाभिजानामि तदा तत्र न संनिधिः । अजातश्चास्मि तत्काले इति मिथ्या चतुर्विधं'मित्युक्तप्रकारे, उत्तरभेदे (मिथ्योत्तरे पूर्व्ववादे") इति कात्या । [अमेदिष्ट । ऋदित् न ह्रस्व ।
मिद बधे मेधायाञ्च भ्वा०उभ०सक०सेट् । मेदति ते अमेदीत्

मिद् स्नेहे भ्वा०आ०द्युति प०अक सेट् । मेदते अमिदत् भावादौ क्त मिन्न मेदितम् ।
मिद् स्नेहे चुरा०उभ०पक्षे भ्वा०प अक०सेट् इदित् । मिन्दयति अमिन्दत-त । पक्षे मिन्दति अमिन्दीत् । [क्त मेदित मिन्नम्
मिद् स्नेहे दि०पर सक०सेट् । मेद्यति ते अमिदत् अमेदीत् ।
मिद् स्नेहे चु० उभ०सक०सेट् । मेदयति ते अमीमिदत्-त ।
मिल श्लेषे तु० उभ०सक०सेट् । मिलति अमेलीत् अमेलिष्ट कुटादित्वमिलित्वे तेन अमिलीत् ल्युटि मिलनम् ।
मिव सेवे भ्वा० पर०सक०सेट् इदित् । मिन्वति अमिन्वीत् ।
मिश ध्वनौ कोपे च तु पर अक०सेट् । मिशति अमेशीत् ।
मिशि(शी) स्त्री मिश इन् वा ङीप् । मधुरिकायां, (मौरी) शतपुष्पायां, (शुलफा) जटामांस्याञ्च । अन्य पु० मिशि मिशी मिषि-मिषी इत्यादयः । उक्तार्थेषु । [अमिमिश्र(श्ल)त त
मिश्र(श्ल) योजने अद० चु०उभ०सक०सेट् । मिश्र(श्ल)यति त
मिश्र त्रि० मिश्र-अच । सयुते उत्तरपदस्थ श्रेष्ठार्थे । यथा आर्य्यमिश्रा । गजजातिभेदे, ज्योतिषोक्ते कृत्तिकाविशाखा नक्षत्रगणे च पु । [इन्द्राख्याने ।
मिश्रकावण न० मिश्रकनामक वन पूर्व्वदीर्घो णत्वञ्च ।
मिश्रपुष्पा स्त्री० मिश्र पुष्प यस्याः अजा०टाप् । मेथिकायाम
मिश्रवर्ण न० मिश्रवितो वर्णो यस्य । कृष्णागुरुणि । मिश्रित-वर्णमात्रे त्रि । [वार्त्ताक्याम्
मिश्रवर्णफला स्त्री० मिश्रवर्ण चित्ररूपान्वित फल यस्याः ।
मिश्रव्यवहार पु० लीलावत्युक्ते गणनभेदे ।
मिश्रिता स्त्री० मिश्रिता चैव विज्ञेया मिश्रितर्क्षेषु शक्रम इत्युक्ते कृत्तिकाविशाखानक्षत्रकाले रविसंक्रमणे ।
मिश्रेया स्त्री० मिश्र-अच् मिश्रा ईयते ई-गतौ यत् यच कर्म्म० यक० । मधुरिकायां (मौरी) शतपुष्पायाञ्च (सुल्फा)
मिष सेचने भ्वा पर०सेट् । मेषति अमेषीत् । क्त्वा वेट् ।
मिष पराभिभवेच्छायाम् तु०पर सक सेट् । मिषति अमेषीत् ।
मिष न० मिष-क । छले स्पर्द्धने पु० ।
मिषिका स्त्री मिषी कन् । जटामांस्याम् ।
मिष्ट त्रि मिष क्त । सिक्ते, मधुरे च । मधुररसे पु० तद्वति त्रि
मिह सेचने भ्वा पर०सक० अनिट् । मेहति अमिक्षत् ।
मिहिका स्त्री० मिह-क्वुन् अत इत्वम । नीहारे ।
मिहिर पु० मिह किरच् । सूर्य्ये अर्कवृक्षे, वृद्धे मेघे वायौ, चन्द्रे, विक्रमादित्यसभास्थे पण्डितभेदे च ।
मी बधे दि०आ सक अनिट् । मीयते अमेष्ट ।
मी बधे क्र्या उ सक०सेट् । मीनाति मीनीते अमासीत्

अमास्त। क्त मीनः। [ति मयति अमीमत्-त अमैमीत्।
**मी** गत्यां मत्याञ्च वा चु०उ०पक्षे भ्वा०पर०सक०सेट्। माययति-
**मीढ** त्रि० मिह-क्त। मूत्रिते।
**मीढुष्टम** पु० मीढ्वस्+तम नि०। शिवे।
**मीढवस** पु० मिह-क्वसु नि०। शिवे। [वदतारभेदे च।
**मीन** पु० मी-नक्। मत्स्ये, मेषादितो द्वादशे राशौ भग-
**मीनकेतन** पु० मीनः केतनो यस्य। कन्दर्पे। मीनध्वजादयोऽप्यत्र
**मीननेत्रा** स्त्री० मीनस्य नेत्रमिव पत्न्यग्रस्याः। गण्डदूर्व्वायां मीनाक्षीत्यादयोऽप्यत्र। [गौ०ङीप्। शर्करायाम्।
**मीनाण्डा** स्त्री० मीनस्याण्डस्तदाकारा रेणुकाऽस्त्यस्य अच्
**मीम** शब्दे अक० गतौ सक० भ्वा० पर० सेट्। मीमति अमीमीत्। चङि न ह्रस्वः।
**मीमांसक** पु० मीमांसां वेत्त्यधीते वा वुन्। मीमांसाशास्त्रज्ञे, तदध्येतरि च। मान-स्वार्थे सन् ण्वुल्। सिद्धान्तकारके
**मीमांसा** स्त्री० मान-स्वार्थे सन् अ। विचारपूर्व्वकतत्त्वनिर्णये तत्प्रतिपादकग्रन्थभेदे च स च ग्रन्थः कर्म्मब्रह्मविषय भेदेन द्विविधस्तत्र कर्म्मकाण्डविषयसंशयनिवारण प्रतिपादको ग्रन्थो जैमिनिप्रणीत' सच पूर्व्वमीमांसात्वेन प्रसिद्धः ब्रह्मविषयसंशयनिर्णायकश्चरम· स च वेदान्तत्वेन प्रसिद्धः
**मील** निमेषे भ्वा०पर०अक०सेट्। मीलति अमीलीत्। चङि वा ह्रस्वः।
**मीलन** न० मील-ल्युट्। मुद्रणे, सङ्कोचने च।
**मीलित** त्रि०मील-क्त। अप्रफुल्ले, सङ्कुचिते च 'मीलितं यद् भिरामताधिके, इति काव्यप्रकाशः।
**मीव** स्थूलीभवने भ्वा०पर०अक०सेट्। मीवति अमीवीत्।
**मु** पु० मोचयति जीवान् णयर्थे मुच डु। महेशे। [पलाण्डौ।
**मुकन्दक** पु० मुदः मुदे कन्दो यस्य कप् पृ० मुदो दलोपः।
**मुकु** पु० मुच-कु पृ० चस्य कः। मोक्षे, उत्सर्गे च।
**मुकुट** पु० मकि-उट पृ०। शिरोभूषणे।
**मुकुन्द** पु० मुकुं ददाति दा-क पृ० मुम्। 'मुकुमव्ययमानञ्च निर्व्वाणमोक्षवाचकम् तद्ददाति च यो देव· मुकुन्दस्तेन कीर्तित' इति निरुक्ते विष्णौ।
**मुकुम्** अव्य० मकि उमुच् पृ०। निर्व्वाणमोक्षे।
**मुकुर** पु० मकि उरच् पृ०। दर्पणे, वकुलवृक्षे, कुलालदण्डे, मल्लिकावृक्षे, कोलीवृक्षे, चोरके च।
**मुकुल** पु०न० मकि उलच् पृ०। ईषद्विकाशितकलिकायाम् देहे, आत्मनि च। [वनमुद्गे (मुगानी)
**मुकुष्टक** पु० मकुर्गतोत्सर्गस्तं स्तकति स्तक-अच् पृ० पतम्।
**मुकूलक** पु० मकि-ऊलच् कन्। दन्तिवृक्षे।
**मुक्त** त्रि० मुच-क्त। त्यक्ते, प्राप्तमोक्षे, आनन्दिते च।
**मुक्तरसा** स्त्री० मुक्तो रसो यस्याः। रास्नायाम्।
**मुक्तसङ्ग** त्रि० मुक्त· सङ्गोविषयासक्तिर्येन। त्यक्तसर्व्वविषयासङ्गे। परिव्राजके पु०। [हस्तो येन। बहुदानशीले।
**मुक्तहस्त** त्रि० मुक्तः दानाय प्रसारितः न बद्ध इति यावत्
**मुक्ता** स्त्री० मुच-क्त। रास्नायाम् (मति) शुक्तिजे रत्नभेदे च।
**मुक्तापुष्प** पु० मुक्तेव शुभ्रं पुष्पमस्य। कुन्दवृक्षे।
**मुक्ताप्रसू** स्त्री० मुक्तां प्रसूते प्र+सू-क्विप् ह्रत०। शुक्तौ।
**मुक्ताप्रालम्ब** पु० मुक्तया मुक्ताविशिष्टतया प्रालम्बते अच्। मुक्ताहारे।
**मुक्ताफल** न० मुक्ता फलमिव। मौक्तिके, लवनीफले, (नोयाड) कर्पूरे, बोपदेवकृते भक्तिप्रधाने ग्रन्थभेदे च 'चतुरेण चतुर्वर्ग चिन्तामणिविधित्सया हेमाद्रिर्बोपदेवेन मुक्ताफलमचीकरदि'ति तद्ग्रन्थान्तश्लोकः।
**मुक्तालता** स्त्री० मुक्तया लतेव। मुक्ताहारे।
**मुक्तावली** स्त्री० मुक्तया आवली हारभेदः। मुक्ताहारे।६त०। मुक्ताश्रेणौ भाषा परिच्छेदग्रन्थटीकायां सिद्धान्तमुक्तावल्यां च।
**मुक्तास्फोट** पु०स्त्री० स्फुट्यते विदीर्य्यते स्फोटः मुक्तायै स्फोटः। शुक्तौ।
**मुक्ति** स्त्री० मुच-क्तिन्। मोचने संसारबन्धनराहित्ये मतभेदेन आत्यन्तिकदुःखनिवृत्तौ, ब्रह्मस्वरूपावाप्तौ च देहेन्द्रिया ध्यासात्मनो बन्धशून्यत्वे च।
**मुक्तिमण्डप** पु० मुक्तिप्रदो मण्डप शाक०। काशीस्थे जगन्नाथक्षेत्रस्थे च मण्डपभेदे तीर्थे। [यावत्। सिह्लके।
**मुक्तिमुक्त** पु० मुक्तिर्मोचनं तेन मुक्तोरहित सश्लिष्ट इति
**मुख** न०खन-अच् डित् धातोर्मुट् च। 'प्रजासृजा यत· खातं तस्मादाहुर्मुखं बुधा' इत्युक्ते देहावयवभेदे। 'ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च। गलो गलादि सकलं सप्ताङ्गं मुखमुच्यते' इत्युक्ते गलादिसप्तात्मकावयववति वदने। गृहस्य निःसरणवर्त्मनि, कुट्टिमण्डपादेः प्रवेशनिर्गमे, आरम्भे, उपाये, नाटकादौ सन्धिभेदे, नाटकादिशब्दभेदे, आद्ये, प्रधाने, शब्दे, नाटके, वेदे, च। नकुचवृक्षे पु० (डेओ)।
**मुखगन्धक** पु० मुखस्य गन्धो यस्य सेवनात् कप्। पलाण्डौ
**मुखचपला** स्त्री० आर्य्याबान्तरे छन्दोभेदे।
**मुखज** पु० ब्रह्मणो मुखाज्जायते जन-ड। विप्रे, 'ब्राह्मणोऽस्य मुखमासीदि'ति श्रुत·। [ल्यु। पलाण्डौ।
**मुखदूषण** पु० मुखं दूषयति सेवनात् दुर्गन्धेन दूष-णिच्

**मुदिर** पु० मुद-किरच् । मेघे, भेके च । कामुके त्रि० ।

**मुद्ग** पु० मुद्-गक् नेट् । (मुग) कलायभेदे, पक्षिभेदे, जलकाके च

**मुद्गपर्णी** स्त्री० मुद्गस्येव पर्णमस्याः । (मुगानी) वनमुद्गे ।

**मुद्गर** न० मुदं गिरति गृ-अच् । मल्लिकाभेदे, लोष्टभेदने, (मुगुर) पुष्पवृक्षे, कर्म्मारवृक्षे (कामराङ्गा) च पु०। स्वार्थे कन् । तत्रैव ।

**मुद्गल** न० मुदं गिलति गॄ-अच् रस्य लः । वनतृणे, रोहिष तृणे च । गोप्रियतृणे प्रवरकारके मुनिभेदे, नृपभेदे च पु० ।

**मुद्गष्ट** पु० मुद्गं स्वकति प्रतिवध्नाति स्वक-ड ष्ट० पत्वम् । वनमुद्गे । अच् । मुद्गष्टकोऽप्यत्र ।

**मुद्रा** स्त्री० मुद-रक् । प्रत्ययकारिण्याम्, (मोहर) अङ्गुलिस्थे - मुद्राङ्कनयुक्ताङ्गुलीयके, स्वर्णरौप्यादितङ्कायाम्, अप्रकाशे, 'मुद्रालिपिः शिल्पलिपिर्लिपिर्लेखनसम्भवा । गुण्डिका घुणसम्भूता लिपयः पञ्चधा मताः' इत्युक्तलिपिमध्ये लिपिभेदे, 'तन्त्रप्रसिद्धे वीराचारसेव्ये पृथुकास्तण्डुला भ्रष्टा गोधूमचणकादयः । तस्य नाम भवेन्मुद्रे'त्युक्ते पञ्चमकारादिद्रव्यभेदे, देवविशेषाराधनायाङ्गुल्यादिसन्निवेशविशेषे 'मुद्राष्टकगुणमि'ति तन्त्रम् सङ्कोचे च ।

**मुद्रालिपि** स्त्री० मुद्रया लिपिः । पञ्चधाविभक्तलिपिमध्ये लिपिभेदे (छापार अक्षर)

**मुद्रिका** स्त्री० मुद्रेव चुद्रा वा मुद्रा कन् । स्वर्णरौप्यादि निर्म्मिते अङ्गुलिस्थे अङ्कनसाधनयोग्ये पदार्थे ।

**मुद्रित** त्रि० मुद्रा जाताऽस्य इतच् । अप्रकाशिते, अङ्किते च ।

**मुधा** अव्य० मुह् क्ता ष्ट० हस्य धः । मिथ्याशब्दार्थे ।

**मुनि** पु० मन इन् ष्ट० उत्त्वम् । दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते, इत्युक्तलक्षणे स्थिरचित्ते वीतरागादौ जने । ते च मन्वत्रि विष्णुहारीतादयः । सप्तसंख्यायाञ्च ।

**मुनिखर्ज्जूरी** स्त्री०६त० । खर्ज्जूरीभेदे । [सप्तच्छदे(छातिम)

**मुनिच्छद** पु०मुनिसंख्याताः सप्तसंख्याः छदाः प्रतिपर्णं यस्य।

**मुनितरु** पु० मुनिरगस्त्यनामकस्तरुः । वकवृक्षे ।

**मुनिद्रुम** पु०मुनीनां प्रियो मुनिनामको वा द्रुमः । श्योनाकवृक्षे वकवृक्षे च । [खञ्जने च । ६त० । ऋषिसुते ।

**मुनिपुत्रक** पु० मुनेः पुत्रः संज्ञायां कन् । दमनकवृक्षे,

**मुनिपुष्प** न० मुनिद्रुमस्य पुष्पं भीमो भीमसेनवदुत्तरपद लोपः । वकपुष्पे । [भोजनाभावे च ।

**मुनिभेषज** न०मुनीनां भेषजमिव । हरीतक्यां, अगस्त्ये, मुनौ,

**मुनीन्द्र** पु० मुनिः इन्द्र इव । बुद्धे । ७त०। ऋषिश्रेष्ठे ।

**मुन्थ** गत्यां भ्वा०पर० सक०सेट् क्त्वा वेट् । मुन्थति अमुन्थीत् ।

**मुन्था** स्त्री० ताजकप्रसिद्धे जन्मवर्षावधि एकैकवर्षे लग्नत एकैकराश्यन्तरे लग्नस्य गतिभेदे । मुथहाप्यत्र ।

**मुन्यन्न** न० मुनियोग्यमन्नम् । नीवारकन्दादौ ।

**मुमुक्षु** त्रि०मोक्तुमिच्छुः मुच-सन्-उ । मोक्षेच्छावति । संसार बन्धनाभावेच्छावति । यतौ पु० ।

**मुमूचान** पु० मुच-कान ष्ट० दीर्घः । मेघे, मुक्तवति त्रि० । 'द्रुपदादिव मुमूचान इति वेदमन्त्रः ।

**मुमूर्षु** त्रि० मर्तुमिच्छुः मृ-सन्-उ । आसन्नमरणे ।

**मुर** वेष्टने तु०पर०सक०सेट् । मुरति अमोरीत् ।

**मुर** पु०मुर-क । दैत्यभेदे,'पार्थनाथ द्विषन् मुर'मिति माघः

**मुर** पु०मुर-क । वेष्टने । स्वनामख्याते गन्धद्रव्ये स्त्री०टाप् ।

**मुरज** पु० मुरात् वेष्टनात् जायते जन-ड । मृदङ्गे वाद्यभेदे

**मुरजफल** पु०मुरज इव फलं यस्य । पनसवृक्षे । मृदङ्गफलादयोऽप्यत्र ।

**मुररिपु** पु० ६त० । विष्णौ । मुरारिमुरमथनादयोऽप्यत्र।

**मुरला** स्त्री० मुरं लाति ला-क। नर्म्मदायाम्। 'मुरलामारुतोद्धूते'ति रघुः। वंशीनाम्नि वाद्ये गौरा०ङीष् । [योऽप्यत्र

**मुरलीधर** मुरली धरति धृ-अच्। श्रीकृष्णे, मुरलीवादनादमु

**मुर्च्छ** मोहे वृद्धौ च भ्वा०पर०सक०सेट्। मूर्च्छति अमूर्च्छीत् । भावे क्त । मूर्तम् मूर्च्छितम् ।

**मुर्मुर** पु० मुर-क । ष्ट०द्वित्वम्।तुषाग्नौ, कन्दर्पे, सूर्य्याश्वे च

**मुर्व** बन्धे भ्वा०पर०सक०सेट्। मूर्वति अमूर्वीत् निष्ठायामनिट्

**मुल** रोपणे चु०उभ०सक०सेट् । मोलयति ते अमूमुलत् त

**मुशटी** स्त्री० मुष-अटच् गौ०ङीष् ष्ट० । सितकङ्गौ ।

**मुश(स)ली** स्त्री०मुष मुस वा कलक् ष्ट० षस्य श० गौरा०ङीष् तालमूल्याम् वल्लाञ्च स्वार्थे कन् मल्लरान् ।

**मुष** वधे भ्वा०पर०सक०सेट् । मोषति अमोषीत् ।

**मुष** छेदने दिवा०पर०सक०सेट्। मुष्यति अमुषत्-अमोषीत् । पुषादिरयमित्यन्ये ।

**मुष** लुण्ठने क्र्या०पर०द्विक०सेट् । मुष्णाति अमोषीत् ।

**मुष(स)(श)ल** पु०मुष कलन् । ष्ट०षस्य वा सः (श)वा अयोग्रे स्वनामख्याते धान्यादिकण्डनसाधने पदार्थे ।

**मुषा** स्त्री० मुष-क-टाप् । धातुद्रावणे पात्रभेदे (मुची)

**मुषित** त्रि० मुष-क्त । अपहृतद्रव्ये जने ।

**मुष्क** पु० मुष-टाप्। पुरुषचिह्नभेदे अण्डकोषे, (घण्टापारुल) वृक्षे' तस्करे, मांसले, च स्वार्थे कन् तत्रैव ।

**मुष्कशून्य** पु०३त०। वृषणरहितेराज्ञामन्तःपुररक्षके (खोजा)

(नाटो) टाप् । मृदाप्यत्र ।

**मृदङ्ग** पु० मृद-अङ्गच् नित्त्व । वाद्यभेदे ।

**मृदङ्गफलिनी** स्त्री० मृदङ्गाकारं फलमस्त्यस्य इनि । घोषा तक्याम् । तत्फलं साम्यादस्यस्य अच् । मृदङ्गाप्यत्र ।

**मृदु** त्रि० मृद-कु । कोमले । स्त्रियां वा ङीप् मृद्वी मृदु । चित्तानुराधामृगरेवतीनक्षत्रेषु च । [भूर्ज्जपत्रवृक्षे ।

**मृदुचर्म्मिन्** पु०मृदु कोमलं चर्म्म त्वगस्त्यस्य ब्रीह्या० इनि ।

**मृदुच्छद** पु० छाद्यतेऽनेन छद- तक् इव० । भूर्जवृक्षे । पर्व्वतजपीलुवृक्षे, कुन्दुरुवृक्षे शीवालवृक्षे च ।

**मृदुताल** स्त्री० कर्म० । शीतालवृक्षे (तेंडत) ।

**मृदुत्वच्(च)** पु० मृदुः त्वक् त्वचा वा यस्य । भूर्जत्वचवृक्षे ।

**मृदुपत्त्र** पु०मृदूनि पत्त्राण्यस्य । नले । कर्म०।कोमलपर्णे न० इव० । तद्वति त्रि० । चिल्लीशाके स्त्री० गौरा० ङीष् ।

**मृदुपर्व्वक** पु० मृदूनि पर्व्वाण्यस्य । वेते । मृदुग्रन्थियुक्ते त्रि०

**मृदुपुष्प** पु० मृदूनि पुष्पाण्यस्य । शिरीषवृक्षे । इव० मृदुकुसुमवति त्रि० । कर्म० । कोमलपुष्पे न० ।

**मृदुफल** न० मृदूनि फलान्यस्य । विकङ्कते (वइँचि) मधुनारिकेले च । इव०कोमलफलवति त्रि०। कर्म्म०।कोमलफले न०

**मृदुल** न० मृद-कुलच् । जले । कोमलमात्रे त्रि० ।

**मृदुलोमक** पु० इव० । शशके । कोमललोमयुक्ते त्रि० । कर्म०। कोमललोम्नि न०।

**मृदूत्पल** न० कर्म०। नीलोत्पले, नीलपद्मे च ।

**मृद्वीका** स्त्री०मृदु+स्वार्थे ईकन् । द्राक्षायाम् कपिलद्राक्षायाञ्च

**मृध** न० मृध्यतेऽत्र घञर्थे क । युद्धे । [र्द्धीत् अमर्द्धिष्ट ।

**मृध** आर्द्रीभावे भ्वा० उभ० सक०सेट् क्त्वा वेट् । मर्द्धति-ते अम

**मृश** स्पर्शने, प्रणिधाने च तु० पर० सक० अनिट्। मृशति अम्राक्षीत् अमार्क्षीत् अमृक्षत् । मृष इत्येके ।

**मृष** क्षमायां तु० उभ० अनिट् । मृषति ते अमृक्षत् त ।

**मृष** क्षमायां अ० चु० उभ० सक० सेट्। मृषयति त अममृषत् त

**मृष** क्षमायां अ० भ्वा० उभ०सक०सेट् । मर्षति ते अमर्षीत् ।

**मृष** सेचने भ्वा०पर०सक०सेट् । मर्षति अमर्षीत् । क्त्वा वेट् ।

**मृष** क्षमायां चु० उ०सक०सेट्। मर्षयति ते अमीमृषत्त अममर्षत्त

**मृष** क्षमायां स्वा०आ०सक०सेट् । मर्षते अमर्षीत् । [अमर्षिष्ट

**मृष** क्षमायां दिवा० उभ० सक० सेट् । मृष्यति ते अमर्षीत्

**मृषा** अव्य० मृष-का । मिथ्याशब्दार्थे ।

**मृषार्थक** न० मृषा अत्यन्तासम्भूतोऽर्थो यस्य । 'कूर्म्मलोमनतुत्राणः शशशृङ्गधनुर्द्धरः' इत्यादिवाक्ये ।

**मृषालक** पु० मृणालक इव मञ्जरी अस्य । आम्रवृक्षे ।

**मृषावाद** पु० मृषा+वद घञ् । मिथ्यावाक्ये यथा हृदो वह्निमानित्यादिवाक्यम् ।

**मृषोद्य** न० मृषा+वद-क्यप् । मिथ्याकथने ।

**मृष्ट** न० मृष-क्त । मरिचे । शुद्धे शोधिते च त्रि० ।

**मॄ** वधे क्र्या०आ०प०सक०सेट् । मृणाति अमारीत् ।

**मे** परीवर्त्ते भ्वा०आत्म०सक०अनिट् । मयते अमास्त ।

**मेक(ख)ल** पु० मि-कलच् खलच् वा नेत्त्वम् । अद्रिभेदे ।

**मेक(ख)लकन्यका** स्त्री०इत०। नर्म्मदानद्याम् । [नद्याम् ।

**मेक(ख)लाद्रिजा** स्त्री०मेक(ख)लाद्रेर्जायते जन-ड । नर्म्मदा

**मेखला** स्त्री०मि-खलच् । स्त्रीकट्याभूषणे उपनयनकाले ब्रह्मचारिधार्य्ये कटीसूत्रे, खड्गादेर्मुष्ट्याधारणार्थे उपर्य्यधोभागेन वन्धे, शैलनितम्बे, नर्म्मदायां, दन्तिपर्ण्याम्, होमकुण्डोपरिस्थे मृत्कृते वेष्टनभेदे च ।

**मेघ** पु० मिह-घञ् कुत्वम् । धूमज्योतिःपवनसलिलसंघातजन्ये जलधरे, मुस्तके राक्षसभेदे रागभेदे च ।

**मेघजीवन** पु० मेघो जीवनं यस्य । चातकपक्षिणि ।

**मेघज्योतिस्** न० इत०मेघजन्यं ज्योतिः । वज्राग्नौ ।

**मेघनाद** पु० मेघस्येव नादोऽस्य । वरुणे, रावणस्य पुत्रे इन्द्रजिति । इव० । मेघशब्दे ।

**मेघनादानुलासक** पु० मेघस्य नादेनानुलसति अनु+लसण्वुल् । मयूरे । णिनि । मेघनादानुलासीत्यप्यत्र । [मुस्तके

**मेघनामन्** पु० मेघस्य नामेव नाम यस्य। मेघवाचकशब्दवाच्ये

**मेघपुष्पक** न०मेघस्य पुष्पमिव । जले ।

**मेघयोनि** स्त्री० इत० । धूमे ।

**मेघवर्णा** स्त्री० मेघस्येव वर्णोऽस्याः । नीलीवृक्षे ।

**मेघवर्त्मन्** न० इत० । आकाशे । मेघवीथ्यादयोऽप्यत्र ।

**मेघवह्नि** पु० मेघजन्यो वह्निस्तद्घर्षणजातोऽग्निः । वज्राग्नौ एवं मेघानलादयोऽप्यत्र ।

**मेघवाहन** पु० मेघो वाहनमिव यस्य, मेघान् वाहयति चालयति वा वह-णिच्-ल्यु । इन्द्रे ।

**मेघसार** पु० मेघस्य कर्पूरस्य सारः । चीनकर्पूरे ।

**मेघस्तनितोद्भव** पु०मेघस्तनितादुद्भवति भू अच् । विकण्टकवृक्षे

**मेघागम** पु० मेघानामागमो यत्र । वर्षाकाले वर्षर्त्तौ ।

**मेघनन्दिन्** पु० मेघेन तद्ध्वनिना नन्दति णिनि । मयूरे ।

**मेघान्त** पु० मेघानामन्तो यत्र। शरत्काले मेघात्ययादयोऽप्यत्र ।

**मेघास्थि** न० मेघानामस्थीव संहतकठिनत्वात् । करकायाम्

**मेचक** न० मच-वुन् इ० । अन्धकारे, स्रोतोऽञ्जने च । मयूरचन्द्रके, मेघे,श्यामवर्णे च पु०। तद्वति त्रि० ।

तन्मूलरससेवनाद्धि मेहनाश इति वैद्यकप्रसिद्धिः ।
**मेहन** न० मिह्यतेऽनेन मिह-करणे ल्युट् । शिश्ने । कर्मणि ल्युट् । मूत्रे । भावे ल्युट् । मूत्रोत्सर्गे ।
**मैत्र** न० मित्रोदेवतास्य अण् मैत्रं पायुस्तस्येदं पुनरण् । 'विठोत्सर्गे मैत्रं कर्म समाचरेदि'ति स्मृतिः मित्रो देवताऽस्य, मित्रत आगतं, तस्येद वा अण् । अनुराधानक्षत्रे न० । तस्य हि मित्रो देवता । मित्रतः प्राप्ते, 'मैत्रमौद्वाहि-कञ्चैवे'ति स्मृतिः । सुहृत्सम्बन्धिनि च त्रि० । मित्रएव स्वार्थे प्रज्ञाद्यण् । मित्रे, ब्राह्मणे च ।
**मैत्रावरुण** पु० मित्रश्च वरुणश्च देवता द्वन्द्वे आनङ् मित्राव-रुणयोरपत्यम् अण् । अगस्त्ये । इञ् । मैत्रावरुणिरप्यत्र । कल्पभेदे हि तस्य तयोः पुत्रत्वं पुराणप्रसिद्धम् ।
**मैत्री** न०स्त्री० मित्रस्य भावः अण् स्त्रीत्वपक्षे ङीप् । सौहार्दे ष्यञ् । मैत्र्यमप्यत्र ।
**मैत्रेय** पु० मित्राया अपत्यम् ढक् । मुनिभेदे, बुद्धदेवे च ।
**मैथिली** स्त्री०मिथिलायां भवा अण् । सीतायाम् । मिथिला-या राजा अण् । मिथिलादेशाधिपे पु० ।
**मैथुन** न० मिथुनेन स्त्रीपुंसाभ्यां निर्वृत्तम् अण् । अग्न्याधा-नादौ कर्मणि 'सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने' इति स्मृतिः अग्न्याधाने हि सपत्नीकस्यैवाधिकार इति तस्य तत्साध्यत्वम् । स्त्रीपुंसमसङ्गमरूपे ग्राम्यधर्मे च ।
**मैनाक** पु० मेनकायां भवः अण् । पर्वतभेदे ।
**मैरेय** पु० मिरायां देशभेदे ओषधिभेदे वा भवः ढक् । मिरा देशजाते आसवे, 'मैरेयं धातकीपुष्पगुडधानाम्लसम्भव'मि त्युक्ते मद्यभेदे न० ।
**मोच्** क्षेपे वा चु० उभ० पक्षे भ्वा०पर०सक०सेट् । मोचयति ते मोचति अमुमोचत् त अमोचीत् । [मरणे च ।
**मोच** पु० मोच-घञ् । मुक्तौ मोचने 'नीविमोचोऽपि मोच' इति
**मोघ** त्रि० मुह-घ अच् वा कुत्वम् । निरर्थके, हीने च । पारलि-वृक्षे, पाटलीवृक्षे, विड़ङ्गे च स्त्री० प्राचीरे पु० ।
**मोघपुष्पा** स्त्री० मोघं पुष्पमार्त्तवं यस्याः । वन्ध्यायां स्त्रियाम्
**मोच** न० मुच-अच् । कदलीफले । शोभाञ्जने पु० । कदल्यां, नीलीवृक्षे, शाल्मलिवृक्षे च स्त्री० टाप् । [वति त्रि०
**मोचक** पु' मुच-ण्वुल् । मोक्षे, कदल्यां, शोभाञ्जने च । वैराग्य-
**मोचन** न० मुच-णिच्-वा भावे ल्युट् । मुक्तौ, मोचने, दम्भे, गाम्ये च । मुच्यते रोगात् अनया करणे ल्युट् । कण्टकार्य्याम्
**मोचरस** पु०६त० । शाल्मलिनिर्यासे स्वनामख्याते पदार्थे ।
**मोचाट** पु० मुच-णिच्-अच् मोचाय रोगमोचनाय अटति अट-अच् । कृष्णजीरके रम्भास्थि च ।
**मोटक** न० मुट-ण्वुल् । श्राद्धे पितृदानार्थे मुग्नकुशपत्रद्वये ।
**मोटा** स्त्री० मुट-अच् । बलायाम् ।
**मोट्टायित** न० 'कान्तस्मरणवार्त्तादौ हृदि तद्भावभावत' प्राकट्यमभिलाषस्य मोट्टायितमि'त्युक्ते, स्त्रीणामभिलाषभेदे ।
**मोद** पु० मुद-घञ् । हर्षे । [वर्णसङ्करजातिभेदे (मयरा)
**मोदक** पु० मोदयति मुद-णिच्-ण्वुल् । खाद्यभेदे (मोया)
**मोदमोदिनी** स्त्री० मोदइव मोदयति मुद-णिनि । जम्बाम्
**मोदयन्ती** स्त्री० मुद-णिच्-शतृ ङीप् । वनमल्लिकायाम् (काठमल्लिका) ।
**मोदा** स्त्री०मोदयति अजान् मुद-णिच्-अच् । अजमोदायाम्,
**मोदाख्या** स्त्री० मोदः अजमोदस्तेनाख्या । अजमोदायाम् हर्षयुक्ते त्रि० ।
**मोदिनी** स्त्री० मोदयति मुद-णिच्-णिनि । अजमोदायाम् मल्लिकायाम्, यूथिकायां, कस्तूर्य्यां, मदिरायाञ्च ।
**मोरट** न० मुर-अटन् । इक्षुमूले, अङ्कोटपुष्पे, सप्तरात्रोषित क्षीरे च । मूर्वालतायां स्त्री० । क्षीरमोरटायां पु० ।
**मोषक** पु० मुष्णाति मुष-ण्वुल् । तस्करे चौरे ।
**मोषण** न० मुष-ल्युट् । लुण्ठने, छेदने, वधे च ।
**मोह** मुह-घञ् । मूर्च्छायाम् अज्ञाने, भ्रान्तिसाधने, वेदान्तोक्ते अविद्यावृत्तिभेदे, दुःखे, देहादिष्वात्माभिमाने च ।
**मोहन** पु० मोहयति मुह-णिच्-ल्यु । धुस्तूरे, कन्दर्पस्य शर भेदे च । मोहकारके त्रि० । स्त्रियां ङीप् ।
**मोहरात्रि** स्त्री० ब्रह्मणो निजपरिमाणेन पञ्चाशदब्दे गते प्रलयभेदे 'कालरात्रि र्महारात्रि र्मोहरात्रिश्चे'तिचण्डी ।
**मौक्तिक** न० मुक्तैव स्वार्थे ठक् । मुक्तायाम् ।
**मौक्तिकप्रसवा** स्त्री० मौक्तिकं प्रसूते प्रसू अच् । शुक्तिमात्रे मुक्तास्फोटे शुक्तौ च । [मुञ्जएव अण् । मुञ्जतृणे (कुज) स्त्री०
**मौक्तिकशुक्ति** स्त्री०६त० । मुक्तास्फोटे शुक्तौ । [मेखलायाम्
**मौञ्जी** स्त्री० मुञ्जस्येयम् अण् । कटिसूत्रे त्रिरावृत्तमुञ्जकृतायां
**मौञ्जीपत्री** स्त्री० मौञ्ज्याइव पत्रमस्याः । वल्वजायाम् ।
**मौञ्जीबन्ध(न)** पु० मौञ्ज्या मेखलाया बन्धोऽत्र । उपनयन-संस्कारे 'मौञ्जीबन्धः शुभ' प्रोक्तश्चैत्रे मीनगते रवावि'ति स्मृति' ६त० । तद्बन्धने न० । 'द्वितीयं मौञ्जीबन्धनमि'ति स्मृतिः
**मौढ्य** न० मूढस्य भावः ष्यञ् । मोहे, बाल्ये च ।
**मौद्गल्य** पु० मुद्गलस्य मुनेरपत्यं यञ् । गोलकारके मुनिभेदे
**मौद्गीन** न० मुद्गानां भवनं क्षेत्रं खञ् । मुद्गभवनयोग्ये क्षेत्रे
**मौन** न० मुनेर्भावः । वाग्व्यापाररहित्ये 'उच्चारे मैथुने चैव

प्रस्रावे दन्तधावने। स्नाने भोजनकाले च षट्सु मौनं समाचरेदि'ति स्मृतिः।

मौनिन् त्रि० मौनमस्त्यस्य इनि। वाग्व्यापाररहिते। मुनौ पु०

मौरजिक त्रि० मुरजवादनं शिल्पमस्य ठक्। मृदङ्गवादनशीले

मौर्ख्य न० मूर्खस्य भावः ष्यञ्। जाड्ये, मूर्खतायाञ्च।

मौर्वी स्त्री० मूर्वा लता तत्तन्तुना निर्वृत्ता अण्। धनुर्गुणे, [illegible]।

मौल त्रि० मूलं वेत्ति मूलादागतो वा अण्। मन्त्र्यादेरागमादि-मूलज्ञे, 'ये परम्परया मौलाः सामन्ताः स्वामिनं विदु'रिति स्मृतिः मूलादागते च।

मौलि पु०स्त्री० मूलस्याद्दूरभवः इञ्। चूडायां, किरीटे, संयतकेशेषु च। अशोकवृक्षे पु०। भूमौ स्त्री० वा ङीप्।

मौषल न० मुषलस्येदम् तत्रभवम् अण्। मुषलतत्त्वनिवेदे 'गङ्गायां मौषलं स्नानं महापातकनाशन'मिति पुराणम्। मुषलमधिकृत्य कृतो ग्रन्थः अण्। महाभारतान्तर्गते 'मुषलं कुलनाशन'मित्यादिप्रतिपादके षोडशे पर्व्वणि।

मौहूर्त पु० मुहूर्तं तत्प्रतिपादकं शास्त्रं वेत्त्यधीते वा अण्। ज्योतिःशास्त्रज्ञे। ठक्। तत्रैव।

म्ना अभ्यासे भ्वा० पर० सक० सेट्। मनति अम्नासीत्। [ति

म्रक्ष संयोजने म्रेडने च चु० उ० स० सेट्। म्रक्षयति ते अमम्रक्षत्

म्रक्ष सङ्घाते संयोजने च भ्वा० पर० सक० सेट्। म्रक्षति अम्रक्षीत्

म्रक्षण न० म्रक्ष-ल्युट्। संयोजने, राशीकरणे तैले अभ्यङ्गे च

म्रच गतौ भ्वा० पर० सक० सेट् क्त्वा वेट्। म्रचति अम्रचत् अम्राचीत् अम्रचीत्। [अद् म्रदा

म्रद् क्षोदे भ्वा० आ० सक० सेट् घटा०। म्रदते अम्रदिष्ट। म्रदयति

म्रदिमन् पु० मृदोर्भावः मृदु+इमनिच् म्रदादेशः। मृदुत्वे।

म्रदिष्ठ त्रि० अतिशयेन मृदु इष्ठन् म्रदादेशः। अतिमृदुलवति। ईयसुन्। म्रदीयानप्यत्र त्रि०। स्त्रियां ङीप्। [चीत्

म्रुच गतौ भ्वा० पर० सक० सेट् क्त्वा वेट्। म्रोचति अम्रुचत् अम्रो-

म्रुञ्च गतौ म्लुञ्चवत्। म्रुञ्चति अम्रुञ्चत् अम्रुञ्चीत्।

म्रेट(ड) उन्मादे भ्वा० पर० सक० सेट्। म्रेट(ड)ति अम्रेटी(डी)त् चङि न ह्रस्वः।

म्लक्ष चु० म्रक्षवत् सर्व्वम्। म्लक्षयति ते। अमम्लक्षत् त।

म्लान त्रि० म्लै क्त। मलिने म्लानियुक्ते च।

म्लानि स्त्री० म्लै क्तिन्। कान्तिक्षये। [च त्रि०

म्लिष्ट न० म्लेच्छ क्त नि०। अविस्पष्टवाक्ये तद्वाक्ययुक्ते, म्लाने

म्लुच गतौ भ्वा० पर० सक० सेट् क्त्वा वेट्। म्लोचति। अम्लुचत्-अम्लोचीत्।

म्लुञ्च गतौ म्रुञ्चवत् सर्व्वम्। म्लुञ्चति अम्लुञ्चत् अम्लुञ्चीत्।

म्लेच्छ अपशब्दे वा० चु० उभ० पक्षे भ्वा० पर० अक० सेट्। म्लेच्छयति ते म्लेच्छति अमम्लेच्छत् त अम्लेच्छीत्।

म्लेच्छ पु० म्लेच्छ-घञ्। अपशब्दे 'म्लेच्छो ह वा एष यदपशब्द' इति श्रुतिः। कर्त्तरि अच्। पामरजातौ, नीचजातौ च पु० पापरते त्रि० हिङ्गुले न०।

म्लेच्छकन्द पु० म्लेच्छप्रियः कन्दः। लशुने।

म्लेच्छजाति स्त्री० म्लेच्छाभिधा जातिः। गोमांसादिभक्षके किरातादिजातिभेदे।

म्लेच्छदेश पु० म्लेच्छाधारो देशः। चातुर्वर्ण्याचाररहिते देशे

म्लेच्छभोजन न० म्लेच्छैर्भुज्यते कर्म्मणि ल्युट्। यावके धान्यभेदे।

म्लेच्छमण्डल न० ६त०। म्लेच्छदेशे। [illegible]

म्लेच्छमुख न० म्लेच्छानां मुखमिव रक्तत्वात्। ताम्रे म्ले-

म्लेच्छित न० म्लेच्छ-क्त। अपशब्दे अपभ्रंशशब्दे।

म्लेट(ड) उन्मादे भ्वा० पर० सक० सेट्। म्लेट(ड)ति अम्लेटी-(डी)त्। चङि न ह्रस्वः। [न ह्रस्व

म्लेव सेवने भ्वा० आ० सक० सेट्। म्लेवते अम्लेविष्ट। चङि

म्लै कान्तिक्षये भ्वा० पर० अक० अनिट्। म्लायति म्लासीत्।

## य

य पु० या-ड। वायौ, यशसि, योगे, गतौ च। यम ड। संयमे। या-कर्त्तरि ड। यातरि त्रि०।

यकृत् न० य संयमं करोति कृ क्विप् तुक् च। कुक्षौ-दक्षिण-भागस्थे मांसपिण्डे। तद्वृद्धिरोगे च।

यकृदात्मिका स्त्री० यकृत इवात्मा स्वरूपं यस्याः कप्। तैल-पायिकायाम् (तेलापोका)।

यकृद्वैरिन् पु० यकृतो रोगभेदस्य वैरी हन्ता। रोहितकवृक्षे

यक्ष पूजायां चु० आ० सक० सेट्। यक्षयते अययक्षत।

यक्ष पु० यक्ष्यते यक्ष-कर्म्मणि घञ्। देवयोनिभेदे, तदीश्वरे कुबेरे इन्द्रगृहे च।

यक्षकर्द्दम पु० यक्षप्रियः कर्द्दमः। 'कुङ्कुमागुरुकस्तूरीकर्पूरं चन्दनं तथा। महासुगन्धमित्युक्तं नामतो यक्षकर्द्दम' इत्युक्ते समभागेन मिश्रिते कुङ्कुमादौ।

यक्षतरु पु० यक्षाणां वासयोग्यस्तरुः। वटवृक्षे यक्षवासयोग्यत्व

यक्षधूप पु० यक्षे पूजने योग्यो धूपः। (धुना) सर्ज्जरसे।

यक्षराज पु० यक्षाणां राजा टच् समा०। कुबेरे। यक्षेषु राजते राज क्विप्। यक्षराडप्यत्र पु०।

यमल न० यमं योगं लाति ला-क। युग्मे, छन्दावनस्ये छन्दभेदे च।
यमलपत्त पु०यमलानि युग्मानि पत्राणि यस्य। अश्मन्तकवृक्षे
यमवाहन पु० यमं वाहयति स्थानात् स्थानान्तरं नयति। वह-स्वार्थे णिच्-ल्यु। महिषे।
यमानी स्त्री० यच्छति अग्निमान्द्यमनया यम-करणे ल्युट् ङी० आनुक्। अजमोदायाम्। स्वार्थे कन्। तत्रैव।
यमुना स्त्री० यम उनन्। कालिन्द्यां नद्या, यमभगिन्याम् सूर्यसुतायाम्, दुर्गायाञ्च।
यमुनाभ्राटृ पु०६त०। यमे। [त्मजे राजभेदे
ययाति पु०यस्य वायोरिव यातिः सर्वत्र गतिरस्य। नहुषा-
ययु पु० या-कु द्वित्वञ्च। अश्वमेधीयेऽश्वे, अश्वमात्रे च।
यव पु० यु-अच्। स्वनामख्याते शूकधान्यभेदे, 'वसन्ते सर्व-शस्यानां जायते पत्रशातनम् मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः' इति मीमांसा। स्वार्थे कन्। अत्रैव।
यवक्य न० यवानां भवनं क्षेत्रं यत् कुक् च। यवभवने क्षेत्रे
यवक्षार पु० यवजातः क्षारः। यवजातक्षारभेदे लवण-भेदे (शोरा)च।
यवज पु० यवात् जायते जन-ड। यवक्षारे, यवान्याञ्च।
यवतिक्ता स्त्री० यवाकारं तिक्तं फलं यस्याः। रास्नायां शङ्खिन्याञ्च।
यवन पु० यु-ल्यु। देशभेदे, तद्देशस्थे जने ब०व०। वेगे, अधिकवेगवत्यश्वे, गोधूमे, गर्जरतृणे, तुरस्कजातौ ययाति शप्तस्य तत्पुत्रस्य तुर्वसोर्वंश्ये जातिभेदे च। वेगवति त्रि०
यवनद्विष्ट पु० यवनैर्द्विष्टः द्विष-क्त। गुग्गुलौ।
यवनप्रिय न०६त०। मरिचे।
यवनाचार्य पु० ताजकादिज्योतिःशास्त्रकारके पण्डितभेदे
यवनानी स्त्री० यवनानां लिपिः ङीप् आनुक् च। यवनानां लिप्याम्।
यवनारि स्त्री० यवनस्यारिः। श्रीकृष्णे। [भेदे
यवनाल पु० यवानामिव नाला (नाडा) यस्य। (देधान) धान्य
यवनालज पु० यवानां नालात् काण्डात् (नाडा) जायते। यवक्षारे। [(कानात्) जवनिकायाम्
यवनिका स्त्री० युवन्त्यस्यां यु-ल्युट् ङीप् कन् अत इत्वम्।
यवनी स्त्री० यु-ल्युट् ङीप्। यवानीनामकौषधौ यवनभा-र्यायाञ्च। 'यवनीमुखपद्मानां'मिति रघुः।
यवनेष्ट न०६त०। सीसके। मरिचे, पलाण्डौ लशुने राज-पलाण्डौ निम्बे च पु०। खर्जूर्यां स्त्री० टाप्।

यवफल पु० यवाकारं फलमस्य। वंशे कुटजे च यस्य फल-मिन्द्रयव० पलक्षवृक्षे, जटामांस्याञ्च।
यवमध्य न० यवाकृति मध्यं यस्य। चान्द्रायणभेदे प्रथमदिनादा-पञ्चदशदिनमेकैकग्रासवृद्ध्या, तदुत्तरं च आपञ्चदश दिनं क्रमेणैकैकग्रासह्रास्या माससाध्ये व्रते तस्य मध्यदिवसानां हि बहुग्रासवत्त्वेन यवमध्यतुल्यत्वम्।
यवलास पु० यवेन लसते संज्ञायां कर्त्तरि घञ्। यवक्षारे।
यवशूक पु० यवानां शूकः कारणत्वेनास्त्यस्य अच्। यव-क्षारे यवशूकजादयोऽप्यत्र।
यवस न० यु-असच्। घासे, तृणे च। [(याउ)
यवागू स्त्री० यूयते मिश्र्यते यु-आगू। षड्गुणजलपक्वे द्रवभेदे
यवाग्रज पु० यवस्याग्रात् शूकात् जायते जन-ड। यव-क्षारे, यवान्याञ्च।
यवानी स्त्री० दुष्टो यव० ङीप् आनुक् च। (जोयानि) पदार्थे
यवापत्य न० यवस्यापत्यमिव तज्जातत्वात्। यवक्षारे।
यवाम्लज न० यवजाताम्लाज्जायते जन ड। सौवीरके।
यवास पु०यु-आस। दुरालभायाम्, खदिरभेदे च। कुशवासिनी तृणे स्त्री० टाप्। स्वार्थे कन्। तत्रैव।
यविष्ठ त्रि० अतिशयेन युवा युवन्+इष्ठन् यवादेशः अतितरुणे
यवीयस् त्रि०अतिशयेन युवा युवन्+ईयसु यवादेशः 'अंशमंशं यवीयांस' इति स्मृतिः। कनिष्ठे स्त्रियां ङीप्।
यवोत्थ न० यवादुत्तिष्ठति उद्+स्था-क। सौवीरके।
यव्य न० यवानां भवनं क्षेत्रं यत्। यवभवनयोग्ये क्षेत्रे। युत-अन्द्राकीवत् यत्। चान्द्रे मासे पु०। 'यव्यद्वयं आव-पादि सर्वा नद्योरजस्वला' इति स्मृतिः।
यशःपटह पु० यशःख्यापक० पटहः। ढक्कायाम् वाद्यभेदे।
यशःशेष त्रि० यशएव शेषोऽस्य। मृते। कीर्त्तिशेषादयोऽप्यत्र
यशस् न०अश-असुन् धातोः' युच्च। शौर्यादिप्रभूते ख्यातिपर-पर्याये पदार्थे।
यशस्या स्त्री० यशसे हिता यशस्+यत्। जीवन्त्याम् ऋद्धिना-मौषधौ च। यश'साधने त्रि०। 'धन्यं यशस्यमायुष्यमिति।
यशस्वत् त्रि० यशस्+मतुप् मस्य वः। यशोविशिष्टे। विनि। यशस्वीत्यप्यत्र स्त्रियां ङीप्। ङीबन्तस्तु तत्र,ज्योतिष्म यवतिक्तायां, वनकार्पास्याञ्च।
यशोद पु० यशो ददाति दा-क। पारदे। यशोदातरि त्रि० नन्दगोपपत्न्यां स्त्री०। 'नन्दगोपकुले जाता यशोदागर्भसं-भवे' इति चण्डी।
यष्ट पु० यज-तृच्। यागशीले।

**यष्टि** स्त्री० यज क्तिन् नि०। ध्वजादिदण्डे, भुजाद्यवलम्बने दण्डे च क्तिच्। तन्तौ, हारलतायाम्, भार्ग्याम्, मधुकायाम् (यष्टिमधु) वा ङीप्। शस्त्रभेदे च।

**यष्टीक** न० यष्ट्या कायति कै-क। यष्टीमधौ, लताभेदे।

**यष्टीपुष्प** पु० यष्टीव पुष्पमस्य। जीवद्रव्ये।

**यष्टीमधु** पु० यष्ट्या मधु यस्य। (यष्टिमधु) समाख्याते लताभेदे

**यस** यत्ने दिवा०पक्षे भ्वा० पर०अक०सेट्। यस्यति यसति ययास यसति अनुयस्यति अयसत् अयासीत् अयसीत्।

**या** गतौ अदा०पर०सक० अनिट्। याति अयासीत्।

**याग** पु० यज घञ्। मन्त्रकरणके वह्न्याद्यधिकरणे हविःप्रक्षेपकर्मणि यज्ञे।

**याच** याचने भ्वा० उभ० द्विक० सेट्। याचति ते अयाचीत् अयाचिष्ट। चङि न ह्रस्वः। अयायाचत्। याचितम्।

**याचक** त्रि० याच ण्वुल्। याच्ञाकारके।

**याचन** न० याच-ल्युट्। याच्ञायाम्। युच्। याचनाप्यत्र स्त्री

**याचनक** त्रि० याच-ल्यु, स्वार्थे कन्। याचके।

**याचित** न० याच भावे क्त। याचनकर्त्तौ याच्ञायाञ्च। कर्म्मणि क्त। प्रार्थिते त्रि०। [त्रद्धीते (धाञ्चोया द्रव्य)

**याचितक** न० याचितेनाधिगतम् कन्। याच्ञया धनस्यार्पणौ

**याच्ञा** स्त्री० याच-नङ्। प्रार्थनायाम्।

**याजक** पु० याजयति यज-णिच् ण्वुल्। धनादिलाभाय परार्थं यज्ञकर्त्तरि ऋत्विगादौ।

**याज्ञवल्क्य** पु० ऋषिभेदे।

**याज्ञसेनी** स्त्री यज्ञसेनस्य द्रुपदराजस्यापत्यं स्त्री० अत इञ् ङीप्। द्रौपद्यां पाण्डुभार्य्यायाम्।

**याज्ञिक** पु० यज्ञाय हित यज्ञः प्रयोजनमस्य वा ठक्। दर्भभेदे, खदिरे,पलाशे, अश्वत्थे याजके ऋत्विगादौ, यजमाने च।

**याज्य** न० इज्यतेऽत्र यज ण्यत्। यागस्थाने देवप्रतिमायाञ्च 'याज्य चैलमलङ्कार'मिति स्मृतिव्याख्यायां दायभागे याज्य यागस्थान देवता वेत्युक्तम् याजनीये त्रि०। करणे ण्यत्। ऋग्विशेषे स्त्री०।

**यातना** स्त्री० चु यत-युच्। तीव्रवेदनायाम्।

**यातयाम** त्रि० यातो गतो यामः उचितसमयो यस्य। जीर्णे पर्य्युषिते 'यातयाम गतरस'मिति गीता। उच्छिष्टे, परिभुक्ते च। [यातौ गन्तव्ये त्रि

**यातव्य** पु० यायतेऽसौ या-तव्य। जिगीषया युद्धार्थमभिगम्ये

**यातायात** न० यातञ्चायातञ्च या-भावे क्त आ+या भावे क्त समाहारद्व०। गमनागमनयोः।

**यातु** पु० या-तु। राक्षसे। गन्तरि त्रि०। [राक्षसहन्तरि त्रि०

**यातुघ्न** पु० यातु राक्षस गन्धेन हन्ति हन-टक्। गुग्गुलौ

**यातुधान** पु० यातु इति धीयतेऽभिधीयते धा-ल्युट्। राक्षसे

**यातृ** स्त्री० या तृच्। देवरपत्न्याम् (या) यातरौ। तृन्। गन्तरि त्रि० यातारौ। [देशोद्देशेनोत्सवभेदे रथयात्रादौ च

**यात्रा** स्त्री० या ष्ट्रन्। जिगीषया राज्ञा गमने, गमनमात्रे,

**यात्रिक** त्रि० यात्रायै हितम्। उत्सवे, उपाये, गमनहितेऽन्नपानादौ च।

**याथातथ्य** न० तथा तद्रूपस्यौचित्यम् अव्ययी० तस्य भाव ष्यञ्। यद्वस्तु यथा भवितु युक्त तस्य तथाभावे।

**याथार्थ्य** न० यथार्थस्य भाव। सत्यत्वे वास्तविकत्वे।

**यादःपति** पु० यादसां जलजन्तूनां पतिः। वरुणे, समुद्रे च

**यादव** पु० यदोर्गोत्रापत्यमण्। यदुवंश्ये स्त्रियां ङीप्। तत्प्रधाने श्रीकृष्णे पु०। यदूनामिदम् अण्, गोमहिष्यादिके धने न० दुर्गायां स्त्री० ङीप्।

**यादस्** न० या असुन् दुक् च। जलजन्तुमात्रे।

**यादसांनाथ** पु० ६त अलुक्समा०। वरुणे,समुद्रे च। यादसां पत्यादयोऽप्यत्र।

**यादृक्ष(श)(श्)** त्रि० यस्येव दर्शनमस्य यद्+दृश् क्स,(ट) क्विप् वा। यत्सदृशे यथाविधे। टान्तात् स्त्रियां ङीप्।

**यादृच्छिक** त्रि० यदृच्छया आगत ठक्। यदृच्छया प्राप्ते।

**यान** न० या भावे ल्युट्। गमने उपचितशक्ते राज्ञः शूद्राद्यादिरक्षां कृत्वा रिपोराक्रमणाय गमने च। करणे ल्युट्। गमनसाधने रथादौ।

**यापन** न० या णिच् ल्युट। कालादौ क्षेपणे, निरसने च।

**याप्य** त्रि० या णिच्-ण्यत्। निन्द्ये अधमे, क्षेपणीये त्रि० ये प्रमप्रतिकार्य्ये उपशमनीये रोगभेदे।

**याप्ययान** पु० याप्य क्षेप्य कुत्सित वा मदन्यत्वात् इतरवाह्यत्वाद्वा यानम् (महापाला) शिविकायाम्। [इति शा०

**याम** पु० यम घञ्। समये प्रहरे च 'यामीयाम स्थामि नायात

**यामघोष** पु० यामे घोषोऽस्य। कुक्कुटे। घटियन्त्रभेदे स्त्री०

**यामल** न० यमल+स्वार्थेऽण्। युगले, तन्त्रशास्त्रभेदे च।

**यामवती** स्त्री० यामा बहव त्रितयसङ्ख्यायुता सन्त्यस्या भूम्नि मतुप् मस्य व। रात्रौ, हरिद्रायाञ्च।

**यामातृ** पु० जायां माति तृच् नि०। जामातर्य्यन्द्रार्थे।

**यामि** स्त्री०यम इन्। कुलस्त्रियां भगिन्यां 'यामयोयानि गेहानीति मनुः।

**यामित्र** न० ज्योतिषोक्ते लग्नराशितः सप्तमे स्थाने।

**यामित्रवेधः** पु० यामित्रे सप्तमस्थाने वेधः पापग्रहसंयोगः विवाहादौ वर्ज्ज्ये पापात् सप्तमग' मगौत्याद्युक्ते योगभेदे ।

**यामिनी** स्त्री० यामाः त्रिसंख्याताः सन्त्यस्य वाङ्कल्ये इनि। रात्रौ, हरिद्रायाञ्च ।

**यामिनीपति** पु०६त०। चन्द्रे, कर्पूरे च। रजनीशादयोऽप्यत्र ।

**यामी** स्त्री० यमस्येयम् यमो देवतास्या वा अण् । दक्षिणस्यां दिशि यमसम्बन्धिन्यां यातनायां च । यामि+वा ङीप् । यामिशब्दार्थे । [कृष्णत्वात् यामुनजलतुल्यत्वम्

**यामुनेष्टक** न० यमुनायां भवं तद्विवेष्टकम्। सीसके तस्य हि

**याम्य** पु० यामी दिक् निवासोऽस्य यत्। अगस्त्ये,चन्दनवृक्षे च यमोदेवतास्य। यमसम्बन्धिनि त्रि०। दक्षिणदेशस्थे त्रि०

**याम्यायन** न० याम्यायाम् अयनं सूर्यस्य गतिः। दक्षिणायने रवेः मृगसंक्रान्तित' परेषु षट्सु मासेषु ।

**याम्योद्भूत** पु० याम्ये दक्षिणदेशे उद्भूतः । श्रीतालवृक्षे ।

**यायजूक** पु० यज-यङ्-ऊक । पुनःपुनर्यागशीले ।

**यायावर** पु० देशाद्देशान्तरं याति या-यङ्-वरच् । अश्वमेधीयाश्वे जरत्कारुमुनौ च । भृशवक्रगमनशीले त्रि० ।

**याव** पु०यु-अप् स्वार्थे अण् । अलक्तो। स्वार्थे कन्। तत्र। याव इव कन् (कुलुतीकलाइ) व्रीहिभेदे ।

**यावत्** त्रि० यत् परिमाणमस्य मतुप् । यत्परिमाणे। यावति । साकल्ये, व्याप्तौ, सीमायाञ्च अव्य० ।

**यावत्तावत्** अव्य० यावच्च तावच्च द्व० । वीजगणितप्रसिद्धे अव्यक्तमानानयनाय कल्प्ये प्रथमे राशौ । [परिमाणपूरणे

**यावतिथ** त्रि० यावतां पूरणः यावत्+डट् इथुक् च । यावत्

**यावन** पु० यु-णिच्-ल्यु । सिह्लाख्यगन्धद्रव्ये ।

**यावनाल** पु० यवनालएव स्वार्थे अण् । धान्यभेदे ।

**यावनालशर** पु० यावनालइव शरः । शरभेदे ।

**यावनाली** स्त्री० यावनालस्य विकारः अण् ङीप् । यावनाल भवायां शर्करायाम् ।

**यावशूक** पु० यवशूकस्य विकारः अण् । यवक्षारे ।

**याष्टीक** पु०यष्टिः प्रहरणमस्य ईकक् । यष्ट्या योद्धरि ।

**यास** पु० यस-कर्त्तरि संज्ञायां घञ् । दुरालभायाम् ।

**यु** मिश्रणे अमिश्रणे च अ०पर०सक०सेट् । यौति अयावीत् ।

**यु** वन्धे क्र्या०उ०सक०अनिट् । युनाति युनीते-अयौसीत् अयोष्ट

**यु** निन्दने चु०आत्म०सक०सेट् । यावयते अयीयवत ।

**युक्त** त्रि० युज-क्त । मिलिते । अभ्यस्तयोगे योगिनि पु० । उचिते, न्यायागतद्रव्यादौ च न० ।

**युक्तरसा** स्त्री०युक्तो रसो यस्याः । रास्नायां (काटाआमरुली)

**युक्ति** स्त्री० युज-क्तिन् । न्याये, व्यवहारे, अनुमाने तत्साधकलिङ्गज्ञानादौ,'युक्तिरर्थावधारणमि'त्युक्ते नाटकाङ्गविशेषे च

**युग** वर्ज्जने भ्वा०पर०सक०सेट् इदित् । युङ्गति अयुङ्गीत् ।

**युग** न०युजि-अच् पृ० नलोपः । युग्मे, द्वित्वसंख्यान्विते, सत्यत्रेताद्वापरकलिरूपे कालविशेषे तत्प्रमाणं ऋद्धर्मिधाने । वृद्धिनामौषधे, हस्तचतुष्कपरिमाणे च । रथहलादेरङ्गभेदे पु० (जोयाल) । [काष्ठखण्डभेदे

**युगकीलक** पु० ६त० । रथाद्यङ्गयुगधारणार्थे कीलकाकारे

**युगन्धर** पु० युगं रथस्य युगकाष्ठं धरति धृ-खच् । रथस्य युगकाष्ठसंलग्ने कुवराख्ये काष्ठभेदे, पर्व्वतभेदे च ।

**युगपद्** अव्य० युगमिव पद्यते पद-क्विप् । एककाले इत्यर्थे ।

**युगपत्त्र** पु०युगमिव संहतं पत्त्रमस्य। कोविदारवृक्षे स्वार्थे कन्। तत्रैव । शिंशपावृक्षे स्त्री० टाप् अतइत्त्वम् ।

**युगपार्श्वग** पु० युगपार्श्वं गच्छति गम-ड । अभ्यासार्थं लाङ्गलपार्श्वे बद्धे वृषे । [न्विते च

**युगल** न० युगं द्वित्वं विद्यतेऽस्यस्य लच् । युग्मे, द्वित्वसंख्या-

**युगलाख्य** पु० युगलेन वरक्रमेण व्यञ्जनवर्णद्वयेनाख्यायते आ+ख्या-क । वव्वरवृक्षे । [तत्काले च ।

**युगान्त** पु०युगानां सत्यादीनामन्तस्तदुपलक्षितः कालः। प्रलये,

**युग्म** न० युज-मक् पृ० जस्यग० । द्वित्वसंख्यान्विते (जोडा) युगले । 'युग्माग्निकृतभूतानि षण्मुन्योर्वसुरन्ध्रयोः । रुद्रेण द्वादशी युक्ता चतुर्दश्याथ पूर्णिमा । प्रतिपदाप्यमावस्या तिथ्योर्युग्मं महाफलमि'त्युक्ते तिथिविशेषयोगे समराशिषु च

**युग्मपत्त्र** पु० युग्मानि पत्त्राण्यस्य । रक्तकाञ्चनवृक्षे । युग्मपर्णादयोऽप्यत्र । संज्ञायां कन्। शिंशपावृक्षे स्त्री० टाप् अतइत्त्वम्

**युग्मफला** स्त्री० युग्मानि फलानि यस्याः । इन्द्रचिर्भट्यां, वृश्चिकाल्यौ च । [युगवाहकेऽश्वादौ त्रि० ।

**युग्य** न० युगमर्हति यत् । वाहने याने । युगं वहति यत् ।

**युच्छ** प्रमादे भ्वा०पर०सक०सेट् । युच्छति अयुच्छीत्।

**युज** संयमे युतौ च वा चु० उभ० पक्षे भ्वा० पर० सक०सेट् । योजयति ते योजति अयूयुजत् त अयोजीत् ।

**युज** युतौ रु०उ०सक०अनिट्। युनक्ति युङ्क्ते उदयुङ्क्त प्रयुङ्क्ते नियुनक्ति । अयुजत् अयौक्षीत् अयुक्त ।

**युज** योगे समाधौ दिवा०अक०अनिट् । युज्यते अयुक्त ।

**युज** निन्दायां चु०आ०सक०सेट्। योजयते अयूयुजत ।

**युज्** पु० दि०युज-क्विप् । समाधिमति। युक् युजौ । रु० युज-क्विप् । संयोगवति त्रि० युङ् युञ्जौ युञ्जः ।

**युञ्जान** पु० युज-शानच् । योगविशेषवति भावनासहकारेण

सर्व्वपदार्थानां मातरि, रथसारथौ, शिवे च ।
युत दीप्तौ भ्वा०आ०अक०सेट् । योतते । अयोतिष्ट ।
युत त्रि० यु-क्त । संयुक्ते, मिलिते, अमिलिते च ।
युतक न० यु-क्त युत क वा तत स्वार्थे कन् । संशये, युगे, स्त्रीस्तनाच्छादने, अञ्चलाग्रे, यौतके धने, मैत्रीकरणे, सन्धये, शूर्पाये च । संयुक्ते त्रि० ।
युतवेध पु० विवाहादौ षष्ठ्ये चन्द्रेण सह पापग्रहयोगे ।
युद्ध न युध क्त । मल्लादिसंप्रयुक्तव्यापारे, योधने, तदाधारे सङ्ग्रामे, ज्योतिषोक्ते ग्रहाणां गतिभेदजाते, योधनरूपे परस्परमिलनविशेषे च ।
युध युद्धे दिवा०आ०सक०अनिट् । युध्यते । अयुद्ध ।
युध्(धा) स्त्री० युध-सम्प० क्विप् वा टाप् । युद्धे ।
युधान पु० युध कानच् । क्षत्रिये । [सत्तम् । पाण्डवज्येष्ठे ।
युधिष्ठिर पु० युधि युद्धे स्थिर गविर्युधिभ्यां स्थिर इति
युप विमोहे दिवा०पर सक०सेट् । युप्यति अयुपत् अयोपीत्
युयुधान पु० युध-कानच् द्वित्वम् । इन्द्रे, सात्यकिनाम्नि यादवे क्षत्रियभेदे, क्षत्रियमात्रे च । [स्त्री युवजरतीत्यत्र ।
युवखलति स्त्री० युव तरेव खलति । (टाक्) रोगवत्याम् युव
युवति(ती) स्त्री० युवन्+ति ङीप् वा । यौवनवत्यां स्त्रियाम् । युवन् ङीप् । यूनीत्यप्यत्र ।
युवतीष्टा स्त्री युवतीनामिष्टा । स्वर्णयूथिकायाम् ।
युवन् त्रि० यु-कनिन् । मध्ये निसर्गबलवति । 'आषोडशाद्भवे-द्बालस्तरुणस्तत उच्यते' इत्युक्तवयस्के तरुणे च ।
युवनाश्व पु० सूर्य्यवंश्ये, मान्धातृपितरि नृपभेदे ।
युवराज पु० युवैव राजा टच् समा० । राजयोग्यक्रियत्कार्य्य करे राजपुत्रे ।
युष भजने भ्वा०पर०सक०सेट् । योषति अयोषीत् ।
युष्मद् त्रि युष मदिक् । सम्बोध्यचेतने मध्यमपुरुषार्थे तस्य चोक्तार्थे सर्व्वनामता, त्रिषु लिङ्गेषु समरूपता च ।
यूक पु स्त्री यु क्विप् कन् । मत्कुणे, (उकुण) स्त्रीत्वे टाप् ।
यूति स्त्री० यु क्तिन् नि दीर्घ । मिश्रीकरणे ।
यूथ न यु थक् च दीर्घ । सजातीयसमुदाये ।
यूथनाथ पु ६त० । वन्यगजादीनां प्रधाने । यूथपादयोऽप्यत्र ।
यूथिका स्त्री यु थक् च दीर्घ स्वार्थे कन् अत इत्वम् टाप् । अम्बष्ठके पाठाया, यूथ्याञ्च (युइफुल) ।
यूथी स्त्री यु थक् च दीर्घ गौ ङीष् । (युइफुल) पुष्पप्रधाने वृक्षे
यूप पु०न० यु पक् च० दीर्घ । यज्ञीयपशुबन्धनकाष्ठभेदे, याग-समाप्तिचिह्नार्थे स्तम्भे च । जयस्तम्भे पु० ।
यूपकटक पु ६त । यज्ञसमाप्तिसूचककाष्ठस्य शिरःस्थे वल-याकारे काष्ठमय पदार्थे । [यूपद्रुमादयोऽप्यत्र
यूपद्रु पु० यूपाय द्रु प्रकृतिविकृतिभावात् ४त० । खदिरवृक्षे
यूष वधे भ्वा०पर०सक०सेट् । यूषति अयूषीत् ।
यूष पु०न० यूष क च पक्ष य । सूक्तादिकाथे । मल्लदारुवृक्षे पु० ।
येप यत्ने भ्वा०आ०अक०सेट् । येपते अयेपिष्ट । कहि न लुक्त्व
योक्त्र न० युज्यतेऽनेन युज ष्ट्रन् । हलादण्डादौ युगबन्धनार्थे दामनि (योत) ।
योग पु० युज-भावादौ घञ् । संयोगे, मेलने, उपाये वर्म्मादि-धारणे, ध्याने 'योगश्चित्तवृत्तिनिरोधः' इति पातञ्जलोक्ते सर्व्वविषयेभ्योऽन्तः करणवृत्तेर्निरोधे, 'संयोग योगमित्याहु र्जीवात्मपरमात्मनो'रित्युक्ते जीवात्मपरमात्मनोरैक्ये, युक्तौ, लब्धे, अलब्धार्थलाभचिन्तायाम्, देहस्थैर्य्ये शब्दादीनां प्रयोगे समुदायशब्दस्यावयवार्थसम्बन्धे, 'योगबल समाप्त्ये'ति मीमांसका । 'योग कर्मसु कौशल'मित्युक्ते यथास्थितवस्तुनो ऽन्यथारूपप्रतिपादने, यथा संसारबन्धहेतोरपि कर्म्मणो मोक्षहेतुत्वम् । ज्योतिषोक्तेषु रविचन्द्रयोगाभोगेषु विष्कुम्भादिषु, सप्तविंशतौ पदार्थेषु तिथिवारनक्षत्राणाम् अन्यतराश्रयाणां योगविशेषे, अमृतयोग अर्द्धोदय-योग इत्यादि उपायौ च योगाश्रमविमोतमिति स्मृति ।
योगक्षेम न योगश्च क्षेमश्च समाहार द्व० । अलब्धलाभचि न्तार्वहिते लब्धपरिरक्षणे 'योगक्षेम वहाम्यह'मिति पुरा०
योगज न० योगात् जायते जन ड । अगुरुचन्दने । योगजात मात्रे त्रि० न्यायाद्युक्ते प्रत्यक्षादिसाधने अलौकिकसन्निक र्षभेदे पु० । [दानप्रतिग्रह मिति स्मृत्युक्ते सोपाधिके दाने
योगदान न योगेन छलेन उपाधिना वा दानम् । 'योग
योगनिद्रा स्त्री योगरूपा निद्रा । प्रलय परमेश्वरस्य सर्व्वजीवसंहारेच्छया योगरूपे व्यापारे 'योगनिद्रामुपेयुषः' इति चण्डी तदधिष्ठात्र्यां दुर्गायाञ्च ।
योगपट्ट न० योगाभ्यासार्थं पट्टम् । योगिधार्य्ये पट्टवस्त्रभेदे ।
योगपीठ पु न योगयोग्य पीठमासनम् । देवाङ्गीनामासनभेदे
योगमाया स्त्री योगस्य माया । भगवतो जगत्सर्ज्जना-र्थायां शक्तौ, 'योगमायासमाश्रित' इति भागवतम । तद-धिष्ठात्र्यां दुर्गायाञ्च । [प्यत्र स्त्री
योगरङ्ग पु० योगेन रङ्गोऽत्र । (नारङ्ग) जम्बीरभेदे योगरङ्गा
योगरूढ पु योगोऽवयवशक्ति रूढि समुदायशक्ति एत स्मोऽस्त्य अच् । अवयवशक्त्या समुदायशक्त्या च अर्थबोधके पङ्कजशब्दादौ अत्र हि उभयशक्त्या पङ्कजन्मकर्तृत्वरूपाव-

यथार्थविशिष्टपङ्कजविशिष्टस्य बोधः। उभयार्थबोधनाच्च पङ्कजाते-कुमुदादौ, स्थलजाते-पद्मे च न तत्पदप्रयोगप्रसङ्गः

**योगवाहिन्** पु० योगेन वहति वह-णिनि। पारदे,चारभेदे च

**योगाचार** पु० योगेनाचरति आ+चर-घञ्। बौद्धभेदे तन्मताचारविवरणं बृहदभिधाने।

**योगाधमन** न० योगेन छलेनोपाधिना वाधनम्। सोपाधिके छलहेतुके च बन्धकदाने। 'योगाधमनविक्रीत'मिति स्मृतिः

**योगारूढ** पु० योगमारूढः आ+रुह-क्त। 'यदा तु नेन्द्रियार्थेषु न कर्मस्वनुषज्जते। सर्व्वसंकल्पसन्यासी योगारूढस्तदोच्यते'इत्युक्ते योगिभेदे 'योगारूढस्य तस्यैव शमः कारणमुच्यते' इति गीता। [आसनभेदे

**योगासन** न० योगार्थमासनम्। योगशास्त्रोक्ते स्वस्तिकादौ

**योगिन्** त्रि० युज-घिनुण्। 'आत्मौपम्येन सर्व्वत्र सम पश्यति योऽर्ज्जुन०! सुखं वा यदि वा दुःखं स योगी परमोमत' इत्यादिगीताद्युक्तयोगयुक्ते संयोगवति च त्रि० स्त्रियां ङीप्। सा च तत्र, दुर्गायां तच्छक्तिभेदेषु नारायण्यादिषु चतुःषष्टिप्रकारेषु, प्रतिपन्नवमी इत्युक्ते पूर्व्वादिदिग्भेदाद् तिथिभेदेषु च। [दुर्गायां स्त्री० ङीप्।

**योगीश्वर** पु० ६त०। याज्ञवल्क्यमुनौ योगिनां श्रेष्ठे च।

**योगेश्वर** पु० ६त०। श्रीकृष्णे, 'योगेश्वर! ततो मे त्वं दर्शयात्मान'मिति गीता। दुर्गायां वन्ध्याकर्कोट्यां च स्त्री०ङीप्

**योगेष्ट** न० योगाय योजनार्थमिष्टम्। सीसके।

**योग्य** त्रि० योगमर्हति यत् युज-ण्यत् वा। योगार्हे, उचिते, निपुणे, शक्ते च। पुष्यनक्षत्रे पु०। ऋद्धिनामौषधे न०

**योग्यता** स्त्री० योग्यस्य भाव तल्। सामर्थ्ये,शाब्दबोधसाधने 'पदार्थे तत्र तद्वत्ता योग्यता परिकीर्त्तिते'त्युक्ते तत्पदार्थे तत्पदार्थवत्त्वरूपे, परस्परान्वये बाधाभावरूपे वार्थे च।

**योग्या** स्त्री० योगमर्हति यत् युज-कृत्यम् ण्यत् वा। अभ्यासे शास्त्राभ्यासे सूर्य्यस्त्रियाञ्च।

**योग्यानुपलब्धि** स्त्री०योग्यस्य प्रत्यक्षादिना उपलब्धुमर्हस्यानुपलब्धिरन्तानम्। न्यायाद्युक्ते अभावग्राहके साधनभेदे। तथाहि घटादिसत्त्वे तत्र घटाभावोनानुपलभ्यते तस्य प्रति योगिनो घटादे सत्त्वेऽपि तत्प्रत्यक्षकारणसामग्र्य सत्त्वेन तत्प्रत्यक्षस्याभावात् किन्तु घटास्याभावो गृह्यते पिशाचादा भावस्य तु न प्रत्यक्षता तत्प्रतियोगिपिशाचादेर्दर्शनायोग्यत्वात्

**योजन** न० युज-भावादौ ल्युट्। संयोगे। णिच्-ल्युट्। संयोगकरणे। चतुर्षु क्रोशेषु। 'प्रथममगमदद्दा योजने' इति लीलावती।

**योजनगन्धा** स्त्री० योजनं व्याप्य गन्धो यस्याः। कस्तूर्य्याम्, सीतायां, व्यासमातरि-सत्यवत्याञ्च। स्वार्थे कन् अत इत्त्वम्। तत्रैव। [त्रात्। मञ्जिष्ठायाम्

**योजनपर्णी** स्त्री० योजनं व्याप्य पर्णान्यस्याः विस्तीर्णपर्ण-

**योजनवल्ली** स्त्री० योजनं व्याप्य वल्लीव। मञ्जिष्ठायाम्। स्वार्थे कन् अत इत्त्वम्। तत्रैव।

**योत** न० यु-ष्ट्रन्। योक्त्रे (योत)।

**योद्धृ** पु० युध-तृच्। युद्धकर्त्तरि।

**योध** पु० युध-अच्। युद्धकारके। भावे घञ्। युद्धे।

**योधन** न० युध-भावे ल्युट्। युद्धे। करणे ल्युट्। अस्त्राद्यायुधे। कर्त्तरि ल्यु। युद्धकर्त्तरि पु०।

**योधसंराव** पु० योधाय युद्धाय संरावः आह्वानम्। योधानां युद्धार्थे परस्पराह्वाने। [शस्त्रभेदे।

**योनल** पु० यवस्य नल इव काण्डोऽस्य पृ०अत्त्वम्। (देधान)

**योनि** पु० स्त्री० यु-नि। मण्यादीनामुत्पत्तिस्थाने-आकरे, कारणे,जले, स्त्रीणामसाधारणचिह्ने, तद्देवताके पूर्व्वफल्गुनीनक्षत्रे च। स्त्रीत्वे वा ङीप्। [युजेऽण्डजे च देहे।

**योनिज** न० योनिस्थानात् जायते जन-ड। देहभेदे जरा-

**योनिमुद्रा** स्त्री० योन्याकारा मुद्रा। तन्त्रोक्ते देवताविशेषपूजाङ्गे प्रदर्शनीये अङ्गुलीसन्निवेशविशेषे लक्षणन्तु बृहदभि०

**योषा** स्त्री० युष-अच् टाप्। स्त्रियाम् नार्य्याम्।

**योषित्** स्त्री०युष-इति। नार्य्याम् हलन्ताद्वा टाप्। योषितापत्र

**योषित्प्रिया** स्त्री० ६त०। हरिद्रायाम्।

**यौक्तिक** त्रि० युक्तित आगतः ठक्। युक्तिसिद्धे, योग्ये च। युक्तौ अधिकृतः ठञ्। नर्म्मसचिवे पु०।

**यौगिक** त्रि०योगात् प्रकृतिप्रत्ययार्थसम्बन्धात् अधिगत ठञ्। प्रकृतिप्रत्ययलभ्यार्थवाचके शब्दे यथा पाचकादिशब्दः पाककर्त्तृवाचक। योगे योग्य ठञ्। योगयोग्ये। [नि ह्रस्व०

**यौट** संबन्धे भ्वा०पर०सक० सेट्। यौटति अयौटीत्। चडि

**यौड** यौटवत् सर्व्वम्। यौडति अयौडीत्। [लब्धे धने

**यौतक** न० युतकाले विवाहकालेऽधिगतम् कण्। विवाहकाले

**यौतव** न० यु-तु तस्य भावः अण्। परिमाणे। [धने।

**यौतुक** न० योतुर्योगकालस्तत्र लब्धं कण्। विवाहकाले लब्धे

**यौधेय** पु० योध एव ढकु। योद्धरि। ढ। योधेयोप्यत्र।

**यौन** त्रि० योनित' योनिसम्बन्धात् आगतम् अण्। पामे, योनेरयमण्। वैवाहिकसम्बन्धे पु०।

**यौवत** न० युवतीनां समूहः अण्। युवतिसमुदाये।

**यौवन** न० यूनो भावः अण्। तारुण्ये अवस्थाभेदे। 'आ यौ-

म्लाने च। [टाप् (तेलाकुचा)।

**रक्तफल** पु० रक्तानि फलान्यस्य। वटवृक्षे। बिम्बिकायां स्त्री०

**रक्तवालुक** न० कर्म्म०। सिन्दूरे रक्तवालुकाप्यत्र स्त्री०।

**रक्तमञ्जर** पु० रक्तवर्णा मञ्जरी अस्य अच्। निचुलवृक्षे।

**रक्तमूला** स्त्री० ६त०। लज्जालुलतायाम्।

**रक्तमेह** पु० कर्म्म०। रोगभेदे।

**रक्तमोक्षण** न० ६त०। रुधिरस्रावणे। [कन् तत्रैव।

**रक्तयष्टि** स्त्री० रक्तवर्णा यष्टिरस्याः। मञ्जिष्ठायाम्। स्वार्थे

**रक्तरेणु** पु० रक्ता रेणवोऽस्य। पलाशकलिकायाम्।

**रक्तलशुन** न० कर्म्म०। (लालरशुन) मूलभेदे।

**रक्तला** स्त्री० रक्तं रुधिरं हेतुत्वेनास्त्यस्याः लच् तत् लाति सेवनात् ला-क वा। काकतुण्ड्याम्।

**रक्तवटी** स्त्री० रक्तवर्णा वटीव। मसूरिकायाम्।

**रक्तवर्ग** पु० रक्तानां वर्गः समुदायः। दाड़िमकिंशुकलाक्षा-बन्धूकहरिद्राजवाकुसुमपुष्पमञ्जिष्ठालक्तकरूपे समूहे।

**रक्तवर्ण** पु० रक्तो वर्णोऽस्य। इन्द्रगोपकीटभेदे। कर्म०। रोहितरूपे पु०।

**रक्तवर्द्धन** पु० रक्तं रुधिरं वर्द्धयति वृध-णिच्-ल्यु। वार्त्ताकौ

**रक्तवर्षाभू** पु० वर्षायां भवति भू-क्विप् कर्म्म०। रक्तपुनर्नवायाम्

**रक्तवीज** पु० रक्तवर्णानि वीजान्यस्य। दाड़िमे। रक्तं रुधिरमेव वीजमुत्पत्तिः कारणं यस्य। 'रक्तविन्दुर्यदा भूमौ पतत्यस्य शरीरतः। समुत्पतति मेदिन्यास्तत्प्रमाणस्तदा सुर' इति चण्डीप्रतिपादितेऽसुरभेदे।

**रक्तवृन्ता** स्त्री० रक्तवर्णं वृन्तं यस्याः। शेफालिकायाम्।

**रक्तवृष्टि** स्त्री० ६त०। दैवकृतोपद्रवभेदे रुधिरवर्षणे।

**रक्तशालि** पु० कर्म्म०। (लालधान) धान्यभेदे।

**रक्तशिग्रु** पु० कर्म्म०। (नालसजना) वृक्षभेदे।

**रक्तशीर्षक** पु० रक्तं शीर्षमस्य कप्। सरलद्रुमे।

**रक्तशृङ्गिक** न० रक्तं शृङ्गमिवास्त्यस्य ठन्। विषभेदे।

**रक्तसन्ध्यक** न० रक्ता सन्ध्येव कन्। रक्तवर्णे कह्लारे, पद्मे च

**रक्तसरोरुह** न० कर्म्म०। रक्तपद्मे।

**रक्तसर्षप** पु० कर्म्म०। (राइसर्षा) राजिकायाम्।

**रक्तसहा** स्त्री० रक्तं सहते सह-अच्। रक्ताम्लाने।

**रक्तसार** न० रक्तः सारोऽस्य। रक्तचन्दने। अम्लवेतसे पु०।

**रक्तसौगन्धिक** न० कर्म्म०। (नालसुंदि) रक्तवर्णकह्लारे।

**रक्ताकार** पु० रक्तवर्ण आकारो मूर्त्तिर्यस्य। प्रवाले।

**रक्ताक्ष** पु० रक्ते अक्षिणी यस्य षच् समा०। पारावते, महिषे, चकोरे, सारसे च। रक्तनेत्रवति, क्रूरे, जने च त्रि० स्त्रियां ङीप्

**रक्ताङ्ग** न० रक्तमङ्गं यस्य यस्माद्वा। कुङ्कुमे। मङ्गलग्रहे कम्पिल्ले (डहरकरमचा) च पु०। प्रवाले पु०न०। जीवन्त्याम्, मञ्जिष्ठायाञ्च स्त्री० ङीप्।

**रक्ताति(ती)सार** पु० रक्तमिश्रितोऽति(ती)सारः। वैद्यकप्रसिद्धे रोगभेदे।

**रक्ताधार** पु० ६त०। देहावरके चर्म्मणि। [बोले

**रक्तापह** न० रक्तं रुधिरमपहन्ति अप+हन-ड। गन्धरसे

**रक्तापामार्ग** पु० कर्म्म०। (लाल आपाङ) क्षुपभेदे।

**रक्ताम्लान** पु० कर्म्म०। रक्तमहासहालतायाम्।

**रक्तालु** पु० कर्म्म०। (शकरकन्द) आलुभेदे।

**रक्तिका** स्त्री०। रक्तेव कन् अत इत्त्वम्। गुञ्जायां, रालिकायां, परिमाणभेदे च।

**रक्तेक्षु** पु० कर्म्म०। (काजला) इक्षुभेदे।

**रक्तैरण्ड** पु० कर्म्म०। (लालभेरण्डा) वृक्षभेदे।

**रक्तोत्पल** न० कर्म्म०। कोकनदे लोहितवर्णे-पद्मे। रक्तोत्पलमिव पुष्पमस्य अच्। शाल्मलिवृक्षे (शिमुल) पु० रक्तमुत्पलमिव। गैरिके न०। [तद्वति त्रि०।

**रक्तोत्पलाभ** पु० रक्तोत्पलस्य कोकनदस्येवाभा यस्य। रक्तरूपे

**रक्ष** पालने भ्वा०पर०सक०सेट्। रक्षति अरक्षीत्।

**रक्षःसभ** न० रक्षसां राक्षसानां सभा। राक्षससमूहे।

**रक्षक** त्रि० रक्ष-ण्वुल्। रक्षाकर्त्तरि स्त्रियां टाप् अत इत्त्वम्

**रक्षणि(णी)** स्त्री० रक्ष-अनि वा ङीप्। त्रायमाणालतायाम्

**रक्षस्** न० रक्ष्यते हविरस्मात् रक्ष-अपादानेऽसुन्। राक्षसे।

**रक्षा** स्त्री० रक्ष-अ टाप्। रक्षणे। रक्षति अच् टाप्। जतुनि, भस्मनि च स्त्री०। रक्ष-अच्। रक्षके त्रि०।

**रक्षापत्र** पु० रक्षार्थं पत्रमस्य। भूर्ज्जपत्रवृक्षे।

**रक्षित** त्रि० रक्ष्यतेऽत्र रक्ष-क्त। भारके। उपाधिभेदे तदुपाधिविशिष्टजनकृते वैद्यकग्रन्थभेदे च।

**रक्षिवर्ग** पु० रक्षिणां वर्गः। सैन्यादिरक्षके (प्रहरिगण)

**रक्षोघ्न** न० रक्षो हन्ति हन-टक्। काञ्जिके, हिङ्गुनि च। तद्गन्धाघ्राणसम्बन्धाद्धि रक्षसामपसरणम्। भल्लातकवृक्षे श्वेतसर्षपे च पु०। ऋग्वेदादिप्रसिद्धे 'कृणुष्व पाजः' इत्यादिके सूक्तभेदे न०। वचायां स्त्री०। राक्षसघातकद्रव्यमात्रे त्रि०

**रक्षोहन्** पु० रक्षो हन्ति हन+क्विप्। गुग्गुलौ तद्गन्धघ्राणाद्धि राक्षसानामपसरणम्। श्वेतसर्षपे च। राक्षसहन्तरि त्रि० 'रक्षहा वलगहन' इति यजुर्वेदः।

**रक्ष्ण** पु० रक्ष-नङ्। त्राणे।

**रख** सर्पणे भ्वा०पर०अक०सेट् इदित्। रङ्खति अरङ्खीत्।

रख सर्पणे भ्वा० पर० सक० सेट्। रखति अरखीत् अराखीत्
रग शङ्कायाम् भ्वा० प० सक० सेट् घटा० मित्। रगति अर
गीत्। रगयति।
रग गतौ भ्वा० पर० सक० सेट् इदित्। रङ्गति अरङ्गीत्।
रग स्वादे आप्तौ च चु० उभ० सक० सेट्। रागयति अरीरगत् त
रघ दीप्तौ चु० उभ० सक० सेट् इदित्। रङ्घयति ते अररङ्घत्
रघ गतौ भ्वा० आ० सक० सेट् इदित्। रङ्घते अरङ्घिष्ट।
रघु पु० लघ-उ लस्य रत्वम्। सूर्य्यवंश्ये दिलीपसूनौ नृपतिभेदे
रघोरपत्यमण् बह्वषु लुक्। रघुवंश्ये अजप्रभृतौ क्षत्रिये
ब० व०। तान् अधिकृत्य कृतो ग्रन्थः अण् आख्यायिकाया
तस्य लुक्। कालिदासप्रणीते ऊनविंशतिसर्गात्मके
महाकाव्यभेदे पु०। [पुत्रे श्रीरामे।
रघुनन्दन पु० रघून् नन्दयति नन्द-णिच् ल्यु। दशरथज्येष्ठ-
रघुनाथ पु० रघूणां नाथ रक्षकत्वात् श्रेष्ठत्वाद्वा। श्रीरामे
रघुपत्यादयोऽप्यत्र।
रघुवंश पु० ६त०। रघुकुले। तमधिकृत्य कृतो ग्रन्थ आख्या
यिकाया तस्य लुक्। कालिदासप्रणीते ऊनविंशतिसर्गा-
त्मके महाकाव्यभेदे।
रघुवंशतिलक पु० रघुवंशे तिलक इव। दशरथज्येष्ठपुत्रे श्रीरामे
रघुवर पु० रघुषु वर श्रेष्ठ। श्रीरामे।
रघूद्वह पु० रघुषु उद्वह रघ्वादिभारधारक उद्+वह अच्।
दशरथज्येष्ठपुत्रे श्रीरामे।
रङ्क त्रि० रकि अच्। कृपणे मन्दे च।
रङ्कु पु० रकि-उ। मृगविशेषे।
रङ्ग पु० रगि अच्। धातुभेदे (राङ) रन्ज भावे घञ्। रागे
आधारे घञ्। रणभूमौ, नाट्यस्थाने च। करणे घञ्।
नृत्ये, टङ्कणे, (सोहागा) खदिरसारे च।
रङ्गज न० रङ्गात् रङ्गधातोर्जायते जन-ड। सिन्दूरे।
रङ्गजीवक पु० रङ्गेण रञ्जनेन जीवति जीव-ण्वुल्। (रङ्गरेज)
शिल्पिभेदे चित्रकरे नाट्यजीविनि च।
रङ्गद पु० रङ्ग रञ्जन राग ददाति दा क। टङ्कणे, खदिरसारे च
रङ्गदायक पु० रङ्ग ददाति दा-ण्वुल्। कङ्गुष्ठे, (काङ्गनी)
धान्यभेदे। [रवादिना हि नीलरागसम्भवः।
रङ्गपत्री स्त्री० रङ्गाय पत्रमस्याः ङीप्। नीलीवृक्षे तद्दलम्
रङ्गपुष्पी स्त्री० रङ्गाय पुष्पमस्ति अच् ङीप्। नीलीवृक्षे।
रङ्गभूमि स्त्री० रज्यतेऽत्र रन्ज घञ् कर्म्म०। नाट्यभूमौ
'रङ्गभूमिं समासाद्येति भा० इत्य०। मल्लभूमौ च।
रङ्गमाता स्त्री० रङ्गस्य रागस्य मातेवोत्पादिका। लाक्षायाम्
कुट्टिन्याञ्च सा हि नायकयोर्वार्त्तादिद्वारा राग वर्द्धयति।
रङ्गलासिनी स्त्री० रङ्ग राग लासयत्युल्लासयति इनरसेन
लस णिच्-णिनि। शेफालिकायाम्।
रङ्गबीज न० रङ्गस्येव बीजमुत्पत्तिसाधन यस्य। रूप्ये रजते
रङ्गशाला स्त्री० रज्यतेऽत्र कर्म्म०। (नाचघर) नाट्यगृहे।
रङ्गाजीव पु० रङ्ग रञ्जन नाट्यस्थान वा आजीवति आ+
जीव अण्। (रङ्गरेज) शिल्पिभेदे चित्रकरे, नटे च।
रङ्गारि पु० रङ्गस्य रिरिव जारकत्वात्। करवीरे तद्रसयवक्षाद्धि
रङ्गस्य जीर्णता।
रङ्गावतारक पु० रङ्गे नाट्यस्थानेऽवतरति वेशान्तरपरिग्र
हेण अव+तॄ-ण्वुल्। नटे शैलूषे। णिनि। तत्रार्थे।
रङ्गिणी स्त्री० रङ्गमिव शुभ्राणि मूलानि सन्त्यस्याः इनि।
शतमूल्याम्, कैवर्त्तिकाख्यलतायां च। रङ्गयुक्ते त्रि०।
रङ्हस् न० रमि-असुन्। वेगे। [ल्युट्। तत्रैव न०।
रचना स्त्री० रच युच्। रचने, पुष्पमाल्यादेर्विन्यासे। भावे
रच रचनायां अद० चु० उभ० सक० सेट्। रचयति ते अररचत् त
रज न० रन्ज क। स्त्रीकुसुमे। परागे रेणौ गुणभेदे च पु०
रजक पु० रजति रन्ज-ण्वुल् नलोप। वस्त्रादेः रागकारके
जातिभेदे (धोपा)।
रजत न० रन्ज-अतच् नलोप। रूप्ये, गजदन्ते रुधिरे हारे,
शैले, स्वर्णे, धवले च। शुक्लगुणवति त्रि०।
रजताचल पु० रजतकल्पितोऽचल। दानार्थं कल्पिते, रजत
मय पर्व्वते। रजतमिव शुभ्रोऽचलः। कैलासपर्व्वते रज-
तगिर्य्यादयोऽप्यत्र पु०।
रजन न० रन्ज ल्यु। रागे। [हरिद्रायां, जतुकायाञ्च।
रजनि(नी) स्त्री० रज्यतेऽत्र रन्ज कनि वा ङीप्। रात्रौ
रजनीकर पु० रजनीं सतत करोति कृ ट। चन्द्रे।
रजनीगन्धा स्त्री० रजन्यां गन्धो यस्याः। तन्नामख्याते
पुष्पप्रधाने वृक्षे। [भटे च।
रजनीचर पु० रजन्यां चरति चर ट। राक्षसे चौरे यामिक
रजनीजल न० रजन्या जलमिव। नीहारे।
रजनीपुष्प पु० रजन्या हरिद्राया इव पुष्पमस्य। (पति
करमचा) करञ्जभेदे।
रजनीमुख न० ६त०। प्रदोषे सूर्य्यास्तकालात् चतुर्दण्डा-
त्मके, प्रहरमात्रके वा काले। [निशायाम्
रजनीहासा स्त्री० रजन्यां हासो विकासो यस्याः। शेफा-
रजस् न० रन्ज असुन् नलोप। पुष्परेणौ, परागे, धूलौ,
साङ्ख्योक्ते चेष्टादिकारके सत्त्वादिगुणभेदे च।

**रजस्वल** त्रि० रजोऽस्त्यस्य वलच् । रजोयुक्ते । महिषे पुं० आर्त्तववत्यां स्त्रियां स्त्री० ।
**रज्जु** स्त्री० सृज-उ नि० । बन्धनसाधने दामनि (दडि) वेण्याञ्च
**रञ्जक** न० रञ्जयति रन्ज-णिच्-ण्वुल् । हिङ्गुले प्रीतिकारके त्रि० । काम्पिल्लवृक्षे पुं० (डहरकरमचा) ।
**रञ्जन** न० रज्यतेऽनेन रन्ज-करणे ल्युट् । रक्तचन्दने, मञ्जिष्ठायां, नील्यां, गुण्डारोचनिकायां, (कमलागुडि) शेफालिकायां, हरिद्रायां, पर्पट्याञ्च स्त्री० ङीप् । भावे ल्युट् । रागे । ल्यु । रागजनके त्रि० । मुञ्जतृणे न० । संज्ञायां कन् । कट्फले पुं० ।
**रट** भाषणे भ्वा०पर०सक०सेट् । रटति अराटीत् अरटीत् 'माघे माघि रटन्त्यापः' इति स्मृतिः ।
**रटन्ती** स्त्री० रट-शतृ ङीप् । 'माघे मास्यसिते पक्षे रटन्त्याख्या चतुर्द्दशी । तस्यां प्रदोषसमये पूजयेत् मुण्डमालिनी'मित्युक्तायां माघकृष्णचतुर्द्दश्याम् ।
**रठ** भाषणे भ्वा०पर०सक०सेट् । रठति अराठीत् अरठीत् ।
**रण** गतौ भ्वा०पर०सक०सेट् । रणति अराणीत् अरणीत् घटादि० । रणयति ।
**रण** रवे भ्वा०पर०अक०सेट् । रणति अराणीत् अरणीत् ।
**रण** न० रण्यते शब्द्यतेऽत्र रण-घञर्थे क । युद्धे, भावे क । शब्दे, क्वणे, गतौ च पुं० । [कन् । उद्वेगे अतिशये च ।
**रणरणक** पुं० रण. शब्दस्तत्प्रकारः द्वित्वम् ततः संज्ञायां
**रणसङ्कुल** न० रणमेव सङ्कुलम् । तुमुलयुद्धे ।
**रण्ड** पुं० रण-ड तस्य नेत्त्वम् । धूर्त्ते, विफले अङ्गाङ्गविशिष्टतया छिन्नावयवे त्रि० । मूषिकपर्ण्यां विधवायाञ्च स्त्री० । स्वार्थे कन् । अफलवृक्षादौ ।
**रण्डाश्रमिन्** पुं० रण्ड विफलः प्रजाहीनत्वात् आश्रमः अस्त्यस्य इनि । 'चत्वारिंशद्वत्सराणां साष्टानाञ्च परे यदि । स्त्रिया वियुज्यते कश्चित् स तु रण्डाश्रमी मत' इत्युक्ते वयसि स्त्रीवियुक्ते पुरुषे ।
**रत** न० रम भावे क्त । रमणे स्त्रीपुंसयोः सङ्गमे मैथुने, गुह्ये च । कर्त्तरि क्त । अनुरक्ते त्रि० ।
**रति** स्त्री० रम-क्तिन् । रागे, गुह्ये, रमणे तदधिष्ठात्र्यां कामदेवपत्न्यां च । [सङ्गमसाध्ये मैथुने ।
**रतिक्रिया** स्त्री रतये रतिरूपो वा क्रिया व्यापारः । स्त्रीपुंस
**रतिपति** पुं० ६त० । कन्दर्पे रतिकान्तादयोऽप्यत्र ।
**रतिप्रिय** पुं० ६त० । कामदेवे । ६ब० । रमणप्रिये त्रि० ।
**रतिमन्दिर** न० ६त० । रतिगृहे स्त्रीणामसाधारणचिह्ने च

**रतिरमण** पुं० रतिं रमयति रम-णिच्-ल्यु । कामदेवे ।
**रतिलक्ष** न० रतेर्लक्ष्यं पदम् । मैथुने ।
**रतिसत्वरा** स्त्री० रतिं सत्वरयति सत्वरा+करोत्यर्थे णिच्-अण् । (पिडिङ्ग) शाके ।
**रत्न** न० रमतेऽत्र रम-न तान्तादेशः । माणिक्यादिप्रस्तरे, स्वस्वजातिषु श्रेष्ठे, माणिक्ये, हीरके च ।
**रत्नकन्दल** पुं० रत्नेषु कन्दल इव रक्तत्वात् । प्रवाले ।
**रत्नकूट** पुं० रत्नमयकूटः शृङ्गमस्य । पर्व्वतभेदे ।
**रत्नगर्भ** पुं० रत्नयुक्तगर्भं मध्यं यस्य । समुद्रे, कुवेरे च । पृथिव्यां सत्सुतायां नार्याञ्च स्त्री० ।
**रत्नद्वीप** पुं०न० । रत्नमयो द्वीपः । तन्त्रोक्ते सुधासमुद्रमध्यस्थिततया ध्येये रत्नमयेऽन्तरीपे । [निर्म्मितायां धेन्वाम् ।
**रत्नधेनु** स्त्री० रत्नकल्पिता धेनुः । दानार्थं कल्पितायां रत्न-
**रत्नपारायण** न० रत्नानां पारायणं साकल्येन स्थानम् । सर्व्वरत्नाधारे 'रत्नपारायणं नाम्ना लङ्के'ति भट्टिः ।
**रत्नमुख्य** न० रत्नेषु मुख्यम् । हीरके । [रत्नयुक्ते त्रि०
**रत्नवती** स्त्री० रत्नानि सन्त्यस्याः मतुप् मस्य वः । पृथिव्याम्
**रत्नसानु** पुं० रत्नानि सानावस्य । सुमेरुपर्व्वते ।
**रत्नसू** स्त्री० रत्नानि सूते सू-क्विप् । पृथिव्याम् ।
**रत्नाकर** पुं० ६त० । समुद्रे रत्नोत्पत्तिस्थाने, मणिखनौ च ।
**रत्नाचल** पुं० रत्ननिर्म्मित अचलः । दानार्थं कल्पिते रत्ननिर्म्मिते पर्व्वते । [भूषणभेदे ।
**रत्नाभरण** न० रत्नघटितमाभरणम् शाक० । (जडाओ)
**रत्नावली** स्त्री० ६त० । रत्नसमूहे, तद्घटित हारे, वत्सराजपत्नीभेदे च रत्नावलीमधिकृत्य कृत ग्रन्थोऽण् आख्यायिकायां तस्य लुक् । श्रीहर्षकृते चतुरङ्कात्मके नाटिकाभेदे । [ङीप् ।
**रत्नि** पुं०स्त्री० ऋ-कत्निच् । बद्धमुष्टिहस्तपरिमाणे । स्त्रीत्वे वा
**रथ** पुं० रम्यतेऽनेन अत्र वा रम-क्थन् । स्वनामख्याते यानभेदे, देहे च 'आत्मानं रथिनं विद्धि शरीरं रथमेव चे'ति गीता । पादे, वेतसवृक्षे, तिनिसवृक्षे च ।
**रथकड्या** स्त्री० रथानां समूहः रथ+कड्यच् । रथसमूहे ।
**रथक(का)र** पुं० रथं करोति कृ-अच्-अण् वा । रथनिर्माणकारके (सूत्रधार) वर्णसङ्करभेदे ।
**रथकुटुम्बिन्** पुं० रथस्य कुटुम्बीव पालकत्वात् । सारथौ ।
**रथगर्भक** पुं० रथस्य गर्भमिव इवार्थे कन् । कर्णीरथे स्कन्धवाह्ययाने (पालकी) ।
**रथगुप्ति** स्त्री० रथस्य गुप्तिः शस्त्रवारणार्थं रचा उपचारात् तत्स्थानम् । रथस्य शस्त्रवारणार्थे गुप्तस्थाने ।

रवण पु० रु-युच्। कोकिले, उष्ट्रे च। कांस्ये न०। शब्दकारके, तीक्ष्णे च त्रि०।

रवि पु० रु-इन्। सूर्य्ये, अर्कवृक्षे च।

रविज पु० रवेर्जायते जन-ड। शनौ, शार्वगामनौ, वैवस्वते मनौ, सुग्रीवे, वानरे, यमे च यमुनायां स्त्री० रवि-तनयादयोऽप्यत्र।

रविनाथ न०रविर्नाथः प्रकाशकत्वात् यस्य। पद्मे, बन्धूके च

रविनेत्र पु० रविर्नेत्रं यस्य। विष्णौ। रविलोचनादयोऽप्यत्र

रविप्रिय न० इत०। रक्तकमले। करवीरे पु०।

रविरत्न न० रवेः प्रियं रत्नम्। माणिक्ये ताम्रे च।

रविलोह न० रवेः प्रियं लोहं धातुः। ताम्रे।

रश स्वने भ्वा०पर०अक० सेट्। रशति। अराशीत् अरशीत्।

रशना स्त्री० रश-ल्यु। काञ्च्याम्, जिह्वायाञ्च।

रश्मि पु० अश-मि धातोरुट् रश-मि वा। किरणे, अश्वादि दामनि च पक्ष्मे न०।

रस स्वने भ्वा०प०सक० सेट्। रसति। अरासीत्-अरसीत्।

रस आस्वादे च०चु० उ०सक० सेट्। रसयति-ते अररसत्-त

रस पु०रस्यते रस-अच्। आस्वाद्ये, रसनेन्द्रियग्राह्ये माधुर्य्यादिगुणभेदे, देहस्थे भुक्तान्नादेः प्रथमपरिणामे, 'सम्यक् पक्वस्य भुक्तस्य सारोनिगदितोरस इत्युक्ते' धातुभेदे माधुर्य्यादिरसवति, गुडादौ, पुष्पस्य मधुनि, अलङ्कारोक्ते सञ्चारिव्यभिचारिसहकारिव्यञ्ज्ये रत्यादिस्थायिभावके शृङ्गारादौ हर्षे, वीर्य्ये, माधुर्य्यादिगुणे, रागे, द्रवे, पारदे, जले च गन्धरसे पु० न०।

रसकर्पूर न० रसेन कर्पूरमिव। (रसकर्पूर) गन्धद्रव्यभेदे।

रसकेशर न० रसेन केशरमिव नागकेशरसुगन्धित्वात्। कर्पूरे

रसगन्ध पु०न० रसे गन्धोऽस्य। बोले गन्धरसे स्वार्थे कन् तत्रैव। [हिङ्गुले च।

रसगर्भ न० रसो गर्भे यस्य। पित्तलधातुद्रवजे रसाञ्जने,

रसघ्न पु० रसं पारदं हन्ति हन-ठक्। टङ्कणे (सोहागा)

रसज न० रसात् भुक्तान्नसारात् प्रथमजातोजायते जन-ड। रुधिरे। रसात् इक्षुप्रभृतेः द्रवात् जायते जन-ड। गुडे, मद्यकीटे च पु०। रसभवादयोऽप्यत्र।

रसज्ञा स्त्री० रसं जानाति अनया ज्ञा-ड। जिह्वायाम् रस-ज्ञानसाधने जिह्वास्थानस्थेन्द्रिये।

रसज्येष्ठ पु० रसेषु ज्येष्ठः श्रेष्ठः। मधुररसे शृङ्गाररसे च।

रसतेजस् न० रसस्य भुक्तान्नसारस्य तेजः सारं। रुधिरे।

रसदालिका स्त्री० रसार्थं दल्यते दल-कर्मणि घञ् गौ० ङीष् कन्। पुण्ड्रेक्षौ (पुंडि आख)।

रसधातु पु० रसाख्यो द्रवरूपो, वा धातुः। पारदे।

रसधेनु स्त्री० दानार्थं कल्पितायाम् इक्षुरसनिर्मिताया धेनौ।

रसन न० रस-ल्युट्। शब्दे ध्वनौ च करणे ल्युट् जिह्वायां 'पित्तेन दूने रसने सितापी'ति नैषध।

रसना स्त्री०रस्यतेऽनया। रस-करणे ल्युट् अजा० टाप्। जिह्वायां, रास्नायां, काञ्च्यां, रज्जौ च। [याम्।

रसनेत्रिका स्त्री०रसो नेत्रमिव अस्यस्याः ठन्। मन शिला-

रसपाकज पु० रसपाकेन जायते जन-ड। गुडे।

रसफल पु० रसो जलं फले यस्याः। न रिकेलवृक्षे।

रसमाणिक्य न० रसेन पारदेन माणिक्यमिव तत् प्राकल-त्वात्। स्वनामख्याते पदार्थे।

रसराज पु०रसेषु रसोबाराजेव श्रेष्ठत्वात्रसः द्रवइव राजते वा पारदे रसनाथादयोऽप्यत्र। [मस्य व'। पाकस्थाने।

रसवती स्त्री० रस आस्वाद्यद्रव्यमन्नादि अस्त्यस्याम् मतुम्

रसशोधन न० रसं पारदं द्रवीभूतं द्रव्यं स्वर्णादि वा शोध-यति शुध-णिच्-ल्यु। टङ्कणे (सोहागा)।

रसस्थान न० रसस्य पारदस्य स्थानम्। हिङ्गुले। [याम्।

रसा स्त्री० प्राकज' रसो माधुर्य्यादिरूपोऽस्त्यस्याः अच्। पृथि-

रसाग्रज न०रसस्य पित्तलधातुद्रवस्याग्रात् जायते जन-ड। रसाञ्जने।

रसाञ्जन न०रसजातं पित्तलधातुजमञ्जनम्। स्वनामख्याते 'रीत्यान्तु ध्मायमानायां तत्किट्टन्तु रसाञ्जनमि'त्युक्ते पदार्थे

रसाढ्य पु०रसेन मधुररसेनाढ्य। आम्रातके। रसवति त्रि०।

रसातल न० रसायास्तलम्। पातालभेदे सप्तमे भूमेरधोभागे

रसाधिक पु० रसाय द्रवाय स्वर्णादिद्रावणाय अधिकः आदीयमानत्वात्। टङ्कणे। रसेनाधिका। काकोडुम्बरिकायां स्त्री०।

रसान्तर न०अन्योरस० मयूर०नि०। प्रकृतरसादन्यस्मिन्रसे

रसाभास पु० रस इव आभासते आ+भास-अच्। अलङ्कारोक्ते 'अनौचित्यप्रवृत्तत्वे आभासो रसभावयोरि'त्युक्ते पश्वादिपरनायकगतशृङ्गारादौ रसे। [अम्लवेतसे पु०।

रसाम्ल न० रसेनाम्लम्। वृक्षाम्ले, चुक्रे च (चुकापालङ्)

रसायन न० रसस्यायनमिव। तक्रे कथ्याम्, विषभेदे वैद्यक प्रसिद्धे औषधभेदे च गरुडे, विडङ्गे च पु०।

रसायनफला स्त्री० रसायनमौषधविशेष इव फलं व्याधि घातकं यस्याः। हरितक्याम्।

रसायनश्रेष्ठ पु० रसायनेषु औषधभेदेषु श्रेष्ठः। पारदे।

राजक न० राज्ञां समूहः कञ् । नृपसमुदाये । राजैव कन् ।
नृपे पु० । राज-ण्वुल् । दीप्तिमति त्रि० ।
राजकल्प पु० ईषदूनसमाप्तो राजा राजन्+कल्पप् । राजतुल्ये
राजकदम्ब पु० कदम्बानां राजा राजद० पर० । कदम्बभेदे ।
राजकर्कटी स्त्री० राजते राज-अच् कर्म० । चीनाकर्कट्याम्
राजकशेरु पु० कशेरूणाम् राजा राजद० । भद्रमुस्तायाम् ।
राजकीय त्रि० राज्ञ इदम् छ कुक् च । राजसम्बन्धिकार्य्यादौ
राजकुमार पु० राज्ञः कुमारः । अप्राप्तवयस्के युवराज-
कार्य्यानारूढे राजपुत्रे ।
राजकुष्माण्ड पु० राज्ञः कुष्माण्ड इव प्रियत्वात् । वार्त्ताक्याम्
राजकोषातकी स्त्री० राजप्रिया कोषातकी । (धियाभिङ्गा)
लताभेदे । [कन् । राजसर्षपे (राइसर्षा) ।
राजक्षवक पु० क्षवत्यनेन क्षु-अप् राजते राज-अच् कर्म०
राजखर्ज्जूरी स्त्री० राजप्रिया खर्ज्जूरी । खर्ज्जूरीभेदे ।
राजगिरि पु० राजाख्यो गिरिः । मगधस्थे पर्व्वतभेदे ।
राजघ त्रि० राजानं हन्ति हन-क नि० राजहन्तरि, तीक्ष्णे च
'ररास तीरजनया स राजघ' इति नैषधम् ।
राजजम्बू स्त्री० राज्ञः जम्बूरिव । पिण्डखर्ज्जूरे राजते
अच् कर्म० । महाजम्बाम् ।
राजज(य)क्ष्मन् पु० राज्ञःचन्द्रस्य क्षयकारको ज(य)क्ष्मा ।
रोगभेदे 'राजज(य)क्ष्मेव रोगाणामि'ति माघः ।
राजतरु पु० तरूणां राजा राजद० नि० । कर्णिकारवृक्षे ।
राजताल पु० राज्ञस्ताल इव प्रियः । गुवाकवृक्षे । स्त्रीत्वमपि
ङीप् । 'राजतालीवनध्वनिरि'ति रघुः । [स्विदन्तद्वये ।
राजदन्त पु० दन्तानां राजा पर नि० ऊर्द्धपङ्क्तिस्थे मध्यद-
राजदेशीय पु० ईषदसमाप्तो राजा राजन्+देशीयर् । राज-
तुल्ये राजकल्पे । [राजधत्तूरकोऽप्यत्र पु० ।
राजधुस्तूरक पु० धुस्तूराणां राजा राज० पर० कन् । वृहद्धुस्तूरे
राजधर्म्म पु० राज्ञो धर्म्मः । राज्ञामवश्यकर्त्तव्ये प्रजापाल-
नादौ कर्म्मणि । [ङीप् । राजावासे महानगर्य्याम् ।
राजधानी स्त्री० राजा धीयतेऽस्या धा-आधारे ल्युट्
राजधान्य न० धान्येषु राजा पर० । (श्यामा) श्यामाकधान्ये
राजन् पु० राज-कनिन् । नृपे, चन्द्रे, यक्षे, क्षत्रिये, वक्षे,
इन्द्रे, च । पूर्व्वपदस्थः उत्तरपदस्यच सम भ्याहृतपदार्थ-
श्रेष्ठ वाचक । यथा राजमाष मुनिराज इत्यादि ।
राजनीति स्त्री० राज्ञां नीतिः । राजधर्मे सामाद्युपाये,
तत्प्रतिपादके-शास्त्रे च ।
राजन्य पु० राज्ञोऽपत्यम् यत्, राज-अन्य वा । क्षत्रिये राज-
पुत्रे, अग्नौ, क्षीरिकावृक्षे च । [समूहे
राजन्यक न० राजन्यानां क्षत्रियाणां समूहः कञ् । क्षत्रिय
राजवत् त्रि० प्रशस्तो राजाऽस्त्यस्य प्राशस्त्ये मतुप् मस्य
वः । सुन्दरराजवति देशे । [स्त्री० ङीप् ।
राजपटोल पु० राजप्रियः पटोलः । पटोले । मधुरपटोल्यां
राजपट्ट पु० राज्ञः पट्ट इव । मणिभेदे ।
राजपथ पु० पथां राजा राजगमनयोग्यो वा पन्थाः अच् ।
'धनूंषि दश विस्तारे श्रीमान् राजपथः स्मृतः' । नृवाजि-
रथनागानामसंबाधसुसञ्चर' इत्युक्ते राजमार्गे । [पलाण्डौ
राजपलाण्डु पु० पलाण्डूनां राजा श्रेष्ठत्वात् पर० । रक्तवर्ण-
राजपीलु पु० राजप्रियः पीलुः । महापीलुवृक्षे ।
राजपुत्र पु० राज्ञश्चन्द्रस्य, नृपस्य वा पुत्रः । बुधग्रहे, नृप-
कुमारे वर्णसङ्करभेदे (रजपुत) 'वैश्यादम्बष्ठकन्यायां राज
पुत्रस्य सम्भव' इति पराशरः ।
राजपुत्री स्त्री० राज्ञश्चन्द्रस्य पुत्रीव । कटुतुम्बाम् रेणुकायां
नृपरीतौ, मालत्याञ्च । ङीप० । नृपकन्यायाम् ।
राजपुष्प पु० राजा चन्द्र इव शुभ्रत्वात् पुष्पमस्य । नागकेशर
वृक्षे । करुणीवृक्षे स्त्री० ङीप् ।
राजफणिज्झक पु० राज-अच् कर्म० । नागरङ्गवृक्षे ।
राजफल न० राजप्रियं फलम् । पटोले । राजप्रियं
फलमस्याः । जम्ब्वाम् स्त्री० टाप् ।
राजबदर न० राज्ञो बदरमिव प्रियत्वात् । रक्तामलके बद-
राणां राजा राजद० प० । उत्तमकोले पु० ।
राजभद्रक पु० राज्ञो भद्रं यस्मात् कप् । कुष्ठे,(कुड) निम्बे,
पारिभद्रवृक्षे च । [धर्मे राजत्वे ।
राजभूय न० राज्ञो भावः राजन्+भू-क्यप् । राज्ञोऽसाधारण
राजभोग्य न० राज्ञा भोक्तुं योग्यम् भुज-ण्यत् कुत्वम् ।
जातीकोषे, प्रियालवृक्षे पु० । नृपतेर्भोग्यवस्तुमात्रे त्रि०
राजमार्ग पु० राजयोग्यः मार्गः । राजपथे । [व्रीहिभेदे ।
राजमाष पु० माषेषु कलायेषु राजा श्रेष्ठत्वात् । (बरवटी)
राजमुद्ग पु० मुद्गेषु राजा प० नि० । (सुगानि) मुद्गभेदे ।
राजरङ्ग न० राजयोग्यं रङ्गम् । रजते ।
राजराज पु० राज्ञामपि राजा प्रभूतधनत्वात् टच् समा० ।
कुवेरे, सार्व्वभौमनृपे, चन्द्रे च । [श्रेष्ठे, यतात्मनि नृपे च
राजर्षि पु० राजा ऋषिरिव श्रेष्ठत्वात् संयतत्वाच्च । राज-
राजवंश्य त्रि० राजवंशे भवः यत् । राजवंशोद्भवे । जातिभेदे पु०
राजवर्त्मन् न० राजयोग्यं वर्त्म । प्रागुक्तलक्षणे राजपथे ।
इत० राज्ञ० कर्त्तव्यकर्म्मणि च ।

**रात्रि(त्रि)चर** पु० रात्रौ चरति चर-अच् वा सुम् । राक्षसे, तज्जातिस्त्रियां स्त्री० ङीप् ।
**रात्रिपुष्प** न० रात्रौ पुष्प्यति पुष्प-अच् ७त० । उत्पले ।
**रात्रिमणि** पु० रात्रौ मणिरिव दीप्तिमत्त्वात् । चन्द्रे ।
**रात्रिवासस्** न० रात्रेर्वास इवाच्छादकम् । अन्धकारे । रात्रौ परिधेयं वासः शाक० । रात्रौ परिधेये वस्त्रे ।
**रात्रिविगम** पु०६त०। रजन्यवसाने तदुपलक्षिते प्रभातकाले च
**रात्रिहास** पु० रात्रेर्हास इव शुभ्रत्वात् । श्वेतोत्पले ।
**रात्रान्ध** त्रि० रात्रावन्ध दृष्टिक्षययुक्त । निशादृष्टिशून्ये काकादौ । रात्रौ रोगकतदृष्टिशून्ये (रातकाणा) च ।
**राद्ध** त्रि० राध-कर्त्तरि कर्मणि वा क्त । सिद्धे, पक्वे च ।
**राद्धान्त** पु० राद्धः सिद्धः अन्तो निर्णयो यस्मात् ५ब० । सिद्धान्ते संशय्य वादिदर्शितपक्षनिराकरणपूर्वकयथार्थपक्ष प्रतिपादके वाक्ये ।
**राध** सिद्धौ अक० निष्पादने, पाके च सक० स्वादि० दिवा० च पर० अनिट् । राध्नोति राध्यति अरात्सीत् अराद्ध ।
**राध** पु० राधा विशाखा तद्युक्ता पौर्णमासी अण् ङीप् राधी सा यत्र मासे पुनरण् । चान्द्रे वशाखे मासि । तत्पूर्णिमायां स्त्री०ङीप् । [णिच् । पूजने स्त्री० टाप् ।
**राधन** न० राध-ल्युट् । साधने, प्राप्तौ, तोषे च । राध-
**राधा** स्त्री०राध-अच् । विशाखानक्षत्रे रिरंसया रमणीदेहत्वेना विर्भूते गोलोकस्थे परमेश्वरार्द्धाङ्गस्वरूपे शक्तिभेदे, तत्रैव श्रीदामशापात् वृन्दावने जातायां वृषभानुसुतायां प्रधान गोपिकायाम्, कर्णस्य पालयित्र्यां मातरि च। [दयोपत्व ।
**राधाकान्त** पु० राधायाः कान्तः । श्रीकृष्णे राधावल्लभा-
**राधातनय** पु० राधायास्तनय । कर्णे स हि कन्यावस्थायां सूर्यात् कुन्तीगर्भजातस्तया च त्यक्त राधया सूतपत्न्या पालित इति भारतम् । [त्वात् ढक् । कर्णे ।
**राधेय** पु० राधाया अपत्यम् पुत्त्रत्वेन परिग्रहणेन तत्पालि
**राम** पु० रम-कर्त्तरि घञ् ण वा । परशुरामे दशरथज्येष्ठपुत्रे श्रीरामे, बलरामे च । मनोहरे. शुभे च त्रि० वास्तूके, कुष्ठे (कुड) तमालपत्रे न० । [ख्यातृणभेदे च ।
**रामकर्पूरक** पु० रामं मनोहरं कर्पूरमिव कन् । मौक्तिके,
**रामगिरि** पु० रामाश्रितः गिरिः । चित्रकूटपर्व्वते स हि रामेण वनवासगमनकाले प्रथममाश्रितः ।
**रामचन्द्र** पु० रामचन्द्र इवाह्लादकत्वात् । दशरथज्येष्ठपुत्रे श्रीरामे । [मदनवृक्षे (मयनागाछ)
**रामच्छर्द्दनक** पु० राममभिरामं छर्दयति छृद-णिच्-ण्वुल् ।
**रामजननी** स्त्री० ६त० । वसुदेवपत्न्यां रोहिण्यां, जमदग्निपत्न्यां रेणुकायां, दशरथपत्न्यां कौशल्यायाञ्च ।
**रामण** न० रमयति रम-णिच् ल्यु-ष्ट० वृद्धि । गिरिनिम्बे, तिन्दुके च (तेंट) ।
**रामणीयक** न०रमणीयस्य भाव. रमणीयमेव वा रमणीय+वुञ् । रमणीयत्वे 'मणिद्वारावलिरामणीयकमिति नैषधम् रमणीये च । [६त० । सीतायां, रेवत्याञ्च
**रामतरुणी** स्त्री० रामा अभिरामा तरुणीव । (सेओती)पुष्पे
**रामदूत** पु० रामस्य दूत. वार्त्ताहरः । हनूमति, स हि रामवार्त्तां लङ्कायां सीताया आजहार ।
**रामदूती** स्त्री० रामा अभिरामा दूतीव गन्धद्वारा प्रचारात् । तुलसीभेदे । (रामतुलसी)
**रामनवमी** स्त्री० रामस्य जन्माधारो नवमी । चैत्रशुक्लनवम्याम् । 'चैत्रे मासि नवम्यान्तु जातो रामः स्वयं हरि' रित्यगस्त्यसंहिता ।
**रामपूग** पु० रामः अभिरामः पूगः । गुवाकभेदे ।
**रामभद्र** पु० राम एव भद्रः मङ्गलदायकत्वात् । श्रीरामे 'रामेति रामचन्द्रेति रामभद्रेति वा स्मरन्निति' पुराणम्
**रामलवण** न० कर्म्म० । शाम्भरिलवणे ।
**रामवल्लभ** न० रामस्य वल्लभं प्रियम् । भूर्ज्जपत्रे तद्धि रामेण वनवासाश्रमे प्रियतया धृतम् ।
**रामशर** पु० कर्म० । शरवृक्षभेदे स हि काण्डद्वारा वाणहेतुत्वात् मनोहरः ।
**रामसख** पु० ६त० टच् । सुग्रीवे वानरराजे ।
**रामा** स्त्री०रम-णिच्कर्त्तरि घञ्। गीतादिकलाभिज्ञायां नार्य्यां नारीमात्रे,नद्याम् हिङ्गुनि,हिङ्गुले, श्वेतकण्टकार्य्यां, गृहकन्यायां, अशोके, गोरोचनायां, वालायां, गैरिके च ।
**रामायण** न० । रामस्यायनं चरितमधिकृत्य कृतोग्रन्थोऽण् । रामचरितप्रतिपादके वाल्मीकिकृते महाकाव्यभेदे ।
**रामालिङ्गनकाम** पु० रामाणाम् स्त्रीणामालिङ्गनस्य कामोऽत्र । रक्तम्लाने । [दण्डभेदे ।
**राम्भ** पु० रम्भोवेणुस्तस्य विकारोऽण् । व्रतभेदे-धार्य्य-वंशभवे
**राल** पु० रा-अलच् । सालवृक्षनिर्य्यासे (धुना) ।
**रालकार्य्य** पु० राल' कार्य्यं यस्य । सालवृक्षे ।
**राव** पु० रु-घञ् । शब्दे ।
**रावण** पु० रवणस्यापत्यम् शिवा० अण् रावयति शत्रून् णिच्-ल्यु वा, लङ्काधिपतौ राक्षसे ।
**रास** शब्दे भ्वा०आ०सक०सेट्। रासते अरासिष्ट चङि न ह्रस्वः

रिभ रवे भ्वा०पर०अक०सेट् । रेभति अरेभीत् ।
रिरंसा पु० रम-सन्-अ । रमणेच्छायाम् ।
रिख गतौ भ्वा०पर०सक० सेट् इदित् । रिङ्खति अरिङ्खीत् ।
रिश हिंसायां तु०पर०सक०अनिट् । रिशति अरिक्षत् ।
रिश्य पु० रिश्यते रिश-क्यप् । मृगभेदे ।
रिष वधे भ्वा० पर०सक०सेट् । रेषति अरेषीत् ।
रिष्ट न० रिष-क्त । मङ्गले, अशुभे च । भावे क्त । नाशे, पापे च । अशुभादिमति त्रि० । खड्गे, रक्तशिग्रौ च पु०। स्वार्थे कन् । तेषु । [रम्भे पु०
रिष्टि स्त्री० रिष-रिश-वा क्तिन् । अशुभे, खड्गभेदे च । क्तिच्
रिह वधे भ्वा०पर०सक०सेट् । रेहति अरेहीत् । [रीणः ।
री क्षरणे दि०आ०अक०अनिट् । रीयते अरेष्ट निष्ठातस्य न
री गतौ वधे च सक० रवे अक० क्र्या० प्रा० अनिट् । रिणाति अरैषीत् ।
रीठा स्त्री० रि-ठक् ठस्य नेत्वम् । रीठाकरञ्जे ।
रीठाकरञ्ज पु० कर्म० । स्वनामख्याते वृक्षे ।
रीढा स्त्री० रिह-क्त ढत्वभावः । अवज्ञायाम् ।
रीण त्रि० री-क्त । क्षरिते स्रुते ।
रीति स्त्री० री-क्तिन् । पित्तले, प्रभावे, क्षरणे, लौहकिट्टे, सीमायां,गतौ,स्वभावे,अलङ्कारोक्ते गौड्यादिरचनाभेदे च ।
रीतिक न० रीतिरिव कायति कै-क । पुष्पाञ्जने स्त्रीत्वमपि स्वार्थे कन् । पित्तले न०।
रीतिपुष्प न० रीतेः पुष्पमिव । कुसुमाञ्जने ।
रीव ग्रहणे, संवरणे च भ्वा० उ०सक०सेट् । रीवति ते अरीवीत् अरीविष्ट । चङि न ह्रस्वः ।
रु ध्वनौ अदा०प०अक०वेट् । रौति-रवीति अरावीत्-अरौषीत्
रु वधे गतौ च भ्वा० आ०सक० अनिट् । रवते अरोष्ट ।
रुक्प्रतिक्रिया स्त्री० रुजः प्रतिक्रिया प्रतिकारः प्रति+कृ-भावे श । चिकित्सायाम् ।
रुक्म न० रुच्-मन् नि० कुत्वम् । काञ्चने, धस्तूरे, लौहे, नागकेशरे च । [स्वर्णकारे जातिभेदे ।
रुक्मकारक पु० रुक्मं तन्निर्मितं भूषणं करोति कृ-ण्वुल् ।
रुक्मिन् पु०रुक्मं विद्यतेऽस्य इनि । राजभेदे । स्वर्णस्वामिनि त्रि० । रुक्मिराजकन्यायां श्रीकृष्णपत्न्यां स्त्री० ङीप् ।
रु(रू)क्ष त्रि० रुह-क्स ष० वा दीर्घः । अचिक्कणे, निःस्नेहे, कठोरे च । [अरोचिष्ट ।
रुग्ण त्रि०रुज-क्त । रोगान्विते, भुग्ने च । [अरुचत्
रुच प्रीतौ प्रकाशे च भ्वा०आ०अक०सेट् । रोचते लुङि उ०

रुचक न० रुच-क्वुन् । सर्जिकाक्षारे,माङ्गल्ये द्रव्ये, उत्कटे, अश्वभूषणे, माल्ये,सौवर्च्चले आम्लाम्लरसे, रोचनायाम्,विडङ्गे, लवणे च। बीजपूरे,दन्ते, निष्के, कपोते च पु० । [च ।
रुच्(चा) स्त्री० रुच-सम्प०क्विप् वा टाप् । दीप्तौ, शोभायां,प्रकाशे
रुचि(ची) स्त्री० रुच-कि वा ङीप् । अनुरागे, आसक्तौ, स्पृहायाम्, अभिलाषे, किरणे, शोभायां, बुभुक्षायां, गोरोचनायां च । प्रजापतिभेदे पु० ।
रुचिर त्रि०रुचिं राति ददाति रा-क। मनोहरे,सुन्दरे, मधुरे च। मूलके, कुङ्कुमे, लवङ्गे च न०। गोरोचनायाम् स्त्री० ।
रुचिराञ्जन पु० अज्यतेऽनेन अनुज-करणे ल्युट् रुचिरशोभायुक्तोऽञ्जनः । शोभाञ्जने ।
रुच्य त्रि० रुचये हितः यत् । सुन्दरे, रुचिकरे च । सौवर्च्चले न० । पत्यौ, कतकवृक्षे, शालिधान्ये च पु० ।
रुच्यकन्द पु० रुच्यः रुचिकरः कन्दो मूलमस्य । सूरणे (ओल)
रुज भञ्जने तु०प०सक०अनिट् । रुजति अरौक्षीत् निष्ठातस्य नः । रुग्णः ।
रुज हिंसायां चु० उभ०सक०सेट् । रोजयति ते अरूरुजत्
रुज्(जा) स्त्री० रुज-सम्प० क्विप् वा टाप् रुज-अङ् वा । रोगे, भङ्गे, मेष्यां, कुष्ठे च (कुड) ।
रुजाकर न० रुजां रोगं करोति कृ-अच् । कर्मरङ्गफले (कामराङ्गा) रोगकारके त्रि० ।
रुट चौर्य्ये भ्वा०पर०सक०सेट् इदित् । रुण्टति अरुण्टीत् ।
रुट रोषे सक०दीप्तौ०अक०चु०उ०सेट् । रोटयति ते अरूरुटत् त
रुट दीप्तौ प्रतिघाते च भ्वा० आ०अक० सेट् । रोटते लुङि उभ० अरुटत् अरोटिष्ट । [ठिष्ट
रुठ उपघाते भ्वा०पर०सक०सेट् । रोठति अरोठीत् । [अरो
रुठ प्रतीघाते भ्वा०आ०सक०सेट् । रोठते लुङि उ० अरुठत्
रुठ गतौ चौर्य्ये सक० मन्दीभावे खञ्जीभावे च अक०भ्वा० पर० सेट् इदित् । रुण्ठति अरुण्ठीत् ।
रुण्ड पु० रुटि-अच् ष० ठस्य डः । मूर्द्धशून्ये देहे कबन्धे ।
रुत न० रु-क्त । रवे पशुपक्षिप्रभृतीनां शब्दे । [अरोदीत् ।
रुद रोदने अदा० पर० रुदा० अक०सेट् । रोदिति अरुदत्
रुदित न० रुद-भावे क्त । क्रन्दने । कर्त्तरि क्त । कृतरोदने त्रि०
रुद्ध त्रि० रुध-क्त । आवरणादिना वेष्टिते कृतगतिरोधे च ।
रुद्र पु० रोदिति रुद-रक् । शिवमूर्त्तिभेदे 'सोऽरोदीत् यदरोदीत् तत् रुद्रस्य रुद्रत्वमि'ति श्रुतिः । अजैकपादहिर्बुध्नो विरूपाक्षः सुरेश्वरः । जयन्तो बहुरूपश्च त्र्यम्बकोऽपराजितः । वैवस्वतश्च सावित्रो हरो रुद्रा इति स्मृता इत्युक्तेषु

एकादशसु शिवमूर्त्तिभेदेषु ।
रुद्रज पु० रुद्रात् जायते जन ड । शिववीर्य्यजाते पारदे ।
रुद्रजटा स्त्री रुद्रस्य जटेव पिङ्गलत्वात् जटिलत्वात् । स्वनाम ख्याते लताभेदे ।
रुद्रपत्नी स्त्री ६त० । दुर्गायाम् अतस्याञ्च (अतसिना)
रुद्रप्रिया स्त्री० ६त० हरितक्याम् दुर्गायाञ्च ।
रुद्रविंशति स्त्री रुद्रसम्बन्धिका विंशति । प्रभवादिषु षष्टिवत्सरेषु अन्तिमेषु विंशतिवर्षेषु ।
रुद्रसावर्णि पु चतुर्दशसु मनुषु मध्ये, द्वादशे मनौ ।
रुद्राक्रीड न० रुद्रस्याक्रीडा यत्र । श्मशाने ।
रुद्राक्ष पु० रुद्रस्याक्षीव यस्य । स्वनामख्याते वृक्षे ।
रुद्राणी स्त्री०रुद्रस्य पत्नी रुद्र+ङीप् आनुक् च । शिवपत्न्याम्
रुद्रारि पु० रुद्र अरिर्यस्य । कामदेवे ।
रुद्रावास पु०६त । कैलासे, काश्याम् श्मशाने च ।
रुध कामे दि०आ०सक अनिट् प्रायेणानुपूर्व्व । अनुरुध्यते अन्वरुद्ध ।   [अरौत्सीत्
रुध आवरणे रु०उभ०सक अनिट् । रुणद्धि रुन्धे अरुधत्
रुधिर न० रुध-किरच् । शरीरस्थे रसपाकजन्ये धातुभेदे । मङ्गलग्रहे' कुङ्कुमे रक्तवर्णे च पु तद्वर्णवति त्रि० ।
रुप आकुलीकरणे दि०पर०सक० सेट् । रुप्यति अरुपत् । अरोपीत् ।   [भेदे च
रुमा स्त्री रु-मक् । सुग्रीववानरभार्य्यायाम् लवणस्थाने देश
रुरु पु रु-क्रु । मृगभेदे ।   [रु रुक् । रुरुकोलत
रुवु पु रु-उ । एरण्डवृक्षे । कन् । तत्र, रौरवके च पु० ।
रुश हिंसायां तु०पर०सक०अनिट् । रुशति अरुक्षत् ।
रुष वधे भ्वा०पर०सक०सेट् । रोषति अरोषीत् ।
रुष क्रोधे दि पर०सक सेट् । रुष्यति अरुषत् अरोषीत् ।
रुष क्रोधे चु उभ सक०सेट् । रोषयति ते अरुरुषत् त ।
रुष(षा) स्त्री० रुष सम०क्विप् वा टाप् । क्रोधे ।
रुषित त्रि रुष क्त वा इट् । क्रोधयुक्ते हृदभावयते रुरोपत
रुह जन्मे भ्वा पर सक अनिट् । रोहति अरुहत् । अरुक्षत् ।
रुह त्रि रुह क । जाते । दूर्वायां स्त्री उत्तरपदस्थ तत्राद्- भूत त्रि०यथा भूरुह वारिरुहम् ।
रूक्ष पारुष्ये कठोरतायाम् स्निग्धेतरे च । चु० आ० सक सेट् । रूक्षयति ते अरुरूक्षत् त ।   [दन्तीवृक्षे स्त्री० ।
रूक्ष त्रि० रूक्ष अच । अचिक्कणे, स्नेहशून्ये च । वृक्षे पु ।
रूक्षगन्ध पु रूक्षो गन्धो यस्य । गुग्गुलौ ।
रूक्षदर्भ पु०कर्म० । हरिदर्भे कुशभेदे ।

रूक्षपत्र पु० रूक्ष पत्रमस्य ( शाखोटवृक्षे ।
रूक्षप्रिय पु० रूक्ष प्रिय यस्य । ऋषभौषधे ।
रूढ त्रि०रुह-क्त । जाते प्रसिद्धे च 'रूढिरस्यास्ति अच् । प्रकृति प्रत्ययार्थमनपेक्ष्य समुदायशक्त्यार्थबोधके शब्दे यथा । घटः गौरित्यादि । शिल्प शब्देन समुदायशक्त्यार्थस्य बोधने च
रूढि स्त्री रुह-क्तिन् । जन्मनि, प्रसिद्धौ, प्रकृतिप्रत्ययार्थमन०
रूप रूपान्वितकरणे अक०चुरा उभ०सक० सेट् । रूपयति ते अरुरूपत् त ।
रूप न रूप क भावे अच् वा । स्वभावे, सौन्दर्य्ये, पशौ,नाम्नि, शब्दे, श्लोकाद्यावृत्तौ दृश्यकाव्ये नाटकादौ, श्लोके, शब्द धातूना विभक्तियोगेन निष्पन्नशब्दे, शुक्लादिवर्णे च तद्वति त्रि० । उत्तरपदस्य सदृशार्थे त्रि० यथा पितृरूपस्तनय मातृरूपा कन्या । एकसंख्यान्विते न० रूप भवेत् स्यात् परिपूर्त्तिकाय' इति लीलावती । 'एकाद्यक्षं शोधयेदन्य पक्षात् रूपाण्यन्यस्येतरस्माच्च पक्षादिति बीजगणितोक्ते अव्यक्तराशिसम्बन्धिरहितव्यक्तसंख्यान्विते च ।
रूपक न रूपयत्यल रूप-ण्वुल् कन् । अभिनयप्रदर्शके दृश्य- काव्यप्रभेदे,रूपकस्यास्य गुण् । मूर्त्ते त्रि रूप+स्वार्थे कन् । शुक्लादिवर्णे आकारे च रूपक रूपितारोपादित्यलङ्का रोक्ते अर्थालङ्कारभेदे, मुद्राभेदपरिमाणे, रजते च ।
रूपधारिन् त्रि० रूप धारयति धारि-णिनि । रूपवति, सौन्दर्य्यान्विते, वेशान्तरधारिणि नटे च ।
रूपवत् त्रि०रूप+मतुप् मस्य व । शुक्लादिरूपविशिष्टे,सौन्द० र्य्ययुक्ते, आकारविशिष्टे च ।   [वेश्यायाम् ।
रूपाजीवा स्त्री० रूप सौन्दर्य्यमाजीवति आ+जीव अच् ।
रूपिका स्त्री रूपमस्त्यस्य ठन् । श्वेतार्कवृक्षे ।
रूप्य न रूपाय आहन्यते स्वर्णादि यत् । अलङ्काराऽनि- र्म्माणाय आहन्यमाने स्वर्णे रजते च स्वाय यत् । रजतमात्रे । सुन्दरे त्रि ।   [रूपत् त ।
रूप्याध्यक्ष पु रूप्येषु अध्यक्ष । कोषाध्यक्षे ।   [ति अरू-
रूष धूल्यादिनामिश्रीकरणे अद चु०उभ०सक० सेट् । रूषयति
रूषक पु० रूष-ण्वुल् । वासके वृक्षे ।
रूषित त्रि रूष क्त । धूल्यादिभिर्मिश्रिते अचिक्कणीकृते च
रे अव्य ०रा के डिच् । नीचाह्वाने सम्बोधने ।   [शुम्भ
रेक शङ्कायां भ्वा० आ०स० सेट् । रेकते अरेकिष्ट । अहि न
रेक पु रिच घञ् । विरेचने । रेक अच । शङ्कायां, नीचे भेके च । रेक च । सन्देहे स्त्री० टाप् ।
रेखा स्त्री० लिख अच् लस्य र । अल्पे, छद्मे, आभोगे,

बिन्दुयुक्तके दण्डाकारेण चिह्नभेदे, मङ्क्तौ च ।

**रेचक** न० रेचयति रिच-णिच्-ण्वुल् । कङ्कुष्ठे, यवक्षारे, जय पाले, तिलकवृक्षे च । पुरीषनिःसारणकारके त्रि० ।

**रेचन** न० रिच्-ल्युट् । मलभेदनेन तनुनिःसारणे ।

**रेचनक** पु० रिच्यतेऽनेन ल्युट् संज्ञायां कन् । कम्पिल्लवृक्षे । कनभावे वा ङीप् । रेचनी रेचनाप्यत्र स्त्री० ।

**रेची** स्त्री०रेचयति अच् गौ० ङीप् । कम्पिल्लवृक्षे, अङ्कोटे च ।

**रेज** दीप्तौ भ्वा० आत्म० अक० सेट् । रेजते अरेजिष्ट । चङि न ह्रस्वः । [अरेरेटिट । चङि न ह्रस्वः

**रेट** याचने वाचि च द्वि० भ्वा० उभ०सेट् । रेटति ते अरेटीत्

**रेणु** पु०स्त्री० रि-णु । परागे, धूलौ, पांशौ च । पर्पटे पु० ।

**रेणुका** स्त्री० रेणुना कायति कै-क । मरिचाकृतौ सुगन्धि-द्रव्ये, जमदग्निपत्न्यां परशुराममातरि च ।

**रेणुकासुत** पु०६त० । परशुरामे रेणुकात्मजादयोऽप्यत्र ।

**रेणुरूषित** पु० रेणुभिः रूषितः । गर्दभे । धूलिधूसरे त्रि०

**रेणुसार** पु० रेणुरिव सारोऽस्य । कर्पूरे । स्वार्थे कन् । तत्रैव

**रेतस्** न० री-असुन् तुट् च । पुंसो रक्तादिपरिपाकजन्ये देहस्थे मज्जजातके चरमधातौ शुक्रे, शिववीर्ये पारदे च ।

**रेप** शब्दे अव्य० गतौ सक०भ्वा०आत्म०सेट् । रेपते अरेपिष्ट चङि न ह्रस्वः ।

**रेप** त्रि० रेप-अच् । निन्दिते, क्रूरे, कृपणे च ।

**रेफ** पु० र+इफ । रकारात्मके वर्णे । रिफ-अच् । कुत्सिते त्रि० असुन् रेफम् । क्रूरे, अधमे, दुष्टे कृपणे च त्रि० ।

**रेव(व)** गतौ सक० प्लुतौ अक०भ्वा०आ०सेट् । रेव(ब)ते अरे वि(बि)ष्ट । चङि न ह्रस्वः ।

**रेभ** शब्दे भ्वा०आत्म०अक०सेट् । रेभते अरेभिष्ट । चङि न ह्रस्वः ।

**रेवत** पु रेव-अतच् । जम्बीरे आरग्वधे बलराभश्वशुरे राजभेदे

**रेवती** स्त्री० रेवतस्यापत्यम् इञ् । रेवतराजकन्यायां बलदेव-पत्न्याम् । रेव-अतच् गौ० ङीप् । अश्विन्यवधिक० सप्तविं-शतिसंख्याते नक्षत्रे, तत्संख्यायां, मातृकाभेदे स्त्रीगव्याम्, नदीभेदे, दुर्गायाञ्च । [द्वित० । रेवतीशाद्योऽप्यत्र

**रेवतीरमण** पु० रेवतीं रमयति रम-णिच्-ल्यु । बलरामे ।

**रेवन्त** पु० रेव-झच् । गुह्यकाधिपतौ सूर्य्यपुत्रभेदे ।

**रेवा** स्त्री० रेव-अच् । नर्म्मदाख्यनद्याम् ।

**रेष** हेषायां (घोटकशब्दे) भ्वा०आत्म०अक०सेट् । रेषते अरेषिष्ट । चङि न ह्रस्वः ।

**रै** शब्दे भ्वा०पर०अक०अनिट् । रायति अरासीत् ।

**रै** पु० रा-डै । धने, स्वर्णे च ।

**रैत्य** त्रि० रीतेः पित्तलस्य विकारः रीति+ष्यञ् । पित्तल-मये पात्रादौ ।

**रैवत** पु० रेवत्या नद्या अदूरो देशः अण् । द्वारिकासमीपस्थे पर्व्वतभेदे सर्वान्त्युद्धे, शिवे, दैत्यभेदे च । रेवत्यां भव अण् । पञ्चमे मनुषु मनुभेदे ।

**रैवतक** पु० रैवतएव कन् । रैवतपर्व्वते ।

**रोक** न०रुच-कन् तस्य नेत्वम् । छिद्रे,'तन्मे रोकं च रोक्मेति' श्रुतिः नौकायाम् च । रुच-घञ् त्रि० चलम् । क्रयभेदे, दीप्तौ च पु० । [(कृह)

**रोग** पु० रुज-घञ् । धातुवैषम्यजाते व्याधौ, कुष्ठौषधे च

**रोगघ्न** न० रोगं हन्ति हन-क । औषधे, वैद्यकशास्त्रे च रोगनाशके त्रि० ।

**रोगराज** पु०६त० टच् समा० । राजयक्ष्मव्याधौ ।

**रोगलक्षण** न० रोगो लक्ष्यते ज्ञायतेऽनेन लक्ष-ल्युट् । रोगा नुमापके धातुवैषम्यचेतके चिह्नभेदे ।

**रोगशिला** स्त्री० रोगाय तन्निवृत्तये शिला । मनःशिलायाम्

**रोगह** न० रोगं हन्ति हन-ड । औषधे, हन क्विप् रोग-हन् । रोगहन्तरि-वैद्यादौ त्रि० ।

**रोगहर** त्रि० रोगं हरति हृ-अच् । व्याधिनाशके द्रव्यादौ

**रोगहारिन्** पु० रोगं हरति हृ-णिनि । चिकित्सके वैद्ये

**रोगितरु** पु० रोगिप्रियस्तरुः शाक० । अशोकवृक्षे ।

**रोगिन्** त्रि० रोग+अस्त्यर्थे इनि । व्याधियुक्ते स्त्रियां ङीप् ।

**रोचन** पु० रुच-ल्यु रोचयति वा ल्यु । कूटशाल्मलिवृक्षे श्वेतशोभाञ्जने, मन्दारवृक्षे, करञ्जे, अङ्कोटे, आरग्वधे दाडिमे च । उत्तमया नार्य्यां, रक्तकह्लारे गोपित्ते,गोरो-चनायाञ्च स्त्री० टाप् । रुचिकारके त्रि० ।

**रोचनक** पु० रोचनाय रुचिजननाय कायति कै-क । जम्बीरे

**रोचनफल** पु० रोचनं रुचिकरं फलमस्य । बीजपूरके जम्बी रभेदे, चिर्भट्यां स्त्री० ।

**रोचना** स्त्री० रोचयतीति कर्त्तरि संज्ञायां ल्युट् अजा० टाप् मनःशिलायाम्, गोरोचनायां,आमलक्याम्, श्वेतत्रिवृति, गन्धद्रव्यभेदे (गुडारोचना) च । [त्रि०

**रोचमान** पु०रुच-शानच् । अश्वग्रीवास्थरोमावर्त्ते । रुचियुक्ते

**रोचिष्णु** त्रि० रुच-इष्णुच् । दीप्तिशीले ।

**रोचिस्** न० रुच-इसुन् । प्रभायाम् ।

**रोची** स्त्री० रोचयति रुच्-णिच्-अच् गौ०ङीप् । हिल मोचिकायाम् । [(कटी)

**रोटिका** स्त्री० रुट-ण्वुल् । गोधूमादिचूर्णनिर्मिते पिष्टकभेदे

**रौहितेय** पु० रोहितएव स्वार्थे ढ । रोहितकवृक्षे ।

**रौहिन्** पु० रोहति पुनश्छिन्नोऽपि प्रादुर्भवति रुह, णिनि । रोहितकवृक्षे । रोहणवति त्रि० । स्त्रियां ङीप् ।

**रौहिष** पु०रुह-इषन् । स्वनामख्याते वृक्षे ।

**रौक्ष्य** न० रूक्षस्य भाव ष्यञ् । पारुष्ये अचिक्कणतायाञ्च ।

**रौचनिक** त्रि० रोचनया रक्तः अण् । रोचनया रक्ते ।

**रौट**(ड) अनादरे भ्वा० पर०सक० सेट् । रौटति अरौटीत् । चङि न ह्रस्वः ।

**रौद्र** न०रुद्रो देवतास्य अण् । सूर्य्यतापे,उग्ररसे च । तद्वति, भीषणे च त्रि० । दुर्गायां रुद्रजटावृक्षे च स्त्री० ङीप् ।

**रौप्य** न० रूप्यमेव अण् । रजते । [तत्वेनार्थे

**रौम** न०रुमायां नद्यां भवः अण् । शाम्भरिलवणे । स्वार्थे कन्

**रौरव** पु० रोरूयतेऽत्र रु-यङ्-क्विप् तेन प्राप्यं तस्येदं वा अण् । नरकभेदे लवणं हृहृदभिधाने । चञ्चले,धूर्त्ते, घोरे च पु०

**रौहिण** पु० रुह-इनन् स्वार्थे अण् । चन्दनवृक्षे ।

**रौहिणेय** पु० रोहिण्या भवः ढक् । बुधग्रहे, बलरामे च । मरकतमणौ न० । गोवत्से द्वि० ।

**रौहिष** न० रुह-इषन् स्वार्थेऽण् । मृगभेदे रोहितमत्स्ये च दूर्वायां, रोहिषघ्नदायाञ्च स्त्री० ङीप् ।

## ल

**ल** पु० ला-क । इन्द्रे, तन्त्रोक्ते भूमिदेवताके मन्त्रभेदे न०

**लक** आस्वादे प्राप्तौ च चु०उ०स०सेट् । लाकयति ते अलीलकत् त

**लकच** पु० लक-अचन् । लिकुचवृक्षे (मादार) ।

**लकुच** पु० लक-उचन् । (मादार) वृक्षभेदे ।

**लक्तक** पु० लक-क्त नि० संज्ञायां कन् । अलक्तके (आलता)

**लक्तकर्म्मन्** पु० लक्तं करोति कृ-मनिन् । रक्तवर्णलोध्रे ।

**लक्ष** दर्शने,अङ्कने च चु०उभ०स०सेट् । लक्षयति ते अललक्षत् त

**लक्ष** न० लक्ष-अच् । पदे, चिह्ने, व्याजे,शरव्ये च । दशायुतसंख्यायां स्त्री० न० । [बोधके शब्दे ।

**लक्षक** त्रि० लक्षयति लक्षणयार्थम् लक्ष-ण्वुल् । लक्षणयार्थ

**लक्षण** न० लक्ष्यतेऽनेन लक्ष-करणे ल्युट् । इतरभेदानुमापके चिह्ने,यथा पृथिव्या गन्धोलक्षणं स हि पृथिवीं परस्मात् भिन्नतया अनुमापयति । 'स्वरूपं तटस्थं' द्विधा लक्षणं स्यात् स्वरूपे प्रविष्टं स्वरूपादिभिन्न'मित्युक्ते स्वरूपलक्षणे तटस्थलक्षणे च यथा आकाशो विभुम् सच्चिदानन्दो ब्रह्मेति । काकवत् गृहम्, जगज्जन्मादिकर्तृ ब्रह्मेति । स्वरूपे,यथा घटस्वरूपं वस्तु । नाम्नि,व्यवहारोपयोगिनि चिह्ने च । कर्त्तरि ल्यु । स्वरूपप्रतिपादके 'चोदनालक्षणार्थोधर्म्म'इति जैमिनिसूत्रम् चोदना विधिवाक्यमेव लक्षणं स्वरूपज्ञापिका यस्य तादृशोऽर्थ धर्म इति तदर्थः । शब्दसाधुताप्रतिपादके व्याकरणादिसूत्रे च न० 'लक्षणं त्वनभिधाना'मि'ति । कर्म्मणि ल्युट् । प्रतिपाद्ये यथा 'इत्थं द्वादशलक्षणीति माधवीयन्यायमाला द्वादशानां लक्षणानां प्रतिपाद्यविषयाणां समाहारः इति तदर्थः । लक्ष-युच् । शब्दनिष्ठवाच्यार्थसंबन्धार्थबोधकतारूपे 'इत्थ्य दृवाधे तद्योगे यथान्योऽर्थं प्रतीयते । रूढेः प्रयोजनाद्वापि लक्षणा शक्तिरर्पिते'त्युक्ते, वृत्तिभेदे स्त्री० । यथा गङ्गायां घोषः प्रतिवस्तीत्यादौ गङ्गाशब्दस्य जलप्रवाहरूपे स्वार्थेऽन्वयासम्भवात् तत्सम्बद्धतीरादिबोधकता । सा च बहुधा विस्तरो वृहदभिधाने । लक्ष्मणे,सारसपक्षिणि च पु० तत्स्त्रियां स्त्री०

**लक्षित** त्रि० लक्ष-कर्म्मणि क्त । लक्षणया बोधितेऽर्थे, ज्ञाते, अनुमिते च कर्त्तरि क्त । लक्षणाश्रये, लक्षकशब्दे च ।

**लक्ष्मन्** न० लक्ष-मनिन् । चिह्ने,प्रधाने च । स्वार्थे अण् पु० । सारसपक्षिणि दशरथपत्न्यां सुमित्रायाः ज्येष्ठात्मजे च पु० । श्वेतकण्टकार्य्यां, सारसपक्षिस्त्रियाम्, औषधभेदे च स्त्री०

**लक्ष्मी** स्त्री० लक्ष-ई-मुट् च । शोभायां,कान्तौ,विष्णोः-पत्न्याम्, सम्पत्तौ, ऋद्ध्यौषधे, वृद्धिनामौषधे, फलिनीवृक्षे, स्थलपद्मिन्याम्, हरिद्रायां, शम्यां, शुक्तायां, द्रव्ये च ।

**लक्ष्मीकान्त** पु ६त० । विष्णौ, राजनि च लक्ष्मीपत्यादयोऽप्यत्र । 'विहाय लक्ष्मीपतिलक्ष्मे'ति भारविः ।

**लक्ष्मीपुत्र** पु०६त० । कामदेवे, गन्धर्वभेदे, अश्वे, कुशे च ।

**लक्ष्मीवत्** पु० लक्ष्मीः शोभास्त्यस्य मतुप् मस्य वः । पनसे श्रीयुक्ते त्रि० स्त्रियां ङीप् । [चन्द्रे, उच्चैःश्रवसि च

**लक्ष्मीसहज** पु० लक्ष्म्या सह क्षीराब्धौ जायते जन-ड ।

**लक्ष्य** न० लक्ष-यत् । वेधार्थमुद्देश्यमाने शरव्ये । लक्षणया बोध्येऽर्थे, उद्देश्ये, ज्ञेये, अनुमेये च त्रि० ।

**लख** गतौ भ्वा०पर०सक सेट् । लखति । अलखीत्–अलाखीत् इदित्त्वम् लङ्खति अलङ्खीत् ।

**लग** खञ्जीभावे अक गतौ भ्वा०सक०प०सेट् । लङ्गति अलङ्गीत्

**लग** सङ्गे भ्वा० पर०सक०सेट् एदित् । लगति अलगीत् घटा० लगयति । 'छायेव तस्या लगति स्म'ेति नैषधम् ।

**लग** स्वादे प्राप्तौ च सक०चु०उभ०सेट् । लागयति ते अलीलगत् त

**लगित** त्रि० लग-क्त । संसक्ते ।

**लगुड़**(ल)(र) पु० लग-उलच् लस्य डरौ वा । दण्डाकारे काष्ठनिर्म्मिते पदार्थे (लाटी) ।

निर्म्मिते (लाडु) मिष्टान्नभेदे 'पृथुलड्डुकमत्तनीति' नैषधम् स्त्रीत्वमपि ।

**लगड्** पु० लडि-रन् । (लगडन) इति ख्याते देशभेदे ।

**लत** आघाते सौ० पर०सक०सेट् । लतति अलातीत् अलतीत्

**लता** स्त्री० लत-अच् । शाखारहिते गुडूच्यादौ ।

**लताकरञ्ज** पु० लतारूपः करञ्जः । करञ्जभेदे ।

**लताकस्तूरिका** स्त्री० लतायां कस्तूर्य्या इव सुगन्धो यस्याः । कस्तूरीगन्धयुक्तपत्रवत्याम् लतायाम् ।

**लतातरु** पु० लतेव दीर्घस्तरुः । तालवृक्षे, शालवृक्षे, नागरङ्गवृक्षे च । लताद्रुमादयोऽप्यत्र । [लताभेदे ।

**लतापनस** पु० लतायां पनसमिव स्थूलं फलमस्य । (तरमुज)

**लतावृक्षा** स्त्री० लतेव विस्तीर्णा वृक्षा । (पिड़िङ्ग) शाकभेदे

**लताफल** न० लतायां फलमस्य । पटोले ।

**लतामरुत्** स्त्री० लतायां मरुत् वायुर्य्यस्याः । वृक्कायां तल्लतासेवने हि वायुवृद्धिरिति वैद्यकम् ।

**लतायष्टि** स्त्री० लतापि यष्टिरिव । मञ्जिष्ठायाम् ।

**लतायावक** न० लतायां यावकमिव । प्रवाले ।

**लतार्क** पु० लतयाऽर्क इव । हरितपलाण्डौ ।

**लप** कथने भ्वा०पर द्विक सेट् । लपति । अलापीत्-अलपीत् । चङि न ह्रस्वः । [ल्युट् । कथने ।

**लपन** न० लप्यते उच्यतेऽनेन लप-करणे ल्युट् । मुखे । भावे

**लपित** त्रि० लप-कर्म्मणि-क्त । कथिते । भावे क्त । कथने न० ।

**लब** आलम्बने सक०शब्दे अक०भ्वा०आत्म० सेट् इदित् । लम्बते अलम्बिष्ट ।

**लब्ध** त्रि० लभ-कर्म्मणि क्त । प्राप्ते ।

**लब्धवर्ण** पु०लब्धो वर्णो वर्णनं प्रशंसा ज्ञानवत्त्वेन येन । पण्डिते

**लभ** शब्दे अक०भ्वा० आत्म० सेट् इदित् । लम्भते अलम्भिष्ट

**लभ** प्राप्तौ सक०भ्वा०आत्म०अनिट् । लभते । अलब्ध । लिप्सुः

**लमक** पु० रम वुन् रस्य लः । पिङ्गे जारे । [आसक्ते त्रि०

**लम्पट** पु० रम-अठन् पुक् च रस्य लः । परस्त्रीषु लोलुपे,

**लम्ब** पु० लबि-अच् । नर्त्तके, कान्ते, उत्कोचे, अङ्कशास्त्रोक्ते त्रिभुजादिक्षेत्रे भुजकर्णयोर्मध्यस्थे लम्बमाने सूत्रे च 'लम्बगुणं भूम्यर्द्धं स्पष्टं त्रिभुजे फलं भवती'ति लीलावती दीर्घे, लम्बमाने च त्रि०।

**लम्बकर्ण** पु० लम्बः कर्णो यस्य । छागे, हस्तिनि, राक्षसे, श्येनपक्षिणि, अङ्कोटवृक्षे च । लम्बश्रोत्रवति त्रि०कर्म०। लम्बमाने श्रोत्रे पु० ।

**लम्बकेश** त्रि० लम्बः दीर्घः केशः यस्य । दीर्घकेशाढ्ये । कुशमये विष्टरे । दीर्घकेशयुक्ते त्रि०। कर्म०। दीर्घे केशे ।

**लम्बदन्ता** स्त्री० लम्बोदीर्घः दन्त इव बीजकण्टको यस्य सिंहलद्वीपभवपिप्पल्याम् । दीर्घदन्तवति त्रि० कर्म०दीर्घे दन्ते पु० । [भावे ल्युट् । आश्रयणे न० ।

**लम्बन** न०लम्बते ल्यु । नाभिदेशपर्य्यन्तं लम्बमाने माल्यादौ

**लम्बबीजा** स्त्री० लम्बं दीर्घं बीजं यस्याः । सिंहलदेशजात पिप्पल्याम् । [कृष्णा, गौर्य्याञ्च ।

**लम्बा** स्त्री० लम्बते लबि-अच् । तिक्ततुम्ब्यां (तितलाउ) ।

**लम्बोदर** पु० लम्बं दीर्घमुदरं यस्य । गणेशे, तारानाम्न्यां देव्यां स्त्री० ङीप् । तुन्दुरोदरवति त्रि० ।

**लय** गतौ भ्वा०आत्म०सक०सेट् । लयते । अलयिष्ट ।

**लय** पु०ली-अच् । संश्लेषे विनाशे, नृत्यगीतवाद्यानामेकतानतारूपे साम्ये च । लीयतेऽत्र । सर्व्वभूतलयकरे प्रलयकाले, ईश्वरे च

**लर्व** गतौ भ्वा०पर०सक० सेट् । लर्व्वति अलर्व्वीत् ।

**लल** इच्छायां चु०उभ०सक०सेट् । लालयति-ते अलीललत् त

**लल** इच्छायां अद०चु०उभ०सक०सेट् । ललयति ते अललत् त

**ललज्जिह्व** पु० ललन्ती आस्वाद्यास्वादनाय चलन्ती जिह्वा यस्य । कुक्कुरे, उष्ट्रे, हिंस्रपशौ च । चलद्रसनायुक्ते त्रि०।

**ललन** न०लड वुन् डस्य लः । चालने । केलौ, बाले, सालवृक्षे, पियालवृक्षे च पु० । लल-ल्यु । जिह्वायां, नार्य्याञ्च स्त्री०।

**ललनाप्रिय** पु० कर्म० । कदम्बे । ह्रीवेरे न० । जिह्वाप्रिये, रमणीवल्लभे च त्रि० ।

**ललन्तिका** स्त्री० लड झच् स्वार्थे कन् अत इत्त्वम् डस्य लः नाभिदेशपर्य्यन्तं लम्बमाने माल्यादौ । (काथ'स्यौटङ्गभेदे,कमान्न)

**ललाट** न० लड-अच् डस्य ल ललमटति अट-अण् । अल-

**ललाटन्तप** पु०ललाटं तापयति तप-णिच् खच् ह्रस्वः । सूर्य्ये ललाटतापके त्रि०'लिपिर्ल्ललाटन्तपनिष्ठुरे'ति नैषधम् ।

**ललाटपट्ट** न० ललाटं पट्टमिव विस्तीर्णम् । प्रशस्तललाटे ललाटफलकादयोऽप्यत्र । [ललाटस्थे चिह्ने च।

**ललाटिका** स्त्री० ललाटे आबध्यते ठन् । ललाटभूषणे,

**ललाम** न० लल-अच् तममति अम अण् । प्रधाने, ध्वजे शृङ्गे, बालधौ, चिह्ने, भूषाया च घोटके पु० । नान्तत्वमपि।

**ललामक** न० ललाम तिलकमिव इवार्थे कन् । ललाटपर्य्यन्तं सम्मुखन्यस्ते माल्यभेदे ।

**ललित** न० लल-क्त । शृङ्गारानुगुणे चेष्टाभेदे, स्वरभेदे पु० । सुन्दरे, ईप्सिते त्रि० लड-क्त डस्य ल । चालने न० कस्तूर्य्यां नदीभेदे स्त्री० । [व्रतभेदे च ।

**ललितासप्तमी** स्त्री० भाद्रशुक्लसप्तम्याम्, तद्दिनकर्तव्ये

लव पु० लू-अप् । लेशे, विनाशे, छेदने, गोरामपुच्छे, कालपरिमाणभेदे, गोलाङ्गूललोम्नि, भावे च ।
लवङ्ग न० लू अङ्गच् । स्वनामख्याते वृक्षे । स्वार्थे कन् तत्रैव
लवङ्गकलिका स्त्री० लवङ्ग कलिकेव । लवङ्गे ।
लवण न० लू ल्युट् पृ० णत्वम् । रसभेदे तत्प्रधाने सैन्धवसौवर्चलविडादिरूपे पदार्थे च । तदुत्पत्तिस्थाने सिन्धुदेशे, समुद्रे, मधुदैत्यसुते असुरभेदे च पु० । लवणरसयुक्ते, लावण्यवति च त्रि० । नदीभेदे, महाज्योतिष्मत्यां, दीप्तौ च स्त्री० ।
लवणकिंशुका स्त्री० लवणरसान्वित किंशुक तत्सामञ्जस्य फलम् यस्याः । महाज्योतिष्मत्याम् ।
लवणक्षार पु० लवणमय क्षार । लवणरसयुक्ते क्षारे ।
लवणखनि स्त्री० ६त० । साम्भरिलवणोत्पत्तिस्थाने ।
लवणधेनु स्त्री० दानार्थं कल्पितायां लवणनिर्मितायां धेनौ ।
लवणाचल पु दानाय कल्पिते अचलाकारे लवणकूटे ।
लवणाब्धि पु० लवणमयोऽब्धिः । लवणमधुरसमुद्रे । लवणसमुद्रादयोऽप्यत्र । [(करकचलवण) ।
लवणाब्धिज न लवणाब्धेर्जायते जन ड । सामुद्रलवणे
लवणोत्तम न० लवणेषु उत्तमम् । सैन्धवलवणे ।
लवणोद पु० लवणमयमुदकं यस्य उदादेश । लवणसमुद्रे ।
लवन न० लू ल्युट् । छेदने (लोना काटा) दृश्ये स्त्री ङीप् ।
लवली स्त्री लव लेश लाति ला क गौ ङीप् । (नोयाड़) वृक्षे ।
लवित्र न लूयतेऽनेन लू-इत्र । दात्रे । [अलीलष(ष)(स)त् त
लष(ष)(स) शिल्पयोगे चु उ०सक०सेट् । लाष(ष)(स)यति ते
लशु(सु)न न लश उनन् उनन् वा । रसुने ।
लष स्पृहायां दिवा०भ्वा उभ सक सेट् । लष्यति ते लषति ते-अलषीत् । अलाषीत् अलषिष्ट । [सीत् अलसीत्
लस श्लेषे क्रीडायां दीप्तौ च अक०भ्वा पर०सेट् । लसति अला
लसा स्त्री०लसति लस अच् । हरिद्रायाम् ।
लसीका स्त्री लस ईकक् । इक्षुरसे ।
लस्ज क्रीडायां भ्वा आ अक सेट् । लज्जते अलज्जिष्ट । निष्ठायामनिट् लग्न लग्न । लज्ज ।
लस्त त्रि० लस क्त नि० इडभाव । श्लिष्टे क्रीडिते, शिल्पयुक्ते च । ज्यायां कन् । धनुर्मध्यभागे पु० ।
लहरि(री) स्त्री०लेन इन्द्रेण ह्रियते अङ्गमनाय हृ कर्मणि इन् वा ङीप् । महातरङ्गे ।
ला आदाने अदा पर०सक०अनिट् । लाति अलासीत् ।
लाक्षणिक त्रि लक्षणया बोधयति ठक् । लक्षणया अर्थबोधके शब्दे । लक्षणं वेत्ति ठक् स्वार्थे अण् । लक्षणयुक्ते ।

लाक्षण्य त्रि० लक्षण वेत्ति ञ्य । शुभाशुभलक्षणज्ञे । चतुर्थ्यर्थे ष्यञ् यत् वा । लक्षणयुक्ते 'ल(ला)क्षण्या स्त्रियमुद्वहे'दिति स्मृतिः । [पदार्थे ।
लाक्षा स्त्री० लक्ष्यतेऽनया लक्ष-अ पृ० वृद्धि । (ला) ख्याते
लाक्षातरु पु० लाक्षायोनितरुः । (ला) द्रव्यसाधने वृक्षे लाक्षावृक्षादयोऽप्यत्र ।
लाक्षातैल न० लाक्षया पक्व तैलम् । वैद्यकप्रसिद्धे तैलभेदे ।
लाक्षाप्रसाद पु लाक्षायां प्रसादो यस्य । पट्टिकालोध्रे ।
लाक्षाप्रसाधन न० प्रसाध्यते भूष्यतेऽनेन ल्युट् लाक्षा तद्रस एव प्रसाधनम् । अलक्तके ।
लाक्षारस पु लाक्षाणि कृतो रस इव । अलक्तकरसे ।
लाख शोषे, भूषणे, दाने वारणे च सक० सामर्थ्ये अक० भ्वा० पर सेट । लाखति अलाखीत् चङि न ह्रस्व । [ह्रस्व
लाघ सामर्थ्ये भ्वा आ०अक०सेट् । लाघते अलाघिष्ट चङि न
लाघव न लघोर्भाव अण् । लघुत्वे, आरोग्ये च । [पदार्थे
लाङ्गल न० लगि कलच् पृ० वृद्धि । स्वनामख्याते भूमिकर्षके
लाङ्गलदण्ड पु०६त । लाङ्गलमध्यस्थे काष्ठमये दण्डे (ईश)
लाङ्गलपद्धति स्त्री० लाङ्गलघाता पद्धति रेखा । सीतायाम् लाङ्गलघातजक्षेत्रभूमिरेखायाम ।
लाङ्गलिकी स्त्री लाङ्गलमिवाकारोऽस्त्यस्याः ठन गौ०ङीष् । (विषलाङ्गला) वृक्षभेदे । तत्र भव अण् । विषभेदे पु० ।
लाङ्गलिन् पु० लाङ्गल प्रहरणत्वेनास्त्यस्य इनि । बलरामे लाङ्गलदण्ड इव दीर्घ आकारोऽस्त्यस्य इनि । नारिकेलवृक्षे । [(कायड़ा) शाकभेदे ।
लाङ्गली स्त्री० लाङ्गलाकार पुष्पमस्त्यस्याः अच् गौरा०ङीष् ।
लाङ्गूल न लगि ऊलच् पृ । पशूनां पश्चाद्भागस्थित रोमगुच्छे ।
लाङ्गूलिका स्त्री० लाङ्गूलाकारोऽस्त्यस्या ठन् । पृश्निपर्ण्याम्
लाङ्गूलिन् पु लाङ्गूलमस्त्यस्य इनि । वानरे तदाकारपुष्पवति ऋषभौषधे च ।
लाछ लक्षणे भ्वा पर सक सेट् इदित् । लाञ्छति अलाञ्छीत ।
लाज भर्त्सने भ्वा पर सक सेट् । लाजति अलाजीत् । इदित्वयम् । लाञ्जति अलाञ्जीत् ।
लाज न लाज-अच् अस् वा । उशीरे । आर्द्रतण्डुले पु० । भृष्टधान्ये (खइ) पु व व०स्त्रीत्वमप्यत्र । [भावे ल्युट् । अङ्कने ।
लाञ्छन न लाञ्छ्यते लाञ्छि कर्मणि ल्युट् । चिह्ने, नामनि च
लाट पु० लट बाल्यायां अण् । देशभेदे, वस्त्रे, जीर्णालङ्कारे विदग्धपुरुषे च । [शब्दालङ्कारभेदे ।
लाटानुप्रास पु० लाटस्य विदग्धस्य प्रिय कर्म०। अलङ्कारोक्ते

लाड क्षेपे अद०चु०उभ०सक०सेट् । लाडयति ते अललाडत् त

लाभ पु० लभ्यते लभ-कर्मणि घञ् । मूलधनादितोऽधिके लभ्यमाने धने । भावे घञ् । प्राप्तौ । [रोयस्र कप् । वीरणमूले

लामज्जक न० लायते ला-क्विप् ला' आदीयमानः मज्जा या

लालन न०चु०लल-ल्युट् । स्नेहपूर्व्वकपालने । [पोटोद्रके च

लालसा स्त्री० लस-स्पृहायां यङ् अ । अतिशयेच्छायाम्, गर्भि-

लाला स्त्री० चु० लल-अ टाप् । मुखजलस्रवे ।

लालाटिक पु० ललाटं प्रभोर्भाग्यं पश्यति ठञ् । प्रभुभाग्योप जीविनि-कार्य्यासमर्थे । ललाटात् ललाटस्थभाग्यात् आ-गतः, तस्येदं वा ठञ् । भाग्याधीने त्रि० 'प्राप्तिस्तु लाला-टिकोत्युक्तः ललाटचर्म्मनि त्रि० ।

लालाविष पु० लालायां विषमस्य । लूतादौ कीटे ।

लालास्राव लाला स्रावयति स्रु-णिच्-अण् । लूताकीटे ।

लालित्य न० ललितस्य भावः ष्यञ् । सौन्दर्य्ये, मनोहरत्वे 'नैषधे पदलालित्य'मित्युक्तः । [घञ् । छेदने

लाव पु०लू-कर्त्तरि घञ् । पक्षिभेदे । स्वार्थे कन् । तत्रैव भावे

लावण न० लवणे संस्कृतम् अण् । लवणसंस्कृते औषधादौ ।

लावणिक न० लवणे संस्कृतम् ठञ् । लवणे संस्कृतौषधादौ, लवणं पण्यमस्य ठञ् । लवणविक्रयोपजीविनि वणिग्भेदे

लावण्य न० लवणस्य भावः ष्यञ् । लवणत्वे,'मुक्ताफलेषु च्छा-यायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्य-मिहोच्यते' इत्युक्ते देहसौन्दर्य्यभेदे च ।

लासिका स्त्री० लस-ण्वुल् । नर्त्तक्याम् ङ० । लासकाप्यत्र ।

लास्य न० लस-ण्यत् । नृत्ये, वाद्यनृत्यगीतित्रिके । 'स्त्रीनृत्यं लास्यमुच्यते' इत्युक्ते स्त्रीनृत्ये च । स्वार्थे कन् तत्रैव ।

लिकुच पु० लकुच+पृ० इत्वम् । (मान्दार) वृक्षे ।

लिक्षा(क्षा) स्त्री० लक्ष-अ पृ० वा इत्वम् वा कश । यूकाण्डे, 'जालान्तरगते भानौ यच्चाणुदृश्यते रजः । तैश्चतुर्भि-र्भवेल्लिक्षे'त्युक्ते परिमाणभेदे । [दिरण्ययम्

लिख लेखने तुदा०पर०सक०सेट् । लिखति अलेखीत् । कुटा-

लिख गतौ भ्वा०पर०सक०सेट् इदित् । लिङ्खति अलिङ्खीत् ।

लिखन न० कु० लिख-ल्युट् । लेखने, लिपौ च ।

लिखित न० लिख-भावे क्त । लेखने । आधारे क्त । लिपौ, विवादे अर्थसाधके पत्रादौ च 'प्रमाणं लिखित'मि तिस्मृतिः

लिग गतौ भ्वा०पर०सक०सेट् इदित् । लिङ्गति अलिङ्गीत् ।

लिग चित्रीकरणे चुरा०उभ०सक०सेट् इदित् । लिङ्गयति ते । अलिलिङ्गत् त ।

लिङ्ग पु० लिगि-अच् । चिह्ने, पुंसोऽसाधारणचिह्ने, अनु-मानसाधने हेतौ, सांख्योक्ते प्रधाने, शिवमूर्त्तिभेदे, व्याप्ये, व्यक्ते, शब्दनिष्ठे पदसाधुताप्रयोजके धर्म्मभेदे, अर्थाकाश-नसामर्थ्ये च । 'समता च लिङ्गमिति' मीमांसका' ।

लिङ्गक पु० लिङ्गेन कायति कै-क । कपित्थवृक्षे ।

लिङ्गवर्द्धिनी स्त्री० लिङ्गं पुरुषचिह्नभेदं वर्द्धयति वृध णिच् णिनि । अपामार्गे ।

लिङ्गवृत्ति पु० लिङ्गं संन्यासादिवेशधारणमेव वृत्तिः जीविका यस्य । जीविकार्थमन्यासचिह्नादिधारिणि कपटपरिव्राजके

लिङ्गिनी स्त्री० लिङ्गमिवाकारोऽस्त्यस्याः इनि ङीप् । (पंचगु-रिया) लताभेदे ।

लिङ्गिन् त्रि० लिङ्गमस्त्यस्य इनि । चिह्नवति । जीविकार्थसं-न्यासादिचिह्नवति, मशकलिङ्गवति-गजे च पु० ।

लिप लेपने, तुदा०उभ०मुचा०सक०अनिट् । लिम्पति ते अलि-पत् अलिपत अलिप्त । [लेपने च ।

लिपि(पी) स्त्री० लिप-इक् वा ङीप् । लिखिताक्षरके पत्रे,

लिपिक(का)र पु० लिपिं करोति कृ-अच् अण् वा । लेखके ।

लिप्त त्रि० लिप-क्त । भुक्ते, कृतचन्दनादिलेपे, मिलिते, विष-दिग्धे च । ज्योतिषोक्ते राशेः षष्टिभागात्मके कलारूपे भागे । 'लिप्तार्द्धहीनं यदि पूर्व्वमेतदि'ति ताजकम् दृक्ता-लककाले पु० । स्वार्थे कन् । अत इत्वम् । तत्रैव ।

लिप्तक पु० कुत्सितं लिप्तम् कन् । विषाक्तबाणे ।

लिप्सा स्त्री० लभ-सन्-अ । लाभेच्छायाम् ।

लिम्पाक पु० लिप-आकन् पृ० । जम्बीरभेदे(पातिलेबु)खरे च

लिवि(वी) स्त्री० लिप-इक् पृ० पस्य वः वा ङीप् । लिपि-शब्दार्थे लिविकरादयोपि लिपिकराद्यर्थे । [अलिक्षत

लिश अल्पीभावे च दि० आ० अक० अनिट् । लिश्यते

लिश गतौ तु०पर०सक०अनिट् । लिशति अलिक्षत ।

लिह आस्वादने अदा० उभ० स०अनिट् । लेढि लीढे । अलिक्षत् त । [नः । लीन.

ली श्लेषे दिवा०आ०अक०अनिट् । लीयते अलेष्ट । निष्ठातस्य

ली श्लेषे क्र्या०भ्वा०पर०अक०अनिट् । लिनाति अलैषीत् ।

ली द्रावणे वा चु०उभ०सक०पक्षे भ्वा०प०अनिट् । लाययति ते लापयति ते लयति अलीलयत् त अलीलपत् त अलैषीत्

लीढ त्रि०लिह-आस्वादे क्त । आस्वादिते, स्पृष्टे च ।

लीला स्त्री० ली-क्विप् लियं लाति अच् । केलौ,विलासे,शृङ्गा-रादिचेष्टायाम् क्रीडायाञ्च ।

लीलावती स्त्री० लीला+अस्त्यर्थे मतुप् मस्य व । विलास वत्यां स्त्रियां,भास्कराचार्य्यस्य पुत्र्यां,तत्कृते अङ्कग्रन्थभेदे,

न्यायशास्त्रप्रसिद्धे 'नाथः सृजतीत्यादिके' पदार्थप्रतिपादके ग्रन्थभेदे, पुराणप्रसिद्धे वेश्याभेदे च । [देवने च ।

लीलोद्यान न० लीलार्थमुद्यानम् । क्रीडनार्थे आरामे,

लुक्कायित त्रि० लुच्यते लुञ्च अपनयने क्विप् लुक् काया यस्य तादृशइवाचरति लुक्काय+क्विप्-क्त । अन्तर्हितदेहे गुप्तदेहे

लुज कथने अङ्कधातोरर्थे च चुरा०उभ०अक सेट् इदित् । लुञ्जयति ते अलुलुञ्जत् त ।

लुञ्चित त्रि लुञ्च णिच्-क्त । अपसारिते दूरीकृते ।

लुट दीप्तौ अक० प्रतिघाते सक०भ्वा० आत्म०सेट् । लोटते लुङि उभ० अलुटत् अलोटिष्ट ।

लुट हरणे भ्वा०पर०सक०सेट् इदित् । लुण्टति अलुण्टीत् ।

लुट दीप्तौ चु०उभ०सक०सेट् । लोटयति ते अलूलुटत् त ।

लुट विलोडने हरणे च सक० पर०सेट् । लुठति अलुठत् । अङि वा लुक् । [टीत्

लुठ विलोडने विमोटने च भ्वा पर०सक सेट् । लोठति अलो

लुठ गतौ चौर्ये च सक०अङ्गीभावे आलस्ये च अक० भ्वा पर० सेट् इदित् । लुण्ठति अलुण्ठीत् । [अलोठिष्ट ।

लुठ प्रतीघाते भ्वा०आ०लुङि उ०सक सेट् । लोठते । अलुठत्-

लुठ उपघाते भ्वा०पर०सक०सेट् । लोठति अलोठीत् ।

लुट लोटे तु०प०अक०सेट् । लुठति अलुठीत् ।

लुठ चौर्ये चु उभ सक०सेट् । लोठयति ते अलूलुठत् त ।

लुठन न पु लुठ-ल्युट् । अश्वादेर्भूम्यादौ श्रमापनयनार्थं पुनः पुनरङ्गचालने (लोटा) ।

लुठित त्रि लुठ क्त । भूविलुठितहृतपराव्रत्तमे ।

लुड मन्थने भ्वा०पर सक सेट् । लोडति अलोडीत् । [डीत् ।

लुड संवृतौ सक० क्षेपे अक०तु०क पर सेट् । लुडति अलु-

लुण्ट अवज्ञायां चौर्ये च वा चु उ०पक्षे भ्वा०प०सक सेट् । लुण्टयति ते लुण्टति अलुलुण्टत् त अलुण्टीत् ।

लुण्टक पु० लुण्ट ण्वुल् । (नटिया) शाकभेदे ।

लुण्टाक त्रि० लुटि-आकन् । चौरे स्त्रियां गौ ङीष् ।

लुण्ठक त्रि लुठि-ण्वुल् । चौरे ।

लुण्ड चौर्ये चु उ सक०सेट् । लुण्डयति ते अलुलुण्डत् त

लुथ वधे सक क्लेशे अक०भ्वा पर सेट् इदित् । लुन्थति अलुन्थीत्

लुन्थ अपनयने भ्वा पर०सक सेट् । लुन्थति अलुन्थीत् ।

लुप छेदने विनाशने च तु उ०उ स०अनिट् । लुम्पति ते अलुपत् अलुप्त । अङि वा लुक् । अलूलुपत् अलुलोपत् ।

लुप आकुलीभावे दिवा०पर०अक सेट् । लुप्यति अलुपत् अलोपीत् नियमङ् इत्येके ।

लुप्त न० लुप-क्त । अपहृतधने नष्टे । छिन्ने त्रि ।

लुब अर्दने वा चु उ०पक्षे भ्वा०पर०सक० सेट् इदित् । लुम्बयति ते लुम्बति । अलुलुम्बत् त अलुम्बीत् । [च त्रि०

लुब्ध पु० लुभ-क्त । व्याधे । स्वार्थे कन् तत्रैव । लम्पटे लोलुपे

लुभ विमोहने तु पर०अक० सेट् । लुभति अलोभीत् ।

लुभ आकाङ्क्षायां दि०प०स०सेट् । लुभ्यति । अलुभत् अलोभीत्

लुल विमर्दने चौ पर सक सेट । लोलति । अलोलीत् ।

लुलाप पु लुल-घञर्थे क तमाप्नोति आप् । महिषे ।

लुलित त्रि०लुल-क्त । आन्दोलिते, चालिते च 'अथ लुलितपतत्रिमालभि ति भट्टिः ।

लुष चौर्ये भ्वा पर०सक सेट् । लोषति अलोषीत् ।

लुष हिंसायां चौ पर सक०सेट् । लोषति अलोषीत् ।

लुह आकाङ्क्षायां भ्वा पर०सक० अनिट् । लोहति अलुक्षत् ।

लू छेदने क्र्या चा उभ०सक० सेट् । लुनाति लुनीते अलावीत्

लूता स्त्री०लू तक् । कीटभेदे (माकड्सा) । स्वार्थे कन् अत इत्त्वम् । तत्रैव ।

लून त्रि० लू-क्त निष्ठातस्य न । छिन्ने ।

लूम न लू मक् । लाङ्गूले ।

लूष वधे स्तेये च चु उभ सक० सेट् । लूषयति ते अलूलुषत्

लेख पु० लिख्यते चित्रादि यतेऽसौ लिख कर्मणि घञ् । देवे भावे घञ् । लेखने । कर्मणि घञ् । लेख्ये त्रि । आधारे घञ् । पत्रे लिपौ च 'मित्रादिलेखैर्ये लेखैने ति माघ ।

लेखक पु० लिख-ण्वुल । लिपिकरे ।

लेखन न लिख ल्युट् । पत्रादौ वर्णादिविन्यासे, छर्दने च । आधारे ल्युट । भक्ष्यपत्रे लिख्यतेऽनया ल्युट् । लेखन साधने स्त्री ङीप् । 'मसाधार लेखनीद्वे'ति स्मृति ।

लेखनिक पु० लेखन शिल्पमस्य ठन् । लिपिकरे ।

लेखर्षभ पु० लेख ऋषभ इव श्रेष्ठत्वात् । इन्द्रे ।

लेखहार पु लेख हरति हृ-अण् । पत्रवाहके । ण्वुल् । लेखहारकोऽप्यत्र । [सज्ञायां घञ् टाप् । लिपौ ।

लेखा स्त्री० लिख अ टाप् । रेखायां, पङ्क्तौ च । आधारे

लेख्य त्रि० लिख ण्यत् । लेखनीये । व्यवहारे ऋणाद्या वेदके पत्रभेदे न ।

लेख्यपत्त्र पु लिख्यतेऽत्र यत लेख्य पत्र यस्य । तालवृक्षे ।

लेप गमने भ्वा०आत्म सक सेट् अङि न लुक् । लेपते अलेपिष्ट

लेप पु लिप-लेप वा घञ् । भोजने, लेपने च । कर्मणि घञ् । सुधायाम (कलिचुन) । [पलगण्डे

लेपक पु० लिम्पति लिप-ण्वुल । लेपनकरे जातिभेदे ।

लेपन न० लिप-ल्युट् । (लेपा) इति ख्याते व्यापारे । कर्मणि ल्युट् । तुरुष्कनामगन्धद्रव्ये ।

लेलिहान पु० लिह-यङ् कानच् पृ० यलोपः । सर्पे, पुन पुनः लेहनकरे तारादिदेवतापूजाङ्गे अङ्गुल्यादिसन्निवेशविशेष रूपे मुद्राभेदे स्त्री० । तल्लक्षणं दृहदभिधाने ।

लेश पु० लिश-अल्पीभावे घञ् । अल्पे, लवे च ।

लेष्टु पु० लेष-तुन् । लोष्टे । [टनोप्यत्र ।

लेष्टुघ्न पु० लोष्टुं हन्ति हन क । लेष्टभेदके मुद्गरे । लोष्टुभे-

लेह पु० लिह-घञ् । आहारे, आस्वादे (चाटा) व्यापारभेदे च । भावे ल्युट् । लेहनमप्यत्र न० ।

लेह्निन पु० लिह-इनन् । टङ्कणे (सोहागा) ।

लेह्य त्रि० लिह-ण्यत् । जिह्वया आस्वाद्ये । अमृते न० ।

लैङ्ग न० लिङ्गमधिकृत्य कृतो ग्रन्थः अण् । अष्टादश, महापुराणेषु तृतीये पुराणे, लिङ्गः तदाकारः अस्त्यस्यां फलेषु तस्याः अण् ङीप् । लिङ्गिनीवृक्षे । तस्येदमण् । लिङ्ग-सम्बद्धे त्रि० । [गतौ वा ठण् । लिङ्गादिभिः कल्पिते ।

लैङ्गिक त्रि० लिङ्गेनानुमापकचिह्नादिना आपादितस्तत आ-

लोक दीप्तौ चु०उ०सक०सेट् । लोकयति ते अलूलुकत् त ।

लोक दर्शने भ्वा०आ०सक०सेट् । लोकते अलोकिष्ट । चङि न ह्रस्वः । अलुलोकत ।

लोक पु० लोक्यते ऽसौ लोक-घञ् । भुवनेषु, जने च ।

लोकपाल पु०लोकान् पालयति पा-णिच् अण् । लोकपालके न्टपे, इन्द्रादिदिक्पाले, विनायकादिषु पञ्चसु । लोक-रक्षकमात्रे त्रि० । लोकनाथादयोप्यत्र ।

लोकबान्धव पु०लोकाना बान्धव सर्व्वकर्मप्रवर्त्तकत्वात् । सूर्य्ये

लोकमातृ स्त्री० लोकाना मातेव रक्षिका । लक्ष्म्याम् ।

लोकलोचन पु० लोकैर्लोच्यतेऽनेन लुच-ल्युट् । सूर्य्ये । इत० । सूर्य्ये न० । लोकनेत्रादयोप्यत्र न० ।

लोकवाह्य त्रि० वहिश्चरति वहिस्+ष्यञ् टिलोपश्च ५त० । लोकवहिर्भूते । [चार्व्वाकमते ।

लोकायत न०लोकेषु आयतम् विस्तीर्णम् अनायाससाध्यत्वात् ।

लोकायतिक पु०लोकायतं तन्मतम् अस्त्यस्य ठन् । चार्व्वाके ।

लोकालोक पु० लोक्यतेऽसौ लोक न लोक्यतेऽसौ कर्म्म० । स्वनामख्याते सूर्य्यकिरणसम्पर्कसीमापर्व्वते । तस्य च पार्श्वयोरातपानातपसम्बन्धात्तथात्वम् ।

लोकेश पु०६त० । ब्रह्मणि, न्टपतौ पारदे च । [न ह्रस्वः

लोच दीप्तौ चु०उ०अ०सेट् । लोचयति ते अलुलोचत् त चङि

लोच दर्शने भ्वा०आ०स०सेट् । चङि न ह्रस्वः । लोचते अलोचिष्ट

लोचक न० लोच ण्वुल् । मांसपिण्डे, अक्षितारके, कज्जले, स्त्रीणां ललाटाभरणे, नीलवस्त्रे, कर्णपूरे, कदल्या, मूर्व्वायां सर्पकञ्चुके च ।

लोचन न० लोच्यतेऽनेन करणे ल्युट् । नेत्रे । भावे ल्युट् । दर्शनक्रियायाम् । युच् । दर्शने आलोचने च स्त्री० टाप् ।

लोचनहिता स्त्री० ६त० । तुत्थाञ्जने । (तुंते) । [श्वायाम्

लोचमस्तक पु० लोच्यते इति लोचं मस्तकं यस्य । मयूरशि-

लोट(ड) उन्मादे भ्वा०पर०सक०सेट् चङि न ह्रस्वः । लोट-(ड)ति । अलोटी(डी)त् ।

लोणा स्त्री० लवणमस्त्यत्र अच् लवणमस्त्यत्र अण् पृ० । क्षुद्राम्लि कायाम्, लोणाम्लाप्यत्र स्त्री० । [पृ० । लवणजे क्षारभेदे ।

लोणार न० लवणमृच्छति कारणत्वेन ऋ-अण् पृ० ।

लोत न० लू-तन् । चौरधने, लोम्नि, (वमान) चिह्ने च । नेत्राम्बुनि, लवणे च पु० ।

लोत्र न० लू-ष्ट्रन् । चक्षुर्जले, चोरितधने च ।

लोध पु० रुध-अच् रस्य लः । स्वनामख्याते वृक्षे ।

लोध्र पु० रुध-रन् रस्य ल । (लोध) ख्याते वृक्षे ।

लोप पु० लुप-घञ् । विनाशे, छेदने, आकुलीभावे, व्याकरणोक्ते अदर्शनरूपे नाशे च । लोपयति स्त्रीणां रूप गर्व्वम् अच् । अगस्त्यमुनिपत्न्यां स्त्री० ।

लोपामुद्रा स्त्री०दृष्टं राति रा-क कर्म० । अगस्त्यमुनिपत्न्याम्

लोप्त्र न० लुप-ष्ट्रन् । स्तेयधने स्त्रीत्वमपीच्छन्ति तत्पक्षे ङीप् ।

लोभ पु०लुभ-आकाङ्क्षायाम् घञ् । परद्रव्येषु अतिशयिताभिलाषे

लोभिन् त्रि० लुभ-णिनि । परद्रव्येषु अतितृष्णावति ।

लोभ्य पु० लुभ-यत् । मुद्गे । लोभनीयपदार्थे त्रि० । [लाङ्गूले च

लोम न० लू-मन् । देहजाते केशाकारे रोमाख्ये द्रव्ये, तद्वति

लोमकर्ण पु० लोममयौ कर्णौ यस्य शाक० । शशके ।

लोमकूप पु० लोम्नां कूप इव । रोमाधारे छिद्राकारे, गर्त्ते

लोमघ्न न० लोमानि हन्ति हन-टक् (टाक) रोगभेदे ।

लोमन् लू-मनिन् । देहस्थे केशतुल्ये (रोया) पदार्थे ।

लोमपाद पु० लोमयुक्तौ पादावस्य । अङ्गदेशस्य न्टपभेदे ।

लोमश पु० लोमानि बाहुल्येन सन्त्यस्य श । मुनिभेदे । लोमयुक्ते त्रि० काकजङ्घायां, जटामांस्यां, वचायाम्, शुकशिम्ब्याम् महामेदायां, वलायां च स्त्री० ।

लोमशकाण्डा स्त्री० लोमश इव काण्डोऽस्याः । कर्कट्याम् ।

लोमशपर्णिका स्त्री० लोमशानीव पर्णानि सन्त्यस्याः ठन् । माषपर्ण्याम् ।

लोमशपुष्पक पु० लोमशमिव पुष्पमस्य । शिरीषवृक्षे ।

लोमहर्षण न० लोम्नां हर्षणं हर्षजनकव्यापारोऽत्र ल्युट् इति यावत्। रोमाञ्चे। लोमानि हर्षयति उत्तमकथया हृष-णिच् ल्यु व्यासशिष्ये सूतवंश्ये स्वनामख्याते पौराणिके।

लोमहृत् पु० लोमानि हरति हृ क्विप् तुक् च। हरिताले

लोल त्रि० लोड-अच् डस्य लः। सतृष्णे चञ्चले च जिह्वायां लक्ष्म्याञ्च स्त्री०। [चाङ्गेर्याम् (चुकोपालङ्ग)।

लोलिका स्त्री० लोडयति सेवने दन्तान् लोड ण्वुल्।

लोलित त्रि० लुल विमर्दे णिच् क्त। चालिते। [क्षोभयुक्ते।

लोलुप(भ) त्रि० लुभ-यङ्-अच् पृ० भस्य वा पः। अति-

लोष्ट सङ्घाते भ्वा० आ० सक० सेट्। लोष्टते अलोष्टिष्ट।

लोष्ट पु० न० लोष्ट-घञ् अच् वा। मृत्पिण्डे (ढेला) लौहमले च

लोष्टघ्न पु० लोष्टं हन्ति मर्द्दयति हन क। लोष्टभेदने मुद्गरादौ। [लोष्टभेदनसाधके मुद्गरादौ।

लोष्टभेदन पु० लोष्टं भिनत्ति विमर्द्दयति भिद ल्यु।

लोह पु० न० लू विच् लोकं जहाति हा क। धातुभेदे, धातुमात्रे लौहे च। अगुरुचन्दने न०।

लोहकण्टक पु० लोहमिव कण्टको यस्य। मदनवृक्षे।

लोहकार पु० लोहं तन्मयं शस्त्रादि करोति कृ-अण्। कर्मकारे ण्वुल्। लोहकारकोऽप्यत्र।

लोहकिट्ट न० ६त०। लौहमले। (लोहार गु)। [कांस्ये च।

लोहचूर्ण न० ६त०। (लोहाचुर) ख्याते पदार्थे। [धातुद्वयजे

लोहज न० लोहात् लोहाभ्यां वा जायते जन-ड। लौहमले,

लोहद्राविन् पु० लोहानि धातुद्रव्याणि द्रावयति द्रु णिच् णिनि। टङ्कणे (सोहागा)। धातुद्रावके त्रि०।

लोहपृष्ठ पु० लोहमिव कठिनं पृष्ठमस्य। कङ्कपक्षिणि।

लोहमारक पु० लोहं मारयति जारयति मृ णिच् ण्वुल्। शालिञ्चशाके। [त्रि०

लोहल पु० लोहमिव लाति ला क। अव्यक्तवचने लोहप्रायके

लोहवर न० लोहेषु सर्वधातुषु मध्ये वरम्। स्वर्णे।

लोहश्लेषण न० लोहानि स्वर्णादीनि श्लेषयति योजयति श्लिष णिच् ल्यु। टङ्कणे (सोहागा)। [धातौ सीसादौ।

लोहसङ्कर न० लोहानां धातुद्रव्याणां सङ्करो यत्र। मिश्रित

लोहाभिसा(हा)र पु० लोहेन अभिसार्य्य(ह्रि)यतेऽत्र सृ-(हृ) वा घञ्। राज्ञां युद्धयात्रादौ शस्त्रनीराजनाविधौ

लोहित न० रुह इतच् रस्य लः। कुङ्कुमे रक्तचन्दने रणकुङ्कुमे रुधिरे च। रक्तगोभाञ्जने, रक्तवर्णे च पु० तद्वति त्रि०

लोहितक न० लोहितमिव कायति कै-क। पित्तले। लोहित+स्वार्थे कन्। पद्मरागमणौ, मङ्गलग्रहे च पु०।

लोहितचन्दन न० कर्म०। कुङ्कुमे रक्तचन्दने च।

लोहितपुष्पक पु० लोहितानि रक्तानि पुष्पाण्यस्य कप्। दाडिमवृक्षे।

लोहितमृत्तिका स्त्री० कर्म०। गैरिके (गेरिमाटी)।

लोहिता स्त्री० लोहित+अर्श आद्यच्। वराहक्रान्तायां, रक्तपुनर्नवायाञ्च। [कोकिले च। रक्तनेत्रवति त्रि०।

लोहिताक्ष पु० लोहिते अक्षिणी यस्य षच् समा०। विष्णौ,

लोहिताङ्ग पु० लोहितमङ्गमस्य। मङ्गलग्रहे, काम्पिल्लवृक्षे च

लोहितायस् न० लोहितमयमेति इण् असुन्। ताम्रे।

लोहितायस न० लोहितमयः अच् स०। ताम्रे, रक्तवर्णायो जातिभेदे च। [रक्तवर्णयुक्तायां स्त्रियाम्।

लोहिनी स्त्री० लोहितवर्णा स्त्री ङीप् तस्य नश्च।

लोहोत्तम न० लोहेषु धातुषूत्तमम्। स्वर्णे।

लौकायतिक न० लोकायतं चार्वाकशास्त्रं वेत्त्यधीते वा ठक्। चार्वाकमतसिद्धे। [लोकप्रसिद्धे च।

लौकिक त्रि० लोके विदितः प्रसिद्धो वा ठञ्। लोकविदिते

लौकिकाग्नि पु० कर्म०। विधानेनासंस्कृते वह्नौ।

लौड उन्मादे भ्वा० पर० सक० सेट् घटि न लत्व। लौडति अलौडीत्।

लौह पु० लोहमेव स्वार्थे अण्। (लोया) धातुभेदे।

लौहज न० लोहाज्जायते जन ड। मण्डूरे।

लौहभाण्ड पु० लोहस्य विकारः अण् कर्म०। (हामनदिस्ता) लौहमये भाण्डभेदे।

लौहमल न० लोहस्य मलम् ६त०। लोहकिट्टे।

लौहित्य न० लोहितस्य भावः ष्यञ् स्वार्थे ष्यञ् वा। रक्तवर्णे नदीभेदे स्त्री०। तीर्णलौहित्ये इति रघुः।

ल्पी श्लेषे क्र्या० पर० सक० अनिट्। ल्पिनाति अल्पैषीत्।

ल्वी गतौ क्र्या० पर० सक० अनिट्। ल्विनाति अल्वैषीत्।

## व

व पु० वा ड। वायौ, राहौ, मन्त्रणे सान्त्वने कल्याणे बलाराति, वसतौ समुद्रे, व्याघ्रे, वसने, शालूके, वन्दने च वरुणे पु० न०। वाहम्ये अत्र मणौ योऽग्रस्य लभ्यते इति

वंश पु० वम-श नि० मुम्। पुत्रपौत्राद्यपत्यवर्गे तृणजातिभेदे (बाँश) पृष्ठावयवे, वर्गे इक्षौ सालवृक्षे च। वाद्यभेदे स्त्री गौ० ङीष्। वंशीकलेन यष्टिमेनेति वृन्दावनचम्पूः।

वंशकर्पूररोचना स्त्री० कर्पूरमिव रोचते रुच ल्यु ६त०। वंशरोचनायाम्।

**वंशक्षीरी** स्त्री० वंशस्य क्षीरमिवाख्यस्य यत्र गौरा० ङीष्। वंशरोचनायाम्।

**वंशज** पु० वंशात् जायते जन-ड। वंशदलजाते यवाकारे द्रव्ये। सत्कुलजाते त्रि०। वंशरोचनायां स्त्री० टाप्।

**वंशतण्डुल** पु० ६त०। वेणुजाते तण्डुलाकारे पदार्थे।

**वंशधर** त्रि० वंशं धरति। कुलाविच्छेदकारके वंशवर्द्धनोऽप्यत्र।

**वंशनेत्र** न० वंशस्येव नेत्रमस्य। इक्षुमूले।

**वंशपत्र** पु० वंशस्य पत्त्रमिव पत्त्रमस्य। नलनामके तृणे ६त० वंशदले न०। नाडीहिङ्गौ स्त्री० गौ० ङीष्। स्वार्थे कन् तत्रैव

**वंशपत्रक** न०। वंशपत्त्रमिव कन्। हरिताले।

**वंशपत्त्रपतित** न० सप्तदशाक्षरपादके छन्दोभेदे।

**वंशपीत** पु० वंशस्तत्पत्त्रमिव पीतः। कणगुग्गुलौ।

**वंशपुष्पा** स्त्री० वंशस्य पुष्पमिव पुष्पमस्याः। सहदेवीलतायाम्

**वंशपूरक** न० वंशस्येव पूरकं यस्य। इक्षुमूले।

**वंशरो(लो)चना** स्त्री० वंशेषु रोचते रुच-ल्यु वा रस्य लः। वंशपर्व्वस्थिते श्वेतवर्णे कर्पूराकारे द्रव्ये। (वंशलोचन)।

**वंशशर्करा** स्त्री० वंशस्य शर्करेव। (वंशलोचन) पदार्थे।

**वंशस्तनित** न०। द्वादशाक्षरपादके छन्दोभेदे।

**वंशस्थविल** न०। द्वादशाक्षरपादके छन्दोभेदे।

**वंशाग्र** क० वंशस्य अग्रं मूलम्। वंशाङ्कुरे।

**वंशाङ्कुर** पु० ६त०। (कोंड) इति ख्याते पदार्थे।

**वंशिक** न० वंशोऽस्त्यत्र ठन् वंश इव वा कन्। अगुरुचन्दने

**वंशीधर** पु० वंशी वंशजवाद्यं धरति धृ-अच्। श्रीकृष्णे।

**वंश्य** त्रि० वंशे सत्कुले जात यत्। सत्कुलजाते। [अवङ्क्षिष्ट

**वक** कौटिल्ये अक० गतौ सक० भ्वा० आ० सेट् इदित्। वङ्कते

**वक** पु० वकि-अच् पृ० नलोपः। स्वनामख्याते विहगे, स्वनामख्याते पुष्पवृक्षे, कुवेरे, राक्षसभेदे, यो भीमेन हतः। औषधादिपाचनयन्त्रभेदे, श्रीकृष्णेन हते दैत्यभेदे च।

**वकजित्** पु० वकं जितवान् जि-क्विप् उप० स०। श्रीकृष्णे भीमसेने च वकान्तकादयोऽप्यत्र।

**वकधूप** पु० वक इव शुभ्रो धूपः। इकधूपे।

**वकपञ्चक** न०। कार्त्तिकशुक्लपक्षस्यैकादश्यादितिथिपञ्चके।

**वकपुष्प** पु० वक इव कुटिलं पुष्पमस्य। स्वनामख्याते पुष्पवृक्षे

**वकवृत्ति** पु० वकस्येव स्वार्थपरा वृत्तिश्चेष्टा यस्य। 'अर्वाग्दृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः। शठो मिथ्याविनीतश्च वकवृत्तिरुदाहृत' इत्युक्तलक्षणे परवञ्चके जने।

**वकव्रतधर** पु० वक इव व्रतं धारयति धृ-अच्। 'अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः। शठो मिथ्याविनीतश्च वकव्रतधरो द्विज' इत्युक्ते स्वार्थसाधनतत्परे वञ्चके विप्रादौ।

**वकव्रतिन्(क)** पु० वकव्रत+अस्त्यर्थे इनि ठन् वा। वकव्रतधरे।

**वकुल** पु० वकि-उलच् नलोपः। स्वनामख्याते पुष्पवृक्षे। कटुकायां स्त्री० टाप्। काकोल्यां ङीप् पृ०। वकुलेऽपि वञ्जुले पु०

**वक्क** गतौ भ्वा० आत्म० सक० सेट्। वक्कते अवक्किष्ट।

**वक्तव्य** न० वच-तव्य। कुत्सिते, क्षीणे, दुष्टे च 'दिवा वक्तव्यता पात्रे' इति स्मृतिः। कथनीये त्रि०। भावे क्त। कथने न०

**वक्तृ** त्रि० उचितं वक्ति वच-तृच्। उचितवक्तवादिनि

**वक्त्र** न० वक्त्यनेन ष्ट्रन्। मुखे, तगरमूले, वसनभेदे, छन्दोभेदे च

**वक्त्रभेदिन्** पु० वक्त्रं भिनत्ति भिद-णिनि। तिक्तरसे। मुखविदारके त्रि०। [नागरङ्गे ६त०। सुखगन्धे।

**वक्त्रवास** पु० वक्त्रं वासयति सुरभीकरोति वासि-अण्।

**वक्त्रशोधिन्** पु० वक्त्रं शोधयति शुध-णिच्-णिनि। जम्बीरे मुखशोधके ताम्बूलादौ त्रि०। स्त्रियां ङीप्।

**वक्त्रासव** पु० वक्त्रासवमव इव। अधररसे।

**वक्र** न० वकि-रन् पृ० नलोपः। नदीवक्रे। शनैश्चरे, मङ्गलग्रहे रुद्रे, त्रिपुरासुरे, पर्प्पटे, कुटिलगतौ च पु०। तद्वति त्रि० 'राज्ञोवत् सदा वक्रा'विति ज्योतिषम्।

**वक्रकण्ट** पु० वक्रः कुटिलः कण्टः कण्टकोऽस्य। बदरवृक्षे ततः संज्ञायां कन्। खदिरवृक्षे।

**वक्रखड्ग** पु० कर्म०। करवाले।

**वक्रग्रीव** पु० वक्रा ग्रीवा यस्य। उष्ट्रे। कुटिलग्रीवायति त्रि०

**वक्रपुच्छ** पु० वक्रं पुच्छं यस्य। कुक्कुरे वक्रलाङ्गूलादयोऽप्यत्र।

**वक्रपुष्प** न० वक्राणि पुष्पाण्यस्य। वकवृक्षे, पलाशवृक्षे च।

**वक्रशल्या** स्त्री० वक्रं शल्यमिव पत्त्रादि यस्याः। कुटुम्बिनीवृक्षे

**वक्राङ्ग** पु० वक्राण्यङ्गान्यस्य। हंसे। कुटिलावयववति त्रि० कर्म० कुटिलदेहे न०।

**वक्रिम** न० वक्रस्य भावः इमनिच्। कौटिल्ये 'वचितवक्रिम मे चित'मिति मालतीमाधवम् पृ० अदन्तोऽप्यत्र।

**वक्रोक्ति** स्त्री० कर्म०। कुटिलोक्तौ 'वक्रोक्तिः काव्यजीवितमि'त्यलङ्कारोक्ते काव्याङ्गे, काकुवचने च।

**वक्ष** रोषे भ्वा० पर० सक० सेट्। वक्षति अवक्षीत्।

**वक्षस्** न० वह-असुन् सुट् च। हृदये उरसि।

**वक्षः(क्ष)स्थल** न० वक्षः स्थलमिव वा विसर्गलोपः। प्रशस्तवक्षसि

**वक्षोज** पु० वक्षसि जायते जन-ड। स्तने 'वक्षोजपानकृद्'-त्युक्तः। [अवखीत् अवाखीत्।

**वक्षोरुह** पु० वक्षसि रोहति रुह-क। स्तने। [प्रथम् वखति

**वख** गतौ भ्वा० पर० सक० सेट् इदित्। वङ्खति अवङ्खीत् अनिद्-

**वटपत्र** पु० वटस्येव पत्रमस्य । सितार्जकवृक्षे, पाषाणभेदी-
**वटी** स्त्री० वट-अच् गौरा० ङीष् । गोलाकारे (वड़ी) पदार्थे स्वार्थे कन् ह्रस्वः । वटिकाप्यत्र स्त्री० ।
**वटु** पु० वट-उ । माणवके, ब्रह्मचारिणि च ।
**वटुक** पु० वट-उक । बालके, भैरवभेदे च ।
**वठ** असहायकरणे भ्वा०आत्म०सक०सेट् इदित् । वण्ठते अवण्ठिष्ट
**वठ** सामर्थ्ये भ्वा०पर०अक०सेट् । वठति । अवाठीत्-अवठीत् ।
**वठर** पु० वठ-अरन् । मूर्खे, अम्बष्ठे च । शठे, मन्दे च त्रि० ।
**वड** विभजने चु०उभ०सक०सेट् इदित् । वण्डयति ते । अववण्डत् त
**वड** वेष्टने विभागे च भ्वा०आ०स०सेट् इदित् । वण्डते अवण्डिष्ट
**वड** आरोहणे सौ०पर०सक०सेट् । वडति । अवाडीत्-अवडीत्
**वडभि(भी)** स्त्री० वड्यते आरुह्यतेऽत्र वड-अभि वा ङीप् (मुड्नि) गृहचूडायाम् प्रासादाग्रस्यगृहे च (चिलेघर) ।
**वडा** स्त्री० वड-अच् । स्वनामख्याते पिष्टकभेदे ।
**वडिश** न०वड इन् वडिं श्यति शो-क । मत्स्यधारणार्थे वक्रलौह कण्टकयुक्ते पदार्थे,'वडिशेन झषीरिवाश्मानि'ति वृन्दावनचम्पू'
**वड्र** त्रि० वल-रक् लस्य डः । वृहति । [वडिमा ह्रस्वः
**वण** शब्दे भ्वा० पर०सक०सेट् । वणति अवाणीत्-अवणीत् ।
**वण्ट** विभाजने अद०चु०उभ०सक०सेट् । वण्टयति ते अववण्टत् त
**वण्ट** पु० वण्ट-अच् । भागे, दात्रादेः धारणस्थाने (बांठ) अकृतोद्वाहे त्रि० । (डेङ्गो) ।
**वण्टक** पु० वण्ट-घञ् । स्वार्थे कन् । भागे । ण्वुल् । विभाजके
**वण्ठ** त्रि० वण-ठ तस्य नेत्त्वम् । खर्वे (बेटे)
**वण्ड** त्रि०वडि-अच् । अकृतोद्वाहे, हस्ताद्यङ्गविकले (बेंडे) च
**वत्** अव्य० वा-डति । सादृश्ये व तिप्रत्ययान्तोप्यत्रार्थे अव्य० ।
**वत** अव्य० वन-क्त । खेदे,अनुकम्पायाम्,हर्षे,विस्मये,आमन्त्रणे च
**वतंस** पु०अव+तनुस-घञ् अवाल्लोपः । कर्णभूषणभेदे, शेखरे, शिरोभूषणे, भूषणमात्रे च ।
**वतण्ड** पु० अव+तडि अच् अवाल्लोपः । मुनिभेदे । [स्त्रियाम्
**वतोका** स्त्री०अवगतं तोकं यस्याः अवाल्लोपः । अपत्यहीनायां
**वत्स** न० वस-स । वक्षःस्थले । गवादिशिशौ द्वि० । वत्सरे पु०
**वत्सक** न०वत्स इव इवार्थे कन् । पुष्पकासीसे । कुटजे, इन्द्रयवे च
**वत्सकवीज** न० वत्सस्य कुटजस्य वीजम् । इन्द्रयवे ।
**वत्सतर** पु०स्त्री० क्षुद्र० वत्सः तरप् । क्षुद्रवत्से, अप्राप्तदमन काले गवादौ । स्त्रियां ङीप् । वत्सतरी । [विषभेदे ।
**वत्सनाभ** पु०वत्सान् पशुशिशून् नभ्यति हिनस्ति नभ-अण् ।
**वत्सपत्तन** न० वत्सस्य वत्सराजस्य पत्तनम् । उत्तरदेशस्थायां कौशाम्ब्यां नगर्याम् ।
**वत्सपाल** पु० वत्सान् पालयति पाल-अण् । श्रीकृष्णे ।
**वत्सर** पु० वस-सरन् । द्वादशमासात्मके काले । [वली
**वत्सराज** पु०चन्द्रवंश्ये नृपभेदे । 'वत्सराजचरितमि'ति रत्ना-
**वत्सरान्तक** पु० वत्सरस्यान्तं करोति अन्त+णिच्-ण्वुल् । फाल्गुनमासे वत्सरस्य चैत्रादिकत्वात् फाल्गुनस्य तद-न्तकालत्वम् । [तद्वति त्रि० ।
**वत्सल** त्रि० वत्सं लाति ला-क । स्नेहयुक्ते वात्सल्ये रसे पु० ।
**वत्साक्षी** स्त्री०वत्सस्याक्षीवाक्षि अस्य षच्समा० । गोडुम्बायाम् (गोमक) । [गुडूच्याम् ।
**वत्सादनी** स्त्री० वत्सैरद्यते प्रियत्वेन अद-ल्युट् ङीप् ।
**वद** स्तुत्ये अक० अभिवादने सक० भ्वा०आ० सेट् इदित् । वन्दते अवन्दिष्ट । [अवदिष्ट
**वद** वाक्ये सन्देशे च भ्वा०उभ सक०सेट् । वदति ते अवादीत्
**वद** वाचि भ्वा०पर०सक०सेट् यजा० । वदति अवादीत् उवाद ।
**वद** वाक्ये सन्देशे च सक०चुरा०उभ०सेट् । वादयति ते अवीवदत्
**वद** त्रि० वदति वद-अच् । वक्तरि । [कथने न०
**वदन** न० उद्यतेऽनेन वद-करणे ल्युट् । मुखे । भावे ल्युट् ।
**वदा(द)न्य** पु० वद-अन्यच्० वा दीर्घः । भूरिदानशीले ।
**वदाम** न० वद-आमन् । (वदाम) फलभेदे ।
**वदाल** पु० वद-आल । पाठीनमत्स्ये (बोयाल) स्वार्थे कन् तत्र
**वदावद** पु० अत्यन्तं वदति वद-अच् नि० । बहुवक्तरि ।
**वधू** स्त्री० उह्यते पितृगेहात् पतिगृहं वह-ऊ धुकच् । भार्य्यायाम् नवोढ़ायां' पुत्रजायायाम्' पृक्कायां शट्याञ्च ।
**वधूजन** पु० कर्म० नारीजने । [इकूलेति भाषापरिः
**वधूटी** स्त्री० अल्पा वधू: टी अल्पवयस्कायाम् नार्य्यां 'गोपवधूटी
**वन** सेवने सक०शब्दे अक०भ्वा०पर०सेट् । वनति अवानीत्-अवनीत् । [अवतीत् । वनः वान । वनयति ।
**वन** व्यापारे भ्वा०पर०सक०सेट् ज्व०घटा० । वनति अवानीत्-
**वन** याचने द्विक०तना०आ०सेट् क्त्वा वेट् । वनुते अवनिष्ट ।
**वन** उपकारे उपतापे च सक० शब्दे अक०वा चु०उ०पक्षे भ्वा० प० सेट् । वानयति ते वनति । अवीवनत् त । अवनीत्-अवानीत् ।
**वन** न०स्त्री० वन अच् । वृक्षसमुदायात्मके अरण्ये । स्त्रीत्वे ङीप् । 'सुवनी समवदत् पिकापिके'ति नैषधम् जले, निवासे, आलये च ।
**वनकदली** स्त्री० ७त० । काष्ठकदल्याम् ।
**वनकन्द** पु० वनजातः कन्दः । अरण्यजाते शूरणे ।
**वनकार्पासी** स्त्री०वनोद्भवा कार्पासी । (वनकापास) क्षुपभेदे

**वन्य** न० वने भवः यत्। त्वचे,(दारचिनि)। वनशूरणे वाराहीकन्दे, देवनले च पु०। वनजातमात्रे त्रि०। वनानां जलानां समूहः यत्। जलसमूहे स्त्री०।

**वप** वीजवपने, तन्तुवपने मुण्डने च सक०भ्वा० उभ० अनिट् यजा०। वपति-ते अवाप्सीत् अवप्त। उप्तिमः।

**वपन** न० वप-ल्युट्। केशमुण्डने वीजाधाने, तन्त्वाधाने च

**वपनी** स्त्री० उप्यतेऽनया अत्र वा वप-ल्युट् ङीप्। नापितास्त्रे, तन्तुशालायां, (तान्तघर) यन्त्रभेदे (माकु) च।

**वपा** स्त्री० वप-अच्। मेदसि (चरवि) छिद्रे च। 'वपायां हविष इति श्रुतिः। [वप-उसि। शरीरे, प्रशस्ताकारे च।

**वपुस्** न० उप्यन्ते देहान्तरभोगसाधनबीजीभूतानि कर्म्माण्यत्र

**वपुष्टमा** स्त्री० अतिशयेन वपुः प्रशस्ताकृतिः तमप् यत्नम्। पद्मचारिण्याम् लतायाम्।

**वप्तृ** पु० वप-तृच्। जनके, कृषीवले च। वीजादिवापके त्रि०।

**वप्र** पु० न० उप्यतेऽत्र रन्। दुर्गनगरादौ परिखाया उद्धृतमृत्तिकास्तूपे। क्षेत्रे, रेणौ, तटे, सीसके च न०। जनके, प्राचीरे, प्रजापतौ च पु०। मञ्जिष्ठायाम् स्त्री०।

**वभ्र** गतौ भ्वा०पर०सक० सेट्। वभ्रति अवभ्रीत्।

**वम** उद्गारे भ्वा० पर०सक० सेट् फणा०ज्वला०। वमति अवमीत्। टु वमथुः। ण वामः।

**वमथु** पु० वम-अथुच्। वमने।

**वमन** न० वम-ल्युट्। मर्द्दने, अर्द्दने, आहुतौ,अधिकनिस्सारणे च 'स्वर्गाभिष्यन्दवमन'मिति कुमारः। शणे पु०। जलौकायां स्त्री० गौ० ङीप्।

**वमि** स्त्री० वम-इन्। छर्द्दने। अग्नौ पु०। धूर्त्ते त्रि०।

**वमित** पु० वम-णिच् क्त। कृतोद्गारे।

**वय** गतौ भ्वा० आ० सक० सेट्। वयते अवयिष्ट।

**वयस्** न० अज-असुन् वीभावः। विहगे, बाल्याद्यवस्थायाम् 'वयोतिपातोद्गतवाते'ति नैषधम् यौवने च।

**वय(यः)स्थ** पु०स्त्री० वयसि यौवने तिष्ठति स्था-क। तरुणे विभीतक्यां स्त्री०। 'वयस्था नागराह्वा'दिति वैद्यकम्।

**वयस्य** पु० वयसा तुल्यः यत्। समानवयस्के। सख्यां स्त्री०।

**वयुन** न० वय-उनन्। ज्ञाने। देवतागारे पु०।

**वयोधस्** पु० वयो यौवनं धत्ते धा-असुन्। तरुणे।

**वर** ईप्से अद०चु०उ०सक०सेट्। वरयति ते अववरत् त।

**वर** न० व्रियते वृ-अप् वर-घञ् वा। कुङ्कुमे, मनागभीष्टे 'वर माषान् परित्यज्ये' इति तन्त्रम्। भावे अप् वर-घञ् वा। इच्छायाम् याचने, आवरणे, वेष्टने च। कर्म्मणि अप्। अभीष्टे, श्रेष्ठे च त्रि०। जारे, गुग्गुलौ, जामातरि, पत्यौ च पु०। [यस्त्रभेदे च।

**वरक** पु० वृ-वुन्। वनमुद्गे, पर्पटे, तृणधान्यभेदे (चीना)

**वरचन्दन** न० कर्म्म०। कालीये, देवदारुणि कुसुम्भवीजे च।

**वरट** न वृ-अटन्। कुन्दपुष्पे। कीटभेदे (वोलता) हंसे च पु०स्त्री०

**वरण** न० वृ-ल्युट्। कन्यादिदानाय जामात्रादेरभ्यर्थनानुकूले व्यापारभेदे,वेष्टने,ऋत्विगादेः क्रियासु नियोगाय पूजनादौ, उष्ट्रे, प्राकारे, वरुणवृक्षे च। काशीस्थे नदीभेदे (वारुणी) ख्याते पदार्थे च स्त्री०। [मध्यवेदौ च।

**वरण्ड** पु० वृ-अण्डच् (वयसफोड़ा) मुखरोगभेदे मातङ्गयुद्धार्थे

**वरण्डक** पु०न० वृ-अण्डच्। स्वार्थे कन्। वरण्डशब्दार्थे वर्त्तुले, भित्तौ च। विशाले, कृपणे, भीते च त्रि०।

**वरण्डालु** पु० वरण्ड+आलु। एरण्डवृक्षे।

**वरतिक्त** पु० वरः श्रेष्ठस्तिक्तो रसो यस्य। कुटजवृक्षे। पाठाया (आकनादि) स्त्री०। स्वार्थे कन् तत्रैव।

**वरता** स्त्री० वृ-अतच्। हस्तिकक्षस्यरज्जौ।

**वरत्वच** पु० वरा त्वचा यस्य। निम्बवृक्षे।

**वरद** त्रि० वरं ददाति दा-क। अभीष्टदातरि, प्रसन्ने च। तच्चिह्नसूचके हस्तादिविन्यासरूपे मुद्राभेदे न० 'अभयं वरदञ्चैव दक्षिणे' इति तन्त्रम्। कन्यायाम्,अश्वगन्धायाम्, आदित्यभक्तायां, दुर्गायाञ्च स्त्री०।

**वरदाचतुर्थी** स्त्री०माघशुक्लचतुर्थ्याम्। तामधिकृत्य 'चतुर्थी वरदा नाम तस्यां गौरी सुपूजिते'ति स्मृतिः। [न०

**वरफल** पु० वरं फलमस्य। नारिकेले वृक्षे। कर्म०। श्रेष्ठे फले

**वरमुखी** स्त्री० वरं मुखं यस्याः ङीप्। रेणुकानामगन्धद्रव्ये।

**वरम्** अव्य० वृ-अम्। ईषदभीष्टे। [पतिम्वरायां कन्यायाञ्च

**वरम्वरा** स्त्री०वरं वृणोति खच्। (चाकुलिया) चक्रपर्ण्याम्।

**वररुचि** त्रि०वरा रुचिर्यस्य। श्रेष्ठप्रीतिमति। पाणिनिसूत्र वार्त्तिककारे कात्यायनमुनौ, विक्रमादित्यसभास्थे पण्डित भेदे च, [प्राप्तवरे त्रि०।

**वरलब्ध** पु० वरः उत्कर्षः पुष्पेषु लब्धो येन परनि०। चम्पके

**वरला** स्त्री०वरटा+पृ० टस लः। हंस्यां (वोलता) कीटभेदे च गौरा० ङीप्। हंसाम्। [भक्तियाम्।

**वरवर्णिनी** स्त्री०वरः श्रेष्ठोवर्णः प्रशंसाऽस्त्यस्याः इनि। उत्त-

**वरवाह्लीक** न० कर्म्म०। कुङ्कुमे।

**वरा** स्त्री०वृ-अच्। हरितक्यामलकीवयस्थारूपे फलत्रिके। रेणुकानामगन्धद्रव्ये, गुडूच्याम्, मेदायां, ब्राह्म्याम्, विडङ्गे, पाठायाम्,हरिद्रायाञ्च।

गुणे,अङ्गरागे च। स्वर्णे, व्रतभेदे, विलेपनद्रव्ये च। भावे घञ्। विलेपने, स्तुतौ, गीतक्रमे, चित्रे च।

वर्णक न० वर्णयति वर्ण-ण्वुल्। हरिताले, अनुलेपनयोग्ये पिष्टे घृष्टे वा चन्दनादौ द्रव्ये च। हिङ्गुलादौ पु०स्त्री०। नर्त्तने न०। एकस्यैव सूत्रादेः पद्यान्तरव्याख्यानरूपे ग्रन्थभेदे न० 'लिप्सासूत्रे तृतीयवर्णके' इति मिताक्षरा।

वर्णकूपिका स्त्री० वर्णानामक्षराणां लेखनाय क्षुद्रः कूपः कूपी स्वार्थे कन्। मस्याधारे। [चित्रकरे।

वर्णचारक पु० वर्णं शुक्लादिरूपं चारयति चर णिच्-ण्वुल्।

वर्णज्येष्ठ पु० वर्णेषु ज्येष्ठः प्रथमसृष्टत्वात्। अग्रजे, विप्रे। सर्वापेक्षया श्रेष्ठवर्णे त्रि० 'वर्णज्येष्ठा च या नारीति स्मृतिः

वर्णतूलि(ली) स्त्री० वर्णानां लेखनसाधनं तूलिः। लेखन्याम् स्वार्थे कन्। अत्रैव।

वर्णद न०वर्णं ददाति दा-क। कालीयके गन्धद्रव्ये। वर्णप्रदे त्रि०

वर्णदात्री स्त्री०वर्णं रूपं ददाति दा-तृच् ङीप्। हरिद्रायाम् वर्णदातरि त्रि०।

वर्णदूत पु० वर्णा एव दूतो यत्र। लिपौ।

वर्णधर्म्म पु०न०६त०। विप्रादीनामसाधारणे धर्म्मे यथा विप्रस्य याजनाध्यापनप्रतिग्रहादि, क्षत्रियस्य प्रजापालनादि।

वर्णसङ्कर पु० संकीर्य्यते सम्+कॄ-अप् वर्णतः सङ्करः। विप्रादिभ्यो वर्णेभ्योऽनुलोमप्रतिलोमजाते मूर्द्धाभिषिक्तादौ जातिभेदे 'जायते वर्णसङ्करः' इति गीता।

वर्णा स्त्री०प्रशस्तवर्णोऽस्त्यस्याः फलगुप्मादौ अच्।आढक्याम्।

वर्णाङ्का स्त्री० वर्णा अक्षराणि अङ्क्यन्तेऽनया अङ्क-अच्। लेखन्याम्। [अकारादावक्षरे शब्दभेदे

वर्णात्मन् पु० वर्ण आत्मा स्वरूपं यस्य। ध्वन्यात्मकादिलक्षणे

वर्णार्ह पु० वर्णं स्तुतिमर्हति अर्ह-अण्। मुद्गे। [न्याम्

वर्णिका स्त्री०वर्णा अक्षराणि लेख्यत्वेन सन्त्यस्याः ठन्। लेख-

वर्णित त्रि० वर्ण-क्त। स्तुते,कृतवर्णने, रूपान्तरमापादिते च

वर्णिनी स्त्री०प्रशस्तवर्णः अस्त्यस्याः इनि ङीप्। हरिद्रायाम्

वर्णिन् पु०वर्णोऽस्त्यस्य इनि। चित्रकरे, लेखके ब्रह्मचारिणि च 'अथाह वर्णी विदितो महेश्वर' इति कुमारः विप्रादि जातौ च 'वर्णिनां हि वधो यत्रे'ति स्मृतिः। [क्षुरे च

वर्त्तक पु०वृत-ण्वुल्। (भारुइ) पक्षिभेदे। वर्त्तकायत्र अश्वस्य

वर्त्तन न०वृत-ल्युट्। वृत्तौ स्थितौ। णिच्-भावे ल्युट्।स्थापने। णिच्-करणे-ल्युट्। जीवनोपाये न०। तर्कुपीठे स्त्री० ङीप्। ल्यु। वृत्तिमति, वर्त्तिष्णौ च त्रि०। वायसे पु०।

वर्त्तनी स्त्री०वर्त्तते मार्गवत्। वृत-णिच्-आधारे-ल्युट्। पथि

वर्त्तमान पु० वृत-शानच्। कालभेदे शब्दप्रयोगाधारे आरब्धापरिसमाप्ते काले। तत्कालवृत्तौ त्रि०। [लोहभेदे

वर्त्तलोह न० वर्त्तयते वृत-णिच्-अच् कर्म०। आवर्त्तनयोग्ये

वर्त्ति(र्त्ती) स्त्री० वृत-इन् वा ङीप्। लेपे, नयनाञ्जने, गात्रानुलेपने, दीपदशायाञ्च।

वर्त्तिक पु० वृत तिकन्। (वटेर) विहगभेदे। वर्त्मनि वर्त्तते वृत. अच् वर्त्तः तत्र साधुः ठितो वा ठन्। भारे।

वर्त्तिन् त्रि० वृत,णिनि। वर्त्तनशीले।

वर्त्तिष्णु त्रि०वृत-इष्णुच्। वर्त्तनशीले। [काले। तद्वृत्तौ त्रि०

वर्त्तिष्यमाण पु० वृत-शानच् लृटः सद्वेति स्यट्। भविष्यत्-

वर्त्तुल त्रि०वृत-उलच्। गोलाकारे पदार्थे। गृञ्जने न०। कलाय भेदे पु०।तर्कुपीठ्याम् स्त्री०। गजपिप्पल्याम् स्त्री० ङीप्।

वर्त्मन् न० वृत-मनिन्। पथि, आचारे, 'आ मनोर्वर्त्मन इति रघुः। नेत्रच्छदे च।

वर्त्मनि स्त्री० वृत-अनि मुट् च। पथि।

वर्द्ध छेदने, पूरणे च चु०उभ०सक०सेट्। वर्द्धयति ते अववर्द्धत् त।

वर्द्ध पु०वृध-अच्। ताम्राभ (रामनहाटि) घञ्। पूरणे,छेदे च

वर्द्धक पु० वृध-ण्वुल्। ताम्रनयष्टौ (रामनहाटी) पूरके,छेदके च

वर्द्धकि पु० वृध-अच् कप इ कर्म०। त्वष्टरि (छुतार)।

वर्द्धकिन् पु०वर्द्धक-वर्द्धोऽस्त्यस्य इनि। त्वष्टरि (छुतार) जातिभेदे

वर्द्धन न० वृध-ल्युट्। छेदने, पूरणे च। वृध-णिच्-ल्यु। वृद्धिकारके त्रि०। 'करोमि चितिवर्द्धन'मिति भट्टिः। वृध-ल्यु। वृद्धियुक्ते त्रि०। [सनालपात्रभेदे च (बदन)

वर्द्धनी स्त्री० वर्द्ध्यतेऽनया वृध णिच्-ल्युट्। संमार्ज्जन्याम्,

वर्द्धमान पु० वृध-शानच्। एरण्डवृक्षे। वृद्धिशीले त्रि०। शरावे (मृत्पात्रभेदे) विष्णौ, धनिना, गृहभेदे, देशभेदे, नगरभेदे च। वृद्धियुक्ते त्रि०।

वर्द्धापन न० वर्द्धं छेदं करोति वर्द्ध+णिच्-आप् च ततोभावे ल्युट्। नाडीच्छेदनकर्म्माङ्गे संस्कारभेदे।

वर्द्धित न० वृध-णिच्-क्त। छेदिते, पूरिते, प्रस्तुते च।

वर्द्धिष्णु त्रि० वृध-इष्णुच्। वृद्धिशीले।

वर्ध्र न० वृध-ष्ट्रन्। चर्म्मणि। चर्म्मरज्जौ स्त्री० ङीप्।

वर्फ गतौ वधे च भ्वा०पर०सक०सेट्। वर्फति अवर्फीत्।

वर्म्मकण्ठक पु० वर्म्म इव कण्टकोऽस्य। बर्वुरे।

वर्म्मकषा स्त्री० वर्म्म कषति अच्। (चामकषा) सप्तलायाम्

वर्म्मन् न० वृ मनिन्। कवचे सन्नाहे। क्षत्रियोपाधौ पु०।

वर्म्महर पु० वर्म्म हरति हृ-अच्। सन्नाहधारणयोग्ये अवस्थाभेदे तरुणे।

वलीक न० वल्यते संव्रियतेऽनेन ईकन् । वनीकशब्दार्थे पटले
वलून त्रि० वलं देहोत्थापनमस्त्यस्य ऊनच् । बलविशिष्टे ।
वल्क भाषणे चु०उ०द्वि०सेट् । वल्कयति ते अववल्कत् त ।
वल्क न० वल संवरणे कच् कस्य नेत्त्वम् । वृक्षादीनां त्वचि, वल्कले, मत्स्यानां त्वचि शुल्के (आंइस) खण्डे च ।
वल्कतरु पु० वल्काय तरुः । पट्टिकालोध्रे, गुवाकवृक्षे च ।
वल्कद्रुम पु० वल्कप्रधानोद्रुमः । भूर्जपत्रवृक्षे ।
वल्कल न० वल-कलन् कस्य नेत्त्वम् । त्वचे । (दारचिनि) वृक्ष त्वचि (छाल) पु० न० ।
वल्कलोध्र पु० वल्कभवो लोध्रः । पट्टिकालोध्रे ।
वल्ग गतौ प्लुतगतौ च भ्वा०पर०सक०सेट् । वल्गति अवल्गीत्
वल्गा स्त्री० वल्ग अ । (लागाम) अश्वमुखस्थे रज्जुभेदे ।
वल्गित न० वल्ग-क्त । अश्वस्य गतिभेदे, गमने,वक्रभाषणे च ।
वल्गु पु० वल संवरणे उ-गुक् च । छागे । मनोहरे त्रि० ।
संज्ञायां कन् । चन्दने,वने,पणे च न०। चारुणि सुन्दरे च त्रि०
वल्गुपत्र पु० वल्गूनि पत्त्राणि यस्य । वनमुद्गे ।
वल्भ भक्षणे भ्वा० आत्म०सक० सेट् । वल्भते अवल्भिष्ट ।
वल्मिकि पु० वल-इकि मुट् च । } कीटविशेषकृते मृत्तिका
वल्मीक पु० वल-ईक मुट् च । } स्तूपे (उयेर ढिपि ।
वल्यु(ल्यू)ल छेदने पवित्रीकरणे च अद० चुरा०उभ०सक० सेट् । वल्यु(ल्यू)लयति-ते अववल्यु(ल्यू)लत् त ।
वल्ल संवरणे भ्वा०आ०सक०सेट् । वल्लते अवल्लिष्ट ।
वल्ल पु०वल्ल-घञ् । गुञ्जात्रयपरिमाणे 'वल्लस्त्रिगुञ्ज' इति लीला०
वल्लकी स्त्री० वल्ल-क्वुन् गौ० ङीष् । वीणायाम् सल्लकीवृक्षे च ।
वल्लभ पु० वल्ल-अभच् । दयिते, अध्यक्षे, उत्तमाश्वे च ।
वल्लभपाल पु० वल्लभं पालयति पाल-अण् । अश्वपाले ।
वल्लर न० वल्ल-अरन् । कृष्णागुरुणि,गहने, कुञ्जे च ।
वल्लरि(री) स्त्री० वल्ल अरिन् वा ङीप् । मञ्जर्यां,मेथिकायां च
वल्लव पु०वल्ल अच् तं वाति वा-क । गोपे, पाचके, भीमसेने च
वल्लि(ल्ली) स्त्री० वल्ल-इन् वा ङीप् । लतायाम् पृथिव्याञ्च दीर्घान्तस्त । अजमोदायां, कैवर्त्तिकायाम्, चव्ये च ।
वल्लीज न० वल्ल्यां जायते जन-ड । मरिचे ।
वल्लीदूर्वा स्त्री० वल्लिरूपा दूर्वा । मालादूर्वायाम् ।
वल्लीबदरी स्त्री० वल्लीरूपा बदरी । भूमिबदर्याम् ।
वल्लीमुद्ग पु० वल्लीप्रधान० मुद्गः । वनमुद्गे (मुग.नि)
वल्लीवृक्ष पु० वल्लीव दीर्घो वृक्षः । शालवृक्षे ।
वल्लुर न० वल्ल-उरन् । कुञ्जे, मञ्जर्यां, क्षेत्रे, निर्जलस्थाने शाद्वले, गहने च ।

वल्लूर त्रि० वल्ल-ऊरन् । आतपादिना शुष्कमांसे,शूकरमांसे, वनचोले, वाहने, ऊषरभूमौ च ।
वल्ल्या स्त्री० वल्ल-यत् । धात्रीवृक्षे ।
वल्वज पु० वलते भुवं वेष्टयति वल-क्विप् तादृशः सन् वजति गच्छति वज-अच् । उलपे तृणभेदे । (वावुइ) वृक्षभेदे स्त्री०
वल्ह दीप्तौ चु०उ०अक०सेट् । वल्हयति ते अववल्हत्-त ।
वल्ह उत्कर्षे भ्वा० आ०अक०सेट् । वल्हते अवल्हिष्ट ।
वव पु० वा-ड प्रकारे द्वित्वम् । ज्योतिषोक्ते तिथ्यर्द्धात्मके प्रथमे करणे । [अवशीत् ।
वश स्पृहायाम् अदा०पर०सक०सेट् खपा० । वष्टि अवाशीत्
वश पु० न० वश-अप् । आयत्तत्वे, प्रभुत्वे च आयत्ते त्रि० ।
वशंवद त्रि० वशं वशकरं मधुरं, वशोऽहमिति वा वदति वद-खच् मुम् च । प्रियवाक्यवादिनि, मधुरवादिनि, 'तवाहं वश' इति वादिनि च ।
वशक्रिया स्त्री० वशस्य क्रिया करणम् कृ-श । वशीकरणे ।
वशग त्रि० वशं गच्छति गम-ड । वशीभूते ।
वशवर्त्तिन् त्रि० वशे वर्त्तते वृत-णिनि । वशीभूते ।
वशा(सा) स्त्री० वश-(वस) अच् । वन्ध्यायां योषायां, कन्यायां, करिण्यां, स्त्रीगव्याञ्च । [स्त्री० ।
वशिक त्रि० वशोऽस्त्यस्य ठन् । शून्ये आयत्ते च अगुरुचन्दने
वशित्व न० वशिनो भाव० त्व । स्वातन्त्र्ये, ईश्वरस्य ऐश्वर्य-भेदे च । तल् । वशिताऽप्यत्र स्त्री० ।
वशिन् त्रि०वशोऽस्त्यस्य इनि । जितेन्द्रिये,स्वाधीने, स्वतन्त्रे च
वशिर न०वश-इरन् । सामुद्रलवणे गजपिप्पल्याम्, चव्ये च।पु०
वशि(षि)ष्ठ पु०अतिशयेन वशी इष्ठन् इनेर्लुक् ष्ठ०वा यस्य सः । अतिशयजितेन्द्रियतायुक्ते मुनिभेदे ।
वशीकरण न० अवश वशः क्रियतेऽनेन वश-च्वि-कृ-ल्युट् । तन्त्राद्युक्ते वशतासम्पादके मणिमन्त्रादौ ।
वशीर पु० वश-ईरन् । गजपिप्पल्याम् ।
वश्य न० वश-यत् । लवङ्गे । आयत्ते त्रि० ।
वष वधे भ्वा०पर०सक०सेट् । वषति अवषीत् अवाषीत् ।
वषट् अव्य० वह-डषटि । देवोद्देश्यकहविस्त्यागे ।
वषट्कार पु०वषट्+कृ-घञ् । देवोद्देशकत्यागरूपे यज्ञे ।
वषट्कृत त्रि० वषट् इति कृतम् कृ-क्त । हुते ।
वष्क गतौ भ्वा०आ०सक०सेट् । वष्कते । अवष्किष्ट ।
वष्कय पु० वष्क-अयन् । एकहायने वत्से ।
वष्कयणी स्त्री० वष्कयमेकहायनवत्सं नयति स्थानान्तरं नी-ड गौ०ङीष् णत्वम् । चिरप्रसूतायां गवि ।

वष्कयिणी स्त्री० वष्कय एकहायनो वत्सोऽस्त्यस्या इनि। चिरप्रसूतायां गवि। [अवीवसत् त

वस सन्नतायां अक० वधे सक० चु० उभ० सेट्। वासयति ते

वस स्तम्भे दिवा०पर० सक० सेट्। वस्यति अवसत् अवासीत्। क्त्वा वेट्।

वस निवासे भ्वा० पर० अक० अनिट् यजा०। वसति अवात्सीत्

वस आच्छादने अदा०आ० सक० सेट् यमा। वस्ते अवसिष्ट।

वस वासने अद०चु० उभ० सक० सेट्। वसयति ते अववसत् त।

वसति(ती) स्त्री० वस अति वा ङीप्। वासे यामिन्याम्, 'वसतीर्वसेति रघु, निकेतने स्थाने च।

वसन न० वस-ल्युट्। वस्त्रे, छादने निवासे, वस्त्रभूषणे च

वसन्त पु० वस-झ। मधुमाधवात्मके ऋतुभेदे, रागभेदे च।

वसन्तक पु० वसन्ते कायति कै-क। श्योनाकवृक्षे।

वसन्तकुसुमाकर पु० प्रमेहरोगनाशके औषधभेदे।

वसन्तजा स्त्री० वसन्ते जायते जन ड। माधवीलतायाम्।

वसन्ततिलक न० चतुर्दशाक्षरपादके छन्दोभेदे।

वसन्तदूत पु० वसन्तस्य दूत इव। कोकिले, आम्रवृक्षे पञ्चमस्वरे च। माधवीलतायाम् पाटलीवृक्षे, गणिकारिकायाञ्च स्त्री० ङीप्।

वसन्तद्रु पु०वसन्तस्य प्रधानः द्रुः। आम्रवृक्षे। वसन्तदूतादयोऽप्यत्र

वसन्तसख पु० वसन्तस्य सखा टच् समा०। कामदेवे।

वसा स्त्री० वस अच्। मांसजाते, देहस्थे,धातुभेदे मेदसि, मांसरोहिण्यां लतायाम्।

वसु न० वस उ। धने, रत्ने, वृद्ध्यौषधे, श्यामे,स्वर्णे, जले च। वकवृक्षे,सूर्ये, वह्नौ,रश्मौ, गणदेवताभेदे, अष्टसंख्यायाम् पु०। मधुरे शुष्के च त्रि०। दीप्तौ, वृद्ध्यौषधौ च स्त्री०। वसुदेवतात्मके धनिष्ठानक्षत्रे पु०।

वसुक पु० वसु इव कायति कै-क। अर्कवृक्षे वकवृक्षे च।

वसुच्छिद्रा स्त्री० वसुसंख्यातानि छिद्राण्यस्याः। महामेदायाम्

वसुदेव पु० वसुना दीव्यति दिव अच्। श्रीकृष्णजनके यादवे क्षत्रियभेदे। [सुतादयोऽप्यत्र।

वसुदेवभू पु० वसुदेवात् भवति भू क्विप्। श्रीकृष्णे वसुदेव

वसुधा स्त्री० वसूनि धीयन्तेऽस्यां धा क। पृथिव्याम्।

वसुधारा स्त्री० वसोर्वैदिराजस्य प्रियार्थं धारा एतादृशाव भवति। माङ्गल्येषु वेदिराजवसुदेवेन दीयमानायां घृतादिधारायाम्।

वसुन्धरा स्त्री० वसूनि धारयति धृ खच् मुम् च। पृथिव्याम्

वसुमती स्त्री० वसूनि सन्त्यस्याः मतुप्। पृथिव्याम्।

वसुश्रेष्ठ पु० वसूनां श्रेष्ठ इव। वकवृक्षे। [अववस्तत् त

वस्त अर्धे गतौ च सक०याचने द्वि०चु०उभ०सेट्। वस्तयति ते

वस्त पु० वस्यते बध्यते वस्त घञ्। छागे।

वस्तक न० वस्त इव कायति कै-क। कृत्रिमलवणे।

वस्तकर्णी पु० वस्तस्य कर्ण इव पत्रमस्य। शालवृक्षे।

वस्तगन्धा स्त्री० वस्तस्येव गन्धोऽस्याः। अजगन्धायाम्।

वस्तमोदा स्त्री० वस्तस्येव मोदो यस्याः। अजमोदायाम्।

वस्ति पु०वस्तेऽयाच्छादयति मलम् वस तिच्। नाभेरधोभागे मूत्राधारे स्थाने,वासे च वसनदशायां स्त्री० ब०व०। [अम्बष्ठवृक्षे।

वस्तिकर्माढ्य पु० वस्तिकर्मणा तत्साधनद्रव्यमारेणाढ्यः।

वस्तिमल न०६त०। मूत्रे।

वस्तु न० वस-तुन्। द्रव्ये। पदार्थे सत्यपदार्थे च।

वस्तुक न०वस्तु+स्वार्थे कन्। वास्तुके शाकभेदे श्वेतवल्मीयाके च

वस्त्य न० वसौ साधु यत्। गृहे।

वस्त्र न० वस ष्ट्रन्। परिधानाद्युपयुक्ते कार्पासादौ वसने।

वस्त्रकुट्टिम न० वस्त्रनिर्मितं कुट्टिमं यत्र। वस्त्रगृहे (तांबू)।

वस्त्रगृह न० वस्त्रनिर्मितं गृहम् शाक०। (तांबू) वस्त्रनिर्मिते गृहे।

वस्त्रग्रन्थि पु० ६त० नीव्याम्। [त्रिकायाम्।

वस्त्रपुत्रिका स्त्री० वस्त्रनिर्मिता पुत्रिका। वस्त्रनिर्मितपुत्त

वस्त्रभूषणा स्त्री० वस्त्रस्य भूषणं यस्याः ब०व०। मञ्जिष्ठायाम्। शाकरवृक्षे पु०।

वस्त्ररञ्जन पु० वस्त्रं रञ्जयति रञ्ज-णिच् ल्यु। कुसुम्भे।

वस्न न०वस नन्। वेतने द्रव्ये च। धने,त्वचि,मृत्यौ च मूल्ये पु०

वस्नसा स्त्री० वस्नं स्यति षो क। स्नायौ।

वस्वौकसारा स्त्री० वसूनामोकसः सारो यत्र। इन्द्रनगर्याम् इन्द्रनद्यां, कुबेरपुर्याञ्च।

वह दीप्तौ चु० उ० अक० सेट् इदित्। वंहयति ते अववंहत्।

वह प्रापणे भ्वा० उ० द्विक० यजा० अनिट्। वहति ते अवाक्षीत् उवाह। [प्रथि गड्डे च।

वह पु० उह्यतेऽनेन वह घञ्। वृषस्कन्धदेशे, मोटके, वायौ,

वहल पु० वह-अलच्। पोते, दृढे त्रि०।

वहलगन्ध न० वहलो दृढो गन्धो यस्य। बर्बरचन्दने।

वहलचक्षुस् पु० वहलानि चक्षुंषीव पुष्पाण्यस्य। मेषशृङ्ग्यां (गाडरसिङ्गा)।

वहलत्वच पु० वहला कठिना त्वचा यस्य। श्वेतलोध्रे।

वहला स्त्री० वहलानि पुष्पादीनि सन्त्यस्य अर्श आद्यच्। शतपुष्पायाम् स्थूलैलायाञ्च।

वहित्र न० वह-इत्र। पोते जलयाने। स्वार्थे कन्। अत्रैवार्थे
वहिरङ्ग न०वहि० प्रकृतेर्वाह्यमङ्गं यस्य। व्याकरणोक्ते प्रत्यया
टिनिमित्तके प्रकृत्युरावयवादिकार्य्ये।
वहिरिन्द्रिय न० वहिर्देहाद्वाह्यस्य पदार्थस्य ग्राहकमिन्द्रि-
यम्। गन्धादिवाह्यविषयग्राहकेषु श्रोत्रादिषु।
वहिर्मुख त्रि० वहिः वाह्यविषये मुखं प्रवणता यस्य। वाह्य-
विषयासक्तमनस्के विषयासक्ते जने,विमुखे च।
वहिस् अव्य० वह-इसुन्। वाह्ये। [विभीतकवृक्षे।
वहेडुक पु० वह-अच् वहः एडुक इव दृहत् काण्डो यस्य।
वह्नि पु० वह-नि। अग्नौ, चित्रकवृक्षे, भल्लातके, निम्बूके
तन्त्रोक्ते रकारे च। 'वर्गाद्यं वह्निसंस्थ'मिति श्यामास्तोत्रम्
वह्निकरी स्त्री० वह्निं देहस्थवह्निं करोति उद्दीपयति कृ-ट
ङीप्। धात्री वृक्षे (धाइफुल) वह्न्युद्दीपके त्रि०।
वह्निकाष्ठ न०वह्नेर्दाह्यदाहानुकूलं काष्ठम्। दाहागुरुणि।
वह्निगन्ध पु० वह्नौ दाहकाले गन्धो यस्य। यक्षधूपे (धुना)
वह्निगर्भ पु० वह्निर्गर्भे यस्य। वंशे, शमीवृक्षे स्त्री०।
वह्निज्वाला स्त्री० वह्नेर्ज्वालेव पीडाकारकत्वात्। धातकीवृक्षे
वह्निदीपक पु० वह्निं देहस्थवह्निं सेवनाद्दीपयति दीप-णिच्
ण्वुल् वह्निरिव दीप्यति दीप-ण्वुल् वा। कुसुम्भे अग्न्यु-
द्दीपके त्रि० अजमोदायाम् स्त्री०।
वह्निनी स्त्री० वह्निं नयति नी-ड गौ०ङीप्। जटामांस्याम्
वह्निपुष्प स्त्री० वह्निरिव तापकं पुष्पं यस्य। धातकीवृक्षे।
वह्निभोग्य न०६त०। घृते। [गणिकारीवृक्षे।
वह्निमन्थ पु० वह्नये वह्निजननाय मथ्यतेऽसौ मन्थ-घञ्।
वह्निमित्र पु० वह्निर्मित्रं यस्य। वायौ ६त०। तत्रैव न०
वह्निरेतस् पु० वह्नौ निषिक्तं रेतो येन। शिवे। वह्नौ हि
निषिक्तात् शिववीर्य्यात् गङ्गादिसंक्रमेण कार्त्तिकेयोत्पत्तिः
वह्निलोहक न० वह्नेः प्रियं लोहं धातुः स्वार्थे कन्। कांस्ये
वह्निवधू स्त्री० ६त०। अग्निभार्य्यायां स्वाहायाम्, तदा-
त्मके मन्त्रे च। वह्निजायादयोऽप्यत्र।
वह्निवर्ण न० वह्नेरिव वर्णोऽस्य। रक्तोत्पले।
वह्निवल्लभ पु० वह्नेर्वल्लभ उद्दीपकत्वात्। सर्ज्जरसे, (धुना)
वह्निवीज न० वह्नेर्देहस्थस्य वीजमिव उद्दीपकत्वात्।
जीरके, वह्निदेवताके तन्त्रोक्ते रकारे च।
वह्निशिखा न० वह्नेरिव रक्ता शिखाऽस्य। कुसुम्भे। कलि-
कार्यां, धातक्याञ्च स्त्री०।
वह्निसख पु० ६त०। वायौ। देहस्थवह्नेरुद्दीपके जीरके।
वह्य न० वह-यत्। शकटे, वाहनमात्रे च।

वा सुखाप्तौ अक० गतौ सेवने च सक० चुरा० उभ० सेट्।
वापयति ते अवीवपत् त।
वा गमने हिंसने च अदा०पर०सक०अनिट्। वाति अवासीत्।
वा अव्य० वा-का। विकल्पे, सादृश्ये, अवधारणे, समुच्चये,
वितर्के, पादपूरणे च।
वांशिक पु० वंशो तद्वादनं शिल्पमस्य ठक्। वंशीवादनशीले
वांशी स्त्री० वंशे भवः अण् ङीप्। वंशरोचनायाम्।
वाक पु० वच-घञ्। वचने 'नमोवाकं प्रशास्महे' इत्युत्तरचरि
तम् ग्रन्थभेदे च 'वाकोवाक्यं तिहासेत्यादि' छान्दोग्यम्।
वकसमूहम् अण्। वकसम्बन्धिनि त्रि०।
वाकुची स्त्री०वाति क्विप् वा कुच-सङ्कोचे क गौ०ङीप्कर्म०।
(हाकुच) ओषधिभेदे। [वचनयुक्ते।
वाक्पति पु०६त०। वृहस्पतौ, वाचः पतिरिव। निर्दोषोद्धत
वाक्पथ पु० वाचः पन्थाः विषयः अच् समा०। वाक्यविषये
वाक्पारुष्य न० वाचा पारुष्यम्। 'देशजातिकुलादीनामा
क्रोशोन्यङ्गसंयुतम्। यद्वच प्रतिकूलार्थं वाक्पारुष्यं तदु-
च्यते' इत्युक्तलक्षणे अष्टादशविवादान्तर्गते विवादभेदे।
वाक्य न०वच-ण्यत् चस्य कः। 'वाक्यं स्याद्योग्यताकाङ्क्षासत्ति
युक्तः पदोच्चय' इत्युक्ते स्वार्थवोधसमाप्ते पदसमुदाये।
वाख सृप्तायां भ्वा०पर०सक०सेट् इदित्। वाङ्खति अवाङ्खीत्
वागीश पु०वाचामीशः। वृहस्पतौ 'वागीशाद्याः सुमनस इति
न्यायमाला। सरस्वत्यां स्त्री० 'वागीशा हृदये यस्ये'ति
श्रीधरः।
वागीश्वर पु०६त०। वृहस्पतौ गुरौ च तत्पत्न्यां सरस्वत्यां स्त्री०
ङीप् 'वागीश्वरी मतसुतातां फुल्लेन्दीवरलोचनाम्। वागी-
श्वरेण संयुक्ता'मिति तन्त्रम्।
वागुजी स्त्री० वाचा गुज्यते ध्वन्यते गुज-क गौरा० ङीप्।
सोमराज्याम्। [पाशादौ।
वागुरा स्त्री० वा-हिंसने उर गन् च। मृगयार्थं मृगवन्धन-
वागुरावृत्ति पु० वागुरा मृगवन्धनपाशादिरेव वृत्तिर्जी-
विका यस्य। व्याधे। [व्याधे
वागुरिक पु० वागुरा प्रहरणं यस्य वागुरयाचरति वा ठक्।
वाग्डम्बर पु०६त०। वाक्यस्तोमे बहुलवाक्ये च।
वाग्दण्ड पु० वाचो वागिन्द्रियस्य दण्डः संयमनम्। मित-
भाषणे वाक्यसंयमे च। [कृतसङ्कल्पायां कन्यायाम्
वाग्दत्ता स्त्री० वाचा दत्ता। विधिना वाक्यमात्रेण दत्ता
वाग्दुष्ट त्रि० वाचा दुर्वचनेन दुष्टः। शुद्धेपि वस्तुन्यशुद्धरूप
तया कथनेन दूषिते।'वाग्दुष्टं भावदुष्टं च वर्जयेदिति स्मृतिः

**वाग्देवता** स्त्री॰ वाचां देवता। सरस्वत्यां 'वाग्देवता-चरितचित्रितचित्तसद्मे'ति जयदेवः। वाग्देव्यादयोऽप्यत्र।

**वाग्मिन्** त्रि॰ वाच्+अस्त्यर्थे ग्मिनि चस्य क तस्य लोपः। प्रशस्तवाक्यवक्तरि। वृहस्पतौ पु॰।

**वाग्यत** त्रि॰ वाचि वागिन्द्रियव्यापारे यतो येन। मौने 'वाग्यतस्तिष्ठन् चरेदि'ति स्मृतिः।

**वाङ्मय** त्रि॰ वाक्स्वरूपम् मयट् चस्य कः। वाक्यस्वरूपे शास्त्रे

**वाङ्मती** स्त्री॰ 'हिमाद्रेस्तुङ्गशिखरात् प्रोद्भूता वाग्मती नदी' त्युक्ते नदीभेदे। सा च शिवलिङ्गसमीपस्थतया वहति

**वाचंयम** त्रि॰ वाचा यच्छति वाचा+यम-ख मुम् हस्वश्च। मितभाषिणि। मौनावलम्बिनि मुनौ पु॰।

**वाचक** पु॰ वक्ति अभिधावृत्त्या बोधयति ण्वुल्। 'साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचकः' इत्युक्ते शब्दभेदे। कथके त्रि॰। वाचयति वच णिच् ण्वुल्। पुराणादिपाठके त्रि॰ वाचकः पूजितो येनेति पुराणम्।

**वाचन** न॰ वच-णिच्-स्वार्थे वा णिच् ल्युट्। पठने कथने च युच्। पठने स्त्री॰। [भाषादौ।

**वाचनिक** त्रि॰ वचनेन निर्वृत्तम् ठक्। वाक्यनिष्पादिते

**वाचस्पति** पु॰ ६त॰ अलुक् समा॰। वृहस्पतौ।

**वाच्(चा)** स्त्री उच्यतेऽसौ अनया वा वच क्विप् नि॰ वा टाप्। वाक्ये, वागिन्द्रिये च।

**वाचाट** त्रि॰ वाक्+कुत्सायां बाहुल्ये वाऽस्त्यर्थे आटच् अलुक् न कः। कुत्सितबहुभाषिणि। आलस्। वाचालोऽप्यत्र।

**वाचिक** त्रि॰वाचा कृतम् वाच्+ठक् अलुक् न कः। वाक्यनिष्पादिते भाषादौ। [वाक्यनिर्भर्त्सने च।

**वाचोयुक्ति** स्त्री॰ ६त॰ अलुक् स॰। वाचादर्शितयुक्तौ

**वाच्य** न वच-भावे ण्यत् न कः। दूषणे प्रतिपादने, कथने च। कर्मणि ण्यत्। दूष्ये प्रतिपाद्ये, अभिधया बोध्यार्थे च।

**वाञ्छ** कामे भ्वा पर सक सेट इदित्। वाञ्छति अवाञ्छीत्।

**वाज** न वज घञ्। घृते जले, यज्ञे च। शरपक्षे, वेगे च पु॰

**वाजपेय** पु॰न वाज्यमन्नं घृतं वा पेयमत्र। यागभेदे।

**वाजपेयिन्** पु॰वाजपेय+अस्त्यर्थे इनि। वाजपेययागकर्त्तरि उपचारात् तद्यज्ञे च।

**वाजसनेयिन्** पु वाजसनेय अध्येतृत्वेनास्त्यस्य इनि। यजुर्वेदशाखाभेदाध्यायिनि विप्रादौ। तद्धर्मरीत्या कर्माद्ध शूद्रे च शूद्रा वाजसनेयिन इति श्रुतिः। [जन तत्रैव।

**वाजिदन्त** पु वाजिनां दन्त इव पुष्पमस्य। वासके। स्वार्थे

**वाजिन्** पु वाज वेगः पक्षो वा अस्त्यस्य इनि। घोटके, वाणे



वासके च वेगवति त्रि॰। स्त्रियां ङीप्। सा च अश्वगन्धायाञ्च

**वाजिन** न॰ वाजिभ्योदेयम् अण्। आमिक्षानिःसृतजले 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमि'ति श्रुतिः।

**वाजिपृष्ठ** पु॰ वाजिन इव पृष्ठमस्य। ग्लानहन्ते।

**वाजिभक्ष** पु॰ भक्ष्यते भक्ष-कर्मणि घञ् ६त। चणके।

**वाजिभोजन** पु वाजिभिर्भुज्यते भुज कर्मणि ल्युट्। मुद्गे

**वाजीकरण** न अवाजी वाजीव क्रियतेऽनेन वाजिन्+च्वि कृ-ल्युट्। 'यद्द्रव्यं पुरुषं कुर्यात् वाजिवत् सुरतक्षमम्। तद्वाजीकरणं ख्यातमि'त्युक्ते वीर्य्यवृद्धिकारके औषधभेदे

**वाञ्छा** स्त्री॰ वाछि अ। इच्छायाम् इष्टसाधनताधीजन्येऽभीष्टविषये चित्तवृत्तिभेदे। [वाञ्छुभूमी स्त्री॰

**वाट** पु॰ वट-घञ्। पथि, स्थाने, वृतिस्थाने च। गौ॰ ङीष्।

**वाटिका** स्त्री॰वट-ण्वुल्। वास्तुभूमौ (वेडियाला) क्षुपे हिङ्गुपत्रयाञ्च। [क्षुपभेदे।

**वाट्या** स्त्री॰ वाटे हिता तत्र साधुर्वा यत्। (वेड़ियाला)

**वाट्याल** पु॰ वाटीमलति भूषयति अल-अण्। (वेड़ियाला) क्षुपभेदे गौरा॰ ङीष्। तत्रैव स्त्री॰। ण्वुल्। तत्रैवार्थे पु॰

**वाड** आप्लावे भ्वा आ अ सेट् चवि न लुक्। वाडते अवाडिष्ट

**वाडवेय** पु वडवायां भव ढक्। वृषभे अश्विनीकुमारेऽनले।

**वाढ** न॰ वह क्त नि। अतिशये तद्युक्ते त्रि॰। पु आम्नातम्। प्रतिज्ञायां, स्वीकारे च अव्य।

**वाण** पु॰वण-घञ्। शरे गया स्तम्भे दैत्यभेदे केवले मञ्जौ कादम्बरीग्रन्थकारके-कविभेदे च पञ्च वाणस्तु बाण इति प्रमन्नराघवम्। नीलझिण्ट्यां पु॰स्त्री।

**वाणपुर** न ६त। शोणितपुरे कोट्टरीपुराख्ये पुरभेदे।

**वाणवार** पु वाणं शरक्षतं वारयति वृ॰ ह अण्। योधादेर्योऽलाकारे सन्नाहे कवचे।

**वाणहन्** पु वाणं हतवान् हन ताडने भूते क्विप्। श्रीकृष्णे वाणजिदादयोऽप्यत्र। [ङीप्। वाक्ये तद्देवतायाञ्च

**वाणि** स्त्री॰ वण इण वा ङीप्। वयने, वाग्देव्ये सरस्वती

**वात** गतौ सेवायां सुखीकरणे च सक अट चु॰उभ॰ सेट्। वातयति ते अववातत त।

**वात** पु॰ वा-क्त। अर्थमात्रविशेषगुणके भूतभेदे पवने देहस्थे धातुभेदे च। गन्तरि त्रि॰। जारे इष्टनायके च प्रभातवाताहतोनि भट्टिः।

**वातक** पु वात इव चञ्चल इवार्थे कन्। असनपर्ण्याम् जारे च

**वातकिन्** त्रि॰ वातोऽस्त्यस्य इनि कुक् च। वातरोगयुक्ते।

वातकेतु पु० ६त० । धूली रजसि ।
वातघ्नी स्त्री० वातं रोगभेदं हन्ति हन-टक् ङीप् । शालपर्ण्याम् (शालपानि) अश्वगन्धायां, शिमुड़ीक्षुपे च ।
वातध्वज पु० ६त० । मेघे । [दृच्चे
वातपोथ पु० वातं रोगभेदं पुथ्यति हिनस्ति पुथ-अण् । पलाश
वातप्रमी स्त्री० वातं प्रमिणोति प्र+मा- ई किच्च । शीघ्रगे मृगे
वातमज पु० वातमनुलक्ष्य अजति अज-अच् व्यभावः । मृगभेदे ।
वातमृग पु० वातानुगो मृगः शाक० । शीघ्रगे मृगभेदे ।
वातरक्त न० वातेन दुष्टं रक्तम् रुधिरं यत्र । रोगभेदे ।
वातरक्तघ्न पु० वातजरक्तं रोगभेदं हन्ति ठक् । कुकुरदृच्चे (कुकुरसोङा) ।
वातरक्तारि पु०६त० । (गुलुञ्च) ख्यातायां लतायाम् । [दृच्चे ।
वातरङ्ग पु० वातस्येव सततं रङ्गश्चलनमस्य । चलदले अश्वत्थ
वातरायण पु० वा-क्त ततस्तरप् वातरमयनं यस्य णत्वम् । उन्मत्ते,प्रयोजनशून्ये पुरुषे, काण्डे, करपाले, कूटे, सरलद्रुमेच
वातरूष पु०वातेन रूष्यते रूष-घञ् । वातूले, उत्कोचे, इन्द्रचापे च । [द्रव्ये त्रि० ।
वातल पु० वातं रोगभेदं लाति ला-क । चणके । वायुकारके
वातव्याधि पु० वातेन कायस्थधातुभेदेन जनितो व्याधिः शाक० । वातरोगे । [फलदृच्चे ।
वाताद पु० वाताय वातनिवृत्तये ऽद्यतेऽसौ अद-घञ् (बादाम)
वातापि पु० अगस्त्यनाशितेऽसुरभेदे । 'आतापिर्भक्षितो येन वातापिश्च महाबलः । समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु इति भोजनान्ते पाठ्यमन्त्रः' । [अगस्त्ये मुनौ ।
वातापिसूदन पु० वातापिं सूदयति हिनस्ति सूद-ल्यु ।
वातामोदा स्त्री० वातेनामोदो यस्याः । कस्तूर्य्याम् ।
वातायन न० वातस्यायनं गतिर्येन । गवाक्षे वातस्येव शीघ्रमयनं गतिरस्य । अश्वे पु० ।
वातायु पु० वातमयते अय-उण् । हरिणे ।
वातारि पु० वातस्य रोगभेदस्यारिः । एरण्डदृच्चे, शतमूल्यां, शेफालिकायां, यवान्यां, भार्ग्यां, स्नुह्या, विडङ्गे, शूरणे, भल्लातके, जतुकायाश्च ।
वाताश्व पु० वात इव शीघ्रगोऽश्वः । आजानेये अश्वोत्तमे ।
वाति पु० वा-क्तिच् । वायौ ।
वातिक पु०वातादागत· ठक् । देहस्थवायुधातुजन्ये रोगभेदे ।
वातिग पु० वातिं वायुं गच्छति गम-ड । वार्त्ताकौ गम-अच् वातिगमोप्यत्र । [शम् च । वार्त्ताकौ ।
वातिङ्गण पु० वाति देलस्थवातं शेजनात् गणयति गण-खच् ।
वातीय न० वाताय वातनिवृत्तये हितः छ । काञ्जिके ।
वातुल पु० वातानां समूहः उलच् । वातसमूहे ।
वातूल त्रि० वात+अस्त्यर्थे ऊलच् । वातरोगयुक्ते उन्मत्ते समूहार्थे ऊलच् वातसमूहे पु० । [नोनः । वायुहीने त्रि०
वातोना स्त्री० वातमूनयति ऊन-अण् । गोजिह्वाक्षुपे वाते-
वात्या स्त्री० वातानां समूहः यत् । वातसमूहे 'त्रितय वात्यामयचक्रे'ति नैषधम् ।
वात्सक न० वत्सानां समूहः वुञ् । वत्ससंघे ।
वात्सल्य न० वत्सलस्य भावः ष्यञ् । पुत्रादिस्नेहात्मगुणे रसभेदे
वात्स्य पु० वत्सस्यापत्यं यञ् । गोत्रप्रवर्त्तके मुनिभेदे ।
वात्स्यायन पु० वत्सस्य गोत्रापत्यं युवा वत्स+यञ् ततोयूनि फक्। वत्सगोत्रोत्पन्ने न्यायसूत्रभाष्यकारके पक्षिलाख्ये मुनौ
वाद पु० वद-घञ् । तत्त्वबुभुत्सया कथने, 'प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्ध पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वाद' इति गौतमोक्ते विचारात्मके वाक्यभेदे च ।
वादन न०वद-णिच्-कर्म्मणि ल्युट्। मृदङ्गादिवाद्ये।भावे ल्युट्। मृदङ्गादिताडनरूपे व्यापारे । [निर्मिते वस्त्रादौ ।
वादर न० वदरायाः कार्पास्याः विकारः घञ् । कार्पासस्तूत्र-
वादरङ्ग पु० वादरं वदरासंवन्धिपत्रादिसादृश्यं गच्छति गम खच् डिच्च । अश्वत्थदृच्चे ।
वादरत त्रि० वादे विवादे रतः रम-क्त । अनुदिनविवादशीले
वादरा स्त्री० वातं वायुं राति ददाति रा-क पृ० तस्य दः । कार्पास्याम् ।
वादरायण पु० वदरीप्रधानं स्थानं वादरं तदयनं स्थानं यस्य । नित्यं वदरिकाश्रमवासिनि वेदव्यासे । स्वार्थे इञ् । वादरायणिरप्यत्र । अपत्ये इञ् । व्यासपुत्रे शुकदेवे ।
वादल न०वातं लाति मृह्लाति ला क पृ० तस्य दः। मधुयष्टौ
वादाम न० वातमसति हिनस्ति अस-अण् पृ० तस्य मः । स्वनामख्याते फलभेदे ।
वादित्र न०वद-णिच्-इत्र । मृदङ्गादिवाद्ये।
वादिन् त्रि० वदति वद-णिनि। वक्तरि-अर्थिनि,विवादकर्त्तरि, विचारस्थले प्रथमपक्षप्रतिपादके च ।
वाद्य न० वद-णिच्-यत् । वादनीये मृदङ्गादौ ।
वाद्यभाण्ड न०कर्म०। वादनीयपात्रे । [विष्ट। पङ्क्ति न सुखः
वा(बा)ध विघाते भ्वा०आत्म०सक० सेट् । वा(बा)धते अवा(बा)-
वा(बा)ध पु० वा(बा)ध-घञ् । प्रतिरोधे, प्रतिवन्धे, न्यायोक्ते साभाववत्त्वेन ज्ञाने, अवा(बा)धाप्यत्र, पीडायाश्च स्त्री०। ल्युट् । वा(बा)धनमप्यत्रार्थे न०।

वह-णिच्-णिनि । वायुसञ्चारिण्यां देहस्थशिरायाम् ।

**वायुसख** पु० वायोः सखा सहचरः अच् समा० । अग्नौ ।

**वायुसखि** पु० वायुः सखा यस्य । अग्नौ ।

**वाय्वास्पद** न० ६त० । वायुसञ्चारस्थाने आकाशे ।

**वार्** न० पु० वृ-क्विप् । जले ।

**वार** पु० वृ-घञ् । सङ्घे अवसरे स्वयोग्यकाले (पाला) 'वारोऽङ्गराजस्य पुरि'ति सा० ३प० द्वारे, शिवे, कुब्जवृक्षे, क्षणे सूर्य्यादिग्रहाणां अधिकृते दिने, यथा रविवारः रविस्वामिकं दिनम् इत्यादि । मद्यपात्रे च ।

**वारक** त्रि०वारयति वृ-णिच्-ण्वुल् । प्रवृत्तिनिरोधके । अश्वगतिभेदे, अश्वविशेषे च पु० ।

**वारण** न० वृ-णिच् ल्युट् । प्रवृत्तिप्रतिरोधे, निषेधे छत्रादिधारणे च । गजे पु० । बाणवारे कवचे पु०न० ।

**वारणबुषा**(सा)स्त्री०वारणं पुष्णाति पुष-क पृ० । कदल्याम्

**वारणवल्लभा** स्त्री० ६त० । कदल्याम् ।

**वारवृषा** स्त्री० वारं जलं वर्षत्यत्र वृष-क । धान्ये । [वेश्यायाम्

**वारमुख्या** स्त्री० वारे वेश्यावृन्दे मुख्या । बहुजनसत्कृतायां

**वारंवारम्** अव्य० वृ-णमुल् द्वित्वम् । पौनःपुन्ये ।

**वारलीक** पु० वाःजलं अलीकं यत्र । (वानुइ तुलसी) क्षुपे ।

**वारयितृ** पु० वृ० वृ-तृच् । पत्यौ । वारणकर्त्तरि त्रि० ।

**वारयोषा** स्त्री० वारस्य जनसमूहस्य योषा साधारणत्वात् । वेश्यायाम् । ६त० । वारवध्वादयोऽप्यत्र ।

**वारवाण** पु०न०वार्य्यते वृ-घञ् वारो वार्य्यो वाणो यस्य । कवचे

**वारवाणि** स्त्री०वारं समूहं वणति वण-इण् वा ङीप् । वेश्यायाम्

**वारानिधि** स्त्री०वारां जलराशीनां निधिराधारः नि+धा-कि अलुक् समा० । समुद्रे ।

**वाराणसी** स्त्री० वरणा च असी च सीमात्वेनास्त्यस्या अण् पृ० । काशीनगरे वराणस्यप्यत्र ।

**वाराह** पु० वराहस्येदं प्रियत्वात् अण् । महापिण्डीतकवृक्षे वराहसम्बन्धिनि त्रि० । [ङीप् । अश्वगन्धायाम् ।

**वाराहकर्णी** स्त्री०वराहस्यायं वाराहइव कर्णं पत्त्रमस्याः

**वाराहपत्त्री** स्त्री० वाराहस्तत्कर्णइव पत्त्रमस्याः ङीप् । अश्वगन्धायाम् ।

**वाराहाङ्गी** स्त्री० वाराहमिवाङ्गमस्याः ङीप् । दन्तीवृक्षे ।

**वाराही** स्त्री० वराहस्येयमण् ङीप् । अष्टमातृकामध्ये वराहशक्तौ, 'वाराही नारसिंही चे'ति श्यामास्तवः । वराहक्रान्तायाम् वराहयोषिति च ।

**वारि** न० वृ-इन् । जले, ह्रीवेरे च । वार्य्यतेऽनया वृ-णिच्-इन् वा ङीप् । गजबन्धन्याम् 'वार्य्यर्गलाभङ्गइव प्रवृत्त' इति रघुः । वाणिसरस्वत्याम् च स्त्री ।

**वारिकण्टक** पु०न० वारिणः कण्टकइव । शृङ्गाटके ।

**वारिकर्णी** स्त्री०वारिणि कर्णइव पत्त्रमस्याः ङीप् । कुम्भ्याम् (पाना) स्वार्थे कन् । तत्रैव । [स्वार्थे कन् । तत्रैव ।

**वारिकुब्ज** पु० वारिणि कुब्ज इव वक्राकृतित्वात् । शृङ्गाटके

**वारिचत्वर** पु० वार्य्येव चत्वरस्थपमस्याधारत्वात् । कुम्भिकायाम्

**वारिचर** पु० वारिषु चरति चर-अच् । मत्स्ये जलचरजन्तुमात्रे त्रि० । [त्वात् शैवाले

**वारिचामर** न० वारिणश्चामरमिव शोभाहेतुपुञ्जाकृति-

**वारिज** न० वारिणि जायते जन-ड । पद्मे, लवङ्गे, गौरसुवर्णे, लवणभेदे च । शङ्खे, शम्बूके च पु० । [च

**वारितस्कर** पु० वारिणस्तस्करइवापहारकत्वात् । सूर्य्ये, मेघे

**वारित्रा** स्त्री० वारिणस्त्रायते त्रै-क । छत्रे । [त्रि०

**वारिद** न० वारि ददाति दा-क । मेघे, मुस्तके च । जलदातरि

**वारिधि** पु० वारीणि धीयन्तेऽस्मिन् धा-कि ६त० । समुद्रे वारिनिध्यादयोऽप्यत्र । [(पाना)

**वारिपर्णी** स्त्री० वारिणि पर्णान्यस्याः ङीप् । कुम्भिकायाम्

**वारिपालिका** स्त्री० वारीणि पालयति आस्तृणाति पाल-ण्वुल् । कुम्भिकायाम् (पाना) । [कायाम् (पाना) ।

**वारिपृश्नी** स्त्री० वारिणि पृश्निः पर्णमस्याः ङीप् । कुम्भि-

**वारिबदरा** स्त्री० वारिसमीपभवा बदरेव । प्राचीनामलके ।

**वारिबालक** न०वारिणो बालक इव । ह्रीवेरे

**वारिभव** न० वारिणो भवति प्रभवति भू-अच् । स्रोतोञ्जने ।

**वारिमसि** पु० वारि जलं मसिरिव नीलतापादकं यस्य । मेघे

**वारिमूली** स्त्री० वारिणि मूलमस्याः ङीप् । कुम्भ्याम् (पाना)

**वारिरथ** पु० वारिणि रथ इव गमनसाधनम् । भेलके ।

**वारिराशि** पु० वारीणां राशयोऽत्र । समुद्रे । [त्रि०

**वारिरुह** न० वारिणि रोहति रुह-क । पद्मे, जलजातमात्रे

**वारिवदन** न० वारियुक्तं वदनं यस्मात् । प्राचीनामलके तत्सेवने हि मुखे वारिनिस्रावः ।

**वारिवर** न०वारि वृणोति वृ-अच् । करमर्दके । [वदर्य्याम् ।

**वारिवल्लभा** स्त्री० वारि वल्लभमस्याः उत्पत्तिहेतुत्वात् ।

**वारिवाह** पु० वारीणि वहति वह-अण् । मेघे ।

**वारिश** पु० वारिणि समुद्रजले शेते शी-ड । विष्णौ ।

**वारीश** पु० ६त० । समुद्रे, वरुणे च । वारिनाथादयोऽप्यत्र ।

**वारुण** न० वरुणस्येदमण् । जले, वरुणसंबन्धिनि त्रि० ।

**वारुणि** पु० वरुणस्यापत्यम् इञ् । अगस्त्यमुनौ कुम्भजात-

वासगृह न० वासयोग्यं गृहम् । मध्यगृहे ।
वासतेयी स्त्री०वसतये हिता ढक् । रात्रौ । वसतियोग्ये त्रि० 'वनेषु वासतेयेष्विति भट्टिः ।
वासन न० वास-ल्युट् । सुरभीकरणे धूपने, वारिधान्याम्, वस्त्रे, वासस्थाने, ज्ञाने च वस-णिच्-ल्युट् । निक्षेपाधारे, निक्षेपार्थ-समुद्गादिके च। [सुरभीकरणे च
वासना स्त्री०वास-युच् प्रत्याशाया ज्ञाने, स्मृतिहेतौ, संस्कारे,
वासन्त पु० वसन्तस्येदम् वसन्ते भव' वा अण् । वसन्तप्रिये- उष्ट्रे, कोकिले च । वसन्तभवे-मलयवायौ-मुद्गे, कृष्णमुद्गे मदनवृक्षे च । तत्कालभवे त्रि० । यूथ्या माधवीलतायां, पाटलाया नवमल्लिकाया, तत्कालेपूज्याया-दुर्गायाश्च स्त्री०
वासयोग पु० वासेन गन्धेन योगोऽत्र । (आबिर) चूर्णभेदे
वासर पु०न० । वस-अरन् । दिवसे । नागभेदे पु० ।
वासव पु० वसुरेव स्वार्थेऽण् वसूनि सन्त्यस्य वा अण् । इन्द्रे वसोरपत्यं स्त्री अण् ङीप् । व्यासमातरि मत्स्य- गन्धायाम् स्त्री० ।
वासवदत्ता स्त्री० वासवदत्तामधिकृत्य कृतो ग्रन्थः अण् आख्यायिकायां तस्य लुक् । वासवदत्ताचरिताख्यापके ग्रन्थभेदे । ३त० इन्द्रदत्ते त्रि० ।
वासस् न० वस-असि । वस्त्रे ।
वासागार न० वासयोग्यमगारम् । वासयोग्ये गृहे गृहमध्ये
वासि(सी) स्त्री० वस-इञ् वा ङीप् । कुठारभेदे (वाइस)
वासित त्रि० वास-क्त । सुरभीकृते ।
वासिनी स्त्री० वासोऽस्त्यस्या इनि । शुक्लझिण्ट्याम् ।
वासु पु० वस-उण् । विष्णौ ।
वासुकि पु० वसुना रत्नेन कायति कै-क सएव इञ् । सर्पराजे 'भगिनी वासुके स्त्वे'ति मनसास्तोत्रम् ।
वासुदेव पु० वसुदेवस्यापत्यम् अण् । विष्णौ ।
वासुदेवप्रियङ्करी स्त्री० ६त० । शतावर्य्याम्, श्रीकृष्णप्रिय- कारिण्यां स्त्रियाञ्च ।
वासू स्त्री० वास-ऊ । नाट्योक्तौ बालायाम् ।
वास्तव न० वस्त्वेवअण् । सत्यभूते पदार्थे । [पदार्थे ।
वास्तविक त्रि० वस्तुतो निर्वृत्तम् ठक् । स्वतःसिद्धे सत्यभूते
वास्तव्य त्रि० वसति वस-तव्य नि० । वासकर्त्तरि, वासयोग्ये स्थाने, वसतौ च पु० । [स्वार्थे कन् । शाकभेदे ।
वास्तु पु० वस-तुण् । वासयोग्यभूमौ, स्वनामख्याते शाके च ।
वास्तूक न० वास्तु-कन् पृ० दीर्घ । वास्तुशाके चिल्लीशाके स्त्री० गौरा० ङीष् ।
वास्तेय त्रि० वस्तेरिदम् वस्तये हितं वा ढञ् । वस्तिमन्त्रितेनि वासयोग्ये च ।
वास्तोष्पति पु०६त० अलुक्समा० । इन्द्रे. वास्तुभूमिपतौ च ।
वास्त्र पु० वस्त्रेणाहृतो रथः अण् । वस्त्रेण समागारते रथे ।
वास्पेय पु० वास्पाय हित ढक् । नागकेशरे ।
वाह यत्ने भ्वा०आ०अक०सेट् घटि न ह्रस्वः । वाहते अवाहिष्ट
वाह पु० उह्यतेऽनेन अश्वोपायादिना वा वह-घञ् । अश्वे 'वाहोभारचतुष्टयमि'त्युक्ते परिमाणभेदे च । [दयोगात्
वाहद्विषत् पु०वाहद्वेष्टि द्विष शतृ ६त० । महिषे वाहरिश्वा-
वाहन न० वाह्यतेऽनेन वह-णिच्-ल्युट् । रथादौ याने ।
वाहस पु० वाहं गतिं स्यति षो-क । अजगरे, सुनिषण्णके (सुसनि) शाके च । [ष्ठ० ।गजकुम्भाधोभागे ।
वाहित्थ न० वहतीति णिनि वाही-तस्मिन् तिष्ठति स्था-क
वाहिनी स्त्री० वाहोऽस्त्यस्याः इनि ङीप् । सेनायां, वहति वह-णिनि । नद्याम् 'वाहिन्यः पार्श्वमेता न जहतीति काव्यप्रकाशः ।
वाहिनीपति पु० ६त० । सेनापतौ, समुद्रे च ।
वाहीक पु० वह-ईकण् । जातिभेदे (जाट) । गौर्वाहीक इति अलङ्कारः । देशभेदे च ।
वाहु पु० वह-उण् । भुजे अवयवभेदे, अङ्कशास्त्रोक्ते क्षेत्र- व्यवहारे भुजाकारे रेखाभेदे च ।
वाहुमूल न० ६त० । भुजद्वयस्य मूले कक्षरूपे अङ्गे ।
वाहुवार पु० वाहुं वारयति ह-णिच्-अण् । श्लेष्मातकवृक्षे
वाह्य न० वाहं चालनमर्हति यत् वह-ण्यद्वा । अश्वादौ याने, वानरे च । वहिर्भवः ष्यञ् टिलोपः । वहिर्भवे त्रि० ।
वाह्येन्द्रिय न० वाह्यपदार्थानां शब्दादीनां ग्रहणयोग्यमिन्द्रि- यम् । शब्दादिग्राहके श्रोत्रादौ इन्द्रिये ।
वाह्लि(ह्ली)क पु० । वह-लिण् स्वार्थे कन् । देशभेदे । तद्देश- जाते-कुङ्कुमे, हिङ्गुनि न० ।
वि अव्य०वा-कि । नियोगे, विशेषे- निश्चये, असहने, निग्रहे, हेतौ, अव्याप्तौ, ईषदर्थे, परिभवे, शुद्धौ,अवलम्बने,ज्ञाने, गतौ, आलस्ये, पालने च । विहगे पु० । [पूर्य्यते तस्मिन्
विंश त्रि० विंशतेः पूरण' विंशति+डट् । येन विंशतिसङ्ख्या
विंशक न० विंशतेरवयवः कुन् । विंशतिसंख्यायाम् । विंशतिरधिका दीयतेऽस्मिन् शते आयो लाभो वृद्धि र्वा-कुन् । प्रतिशतं विंशत्यधिकलाभादौ 'मासद्वा विंशकं शत'मिति स्मृति ।
विंशति स्त्री०द्वे दशती नि० । द्विदशकसंख्यायां, तत्सङ्ख्याते च

एक व०। सङ्ख्याविशेषार्थे तु सर्व्व व०। द्वे विंशती विंश विंशतय इति।

विंशतिक त्रि विंशतेर्योग्य। विंशतियोग्ये। [ङीप्।

विंशतितम त्रि विंशते पूरण तमप्। विंशशब्दार्थे स्त्रियां

विकङ्कट पु वि+कङ्कि अटन्। गोक्षुरे।

विकङ्कत पु० वि+कङ्कि अतच्। (वइची) वृक्षे, व्रतिबलायाञ्च

विकच पु० विगत कचो यस्य। क्षपणे बुद्धसन्न्यासिनि विशिष्ट कचो यत्र। ध्वजे केतौ। वि+कच अच्। विकसिते ह्र० केशशून्ये त्रि। महाश्रावणिकायाम् स्त्री०।

विकट पु० वि+कट-अच्। विस्फोटके, सोमलवृक्षे च। वि+कटच्। विशाले, विकृते, सुन्दरे, दन्तुरे च त्रि०।

विकण्टक पु० विगत कण्टकोऽस्य। यवासे। सकुष्ठोने त्रि।

विकत्थन न वि+कत्थ ल्युट्। आत्मश्लाघायाम्। युच्,तत्कर्त्तरि त्रि

विकर्त्तन पु वि+कृत-ल्यु। सूर्ये अर्कवृक्षे च।

विकर्म्मस्थ पु त्रि० विकर्म्मणि निन्दिताचारे तिष्ठति स्था क कुत्सिताचाररते। [हीने च।

विकल त्रि विगता कला यस्य। विह्वले स्वभावहीने, कला

विकलाङ्ग त्रि स्वभावहीनमङ्गमस्य। स्वभावतो न्यूनाधिकाङ्गे

विकल्प पु०विभिन्न कल्प। भ्रान्तिहेतौ कल्पने,विविधकल्पने, सदसोरोपणे, पक्षत प्राप्तौ च। [निवायाम

विकस्व(श्व)र त्रि० वि+कस(श)-वरच्। प्रकाशशीले स्फुट

विकत्था स्त्री विशेषेण कथ्यतेऽसौ कथ घञर्थे क। श्लाघायाम्

विक(शि)सित त्रि वि+कस(श)-क्त। प्रकाशयुक्ते।

विकार पु वि+कृ-घञ्। प्रकृतेरन्यथारूपे परिणामे।

विकाल पु० विरुद्ध देवपैत्रादिकर्म्मानर्ह काल। राक्षसी नामकवेलायाम दिवसान्तकाले।

विकाश न० विरुद्ध काश। रहसि विशिष्टकाशे प्रकाशे च

विकाशिन् त्रि वि+काश णिनि। प्रकाशशीले विकस्वरे।

विकिर पु वि+कॄ क। विहगे, कूपे च। विकीर्य्यते घञर्थे क।-विश्राणनाल्पार्थे छुतविश्लेषितपयादौ।

विकिरण न वि+कॄ ल्युट् नि इत्वञ् रपरत्वञ्च। क्षेपणे हिंसने ज्ञाने च। अर्कवृक्षे पु। इब किरणशून्ये त्रि०

विकीर्ण त्रि० वि कॄ क्त। विक्षिप्ते। [विख्यातप्राप्ते च।

विकुर्व्वाण त्रि० वि+कृ शानच्। स्वचेतना जातरोमहर्षादौ

विकुक्षि पु सूर्य्यवंश्ये इक्ष्वाकुराजपुत्रे नृपभेदे।

विकृत त्रि० वि+कृ क्त। बीभत्से अनिश्चीकृत, रोगयुक्ते च।

विकृति स्त्री वि+कृ क्तिन्। विकारशब्दार्थे।

विकृति पु० वि+कृ क्तिच् ङीप्। रोगे, हिन्ने च।

विक्रम पु० विशेषेण क्रामति वि+क्रम घञ् अच् वा। त्रिविक्रमे विष्णौ विक्रमादित्यनृपे 'रत्नानि वै वररुचिर्नव विक्रमस्येति' ज्योतिर्विदाभरणम्। भावे घञ्। क्रमणे करणे घञ्। चरणे शौर्य्यातिशये, सामर्थ्ये च षष्टिवर्षे मध्ये लवण मधु गव्यञ्च महार्घं विक्रमे प्रिये।' इत्युक्तलक्षणे वत्सरभेदे च। [विक्रमार्कोऽप्यत्र।

विक्रमादित्य पु विक्रमेणादित्य इव। स्वनामख्याते नृपभेदे

विक्रमिन् पु वि+क्रम णिनि। सिंहे,विष्णौ च विक्रमयुक्ते त्रि०

विक्रय पु वि+क्री अच्। मूल्यग्रहणेन परस्वत्वापादके व्यापारे

विक्रयानुशय पु विक्रयस्यानुशय पश्चात्ताप। विक्रीतपदार्थस्य परावर्त्तनफलके अनुतापे।

विक्रयिक पु विक्रय अस्त्यस्य ठन्। विक्रेतरि।

विक्रयिन् त्रि वि+क्री-णिनि। विक्रयकर्त्तरि।

विक्रान्त पु० वि+क्रम क्त। सिंहे,शूरे च। भावे क्त। विक्रमे।

विक्रिया स्त्री वि+कृ श। विकारे अन्यथास्थितस्य वस्तुनोऽन्यथापरिणामे।

विक्रेय त्रि० वि+क्री-यत्। विक्रययोग्ये पदार्थे।

विक्लव त्रि० वि+क्लु-अच्। व्याकुलीभावे।

विक्लिन्न त्रि० वि+क्लिद क्त। आर्द्रे, शीर्णे, जीर्णे च।

विक्षाव पु० वि+क्षु घञ्। शब्दे कासादिरोगजातशब्दे च।

विक्षीर पु विशिष्ट क्षीरमस्य। अर्कवृक्षे विगतक्षीरे त्रि।

विक्षेप पु० वि+क्षिप घञ्। त्यागे, प्रेरणे, दूरीकरणे च।

विक्षेपशक्ति स्त्री विक्षेपस्य दूरीकरणस्य जनिका शक्ति। वेदान्तोक्ते अविद्याशक्तिभेदे। [देश। विख्योऽप्यत्र त्रि

विख त्रि विगता नासिका यस्य खादेश। गतनासिके। ख्या-

विख्यात त्रि० विशेषेण ख्यात प्रसिद्ध वि+ख्या-क्त। प्रसिद्धे

विगणन न० विशेषेण गणनम् गण-ल्युट्। ऋणशोधनार्थे-सङ्ख्यागणने।

विगत त्रि०वि+गम क्त। प्रभान्तरहिते विशेषगते अपगते च।

विगतार्त्तवा स्त्री विगतमार्त्तवं रजो यस्या। गतरजस्काया स्त्रियाम्।

विगन्धक पु विरुद्ध गन्धोऽस्य कप्। इङ्गुदीवृक्षे। लघुपाश्वा (गगा) स्त्री०गौ ङीष्। स्वार्थे कन् तत्रैव।

विगम पु० वि+गम घञ। नाशे अपाये च।

विगर्हण न० वि+गर्ह ल्यु। निन्दने। [निन्दायाम्।

विगर्हित त्रि० वि+गर्ह-क्त। निन्दिते निषिद्धे च। भावे क्त।

विगाढ त्रि० वि+गाह-क्त। स्नाते, कृतावगाहने च।

विगान न० वि+गै ल्युट्। निन्दायाम्।

विगीत त्रि० वि+गै-क्त । निन्दिते ।

विगीति स्त्री० वि+गै-क्तिन् । निन्दायाम् ।

विगुण त्रि० विरुद्धो गुणोऽस्य । गुणरहिते ।

विगूढ त्रि० वि+गुह-क्त । गर्हिते, गुप्ते च । [वाक्यस्थे पदे च

विगृहीत त्रि० वि+ग्रह-क्त । गृहीते, व्याकरणोक्ते विग्रह-

विग्र त्रि० विगता नासिकाऽस्य ग्रादेशः । विगतनासिके ।

विग्रह पु० वि+ग्रह-अच् । देहे, विभागे, युद्धे, समासादिवृत्ति समानार्थकवाक्यभेदे, विशेषज्ञाने च । [त्मके काले ।

विघटिका स्त्री० विभागः घटिकायाः । घटिकाषष्ठिभागे पला-

विघटित त्रि० वि+घट-क्त । वियोजिते विशेषेण रचिते च ।

विघट्टित त्रि० वि+घट्ट-क्त । चालिते, वियोजिते च ।

विघस पु० वि+अद-घञ् । भोजनशेषे, आहारे च सिक्थके न०

विघसाशिन् त्रि० विघसं देवतादिदत्तावशेषमश्नाति अश-णिनि । देवपैत्रकार्य्यानन्तरं तद्‌शिष्टभोजिनि ।

विघात पु० वि+हन-क्त । व्याघाते, आघाते च ।

विघातिन् त्रि० वि+हन-णिनुण् । निवारके । नाशके, नष्टे च 'नित्यश्चायं खलु निमित्तो विघाती'ति व्याकरणम् । ण्वुल् । विघातकोऽप्यत्र ।

विघ्न पु० वि+हन-क । व्याघाते अन्तराये, तृणपाकफलायाञ्च

विघ्ननाशक पु० ६त० । गणेशे विघ्नविनाशनादयोऽप्यत्र ।

विघ्नराज पु० विघ्ने राजते अच् । गणेशे । विघ्नेशादयोऽप्यत्र

विघ्नहारिन् पु० विघ्नं हरति हृ-णिनि । गणेशे ।

विघ्नित त्रि० विघ्नो जातोऽस्य इतच् । जातविघ्ने ।

विघ्नेशानकान्ता स्त्री० ६त० । श्वेतदूर्व्वायाम् ।

विच पृथक्करणे रु०जु०च उ०अक०अनिट् । विनक्ति विवेक्ति विङ्क्ते विविक्ते । अविचत् अवैक्षीत् ।

विचकिल पु० विच+क किल-क कर्म० । मदनवृक्षे ।

विचक्षण पु० वि+चक्ष-ल्यु । पण्डिते नागदन्त्यां, स्त्री० टाप्

विचयन न० वि-चि-ल्युट् । अन्वेषणे, पुष्पादिचयने च ।

विचर्चिका स्त्री० वि+चर्च-ण्वुल् । पामनि रोगभेदे ।

विचार पु० वि+चर-घञ् । तत्त्वनिर्णये, तदनुगुणे वाक्यस्तोमे च

विचारणा न० वि+चर-णिच्-ल्युट् । मीमांसायाम् । युच् । तत्रैव स्त्री० ।

विचि(ची) पु० स्त्री० विच-इक् । तरङ्गे स्त्रीत्वपक्षे वा ङीप् ।

विचिकित्सा स्त्री० वि+कित-स्वार्थे सन् अ । सन्देहे ।

विचित्र न० विशेषेण चित्रम् । कर्व्वूरवर्णे । तद्वति, आश्चर्य्ये च त्रि० । स्वार्थे कन् । भुर्जपत्रवृक्षे पु० ।

विचित्रवीर्य्य पु० शान्तनुनृपात्मजे नृपभेदे ।

विचित्राङ्ग पु० विचित्रमङ्गं यस्य (चिते) व्याघ्रभेदे, आश्चर्य्यदेहे त्रि०

विचेतस् त्रि० विरुद्धं दुष्टं विशिष्टं वा चेतो यस्य । दुष्टचित्ते विशिष्टचित्ते च । [क्त । विशेषेण चेष्टायाम् न० ।

विचेष्टित त्रि० विगतं चेष्टितमस्य । चेष्टाशून्ये वि+चेष्ट भावे

विच्छ दीप्तौ चु उभ०सक०सेट् । विच्छयति ते अविविच्छत् त

विच्छ गतौ तु० पर० आयपक्षे उ० सक०सेट् । विच्छायति विच्छायते विच्छति । अविच्छायीत् अविच्छायिष्ट अविच्छीत्

विच्छन्दक पु० विशिष्टः छन्दोऽत्र कप् । ईश्वरगृहभेदे ।

विच्छाय न० वीनां पक्षिणां छाया नपुंसकत्वम् । पक्षिसमूह-च्छायायाम् । विगता छाया यस्य । छायारहिते त्रि० ।

विच्छित्ति स्त्री० वि+छिद-क्तिन् । अङ्गरागे हारभेदे, छेदे, विनाशे, विच्छेदे, स्त्रीणां चेष्टाभेदे च । [छेदने न०

विच्छिन्न त्रि० वि+छिद-क्त । विभक्ते, समालब्धे च भावे-क्त ।

विच्छेद पु० वि+छिद-घञ् । वियोगे, सन्ततिराहित्ये, विभागे च

विज पृथक्करणे जु० उभ० सक० अनिट् । वेवेक्ति वेविक्ते अवि-जत् अवैक्षीत् अविक्त ।

विज भये कम्पे च रु०प०अक०सेट् । विनक्ति अविजीत् । [विग्न'

विज भये कम्पे च तु०आ०अ० अनिट् । विजते अविजिष्ट । क्त-

विजन त्रि० विगतो जनो यस्मात् । निर्जने ।

विजनन न० वि+जन-ल्युट् । गर्भमोचने, प्रसवे, उद्भवे च ।

विजय पु० वि+जि-कर्त्तरि अच् । अर्ज्जुने, विमाने यमे च । भावे अच् । जये, परिभवपूर्व्वकग्रहणे च ।

विजयकुञ्जर पु० विजयाय कुञ्जरः । राजवाहनगजे ।

विजया स्त्री० आश्विनशुक्लपक्षीयदशम्याम् उमायाः सखीभेदे, 'कथयतु विजये'ति मुद्राराक्षसम् । दुर्गायां, जयन्त्यां, शेफालिकायां, मञ्जिष्ठायां, शमीभेदे, अग्निमन्थे, भङ्गायाम्, (सिद्धि) अष्टद्वादशीमध्ये, 'यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत् । तदा सा तु महापुण्या द्वादशी विजया स्मृते'त्युक्ते द्वादशीभेदे, 'शुक्लपक्षस्य सप्तम्यां सूर्य्यवारो यदा भवेत् । सप्तमी विजया नामे'त्युक्ते सप्तमीभेदे च । [वलस्विनि ।

विजातीय त्रि० विभिन्नां जातिं धर्ममर्हति छ । विभिन्नधर्म्मा-

विजिगीषा स्त्री० विजेतुमिच्छा वि+जि-सन् अ । खोटर-पूरणेच्छया निन्दनीयकर्म्मादौ प्रवृत्तौ तन्निन्दाऽगणने, विजयेच्छायाञ्च । उ । विजिगीषुः । जयेच्छावति त्रि० ।

विजिन न० विज-इन किञ्च । वने वृक्षसमूहे ।

विजुल पु० विज-उलच् किञ्च । शाल्मलीकन्दे ।

विजृम्भण न० वि-जृभि-ल्युट् । विकाशे, मुखविकाशहेतुभूते वायुव्यापारभेदे (हाइतोला) ।

विजृम्भित त्रि वि+जृभि-क्त । विकसिते भावे क्त । प्रकाशे
विज्जुल न विज उलच् जुट् च । त्वचे (दारचिनि) ।
विज्ञ पु विशेषेण जानाति ज्ञा-क । प्रवीणे, पण्डिते च ।
विज्ञात त्रि० वि+ज्ञा-क्त । ख्याते, ज्ञाते च ।
विज्ञान न० वि+ज्ञा ल्युट् । ज्ञाने कर्मणि शिल्पादिज्ञाने, वेदान्तोक्ते अविद्यावृत्तिभेदे च ।
विज्ञानमयकोष पु० विज्ञानात्मक कोषवदावरकत्वात् । ज्ञानेन्द्रियसहिते बुद्धिवृत्तिभेदे ।
विज्ञानिक त्रि० विज्ञानमस्त्यस्य ठन् । विज्ञ युक्ते ।
विट आक्रोशे सक शब्दे अक भ्वा पर सेट् । वेटति अवेटीत्
विट पु विट-क । विड्गे, जारे, शृङ्गारसहायकानुचरे धूर्ते, 'विट । विटपमसमिति माघ । पर्वतभेदे, लवणभेदे खदिरभेदे नारङ्गवृक्षे, मूषिके च ।
विटङ्क न० वि टकि-घञ् । कपोतपालिकायां प्रासादाद्यग्रस्थे काष्ठनिर्मिते कपोतावासस्थाने । (पायरापोष)
विटप पु०न० । विट विस्तारं पाति पा क । शाखायां, पल्लव-विस्तारे, स्तम्बे पल्लवे च विटपात्मके त्रि० 'विट । विटप-मत्युन्दरस्ले ति माघ ।
विटपिन् पु० विटप+अस्त्यर्थे इनि । वृक्षे, वटवृक्षे च ।
विटलवण न विड्वि लवणम् पृ० । विड्लवणे ।
विटि(टी) स्त्री० विट कि वा ङीप् । पीतचन्दने ।
विट्खदिर पु० विड्वि दुर्गन्धः खदिर । (गुयेबावला) वृक्षे
विट्चर पु० विषि विष्ठायां चरति चर अच् । ग्राम्यशूकरे
विट्पति पु० विशते विश क्विप् विश कन्यायाः पति । जामातरि । [लिङ्ग) पक्षिभेदे ।
विट्सारिका स्त्री० विड्वि दुर्गन्धा सारिका । (गुयेसा
विठ आक्रोशे भ्वा पर सक सेट् । वेठति अवेठीत् ।
विड न विड क । लवणभेदे । [लि
विडङ्ग पु०न०विड-अङ्गच् । स्वनामख्याते ओषधभेदे । अभिज्ञे
विडम्बन न०वि डवि ल्युट् । तिरस्करणे अनुकरणे च । युच् । विडम्बनाप्यत्र स्त्री । 'इयञ्च तेऽन्या पुरतो विडम्बनेति कु०
विडाल पु विड-कालन् । स्वनामख्याते पशुभेदे, नेत्रपिण्डे नयनौषधिभेदे च । विडाली स्त्री ङीप् । स्वार्थे कन् । हरिताले न० । स्वार्थे कन् विडालके पशौ पु० ।
विडीन न० वि+डी क्त । पक्षिणां गतिभेदे ।
विडुल पु विड उलच् । वेतसवृक्षे । [पृ० वा कौत् । इन्द्रे ।
वि(डो)डौजस् पु० विश क्विप् विट् व्यापकमोजो यस्य
विड्गन्ध न० विष इव गन्धोऽस्य । विड्लवणे ।

विड्लवण न० विड्वि दुर्गन्धं लवणम् । स्वनामख्याते लवणभेदे
विड्वराह पु विट्प्रियो वराह शाक० । ग्राम्यशूकरे नद्यम विड्वराहञ्चे ति मनु ।
वितंस पु० वि+तनुस अच् । पक्षिणां बन्धनसाधने रज्ज्वादौ
वितण्डा स्त्री वि तडि अ । स्वपक्षाव्यवस्थापनेन परपक्षमात्र निराकरणे कथाभेदे कलम्बीशाके च ।
वितथ त्रि०वि+तन क्थन् । मिथ्याभूते पदार्थे स्वार्थे यत् । तत्रैव
वितस्ता स्त्री वि+तस-क्त टाप् च । पञ्जाबदेशस्थे नदीभेदे ।
वितरण न० वि+तॄ ल्युट् । दाने ।
वितर्क पु० वि+तर्क घञ् । सन्देहे, ऊहे च ।
वितर्दि स्त्री० वि+तर्द इन् वा ङीप् । वेदिकायाम् । पृ० । वितर्द्दिरप्यत्र स्त्री० वा ङीप् ।
वितल न० विशेषेण तलम् । पातालभेदे ।
वितस्ति पु स्त्री वि+तस-क्तिच् । द्वादशाङ्गुलपरिमाणे विस्तृत सकनिष्ठाङ्गुष्ठहस्तपरिमाणे । [च । चन्द्रातपे पु०न०
वितान न० वि+तन-घञ् । वृत्तिभेदे, अवसरे, यज्ञे, विस्तारे
वितानमूलक न० वितानं विस्तीर्णं मूलमस्य कप् । उशीरे
वितुन्न न० वि-तुद क्त । सुनिषण्णके शाकायां कन् । धान्ये ।
वित्त त्यागे अद०चु०उभ०स० सेट् । वित्तयति ते अविवित्तत् त
वित्त न वित्यते त्यज्यते वित्त-घञ् । धने । विद-क्त । ख्याते विचारिते, ज्ञाते, लब्धे च त्रि ।
वित्ति स्त्री० विद क्तिन् । ज्ञाने, लाभे, विचारे च ।
वित्तेश पु० ६त० । कुबेरे ।
विथ याचने भ्वा०आ द्विक सेट् घटि मत्वस्व । वेथते अवेथिष्ट
विद् सुखाद्यनुभवे आख्याने, वासे च सक० वासे अक०चु० उभ० सेट् । वेदयति ते अवीविदत् त ।
विद् लाभे तु उभ सक अनिट् । विन्दति ते । अविदत् अवित्त
विद् मीमांसे रुधा०आ सक अनिट् । विन्ते अवित्त ।
विद भावे, दिवा०आ०अक० अनिट । विद्यते अवित्त ।
विद् ज्ञाने अदा०पर सक सेट् । वत्ति वेद । अवेदीत् ।
विदग्ध त्रि० वि+दह क्त । नागरे, निपुणे, पण्डिते च । नायिकाभेदे स्त्री । विशेषेण दग्धे त्रि० ।
विद् पु० विद क्विप् । पण्डिते बुधग्रहे च ।
विद पु विद-क । पण्डिते, बुधग्रहे च ।
विदथ पु विद कथच् । योगिनि, कृतिनि च ।
विदर न० वि+दृ-अप् । (फणिमनसा) वृक्षे विदलीकरणे पु० ।
विदर्भ पु स्त्री विगता दर्भा कुशा यत्र । कुण्डिननगरे (नागपुर)
विदल न० विशेषेण दल्यते दल कर्मणि क । द्विधाभूते दाडिम

कल्के, वंगादिपात्रे च । कलायादौ, रक्तकाञ्चने पिटके च पु० विदृति (तैयोडि) स्त्री० । दल-शून्ये त्रि० ।

**विदा** स्त्री० विद-अङ् । ज्ञाने बुद्धौ च ।

**विदार** पु० वि+दृ-घञ् । विदारणे जलोच्छ्वासे च ।

**विदारक** पु० वि+दृ-ण्वुल् । जलमध्यस्थतरुशिलादौ विदारण कर्त्तरि त्रि० शुष्कनद्यादेर्जलधारणायोग्ये गर्त्ते न० ।

**विदारण** न० वि+दृ-णिच् ल्युट् । भेदने, मारणे, विडम्बे च । युद्धे पु० स्त्री० । कर्णिकारवृक्षे पु० ।

**विदारी** स्त्री० । विदारोऽस्त्यस्याः अच् गौ० ङीष् । शाल-पर्ण्याम् । (शालपान) भूमिकुष्माण्डे च ।

**विदारीगन्धा** स्त्री विदार्याः भूमिकुष्माण्डस्येव गन्धोयस्याः । शालपर्ण्याम् (शालपान) ।

**विदाहिन्** न० वि+दह-णिनि । दाहजनकद्रव्ये ।

**विदित** त्रि० विद-क्त । ज्ञाते, प्रार्थिते च । भावे-क्त । विज्ञातौ उपगमे, ज्ञाने च । तदस्यास्ति अच् । ज्ञातरि । 'विदितः समाययावि'ति भारवि ।

**विदिश्** स्त्री० विगता दिशम् । दिशोर्मध्ये (कोण) ।

**विदु** पु० विद-कु । हस्तिकुम्भमध्यभागे ।

**विदुर** त्रि० विद-कुरच् । नागरे, धीरे, ज्ञातरि च । कौरवाणां सन्निधौ दासीगर्भजाते धर्म्मावतारभेदे च पु० ।

**विदुल** पु० विद-कुलच् । वेतसे, जलवेतसे, गन्धरसे च ।

**विदूर** न० विशिष्टं दूरम् । अतिदूरे तत्रस्थे पदार्थे त्रि० 'विदूरे केयूरे, कुरु, इति साहि०दर्प० । वैदूर्य्यमणिसम्भवस्थाने पु० 'विदूरभूमिर्नवमेघशब्दा'दिति कुमा०र ।

**विदूरज** न० विदूरे देशभेदे जायते जन-ड । वैदूर्य्यमणौ ।

**विदूरथ** पु० । सूर्य्यवंश्ये नृपभेदे ।

**विदूराद्रि** पु० विदूरे देशेऽद्रि पर्व्वतः । पर्व्वतभेदे । यत्र वैदूर्य्यमणिरुत्पद्यते । [सहायभेदे । परनिन्दके त्रि० ।

**विदूषक** पु० विदूषयति वि+दूष-णिच्-ण्वुल् । शृङ्गाररस-

**विदेश** पु० विभिन्नो देशः । देशान्तरे, 'भृत्याभावे भवति मरणं सज्जनानां विदेशे' इत्युद्भटः ।

**विदेह** पु० विगतो देहः देहसम्बन्धो यस्य । जनकाख्ये नृपे, तद्वंश्ये च कैवल्यमुक्तियुते, देहसम्बन्धशून्ये च त्रि० मिथिलायां स्त्री० ।

**विदेहकैवल्य** न० कर्म० । 'न तस्य प्राणा ह्युत्क्रामन्ति इहैव समवलीयन्ते, इत्याद्युक्ते जीवन्मुक्तस्य देहपातनान्तरं निर्वाणमोक्षे ।

**विद्ध** त्रि० व्यध-क्त । छिद्रिते, क्षिप्ते, दुर्गे, बाधिते ताडिते च ।

**विद्धकर्णी** पु० विद्धः कर्ण इव पत्रमस्य । (आकनादि) पाठायाम् स्त्रीत्वमपि तत्रैव ङीप् ।

**विद्यमान** पु० विद-शानच् । वर्त्तमानकाले, तद्वृत्तौ पदार्थे त्रि०

**विद्या** स्त्री० विद् क्यप् । ज्ञाने । तत्त्वज्ञानात्मके 'विद्यया मृतमश्नुते' इतिश्रुतिः । दुर्गायां, गणिकारिकावृक्षे, तन्त्रोक्ते देवीमन्त्रे च । 'तस्य विद्या न सिध्यती'ति श्यामारहस्य ।

**विद्याचन(ण)** त्रि० विद्यया ख्याते चन(ण) विद्ययाविख्याते ।

**विद्याचञ्चु** पु० विद्यया वित्तः चुञ्चुप् । विद्यया ख्याते ।

**विद्यादल** पु० विद्यायै ज्ञानाय दल्यतेऽसौ । भूर्जवृक्षे ।

**विद्यादान** न० ६त० अध्यापने, पुस्तकदाने च ।

**विद्याधन** न० विद्यया लब्धं धनम् । विद्यालब्धे 'उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्व्वकम् । विद्याधनन्तु तद्विद्यादि'ति 'शिष्यादार्त्विज्यतः प्राप्तं सन्दिग्धप्रश्ननिर्णयात् ख्याता-नसंशयोच्छेदाल्लब्धं प्राध्ययनात्तु यत् । विद्याधनन्तु तत् प्राहुरि'ति 'शिल्पिष्वपि हि धर्मोऽयमित्युपक्रम्य परं निरस्य वादेन विद्यया द्यूतपूर्व्वकम् । विद्याधनं तु तद्वि-द्यादित्युक्ते धने ।

**विद्याधर** पु० विद्यां मन्त्रादिकं धरति धृ अच् । देवयोनिभेदे

**विद्युत्** स्त्री० विद्योतते वि+द्युत-क्विप् । तडिति, सन्ध्यायाञ्च

**विद्युत्प्रिय** न० ६त० । विद्युदाकर्षके कांस्ये, धातौ ।

**विद्युन्माला** स्त्री० अष्टाक्षरपादके छन्दोभेदे । [रोगभेदे ।

**विद्रधि** पु०नेत्यनेन विद् हृदयं रुणद्धि रुध-कि पृ० । हृदय

**विद्रधिनाशन** पु० विद्रधिं नाशयति नश-णिच्-ल्यु । शोभाञ्जने

**विद्र(द्रा)व** पु० वि+द्रु-अप् घञ् वा । पलायने, क्षरणे, द्रुते च

**विद्रुत** त्रि० वि+द्रु-क्त । प्राप्तद्रवे, पलायिते च । [किसलये

**विद्रुम** पु० विशिष्टो द्रुमः । प्रवालरत्नवृक्षे विशिष्टो द्रुमोयतः

**विद्रुमलता** स्त्री० विद्रुमस्य लतेव । नलीनामगन्धद्रव्ये स्वार्थे कन् तत्रैव । [विद्रधि ।

**विद्वत्कल्प** त्रि० ईषदसमाप्तो विद्वान् विद्वस्+कल्पप् । ईषदूने

**विद्वत्तम** पु० अतिशयेन विद्वान् विद्वस्+तमप् । अतिपण्डिते तरप् विद्वत्तरोऽप्यत्र । [विद्वत्कल्पे । देश्य । तत्रैव ।

**विद्वद्देशीय** त्रि० ईषदसमाप्तो विद्वान् विद्वस्+देशीयर् ।

**विद्वस्** त्रि० विद-क्वसु । प्राज्ञे, पण्डिते, आत्मज्ञानयुक्ते च ।

**विद्विष्** पु० विशेषेण द्वेष्टि द्विष-क्विप् । शत्रौ कविद्विषोऽप्यत्र ।

**विद्वेष** पु० वि+द्विष-घञ् । वैरिभावे शत्रुतायाम् ।

**विद्वेषण** न० वि+द्विष-णिच्-ल्युट् । तन्त्रोक्ते अभिचारकर्म्म भेदे येन शत्रूणा परस्परविद्वेषो भवति तस्मिन् व्यापारे । वि+द्विष-ल्युट् । विद्वेषे ।

विन्न त्रि० विद-क्त। विचारिते, प्राप्ते, ज्ञाते, स्थिते च।
विन्याक पु० वि+नि+अक-घञ्। (अतियान)वृक्षे।
विन्यास पु० वि+नि+अस-घञ्। स्थापने, रचने, तन्त्रोक्ते मन्त्राद्युच्चारणपूर्वकं हृदयादिषु अङ्गुल्यादीनामर्पणे च।
विप क्षेपे चु० उभ०सक० सेट्। वेपयति-ते अवीविपत् त।
विपक्लिम त्रि० विपाकेन निर्वृत्तः। वि+पच-क्त मपप्। विपाकाधीनजाते 'विपक्लिमज्ञानगतिरिति' भट्टिः।
विपक्ष त्रि०विरुद्धः पक्षो यस्य। शत्रौ, प्रतिकूलपक्षावलम्बिनि च। विरुद्धः पक्षः कर्म० स०। प्रतिकूले पक्षे।
विपञ्ची स्त्री० वि+पचि-अच् गौरा० ङीष्। वीणायाम् स्वार्थे कन् अत इत्त्वम्। तत्रैव।
विपण पु० वि+पण घञर्थे क। विक्रये।
विपणि पु०स्त्री० वि+पण-इन् स्त्रीत्वपक्षे वा ङीप्। पण्य-विक्रयशालायाम् (हाटचाला) हट्टे च।
विपत्ति स्त्री० वि+पद-क्तिन्। आपदि, नाशे, यातनायाञ्च
विपथ पु० विरुद्धः पन्थाः अच् समा०। निन्दितमार्गे
विपद्(दा) स्त्री० वि+पद-सम्प० क्विप् वा टाप्। विपत्तौ।
विपन्न त्रि० वि+पद-क्त। विपद्युक्ते, नष्टे च। सर्पे पु०।
विपरीत त्रि० वि+परि+इण्-क्त। प्रतिकूले।
विपर्णक पु० विगतानि पर्णान्यस्य कप्। पलाशवृक्षे।
विपर्यय पु० वि+परि+इण्-अच्। व्यतिक्रमे।
विपर्यस्त त्रि० वि+परि+अस-क्त। व्यतिक्रान्ते परावृत्ते च।
विपर्यास पु० वि+परि+अस-घञ्। वैपरीत्ये, व्यतिक्रमे उत्क्षेपे च।
विपल पु०विभाग पलस्य। पलषष्टिभागे कालभेदे। [पण्डिते
विपश्चित् पु० विप्रकृष्टं चेतति वि+प्र+चित-क्विप् पृ०।
विपाक पु० वि+पच-भावे घञ्। पाके, स्वेदे च। कर्म्मणि घञ्। कर्मफलपरिणामे जात्यायुर्भोगरूपे पदार्थे।
विपाश(शा) स्त्री०विगत पाशो यस्याः। स्वनामख्याते नदीभेदे
विपिन न० वप-इनन् पृ०। वने।
विपुल त्रि०वि+पुल-विस्तारे क। विस्तीर्णे, अगाधे, मेरुपश्चिमस्थे भूधरे, मेरौ, हिमाचले च। आर्याछन्दोभेदे स्त्री०।
विपुलास्रव स्त्री० विपुलं रसं स्रवति अण्। घृतकुमारीवृक्षे।
विप्र पु० वप-रन् ट० अत इत्त्वम् वि+प्रा-क वा। ब्राह्मणे।
विप्रकार पु० वि+प्र+कृ-घञ्। अपकारे, तिरस्कारे।
विप्रकाष्ठ न०विशेषेण प्राति प्रा-क विप्रं काष्ठं यस्य। तूलवृक्षे
विप्रकर्ष पु० वि+प्र+कृष-घञ्। दूरत्वे।
विप्रकृत त्रि० वि+प्र+कृ-क्त। उपद्रुते, तिरस्कृते च 'तस्मिन् विप्रकृताः काले' इति कुमार०।
विप्रकृष्ट त्रि०वि+प्र+कृष-क्त। दूरस्थे। स्वार्थे कन्। तत्रैवार्थ
विप्रचित्ति पु० वि+प्र+चित-क्तिच्। दानवभेदे।
विप्रतिपत्ति स्त्री० वि+प्रति+पद-क्तिन्। विरोधे, 'परस्परं मनुष्याणां स्वार्थे विप्रतिपत्तिष्विति' स्मृतिः। सन्देहे, विकारे च।
विप्रतिपन्न त्रि० वि+प्रति+पद-क्त। सन्देहयुक्ते कृतविरोधे च
विप्रति(ती)सार पु० वि+प्रति+सृ-घञ् वा दीर्घः। अनुतापे, अनुशये, रोषे च। [वि
विप्रयुक्त त्रि० वि+प्र+युज-क्त। वियुक्ते, विरहिते च। [वियोगे
विप्रयोग पु० वि+प्र+युज-घञ्। विप्रलम्भे, विरोधे विसंवादे
विप्रलब्ध त्रि० वि+प्र+लभ-क्त। वञ्चिते, 'प्रिय कृत्वा च सङ्केतं यस्या नायाति सन्निधिम् विप्रलब्धेति सा ज्ञेयेत्युक्तलक्षणे नायिकाभेदे स्त्री०।
विप्रलम्भ पु० वि+प्र+लभ-घञ् नुम् च। विसंवादे, वञ्चने, विरहे च 'युक्तायुक्तयोर्भावो युक्तयोर्वाथवा मिथः अभीष्टालिङ्गनादीनामनवाप्तौ प्रहृष्यते। स विप्रलम्भो विज्ञेय' इत्युक्ते शृङ्गाररस्याभेदे।
विप्रलाप पु० वि+प्र+लप-घञ्। विरोधोक्तौ परस्परविरुद्धार्थकथने। [वृक्षे, अयोवृक्षे।
विप्रलोभिन् पु० विप्रलोभयति लुभ+णिच्-णिनि। किरात
विप्रश्निका स्त्री विशेषेण प्रश्नो यस्याः ५ब० कप् अत इत्त्वम्। दैवज्ञाया स्त्रियाम्। [धीनतायाम्।
विप्रसात् अव्य० विप्रस्याधीनं करोति विप्र+साति। विप्रस्या-
विप्रस्व न० ६त०। विप्रस्वामिके धने।
विप्रिय पु० विरुद्धं प्रियं प्रीक। अपराधे, अप्रिये च कृतवानसि विप्रियं न मे इति कुमार०। ६ब० विगतप्रिये त्रि०।
विप्रुष् स्त्री० वि+प्रुष-क्विप्। बिन्दौ, वेदपाठकाले मुखनिर्गत जलबिन्दौ च।
विप्रोषित त्रि० वि+प्र+वस-क्त। गतप्रवासे।
विप्लव पु० वि+प्लु-अप्। परचक्रनृपतिराष्ट्रादितो भये राष्ट्रोपद्रवे च
विप्लाव पु०वि+प्लु घञ्। अश्वस्य गतिभेदे सभन्तात् जलप्लावे च।
विप्लुत त्रि वि+प्लु-क्त। व्यसनयुक्ते, उपद्रुते च 'अविप्लुतब्रह्मचर्य' इति स्मृतिः।
विफल त्रि० विगतं फलमस्य। निरर्थके। केतक्यां स्त्री०।
विबध पु० विगतो वधो हननं गतिर्यस्मात्। संस्कृतेत धान्यतण्डुलादौ 'निरुद्धविबधासारे'ति माघ० पृ०दीर्घे भारे च।
विबन्ध पु० विबध्नाति मलम् वि+बन्ध-घञ्। रोगभेदे।

विबुध पु वि+बुध-क । पण्डिते, देवे, विबुधसख इति भट्टि । चन्द्रे च ।

विभक्त त्रि० वि+भज क्त । पृथक्कृते, विभिन्ने, कृतविभागे च 'अविभक्ता विभक्ता वा सपिण्डाः स्थावरे समाः इति स्मृति । भावे क्त । विभागे न० ।

विभक्ति स्त्री० वि+भज क्तिन । विभागे 'सङ्ख्याकारकव्याप्यसामान्ये शक्तिमान प्रत्ययस्तु यः । स विभक्तिर्द्विधा प्रोक्तो'त्युक्तलक्षणे प्रत्ययभेदे च ।

विभव पु० वि+भू-अप् । धने, मोक्षे सर्वमूर्त्तसंयोगरूपे, ऐश्वर्ये प्रभवादिसंवत्सरमध्ये शुक्ला युवा अमा सर्वे विभवेऽब्दे वरानने । इत्युक्ते वर्षभेदे च ।

विभा स्त्री० वि+भा-अङ् । किरणे शोभायां, प्रकाशे च ।

विभाकर पु विभां प्रकाशं करोति कृ-अच् । सूर्य्ये, अर्कवृक्षे च

विभाग पु वि+भज भावे घञ् । भागे । कर्मणि घञ् । अंशे, धनादेः पूर्वस्वामिस्वत्वनाशोत्तर तत्सम्बन्धाधीनजातस्वत्व व्यञ्जकव्यापारभेदे । [गणोक्ते भजनीये धनादौ ।

विभाज्य त्रि० विभक्तुमर्हति वि+भज अर्हार्थे ण्यत् । विभा

विभाण्डक पु० मुनिभेदे ।

विभात न० वि+भा-क्त । प्रभाते ।

विभाव पु० वि+भू घञ् । परिचये, अलङ्कारोक्ते रत्याद्युद्दीपक आलम्बनादौ 'विभावेनानुभावेन व्यक्तः सञ्चारिणा तथे'ति सा०द० । [मुक्तवत्यां अलङ्कारभेदे ।

विभावना स्त्री 'प्रसिद्धकारणाभावात कार्य्योत्पत्तिर्विभावने

विभावरी स्त्री वि+भा-क्वनिप् ङीप् वनोर च । रात्रौ, हरिद्रायां, कुट्टन्याम्, चतुरक्षराग्रेवृत्ति, मध्यरजित्याम्, मेदोदले च । [वित्रकण्ठे, छन्दोभेदे च ।

विभावसु पु विभायुक्ता वसवोऽस्य । सूर्य्ये, अर्कवृक्षे, वह्नौ

विभाषा स्त्री० विरुद्धा भाषा वि+भाष अ । व्याकरणोक्ते प्राप्तिकाप्राप्तिकल्पे नवेति विभाषे'त्युक्तलक्षणे विकल्पविधाने

विभिन्न त्रि वि+भिद क्त । प्रकाशिते, विदलिते, विभक्ते च ।

विभीतक पु विशेषेण भीत इव स्वार्थे कन् । (वयड़ा) वृक्षे ।

विभीषण पु० विशेषेण भीषयते शत्रून् भी णिच् षुक च ल्यु । रावणभ्रातरि रामभक्ते, भयानके च । [भयप्रदर्शने ।

विभीषिका स्त्री वि+भी णिच् षुक् च भावादिनिर्द्दिष्टे ण्वुल् ।

विभु पु वि+भू डु । सर्वमूर्त्तसंयुक्ते, प्रभौ महादेवे ब्रह्मणि च ।

विभूति स्त्री० वि+भू क्तिन् । भस्मनि 'अणिमा लघिमा प्राप्ति प्राकाम्यं महिमा तथा । ईशित्वञ्च वशित्वञ्च तथा कामावसायिते'त्युक्ते ऐश्वर्ये च ।

विभूषा स्त्री० वि+भूष अ । शोभायां, भूषणे च ।

विभ्रम पु० वि+भ्रम घञ् । स्त्रीणां शृङ्गाराङ्गचेष्टाभेदे 'विभ्रमस्त्वरया काले भूषास्थानविपर्य्यय' इत्युक्ते त्वरया भूषास्थान वैपरीत्ये च 'यच्छ्यारी विभ्रममण्डनानामि'ति कुमार । विशेषेण, भ्रान्तौ, शोभायां, सन्देहे, भ्रमणे च ।

विभ्राज् त्रि० वि+भ्राज-क्विप् । भूषणादिना दीप्ते ।

विमत त्रि वि+मन-क्त । विरुद्धमतियुक्ते । [व्याकुलचित्ते

विमनस्(स्क) त्रि० विभिन्नं मनो यस्य वा कप् । चिन्तादिना

विमर्द पु विरुद्धार्थेऽणौ वि+मृद घञ् । (कानकासुन्दिया) वृक्षे । चक्रमर्द्दे च । भावे घञ् । मर्द्दने ।

विमर्शन न० वि+मृश-ल्युट् । परामर्शे, न्यायोक्ते साध्यव्याप्यहेतुमत्तया पक्षनिश्चये, वितर्के च । घञ् तत्रैव पु ।

विमर्ष पु वि+मृष-घञ् । विचारे, नाटकाङ्गभेदे च ।

विमल त्रि० विगतो मलो यस्मात् । स्वच्छे निर्मले, विगतो मलो यस्मा ६व० । (चामारकपा) सुन्दरायाम् जगन्नाथक्षेत्रस्थे देवीभेदे च स्त्री ।

विमातृ स्त्री० विरुद्धा माता । मातृसपत्न्याम् ।

विमातृज पु० विमातुर्जायते जन-ड । सापत्ने भ्रातरि ।

विमान पु०न० वि+मन घञ् वि+मा ल्युट वा । देवयाने, रथे सार्वभौमगृहभेदे च । अश्वे पु यानमात्रे परिमाणे च न० ।

विमार्ग पु विरुद्धो मार्गः । कुपथे निन्दिताचारे ।

विमुख त्रि० विरुद्धमनुकूलं मुखमस्य । बहिर्मुखे निवृत्ते च ।

विमुद्र त्रि विगता मुद्रा सङ्कोचभावो यस्य । विकसिते, मुद्रारहिते च ।

विम्ब पु न० । वी+वनु समक्ष्वौ । दर्पणादौ भासमानप्रतिबिम्बाश्रय,कमण्डलौ च । सूर्य्ये दशनाले च कृकलासे पु । बिम्बाया फलम् अण् तस्य लुप् । बिम्बिकाफले ।

विम्बजा स्त्री बिम्बं फलं जायतेऽस्या जन ड । बिम्बिकाख्ये (तेलाकुचा) ।

विम्बट पु बिम्बमटति अट-अच् शक । सर्षपे ।

विम्बा(म्बी) स्त्री बिम्बमस्त्यस्या अच् गौरा ङीष् । (तेलाकुचा) लताभेदे । स्वार्थे कन् । तत्र सूर्य्यादिमण्डले च ।

वियत् न वि+यम क्विप् मलोपे तुक् । आकाशे ।

वियद्गङ्गा स्त्री वियतस्था गङ्गा । स्वर्गङ्गायां मन्दाकिन्याम् ।

वियात त्रि वि+या क्त । धृष्टे, निर्लज्जे च ।

वियोग पु० वि+युज घञ् । विच्छेदे । १ । पतियोग [त्रि०

वियोगिन् पु वि+युज घिनुण् । चक्रवाके,पक्षिणि विच्छेदयति

विरक्त त्रि० वि+रञ्ज क्त । विच्छिन्ने, विरते च ।

विरङ्ग पु० वि+रन्ज-घञ् । कङ्कुष्ठे ।
विरचित त्रि० वि+रच-क्त । कृते, निर्मिते च ।
विरजस्तमस् त्रि० विगते रजस्तमसी यतः । सत्वगुणप्रधाने ।
विरजस् विगतं रजो यस्याः । गतार्त्तवायां स्त्रियाम् । रजोगुणहीने त्रि० ।
विरजा स्त्री०विशेषेण रज्यते रन्ज-अ । दूर्व्वायां, गोलोकस्थे राधासखीभेदे तच्छापाज्जायमाने नदीभेदे च ।
विर(श्च)ञ्चि पु०वि+रच अच् इन् वा मुम् च । जगत्स्रष्टरि ।
विरण न० विशिष्टो रणो मूलमस्य । उशीरे (वेणारमूल) ।
विरत त्रि० वि+रम क्त । निवृत्ते । [रराहित्ये च ।
विरति स्त्री० वि+रम-क्तिन् । निवृत्तौ, विषयसेवायां-व्यापा-
विरल त्रि०वि+रा-कलन् । अवकाशे, विच्छिन्ने, अनिविडे च
विरह पु० वि+रह-घञ् । विच्छेदे, अभावे, शृङ्गाररसस्य विप्रलम्भाख्ये अवस्थाभेदे च ।
विरहित त्रि०वि+रह-क्त । त्यक्ते,हीने च । [रागशून्ये त्रि०
विराग पु०वि+रन्ज-घञ् । रागाभावे, विगतो रागो यस्य ।
विराज् पु० विशेषेण राजते क्विप् । क्षत्रिये ब्रह्माण्डात्मकस्थूलदेहाभिमानिनि आदिपुरुषे, छन्दोभेदे च ।
विराट पु० विशेषेण राटो यत्न । देशभेदे,तद्देशाधिपे नृपे च ।
विराध पु० राक्षसभेदे ।
विराधन न० वि+राध-ल्युट् । पीडायाम् ।
विराम पु० वि+रम-घञ् । अवसाने, विरतौ, निवृत्तौ च ।
विराल पु० वि+डल-घञ् डस्य रः । विडाले पशुभेदे ।
विराव पु० वि+रु-घञ् । शब्दे इव० । विगतरवे त्रि० ।
विरिञ्च पु० वि+रिच-अच् मुम् च । विष्णौ जगत्स्रष्टरि वेधसि, शिवे च । इन् । तत्रैवार्थे । [रिते च
विरूढ त्रि० विशेषेण रोहति वि+रुह-क्त । जाते, अङ्कु-
विरूप त्रि० विकृतं रूपमस्य । दुष्टरूपयुक्ते, निन्दिते च पिप्पलीमूले न० । अतिविषायां, दुरालभायाञ्च स्त्री० ।
विरूपाक्ष पु० विरूपे विकटे अक्षिणी यस्य षच् समा० । महादेवे । विकटनेत्रे त्रि० ।
विरेक पु० वि+रिच-घञ् । मलादेरधोनिःसरणे, अतिरेके च
विरेचन न० वि+रिच-णिच्-ल्युट् । मलादेर्निःसारणे, ज्वरमध्ये विरेचन'मिति वैद्यकम् । विरेचयति वि+रिच-णिच्-ल्यु । पीलुवृक्षे पु० । भेदकमात्रे त्रि० ।
विरोक पु०न०वि+रुच-घञ् चस्य कः । छिद्रे, सूर्य्यकिरणे पु०
विरोचन पु० वि+रुच-युच् । सूर्य्ये, अर्कवृक्षे, बलिपितरि प्रह्लादतनयेऽसुरभेदे, चन्द्रे च रोचयति रुच-णिच् ल्यु । रोहितकवृक्षे,श्योनाकवृक्षे, पूतिकरञ्जे च पु० । रुचिकारके त्रि०
विरोध पु० वि+रुध-घञ् । वैरे, विरुद्धतायाम् न्यायोक्ते सामान्येनासामानाधिकरण्यरूपे हेतुदोषे, यथा वह्निमान् जलात्वात् जलरूपहेतोर्वह्निना सामानाधिकरण्य नास्ति ।
विरोधन न० वि+रुध-ल्युट् । वैरे ।
विरोधिन् पु० वि+रुध-णिनि । रिपौ, षष्टिसंवत्सरमध्ये 'जायते मानुषे कष्टं विरोधिनि न संशयः' इत्युक्तलक्षणे वत्सरभेदे च ।
विरोधोक्ति स्त्री० अर्थालङ्कारभेदे,परस्परविरोधिवचने च ।
विल भृतौ तु०प०सक०सेट् । विलति अवेलीत् ।
विल न० विल-क । छिद्रे, गुहायाञ्च । विलसदृशत्वाकारत्वेनास्त्यस्य अच् । घोटकोनमे, वाजिनो 'विलयोनय' इति कुमारः । वेतसे च पु० ।
विलक्ष पु०विलक्ष-अच् विस्मययुक्ते ।
विलक्षण त्रि० विशिष्टं लक्षणमस्य । विभिन्ने, विशेषणयुक्ते च । निष्प्रयोजनस्थितौ च न० । दानार्थं काञ्चनपुरुषमूर्त्तियुतशय्याभेदे स्त्री० । 'अशौचान्तात् द्वितीयेऽह्नि शय्यां दद्यात् विलक्षणामि'ति स्मृतिः' ।
विलग्न त्रि० विशेषेण लग्नं लस्ज-क्त तस्य नः जस्य गः । संलग्ने । मध्यभागे, कटौ, उदितमेषादिराशौ च न० । 'गोचरे वा विलग्ने वे'ति ज्योतिषम् । [काले
विलम्ब पु० वि+लबि-घञ् । विलम्बने अशीघ्रत्वे प्रतीक्षणीय
विलम्बित त्रि० वि+लबि-क्त । अशीघ्रे,मन्दे च मध्यन्दत्वे न०
विलय पु० वि+ली-अच् । प्रलये, नाशे च ।
विलला स्त्री० वि+लल-अच् । श्वेतवलायाम् । [गोधायां च
विल(ले)शय पु० विले शेते-शी अच् वा अलुक्स० । सर्पे,मूषिके,
विलाप पु० वि+लप-घञ् । परिदेवनोक्तौ ।
विलास पु० वि+लस-घञ् । 'तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु' इत्युक्ते स्त्रीणां शृङ्गारचेष्टाभेदे, चेष्टाविशेषे, दीप्तौ च ।
विलासिनी स्त्री० विलासोऽस्त्यस्य इनि ङीप् । नार्य्यां, वेश्यायाञ्च । भोगवति त्रि० सर्पे, कृष्णे, वह्नौ, स्मरे, महादेवे चन्द्रे च पु० ।
विलीन त्रि० वि-ली-क्त । प्राप्तद्रवीभावे घृतादौ, विरते, नष्टे च 'विलीनाशेषपातके'ति भागवतम् ।
विलेपन न० विलिप्यतेऽनेन करणे ल्युट् । गात्रानुलेपनद्रव्ये पिष्टे घृष्टे वा चन्दनकुङ्कुमादौ । कर्म्मणि ल्युट् ङीप् । यवाग्वां, सुवेशायां स्त्रियाञ्च स्त्री० ।

**विलेप्य** पु० वि+लिप यत् । यवाग्वाम् विलेपनीये त्रि० ।
**विलोचन** न० वि+लुच-करणे ल्युट् । नेत्रे, भावे ल्युट् । दर्शने
**विलोडित** न० वि+लोड-क्त । तक्रे । व्यालोडिते त्रि० ।
**विलोम** त्रि० विगत लोम यत्र अच् समा० । विपरीते, अरघट्टके न० सर्पे, कुक्कुरे वरुणे च पु ।
**विलोमजिह्व** पु विलोमा विपरीता जिह्वा यस्य । गजे ।
**विलोमजवर्ण** पु विलोमज उत्क्रमजातया व्युत्क्रमजो वर्णः । उत्तमस्त्रियामधमवर्णेन जनिते सङ्कीर्णे वर्णे ।
**विलोमी** स्त्री विशिष्ट लोम केशो यस्याः ब० अच् गौरा० ङीप् । आमलक्याम् ।
**विलोल** त्रि० वि+लुल अच् । चञ्चले, विशेषचञ्चले च ।
**विल्ल** न० विल त किञ्च तस्य नेत्वम् । आलवाले । [हीकन्दे
**विल्लमूला** स्त्री० विल्लमालवालमिव वेष्टितं मूलमस्याः । वारा-
**विल्व** पु० विल वन् किच्च । श्रीफलवृक्षे तत्फलादौ, परिमाणे च न । [पदार्थे शुष्कविल्वीत्यपत्र
**विल्वपेषिका** स्त्री० विल्वस्य पेषोऽस्त्यस्य ठन् । (बेलशुंठ)
**वि(वी)वध** पु० वि+वध अच् वा दीर्घः । धान्यतण्डुलादेराहरणे भारे स्कन्धवहनयोग्ये (बाक) काष्ठभेदे च ।
**विवर** न वि+वृ-अप् । छिद्रे, दोषे च ।
**विवरण** न० वि+वृ ल्युट् । व्याख्याने, तत्कारके ग्रन्थभेदे च ।
**विवरनालिका** स्त्री विवरयुक्ता नालमस्त्यस्याः ठन् । वेणौ(वांश)
**विवर्ण** त्रि० विरुद्धो वर्णोऽस्य । अधमे, नीचे च ।
**विवर्त्त** पु० वि+वृत-घञ् । नृत्ये, समुदाये, परिवर्त्तने वेदान्तोक्ते कारणात् विषमसत्ताकतया उत्पद्यमाने कार्ये च । यथा रज्ज्वाम् रजतम् ब्रह्मणो जगत् ।
**विवश** त्रि० विगतो वश आयत्तता यस्य । अवशात्मनि, व्याकुले च 'विवशा कामवधूरिति कुमार' मृतरोधे च ।
**विवस्वत्** पु वि+वस-क्विप् अस्त्यर्थे मतुप् मस्य व । सूर्ये, अर्कवृक्षे, अरुणे देवे च ।
**विवाद** पु० विरुद्धो वादः । 'स्मार्त्तव्यवहारे इयो वैकृतरस्य च । विवादो व्यवहारश्चे'त्युक्तलक्षणे व्यवहारे, कलहे च ।
**विवाह** पु वि वह-घञ् । दारपरिग्रहे, तज्जनके व्यापारे च
**विवाहित** पु विवाहो जातोऽस्य तार० इतच् । जातविवाहे ।
**विवाह्य** त्रि० वि+वह ण्यत् । विवाहयोग्ये विशेषेण वाह्ये च
**विविक्त** त्रि वि+विच क्त । निर्जने पवित्रे असंयुक्ते च । कर्त्तरि-क्त । विवेकिनि त्रि० । दुर्भगायां स्त्रियां स्त्री० ।
**विविध** त्रि० विभिन्ना विधा यस्य । नानाप्रकारे ।
**विवीत** पु० विशिष्टं वीतं गवादिप्रचारस्थानं यत्र । प्रचुरतृणघासादियुक्ते देशे ।
**विवृत** त्रि० वि+वृ-क्त । विस्तृते व्याख्याते च ।
**विवृति** स्त्री० वि+वृ क्तिन् । विस्तारे व्याख्याने च ।
**विवेक** पु० वि+विच घञ् । याथार्थ्येन वस्तुस्वरूपावधारणे, प्रकृतिपुरुषयोर्भेदज्ञाने च ।
**विवोढृ** पु वि+वह तृच् । जामातरि ।
**विव्वोक** पु० वि+वा कु तस्य वोक स्थानम् । 'गर्वाभिमानादिष्टेऽपि विव्वोकोऽनादरक्रिये'त्युक्तलक्षणे स्त्रीणां शृङ्गारचेष्टाभेदे ।
**विश** प्रवेशे तु० पर० सक० अनिट् । विशति अविक्षत् ।
**विश्** पु० विश क्विप् । मनुजे वैश्ये च ।
**विशङ्कट** त्रि० वि+शङ्कटच् । विशाले । [च त्रि० ।
**विशद** पु० वि+शद अच् । शुभ्रवर्णे । तद्वति विमले, व्यक्ते
**विशय** पु० वि+शी अच् । संशये 'विषयो विशयश्चैवेति मीमांसा
**विशर** पु० वि+शॄ अप् । वधे ।
**विशल्यकृत्** पु० विशल्यं शल्यकृतवेदनानिवृत्तिं करोतीति कृ क्विप् । (छागलवाली) वृक्षे ।
**विशल्या** स्त्री० विगतं शल्यं शल्यकृतवेदना यस्याः ब० । अग्निशिखवृक्षे दन्तीवृक्षे, गुडूच्याम्, त्रिपुटायाम् अजमोदायाम् । विगतशल्ये त्रि० ।
**विशसन** न० वि+शस-हिंसने ल्युट् । मारणे ।
**विशसन** पु० विशस्यतेऽनेन ल्युट् । खड्गे, 'असिर्विशसनः खड्ग इति खड्गस्तोत्रम् । [तत्र, मारिते
**विशस्त** त्रि वि+शस-क्त । मारिते अतीते च । वा इट् ।
**विशाख** पु० विशाखानक्षत्रे भव अण् । कार्त्तिकेये । धन्विनां वितस्त्यन्तरपादपातस्थाने, पुनर्नवायां याचने च ।
**विशाखज** पु० विशिष्टा शाखा यस्य तथा सन् जायते जन ड । नारङ्गे, विशाखानक्षत्रजाते त्रि० ।
**विशाखा** स्त्री० विशिष्टा शाखा प्रकारो यस्याः । षोडशनक्षत्रे अर्केऽमिन्यधिके षोडशे नक्षत्रे कठिल्लके च ।
**विशारण** न वि+शॄ-स्वार्थे णिच् ल्युट् । मारणे ।
**विशारद** पु० विशालं ददाति दा क लस्य र । बकुलवृक्षे क्षुद्रदुरालभायां स्त्री पण्डिते, प्रगल्भे श्रेष्ठे च त्रि० ।
**विशाल** त्रि० वि+शालच् । विस्तीर्णे महति च । मृगभेदे, पक्षिभेदे च पु । इन्द्रवारुण्याम् महेन्द्रवारुण्यां नदीभेदे च स्त्री० 'विशाला विरजा तथे'ति पुराणम् । [दक्षे
**विशालता** स्त्री विशालस्य भाव तल् । पार्श्वविकारे । [अक्षो
**विशालतैलगर्भ** पु विशालं विस्तीर्णं तैलं गर्भे फलमध्ये यस्य ।

विशालत्वच् पु० विशाला त्वग् यस्य । सप्तच्छदे वृक्षे ।
विशालपत्त्र पु० विशालं पत्त्रमस्य । कामाली,तालवृक्षे च ।
विशालाक्ष पु० विशाले अक्षिणी यस्य षच्समा० । महादेवे, गरुडे,विष्णौ च वृहन्नेत्रे,त्रि०पार्व्वत्यां नागदन्त्या च स्त्री०ङीप्
विशाली स्त्री० वि+शालच् गौरा०ङीष् । अजमोदायाम् ।
विशिख पु०विशिष्टा विगता वा शिखा यस्य । शरवृक्षे, वाणे, तोमरे च द्वंव० शिखारहिते त्रि० । नालिकायाम् रथ्यायाञ्च स्त्री० ।
विशिष्ट त्रि० वि+शिष-क्त । युक्ते, विलक्षणे, विशेषयुक्ते च ।
विशिष्टाद्वैत न०रामानुजाद्युक्ते प्रकृतिविशिष्टस्य ब्रह्मणोऽद्वयत्वे
विशीर्ण त्रि० वि+शॄ-क्त । शुष्के, जरावस्थापन्ने च ।
विशीर्णपर्ण पु० विशीर्णं पर्णमस्य । निम्ववृक्षे ।
विशुद्ध त्रि० वि+शुध-क्त । दोषरहिते, विशदे च ।
विशुद्धि स्त्री० वि+शुध-क्तिन् । शोधने,दोषराहित्ये च ।
विशृङ्खल त्रि०विगता शृङ्खला पद्धति र्यस्याः । परिपाटीशून्ये
विशेष पु० वि+शिष-घञ् । प्रभेदे, प्रकारे, व्यक्तौ, तिलके, 'अन्त्योनित्यद्रव्यवृत्तिर्विशेषः परिकीर्त्तित' इति वैशेषिकोक्ते पदार्थभेदे, अर्थालङ्कारभेदे च ।
विशेषक पु०न०विशेषयति वि+शिष-णिच्-ण्वुल् । ललाटकृते तिलके । विशेषकर्त्तरि त्रि० 'त्रिभिर्श्लोकै विशेषकम्'त्युक्ते एकवाक्यतापन्ने श्लोकत्रये न० ।
विशेषगुण पु० कर्म० । वैशेषिकोक्ते 'बुद्ध्यादिषट्कं स्पर्शादिचतुष्कं स्नेहभावने । सांसिद्धिकद्रवत्वञ्च अदृष्टं शब्द एव चे'त्युक्तेषु गुणभेदेषु ।
विशेषण न० विशिष्यतेऽनेन वि+शिष-ल्युट् । भेदकधर्म्मे-गुणक्रियादौ यथा नीलम् उत्पलं चलो गौरित्यादौ गुणक्रियादिर्भेदकधर्म्मः ।
विशेषविधि पु० विशेषे विधि ।सामान्यविशेषयोर्मध्ये विशेषगोचरे विधाने यथा ब्राह्मणेभ्यो दधि दीयतां शाण्डिल्याय तक्रमित्यत्र शाण्डिल्यस्य ब्राह्मणविशेषत्वेन तद्विषये दधिदानापवादेन तक्रदानविधि' ।
विशेषित त्रि० वि+शिष-णिच्-क्त । भेदिते विशेषणयुक्तीकृते च
विशेषोक्ति स्त्री० अर्थालङ्कारभेदे ।
विशेष्य त्रि० विशिष्यते भेद्यते गुणादिभिरसौ वि+शिषण्यत् । गुणादिभिर्भेद्ये,व्यवच्छेद्ये, पदार्थे धर्म्मिणि च ।
विशोक पु० विगतः शोकः यस्मात् यस्य वा । अशोकवृक्षे शोकरहिते त्रि० योगशास्त्रोक्ते चित्तवृत्तिभेदे स्त्री० ।
विशोधनी स्त्री० विशुध्यतेऽनया शुध-ल्युट् ङीप् । दन्तीवृक्षे भावे ल्युट् । शोधने न० वि+शुध-ल्यु । शोधनकारके त्रि० ।
विशोधिन् त्रि० वि+शुध-णिच् णिनि । शोधनकारके त्रि० । नागदन्त्या स्त्री०ङीप् ।
विश्र(श्रा)णन न० वि+श्रण-णिच्-ल्युट् वा वृद्धिः । दाने ।
विश्रब्ध त्रि० वि+श्रन्भ-क्त । विश्वस्ते 'विश्रब्ध' परिचुम्ब्येति सा० । शान्ते, अनुद्धते, गाढे च ।
विश्र(श्रा)म पु० वि+श्रम घञ् वा वृद्धिः । विरामे प्रवृत्तव्यापारस्यासमाने च । [विधे च ।
विश्रम्भ पु० वि+ श्रन्भ-घञ् । विश्वासे, प्रणये, केलिकलहे
विश्राव पु० वि+श्रु-घञ् । प्रसिद्धौ ख्यातौ च ।
विश्रुत पु० वि+श्रु-क्त । विख्याते ।
विश्लिष्ट त्रि० वि+श्लिष-क्त । वियुक्ते, शिथिले च ।
विश्लेष पु० वि+श्लिष-घञ् । वियोगे शैथिल्ये च ।
विश्व न०विश-व । जगति संसारे । तदभिमानिनि जीवे पु० । आद्यदेवविशेषे पु० बहुव० सकले त्रि० तदर्थेऽस्य सर्व्वनामता ।
विश्वकर्म्मन् पु० विश्वेषु कर्म्म व्यापारो यस्य । सूर्य्ये, देवशिल्पिनि, मुनिभेदे, परमेश्वरे च ।
विश्वकृत् पु० विश्वं करोति कृ-क्विप् । विश्वकर्मणि,परमेश्वरे च
विश्वकेतु पु० विश्वे केतवोऽस्य । अनिरुद्धे ।
विश्व(ष्व)क्सेन विशु(षु)चीसेनायस्य । विष्णौ, प्रियङ्गुवृक्षे स्त्री० ।
विश्वगन्ध पु० विश्वतो गन्धोऽस्य । बोले गन्धरसे,पलाण्डौ च
विश्वगन्धा स्त्री० विश्वे सकला गन्धा यस्याः । पृथिव्याम् ।
विश्वग्रन्थि स्त्री० विश्वतो ग्रन्थिर्यस्या । हंसपदीलतायाम्
विश्व(ष्व)च् अव्य०विश्वमञ्चति क्विप् विशु(षु) आदेशः । सर्व्वत इत्यर्थे विश्वगामिनि त्रि० अद्रागमे विश्वद्र्यञ्च्पदम् ।
विश्वधारिणी स्त्री० विश्वं धारयति धृ-णिनि । पृथिव्याम्
विश्वपर्णी स्त्री० विश्वतः पर्णान्यस्या । भूम्यामलक्याम् ।
विश्वप्सन् पु० विश्वं प्साति भक्षति प्सा-कनिम् । अग्नौ,चन्द्रे देवे, विश्वकर्म्मणि, भूमौ च ।
विश्वभेषज न० विश्वेषां भेषजम् । शुण्ठ्याम् ।
विश्वम्भर पु० विश्वं विभर्त्ति भृ-अच् मुम् च । इन्द्रे, विष्णौ च । पृथिव्यां स्त्री० ।
विश्वरूपक न० विश्वं रूपमस्य कप् । कृष्णागुरुणि ।
विश्वरेतस् पु० विश्वं रेतोजन्यं यस्य । चतुर्मुखे ब्रह्मणि ।
विश्वरोचन पु० विश्वान् रोचयति रुच-णिच्-ल्यु । नाडीचशाके
विश्ववेदस् पु० विश्वं वेत्ति विद-असुन् । इन्द्रादौ देवे,सर्व्वज्ञे च
विश्वसार न० विश्वेषां सारम् । तन्त्रभेदे । संज्ञायां कन् । (फणिमनसा) वृक्षे पु० ।

विषहारके त्रि०। [विषहारके त्रि०।
विषहरी स्त्री०विषं हरति हृ-अच् गौ०ङीष्। मनसादेव्याम्
विषहा स्त्री० विषं हन्ति हन-ड। देवदालीलतायाम्।
विषा स्त्री० विषं नाश्यत्वेनास्त्यस्याः अच्। (आतइच) अतिविषायाम्, बुद्धौ च।
विषाण न० विष+कानच्। पशुशृङ्गे, हस्तिदन्ते वराहदन्ते, कुष्ठौषधे, क्षीरकाकोल्याञ्च।
विषाणिका स्त्री० विषाणमस्त्यस्याः ठन्।.शृङ्ग्याम् (गाडरशिङा) कर्कटशृङ्ग्याम्, आमलक्याञ्च।
विषाणिन् पु०विषाणमस्त्यस्य इनि। शृङ्गिणि, हस्तिनि च। शृङ्गाटके, ऋषभौषधे च पु०।
विषाद पु० वि+षद-घञ्।अवसादे, जडतायाञ्च।
विषादनी स्त्री० विषाद तन्निवृत्तये अद्यतेऽसौ अद-ल्युट्। पलाशीलतायाम्।
विषान्तक पु० विषस्यान्तक इव। शिवे, विषहरे त्रि०।
विषापह स्त्री० विषमपहन्ति अप+हन-ड। इन्द्रवारुण्याम्, नागदमन्याम्, अर्कमूलायाञ्च (इशरमूल)।
विषाराति पु० ६त०। कृष्णधुस्तूरे।
विषारि पु०६त०। घृतकरञ्जे, महाचञ्चुशाके च। [तके
विषास्य पु० विषमास्ये यस्य। सर्पे विषाक्तमियास्यमस्य। भल्ला
विषु अव्य०विष-कु। साम्ये, नानारूपे च।
विषुव न० विषु दिनरात्र्योः साम्यं वाति वा-क। समरात्रिदिनकालके अयनांशक्रमेण रवेः तुलामेषराशिसंक्रान्तिभेदे।
विषुवत् न० विषु साम्यमस्यास्ति मतुप् यवादि० मस्य वः। विषुवशब्दार्थे।
विषौषधी स्त्री० ६त०। नागदन्त्याम्।
विष्क हिंसायां चु आ०सक० सेट्। विष्कयते अविविष्कत। दर्शने उभ० विष्कयति ते अविविष्कत् त।
विष्कम्भ पु० वि+स्कन्भ-अच्। सूर्यचन्द्रयोगजातयोगमध्ये प्रथमे योगे,विस्तारे,प्रतिबन्धे, रूपककाव्याङ्गभेदे, योगिनां बन्धभेदे,वृक्षे, अवष्टम्भके-कीलकादौ च।
विष्किर पु० विकिरति वि+कृ-क सुट्च। विहगे।
विष्टप न० विश-कपन् तुट् च। भुवने।
विष्टब्ध त्रि० वि+स्तन्भ-क्त। प्रतिरुद्धे अवरुद्धे।
विष्टम्भ पु० वि+स्तन्भ घञ्। प्रतिबन्धे रोगभेदे च।
विष्टम्भिन् त्रि० वि+स्तन्भ-णिनि। प्रतिबन्धके रोगविशेषजनके च।
विष्टर पु० वि+स्तृ-अप् षत्वम्। 'ऊर्द्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टर' इति 'याज्ञवल्क्यस्तु विष्टर'इति च स्मृत्युक्ते दर्भकृते आसनभेदे, आसनमात्रे, वृक्षे च। [विष्णौ।
विष्टरश्रवस् पु० विष्टरः तुणगुच्छ इव श्रवसी कर्णावस्य।
विष्टरुहा स्त्री० विष्टा भूमौ प्रविष्टा सती रोहति रुह-क। सर्पकेतक्याम्।
विष्टार पु० वि+स्तृ-घञ् षत्वम्। पङ्क्तिच्छन्दोभेदे।
विष्टि स्त्री० विश-क्तिन् क्तिच् वा। वेतन विना भारादिवहनजन्ये क्लेशे, वेतने, कर्मणि, वर्षणे, प्रेषणे, तिथ्यर्द्धात्मककरणमध्ये सप्तमे करणे कर्मकरे-भृत्ये, वेतनं विना कर्मकरे च पु०।
विष्टा स्त्री० विविधं तिष्ठति स्था-क षत्वम्। पुरीषे।
विष्णु पु० विष-व्यापने नुक्। व्यापके, परमेश्वरे, यज्ञे शुद्धे, धर्मशास्त्रकारके मुनिभेदे च 'मन्वत्रिविष्णुहारीते'ति स्मृतिः। 'यस्माद् विश्वमिदं सर्वं तस्य शक्त्या महात्मनः। तस्मादेवोच्यते विष्णुर्विशधातोः प्रवेशनादि'त्युक्ते, वासुदेवेऽपि
विष्णुक्रान्ता स्त्री०३त०। अपराजितायाम् तस्याः विष्णुपरिव्यक्तात्तथात्वम्। [निन प्रसिद्धः न्यायभाष्यकर्त्ता।
विष्णुगुप्त पु० चाणक्ये मल्लिनाथे अयमेव वात्स्यायनपक्षिल-
विष्णुतैल न० वैद्यकप्रसिद्धे तैलभेदे।
विष्णुधर्म्म पु० विष्णूपासनायोग्यो धर्मः शाक०। विष्णूपासनोचिते नियमभेदे उपचारात् तत्प्रतिपादके ग्रन्थे च।
विष्णुधर्म्मोत्तर न० विष्णुधर्म उत्तरः प्रधानः वर्ण्यत्वेन यस्य। संहिताभेदे।
विष्णुपद न० विष्णोः पदमिव व्यापकत्वात्। आकाशे।
विष्णुपदी स्त्री० विष्णुपदं कारणत्वेनास्त्यस्याः अच् गौरा० ङीष्। गङ्गायाम् वृषसिंहवृश्चिककुम्भराशौ रवेः संक्रान्तौ च
विष्णुमाया स्त्री०६त०। विष्णोः परमेश्वरस्य माया। अघटनघटनपटीयस्याम् अविद्यायाम्, तदधिष्ठात्र्यां दुर्गायाञ्च।
विष्णुरथ पु० विष्णो रथ इव गतिहेतुत्वात्। गरुडे।
विष्णुरात पु०विष्णुना रात विष्णुर्वा रायाञ्जीवनमस्मै रा-क्त वा। परीक्षिदाख्ये नृपे सहि गर्भस्थएव अश्वत्थामास्त्रेण दग्धः सन् सूतः प्रसवानन्तरञ्च विष्णुना पुनर्जीवित इति भारतम्
विष्णुवल्लभा स्त्री० ६त०। तुलस्याम्, अग्निशिखावृक्षे च।
विष्णुवाहन पु०विष्णुं वाहयति स्थानान्तरं नयति वह-णिच् ल्यु। गरुडे।
विष्णुवाह्य पु०विष्णुर्वाह्योऽस्य। गरुडे। [कार्मुकशब्दे टङ्कारे
विष्फार पु० वि+स्फुर णिच् अच आत् अच षत्वम्। धनुर्गुणा-
विध्य त्रि० विशेषेण वध्यः विध+यत्। विशेषेण वध्ये।

विष्वक्सेन पु० विषुची सेना यस्य । विष्णौ विष्णुनिर्माल्यभक्षके तद्रूपभेदे च । प्रियङ्गौ स्त्री० । [च

विष्वक्सेनप्रिया स्त्री ६त० । लक्ष्म्याम् (चामर आलु) भेदे

विष्वाणन न० वि+स्वन ल्युट् षत्वणत्वे । भोजने ।

विष्वाण पु० वि+स्वन घञ् षत्वणत्वे । भोजने ।

विस न० वि+षो क । मृणाले ।

विसकण्ठिका स्त्री० विस मृणालमिव कण्ठोऽस्त्यस्या ठन् । बलाकायाम् ।

विस उत्सर्गे दि०पर सक० सेट् । विस्यति अवेसीत् ।

विसंवाद पु० वि+सम्+वद घञ् । विप्रलम्भे वचने, अन्यथा स्थितस्य वस्तुनोऽन्यथा कथनादौ च ।

विसकुसुम न विसयुक्तं कुसुमम् । पद्मे ।

विसङ्कट पु० विशिष्टो सङ्कटो यस्मात् । सिंहे इङ्गुदीवृक्षे च ।

विसनाभि स्त्री विस नाभौ यस्य । पद्मिन्याम् पद्मसमूहे च

विसर पु० वि+सृ अप् । समूहे, विस्तारे च ।

विसर्ग पु० वि+सृज-घञ् । दाने, त्यागे, मलत्यागे, विसर्जनीयाख्ये वर्णभेदे, मोक्षे प्रलये च भूतसर्गविसर्गादि नवलक्षणलक्षितमिति श्रीधरः । [ल्युट् । प्रेरणे ।

विसर्जन न वि+सृज-ल्युट् । दाने, त्यागे च । वि+सृज णिच्

विसर्प पु० वि+सृप घञ् । रोगभेदे ।

विसर्पण न० वि+सृप-ल्युट् । प्रसारे ।

विसार पु० विसरति सर्पति वि+सृ घञ् । मत्स्ये ।

विसारिन् त्रि० वि+सृ णिनि । प्रसरणशीले । मत्स्ये पु० माषपर्ण्यां स्त्री० ङीप् । [पद्मसमूहे पद्मलतायाञ्च ।

विसिनी स्त्री० विसानां समूहः तद्युक्तो देशो वा इनि ।

विसूचिका स्त्री विशिष्टा सूचीव स्वार्थे कन् । रोगभेदे ।

विसृत त्रि० वि+सृ क्त । विस्तीर्णे ।

विसृत्वर त्रि० वि+सृ-क्वरप् । प्रसरणशीले । स्त्रियां ङीप् ।

विसृमर त्रि० वि+सृ क्मरच् । विसरणशीले ।

विसृष्ट त्रि० वि+सृज क्त । प्रेरिते 'रथे विसृष्ट' इति रघुः त्यक्ते च । [रक्तिकापरिमाणे च ।

विस्त पु न० विस उत्सर्गे क्त नि० नट् । स्वर्णकर्षे, कर्षमिते

विस्तर पु० वि+स्तॄ अप् । शब्दसमूहे, वाक्यसङ्घे, विस्तारे, प्रणये, समूहे च । आधारे अण् । पीठे ।

विस्तार पु० वि+स्तॄ अशब्दायां कर्त्तरि घञ् । विटपे भावे घञ् । विस्तीर्णतायाम् समासवाक्य स्ते पदसमूहे च ।

विस्तीर्ण त्रि वि+स्तॄ-क्त । विपुले विस्तारयुक्ते विशाले च ।

विस्तीर्णपर्ण न० विस्तीर्णानि पर्णान्यस्य । मानके ।

विस्तृत त्रि० वि+स्तृ-क्त । विस्तारयुक्ते । [वह्निकणे विषभेदे च

विस्फुलिङ्ग पु० विस्फुरति वि+स्फुर ड स्वाप तद् लिङ्गमस्य ।

विस्फोट पु० विस्फुटति वि+स्फुट-अच् । (विषफोडा) पदार्थे, स्वार्थे कन् । स्फोटकभेदे विस्फोटकभया 'भेषजेति श्री तन्त्रा स्तोत्रम् ।

विस्मय पु० वि+स्मि-अच् । आश्चर्ये, अद्भुत, रसभेदे च ।

विस्मयान्वित त्रि ३त० । विस्मययुक्ते आश्चर्ययुक्ते च ।

विस्मापन पु० वि+स्मि-णिच् आप् आत् ल्यु । कुहके, कामदेवे च । गन्धर्व्वपुरे न० । विस्मायनमप्यत्र ।

विस्मित पु० वि+स्मि क्त । विस्मययुक्ते ।

विस्मृत त्रि० वि+स्मृ-क्त । स्मरणाविषये ।

विस्मृति स्त्री० वि+स्मृ क्तिन् । स्मरणाभावे ।

विस्र न विस रक् । आमगन्धौ ।

विस्रंस पु० वि+स्रंस-घञ् । पतने, क्षरणे च ।

विस्रगन्धा स्त्री० विस्रो गन्धोऽस्याः । ह्रपुषायाम् ।

विस्रगन्धि पु० विस्रस्येव गन्धोऽस्य इत्समा० । हरिताले ।

विस्रम्भ पु० वि+स्रम्भ घञ् । विश्वासे, प्रणये, परिचये च ।

विस्रम्भिन् त्रि०वि+स्रम्भ णिनि । विश्वासयुक्ते, प्रणयिनि च

विस्रसा स्त्री० वि+स्रंस क । जरायाम् ।

विस्रा स्त्री०वि+स्र आमगन्धोऽस्त्यस्या अच् । ह्रपुषायाम्

विहग पु०विहायसा गच्छति गम ड नि । पक्षिणि । विहङ्गोऽप्यत्र

विहङ्गम पु विहायसा गच्छति गम-खच् नि पक्षिणि ।

विहङ्गराज पु० ६त० अच् समा० । गरुडे 'विहङ्गराजाङ्ग रुद्रै'रिति माघः । [सायाञ्च ।

विहनन न०विहन्यते वि+हन ल्युट् । तूलपिञ्जले, विघ्ने, हिं

विहर पु वि+हृ अप् । वियोगे । ल्युट् । तत्रैव न ।

विहसित न० वि+हस क्त । मध्यमहास्ये ।

विहस्त त्रि विगतो हस्तो हस्तावलम्बनं यस्य । व्याकुले । पण्डिते, षण्डे च पु० ।

विहापित न० वि+हा-णिच्-क्त । दाने ।

विहायस् पु न० वि+हा असुन् णि० युक् । आकाशे पक्षिणि च स्वार्थे अच् । विहायसमप्यत्र ये न० ।

विहार पु० वि+हृ घञ् । क्रीडार्थं पादाभ्यां गमने, भ्रमणे स्कन्धे लीलाया बौद्धदेवालये, वैजयन्ते च ।

विहित त्रि वि+धा क्त । कृते विधिना बोधिते च ।

विहीन त्रि० वि+हा-क्त । त्यक्ते, वर्जिते च ।

विहृत न वि+हृ भावे क्त । विहारे, स्त्रीणां चेष्टाभेदे च ।

विह्वल त्रि० वि+ह्वल अच् । भयादिना व्याकुले, विलीने च ।

**वी** कान्तौ जनने च अक॰ गतौ व्याप्तौ क्षेपे भोजने च सक॰ अदा॰ उभ॰ अनिट्। वेति अवैषीत्।

**वी(वि)काश** पु॰ वि+काश-घञ् वा दीर्घः। रहसि, प्रकाशे च।

**वीक्षण** न॰ वि+ईक्ष-करणे ल्युट्। नेत्रे। भावे ल्युट्। दर्शने

**वीङ्खा** स्त्री॰ वि+इखि-अच्। शूकशिम्बायाम्। अ। गतिभेदे, नृत्ये, अश्वगतिभेदे, मन्थे च।

**वीचि(ची)** पु॰स्त्री॰ वे-डीचि स्त्रीत्वे वा ङीप्। तरङ्गे, अवकाशे, सुखे, अल्पे, किरणे च।

**वीचितरङ्ग** पु॰ वीचेरिव तरङ्गो यत्र। वीचितो यथा उत्तरोत्तरं तरङ्गजननमेवं स्वजन्यजन्यादिरूपे न्यायभेदे यथा शब्दस्य ढक्कादिदेशे उद्भवस्तज्जन्यशब्दपरम्परया श्रोत्रेण सह सम्बन्धात् श्रवणम्।

**वीचिमालिन्** पु॰ वीचीनां मालाऽस्त्यस्य इनि। समुद्रे।

**वीज** व्यजने अद॰ चुरा॰ उभय॰ सक॰ सेट्। वीजयति ते अविवीजत्-त। 'वीज्यते स हि मन्मथ' इति कुमारः।

**वीज** न॰ वी-क्विप् जन-ड कर्म॰। कारणे, शुक्रे, अङ्कुरे, तत्त्वावधाने, मज्जनि, अव्यक्तगणितभेदे, मन्त्रभेदे, धान्यादेः फलादौ च।

**वीजक** पु॰ वीजेन कायति कै-क। मातुलुङ्गके। [वराटके।

**वीजकोश** पु॰ वीजानां कोश इवाधारः। पद्मवीजाधारे

**वीजगर्भ** पु॰ वीजानि गर्भे यस्य। पटोले।

**वीजगुप्ति** स्त्री॰ वीजानां गुप्तिर्यस्याम्। शिम्बायाम्।

**वीजन** न॰ वीज-ल्युट्। व्यजने। करणे ल्युट्। चामरादौ। वस्तुनि, चक्रवाके, जीवञ्जीवविहगे च पु॰।

**वीजपादप** पु॰ वीजप्रधानः पादपः। भल्लातकवृक्षे।

**वीजपुष्प** न॰ वीजात् पुष्पं यस्य। मरुवके। [वीजपूर्णोऽप्यत्र

**वीजपूर** पु॰ पूर्य्यते पूर-घञ् ३त॰। (टावा लेवु) जम्बीरभेदे

**वीजफलक** पु॰ वीजानि फले यस्य कप्। वीजपूरे जम्बीरे।

**वीजमातृका** स्त्री॰ वीजानां मातेव इवार्थे कन्। पद्मवीजे।

**वीजरुह** पु॰ वीजेन रोहति रुह-क। वीजमात्रजाते धान्यादौ

**वीजरेचन** न॰ वीजं रेचयति रिच-ल्यु। वीजेषु मध्ये रेचके जयपालवीजे।

**वीजवपन** न॰ वीजानि उप्यन्तेऽत्र वप-आधारे ल्युट्। क्षेत्रे। भावे ल्युट्। वीजस्य उत्पादनार्थं क्षेपणे।

**वीजरत्न** न॰ वीजं रत्नमिवास्य। माषकलाये।

**वीजवृक्ष** पु॰ वीजमात्राज्जातो वृक्षः। असनवृक्षे।

**वीजसंग्रह** पु॰ वीजानां वपनयोग्यधान्यादीनां सञ्चयः संग्रहः सम्+चि-अच्। वपनयोग्यधान्यादिसंग्रहे।

**वीजसू** पु॰ वीजं सूते सू-क्विप्। पृथिव्याम्। [कृष्टे क्षेत्रे।

**वीजाकृत** त्रि॰ वीजेन सह कृष्टम् डाच् कृ-क्त। वीजेन सह

**वीजाम्ल** न॰ वीजेनाम्लमिव। वृक्षाम्ले। [विशिष्टे त्रि॰

**वीजिन्** पु॰ वीजमस्त्यस्य इनि। उत्पादके पितरि। वीज-

**वीज्य** त्रि॰ विशेषेण इज्यः वि+यज-क्यप्। कुलीने।

**वीटि(टी)** स्त्री॰ वि+इट-इन् वा ङीप्। (पानेर वीडा) सज्जिततांबूले। स्वार्थे कन्। तत्रैव।

**वीणा** स्त्री॰ अज-न वीभावः टाप्। स्वनामख्याते वाद्यभेदे। [दण्डे।

**वीणादण्ड** पु॰ ६त॰। वीणावाद्यस्य तालावुपरिस्थे काष्ठ-

**वीणावाद** त्रि॰ वीणां वादयति वद-णिच्-अण्। वीणावादके

**वीत** न॰ वि-इण् क्त। युद्धासमर्थे हस्त्यश्वादिसैन्ये, अङ्कुशकर्मणि न्यायाद्युक्ते अनुमानभेदे च। शान्ते, गते च त्रि॰।

**वीतंस** पु॰ वि-तनु-स-घञ् वा दीर्घः। मृगपक्षिणां बन्धनोपकरणे दामप्रभृतौ, विदामच्छेतुमावरणे च।

**वीतशोक** पु॰ वीतः विगतः शोको यस्मात् यस्य वा। अशोकवृक्षे, शोकहीने त्रि॰। [क्तिच्। घोटके पु॰।

**वीति** स्त्री॰ वी-क्तिन्। गतौ, दीप्तौ, भोजने, याचने च।

**वीतिहोत्र** पु॰ वीतये पुरोडाशादिभक्षणाय हूयन्ते देवा अत्र हु-त्रन्। वह्नौ। [वर्त्मनि, दृश्यकाव्यनाटकाङ्गभेदे च।

**वीथि(थी)** स्त्री॰ विथ-इन् वा ङीप्। पङ्क्तौ, श्रेण्यौ, गृहाङ्गे,

**वीथ्यङ्ग** पु॰ वीथिरङ्गमस्य। दृश्यकाव्यभेदे।

**वीध्र** त्रि॰ वि-इन्ध-रक्। निर्मले। नभसि, वायौ च पु॰।

**वीनाह** पु॰ वि-नह-घञ्। कूपादिमुखबन्धनसाधने (पाट) ख्याते पदार्थे।

**वीप्सा** स्त्री॰ वि+आप-सन्-अच-ईत्-अ अभ्यासलोपश्च। व्याप्तौ

**वीर** अद॰ चु॰ आ॰ अक॰ सेट्। वीरयते अविवीरत्।

**वीभ** शौर्य्यहेतुके उद्यमे विकत्थने च भ्वा॰ अक॰ सेट्। चङि न ह्रस्वः। वीभते अवीभिष्ट।

**वीर** न॰ अज-रक् वीभावः वीर-अच् वा। मरिचे, पद्ममूले, काञ्जिके, उशीरे च। संज्ञायां कन्। करवीरे, वेगवति शौर्य्ययुक्ते च त्रि॰ तन्त्रोक्ते कुलाचारे न॰ तद्वति त्रि॰ स्त्रियां स्त्री॰।

**वीरक** पु॰ वि+ईर-ण्वुल्। करवीरे।

**वीरण** न॰ वि+ईर-ल्यु। उशीरे (वेणारमूल)।

**वीरतर** न॰ वि+ईर-अच् तरप्। वीरणे, शूरतरे त्रि॰।

**वीरतरु** पु॰ वि+ईर-अच् कर्म॰। अर्ज्जुनवृक्षे कोकिलाक्षे, भल्लातके, (भेला) विल्वभेदे च वीरवृक्षादयोऽप्यत्र। [याम्।

**वीरपत्नी** स्त्री॰ वीरः पतिर्यस्याः नुक् ङीप् च। वीरभार्य्या

वीरपत्नी स्त्री० वीरयति वीर-अच् तथाभूतं पत्रं यस्याः । विजयायाम् भङ्गे ।
वीरपान(ण) न० वीराणां पानम् वा णत्वम् । युद्धाय युद्धखेदापनुत्तये वा सुरापानादौ । वीरत्वे न० ।
वीरभद्र पु० वीरो भद्रोऽस्य । अश्वमेधीयेऽश्वे वीरेषु भद्रम् ।
वीररजस् न० वीर इव रजः रक्तत्वात् । सिन्दूरे ।
वीरसू स्त्री० वीरं सूते सू+क्विप् । वीरमातरि ।
वीरसेन पु० वीरा सेना यस्य । नलराजजनके नृपभेदे ।
वीरहन् पु० वीरयति शौर्यमिव करोति वीर-णिच् अच् । वीरो यज्ञाग्निस्तं हतवान् हन-क्विप् । नष्टाग्नौ विप्रे ।
वीरा स्त्री० वि+ईर-अच् वीर+अच् वा । सुरामांसगन्धद्रव्ये, क्षीरकाकोल्याम्, आमलक्याम्, एलवालुकायां, पतिपुत्रवत्यां स्त्रियां, रम्भायां, विदार्याम् दुग्धिकायाम्, क्षीरमेदायां, काकोल्यां, महाशतावर्यां, कदल्यां, अतिविषायां, द्राक्षायाम्, शिंशपावृक्षे च (शिशु) ।
वीराम्ल पु० वीरयति शौर्यमिव करोति वीर णिच्-अच् कर्म० । अम्लवेतसे । [स्ले युद्धस्थले ।
वीराशंसन न० वीरैराशंस्यतेऽत्र आ+शंस ल्युट् । भयवीरासन न० वीरस्येवासनम् । 'एकपादमथैकस्मिन् विन्यस्योरुसुसंस्थितम् इतरस्मिन् तथा पश्चात् वीरासनमितीरितम् इत्युक्ते आसनभेदे । [लतायाम् ।
वीरुध्(धा) स्त्री० वि+रुध-क्विप् दीर्घः वा टाप् । विस्तृतायां वीरेश्वर त्रि०६त०। वीरपतौ। काशीस्थे शिवलिङ्गभेदे पु
वीर्य्य न० वीर यत् वीरस्य भावो यत् वा । देहस्थे चरमधातौ शुक्रे पराक्रमे बले प्रभावे तेजसि, दीप्तौ च । [शुक्रे च
वीर्य्यवत् त्रि० वीर्य्यमस्त्यस्य मतुप् मस्य वः । बलवति, वीर्य्य-
वीवध पु० विशेषेण बध्यतेऽत्र वध घञ् न वृद्धिः । तण्डुलादिसम्पत्ते, मार्गे, भारे च । [वाहके ।
वीवधिक पु० वीवधं भारवहनं शिल्पमस्य ठन् । भार
वीहार पु विह्रियतेऽत्र वि+हृ-घञ् दीर्घः । बुद्धमन्दिरभेदे । भावे घञ् । विहारे ।
वुग योगे भ्वा० पर० सक० सेट् इदित् । वुङ्गति अवुङ्गीत् ।
वुट हिंसायां चुरा०उभ०सक०सेट् । वोटयति ते अवूवुटत् त इदित्वके वुण्टयति ते अवुवुण्टत् त । [अवुबन्धत् त ।
वुध हिंसायां चुरा० उभ०सक०सेट् इदित् । वुन्धयति ते
वुस(श) विभागे, पृथक्करणे च दि०पर०सक सेट् । वुस्य(श्य)ति अवोसी(शी)त । [अवु(बु)व्(बू)षत् त ।
वू(बू)ष हिंसायां चुरा० उभ० सक० सेट् । वू(बू)षयति ते

वृ आवरणे चु०उ०सक०सेट् । वारयति ते अवीवरत् त ।
वृ सेवायां क्र्या० आ०सक०सेट् । वृणीते 'वृणते हि विमृश्यकारिणमिति भारविः । अवरीष्ट अवरिष्ट-अवृत । [रीष्ट अवृत ।
वृ वरणे भ्वा०उभ सक०सेट् । वरति ते अवारीत् अवरिष्ट अव-
वृ वरणे स्वादि० क्र्या० च उभ० सक० सेट् । वृणोति वृणुते वृणाति वृणीते अवारीत् अवरिष्ट अवरीष्ट अवृत ।
वृंहित न० वृहि क्त । करिगर्जने ।
वृक आदाने भ्वा०आत्म०सक सेट् । वर्कते अवर्किष्ट ।
वृक पु० वृक-क । कुक्कुराकारे हरिणघातके व्याघ्रभेदे । काके बकवृक्षे, क्षत्रिये, अनेकद्रव्यजन्ये धूपे, सरलद्रवे उदरस्थे वह्निभेदे च अम्बष्ठायां स्त्री० वा गौरा० ङीष् । वृकस्त्रियां स्त्री ङीष् ।
वृकदंश पु०वृकं दशति दन्श-अच् । कुक्कुरे । [दिगाह्वादौ धूपे
वृकधूप पु० वृक्यते वृक-घञर्थे क कर्म । नानाद्रव्यमिश्रिते
वृकधूर्त्त पु० वृक इव धूर्त्तः । शृगाले । (तेव्योडि) ।
वृकाक्षी पु० वृकस्येवाक्षि पुष्पमस्य षच् समा ङीष् । त्रिवृति
वृकाराति पु० ६त० । कुक्कुरे वृकारिप्रभृतयोऽप्यत्र ।
वृकोदर पु०वृकनामाग्निरुदरे यस्य । यस्य तीक्ष्णो वृको नाम जठरे हव्यवाहनः । मया दत्तः स धर्मात्मा तेन चासौ वृकोदरः' इत्युक्ते भीमे 'अयमुच्चैः वचन वृकोदर इति भारविः
वृक्ण त्रि० ओव्रश्च क्त । छिन्ने ।
वृक्ष वरणे भ्वा आ सक०सेट् । वृक्षते अवृक्षिष्ट । [कुटजवृक्षे
वृक्ष पु० व्रश्च-क्स । व्रश्चनेऽपि जायमाने द्रुमे । ह्रस्वार्थे कन् ।
वृक्षचर पु० वृक्षे चरति चर अच् । वानरे ।
वृक्षच्छाय न० ६त० । बहूनां वृक्षाणां छायायाम् ।
वृक्षधूप पु० वृक्षोऽपि धूप्यन्ते सन्तापयन्तु । सरलद्रवे ।
वृक्षनाथ पु० ६त० । वटवृक्षे ।
वृक्षपाक पु० वृक्षस्य पाक इव जटिलत्वात् । वटवृक्षे ।
वृक्षभवन न०७त० । वृक्षस्थे कोटरे । [वन्दायाम् (परगाछा)।
वृक्षभक्ष्या स्त्री० वृक्षो भक्ष्यो वेष्टकत्वात् भोजनीय इव यस्याः ।
वृक्षभेदिन् पु०वृक्षं भिनत्ति भिद णिनि । वृक्षभेदके अस्त्रभेदे ।
वृक्षरुह् पु० वृक्षस्योपरि भूमौ भवति भू क्विप् । अम्लवेतसे ।
वृक्षरुहा स्त्री०वृक्षे रोहति रुह-क । वन्दायाम्,अमृतस्रवायां च
वृक्षवाटिका स्त्री० वृक्षैर्वाटीव वेष्टितत्वात् स्वार्थे कन् । अमात्यगणिकोपभोग्ये गृहसमीपस्थे उपवने । [अस्त्रे च
वृक्षादन पु०वृक्षमत्ति भिनत्ति अद-ल्यु । कुठारास्त्रे (नेहानि) वृक्षान्तरपङ्क्ति भिनत्ति । अश्वत्थवृक्षे, मधुच्छत्रे, पियाले विदारके च । वन्दायां स्त्री० गौरा० ङीष् ।

वृक्षाम्ल न० वृक्षजातमम्लम् । (तेतुल) वृक्षजाताऽम्लप्रधाने वृक्ष, चुक्राम्ले च ।

वृक्षोत्पल पु० वृक्षमारोप्यमानमुत्पलं येन । कर्णिकारवृक्षे

वृच वृतौ रु०पर०सक०सेट् । वृणक्ति । अवर्चीत् । निष्ठा अनिट् ।

वृज त्यागे अदा०आत्म०सक०सेट् इदित् । वृङ्क्ते अवृङ्क्षिष्ट नेदिष्ट्ययस् । वृक्ते अवर्जिष्ट । निष्ठा अनिट् ।

वृज त्यागे वा चु० उभ०पक्षे भ्वा० पर० सक सेट् । वर्जयति ते वर्जति । अववर्जत्-अवीवृजत् । अवर्ज्जीत् । निष्ठा अनिट्

वृज वृतौ, त्यागे च रु०पर०सक सेट् । वृणक्ति । अवर्ज्जीत् । निष्ठा अनिट् । वृक्त । [कुटिले त्रि० ।

वृजन न० वृज्यतेऽत्र वृज-क्यु । पापे, आकाशे च केशे पु०

वृजिन न० वृज-इनच् किच्च । पापे, भुग्ने त्रि० । देशे पु० ।

वृण प्रीणने, तु०पर०सक०सेट् । वृणति अवर्णीत् ।

वृणु भक्षणे तना०उभ०सक०सेट् । वृणोति वर्णोति वृणुते अवर्णीत् अवर्णिष्ट । क्त्वा वेट् । [अववर्त्तत् त ।

वृत दीप्तौ चु०उ०सक० सेट् । वर्त्तयति ते अवीवृतत् त

वृत वर्त्तने भ्वा० आ० लुङि लृटि लृङि च उभ०अक०सेट् । वर्त्तते । अवृतत् अवर्त्तिष्ट वर्त्स्यति वर्त्तिष्यते । क्त्वा वेट् ।

वृत संभक्तौ,वरणे च दि०आ०स०सेट् । वृत्यते अवर्त्तिष्ट । क्त्वा वेट्

वृत त्रि० वृ-क्त । प्रार्थिते, कर्मार्थप्रार्थनादिना कृतनियोगे च ।

वृति स्त्री० वृ-क्तिन् । वेष्टने (वेडा) 'वृतिश्च तत्र कुर्वीते'तिस्मृ०

वृतिङ्कर पु० वृतिङ्करोति कृ-खच् । विकङ्कते (वइँचि) ।

वृत्त न० वृत-भावे क्त । 'गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः प्रवर्त्तनं हितानाञ्च तत्सर्व्वं वृत्तमुच्यते' इत्युक्ते चरित्रे, पद्यभेदे,वृत्तौ च । वृत-कर्त्तरि क्त । अतीते दृढे, वर्त्तुले अधीते मृते जाते च त्रि० कूर्म्मे पु० ।

वृत्तगन्धि न० वृत्तस्य पद्यभेदस्य इव गन्धो लेशोऽत्र इत् समा० । 'भवत्युत्कालिकाप्रायं समासाढ्यं दृढाक्षरम् । वृत्तैकदेशसम्बन्धात् वृत्तगन्धि पुनः स्मृत'मित्युक्ते गद्यभेदे ।

वृत्ततण्डुल पु० वृत्तो वर्त्तुलस्तण्डुलोऽस्य । यावनाले । [व्याम्

वृत्तनिष्पाविका स्त्री० वृत्ता वर्त्तुला निष्पाविका । नखनिष्पा

वृत्तपर्णी स्त्री० वृत्तानि पर्णान्यस्याः ङीप् । महाशणपुष्पिकायाम्, पाठायाञ्च (आकनादि) ।

वृत्तपुष्प पु० वृत्तानि वर्त्तुलानि पुष्पाण्यस्य । शिरीषवृक्षे ।

वृत्तफल न० वृत्तं फलमस्य । मरीचे,दाडिमे, वदरे च । वार्त्ताक्याम्, आमलक्याञ्च स्त्री०टाप् ।

वृत्तमल्लिका स्त्री० वृत्ता मल्लिकेव । श्वेतार्के ।

वृत्तबीज पु०वृत्तानि बीजान्यस्य । शिम्बायाम् । आढक्याम् स्त्री०

वृत्तस्थ पु० त्रि० वृत्ते गुरुपूजादौ चरित्रे तिष्ठति स्था क । गुरुपूजादिचरित्ररते । [मुद्गे च

वृत्तान्त पु० वृत्तो जातोऽन्तोनिर्णयो यस्मात् । संवादे,वार्त्ते

वृत्ति स्त्री० वृत-क्तिन् । वर्त्तने, स्थितौ, विवरणे च करणे क्तिन् जीविकायाम् । कौशिक्यादिभारत्यारभट्यात्मसु रचनाभेदे,वेदान्तोक्ते अन्तःकरणादेः परिणामभेदे च । 'बुद्धितत्स्थचिदाभासावि'ति 'ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरि'ति च वे०

वृत्तिकर्षित त्रि०वृत्त्या कर्षित । विषमस्थे,अल्पमात्रवृत्तिके च

वृत्र पु० वृत-रक् । अन्धकारे, रिपौ, त्वष्टृपुत्रे दानवभेदे, मेघे, पर्व्वतभेदे, मन्त्रे, शब्दे च ।

वृत्रद्विष् पु० ६त० । इन्द्रे । वृत्रारिप्रादयोऽप्यत्र ।

वृत्रहन् पु० वृत्रं हतवान् हन-क्विप् । इन्द्रे ।

वृथा अव्य० वृ-थाल् किच्च । निरर्थके ।

वृथादान न० कर्म० । निष्फलदाने स्मृतिप्रदर्शिते देवपित्रादार्थभिन्ने कार्य्य-दानभेदे । [मांसे ।

वृथामांस न० वृथा भूतं मांसम् । देवाद्युद्देशेन हतपश्वन्य

वृद्ध न० वृध-क्त । शैलजनामगन्धद्रव्ये । वृद्धदारके वृक्षे पु० । वृद्धियुक्ते, पण्डिते च त्रि० ।

वृद्धकाक पु० कर्म० । द्रोणकाके ।

वृद्धगङ्गा स्त्री० कर्म० । नदीभेदे ।

वृद्धदारक पु० वृद्धं दारयति दृ-णिच्-ण्वुल् । वीरतादवृक्षे ।

वृद्धफल पु० वृद्धं फलमस्य । वृद्धदारके वृक्षे ।

वृद्धनाभि त्रि० वृद्धा नाभिरस्य । (गोड) वृहन्नाभियुक्ते ।

वृद्धप्रपितामह पु० वृद्धः प्रपितामहात् राज० । प्रपितामह जनके । [पितरि ।

वृद्धप्रमातामह पु० वृद्धः प्रमातामहात् राज० । प्रमातामहस्य

वृद्धबला स्त्री०कर्म० । महासमङ्गायाम् वृद्धबलकरत्वात्तथात्वम् ।

वृद्धराज पु० वृद्धेषु राजते राज-अच् । अम्लवेतसे ।

वृद्धविभीतक पु० वृद्धः विभीतक इव । आम्रातके ।

वृद्धश्रवस् पु० वृद्धेभ्यः शृणोति श्रु-असुन्, वृद्धेषु श्रवो यशो यस्येति वा । इन्द्रे ।

वृद्धा स्त्री० वृध-क्त । गतयौवनायां स्त्रियाम् ।

वृद्धि स्त्री० वृध-क्तिन् । समृद्धौ अभ्युदये, सम्पत्तौ,समूहे च । वृध-कर्त्तरि क्तिच् । औषधिविशेषे, कलान्तरे, (सुद) 'वृद्धेरपि पुनर्वृद्धिरि'तिस्मृतिः । शैलेयगन्धद्रव्ये पु० ।

वृद्धिका स्त्री० वृद्धि+स्वार्थे कन् । वृद्धिनामकौषधे ।

वृद्धिजीविका स्त्री० वृद्धिरूपा जीविका । ऋणदानादिषु प्रयुक्तधनेभ्यो लाभरूपजीविकायाम् ।

वृद्धिश्राद्ध न० वृद्ध्यै अभ्युदयाय श्राद्धम् । पुत्रादीनां संस्काराङ्गे पार्वणविधिके नान्दीश्राद्धे ।

वृद्धाजीव त्रि० वृद्धिम् अधमर्णात् प्रयुक्तद्रव्याधिकलाभमाजीवति आ+जीव अण् । वार्द्धुषिके । [अववर्द्धत त ।

वृध दीप्तौ चु० उभ० अक० सेट् । वर्द्धयति ते अवीवृधत् त

वृध वृद्धौ भ्वा० आत्म० लुङि लृटि लृङि च उभ० अक० इतात्सेट् । वर्द्धते अवृधत् अवर्द्धिष्ट वत्स्यति वर्द्धिष्यते । क्त्वा वेट् ।

वृन्त न० वृ क्त नि० मुम् च । (बोंटा) फलपत्रादिबन्धने ।

वृन्ताक पुंस्त्री वृन्तमकति अक अण् । वार्त्ताकौ स्त्रीत्वे गौ० ङीष् ।

वृन्तिता स्त्री० वृन्तं जातमस्याः तार० इतच् । कटुकायाम् ।

वृन्द न० व्रियते वृणुते वा वृञ्-दन् वा वृन् नि० । समूहे दशार्बुदसंख्यायाञ्च, तुलस्याः, राधिकायाः स्त्री० ।

वृन्दार त्रि० वृन्दमृच्छति ऋ अण् । मनोहरे ।

वृन्दारक पु० वृन्द+आरक कन् । देवे । मुख्ये मनोहरे च त्रि० ।

वृन्दावन क्ली० वृन्दायाः विहारस्थानम् वनम् । मथुरासन्निकृष्टे वैष्णवे तीर्थभेदे । 'वृन्दावनं परित्यज्य पादमेकं न गच्छती'ति पुराणम् ।

वृन्दिष्ठ त्रि० अतिशयेन वृन्दारको मुख्य इष्ठन् वृन्दादेशः । अतिशयमुख्ये 'वृन्दिष्ठमार्गीत् वहुभाषिभाषाणामिति भट्टि ईयसुन् वृन्दीयानप्यत्र त्रि० स्त्रियां ङीप् ।

वृश वरणे दिवा पर० सक० सेट् । वृश्यति अवृशत् अवर्शीत् पुषादित्वमित्येके तेन अवृशदित्येव ।

वृश पु० वृश-क । वासकवृक्षे, उन्दुरे च ओषधिभेदे स्त्री० ।

वृश्चिक पु व्रश्च किकन् । (विछा) कीटभेदे, शूककीटे, (शुयापोका) मेषादितः अष्टमे राशौ, ओषधिभेदे, मदनवृक्षे, कर्कटे, गोमयकीटे च ।

वृश्चिकप्रिया स्त्री० वृश्चिकस्य शूककीटस्य प्रिया । पूतिकायाम्

वृश्चिककर्णी स्त्री वृश्चिक इव कर्णो यस्याः । आखुकर्ण्याम् ।

वृश्चिका स्त्री वृश्चिक तदिवमत्यस्य अच् । (विछाती) क्षुपभेदे

वृश्चिकाली स्त्री० वृश्चिकं इवालति पर्याप्नोति वेदनाये अच् गौरा ङीष् । (विछाती) क्षुपभेदे ।

वृश्चिपत्त्री स्त्री वृश्चिक इव पत्रं विपाकमस्य ष्ट कलोपः ङीप् । वृश्चिकाल्याम् ।

वृश्चीर पु व्रश्च ईरन् । श्वेतपुनर्नवायाम् ।

वृष सेचने भ्वा० पर० प्रजननसामर्थ्ये अक० सेट् । वर्षति अवर्षीत् । क्त्वा सेट् । [अववर्षत ।

वृष प्रजननसामर्थ्ये चुरा० आत्म० अक० सेट् । वर्षयते अवीवृषत

वृष पु० वृष क । वृषभे पुङ्गवे, मेषादितो द्वितीये राशौ, पुरुषभेदे, एकादशमनुकालिके इन्द्रे, धर्मे, शृङ्गिमाले, मूषिके शुक्रयुक्ते, वासकवृक्षे, वास्तुस्थानभेदे शत्रौ, कामे, बलयुक्ते ऋषभनामौषधे, मयूरपिच्छे च ।

वृषण पु वृष-क्यु । अण्डकोषे ।

वृषदंशक पु वृषान् मूषिकान् दशति दन्श-ण्वुल् । विड़ाले

वृषध्वज पु० वृषो ध्वजो यस्य । शिवे वृषकेतनादयोऽप्यत्र ।

वृषध्वाङ्क्षी स्त्री० वृषो बलवान् ध्वाङ्क्षः काको यस्याः प्र० । गौरा ङीष् । नागरमुस्तायाम् ।

वृषन् पु० वृष कनिन् । इन्द्रे, कर्णे, वृषे, अश्वे तु खे च ।

वृषनाशन पु वृषान् मूषिकान् नाशयति नश-णिच्+ल्यु । विड़ाले । [काणी) आखुकर्ण्याम् ।

वृषपर्णी स्त्री वृषस्य मूषिकस्य कर्ण इव पर्णमस्याः । (उन्दुर

वृषपर्वन् पु वृषे पर्व उत्सवो यस्य । शिवे, दैत्यभेदे च । वृष बलकरं पर्व यस्य । भृङ्गारवृक्षे कसेरौ च ।

वृषभ पु० वृष-अभच् किच्च । वृषे, श्रेष्ठे, जिनभेदे, कर्णच्छिद्रे ऋषभनामौषधे च ।

वृषभगति पु० वृषभेण गतिरस्य । शिवे वृषभयानादयोऽप्यत्र ।

वृषभध्वज पु० वृषभो ध्वजोऽस्य । शिवे वृषभकेतनादयोऽप्यत्र ।

वृषभाक्षी स्त्री० वृषभस्य अक्षीव पुष्पमस्याः । इन्द्रवारुण्याम्

वृषभानु पु । राधिकायाः पितरि ।

वृषभानुसुता स्त्री० ६त० । राधिकायाम् । [मूषे क्षये च

वृषल पु० वृष-कलच् । शूद्रे, लशुने घोटके अधार्मिके चन्द्र-

वृषली स्त्री पितृगेहे च नारी रजः पश्यत्यसंस्कृता । भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृते'त्युक्तायां पितृगृहे दृष्टरजस्कायामनूढायां कन्यायाम् । वृषल+भार्य्यायां जातौ वा ङीप् । वृषलजातिस्त्रियां, तद्भार्य्यायाञ्च, 'मद्यपा वृषलीपतिः' रिति 'वृषलीफेनपीतस्ये'ति च स्मृतिः ।

वृषलोचन पु० वृषस्येव लोचनं यस्य । मूषिके । ६त० । वृषनेत्रे न । ६त० । वृषस्य नेत्रे त्रि ।

वृषवाहन पु वृषो वाहनमस्य । शिवे वृषभवाहनादयोऽप्यत्र

वृषस्यन्ती स्त्री वृषेण आत्मनमिच्छति वृष+लालसार्थे क्यच् सुक् च । कामुक्याम् 'अस्थास वा वृषस्यन्ती'ति भट्टि ।

वृषा स्त्री० वृष मूषिकमिवाकारं पर्णमस्याः । मूषिकपर्ण्याम् ।

वृषाकपायी स्त्री० वृषाकपेः पत्नी ङीप् ऐङ् च । लक्ष्म्यां गौर्याम्, स्वाहायां शच्यां, जीवन्त्याञ्च ।

वृषाकपि पु वृषं धर्मं न कम्पयति न+कपि इन् नलोपः । महादेवे, विष्णौ वह्नौ, इन्द्रे च ।

वृषाकर पु वृषस्य सामर्थ्यस्य करं कृ-अच् । माषे ।

वृषाङ्क पु॰वृषः अङ्कोऽस्य । शिवे, भल्लातके, षण्डे च
वृषि(षी) स्त्री॰वृष-कि वा ङीप् । व्रतिनां कुशमयासनभेदे ।
वृषोत्सर्ग पु॰ उत्+सृज-घञ् ६त॰। मृताद्युद्देशेन तत्पुत्रादिभिः क्रियमाणे विधानेन वृषस्य त्यागे 'वृषोत्सर्गश्च कर्त्तव्य' इति स्मृतिः । [वृष्यमाणे जले ।
वृष्टि स्त्री॰ वृष-क्तिन् । वर्षणे । कर्मणि क्तिन् । मेघादिभिः
वृष्टिघ्नी स्त्री॰ वृष्टिं हन्ति कारणत्वेन जहाति हन-क ङीप् । सूक्ष्मैलायाम् ।
वृष्टिजीवन त्रि॰वृष्टेः वृष्टिजलमेव जीवनं पालनोपायो यस्य । वृष्टिजलमात्राजीविनि चातके । [वृष्टिभवे त्रि॰ ।
वृष्टिभू पु॰ वृष्टौ तदुपलक्षिते काले भवति भू-क्विप् । भेके ।
वृष्णि पु॰ वृष-नि किच्च । यादवे वंशे, श्रीकृष्णे, मेषे च ।
वृष्णिगर्भ पु॰ वृष्णिः यादवकुलं गर्भो यस्य । श्रीकृष्णे ।
वृष्य पु॰ वृषाय हितो यत्, वृष-क्यप् वा । माषे । शुक्रवृद्धिकारके त्रि॰ वाजीकरणे न॰ आमलक्यां शतावर्य्यां, ऋषभनामौषधे च स्त्री॰ ।
वृष्यकन्दा स्त्री॰ वृष्य' शुक्रवर्द्धकः कन्दो यस्याः।विदार्य्याम् ।
वृष्यगन्धिका स्त्री॰ वृष्यः शुक्रवर्द्धको गन्धो यस्याः कप् अत इत्त्वम् । अतिबलायाम् ।
वृष्यवल्ली स्त्री॰कर्म॰ । विदार्य्याम् । कन् अत इत्त्वम् ।तत्रैव ।
वृह दीप्तौ वा चु॰उभ॰ सक॰ पक्षे भ्वा॰ पर॰ इदित् । वृंहयति ते अववृंहत् त । वृंहति अवृंहीत् ।
वृह वृद्धौ शब्दे च अक॰भ्वा॰पर॰सेट् ।वर्हति अवृहत् अवर्हीत्
वृह ध्वनौ वृद्धौ च भ्वा॰प॰सक॰सेट् इदित् । वृंहति अवृंहीत्
वृह वृद्धौ भ्वा॰पर॰सक॰सेट् । वर्हति अवर्हीत् ।
वृह उद्यमे तु॰ पर॰अक॰वेट् । वृहति । अवर्हीत्-अवृक्षत् ।
वृह वृद्धौ भ्वा॰ आत्म॰सक॰ सेट् इदित् । वृंहते अवृंहिष्ट
वृहच्चञ्चु पु॰ वृहती चञ्चुरिव मञ्जरी यस्य । महाचञ्चुशाके ।
वृहच्चित्त पु॰ वृहत् उदारं वित्तं यस्मात् ५ब॰ । फलपूरे
वृहत् त्रि॰ तु॰ वृह-अति । महति । स्त्रियां ङीप् ।
वृहती स्त्री॰वृहत्+गौ॰ङीष्। महत्यां स्त्रियां,क्षुद्रवार्त्ताकाम्। वारिधान्यां, वाचि, कण्टकारिकायाम्, नवाक्षरपादके छन्दोभेदे,उत्तरीयवस्त्रे च। स्वार्थे कन् । उत्तरीयवस्त्रे स्त्री॰
वृहतीपति पु॰ वृहतीनां वाचां पतिः वृहस्पतौ ।
वृहत्कन्द पु॰ वृहत् कन्दो यस्य । गृञ्जने, विष्णुकन्दे च ।
वृहत्कान्द पु॰ कर्म॰ । (खागडा) तृणभेदे ।
वृहत्कालशाक पु॰ कर्म॰ । (वड़ कालकासुन्दे) शाकभेदे ।
वृहत्कुक्षि पु॰ वृहत् कुक्षिर्यस्य । तुन्दिले ।
वृहत्ताल पु॰ कर्म॰। हिन्ताले ।
वृहत्तिक्ता स्त्री॰ कर्म॰ । पाठायाम् (आकनादि) ।
वृहत्तृण पु॰ वृहत्तृणं यत्र । वंशे ।
वृहत्त्वच् पु॰ वृहती त्वक् यस्य । (छातियान) वृक्षे ।
वृहत्पत्र पु॰ वृहत् पत्रमस्य । हस्तिकन्दे । (हातिकान्दा)
वृहत्पाटलि पु॰ पु॰ पट-अलि कर्म॰। धुस्तूरवृक्षे ।
वृहत्पाद पु॰ वृहत् पादो मूलमस्य । वटवृक्षे ।
वृहत्पालिन् पु॰ वृहतः पालयति पाल-णिनि । वनजीरके
वृहत्पीलु पु॰कर्म॰ । महापीलौ ।
वृहत्फला स्त्री॰ वृहत् फलं यस्या' । कटुतुम्ब्याम् ।
वृहत्साम न॰ कर्म॰ । 'त्वामिद्धि हवामहे' इत्यस्यामृचि गीयमाने साम्नि ।
वृहदम्ल पु॰कर्म॰ । (कामराङ्गा) वृक्षे ।
वृहदेला स्त्री॰कर्म॰ । स्थूलैलायाम् ।
वृहद्गोल न॰कर्म॰ । (तरमुज) लतावृक्षे ।
वृहद्दल न॰ वृहत् दलमस्य । पट्टिकालोध्रे, हिन्ताले च ।
वृहद्धुल न॰कर्म॰। महालाङ्गले ।
वृहद्भानु पु॰ वृहद्भानुः किरणो यस्य । सूर्य्ये, चित्रकवृक्षे च
वृहद्रथ पु॰वृहत् रथोऽस्य। इन्द्रे,यज्ञपात्रभेदे,मागधनृपभेदे च
वृहद्वल्क पु॰ वृहत् वल्कमस्य। पट्टिकालोध्रे ।
वृहद्वात पु॰वृहत् वातो धातुभेदो यस्मात् ५ब॰। (देधान) वृक्षे
वृहद्वारुणी स्त्री॰कर्म॰ । महेन्द्रवारुण्याम् ।
वृहद्बीज पु॰ वृहत् बीजमस्य । आम्रातके ।
वृहन्नल पु॰ वृहत् नलो यस्य । महापोटगले ।
वृहन्नला(डा) पु॰स्त्री॰वृहत् नलो यस्य वा लस्य ड॰ । अर्ज्जुने
वृहस्पति पु॰वृहत्या' वाच॰ पति॰ पृ॰नि॰। जीवे देवाचार्य्ये
वॄ वरणे क्र्या॰भा॰उभ॰सक॰सेट् । वृणाति वृणीते अवारीत् अवरिष्ट-अवरीष्ट-अवूर्ष्ट । [अवासत
वे स्यूतौ भ्वा॰उभ॰यजा॰सक॰अनिट् । वयति ते अवासीत्
वेग पु॰ विज-घञ् । प्रवाहे, जवे,रेतसि, मूत्रविष्ठादिनिःसारणयत्ने,न्यायोक्ते संस्कारभेदे, महाकाले च। [ङीप्
वेगिन् पु॰वेग+अस्त्यर्थे इनि। श्येनविहगे,वेगवति त्रि॰। स्त्रियां
वेजाना स्त्री॰ विज-अच् तमानयति आ-नी-ड । सोमराज्याम्
वेण वाद्यादाने, गतौ,ज्ञाने चिन्तायाञ्च भ्वा॰उभ॰सक॰सेट् । वेणति ते । अवेणीत् अवेणिष्ट। घटि न ह्रस्वः ।
वेण पु॰ वेण-अच् । वर्णसङ्करजातिभेदे, वर्णसङ्करकारके पृथुराजपितरि नृपभेदे च ।
वेणि(णी) स्त्री॰ वेण-इन् वा ङीप् । केशरचनाभेदे, जल-

वेधस् पु० वि+धा-असुन् गुणः। हिरण्यगर्भे जगत्स्रष्टरि, विष्णौ, सूर्ये, श्वेतार्कवृक्षे, पण्डिते च।
वेधित पु० वेधोजातोऽस्य तार० इतच्। विद्धे छिद्रिते।
वेधिनी स्त्री० विध-णिनि। जलौकायाम् (जोंक)
वेन्ना स्त्री० वन-ध पृ०। नदीभेदे। [ह्रस्वः।
वेप कम्पने भ्वा०आ० अक० सेट्। वेपते अवेपिष्ट। चङि न
वेपथु पु० वेप-अथुच्। वस्त्रे।
वेपन पु० वेप-ल्युट्। कम्पने। [पु०न०।
वेम पु० वे-मन् न आत्वम्। वापदण्डे। मनिन्। अत्रैवार्थे
वेर न०अज-रन् वीभावः। देहे,वार्त्ताकौ,कुङ्कुमे च। संज्ञायां कन्। कर्पूरे। [ह्रस्व'
वेल चालने भ्वा०प०सक० सेट्। वेलति अवेलीत्। चङि न
वेल कालोपदेशे, अ०चु०उ०अक०सेट्। वेलयति ते अविवेलत् त
वेल न०वेल-अच्। उपवने। काले समये, मर्यादायां समुद्रकूले च स्त्री० 'वेलासले विभावरी परिक्षीणे'ति भट्टिः।
वेल्ल चालने भ्वा०पर०सक०सेट् चङि न ह्रस्वः। वेल्लति अवेल्लीत्
वेल्ल पु०न० वेल्ल-अच्। विडङ्गे। घञ्। चलने पु०।
वेल्लज पु०वेल्ल-अच्-तथाभूत' सन् जायते जन-ड। मरिचे।
वेल्लन न० वेल्ल-ल्युट्। अश्वादेर्भूमौ लुण्ठने काष्ठनिर्म्मिते पदार्थे (वेलुन) च मालादूर्व्वायां स्त्री० ङीप्। [च त्रि०
वेल्लित न०वेल्ल-भावे क्त। गमने। कर्त्तरि-क्त। कम्पिते, कुटिले
वेल्लि(ल्ली) स्त्री० वेल्ल-इन् वा ङीप्। लतायाम्। संज्ञायां कन्। (वेलमुठ) वृक्षे।
वेवी कान्तौ गतौ व्याप्तौ क्षेपे भोजने च सक० प्रजनने अक० अदा०आत्म०सेट् जक्षादि० वैदिक एवायम्। वेवीते अवेविष्ट
वेश पु० विश-घञ्। अलङ्कारादिना कृतरूपान्तरे, नेपथ्यकर्म्मणि, वेश्यागृहे, गृहमात्रे, प्रवेशे च।
वेशधारिन् पु० वेशं धरति धृ० ष्ट-णिनि। छलेन रूपान्तरधारिणि, छद्मतपस्विप्रभृतौ।
वेशन्त पु० विश-झच्। क्षुद्रसरोवरे, अग्नौ च।
वेशर पु० वेशं राति रा-क। अश्वतरे।
वेश्मन् न० विश-मनिन्। गृहे।
वेश्मभू स्त्री० ६त०। गृहकरणयोग्ये स्थाने।
वेश्य न० विश-ण्यत् वेशाय हितं वा यत्। वेश्यालये पाठायाम् (आकनादि) वारयोषिति च स्त्री०। [वेश्याजनालये च
वेष पु० विष-अच् घञ् वा। भूषणादिना रूपान्तरकरणे,
वेषण पु०विष-ल्युट्। कासमर्द्दे (कालकासुन्दे)(धन्या) वृक्षे च
वेष्ट वेष्टने भ्वा०आत्म०सक०सेट्। वेष्टते अवेष्टिष्ट।

वेष्ट पु० वेष्ट-घञ् अच् वा। वेष्टने, श्रीवेष्टे, वृक्षनिर्य्यासे च।
वेष्टक न०वेष्ट-ण्वुल्। (पागडी) उष्णीषे। कुष्माण्डे,प्राचीरे च पु०
वेष्टन न० वेष्ट-ल्युट्। कर्णशष्कुल्याम्, उष्णीषे, मुकुटे च।
वेष्टवंश पु० वेष्ट-अच् कर्म०। (वेडवाश) वंशभेदे।
वेष्टसार पु० वेष्टस्य सार'। श्रीवेष्टे।
वेष्टित त्रि० वेष्ट-क्त। प्राचीरादिना आवृते, रुद्धे च।
वेस गतौ भ्वा०प०सक सेट् चङि न ह्रस्व'। वेसति अवेसीत्।
वेसन न० वेस-ल्युट्। द्विदले, 'टालयशणकानान्त निस्तुषा यन्त्रपेषितम्। तच्चूर्णं वेसनमि'त्युक्ते चणकादिद्विदलचूर्णे च
वेसर पु० वेस-अरन्। अश्वतरे। [सर्षपादौ
वेसवार पु० वेसं वारयति वृ-अच्। (वाटना) पिष्टधन्याक-
वेह यत्ने भ्वा०आ०अक०सेट् चङि न ह्रस्वः। वेहते अवेहिष्ट।
वेहत् स्त्री० वि++हन अति नलोपः। गर्भोपघातिन्यां स्त्रियाम्।
वेहार पु० वि+हृ-घञ् पृ०। स्वनामख्याते देशभेदे। [ह्रस्वः
वेह्ल गतौ भ्वा०पर०सक० सेट्। वेह्लति अवेह्लीत् चङि न
वै शोषे भ्वा० प०सक०सेट् अनिट्। वायति अवासीत्। निष्ठातस्य नः। वानः निर्वाण'। [श्विनि त्रि०।
वै अव्य० वा-डै। पादपूरणे,अनुनये,संबोधने च। [तत्सम्ब-
वैकक्ष न० विशेषेण कक्षति व्याप्नोति अण्। तिर्य्यक्कक्षावलम्बिनि हारभेदे। वुन्। उरसि उपवीताकारेण धृते माल्यभेदे। [विकङ्कतसम्बन्धिनि त्रि०
वैकङ्कत पु०विकङ्कत+स्वार्थेऽण्। (वैचि) वृक्षभेदे। तस्येदमण्।
वैकल्पिक त्रि० विकल्पेन प्राप्तः भवो वा ठक्। पक्षप्राप्ते।
वैकल्य न० विकलस्य भाव' ष्यञ्। विकलत्वे।
वैकुण्ठ पु० विकुण्ठे भव० अण् विविधा कुण्ठा माया यस्य स्वार्थेऽण् वा। विष्णौ, गरुडे, इन्द्रे, सिताब्र्जके च।
वैकृत न० विकृतस्य भावः अण्। विकारे।
वैखरी स्त्री० विशेषेण खं राति रा-क स्वार्थेऽण्। अर्थबोधके कण्ठस्थानादिषु उच्चार्य्यमाणे वर्णात्मके शब्दविशेषे।
वैखानस पु०वि+खन-ड अन-असु कर्म० स्वार्थेऽण्। वानप्रस्थे तापसभेदे 'वैखानसेभ्यः स्तुतरामवार्त्ता' इति भट्टि।
वैगुण्य न० विगतो विरुद्धो वा गुणोऽस्य तस्य भावः ष्यञ्। यत्र यदुचितं तस्यरूपान्तरतापादने, अ यायत्वे, असम्पन्नत्वे च
वैचित्र्य न०विचित्रस्य भाव' ष्यञ्। नानारूपत्वे विलक्षणत्वे।
वैजयन्त पु० विजयते वि+जि-झ स्वार्थेऽण्। इन्द्रप्रासादे, अग्निमन्थवृक्षे, दानवभेदे च पताकायां, जयन्तीवृक्षे च स्त्री० ङीप्।

**वैजिक** न० बीजेन निर्वृत्त ठक्। शिग्रुतैले। बीजाय हितम् ठक्। आत्मनि। स्वार्थे ठक्। कारणे। तस्येद ठञ्। बीजसम्बन्धिनि त्रि०।

**वैज्ञानिक** पु० विज्ञानाय साधु ठक्। निपुणे विज्ञानमधिकृत्य कृतो ग्रन्थ ठक्। बौद्धागमे। तदध्येतरि, तत्सम्बन्धिनि च त्रि०

**वैडालव्रत** न० बिडालस्येदम् अण् तदिव व्रतम्। 'यस्य धर्मध्वजो नित्य शक्रध्वज इवोच्छ्रित। प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतमि'त्युक्त प्रकारेण धर्माचरणेन शुभपापाचारे।

**वैडालव्रतिक** पु० वैडालव्रतमस्त्यस्य ठन्। छलेन धर्मचारिणि छद्मतापसे। इनि। वैडालव्रतीत्यप्यत्र।

**वैणव** न० वेणूना फलम् अण्, तस्य च लुप्। वेणुफले। वेणुसम्बन्धिनि त्रि०। [स्त्यस्य ठन्। वंशीवादके

**वैणविक** त्रि० वेणोर्विकार अण् वैणव वेणुवाद्य शिल्पम-

**वैणिक** त्रि० वीणा तद्वादन शिल्पमस्य ठक्। वीणावादके।

**वैणुक** न० वेणोर्विकार ठक्। गजचालनार्थे लौहदण्डे गजदण्डे। वेणुतद्वादन शिल्पमस्य ठक्। वाणुवादके त्रि०

**वैण्य(न्य)** पु० वेण,गोत्रापत्यम् यञ्। वेणसुते पृथुनामके नृपभेदे

**वैतसिक** त्रि० वितसेन मृगपक्ष्यादिबन्धनोपायेन चरति ठक्। मांसविक्रयोपजीवके व्याधे। [भक्ष्यादौ।

**वैतनिक** त्रि० वेतनेन जीवति ठक्। वेतनोपजीवके कर्मकरे

**वैतरणी(णि)** स्त्री० वितरणेन दानेन लङ्घ्यते अण् ङीप् वा ह्रस्व। यमद्वारस्थे नदीभेदे, 'यमद्वारे महाघोरे तप्ता वैतरणी नदी'ति पुराणम्।

**वैतस** पु० वेतस एव स्वार्थेऽण्। अम्लवेतसे।

**वैतानिक** पु० वितानमर्हति ठक्। श्रौतविधिनाऽग्निस्थापने 'शाखादूरमपीष स्यात् 'यस्य वैतानिको विधिरि'ति स्मृति

**वैतालिक** त्रि० विविधमालं मङ्गलगीतादिमस्त्यनेन व्यवहरति ठक्। मङ्गलस्तुत्यादिभि राज्ञा प्रबोधकारके मागधादौ।

**वैतालीय** पु० मात्रावृत्तभेदे।

**वैदग्ध** न०स्त्री० विदग्धस्य चतुरस्य भाव अण् स्त्रीत्वपक्षे ङीप्। चातुर्ये, भङ्गी च। ष्यञ्। वैदग्ध्यमप्यत्र न०।

**वैदर्भ** पु० विदर्भाणां जनपदाना राजा अण्। विदर्भदेशाधिपे। वाक्यस्य कौटिल्ये न०। 'असमस्तपदन्यासा वैदर्भी रीतिरुच्यते' इत्युक्ते काव्यरचनाभेदे स्त्री ङीप्। विदर्भे भवा अण्। नलराजपत्न्या दमयन्त्याम् स्त्री० ङीप्।

**वैदल** न० विदलस्य विकार अण्। भिक्षुकस्य भिक्षापात्रभेदे। पिष्टकभेदे पु०।

**वैदिक** पु० वेद वेत्त्यधीते वा ठञ्। वेदज्ञे ब्राह्मणे वेदेषु विहित ठञ्। वेदोक्ते त्रि०। स्त्रियां ङीप् 'वैदिकी तान्त्रिकी सन्ध्या यथानुक्रमयोगत' इति तन्त्रम्।

**वैदुष्य** न० विदुषो भाव विद्वस्+ष्यञ्। पाण्डित्ये।

**वैदूर्य्य** न० विदूरे भव ष्यञ्। कृष्णपीतवर्णे विडालनेत्रतुल्ये मणिभेदे।

**वैदेह** पु० विशेषेण देह उपचयो यस्य स्वार्थे प्रज्ञाद्यण्। वणिग्जने। विदेहे भव अण् तत कन्। वणिग्जने शूद्रात् वैश्याजाते जातिभेदे च। ठक्। वैदेहिकोऽपि। वणिजि। विदेहाना राजा अण्। विदेहराजे जनके नृपे।

**वैदेही** स्त्री विदेहेषु मिथिलादेशेषु भवा अण्। सीतायाम् जनकात्मजायाम्, हरिद्रायाम् पिप्पल्या, वणिक् स्त्रियाञ्च

**वैद्य** पु० विद्याऽस्त्यस्य अण्। पण्डिते 'नाविद्यानान्तु वैद्येने'ति स्मृति भिषजि, वृष्यकारके-वासकवृक्षे च।

**वैद्यक** न० वैद्य चिकित्सकमधिकृत्य कृतो ग्रन्थ कन्। आयुर्वेदे

**वैद्यबन्धु** पु० ६त०। आरग्वधवृक्षे।

**वैद्यमातृ** स्त्री० वैद्यस्य मातेव। वासके तस्य वैद्यमौषिकाङ्ग रोगशान्तिकरत्वेन तत्पोषकत्वात् तन्मातृतुल्यत्वम्।

**वैद्यसिंही** स्त्री० वैद्यस्य सिंहीव। वासकवृक्षे।

**वैद्या** स्त्री० वैद्यस्येय प्रियत्वात् अण्। काकोल्याम्।

**वैध** त्रि० विधित आगत अण्। विधिप्रतिपाद्ये।

**वैधात** पु० विधातुरपत्यम् अण्। सनत्कुमारादौ मुनिभेदे।

**वैधृति** पु० विगता धृति यस्मात् ८ ब० । विष्कम्भादिषु मध्ये अन्तिमे योगे।

**वैधेय** त्रि० विधीयतेऽसौ वि+धा यत् तत स्वार्थे अण्। मूर्खे

**वैधर्म्य** न० विरुद्धो धर्मो यस्य तस्य भाव ष्यञ्। विरुद्धधर्मत्वे अन्यायपथे च। [वैद्यमपि ति कुमार।

**वैधव्य** न० विधवाया भाव ष्यञ्। पतिविरहे नववैधव्यमसह्य-

**वैनतेय** पु० विनताया अपत्य ढक्। गरुडे अरुणे च।

**वैनयिक** त्रि० विनये रत ठक्। शास्त्राभ्यासादिना विनयरते

**वैनायिक** पु० विनाय खण्डनमधिकृत्य कृतो ग्रन्थ ठक्। बौद्धागमे। उपचारात् तदभिज्ञे त्रि०।

**वैनाशिक** पु० विनाशमधिकृत्य कृतो ग्रन्थ ठक्। सर्वेषा क्षणभङ्गुरत्वप्रतिपादके बौद्धागमे तदभिज्ञे त्रि विनाशाय हितम् ठक्। ज्योतिषोक्ते षड्नाडीचक्रस्थे जन्मनक्षत्रावधिकत्रयोविंशे नक्षत्रे। क्षयिके, परतन्त्रे च त्रि०। ऊर्णनाभे पु०।

**वैनीतक** पु०न०। विशेषेण नीयतेऽनेन करणे क्त तत स्वार्थे

कन् । परम्परया वाहने धि विकाटौ ।
वैपरीत्य न० विपरीतस्य भाव' ष्यञ् । विपर्य्यये ।
वैभव न० विभोर्भावः अण् । विभुत्वे विभूतौ ।
वैभ्राज न० विभ्राजस्येदम् अण् । देवोद्यानभेदे ।
वैमुख्य न० विमुखस्य भाव० ष्यञ् । विमुखत्वे ।
वैमात्र पु० विमातुरपत्यम् अण् । मापले भ्रातरि तथाभूत भगिन्यां स्त्री० ङीप् । [भगिन्यां स्त्री० ङीप्
वैमात्रेय पु० विमातुरपत्यं ढक् । मापले भ्रातरि तथाभूत
वैयाकरण त्रि०व्याकरणं वेत्त्यधीते वा अण् । व्याकरणाभिज्ञे
वैयाघ्र पु० व्याघ्रचर्मणा परिवृतो रथः अण् । व्याघ्रचर्म-परिवृते रथे ।
वैयाघ्रपद्य पु० व्याघ्रपदस्यापत्यं यञ् । गोत्रकारके मुनिभेदे: 'वैयाघ्रपद्यगोत्रायेति, भीष्मतर्पणमन्त्र० । [तिष्यपी'ति माघ०
वैयात्य न०वियातस्य भाव० ष्यञ् । निर्लज्जत्वे 'वैयात्यं सुर
वैयासकि पु० व्यासस्यापत्यम् इञ् । व्यासस्यापत्ये शुकदेवे ।
वैयासिकी स्त्री० व्यासेन प्रोक्ता ठञ् ङीप् । व्यासप्रणीतायां संहितायाम् ।
वैर न० वीरस्य भावः अण् । विरोधे विद्वेषे ।
वैरकर त्रि० वैरं करोति कृ-ट । विरोधकारके ।
वैरक्त्य न० विरक्तस्य भावः ष्यञ् । विरागे ।
वैरनिर्यातन न० वैरस्य वैरकृतापकारस्य निर्यातनम् निर् यत-णिच् ल्युट् । वैरकृतापकारप्रतीकारे ।
वैरप्रतीकार पु० ६त० । वैरकृतापकारस्य तुल्यरूपापकार करणेन तस्य शोधने ।
वैरशुद्धि स्त्री० ६त० । वैरप्रतीकारे ।
वैराग्य न० विरागस्य भाव' ष्यञ् । विषयवासनाराहित्ये ऐहिकामुष्मिकविषयरागराहित्ये च ।
वैरवृक्ष पु० वीरस्यायं तन्नामकत्वात् कर्म० । अर्ज्जुनवृक्षे ।
वैरानुबन्धिन् त्रि० वैरं विद्वेषमनुबध्नाति णिनि । विद्वेषा नुरूपकारके, वैरानुगते च ।
वैरिन् त्रि० वैरमस्त्यस्य इनि । शत्रौ ।
वैरूप्य न० विरूपस्य भावः ष्यञ् । विरूपत्वे, अननुरूपत्वे, अयथाभावे वस्तुनो विकारे च ।
वैरच(न)नि पु०विरोचनस्यापत्यम् शिवाद्यण् इञ् वा । अ-ग्निपुत्रे, सूर्य्यपुत्रे, बलिराजनामके दानवे च ।
वैलक्षण्य न० विलक्षणस्य भावः ष्यञ् । विलक्षणत्वे वैशिष्ट्ये ।
वैलक्ष्य न० विलक्षस्य भावः ष्यञ् । लज्जायां, स्वभाव-वैलक्षण्ये च् 'वैलक्ष्यहेतोर्गति'मिति नैषधम् ।
वैल्व न० विल्वस्य फलम् अण् तस्य न लुप् । विल्वफले तत्सम्बन्धिनि त्रि० । [यात्तविष्टे नैगमे (टोकानी) ।
वैवधिक त्रि० विवधेन धान्यादिसंग्रहेण व्यवहरति ठक् ।
वैवर्ण्य न० विवर्णस्य भावः ष्यञ् । विवर्णत्वे मालिन्ये ।
वैवस्वत पु० विवस्वतोऽपत्यम् तस्येदं वा अण् । यमे मनौ, रुद्रभेदे च तत्सम्बन्धिनि त्रि० 'वैवस्वतकरक्रियेत्युद्भटः' टच्चिणटिगि स्त्री० ङीप् ।
वैवाहिक त्रि० विवाहाय हितं साधु वा ठक् । विवाहयोग्ये 'वैवाहिकीं तिथिं पृष्टा' इति कुमारः विवाहेन संबद्धे कन्यापुत्रयोः श्वशुरे, विवाहसम्बन्धिनि च त्रि० । 'पञ्चमे सप्तमे वापि येषां वैवाहिकी क्रियेति स्मृतिः ।
वैशम्पायन पु० व्यासशिष्ये भारतवक्तरि मुनिभेदे ।
वैशस न० विशसस्य भाव० स्वार्थे वा अण् । हिंसने हिंसके वा
वैशाख पु० विशाखानक्षत्रयुक्ता पौर्णमासी वैशाखी सा यत्र मासे पुनः अण् । स्वनामख्याते वर्षमध्ये द्वितीये चान्द्रे मासे तन्मासस्य पौर्णमास्यां स्त्री० ङीप् । विशाखा प्रयोजनमस्य अञ् । मन्थानदण्डे । धनुर्द्धराणामस्थानभेदे न० ।
वैशिष्ट्य न० विशिष्टस्य भावः ष्यञ् । विशेष्यविशेषणसम्बन्धे, विशिष्टबुद्धिनियामके सम्बन्धे, भेदे च ।
वैशेषिक न० विशेषं पदार्थभेदमधिकृत्य कृतो ग्रन्थः ठञ् । कणादप्रणीते शास्त्रभेदे । तदधीते अण् । काणादशास्त्राभिज्ञे त्रि० । तस्येदम् अण् । काणादशास्त्रसम्बन्धिनि त्रि० ।
वैशेष्य न० विशेषस्य भाव० ष्यञ् । वैशिष्ट्ये भेदे च 'वैशे-ष्यात्तद्वाद'इति सांख्यम् । [ब्रह्मणाज्जाते जातिभेदे
वैश्य पु० विशति उपभुङ्क्ते विश-क्विप् स्वार्थे ष्यञ् । वर्णभेदे
वैश्यवृत्ति स्त्री० ६त० । कृषिवाणिज्यादौ ।
वैश्रवण पु० विश्रवसोऽपत्यम् अण् विश्रवणादेश' । कुबेरे ।
वैश्रवणालय पु० ६त० । वटवृक्षे कुबेरपुर्य्यांञ्च । वैश्रवणा-वासादयोऽप्यत्र । [द्विगेन दीयमाने बलौ ।
वैश्वदेव पु० विश्वेभ्यो देवेभ्यो देयो बलि० अण् । वैश्वदेवो-
वैश्वानर पु० विश्वेषां नराणामयम् कुक्षिस्थत्वात् अण् पूर्व्वदीर्घः । वह्नौ, चित्रकवृक्षे, सामवेदावयवभेदे च ।
वैषम्य न० विषमस्य भावः ष्यञ् । विषमत्वे वैलक्षण्ये ।
वैषयिक त्रि० विषयेण निर्वृत्तः ठक् । विषयनिर्वृत्ते सुखादौ
वैष्णव त्रि० विष्णुर्देवताऽस्य तस्येदं वा अण् । विष्णूपासके विष्णुसम्बन्धिनि च स्त्रियां ङीप् । वैष्णव्या शक्तौ 'वैष्णवी समरे वैनमिति चण्डी । विष्णुसम्बन्धिनि त्रि० स्त्रियां ङीप् 'गायत्री वैष्णवी ह्येषेति स्मृति' विष्णुधामनि न० ।

वैहारिक पु० विहरति वि+हृ-णिनि स्वार्थे अण् । मत्स्ये ।

वैहासिक पु विहासेऽभिरतस्तं करोति वा ठक् । नाटकादौ प्रसिद्धे शृङ्गाररसनायकसहचरे विदूषके ।

वोढु पु० वह तृन । मुनिभेदे 'वोढु पञ्चशिखस्तथे'ति स्मृति

वोढृ त्रि० वह-तृच् । वाहके स्वाभाविकारप्रापके 'भागीरथी निर्झरशीकराणां वोढे'ति कुमार । पाणिग्राहके पु० 'पितृकुला वोढुरेव ते' इति स्मृति । भारवाहके मूढे च त्रि वृषभे पु० ।

वोण्ट पु० वा उण्ट । (वोंटा) इति ख्याते वृन्ते ।

वोरव पु० वा उर वोर याति वा क । (वोरो) धान्यभेदे ।

वोल पु वा उलच् । गन्धरसे गन्धद्रव्यभेदे ।

वौषट् अव्य० वह-डौषट् । देवोद्देशेन हविस्त्यागे ।

व्यंसक पु० विगतोंऽसो यस्य कप् । धूर्ते 'मयूरव्यंसकादयश्चे'ति पाणिनिसूत्रम् ।

व्यंसित त्रि० वि+अंस-क्त । वञ्चिते । [च । विष्णौ पु०

व्यक्त त्रि० वि-अनुज क्त । स्फुटे, प्रकाशिते, दृश्ये, प्राज्ञे, स्थूले,

व्यक्ति स्त्री वि+अनुज-क्तिन् । प्रकाशे क्तिच् । जने पृथगात्मके, पदार्थविशेषे च । [यस्य । विष्णौ पु० ।

व्यग्र त्रि विगतमग्रं यस्य । व्याकुले व्यासक्ते च । विशिष्टमग्र

व्यङ्ग न० विगत विकल वाङ्ग कर्म० । विकलाङ्गे, विगतमङ्गं यस्य । अङ्गहीने त्रि० ।

व्यङ्ग्य त्रि वि+अनुज ण्यत् । व्यञ्जनया वृत्त्या बोध्येऽर्थे,प्रकाश्ये

व्यच व्याजे धन सम्बन्धे सक तु० कु० प सेट् । विचति अविचीत् विव्याच ।

व्यजन न० वि+अज-ल्युट् । तालवृन्तके ।

व्यञ्जक पु० वि+अनुज-णिच् ण्वुल् । हृद्गतभावादिप्रकाशके अभिनये, व्यञ्जनयार्थबोधके शब्दे च । प्रकाशकमात्रे त्रि०

व्यञ्जन न० विशेषेणाज्यते वि+अनुज ल्युट् । सूपशाकादौ ओदनभोजनोपकरणे । वि+अनुज-णिच् ल्युट । अलङ्कारप्रसिद्धे वृत्तिभेदे । युच् । 'विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः । सा वृत्तिर्व्यञ्जना नाम' इत्युक्ते शब्दशक्तिभेदे ।

व्यञ्जित त्रि वि+अनुज-णिच् क्त । प्रकाशिते 'अव्यञ्जितवर्णलवणा इति कुमार । व्यञ्जनावृत्त्या बोधितेऽर्थे च ।

व्यडम्बक पु० वि+अड अच् डवि ण्वुल् कर्म०धा० । एरण्डवृक्षे

व्यतिकर पु वि+अति कृ अप् । सम्बन्धे व्यसने च ।

व्यतिक्रम पु० वि+अति+क्रम घञ् न वृद्धि । विपर्यये 'विवाहे च व्यतिक्रम' इति स्मृति ।

व्यतिरिक्त त्रि वि+अति+रिच् क्त । भिन्ने 'न वस्तु सिध्यति रिक्तसाधनमि'तिकुमार ।

व्यतिरेक पु० वि+अति+रिच-घञ् । विशेषे, व्यतिक्रमे, अभावे, भिन्नेत्यर्थे, अर्थालङ्कारभेदे च ।

व्यतिषक्त त्रि० वि+अति+षनुज-क्त । मिलिते, ग्रथिते च ।

व्यतिषङ्ग पु० वि+अति+षनुज घञ् । परस्परमेलने ।

व्यती(ति)हार पु० वि+अति+हृ घञ् वा दीर्घ । परीवर्त्ते परस्परैकजातीयक्रियाकरणे । [भ्युपेत इति रघु ।

व्यतीत त्रि० वि+अति इण् क्त । अतीते 'व्यतीतकालस्त्वहमव्यतीपात पु वि+अति+पत-घञ् दीर्घ । महोत्पातभेदे, विष्कम्भादिषु मध्ये योगभेदे 'श्रवणाश्वधनिष्ठार्द्रा नागदैवतमस्तके । यद्यमा रविवारेण व्यतीपात स उच्यते' इत्युक्ते योगभेदे च ।

व्यत्यय पु० वि+अति+इण् अच् । व्यतिक्रमे, विपर्यये च ।

व्यत्यास पु० वि+अति-अस घञ् । विपर्यये ।

व्यथ भये चलने दुःखे च भ्वा० आ०अक०सेट् घटा० । व्यथते अव्यथिष्ट । घञ् व्यथा ।

व्यथा स्त्री० व्यथ अङ् । पीडायाम्, दुःखे च ।

व्यध ताडने दि प सक०अनिट् । विध्यति अव्यात्सीत् ।

व्यध पु० व्यध अप् । वेधे, छिद्रीकरणे, भेदने च ।

व्यध्व पु विरुद्ध अध्वा अत्समा० । कुपथे ।

व्यप क्षये चुरा०उभ सक सेट् । व्यापयति ते अविव्यपत् त ।

व्यपदेश पु० वि+अप+दिश घञ् । कथने । छलाया कापट्ये च

व्यपरोपण न० वि+अप+रुह-णिच् ल्युट । छेदने ।

व्यपरोपित त्रि वि+अप+रुह णिच् क्त । छिन्ने ।

व्यपाकृति स्त्री वि+अप+आ+कृ क्तिन् । निराकरणे, अस्वीकारे, निह्नवे च । [माथोपेक्षणे च ।

व्यपाश्रय पु वि+अप+आ+श्रि-अच् । आश्रये । [अपेक्ष

व्यपेक्षा स्त्री वि+अप+ईक्ष अ । अपेक्षायां व्याकरणोक्ते

व्यभिचार पु वि+अभि-चर-घञ् । निन्दिताचारे स्त्रिया परपुरुषगमे,पुरुषस्य परस्त्रीगमने,न्यायादिप्रसिद्धे हेतुदोषभेदे च

व्यभिचारिन् पु वि+अभि+चर-णिनि । अलङ्कारोक्ते रसाङ्गभेदे निर्वेदादौ न्यायोक्ते व्यभिचाररूपहेतुदोषवति पदार्थे च । परपुरुषगामिन्यां स्त्रियां स्त्री०ङीप् । [त

व्यय गतौ स्वागेऽदन्त०चु०उभ सक सेट् । व्ययति ते अवव्ययत्

व्यय गतौ भ्वा० उभ सक सेट् । व्ययति ते अव्ययीत् अव्ययिष्ट

व्यय नौदे चु०उभ०सक सेट् । व्याययति ते अविव्ययत् त ।

व्यय पु० वि+इण्-अच् । विगमे, धनादेस्त्यागे, ज्योतिषोक्ते लग्नात् द्वादशस्थाने च ।

व्यर्थ त्रि० विगतोऽर्थः प्रयोजनं यस्य । निष्प्रयोजने, विफले, अर्थशून्ये च । [अनृते च तद्वति त्रि० ।

व्यलीक न० वि+अल-ईकन् । अकार्य्ये, कामजे, अपराधे, अप्रिये,

व्यवकलन न० वि+अव-कल-ल्युट् । वियोजने, विगमने, हीनतसम्पादने च । 'व्यवकलनमार्गेण' इति लीलावती ।

व्यवकलित त्रि० वि+अव+कल-क्त । वियोजिते ।

व्यवच्छिन्न त्रि० वि+अव+छिद-क्त । छिन्ने, विशेषिते च ।

व्यवच्छेद पु० वि+अव+छिद-घञ् । पृथक्करणे, विशेषकरणे, मोचने च ।

व्यवधा स्त्री० वि+अव+धा-अ । व्यवधाने ।

व्यवधान न० वि+अव+धा-ल्युट् । तिरोधाने द्रव्यान्तरेण द्रव्यान्तरस्याच्छादने च । [आच्छादके च ।

व्यवधायक त्रि० वि+अव+धा-ण्वुल् । व्यवधानकर्त्तरि,

व्यवधि पु० वि+अव+धा-कि । व्यवधाने ।

व्यवसाय पु० वि+अव+षो-घञ् । उद्यमे 'करणव्यवसायबुद्धिभि'रिति कुमार० उपजीविकायाम्, अनुष्ठाने, अवधारणे च 'व्यवसायात्मिका बुद्धिरि'ति गीता ।

व्यवस्था स्त्री० वि+अव+स्था-अ । शास्त्रविहितस्य विषयान्तरपरिहारेण विषयविशेषे स्थापने, शास्त्रमर्य्यादायाञ्च ।

व्यवस्थित त्रि० वि+अव+स्था-क्त । विषयान्तरपरिहारेण विषयविशेषे अवस्थिते-शास्त्रविहिते पदार्थे ।

व्यवस्थितविभाषा स्त्री० कर्म० । व्याकरणोक्ते विषयान्तरपरिहारेण विषयविशेषेऽवस्थितरूपे विकल्पे ।

व्यवहर्त्तृ त्रि० वि+अव+हृ-तृच् । व्यवहारकर्त्तरि ।

व्यवहार पु० वि+अव+हृ-घञ् । अर्थविशेषबोधनाय शब्दविशेषप्रयोगे, ऋणादानादिष्वष्टादशसु विवादेषु । 'स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः । आवेदयति चेद्राज्ञे व्यवहारपदं हि तदि'ति स्मृतिः । 'परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु वाक्यात् न्यायाद्व्यवस्थानं व्यवहार उदाहृत' इत्युक्ते विवादनिर्णये, सहाशनभोजनादौ च ।

व्यवहारपद न० ६त० । व्यवहारविषये ।

व्यवहारमातृका स्त्री० व्यवहारस्य विवादनिर्णयस्य मातेव पोषकत्वात् परिच्छेदकत्वाद्वा इवार्थे कन् । व्यवहारनिर्णयार्थं प्राड्विवाकादिकार्य्ये क्रियासमुदाये, विस्तरो दृष्टव्यः ।

व्यवहारिक त्रि० व्यवहार प्रयोजनमस्य ठन् । व्यवहारयोग्ये लोकप्रसिद्धे घटपटादौ, स्त्रियां ङीप् । इङ्गुदवृक्षे पु०

व्यवहारिकसत्ता स्त्री० कर्म० व्यवहारोपयिके सत्त्वे वेदान्तकल्पिते ब्रह्मभिन्नपदार्थमात्रस्य वस्तुतोऽसत्त्वेऽपि व्यवहारयोग्ये सत्त्वे येन घटादि व्यवह्रियते । तत्कार्य्यकरणोपयोगित्वेन कल्पिते घटादेरर्थक्रियाकारित्वलक्षणे सत्त्वे च ।

व्यवहार्य्य त्रि० वि+अव+हृ-ण्यत् । इदमित्थमेवेति निर्देशेन व्यवहारविषये येन सह भोजनादि क्रियते तस्मिंश्च ।

व्यवहित त्रि० वि+अव+धा-क्त । व्यवधानयुते पदार्थे ।

व्यवाय पु० वि+अव+इण-घञ् । ग्राम्यधर्मे मैथुने, अन्तर्द्धाने शुद्धौ च तेजसि न० । [स्त्रियां ङीप् ।

व्यवायिन् पु० वि+अव+इण्-णिनि । ग्राम्यधर्मकारके

व्यसन न० वि+अस-ल्युट् । विपत्तौ, भ्रंशे, कामजाते, कोपजाते च स्त्रीभोगमद्यपानादौ दोषे, दैवादिकृते उपद्रवे च ।

व्यसनार्त्त त्रि० व्यसनेनार्त्तः । दैवाद्युपद्रवयुक्ते ।

व्यसनिन् त्रि० व्यसनमस्त्यस्य इनि । व्यसनयुक्ते कामजादिमद्यपानादिरूपदोषयुक्ते, दैवाद्युपद्रुते च ।

व्यसु त्रि० विगताः असवो यस्य । मृते, 'शेषे जातो भवेद्व्यसुरि'ति ज्योतिषम् ।

व्यस्त त्रि० वि+अस-क्त । व्याकुले, व्याप्ते, विरक्ते च 'व्यस्तरात्रिन्दिवस्येति कुमार० विपरीते, 'व्यस्तविधिर्विलोम' इति लीलावती । समुदितपदार्थमध्ये एकैकस्मिन् । 'एते व्यस्ताः समस्ता वे'ति स्मृतिः । समस्तभिन्ने च भावे-क्त । व्यतिक्रमे न० ।

व्याकरण पु० व्याक्रियन्ते व्युत्पाद्यन्ते अर्थवत्तया प्रतिपाद्यन्ते शब्दा येन वि+आ+कृ-ल्युट् । वेदाङ्गे शब्दसाधुताबोधके शास्त्रभेदे, वेदान्तोक्ते नामरूपाभ्यां जगतोविकाशने च ।

व्याकुल त्रि० वि+आ+कुल-क । रोगादिना इतिकर्त्तव्यतानिश्चयविहीने । [रूपे च

व्याकृति स्त्री० वि+आ+कृ-क्तिन् । भङ्गौ, प्रकाशने, व्याक-

व्याकृत त्रि० वि+आ+कृ-क्त । प्रकाशिते ।

व्याकोश(ष) त्रि० वि+आ+कुश(ष) अच् व्यागतः कोशः(षात्) प्रा०स० वा । प्रफुल्ले 'व्याकोश(ष)न्दीवराञ्च' इति तन्त्रम् ।

व्याख्या स्त्री० वि+आ+ख्या-अङ् । विवरणात्मके शब्दसमूहरूपे ग्रन्थभेदे कथने च ।

व्याख्यात त्रि० वि+आ+ख्या-क्त । कथिते, विवृते च ।

व्याघात त्रि० वि+आ+हन-घञ् । अन्तराये, प्रहारे, अर्थालङ्कारभेदे, सप्रतिबन्धे कथने, प्रतिबन्धभेदे 'व्याघातावधिराशङ्केति खण्डनखण्डखाद्यम् । विष्कम्भादिसप्तविंशतियोगमध्ये योगभेदे च ।

व्याघ्र पु० वि+आ+घ्रा-क । जन्तुभेदे, रक्तैरण्डे, करञ्जे च ।

व्याघ्रदल पु० व्याघ्रपाद इव दलमस्य शा० । एरण्डवृक्षे ।

**व्याघ्रनख** न० व्याघ्रस्य नखमिव । नखीनामगन्धद्रव्ये व्याघ्रस्य नख इव दन्तोऽस्य । स्नुहीवृक्षे । ६त । व्याघ्रनखे ।

**व्याघ्रपाद(द्)** पु० व्याघ्रस्य पाद इव मूलमस्य वा अन्त्यलोप । विकङ्कतवृक्षे । मुनिभेदे च । [व्याघ्रलाङ्गूले ।

**व्याघ्रपुच्छ** पु० व्याघ्रस्य पुच्छ इव दलमस्य । एरण्डवृक्षे ६त० ।

**व्याघ्रादनी** स्त्री व्याघ्रै राद्यते अद ल्युट् ङीप् । निष्टावायाम

**व्याघ्रास्य** स्त्री व्याघ्रस्येवास्यं यस्य । बिडाले ।

**व्याघ्री** स्त्री व्याघ्रनखस्याकारं कण्टकोऽस्त्यस्या अच् गौ ङीप् । कण्टकारिकायाम । जातौ ङीप् व्याघ्रयोषिति ।

**व्याज** पु० वि+अज-घञ् वीभावाभाव । कपटे, वञ्चनाफले असत्यव्यवहारे कारणान्तरेण प्रवृत्तस्य कारणान्तरत्वे-नोद्भावनरूपे अपदेशे च ।

**व्याजनिन्दा** स्त्री० ६त० । कपटनिन्दायाम, अर्थालङ्कारभेदे च

**व्याजस्तुति** स्त्री ६त० । कपटस्तुतौ, अर्थालङ्कारभेदे च ।

**व्याजोक्ति** स्त्री० ६त० । छलेनोक्तौ, अर्थालङ्कारभेदे च ।

**व्याड** पु वि+अड-अच् । मांसभक्षके व्याघ्रादौ पशौ सर्पे, इन्द्रे च वञ्चके त्रि० । [व्याघ्रनखाख्ये गन्धद्रव्ये ।

**व्याडायुध** न व्याडस्य व्याघ्रस्यायुध नख इवाख्यस्य अच् ।

**व्याडि** पु० व्याकरणस्य संग्रहकारके कोषकारके च मुनिभेदे ।

**व्याध** पु० व्यध ण । मृगहिंसके जातिभेदे ।

**व्याधभीत** पु० व्याधाद्भीत भी-क्त । मृगे ।

**व्याधि** पु वि+आ+धा कि । रोगे, कुष्ठरोगे च ।

**व्याधिघात** पु व्याधि हन्ति हन अण् । आरग्वधे (सोन्दाल)

**व्याधिहन्तृ** त्रि० व्याधिं हन्ति हन तृच् । वाराहीकन्दे ।

**व्याधित** त्रि व्याधिर्जातोऽस्य तार० इतच् । व्याधियुक्ते ।

**व्याधु(धू)त** त्रि वि+आ+धु धू वा-क्त । कम्पिते ।

**व्यान** पु० वि+अन अच् । देहस्थे सर्वशरीरव्यापके प्राणादि मध्ये वायुभेदे ।

**व्यापक** त्रि विशेषेणाप्नोति वि+आप ण्वुल् । अधिकदेशवृत्तौ, न्यायोक्ते स्वाधिकरणवृत्त्यभावाप्रतियोगिनि च पदार्थे । तन्त्रोक्ते सर्वाङ्गसम्बन्धिनि न्यासभेदे च ।

**व्यापन्न** त्रि० वि+आ+पद क्त । मृते विपद्युते च ।

**व्यापाद** पु वि+आ+पद घञ् । द्रोहचिन्तने । [विनाशे च ।

**व्यापादन** न० वि+आ+पद णिच्-ल्युट् । मारणे, परानिष्ट

**व्यापार** पु० वि+आ+पृ-घञ् । 'व्यापारो भावना सैवोत्पादना सैव च क्रिये'त्युक्तायां भावयितुः उत्पादनाक्रियायाम् ।

**व्यापारिन्** त्रि० व्यापारोऽस्यास्ति इनि । व्यापारवति कर-ग्रादौ-व्यवसायवति वणिग्जने पु ।

**व्यापिन्** त्रि वि+आप-णिनि । व्यापके । विष्णौ पु ।

**व्यापृत** त्रि वि+आ+पृ क्त । व्यापारयुक्ते ।

**व्याप्त** त्रि० वि+आप क्त । पूर्णे, न्यायोक्ते व्याप्तिमति पदार्थे यथा वह्नेर्व्याप्तो धूम ।

**व्याप्ति** स्त्री० वि+आप-क्तिन् । ईश्वरस्य ऐश्वर्यभेदे, न्यायमते तदभाववति अविद्यमानत्वरूपे पदार्थे यथा वह्नेर-भाववति जलादौ धूमो नास्तीति धूमादौ वह्नेर्व्याप्ति ।

**व्याप्य** त्रि० वि-आप ण्यत् । व्याप्ते । अल्पदेशवृत्तौ पदार्थे चक्रवर्तिलक्षणे न० । [दोषपरिमाणे ।

**व्याम** पु वि+अम-घञ् । तिर्यक्पार्श्वतो विस्तृतयो र्बाह्वोरन्त

**व्यायत** त्रि वि+आ+यम-क्त । दीर्घे, आयते, दूरे अति-शये च । भाव-क्त । दैर्घ्ये व्यायामे च न० ।

**व्यायाम** पु वि+आ+यम-घञ् । श्रमे, श्रमसाधने व्यापारे, मल्लानां श्रमकारके व्यापारे, पौरुषे, दुर्गसञ्चारे, विषमे, व्यामपरिमाणे च ।

**व्यायोग** पु० वि+आ+युज घञ् । दृश्यकाव्यभेदे । [गज च

**व्याल** पु वि+अड घञ् डस्य ल । सर्पे । हिंसकपशौ, दुष्ट-

**व्यालगन्धा** स्त्री० व्यालस्य गन्धो गन्धोऽस्याः । नाकुल्याम्

**व्यालग्राह** पु० व्यालान् सर्पान् गृह्णाति ग्रह-अण् । (साउडे) सर्पधारिणि । णिनि । अत्रैव । [सर्पदंष्ट्रायाम् ।

**व्यालजिह्वा** स्त्री० व्यालस्य सर्पस्य जिह्वेव पत्रमस्याः । महा

**व्यालदंष्ट्र** पु व्यालस्य व्याघ्रस्य दंष्ट्रेव कण्टकमस्य । गोक्षुरे

**व्यालनख** पु० व्यालस्य व्याघ्रस्य नख इव । गन्धद्रव्यभेदे व्याल-दलोपम । [कर्कटीभेदे

**व्यालपत्रा** स्त्री व्यालस्य पाद इव पत्रमस्याः । इर्वारौ

**व्यालम्ब** पु विशेषेण आलम्बते वि+आ+लबि+अच् । रक्तैरण्डे । [द्रव्ये । व्यालनखाख्ये गन्धद्रव्ये पु

**व्यालायुध** न व्यालस्य व्याघ्रस्यायुध नख इव । नखीनामगन्ध-

**व्यावक्रोशी** स्त्री० वि+अव+क्रुश घञ् स्वार्थे ष्यञ् । पर-स्पराक्रोश । [परस्परहरणे

**व्यावहारी** स्त्री वि+अव+हृ-घञ स्वार्थ अण् ङीप् ।

**व्यावहासी** स्त्री वि+अव+हस घञ् स्वार्थे अण् । परस्परहसने

**व्यावृत्त** त्रि वि+आ+वृत क्त । वृते, निवृत्ते च 'व्यावृत्तगति-रुद्याने' इति कुमार ।

**व्यावृत्ति** स्त्री वि+आ+वृत-क्तिन् । निवारणे ।

**व्यास** पु व्यस्यति वेदान् वि+अस-घञ् । पराशरसुते मुनि-भेदे पुराणाभिमानार्थके विग्रहवाक्ये, विस्तारे गोलवृत्त-क्षेत्रस्य मध्यस्थरेखायाम 'यदेव वाचयेद्विप्रो स गञ्जूर ।

शङ्खतरु पु॰ शङ्खयोग्यस्तरु । शालवृक्षे शङ्खवृक्षादयोऽप्यत्र ।
शङ्खला स्त्री शकि उलच् । उत्पलपत्रिकायाम् पूगच्छेदकास्त्र-भेदे (जाँति) शङ्कुलाखण्ड इति सिद्धान्तकौमुदी ।
शङ्ख पु॰न॰ शम ख । स्वनामख्याते समुद्रजाते पदार्थे नखाद्यस्थि निधिभेदे, नखीनामगन्धद्रव्ये कर्णसमीपस्थे अस्थि नागभेदे हस्तिदन्तमध्ये दशनिखर्वसंख्यायां, तत्ख्याते च
शङ्खक न॰ शङ्खस्य विकार कन् । शङ्खजाते वलयाकारे पदार्थे
शङ्खकार पु शङ्ख तद्विकारं वलयाकारं पदार्थं करोति कृ-अण् । वर्णसङ्करजातिभेदे (शाँखारी)
शङ्खचूर्ण न॰ ६त॰ । शङ्खजाते चूर्णे ।
शङ्खद्राविन् पु॰ शङ्ख द्रावयति द्रु णिच् णिनि । अम्लवेतसे
शङ्खधरा स्त्री धृ अच् ६त । हिलमोचिकायाम् ।
शङ्खध्म पु शङ्ख धमति ध्मा क । शङ्खवादके । खिप् । शङ्ख-ध्मा इत्यप्यत्र । [अपि तत्र ङीप्
शङ्खनख पु॰ शङ्खस्य नख इव । क्षुद्रशङ्खे (जोङ्गडा) स्त्रीत्व-
शङ्खपुष्पी स्त्री॰ शङ्ख इव पुष्पमस्या ङीप् । (शङ्खाली) ख्याते
शङ्खभृत् पु शङ्ख बिभर्त्ति भृ-क्विप् तुक् च । विष्णौ ।
शङ्खमुख पु शङ्ख इव मुखमस्य । कुम्भीरे ।
शङ्खिका स्त्री॰ शङ्खोऽस्त्यस्या ठन् । (चोरकाचका) क्षुपभेदे
शङ्खिन् पु शङ्ख+मत्वर्थे इनि । विष्णौ, समुद्रे च ।
शङ्खिनी स्त्री॰ शङ्खोऽस्त्यस्या इनि । चोरपुष्प्याम्, श्वेतबु-ह्माया, यवतिक्ताया स्त्रीभेदे, उपदेवताभेदे, (शाकचिन्नी) शङ्खवत्या स्त्रियाञ्च ।
शङ्खिनीफल पु॰ शङ्खिन्या इव फलमस्य । शिरीषवृक्षे ।
शङ्खिनीवास पु ६त । शाखोटकवृक्षे ।
शच गतौ भ्वा॰आ॰म सेट् इदित् । शञ्चते अशञ्चिष्ट ।
शच वाचि भ्वा॰आ॰सक सेट् । शचते अशचिष्ट ।
शचि(ची) स्त्री॰ शच-इन् वा ङीप् । इन्द्रपत्न्याम् ।
शचीपति पु ६त । इन्द्रे । शचीभर्त्रादयोऽप्यत्र ।
शट(ठ) श्लाघायां चु॰आ॰अक॰सेट् । शाट(ठ)यते अशीशट(ठ)त
शट शाठ्ये गतौ भेदे च भ्वा पर॰ सक॰ रोगे अक सेट् । शटति । अशाटीत्-अशटीत् ।
शट पु शटति रुजति शट अच् । जटे, सिंहकेशरे, जटायाञ्च स्त्री॰
शटि(टी) स्त्री शट-इन् वा ङीप् । (शठ्यादा) स्वनामख्याते ओषधिभेदे । [अशाठीत् अशठीत्
शठ वधे सक कैतवे क्लेशे च अक॰भ्वा पर सेट । शठति
शठ श्लाघ्ये चु॰पर॰अक सेट् । शाठयति ते अशीशठत त
शठ दुष्टवचने अद॰चु उभ॰सक॰सेट् । शठयति ते अशशठत त
शठ न॰ शठ-अच् । तगरे कुङ्कुमे लौहे च । धुस्तूरे, मध्यस्थपुरुषे च पु । धूर्त्ते त्रि॰ ।
शठता स्त्री॰ शठस्य भाव तल् । शाठ्ये वञ्चनायाञ्च ।
शठम्बा स्त्री॰शठ-अच् अवि अच् कर्म्म॰ शक॰। अम्बष्ठायाम् ।
शड घाते रोगे च अक भ्वा॰प॰ सेट् इदित् । शण्डति अशण्डिट ।
शण दाने भ्वा॰पर सक॰सेट । शणति अशाणीत् अशणीत्
शण पु॰ शण अच् । स्वनामख्याते क्षुपभेदे ।
शणघण्टिका स्त्री॰ शणस्य घण्टेव इवार्थे कन् । शणपुष्प-जाते घण्टारववति फले ।
शणपर्णी स्त्री शणस्येव पर्णान्यस्या ङीप् । अश्मन्तपर्ण्याम् ।
शणपुष्पी स्त्री॰ शणस्येव पुष्पमस्या ङीप् (झनझने, स्वार्थे कन् । तत्रैव ।
शणसूत्र न॰ शणाज्जातम् सूत्रम् । शणजाते जाले ।
शणालुक पु शणइवालुक । आरेवतवृक्षे (सोंदालु)
शणिका स्त्री शणस्येव पुष्पमस्त्यस्या ठन् । शणपुष्प्याम् ।
शण्ड न॰ शडि अच् । पद्मादिसमूहे, नपुंसके, वृषे च ।
शण्डिल पु॰ शडि-इलच् । शाण्डिल्यस्य पितरि मुनिभेदे ।
शण्ढ पु॰ शम-ढ तस्य नेत्त्वम् । अन्तःपुररक्षके क्लीबे ।
शत न॰ शो-क्तन् । स्वनामख्यातसंख्यायाम् तत्संख्येये बहुसंख्यायां च । स्वार्थे कन् । तत्रैव न॰ ।
शतक त्रि शतं परिमाणमस्य कन् । शतसंख्यायुक्ते ।
शतकुम्भ पु शत कुम्भायस्य । स्वर्णखनिपर्वतभेदे ।
शतकोटि पु॰ शतं कोटयोऽग्राणि यस्य । वज्रे शतगुणिता कोटि यत्र॰ । शतगुणितकोटिसंख्यायां स्त्री॰ ।
शतक्रतु पु शत क्रतवोऽस्य । इन्द्रे ।
शतग्रन्थि स्त्री शत ग्रन्थयोऽस्य । दूर्वायाम् । [करञ्जे च
शतघ्नी स्त्री शतं हन्ति हन टक् । अस्त्रभेदे हस्तिकाख्या,
शततम त्रि॰ शतस्य पूरण तमप् । शतसंख्यापूरणे ।
शततारा स्त्री॰ शतभिषक् तारा यत्र । शतभिषानक्षत्रे ।
शतदन्तिका स्त्री शतं दन्ता इव अन्यस्य ठन् । नागदन्त्याम
शतद्रु पु शतधा द्रवति द्रु-कु नि । नदीभेदे । [शतप्रकारे अव्य
शतधा स्त्री॰शत अन्धीनुधत्ते धा-क । दूर्वायाम । शत+धाच्
शतधामन् पु॰ शतं धामानि यस्य । विष्णौ ।
शतधार पु॰ शतं धारा अग्राणि यस्य । वज्रे शतधारायुक्ते त्रि । 'वसो पवित्रमसि शतधारमि'ति श्रुति ।
शतधृति पु शतं धृतयोऽस्य । इन्द्रे ब्रह्मणि स्वर्गे च ।
शतपत्र न॰ शतं बहूनि पत्राण्यस्य । पद्मे ।

**शतपत्री** स्त्री॰ शतं पत्त्राणि दलान्यस्याः ङीप् । (सेओती) पुष्पवृक्षभेदे स्वार्थे कन् । तत्रैव । [मकग्रन्थभेदे ।

**शतपथ** पु॰ शतं पन्थानो यत्र अच् समा॰ यजुर्वेदीयब्राह्मणा-

**शतपथिक** त्रि॰ शतपथं वेत्त्यधीते वा ठन् । शतपथब्राह्मणात्मक ग्रन्थाध्यायिनि ।

**शतपद्** न॰ शतं पदानि यत्र । ज्योतिषोक्ते नक्षत्रपादानुसारेण नामकरणोपयोगिप्रथमवर्णसूचके चक्रभेदे । शतं पादाः यस्याः पादभावः समा॰ ङीपि पद्भावः । कीटभेदे (कानकोटारि) स्त्री॰ ।

**शतपद्म** न॰ शतदलयुक्तं पद्मम् । शतदलकमले, श्वेतपद्मे च ।

**शतपर्व्वन्** पु॰ शतं पर्व्वाणि ग्रन्थयो यस्य । वंशे, इक्षुभेदे च कटुकायां, वचायां, दूर्व्वायां च स्त्री॰ । कन् । तासु, यवे च

**शतपाद्** स्त्री॰ शतं पादा अस्याः पाद्भावः । कीटभेदे (कानकोटारि)

**शतपादिका** स्त्री॰ शतं पादा मूलान्यस्याः । काकोल्याम् ।

**शतपुष्पा** स्त्री॰ शतं पुष्पाणि यस्याः । (सुलफा) शाकभेदे (मौरी) क्षुपभेदे च । कन् । तत्रैव ।

**शतप्रसूना** स्त्री॰ शतं प्रसूनानि यस्याः । (सुलफा) शाके

**शतप्रास** पु॰ शतं प्रासा इव फलानि यस्य । करवीरवृक्षे ।

**शतभिषज्** स्त्री॰ शतं भिषज इव तारा॰ यत्र । शततारात्मके अश्विन्यादिषु चतुर्विंशे नक्षत्रे । शतभिषाप्यत्र स्त्री॰ ।

**शतभीरु** स्त्री॰ शतं बहवो वियोगिनो भीरवो यस्याः ५ त॰ । मल्लिकायाम् तद्दर्शने हि वियोगिनां कामोद्दीपनात् ततो भीरुत्वम् ।

**शतमख** पु॰ शतं मखा यज्ञा यस्य । इन्द्रे ।

**शतमन्यु** पु॰ शतं मन्यवो यज्ञा यस्य, शते दैत्येषु मन्युः क्रोधो वा यस्य । इन्द्रे ।

**शतमान** पु॰न॰ शतेन मीयते मि-ल्युट् । पले, तत्परिमिते च

**शतमारिन्** पु॰ शतं मारयति मृ-णिच्-णिनि । विशिष्टचिकित्सके । [शतसुखयुक्ते त्रि॰ ।

**शतमुखी** पु॰ शतं मुखानि यस्याः ङीप् । संमार्ज्जन्याम् ।

**शतमूली** स्त्री॰ शतं मूलान्यस्याः ङीप् । दूर्व्वायां, स्वनामख्यातायां लतायाञ्च ।

**शतयष्टिक** पु॰ शतं यष्टयो गुच्छा यस्य । शतगुच्छके हारभेदे

**शतरुद्रीय** न॰ शतं रुद्रा देवता यस्य । यजुर्वेदोक्ते रुद्राध्याये

**शतरूपा** स्त्री॰ शतं रूपाण्यस्याः । ब्रह्मणः पत्न्याम् ।

**शतवीर्य्या** स्त्री॰ शतं वीर्याणि यस्याः ५ व॰ । श्वेतदूर्व्वायाम् ।

**शतवेधिन्** पु॰ शतं विधति विध-णिनि । अम्लवेतसे ।

**शतसहस्र** न॰ शतगुणितं सहस्रम् शाक॰ । लक्षसंख्यायाम् ।

**शतसाहस्र** त्रि॰ शतं सहस्राणि परिमाणमस्य अण् उत्तरपदवृद्धिः । लक्षसंख्याते ।

**शतह्रदा** स्त्री॰ शत ह्रादाः शब्दायस्याः पृ॰ह्रस्व' । विद्युति ।

**शताक्षी** स्त्री॰ शतमक्षीणीव पुष्पाण्यस्याः षच् समा॰ ङीप् । शतपुष्पायाम् दुर्गायाञ्च ।

**शताङ्ग** पु॰ शतमङ्गान्यवयवायस्य । रथे, तिनिसवृक्षे च ।

**शतानन्द** पु॰ शतमानन्दयति अण् । गोतमपुत्रे अहल्यागर्भजे मुनिभेदे । शतजनानन्दके त्रि॰ । [शतसैन्यवति त्रि॰

**शतानीक** पु॰ शतमनीकानि यस्य । व्यासशिष्ये मुनिभेदे ।

**शतार** न॰ शतमारायस्य । वज्रे ।

**शतायुस्** त्रि॰ शतमायुर्यस्य कालोऽस्य । शतवर्षमितवयस्के 'शतायुर्वै पुरुष' इति श्रुतिः । [मूल्याम् इन्द्रभार्य्यायाम्

**शतावरी** स्त्री॰ शतमावृणोति आ+वृ अच् गौ॰ङीप् । शत-

**शतावर्त्त** पु॰ शतमावर्त्ता यस्य । विष्णौ शतधा वर्त्तते णिनि । तत्रैव । [उत्तरलोपः । शतमूल्यां, शतपुष्पायाञ्च

**शताह्वा** स्त्री॰ शतं शतमूली शतपुष्पा वेति आह्वा यस्याः

**शतिक** त्रि॰ शतेन क्रीतः ठन् । शतेन क्रीते पदार्थे ।

**शत्य** त्रि॰ शतेन क्रीतः यत् । शतसंख्यातद्रव्येण क्रीते ।

**शत्रु** पु॰ शद्-त्रुन् । रिपौ, राज्ञां विषयानन्तरस्थे नृपे, ज्योतिषोक्ते लग्नावधि षष्ठस्थाने, कामादिषु च । शातके त्रि॰

**शत्रुघ्न** पु॰ शत्रून् हन्ति हन-क । दशरथात्मजे सुमित्रागर्भजे लक्ष्मणानुजे ।

**शद्** शातने भ्वा॰पर॰सक॰अनिट् । शीयते अशदत् । शत्स्यति

**शद्** गतौ भ्वा॰पर॰सक॰अनिट् । शीयते अशात्सीत् ।

**शनकावलि(ली)** स्त्री॰ शनैः कायति कै-क पृ॰ तेषामावलिर्यत्र वा ङीप् । गजपिप्पल्याम् ।

**शनपर्णी** स्त्री॰ शणस्येव पर्णान्यस्याः पृ॰ णस्य नः । कटुक्याम्

**शनि** पु॰ शो-अनि किच्च । सूर्यपुत्रे छायागर्भजाते ग्रहभेदे, तत्स्वामिकदिने च ।

**शनिवार** पु॰ शनिस्वामिकोवार । सूर्य्यादिवारमध्ये सप्तमे वारे

**शनैश्चर** पु॰ शनैश्चरति चर-अच् । शनिग्रहे तस्य ग्रहाणां मध्ये सर्व्वोपरिकक्षस्थितत्वात् बहुकालेनैकैकराशिभोगात् मृदुगतित्वम् ।

**शनैस्** अव्य॰ शण डैसि पृ॰ नुक् च । मन्दे, अशैघ्र्ये च ।

**शंस्** हिंसायां स्तुतौ कथने च भ्वा॰पर॰सक॰सेट् क्त्वा वेट् । शंसति अशंसीत् । [शप्स्यति ते अशाप्सीत् ।

**शप** आक्रोशे वा भ्वा॰पचे दिवा॰उभ॰सक॰अनिट् । शपति ते

**शपथ** पु॰ शप-अथन् । सत्यताकरणाय दिव्यभेदकरणे, यथा

एतत् यदि मिथ्या स्यात् तदा मे शतद्गमिष्ट स्वाद्धित्यादि
शपन पु शप ल्युट् । शपथे ।
शप्त त्रि शप-क्त । अभिशापयुक्ते । उलपाख्ये तृणभेदे पु ।
शफ न० शम-अच् पृ० मस्य फ । गवादीनां खुरे वृक्षमूले च ।
शफर पु स्त्री० शफं राति रा क । (पुटी) मत्स्यभेदे स्त्रीत्व
पक्षे ङीप् । [ब्दत् त
शब्द शब्दकरणे अद० चु० उभ०सक० सेट् । शब्दयति ते अशश-
शब्द पु० शब्द घञ् । ध्वन्यात्मके वर्णात्मके च श्रोत्रेन्द्रियग्राह्ये
आकाशादिस्थे गुणभेदे । [क द्व० । शब्दज्ञाने ।
शब्दग्रह पु०, शब्द गृह्णाति ग्रह-अच् । श्रोत्रेन्द्रियकर्णे
शब्दब्रह्मन् न० शब्दात्मकं ब्रह्म । वेदात्मके, स्फोटात्मके च
नित्ये शब्दरूपे ब्रह्मणि । [बाणभेदे ।
शब्दभेदिन् पु शब्दानुसारेण भिनत्ति लक्ष्यम् भिद-णिनि ।
शब्दवेधिन् पु० शब्दानुसारेण विध्यति लक्ष्यं विध-णिनि ।
बाणभेदे अर्जुने च । [लक्षणाशक्तिरूपे सामर्थ्ये ।
शब्दशक्ति स्त्री द्व० । शब्दानामर्थावबोधकत्वाख्ये अभिधा-
शब्दानुशासन न० अनुशिष्यतेऽनेन अनु+शास ल्युट् द्व० ।
शब्दसाधुताज्ञापके व्याकरणे ।
शब्दालङ्कार पु० शब्दमाश्रितोऽलङ्कारः । अलङ्कारशास्त्र-
प्रसिद्धेऽनुप्रासादौ अलङ्कारे ।
- शब्दित त्रि० शब्द-क्त । आहूते ।
शम शान्तौ अक शान्तीकरणे सक० दि० पर० सेट् ।
शाम्यति अशमत्-अशमीत् । क्त्वा वेट् । [शमत्-त
शम आलोचने चु०उ०सक सेट् । शामयति शमयति ते अशी
शम पु शम घञ् । शान्तौ अन्तरिन्द्रियदमने ।
शमथ पु शम अथच् । शान्तौ ।
शमन पु शमयति शम णिच् ल्यु । लोकानां पुण्यापुण्यफल-
दानेन दण्डकारके यमे । शम णिच् भावे ल्युट् ।
शान्तीकरणे न ।
शमनस्वसृ स्त्री द्व० । यमुनायाम् ।
शमल न० शम कलच् । विष्ठायाम् । [विष्ठायाम् ।
शमि(मी) स्त्री० शम इन वा ङीप् । (शांइ) वृक्षभेदे (सुटि)
शमिन् त्रि० शाम्यति शम णिनि । शान्ते ।
शमीक पु शम ईकन् । मुनिभेदे ।
शमीगर्भ पु शमीगर्भं आश्रयत्वेनास्त्यस्य अच् । वह्नौ विप्रे च
शमीधान्य न शमी शिम्बैव धान्यम् । शिम्बात्मके माष
मुद्गादौ धान्ये ।
शमीपत्री स्त्री० शम्या इव पत्रमस्या ङीप् । लज्जालुवृक्षे
शमीर पु अल्पा शमी अल्पार्थे र क्वचित् स्वार्थिका अपि
प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते' इति भाष्योक्तेः
पुंस्त्वम् । क्षुद्रायां शम्याम् ।
शम्पा स्त्री० शं पाति पा क । विद्युति ।
शम्पाक पु शमिव पाको फले यस्य । आरग्वधे ।
शम्ब गतौ भ्वा पर सक०सेट् । शम्बति अशम्बीत् ।
शम्ब पु शम्ब-अच् । वज्रे मुषले मल्लयितलौहे लौहकाञ्चनाम्
अनुलोमकर्षणे, दरिद्रे च ।
शम्बर न शम्ब-अरन् । जले धने, व्रते, चित्ते च । मृगभेदे
दैत्यभेदे मत्स्यभेदे, पर्वतभेदे, युद्धे चित्रकवृक्षे लोध्रे,
अर्जुनवृक्षे च पु । श्रेष्ठे त्रि० ।
शम्बरकन्द पु शम्बर श्रेष्ठ कन्दो यस्य । वाराहीकन्दे ।
शम्बरचन्दन न द्व० । शम्बरपर्वतजाते चन्दनभेदे ।
शम्बरसूदन पु शम्बरमसुरं सूदयति हिनस्ति चु सूद ल्यु ।
कामदेवे ।
शम्बरारि पु०द्व० । कामदेवे शम्बररिपुप्रभृतयोऽप्यत्र ।
शम्बरी स्त्री शम्बर अच् वाऽस्त्यर्थेमायास्यस्य अच् गौरा०ङीष् ।
आखुपर्ण्याम् ।
शम्बल पु०न० शम्ब-कलच् । कूले, पाथेये मत्सरे च ।
शम्बाकृत त्रि शम्ब तदनुलोममाकृष्यते शम्ब+कर्षणार्थे
डाच्+कृ-क्त । अनुलोमेन द्विराकृष्टे कृष्टे क्षेत्रे ।
शम्बु(म्बू) पु०स्त्री शम्ब-उन् ऊ वा । जलशुक्तौ (शामुक) गज
कुम्भान्तभागे च । रामायणप्रसिद्धे शूद्रतापसे, शङ्खे
दैत्यभेदे च पु ।
शम्भ त्रि० शमस्त्यस्य शम+भ । कल्याणयुक्ते ।
शम्भल पु०न० कल्याणदायकं तीर्थं लाति ला क । ग्रामभेदे
यत्र कल्की भविष्यति तस्मिन् । कुट्टिन्यां स्त्री गौर० ङीष्
शम्भु पु० शम्+भू डु । महादेवे ।
शम्भुतनय पु० द्व० । गणेशे, कार्त्तिकेये च शम्भुसुतादयोऽप्यत्र
शम्भुप्रिया स्त्री द्व० । आमलक्याम् दुर्गायाम् ।
शम्भुवल्लभ न द्व० । श्वेतपद्मे । महादेवप्रिय त्रि० ।
शम्या स्त्री शम यत टाप् । युगकीलके ।
शय पु शी-अच् । हस्ते, सर्पे निद्रायां शय्यायां पणे च ।
शयथ पु शी-अथच् । अजगरसर्पे मृत्यौ वराहे मत्स्ये च
निद्राशीले त्रि० ।
शयन न शी ल्युट् । निद्रायाम् शय्यायां मैथुने च ।
शयनीय न० शी-अनीयर् । शय्यायाम् स्वार्थे कन् । तत्रैव ।
शयनैकादशी स्त्री० द्व० । आषाढशुक्लैकादश्याम् ।

**शस्त्रजीविन्** पु० शस्त्रेण जीवति णिनि । शस्त्राजीविनि ।
**शस्त्रपाणि** पु०शस्त्रं पाणौ यस्य । शस्त्रधारके आततायिभेदे 'शस्त्रपाणिर्धनापहः' इति स्मृतिः । [नक्रे शिल्पिभेदे
**शस्त्रमार्ज्ज** पु०शस्त्रं मार्ष्टि मृज अण् । (शिकलकर)शस्त्रमार्ज्जे
**शस्त्राभ्यास** पु० ६त० । शस्त्रप्रयोगशिक्षायाम् ।
**शस्त्रायस** शस्त्रयोग्यमयः अच्समा० । लौहभेदे(इस्पात) ।
**शस्त्रिन्** त्रि० शस्त्रमस्त्यस्य इनि । शस्त्रविशिष्टे ।
**शस्त्री** स्त्री० स्वल्पं शस्त्रं ङीप् । छुरिकायाम् ।
**शस्प** न० शस-प । बालतृणे घासे ।
**शस्य** न० शस-यत् । वृक्षादीनां फले । 'शस्यं क्षेत्रगतं प्रोक्त-मित्युक्ते क्षेत्रस्थे धान्यादौ च । [शस्यनाशके त्रि० ।
**शस्यध्वंसिन्** पु० शस्यं ध्वंसयति ध्वन्स-णिच् णिनि । तुन्नवृक्षे
**शस्यमञ्जरी** स्त्री० ६त० । अभिनवधान्यादिशीर्षे ।
**शस्यसूक** न० । धान्यादेः शीर्षे ।
**शस्यसम्बर** पु० शस्यं संवृणोति सम्+वृ-अच् । शालवृक्षे ।
**शस्याक** पु०शस्यस्फुति स्फ-उण् । क्षुद्रशमीवृक्षे (सेगुन)वृक्षे च
**शाक** पु०न०शक-घञ् । पत्रपुष्पादौ वृक्षभेदे पु० शक्नौ शिरीष वृक्षे, स्वराज्यावधि वत्सरप्रवर्त्तके राजभेदे, तदीये वत्सरे, च पु० हरितक्यां न० । शक्नोति सामर्थ्यं शोक तस्य नेत्यम् । 'मूलपत्रकरीराग्रे फलकाण्डाधिरूढकम् । त्वक् पुष्पं कवकञ्चैव शाकं दशविधं स्मृत'मित्युक्तेषु वृक्षादीनां पत्रादिषु न० 'अशाकभुक् सोऽकृशमित्युक्तेः ।
**शाकचुक्रिका** स्त्री० शाकेषु मध्ये चुक्रिका । चिञ्चायाम् ।
**शाकट** न० शकटाय हितम् अण् । शकटसम्बन्धियुगादौ । श्लेष्मातके-वृक्षे, धववृक्षे च पु० ।
**शाकटायन** पु० व्याकरणकारके मुनिभेदे ।
**शाकटिक** पु० शकटेन चरति ठञ् । शकटेन गन्तरि ।
**शाकटीन** पु०शकटं परिमाणमस्य खञ् । विंशतितुलापरिमाणे
**शाकतरु** पु०शाकाख्य तरुः ।(सेगुण) वृक्षे । शाकवृक्षादयोऽप्यत्र
**शाकपत्र** पु० शाकं पत्रमस्य । शिग्रुवृक्षे ।
**शाकबालेय** पु० बलये हितम् ढक् शाकप्रधानो बालेयः । ब्रह्मयष्टिकायाम् ।
**शाकम्भरी** स्त्री० शाकैर्बिभर्त्ति भृ-खच् मुम् च । 'भरिष्यामि सुराः ! शाकैरावृष्टेः प्राणधारकैः । शाकम्भरीति विख्यातिमि'ति चण्डी निरुक्तायाम् दुर्गायाम् ।
**शाकयोग्य** पु०शाके तद्भक्षणे योग्य । धन्याके । [वार्त्ताकुशाके
**शाकराज** पु० शाकेषु राजते अच्,शाकानां वा राजा टच् ।
**शाकबिल्व** पु०शाकोऽपि बिल्व इव । वार्त्ताकौ स्वार्थे कन् तत्रैव

**शाकवीर** पु० शाकेषु वीरः वीर्याधायकत्वात् । वास्तूकशाके
**शाकशाकट** न० शाकस्य क्षेत्रं शाकटच् । शाकक्षेत्रे । शाक-टिनच् । अत्रार्थे ।
**शाकश्रेष्ठ** पु०शाकेषु श्रेष्ठः । वास्तूकशाके जीवन्त्यां वार्त्ताकौ स्त्री
**शाकाङ्ग** न० शाकस्य तद्भक्षणस्याङ्गमुपयोगि । मरिचे ।
**शाकाम्ल** न० शाकमेवाम्लम् । वृक्षाम्ले ।
**शाकाम्लभेदन** न० शाकरूपम् अम्लं भिनत्ति भिद-ल्यु । चुक्रे (चुकोपालङ्ग) ।
**शाकालाबु** स्त्री० शाकप्रधानालाबुः । अलाबुभेदे ।
**शाकिनी** स्त्री० शाकोऽस्त्यस्याः इनि । शाकभवनयोग्यायां भूमौ, देवीसहचरीभेदे च ।
**शाकुन** पु० शकुनं शुभाशुभसूचकं निमित्तमधिकृत्य कृतो ग्रन्थः अण् । शकुनज्ञानसाधने ग्रन्थे (काकचरित) । [घातके ।
**शाकुनिक** पु० शकुनेन पक्षिवधादिना जीवति ठञ् । पक्षि-
**शाकुन्तलेय** पु० शकुन्तलाया अपत्यं ढक् । दुष्मन्तात्मजे शकुन्तलागर्भजे भरते नृपे ।
**शाक्त** त्रि० शक्तिर्देवताऽस्य अण् । तन्त्रोक्ते शक्तिदेवतोपासके
**शाक्तीक** पु० शक्तिः प्रहरणमस्य ईकक् । शक्त्या योद्धरि ।
**शाक्य** पु० शक-घञ् तत्र साधुः यत् । बुद्धे ।
**शाक्यमुनि** पु० शाक्यो मुनिः । बुद्धभेदे ।
**शाक्यसिंह** पु० शाक्य वंशे सिंह इव । बुद्धभेदे । [अशाम्ली
**शाख** व्याप्तौ भ्वा०पर०सक०सेट् चङि न ह्रस्वः । शाखति
**शाख** पु० शाख-अच् । कृत्तिकापुत्रे स्कन्दानुजे गणभेदे, ग्रन्थ-परिच्छेदे, सर्गस्थानीये ग्रन्थांशभेदे, वृक्षस्यावयवभेदे च (डाल)पक्षान्तरे, बाहौ, लतायाम्, अन्तिके, वेदैकदेशे च स्त्री
**शाखाकण्ट** पु० शाखाव्यापी कण्टः कण्टको यस्य । स्नुहीवृक्षे
**शाखानगर** न० शाखेव नगरम् । मूलनगरसमीपस्थे क्षुद्र-पुरे शाखापुरादयोऽप्यत्र ।
**शाखामृग** पु० शाखास्थो मृगः पशुः । वानरे ।
**शाखाम्ला** स्त्री० शाखाप्याम्ला । वृक्षाम्ले ।
**शाखारण्ड** पु० शाखायां वेदशाखायां रण्डः तद्विहित कर्म्मानाचरणात् । स्वशाखात्यागेन कर्मकर्त्तरि ।
**शाखाल** पु० शाखा बाहुल्येन सन्त्यस्य लच् । वानीरवृक्षे ।
**शाखाशिफा** स्त्री० शाखारूढा शिफा मूलम् शाक० । वटादीनां शाखाजाते मूले । शिफामारभ्य शाखा । गुडूच्यादि लतायाम् । [म्लेच्छभेदे च ।
**शाखिन्** पु० शाखाऽस्त्यस्य इनि । वृक्षे । वेदैकदेशगति,नृपभेदे,
**शाखोट** पु०शाखा-व्याप्तौ ओटन् (श्याओड़ा) वृक्षे स्वार्थे कन् ।

शारिवा स्त्री० शारिरिव वनति वन-ड। श्यामालतायाम्।
शारीर त्रि० शरीरस्येदं अण्। देहसम्बन्धे सुखदुःखादौ तत्सोढ़मस्य पुन' अण्। वृषे पु०। शरीरमात्रत्वेनाभिमन्यते अण्। जीवे। स्वार्थे क। जीवे। शारीरं दु'खं जीवं वा अधिकृत्य कृतो ग्रन्थः अण्। व्यासकृते वेदान्तसूत्रे चिकित्साङ्गे सुश्रुतग्रन्थाद्येकदेशे च।
शारीरिक त्रि० शरीरे भव' ठक्। देहजाते दुःखादौ।
शारुक त्रि० शॄ-उकञ्। हिंसके।
शार्कर त्रि० शर्करा अस्त्यस्य अण्। शर्करायुक्ते देशे शर्करा-या विकारः अण्। फाणिते, दुग्धफेणे च पु०।
शार्ङ्ग त्रि० शृङ्गस्य विकार' अण्। शृङ्गजाते पदार्थे। विष्णुधनुषि, धनुर्मात्रे च पु०। आर्द्रके न०।
शार्ङ्गिन् पु० शार्ङ्ग' अस्त्यस्य इनि। विष्णौ धन्विमात्रे त्रि०।
शार्दूल पु० शॄ-ऊलच् दुक् च। व्याघ्रभेदे, पक्षिभेदे, राक्षसभेदे, च उत्तरपदस्थः। श्रेष्ठार्थे।
शार्दूलललित न० अष्टादशाक्षरपादके छन्दोभेदे।
शार्दूलविक्रीड़ित न० ऊनविंशत्यक्षरपादके छन्दोभेदे।
शार्व्वर न० शर्वर्या इदम् अण्। अत्यन्ततमसि। रात्रिसम्बन्धिनि, घातके च त्रि०। [अघशालिट।
शाल कथने भ्वा०आ०सक०सेट्। चङि न ह्रस्वः। शालते
शाल पु० शल-घञ्। मत्स्यभेदे, प्राकारे, स्वनामख्याते, वृक्षभेदे, वृक्षमात्रे, दन्त्यादिस्तु वृक्षमात्रे 'रसालः सालः समदग्धतासुने'ति नैषधम्।
शालग्राम पु० शालानां वृक्षाणां ग्रामः समूहो यत्र। पर्व्वतभेदे तत्र जात' अण्। तत्र जाते विष्णोर्मूर्त्तिभेदे।
शा(सा)लज पु० शा(सा)लात् जायते जन-ड। सर्जरसे (धुना)
शालनिर्य्यास पु० ६त०। सर्ज्जरसे (धुना)। [वृक्षभेदे।
शालपर्णी स्त्री० शालस्येव पर्णा यस्याः ङीप्। (शालपानी)
शालभञ्जिका स्त्री० शालेन भज्यते निर्मीयते भन्ज-ण्वुल्। काष्ठनिर्म्मितपुत्तलिकायां, वेश्यायाञ्च। [लोभे।
शालव पु० शाल- वन्निर्यास इव वलति वहिर्गच्छति वल-ड।
शालवेष्ट पु० शालस्य वेष्ट इव। सर्ज्जरसे (धुना)।
शालसार पु० शालस्य सारः। हिङ्गुनि शालेषु सार'। वृक्षश्रेष्ठे
शाला स्त्री० शाल-अच्। गृहे, वृक्षस्य स्कन्धस्थशाखायाञ्च।
शालाजिर पु० शालाद्वारेवाजति अज-इरन्। शाकभेदे (शाखा)
शालातुरीय पु० शालातुरे भव'। तद्ग्रामनामिनि मुनौ।
शालानी स्त्री० शालावायानयति आ+नी-ड गौ० ङीप्। विदार्य्याम्
शालामृग पु० शालायां गृहे मृग इव। शृगाले।
शालावृक पु० शालायां गृहे, शाखायां वृक इव वा। कुक्कुरे, शृगाले, विडाले, मृगे, वानरे च।
शालि पु० शल+इञ्। कलमादिधान्ये, षष्टिकादिधान्ये, गन्धमार्ज्जारे च।
शालिका स्त्री० शालिरिव कायति कै-क। विदार्य्याम्।
शालिञ्च पु० शालिं चमति चम-ड ष० मुम्। शाकभेदे।
शालिपर्णी स्त्री० शालेरिव पर्णान्यस्याः ङीप्। माषपर्ण्याम्
शालिवाहन पु०। विक्रमादित्यं हत्वा शकाब्दप्रवर्त्तके नृपभेदे
शालिहोत्र पु० शालयो हूयन्तेऽत्र हु-त्रन्। घोटके।
शाली स्त्री० शाल-अच् गौ० ङीष्। कृष्णजीरके।
शालीन त्रि० शालाप्रवेशमर्हति ख। धृष्टे सलज्जे, निश्चेष्टे च।
शालु न० शाल-उण्। शालूके, कषायद्रव्ये, चोरनामगन्धद्रव्ये च भेके पु०। [जातीफले।
शालूक न० शाल-ऊकञ्। कुमुदादिमूले ठकञ्। तत्र
शालूर पु० शाल-ऊरच्। भेके।
शालेय पु० शालायां भवं ढक्। मधुरिकायाम्।
शालोत्तर पु० ग्रामभेदे।
शालोत्तरीय पु० शालोत्तरे भवः। पाणिनिमुनौ।
शाल्मल पु० शाल-मलच्। (शिमुल) वृक्षे तच्चिह्नितद्वीपभेदे च
शाल्मलि(ली) पु० स्त्री० शाल-मलिच् वा ङीप् (शिमुल) वृक्षे
शाल्मलिक पु० शाल्मलिरिव कायति कै-क। रोहितकवृक्षे
शाल्मलीफल पु० शाल्मल्या इव फलमस्य। तेजफलवृक्षे।
शाल्मलीवेष्ट पु० शाल्मली वेष्टयति वेष्ट अच्। शाल्मलीनिर्यासे धुना। तत्रैव।
शाल्व पु० शाल-व। देशभेदे।
शाव पु० शव-घञ्। शिशौ स्वार्थे कन्। तत्रैव शवस्येदम् अण्। शवसम्बन्धे 'त्रिरात्रं शावमाशौच'मिति स्मृतिः।
शावर पु० शावयति विकारयति शव-णिच् अरन्। पापे, अपराधे, लोध्रद्रुमे च शवरेण प्रोक्तमण्। शवरकृते मीमांसाभाष्ये। शवरस्येदम् अण्। शवर सम्बन्धिनि त्रि०।
शावरी स्त्री० शवरस्य प्रिया अण्। शूकशिम्ब्याम्, विद्याभेदे च
शाश्वत त्रि० शश्वद् भवः अण्। सतते नित्ये।
शाष्कुलिक न० शष्कुलीनां समूह' ठञ्। शष्कुलीसमूहे।
शास आशंसायां भ्वा०आ०सक०सेट् क्त्वा वेट्। प्रायेणाङ् पूर्व्वकः आशास्ते आशंसिष्ट। [पूर्व्वः। आशास्ते आशासिष्ट
शास आशीर्वादे अदा० आ० सक० सेट् क्त्वा वेट्। प्रायेणाङ्
शास शासने अदा०प०द्विक०सेट् क्त्वा वेट्। शास्ति अशासत्।
शासन न० शास-ल्युट्। निकृष्टस्य हितसाधनादौ प्रवर्त्तने।

शितिचार पु० शितिः सन् चरति चर-घञ्। (सुषनि) शाके
शितिसारक पु०शितिः शुभ्रः सारो यस्य कप्। तिन्दुकवृक्षे
शिथिल त्रि०श्लथ-किलच् पृ०। श्लथे,अदृढे संयोगभेदे,मन्दे च
शिनि पु० शि-निक्। यदुवंश्ये, क्षत्रियभेदे यस्य सात्यकिर्नप्ता
शिप्र पु०शि रक् पुक् च। सरोवरभेदे, नदीभेदे स्त्री०।
शिफ पु०स्त्री० शि फक्। वृक्षाणां जटाकारे मूले।
शिफाक पु० शिफेव इवार्थे कन्। पद्ममूले।
शिफाकन्द पु० शिफेव कन्दः। पद्ममूले।
शिफाधर पु० शिफां धरति धृ-अच्। शाखायाम्।
शिफारुह पु० शिफायां रोहति रुह-क। वटवृक्षे।
शि(सि)म्बा स्त्री० शाम्यति समति वा शम (सम) डम्बच् पृ० (छिमी) ख्याते पदार्थे चक्रमर्द्दे च।
शिम्बि(म्बी) स्त्री०शम-बि नि० वा ङीप्। शिम्बायाम्, (शिम्) लतायां, एरकायाञ्च, स्वार्थे कन् तत्रैव। [कन्। तत्रैव।
शिम्बिपर्णी स्त्री० शिम्बिरिव पर्णमस्याः। मुद्गपर्ण्याम् स्वार्थे
शिर न०शॄ क। मस्तके,पिप्पलीमूले, शय्यायाम्, अजगरे च।
शिरःफल पु० शिर इव फलमस्य। नारिकेले।
शिरःशूल न० शिरसः शूलमिव तापकत्वात्। रोगभेदे।
शिरज पु० शिरे जायते जन-ड। केशे।
शिरस् न० शॄ-असुन् नि०। मस्तके, अग्रे च।
शिरसिरुह पु० शिरसि रोहति रुहक-अलुक् स०। केशे।
शिरस्क न० शिरसि कायति प्रकाशते कै-क। शिरस्त्राणे।
शिरस्त्र न० शिरस्त्रायते त्रै-क। शिरोरक्षके उष्णीषे। [त्रि०
शिरस्य पु० शिरसि भवः यत्। निर्मलकेशे शिरोजातमात्रे
शिरा स्त्री० शॄ-क। नाड्याम् (शिर)।
शिरापत्त्र पु० शिरेव पत्त्रं यस्य। हिन्तालवृक्षे।
शिराल न० शिराऽस्त्यस्य लच्। कर्मरङ्गे शिरायुक्ते त्रि०।
शिरावृत्त न० शिरेव वर्त्तते वृत-क। सीसके।
शिरीष पु० शॄ-ईषन्। स्वनामख्याते वृक्षे। [शालायाम्
शिरोगृह न० शिरःस्थ सुपरिस्थं गृहम्। (चिलेघर) चन्द्र-
शिरोधरा स्त्री० शिरोमस्तकं धरति धृ-अच्। ग्रीवायाम्।
शिरोधि स्त्री० शिरो धीयतेऽत्र धा-कि। ग्रीवायाम्।
शिरोमणि पु० स्त्री० शिरसि धार्य्यो मणिः। शिरोधार्य्ये रत्ने चूडामणौ। स्त्रीपक्षे वा ङीप्। शिरोरत्नादयोऽप्यत्र।
शिरोरुजा स्त्री० शिरो रुजति व्यथयति रुज-क। सप्तच्छद-वृक्षे। ह्रस्व। मस्तकरोगे।
शिरोरुह पु० शिरसि रोहति रुह-क। केशे।
शिरोवल्ली स्त्री० शिरसः वल्लीव। मयूरचूडायाम्।
शिरोवृत्त न० शिर इव वृत्तं वर्तुलम्। मरिचे। [पामार्गे
शिरोवृत्तफल पु० शिरो वृत्तं मरिचमिव फलमस्य। रक्ता-
शिरोवेष्ट पु० वेष्ट-घञ् शिरसो वेष्टः। उष्णीषे ल्युट्। तत्रैव न०।
शिल उञ्छे कणश आदाने तु०पर०सक०सेट्। शिलति अशेलीत्
शिल न० शिल-क। स्वक्षेत्रगस्यात् क्षेत्रात्कणशआदानरूपायां वृत्तौ, पाषाणे, द्वाराधःस्थितकाष्ठखण्डे च स्त्री०।
शिलाकर्णी स्त्री० शिलेव कर्णमस्य ङीप्। गजकीटवृक्षे।
शिलाकुट्टक पु० शिलां कुट्टयति कुट्ट-ण्वुल्। पाषाणभेदके अस्त्रभेदे। शिलया कुट्टति छिन्नीकरोति। तापनभेदे।
शिलाज न० शिलातो जायते जन-ड। शैलेये गन्धद्रव्ये।
शिलाजतु न० शिलाजातं जतु। पर्व्वतजाते उपधातुभेदे।
शिलाञ्जनी स्त्री० शिला अज्यतेऽनया अन्ज-ल्युट्। काला ञ्जनीवृक्षे।
शिलात्मज न० शिलाया आत्मज इव। लौहे।
शिलाददु पु० शिलाया दद्रुरिव। शैलेये गन्धद्रव्ये।
शिलाधातु पु० शिलाया धातुरुत्तमधातुरिव शुभ्रत्वात्। श्वेतोपले, (खड़ी) पीतवर्णे-गैरिकभेदे च।
शिलापुत्त्र पु० शिलायाः पुत्त्र इव। (लोडा)। मसृणखण्डे।
शिलापुष्प न० शिलायाः पुष्पम्। शैलेये गन्धद्रव्ये॥
शिलाभेद पु० शिलामपि भिनत्ति भिद-अण्। पाषाणभेदि वृक्षे, पाषाणभेदकास्त्रे च।
शिलाव्याधि पु० शिलाया व्याधिरिव। शैलेये गन्धद्रव्ये।
शिलासन न० शिलाया आसनम्। शैलेये गन्धद्रव्ये।
शिलासार न० शिलायाः सार इव। लौहे।
शिलि पु० शिल-कि। भूर्जपत्त्रवृक्षे द्वारस्थे काष्ठे (गोबराट) भेक्याञ्च छत्राकपुष्पे च स्त्री०ङीप्।
शिलीन्ध्र न० शिलीं धरति धृ-क पृ०षत्। कदलीपुष्पे।
शिलीन्ध्रक न० शिलीन्ध्र इव कै-कन्। गोमयच्छत्राके।
शिलीपद पु० शिलीव पदमस्य। रोगभेदे (गोद)।
शिलीमुख पु०शिली शल्यं दुःखमस्य। भ्रमरे, वाणे, युद्धे, जड़ीभूते च।
शिलोच्चय पु० शिलानामुच्चयो यत्र। पर्व्वते।
शिलोञ्छ पु०शिलेनोञ्छः उञ्छि-घञ्। उपात्तशस्यात् क्षेत्रात् शेषान्नचयने। [शिलोञ्छधादयोऽप्यत्र।
शिलोत्थ शिलाया उत्तिष्ठति उद्+स्था-क। शैलेये गन्धद्रव्ये
शिल्प न०शिल-पक्। चित्रकलादिकर्मसु। [चित्रादिकर्त्तरि।
शिल्पकारिन् त्रि०शिल्पं चित्रादिकलां करोति कृ-णिनि।

शिष्टि स्त्री० शास-क्तिन् । आज्ञायां, शासने, ताड़ने च
'शिष्यशिष्टिरवधेने'ति स्मृतिः ।
शिष्य त्रि० शास-क्यप् । शिक्षणीये, छात्रे, उपदेश्ये च ।
शि(सि)ह्ल पु०सिह-लक् नि०सस्य शो वा । गन्धद्रव्यभेदे स्वार्थे
कन् । तत्रैव । [अशीकिष्ट ।
शी शयने अदा०आ०अक०सेट् । शेते अशयिष्ट । [शीकति
शीक सेके सर्पणे च भ्वा०आ०सक०सेट् चङि न ह्रस्वः ।
शीक आमर्षे सेके च चु० उभ० पक्षे भ्वा०प०सक० सेट् ।
शीकयति ते शीकति अशीशिकत्-त अशीकीत् ।
शीकर न० शीक अरन् । मरन्द्रवे, जलकणे, वायौ च ।
शीघ्र न० शिघि रक् पृ०। विलम्बाभावे त्वरिते च तद्वति त्रि०
शीघ्रजन्मन् पु० शीघ्रं जन्म यस्य । करञ्जवृक्षे ।
शीघ्रपुष्प पु० शीघ्रं पुष्पं यस्य । वकवृक्षे । [धर्न्धरि ।
शीघ्रवेधिन् पु० शीघ्रं विधति विध-णिनि । शीघ्रलक्ष्यवेधन-
शीत न० श्यै-क्त । शीतले, जले, हिमे च । बहुवारवृक्षे
असनवृक्षे वेतसवृक्षे च पु० । शीतस्पर्शवति त्रि० ।
शीतक पु० शीतमिव करोति । दीर्घसूत्रिणि आलस्यहेतुना
कार्य्याकरणाय शीतबाधामभिनीय सुस्थिते शीत+स्वार्थे
कन् । शीतपदार्थे, शीतकाले, वृश्चिके च ।
शीतकर पु०शीतः शीतल० करो यस्य । चन्द्रे । कर्पूरे च ।
शीतकिरणादयोप्यत्र त्रि० शीतकारके ।
शीतकाल पु०६त०। हिमऋतौ मार्गपौषमासद्वयात्मके काले ।
शीतकुम्भ पु० शीतं स्कुम्नाति स्कुम्भ-अच् नि० । करवीरे ।
शीतकृच्छ्र पु० 'त्र्यहं शीतं पिबेत् तोयं त्र्यहं शीतं पयः
पिबेत् । त्र्यहंशीतं घृतं पीत्वा वायुभक्षपरत्र्यहमि'-
त्युक्ते व्रते ।
शीतचार न० कर्म० । श्वेतटङ्कणे ।
शीतगन्ध न०शीत शीतल गन्धो यस्य । श्वेतचन्दने ।
शीतगु पु० शीता गावः किरणा यस्य । चन्द्रे, कर्पूरे च ।
शीतपर्णी स्त्री० शीतं पर्णं यस्या ङीप् । अर्कपुष्पिकायाम् ।
शीतपल्लवा स्त्री० शीतः पल्लवो यस्या । भूमिजम्ब्वाम् ।
शीतपाकिनी स्त्री० शीते पाकोऽस्त्यस्याः इनि । काकोल्याम्
शीतपाकी स्त्री० शीतेन पाको यस्याः ङीप् । वाट्यालके,
काकोल्याञ्च । [स्वार्थे कन् । शैलेये । अर्कवृक्षे च ।
शीतपुष्प पु० शीतं शीतवीर्य्यकरं पुष्पं यस्याः । शिरीषवृक्षे
शीतप्रभ पु० शीतस्य हिमस्येव प्रभा यस्य । कर्पूरे ।
शीतप्रिय पु० ६त० । पर्पटे ।
शीतफल पु०शीतं शीतलवीर्य्यकरं फलमस्य । उडुम्बरे,गन्नौ च

शीतबला स्त्री० शीतं बलं च यस्याः । महासमङ्गायाम् ।
शीतभानु पु० शीताः शीतलाभानवोऽस्य । चन्द्रे, कर्पूरे च ।
शीतभीरु स्त्री०६त०। मल्लिकायाम् शीतभीते त्रि० ।
शीतमञ्जरी स्त्री० शीतकाले मञ्जरी यस्याः न कप् । शेफा-
लिकायाम् ।
शीतमूलक न० शीतं शीतवीर्य्यकरं मूलमस्य कप् । उशीरे ।
शीतरश्मि पु० शीतारश्मयोऽस्य । चन्द्रे, कर्पूरे च ।
शीतल पु० शीतं लाति ला-क शीतमस्त्यस्य लच् वा। शीतस्पर्शे
तद्वति त्रि० । जलयोद्भवे-चन्दने, शैलेये, पद्मके, मौक्तिके
वीरणमूले, शैलेये च न० । अशनपर्ण्यां बहुवारवृक्षे,
चम्पके, चन्द्रे, कर्पूरे, रात्रे च पु० ।
शीतलक न० शीतलमिव इवार्थे कन् । श्वेतोत्पले मरुबके पु०
शीतलच्छद पु० शीतल शीतलस्पर्शवान् छदोऽस्य । चम्पके
कर्म० । शीतलपत्रे पु० । [वारिणि न०
शीतलजल न० शीतलं जलं यस्मात् । उत्पले कर्म०। शीतल
शीतलवातक पु० शीतलोगातो धातुभेदो यस्मात् । अशन-
पर्ण्याम् । तत्सेवने हि वायो शीतलता ।
शीतला स्त्री० देवीभेदे वनजवृक्षभेदे च । तत्र ङीप् च ।
शीतवल्क पु० शीत० शीतकर० वल्कोऽस्य । उडुम्बरे ।
शीतवीर्य्यक पु० शीत शीतलकारं वीर्य्यं यस्मात् । प्लक्षवृक्षे ।
शीतशिव न० शीतं शीतलमपि शिवम् । सैन्धवलवणे । मिश्रे
कायां, शमीवृक्षे च स्त्री० । मधुरिकायाम् पु० ।
शीतसह पु० शीत सहते सह-अच् । पीलुवृक्षे, नीलसिन्धु-
वारे च वासन्त्याम् स्त्री० । [कुटुम्बिन्यां, दूर्व्वायाञ्च ।
शीता स्त्री०श्यै-क्त । लाङ्गलपद्धतौ, रामपत्न्याम्, अतिबलाया
शीतांशु पु० शीताः अंशवो यस्य । चन्द्रे, कर्पूरे च । [त्रि०
शीताङ्गी स्त्री०शीतमङ्गमस्याः ङीप् । हंसपदीवृक्षे । शीतलदेहे
शीतार्त्त त्रि० शीतेन ऋतः । शीतालौ ।
शीतालु त्रि०शीत+अस्त्यर्थे आलुच् । शीतबाधायुक्ते ।
शीतावला स्त्री०शीतमावलयति आ+वल-णिच्-ऋण् । महास
मङ्गायाम् । [काले ध्वनिभेदे ।
शीत्कार पु० शीदित्यस्य कारः शीत्+कृ-घञ् । स्त्रीणां रति
शी(सी)त्य त्रि०शी(सी)ताम् अर्हति यत् । हलकृष्टे क्षेत्रादौ ।
शीधु पु०न० । शी-धुक्। इक्षुरसजाते मद्यभेदे ।
शीधुगन्ध पु० शीधोरिव गन्धोऽस्य । बकुलवृक्षे ।
शीन त्रि०श्यै-क्त । घनीभूते घृतादौ । मूर्खे, अजगरे च पु० ।
शीभ कथने भ्वा०आ०स०सेट् चङि न ह्रस्वः । शीभते अशीभिष्ट
शीर पु० शी-रक् । अजगरसर्पे ।

चान्द्रमासार्द्धे काले, श्वेतच्छदे, काशे, बके च ।
शुक्लपुष्प पु॰ शुक्लं पुष्पमस्य । छत्राकवृक्षे, कुन्दवृक्षे, मरुवके च ।
श्वेतपुष्पवति त्रि॰ नागदन्त्यां स्त्री॰ ङीप् । कर्म॰ शुभ्रपुष्पे न॰
शुक्लपृष्ठक पु॰ शुक्लं पृष्ठमस्य कप् । सिन्धुकवृक्षे । [त्रि॰
शुक्लरोहित पु॰ वर्णोनवर्णेनेति कर्म॰ । श्वेतरक्ते वर्णे, तद्वति
शुक्ला स्त्री॰ शुक्लं लाति ला-क । उच्चटायाम् ।
शुक्लवायस पु॰ कर्म॰ । बके, श्वेतकाके च ।
शुक्लशाल पु॰ कर्म॰ । गिरिनिम्बे श्वेतवर्णवृक्षे च ।
शुक्ला स्त्री॰ शुक्ल+अर्श आद्यच् टाप् । सरस्वत्यां, शर्करायां, काकोल्यां, विदार्य्यां, स्नुह्यां, श्वेतवर्णवत्यां, स्त्रियाञ्च ।
शुक्लाङ्गी स्त्री शुक्लमङ्गमस्याः ङीप् । शेफालिकायाम्, श्वेताङ्गयुक्ते त्रि॰ ।
शुक्लापाङ्ग पु॰ शुक्लः अपाङ्गो यस्य । मयूरे ।
शुक्लाम्ल न॰ कर्म॰ । अम्लशाके ।
शुक्लिमन् पु॰ शुक्लस्य भावः इमनिच् । श्वेतवर्णे ।
शुक्लोपला स्त्री॰ कर्म॰ स अस्त्यस्याः अच् । शर्करायाम् ।
शुङ्ग पु॰ शम-ग तस्य नेत्त्वं नि॰ अत उत्त्वञ्च । वटवृक्षे, आम्रातके, प्लक्षे च । पर्पटीवृक्षे धान्यादिशूके च स्त्री॰ ।
शुङ्गाकर्म्मन् न॰ शुङ्गैः वटपल्लवैः आ सम्यक् कर्म॰ यत्र । पुंसवनसंस्कारभेदे ।
शुङ्गिन् पु॰ शुङ्गोऽस्त्यस्य इनि । वटवृक्षे । शुङ्गवति त्रि॰ ।
शुच् स्त्री॰ शुच-क्विप् । शोके । वा टाप् । तत्रैव ।
शुच शौचे क्लेदे च दिवा॰ उभ॰ अक॰ सेट् । शुच्यति ते अशुचत्-अशोचीत् अशोचिष्ट ।
शुच शोके भ्वा॰ पर॰ सक॰ सेट् । शोचति अशोचीत् ।
शुचि पु॰ शुच-किन् । वह्नौ, चित्रकवृक्षे, ज्यैष्ठमासे, आषाढमासे शुद्धाचरणे, ग्रीष्मे, मरुतौ, शुद्धमन्त्रिणि, अग्निभेदे श्वेतवर्णे च । तद्वति त्रि॰ ।
शुचिद्रुम पु॰ कर्म॰ । अश्वत्थवृक्षे ।
शुचिमल्लिका स्त्री॰ कर्म॰ । नवमल्लिकायाम् । [अशुच्यीत् ।
शुच्य अभिषवे भ्वा॰ पर॰ सक॰ सेट् निष्ठा अनिट् । शुच्यति
शुठ गतिविघाते भ्वा॰ पर॰ सक॰ सेट् । शोठति अशोठीत् ।
शुठ आलस्ये चु॰ उभ॰ सक॰ सेट् । शोठयति ते अशूशुठत् ।
शुठ शोषणे वा॰ चु॰ उभ॰ पक्षे भ्वा॰ पर॰ सक॰ सेट् इदित् । शुण्ठयति ते शुण्ठति अशुशुण्ठत् त अशुण्ठीत् ।
शुण्टि(ण्ठी) स्त्री॰ शुठि-इन् वा ङीप् । (शुंठ) । वृत्ते ।
शुण गतौ तु॰ पर॰ सक॰ सेट् । शुणति अशोणीत् । [स्त्री॰ ।
शुण्ड पु॰ शुण-ड तस्य नेत्त्वम् । मदनिर्झरे, गजहस्ते पु॰ स्त्रीपक्षे टाप् मद्यपानगृहे वेश्यायाम् सुरायां नलिन्यां कुट्टिन्याम् जलहस्तिन्याञ्च स्त्री॰ ।
शुण्डार पु॰ शुण्डा अस्त्यर्थे र । शौण्डिके, हस्तिनि च । अपकर्षे र । अपकृष्टशुण्डायाम् । नच् । हस्तिनि ।
शुण्डी स्त्री॰ शुण्डाकारोऽस्त्यस्याः अच् गौ॰ ङीष् । (हातिशुंडा) वृक्षे । [पवित्रे, शुभ्रे च त्रि॰
शुद्ध न॰ शुध-क्त । सैन्धवलवणे, मरिचे च । केवले, निर्दोषे,
शुद्धवल्ली स्त्री॰ कर्म॰ । गुडूच्याम्, पवित्रायां लतायाञ्च ।
शुद्धान्त पु॰ शुद्धः अन्तः पर्य्यन्तो यस्य । अन्तःपुरे, उपचारात् तत्र स्थितायां राजयोषिति पु॰ स्त्री॰ । 'शुद्धान्तसंभोगनितान्ततुष्टे इति नैषधम् ।
शुद्धापह्नुति स्त्री॰ कर्म॰ । अर्थालङ्कारभेदे ।
शुद्धि स्त्री॰ शुध-क्तिन् । मार्ज्जने नैर्मल्यसम्पादने वैदिककर्मयोग्यतासम्पादकसंस्कारभेदे च ।
शुद्धोदनि पु॰ बौद्धभेदे ।
शुध शौचे शोधने, निःसंशयकरणे च दि॰ पर॰ सक॰ अनिट् । शुध्यति अशुधत् । 'मनोहरः शुध्यति यद्गुणः स्यादिति शो॰
शुन गतौ तु॰ पर॰ सक॰ सेट् । शुनति अशोनीत् ।
शुन पु॰ शुन-क । कुक्कुरे । इक् । तत्रैव । [मुनिभेदे ।
शुनःशेफ पु॰ शुनस्य शेफोऽस्य अलुक्स॰ । विश्वामित्रशिष्ये
शुनक पु॰ शुनस्य कन् । मुनिभेदे स्वार्थे कन् । कुक्कुरे ।
शुनी स्त्री॰ श्वन्+स्त्रियां ङीप् । कुक्कुरयोषिति, कुष्माण्ड्यां च
शुन्ध शुद्धौ चु॰ उ॰ सक॰ सेट् । शुन्धयति ते अशुशुन्धत् त ।
शुन्ध शुद्धौ अक॰ शुद्धीकरणे सक॰ भ्वा॰ उभ॰ सेट् । शुन्धति ते 'आपः शुन्दन्तुमैनसः' इति वेदमन्त्रः । अशुन्धीत् । अशुन्धिष्ट ।
शुन्भ दीप्तौ अक॰ मर्दने च सक॰ तु॰ पर॰ सेट् । शुभति अशुम्भीत् 'प्रागप्राप्तनिशुम्भशाम्भवधनु'रिति वीरचरितम्
शुभ दीप्तौ अक॰ हिंसने स॰ तु॰ मुचा॰ प॰ सेट् । शुम्भति अशोभीत्
शुभ दीप्तौ भ्वा॰ आ॰ अक॰ सेट् । शोभते अशुभत् ।
शुभ न॰ शुभ-क । मङ्गले, पद्मकाष्ठे च । शुभयुक्ते त्रि॰ । विष्कम्भादिषु मध्ये त्रयोविंशयोगे पु॰ । [इति भट्टिः
शुभंयु त्रि॰ शुभम्+अस्त्यर्थे युस् । शुभान्विते 'क्षितिपः शुभंयु'
शुभगन्धक न॰ शुभो गन्धोऽस्य । बोले ।
शुभग्रह पु॰ शुभः शुभदायकः ग्रहः । सौम्यग्रहे गुरौ शुक्रेऽर्द्धाधिकचन्द्रे, पापग्रहायुक्ते बुधे च । [दुर्गायां स्त्री॰ ।
शुभङ्कर त्रि॰ शुभं करोति कृ-अच् मुम् च । मङ्गलकारके ।
शुभद पु॰ शुभं ददाति दा-क । अश्वत्थवृक्षे मङ्गलदातरि त्रि॰

शूद्रासुत पु०शूद्रायाः द्विजातिभिः ऊढायाः सुतः । द्विजाति जाते शूद्रजातिस्त्रिया सुते पुत्रभेदे ।
शूना स्त्री० श्वि-अधिकरणे-क्त । प्राणिवधस्थाने 'पञ्च सूना-गृहस्थस्ये'ति स्मृतिः (आनजिभ) अधोजिह्वायाञ्च ।
शून्य त्रि०शूनायै प्राणिवधाय हितम् रहस्यस्थानत्वात् यत् । निर्ज्जनस्थाने, आकाशे, विन्दुमात्रे, अभावे च । अश-शून्ये, जने, तुच्छे च त्रि० । [त्रि०
शून्यमध्य पु० शून्यमाकाशो मध्ये यस्य । नले । शून्यमध्ययुक्ते
शून्यवादिन् पु० शून्यमभावमात्रं सर्व्वकारणतया वदति वद-णिनि । बौद्धभेदे । [(फणिमनसा)
शून्या स्त्री०शून्यमस्त्यस्याः अच् । नल्याम् महाकालकन्याञ्च ।
शूर हिंसे स्तम्भे च दि० आत्म० सक० सेट् । शूर्य्यते अशूरिष्ट
शूर विक्रमे अ० चु० उभ० सक० सेट् । शूरयति ते अशुशूरत् त ।
शूर पु०शूर-अच् । वीरे, विक्रमवति, वसुदेवनामके, यादवे, सूर्य्ये, सिंहे, शूकरे, चित्रकवृक्षे, साले, निकुचे, मत्स्यभेदे च ।
शूरण पु० शूर-ल्यु (ओल) मूलभेदे, श्योनाकवृक्षे च ।
शूरसेन पु० शूरा सेना यत्र, यस्य वा । देशभेदे, नृपभेदे च
शूर्प माने चु० उ० सक० सेट् । शूर्पयति ते अशुशूर्पत् त ।
शूर्प पु० शूर्प्यते धान्यादिकमनेन शूर्प-घञ् । (कुला) धान्य-स्फोटके, वंशमयपात्रे, द्रोणद्वयपरिमाणे च ।
शूर्पकर्ण पु०शूर्प इव कर्णोऽस्य । गजे । [रावणभगिन्याम् ।
शूर्पणखा(खी) स्त्री०शूर्प इव नखा अस्याः णत्वम् वा ङीप् ।
शूर्पपर्णी स्त्री० शूर्प इव पर्णान्यस्याः ङीप् । शिम्बीभेदे ।
शूर्म्म पु० सुष्टु ऊर्म्मिरस्त्यस्याः पृ० । लौहप्रतिमायाम् ।
शू(सू)र्म्मि(र्म्मी) स्त्री० सुष्टु ऊर्म्मिः यस्याः वा णत्वम् वा ङीप् । लौहादिप्रतिमायाम् ।
शूल रुजायां भ्वा० प० अक० सेट् । शूलति अशूलीत् ।
शूल पु०न०शूल-क । रोगभेदे, व्यथायां, सुतीक्ष्णे अय'फाले, त्रिशूले च । चिह्ने, मुनिभेदे, विष्कम्भादिषु नवमयोगे च पु०।
शूलग्रन्थि पु० शूलाकारः ग्रन्थिरस्य । मालादूर्व्वायाम् ।
शूलघातन न०शूलं रोगभेदं घातयति हन-णिच्-ल्यु । मण्डूरे
शूलघ्न पु० शूलं हन्ति हन-क । तुम्बुरवृक्षे ।
शूलद्विष् पु० द्वेत० । हिङ्गौ ।
शूलधन्वन् पु० शूलं धनुरायुधमस्य अनङ् समा० । शिवे ।
शूलधर पु० शूलं धारयति धारि-अच् । शिवे । शूलधृदा-दयोऽप्यत्र ।
शूलधारिन् पु० शूलं धरति धृ-णिनि । शिवे दुर्गायां स्त्री०
शूलधृष् पु० शूलेन धर्षति धृष-क्विप् । शिवे । दुर्गायां स्त्री० ।
शूलनाशन न० शूलं नाशयति नश-णिच्-ल्यु । सौवर्चलवणे
शूलपाणि पु०शूलं पाणौ यस्य । शिवे । शूलहस्तादयोऽप्यत्र ।
शूलशत्रु पु० शूलस्य शत्रुः । एरण्डवृक्षे ।
शूलहन्त्री स्त्री० शूलं हन्ति हन-तृच् ङीप् । यवान्याम् ।
शूलहृत् पु० शूलं-हरति हृ-क्विप् । हिङ्गौ ।
शूलाकृत त्रि० शूलेन विद्धा कृतं पक्वम् शूल+डाच्+कृ-क्त । लौहादिकीलकेन विद्धा पक्वे मांसे । (काबाब) ।
शूलिक त्रि० शूलं पाकसाधनत्वेनास्त्यस्य ठन् । शूलाकृते ।
शूलिन् पु० शूलमस्त्यस्य इनि । शूलरोगयुक्ते, शूलास्त्रधारके त्रि०
शूलिन पु० शूलाकारं फलमस्त्यस्य इनन् । भाण्डीरवृक्षे ।
शूलोत्खा स्त्री०शूलेन उत्खन्यते उद्+खन-ड । सोमराज्याम्
शूल्य त्रि० शूले संस्कृतं यत् । शूलाकृते मांसे ।
शूष प्रसवे भ्वा० प० सक० सेट् । शूषति अशूषीत् ।
शृ(सृ)गाल पु० असृजं लाति ला-क पृ० (शेयाल) पशौ दैत्य-भेदे, वासुदेवे, निष्ठुरे, खले च । [काटा) क्षुपभेदे ।
शृगालकण्टक पु० शृगालस्येव कण्टको यस्य । (शेयाल
शृगालकोलि पु० शृगाल इव कण्टकितः कोलिः । (शेया-कुल) क्षुपभेदे । [लाके क्षुपभेदे ।
शृगालघण्टी स्त्री० शृगाल इव कण्टकिनी घण्टी । कोकि-
शृगालजम्बु स्त्री० शृगालप्रिया जम्बुः । गोस्तन्यां (गोस्तक) ।
शृगालविन्ना स्त्री० शृगालैर्विद्यते विद-क्त । पृश्निपर्ण्याम् ।
शृगालिका स्त्री०शृगालस्य भार्य्या ङीप् स्वार्थे कन् । शृगाल योषिति, शृगालीव इवार्थे कन् । भयात् पलायने ।
शृगाली स्त्री० शृगालसत्पलायनं साद्दश्येनास्त्यस्य अच् ङीप् । पलायने । [लौहमये पादबन्धने च ।
शृङ्खल पु० शृङ्गात् प्राधान्यात् खञ्जयतेऽनेन पृ० । निगडे,
शृङ्खला स्त्री० शृङ्खलः तदाकारोऽस्त्यस्याः अच् गौ० ङीप् । कोकिलाक्षे वृक्षे पुंस्कटीवस्त्रबन्धने च । रीतौ स्त्री०टाप् ।
शृङ्ग न०शृ-गन् पृ० ह्रस्व । पर्वतोपरिभागे, प्राधान्ये, कामोद्रेके, पश्वादेर्विषाणे, वाद्यभेदे च । (शिङा) महुरस्त्रियां स्त्री०ङीप्
शृङ्गक पु० शृङ्गमिव इवार्थे कन् । जीरकवृक्षे ।
शृङ्गकन्द पु० शृङ्गमिव कन्दोऽस्य । शृङ्गाटके (पानीफल)
शृङ्गज न० शृङ्गे पर्व्वताग्रे जायते जन-ड । अगुरुचन्दने सरलवृक्षे पु० । शृङ्गजातमात्रे त्रि० ।
शृङ्गमूल पु० शृङ्गमिव मूलमस्य । शृङ्गाटके ।
शृङ्गमोहिन् पु० शृङ्गाय कामोद्रेकाय मोहयति मुह-णिच्-णिनि । चम्पके । [(गाड़रशिङा)
शृङ्गला स्त्री०शृङ्गं तदाकारफलं लाति ला-क । अजशृङ्ग्याम्

**शैली** स्त्री॰शीलमेव स्वार्थे अण् ङीप् । चारित्रे,'आचार्य्याणा मियं शैली यत्सामान्येनाभिधाय विशेषेण विवृणोतीति प्राहुः । [तालधारके च ।

**शैलूष** पु॰ शिलूषस्यापत्यम् अण् । नटे, बिल्ववृक्षे, धूर्त्ते,

**शैलूषिक** पु॰ शैलूषं तद्वृत्तिमन्वेष्टा ठक् । 'वृत्त्यन्वेषी नटानान्तु स तु शैलूषिक' स्मृत' इत्युक्ते नटवृत्त्यन्वेषिणि नट प्रधाने, तत्स्त्र्यां स्त्री॰ ङीप् 'नटीं शैलूषिकीं चैव रजकीं वेणुजीविनीम् । गत्वा चान्द्रायणं कुर्य्यादि'ति स्मृतिः ।

**शैलेन्द्र** पु॰शैलः इन्द्र इव । हिमालये । ६त॰ शैलेशादयोप्यत्र

**शैलेन्द्रज** पु॰ शैलेन्द्रे हिमालये जायते जन-ड । भूर्ज्जवृक्षे ।

**शैलेय** न॰ शिलायां भवः ढक् । शैलजाख्ये गन्धद्रव्यभेदे पर्व्वतजातमात्रे त्रि॰ । सिंहे, भ्रमरे च पु॰।

**शैलोद्भवा** स्त्री॰ शैलं पर्व्वतमभिव्याप्य भवति भू-अच् । क्षुद्रपाषाणभेदिनि वृक्षे पार्व्वत्याञ्च।

**शैव** न॰ शिवमधिकृत्य कृतो ग्रन्थः अण् । वेदव्यासप्रणीते शिवप्रभाववर्णनात्मके महापुराणभेदे । शिवो देवताऽस्य अण् । शिवभक्ते त्रि॰ । तस्येदमण् । शिवसम्बन्धिनि त्रि॰ । शैवत्वे न॰ । [सिच्यतामि'ति नैषधम् ।

**शैवल** न॰ शी-वलच् । पद्मकाष्ठे, शैवाले च 'वहतो वडशैव-

**शैवलिनी** स्त्री॰ शैवलानि सन्त्यस्याः इनि । नद्याम् ।

**शैवाल** न॰ शी-वालन् स्वार्थे अण् । (शेओयाला) जलजाते पदार्थभेदे ।

**शैव्य** पु॰शिवेर्गोत्रापत्यम् ञ्य । शिविगोत्रजे राजभेदे 'शैव्यश्च नरपुङ्गव' इति गीता । शिविना अधिगतः ञ्य । घोटकमात्रे, श्रीकृष्णस्य घोटके च ।

**शैशव** न॰ शिशोर्भाव अण् । शिशुकाले अवस्थाभेदे ।

**शैशिर** पु॰ शिशिरं प्रियं यस्य अण् । श्यामचटके । शिशिरे भव ऋत्वण् । शिशिरजाते त्रि॰ ।

**शो** तीक्ष्णीकरणे दिवा॰पर॰सक॰अनिट् । श्यति अशात्-अशासीत्

**शोक** पु॰ शुच-घञ् । इष्टवियोगजाते दुःखानुगुणे चित्तवृत्तिभेदे । [६त॰ । शोकध्वंसे ।

**शोकनाश** पु॰ शोकं नाशयति नश-णिच्-अण् । अशोकवृक्षे ।

**शोकहारी** स्त्री॰शोकं हरति हृ-अण् ङीप् । वनवर्व्वरिकायाम्

**शोकारि** पु॰६त॰ । कदम्बवृक्षे ।

**शोचिष्केश** पु॰ शोचिः केशइव यस्य । वह्नौ, चित्रकवृक्षे च ।

**शोचिस्** न॰ शुच-इसि । प्रभायाम्, रोचिषि च ।

**शोच्य** त्रि॰ शुच-यत् । क्षुद्रे, अधमे, अनुकम्पनीये च । स्वार्थे कन् । तत्रैव ।

**शोण** गतौ सक॰त्वरायां अक॰भ्वा॰पर॰सेट् । शोणति अशोणीत् [चङि न ह्रस्वः ।

**शोण** न॰शोण-अच् । सिन्दूरे रुधिरे च । रक्तेक्षौ, मद्गुले, पद्मे, अग्नौ, चित्रके, स्योनाके वृक्षे, नदभेदे, रक्तवर्णे, च पु॰ तद्वति त्रि॰ । वनकोकिलायां स्त्री॰ ।

**शोणक** पु॰ शोण इव कन् । शोनाकवृक्षे ।

**शोणझिण्टिका** स्त्री॰ कर्म॰। शोणझिण्ट्याम्, रक्तसैरेये च।

**शोणझिण्टी** स्त्री॰शोणा झिण्टीव । कुरुवके, कण्टकिन्याञ्च

**शोणपत्र** पु॰ शोणं पत्त्रमस्य । रक्तपुनर्णवायाम् ।

**शोणपुष्पक** पु॰ शोणं पुष्पमस्य कप् । कोविदारे ।

**शोणपुष्पी** स्त्री॰ शोणं पुष्पमस्याः ङीप् । सिन्दूरपुष्प्याम् ।

**शोणरत्न** न॰कर्म॰ । पद्मरागमणौ ।

**शोणाक** न॰ शोणं रक्तवर्णमकति अण् (शोना) । क्षुपभेदे

**शोणित** न॰ शोण इतच् । रुधिरे ।

**शोणितचन्दन** न॰ शोणितं रुधिरमिव चन्दनम् । रक्तचन्दने

**शोणितपुर** न॰ शोणितमिव रक्तं पुरम् । बाणासुरनगरे ।

**शोणोपल** पु॰कर्म॰ : माणिक्ये मणौ । [कन् । तत्रैव ।

**शोथ** पु॰शु-थन् । हस्तपादादेः स्फीतताकारके रोगभेदे । स्वार्थे

**शोथघ्नी** स्त्री॰ शोथं हन्ति हन-क । पुनर्णवायाम् शालपर्ण्याञ्च । शोथनाशके औषधमात्रे त्रि॰ । [भल्लातके

**शोथजि(हृ)त्** पु॰ शोथं जयति हरति वा जि-हृ-क्विप्

**शोथजिह्व** पु॰शोथे जिह्मः विपरीताचरणशाली । पुनर्णवायाम्

**शोधन** न॰ शुध-णिच्-ल्युट् । शौचे, विष्ठायाम् मलादेर्विरेचने दोषनिवारणे, ऋणादिनिर्यातने च । शुध-णिच्-ल्यु । निम्बुके, पु॰ । शुद्धिकारके त्रि॰ । शुध्यत्यनया करणे ल्युट् ङीप् । सम्मार्जन्याम्, ताम्बूलवल्ल्या, नील्याञ्च स्त्री॰ ङीप्

**शोधनाधीश** न॰ ६त॰ । जयपाले । [मार्जिते

**शोधित** त्रि॰ शुध-णिच्-क्त । मलाद्यपसारणेन कृतसंस्कारे,

**शोफ** पु॰ शु-फन् । शोथे । [पायाञ्च

**शोफघ्नी** स्त्री॰ शोफं हन्ति हन-क । शालपर्ण्याम्, रक्तपुनर्न-

**शोफनाशन** पु॰ शोफं नाशयति नश-णिच्-ल्यु । नीलवृक्षे ।

**शोफहृत्** पु॰ शोफं हरति हृ-क्विप् । भल्लातके ।

**शोभन** न॰ शोभते शुभ-ल्यु । पद्मे, विष्कम्भादिषु पञ्चमे योगे पु॰ । शोभायुक्ते त्रि॰ ।

**शोभनक** पु॰ शोभनाय कायति कै-क । शोभाञ्जनवृक्षे ।

**शोभना** स्त्री॰शोभयति लेपनात् शुभ-णिच्-ल्यु । हरिद्रायाम्, गोरोचनायाञ्च ।

**शोभा** स्त्री॰ शुभ-अ । दीप्तौ ।

शोभाञ्जन पु० शोभायै अज्यते अनेन ल्युट् । (सजना) वृक्षे

शोष पु० शुष घञ् । वातादिना जलाद्यपहारेण कठिनकरणे शोषयति शुष णिच-ण्वुल् । यक्ष्मरोगे ।

शोषण न० शुष-ल्युट् । शोषणे, रसादानादने शोषे च शोषयति शुष णिच्-ल्यु । उन्मादन शोषणप्रेतुकौ कामशरभेदे, शोणाकवृक्षे च पु० ।

शोषसम्भव न० समुद्भवात् सम् भव इत० । पिप्पलीमूले

शौक न० शुकानां समूह अण् । शुकसमुदाये ।

शौकर न० शूकरस्य वराहस्येदम् अण् । तीर्थभेदे ।

शौक्तिकेय न० शुक्तिकायां भवम् । ढक् । मुक्तायाम् ।

शौक्तेय न० शुक्तौ भवम् ढक् । मुक्तायाम् ।

शौक्ल्य पु शुक्लस्य भाव ष्यञ् । श्वेततायाम् श्वेतवर्णे ।

शौच न० शुचेर्भाव अण् । शुद्धौ, पवित्रतायाम् 'अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः स्वधर्मे च व्यवस्थानं शौचमेतत् प्रकीर्तितम्' इति स्मृत्युक्ते धर्मविशेषे च । [शुचा

शौट गर्वे भ्वा०पर० अक० सेट् । शौटति अशौटीत् । ऋदि न

शौटीर पु शौट-ईरन् । त्यागिनि वीरे च । गर्वान्विते त्रि०

शौटीर्य्य न शौटीरस्य वीरस्य भाव ष्यञ् । वीर्य्ये, पराक्रमे, गर्वे च । [शौढीत्

शौड गर्वे भ्वा पर०अक सेट् ऋदि न ह्रस्व । शौडति अ-

शौण्ड त्रि शुण्डायां सुरायामभिरत अण् । मत्ते, दक्षे च ।

शौण्डिक पु शुण्डा सुरा पण्यमस्य ठक् । मद्यविक्रेतरि जातिभेदे । [शौ ङीष् । मत्ते, गजपिप्पल्याम् ।

शौण्डी स्त्री० शुण्डा करिकरस्तदाकार अस्त्यस्य अच्

शौण्डीर पु शुण्डा गर्वोऽस्त्यस्य ईरन् स्वार्थेऽण् । गर्वान्विते त्रि० ।

शौद्र पु० शूद्रायां द्विजातिभिरूढायां भव अण् । द्वादशपुत्रमध्ये शूद्राजाते द्विजातिपुत्रभेदे ।

शौद्धोदनि पु शुद्धोदनस्यापत्यम् इञ् । बौद्धमुनिभेदे ।

शौधिका स्त्री० शोध शोधन मलनिरसनं हित ठक् । रक्तकन्दे ।

शौनक पु शुनकस्यापत्यमण् । मुनिभेदे 'नैमिषे निमिषक्षेत्रे ऋषय शौनकादय' इति भागवतम् ।

शौनिक पु श्वभिः मारणं व्यवहारः प्रयोजनमस्य ठक् । मांसविक्रेतरि (कसाइ) मृगयायां मृगयाजीवे च ।

शौभ न शोभायै हितम् अण् । व्योमचारिणि पुरभेदे । देव पु०

शौभाञ्जन पु० शोभाञ्जनएव स्वार्थेऽण् । (सजना) वृक्षभेदे

शौभिक त्रि० शोभा शिल्पमस्य ठक् । इन्द्रजालिके ।

शौरि पु० शूरस्य यादवभेदस्य वसुदेवस्य सूर्य्यस्य वा गोत्रापत्यम् इञ् । विष्णौ शनैश्चरे च ।

शौर्य्य न० शूरस्य भाव ष्यञ् । वीर्य्ये शक्तौ च ।

शौल्किक पु० शुल्के राजादिदेये करे तद्दाने अधिकृत ठक् । शुल्कादानाधिकृते ।

शौल्किकेय पु शुल्किक देशभेद तत्र भव ढक् । विषभेदे ।

शौल्विक पु० शुल्व कांस्यताम्रपात्रादि पण्यमस्य ठक् । कांस्यकारे (कामारी) जातिभेदे ।

शौवस्तिक त्रि० श्वः परदिने भव श्वस्+ठक् तुट् च । भाविदिनस्थायिनि पदार्थे ।

शौष्कल पु शुष्कल शुष्कमांस पण्यमस्य अण् । शुष्कमांसविक्रेतरि । तद्भक्षणस्य अण् । शुष्कमांसभक्षके त्रि ।

श्चुत क्षरणे भ्वा पर अक सेट् । श्चोतति अश्चुतत् अश्चोतीत्

श्च्युत क्षरणे भ्वा पर अक सेचने सक सेट् । श्च्योतति अश्च्युतत् अश्च्योतीत ।

श्च्योत पु० श्च्युत घञ् । क्षरणात् सेचने ।

श्मन् न० शेते शी मनिन् डिच्च । मुखे, शवे, अदन्तोऽप्यत्र ।

श्मशान न० श्मान शवा शेरतेऽत्र शी आनच् डिच्च । श्मन् शब्देन शव प्रोक्त शानं तत्स्थानमुच्यते इति निरुक्ते । शवदाहस्थाने ।

श्मशानकाली स्त्री श्मशानस्था काली । कालिकाभेदे ।

श्मशानवासिन् पु श्मशाने वसति वस-णिनि । महादेवे षट्कर्मदर्शे च । श्मशानदाहकर्त्तरि चण्डालादौ त्रि० ।

श्मश्रु न श्म मुखं श्रयते लक्ष्यतेऽनेन श्रि-डु । पुरुषमुखस्थे लोमवृन्दे । [ल्पाया मोटाख्याया स्त्रियाम् ।

श्मश्रुमुखी स्त्री० श्मश्रु मुखे यस्या ङीष् । पुरुषलक्षणयु-

श्मश्रुल पु० श्मश्रु विद्यतेऽस्य लच् । श्मश्रुयुक्ते 'श्मश्रुलैर्मुखैरिति रघु । [क्षुरकर्मकारके ।

श्मश्रुवर्द्धक पु० श्मश्रु वर्द्धयति छिनत्ति वृध ण्वुल् । नापिते

श्मील निमेषे भ्वा०पर अक सेट् । श्मीलति अश्मीलीत् ।

श्यान त्रि० श्यै-क्त । सङ्कोचविशेषप्राप्ते घनीभूते पयश्यानकर्द्दमाभिति रघु ।

श्याम पु श्यै मक् । वृद्धदारकवृक्षे, प्रयागतीर्थस्थे वटे कोकिले, धुस्तूरे मेघे मरुवृक्षे श्यामाके, गन्धतृणे, कृष्णवर्णे, हरिद्वर्णे च । तद्वति त्रि असिते, विगुणमये च न ।

श्यामक न , श्याम+संज्ञाया कन् । रोहिषतृणे, श्यामाके (श्यामा) धान्यभेदे पु । [विहगे च

श्यामकण्ठ पु० श्याम कण्ठोऽस्य । मयूरे, शिवे, नीलकण्ठ

श्यामकन्दा स्त्री० श्यामः कन्दोऽस्याः । अतिविषायाम् ।

श्यामकाण्डा स्त्री० श्यामः काण्डोऽस्याः । गण्डदूर्वायाम् ।

श्यामग्रन्थि स्त्री० श्यामो ग्रन्थिरस्याः । गण्डदूर्वायाम् ।

श्यामपत्त्र पु० श्यामानि पत्त्राणि यस्य । तमालवृक्षे ।

श्यामल पु० श्यामवर्णं लाति ला-क । पिप्पले कृष्णवर्णयुक्ते त्रि० । अश्वगन्धायां, कट्भ्यां, जम्ब्वां, कस्तूर्य्यांञ्च स्त्री० ।

श्यामलचूडा स्त्री० श्यामला चूडाऽस्याः । गुञ्जायाम् ।

श्यामलता स्त्री० कर्म० । स्वनामख्याते लताभेदे । श्यामलस्य भावः तल् । कृष्णवर्णे, हरिद्वर्णे च ।

श्यामलिका स्त्री० श्यामलोवर्णोऽस्त्यस्याः ठन् । नील्यामोषधौ

श्यामलेक्षु पु० कर्म० (काजला) इक्षुभेदे ।

श्यामसुन्दर पु० श्यामोऽपि सुन्दरः । श्रीकृष्णे 'श्यामसुन्दर! ते दास' इति भागवतम् ।

श्यामा स्त्री० श्यै-मक् । शारिवौषधौ, प्रियङ्गौ, यमुनायां, रात्रौ, कृष्णत्रिवृति, नील्याम्, गुग्गुलौ, सोमलतायां, गुन्द्रायाम्, कृष्णायाम्, अम्बिकायां, गुडूच्यां, कस्तूर्य्याम्, वटपत्त्र्यां, वन्दायां, नीलपुनर्णवायां, पिप्पल्यां, हरिद्रायां, नीलदूर्वायां, तुलस्यां, पद्मबीजे, गवि, छायायां, शिंशपायां, पक्षिभेदे ( शामा ) स्त्रीमात्रे 'शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला । तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कीर्त्तितेत्युक्तलक्षणे स्त्रीविशेषे च ।

श्यामाक पु० श्यामेव इवार्थे कन् । (श्यामा) धान्यभेदे ।

श्यामाङ्ग पु० श्यामं हरिद्वर्णमङ्गमस्य । बुधग्रहे, कृष्णदेहे त्रि० स्त्रियां ङीप् 'श्यामाङ्गीं विगताम्बरा'मिति तन्त्रम् ।

श्यामाम्ली स्त्री० कर्म० । नीलाम्लीक्षुपे ।

श्याल पु० श्यै-कालन् । पत्नीभ्रातरि स्वार्थे ठक् । श्यालिकोऽप्यत्र

श्यालिका स्त्री० श्यै-कालन् सञ्ज्ञायां कन् । अत इत्वम् । पत्नीभगिन्याम् ।

श्याव पु० श्यै-वन् । कृष्णपीतमिश्रवर्णे । तद्वति त्रि० ।

श्यावदत् त्रि० श्यावो दन्तो यस्य दत्रादेश । श्याववर्णदन्तयुक्ते

श्यावदन्त पु० कर्म० । स्वभावतः कृष्णवर्णयुक्ते दन्ते, इव० कप् । तद्युक्ते त्रि० 'सुरापः श्यावदन्तक' इति स्मृतिः ।

श्येत पु० श्यै-इतच् । शुक्लवर्णे तद्वति त्रि० स्त्रियां ङीप् तस्य नश्च । श्येनी ।

श्येन पु० श्यै-इनन् । पक्षिभेदे(बाज) पाण्डुरवर्णे च तद्वति त्रि०

श्येनघण्टा स्त्री० श्येना घण्टेव । दन्तीवृक्षे ।

श्यै गतौ भ्वा० आ० सक० अनिट् । श्यायते अश्यास्त ।

श्यैनम्पाता स्त्री० श्येनस्य पातो यत्र अम् मुम् च । मृगयायाम्

श्यो(शो)नाक पु० श्यै-ना(णा)क । (शोणा) क्षुपभेदे ।

श्रक सर्पणे भ्वा० आ० सक० सेट् इदित् । श्रङ्कते अश्रङ्किष्ट ।

श्रग गतौ भ्वा० पर० सक० सेट् इदित् । श्रङ्गति अश्रङ्गीत् ।

श्रण दाने भ्वा० पर० सक० सेट् । श्रणति अश्राणीत् अश्रणीत् घटादि० श्रणयति ।

श्रण दाने चु० उ० सक० सेट् । श्राणयति ते अशिश्रणत् त ।

श्रत् अव्य० श्री-डति । श्रद्धायाम् । [अशिश्रथत् त ।

श्रथ यत्ने अक० प्रतिहर्षे सक० चु० उभ० सेट् । श्राथयति ते

श्रथ दौर्बल्ये अ० चु० उभ० अक० सेट् । श्रथयति ते अशश्रथत् त ।

श्रथ वधे भ्वा० पर० सक० सेट् । श्रथति अश्रथीत् अश्राथीत् ।

श्रथ यत्ने मोक्षे वधे च वा चु० उभ पक्षे भ्वा० पर० सक० सेट् । श्राथयति ते श्रथति अशिश्रथत् त अश्रथीत्-अश्राथीत् ।

श्रथ शैथिल्ये अक० तत्करणे सक० भ्वा० आ० सेट् इदित् । श्रन्थते अश्रन्थिष्ट ।

श्रथन न० श्रथ-ल्युट् । वधे यत्ने प्रतिहर्षे च ।

श्रद्धा स्त्री श्रत्-धा अङ् । आदरे, गुरुवेदान्तवाक्यादिषु विश्वासे, स्पृहायां, शुद्धौ, चित्तप्रसादे प्रत्ययो 'धर्मकार्य्येषु सा श्रद्धेत्यभिधीयते' इति स्मृत्युक्ते धर्मकार्य्येषु प्रत्यये च । [त्रि०

श्रद्धालु स्त्री० श्रद्धा+आलुच् । स्पृहावत्यां स्त्रियाम् श्रद्धायुक्ते

श्रन्थ श्रन्थने वधे च वा चु० उ० पक्षे भ्वा० प० सक० सेट् । श्रन्थयति-ते श्रन्थति अशश्रन्थत् त अश्रन्थीत् ।

श्रन्थ मोचने प्रतिहर्षे च क्र्या० प० सक० सेट् । श्रथ्नाति अश्रन्थीत्

श्रन्थन न० श्रन्थ-ल्युट् । श्रन्थने ।

श्रपित त्रि० पु० श्रा क्त-णिच्-पुक् ह्रस्वश्च । पक्वे ।

श्रम तपसि, आयासे खेदे च अक० भ्वा० शमादि० प० सेट् क्त्वावेट् । श्राम्यति अश्रमत् अश्रमीत् । श्रान्त्वा श्रमित्वा । [भ्यासे च

श्रम पु० श्रम-घञ् न वृद्धिः । तपसि, खेदे, आयासे, शस्त्रा-

श्रमण पु० श्रम-युच् । यतिभेदे । भिक्षाजीविनि त्रि० । जटामांस्यां, मुण्डीर्य्यां, शरीरभेदे, सुदर्शनायां स्त्रियां च स्त्री०

श्रमिन् त्रि० श्रम-इनि । श्रमयुक्ते ।

श्रम्भ प्रमादे भ्वा० आ० अक० सेट् । श्रम्भते अश्रम्भिष्ट ।

श्रय पु० श्रि-अच् । आश्रये । ल्युट् । तत्रैव न० ।

श्रव पु० श्रूयतेऽनेन श्रु-अप् । कर्णे, ख्यातौ च ।

श्रवण न० श्रूयतेऽनेन श्रु-ल्युट् । कर्णे शब्दग्राहकेन्द्रियभेदे भावे ल्युट् । श्रुतौ । अश्विन्यादिषु द्वाविंशे नक्षत्रे पुं० स्त्री० क्लीवत्वमपि 'अमार्कपाते श्रवणं यदि स्यादिति' स्मृतिः । मुण्डीरिकावृक्षे स्त्री० ।

श्रवणद्वादशी स्त्री० श्रवणेन युक्ता द्वादशी शाक० । 'भाद्र

भाद्रपदे शुक्ले द्वादशी श्रवणान्विते'त्युक्तायां भाद्रशुक्लद्वादश्याम । [द्रव्यम । श्रावणीद्रव्ये ।

**श्रवणशीर्षिका** स्त्री श्रवणमिव शीर्षमस्या कप् अत

**श्रविष्ठा** स्त्री श्रूयते श्रु अप् श्रवः यशस्विरस्त्यस्याः मतुप् अतिशयेन श्रववती इष्ठन् मतुपो लुक् । धनिष्ठानक्षत्रे ।

**श्रविष्ठाज** पु० श्रविष्ठानक्षत्रे जायते जन ड । बुधग्रहे ।

**श्रवस्** न० श्रूयतेऽनेन श्रु-असि । कर्णे । कर्णेऽपि धनि । कीर्त्तौ ।

**श्रा** विक्लृत्तौ अदा०प०अनिट् । श्राति अश्रासीत् । [श्रपयति

**श्रा** पाके अदा० प०सक अनिट् घटा० । श्राति अश्रासीत्

**श्राण** त्रि० श्रा क्त । पक्वे । यवाग्वां स्त्री० ।

**श्राद्ध** न० श्रद्धा हेतुत्वेनास्त्यस्य अण् । 'श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते' इत्युक्ते पित्रादिभ्य श्रद्धया देये द्रव्ये अस्त्यर्थे अण । श्रद्धायुक्ते त्रि० । [भेदे च ।

**श्राद्धदेव** पु० श्राद्धदेशस्य पितॄणां देव शाक० । यमे, मनु

**श्राद्धदेवता** स्त्री श्राद्धे देवता त्यक्तद्रव्यस्योद्देश्या । 'पितरः श्राद्धदेवता' इति स्मृत्युक्तेषु पितृषु ।

**श्राद्धशाक** न श्राद्धयोग्यं शाकम् । कालशाके ।

**श्राद्धिक** त्रि० श्राद्धे देयं श्राद्धं तद्द्रव्यं भक्ष्यत्वेनास्त्यस्य वा ठन् । श्राद्धदेये भक्ष्ये, श्राद्धदेयद्रव्यभोक्तरि च ।

**श्राद्धिन्** त्रि० श्राद्धं तद्द्रव्यं भक्ष्यत्वेनास्त्यस्य इनि । श्राद्धदेयान्नभोक्तरि ।

**श्रान्त** त्रि० श्रम क्त । श्रमयुक्ते, शान्ते, जितेन्द्रिये च ।

**श्रान्तसवाह** न० श्रान्तस्य श्रमस्य सवाह दूरीकरणम् । पादाद्यसमर्दिना श्रमनिवारणे ।

**श्राम** मन्त्रणे अ चु उभ सक सेट् । श्रामयति ते अशश्रामत् त

**श्रावण** पु० श्रवणेन युक्ता पौर्णमासी श्रावणी साऽस्मिन् मासि अण् । वैशाखादिषु चतुर्थे चान्द्रे मासि उपचारात् कर्कटस्थरविके सौरमासे, पाषण्डे च श्रवणेन कर्णेन निर्वृत्त अण् । कर्णसाध्ये प्रत्यक्षभेदे । श्रवणनक्षत्रेण युक्ता पौर्णमासी अण् । चान्द्रश्रावणमासीयपौर्णमास्यां स्त्री ङीप् । (मुण्डरीति) द्रव्यभेदे च ।

**श्रावणिक** पु श्रावणी श्रवणनक्षत्रयुक्ता पूर्णिमाऽस्त्यस्मिन् मासे ठन् । चान्द्रश्रावणमासे ।

**श्रावन्ती** स्त्री श्रु णिच् शतृ ङीप् । धर्म्मपत्तनाख्ये नगरीभेदे

**श्रि** सेवने भ्वा उ सक सेट् । श्रयति ते अशिश्रियत् त ।

**श्रित** त्रि० श्रि क्त । सेविते आश्रिते च ।

**श्रिय** दाहे भ्वा पर०सक०सेट् क्त्वा वेट् । श्रेयति अश्रेयीत् ।

**श्री** पाके क्र्या०उ०सक० अनिट् । श्रीणाति श्रीणीते अश्रैषीत्

**श्री** स्त्री० श्रि क्विप नि० । लक्ष्म्यां लवङ्गे, शोभायां भारत्यां वेशरचनायां, सरलद्रुमे, धर्म्मार्थकामेषु सम्पत्तौ, प्रकारे, उपकरणे, बुद्धौ, विभूतौ, अधिकारे, प्रभायां कीर्त्तौ वृद्धौ सिद्धौ, कमले, बिल्वद्रुमे वृद्धिनामौषधौ, 'देव गुरु गुरुस्थान चैव क्षेत्राधिदेवताम् । सिद्ध सिद्धाधिकारांश्च श्रीपूर्वं समुच्चरेत्' इत्युक्तेषु देवादीनां नाम्नामाद्यवयवोपाधिभेदे च । रागभेदे पु० ।

**श्रीकण्ठ** पु श्री शोभा कण्ठेऽस्य शिवे, तेनस्य कण्ठवह्निदाने शोभाधिक्यात्तस्य । हस्तिनापुरस्य उत्तरपश्चिमस्थे कुरुजाङ्गलाख्ये देशे च । [कर्कट्याम् ।

**श्रीकन्दा** स्त्री० श्री शोभा तया युक्त कन्दोऽस्याः । वन्ध्या-

**श्रीकर** न श्रियं शोभां करोति कृ अच् । रक्तोत्पले विष्णौ दायनिबन्धकारके पण्डितभेदे च । शोभाकारके त्रि ।

**श्रीकान्त** पु ६त० विष्णौ । श्रीनाथश्रीपत्यादयोऽप्यत्र ।

**श्रीखण्ड** न श्रियं शोभायाः खण्ड इव यत्र । चन्दने ।

**श्रीगर्भ** पु० श्रीर्गर्भेऽस्य । विष्णौ, खड्गे च 'श्रीगर्भो विजयस्य वेति खड्गनामानकम् ।

**श्रीग्रह** पु०श्रिय ग्रह इव यत्र । पक्षिणां पानीयपात्राधारे

**श्रीघन** पु० श्रिया युक्तः घन । बुद्धभेदे । दध्नि न० ।

**श्रीचक्र** न श्रिया चक्र यन्त्रभेद । 'बिन्दुत्रिकोणवसुकोणदशारयुग्म मन्वस्त्रनागदलसङ्कुलषोडशारम् । वृत्तत्रयञ्च धरणीसदनत्रयञ्च श्रीचक्रमेतदुदित परदेवतायाः' इति तन्त्रोक्ते त्रिपुरासुन्दरीपूजाङ्गे यन्त्रभेदे ।

**श्रीज** पु० श्रियो जायते जन-ड । कामदेवे । श्रीनन्दनादयोऽप्यत्र

**श्रीताल** पु० श्रीयुक्तस्तालः । तालद्रुमतुल्ये द्रुमभेदे ।

**श्रीद** पु श्रियं धनं ददाति दा क । कुबेरे । धनदातरि त्रि ।

**श्रीधर** पु० श्रियं धरति धृ अच् । विष्णौ 'अतिशुद्धं दिव्यरत्नं वनमालाविभूषितम् । श्रीधर देवि । विज्ञेय'मित्युक्ते शालग्रामशिलाभेदे न० ।

**श्रीनिकेतन** पु श्रियः 'भक्तेषयति नितरां वासयति नि+कित णिच ल्यु । विष्णौ । इत । श्रीवास्त्वे न० ।

**श्रीनिवास** पु० निवसत्यस्मिन् नि+वस घञ् ६त० । विष्णौ

**श्रीपथ** पु० श्रीयुक्तः पन्थाः । राजपथे ।

**श्रीपर्ण** न श्रीर्लक्ष्मी पर्णे दले यस्य । पद्मे । श्रीयुक्तं पर्णमस्य अग्निमन्थवृक्षे पु० । [द्रव्यम् । कट्फलवृक्षे ।

**श्रीपर्णिका** स्त्री० श्रीयुक्तं पर्णमस्याः स्वार्थे कन् अत

**श्रीपर्णी** स्त्री श्रीयुक्तानि पर्णानि यस्याः ङीष् । गाम्भारीवृक्षे, कट्फलवृक्षे, शाल्मलीवृक्षे अग्निमन्थवृक्षे च ।

श्रीपिष्ट पु० श्रियं शोभायै पिष्यते पिष-क्त । सरलद्रवरसे ।
श्रीपुत्त्र पु० ६त० कामदेवे श्रियः पुत्रो भ्राता सहजत्वात् । अश्वे, उच्चैःश्रवसि च ।
श्रीपुष्प न० श्रीयुक्तं पुष्पम् । लवङ्गे । पद्मकाष्ठे च ।
श्रीफल पु० श्रीयुक्तं फलमस्य । बिल्ववृक्षे राजादन्यां च ।
श्रीभद्रा स्त्री० श्रीयुक्त भद्रमस्या । भद्रमुस्तके ।
श्रीभागवत न० श्रीयुक्तं भागवतम् । अष्टादशपुराणेषु मध्ये द्वादशस्कन्धयुक्ते अष्टादशसाहस्रे व्यासप्रणीते पुराणे ।
श्रीभ्रातृ पु० श्रियः लक्ष्म्या भ्राता अनुजत्वात् । अश्वे, चन्द्रे च ।
श्रीमत् पु० श्रीरस्त्यस्य मतुप् । तिलकवृक्षे, अश्वत्थवृक्षे, विष्णौ, शिवे, कुकुरे च । शोभायुक्ते त्रि० स्त्रियां ङीप् सा च राधिकायाञ्च । [ड । धूम्रपत्त्रायां लतायाम् ।
श्रीमलापहा स्त्री० श्रिया शोभया मलमपहन्ति अप+हन-
श्रीमूर्त्ति स्त्री० श्रीपूर्व्वककथनयोग्या मूर्त्तिः । देवताप्रतिमायाम् ।
श्रीरङ्गपत्तन न० श्रिया रङ्गस्य पत्तनमिव । दक्षिणस्थे देशभेदे
श्रीरस पु० श्रिये रसोऽस्य । श्रीवेष्टे गन्धद्रव्ये ।
श्रीराग पु० श्रीशब्दयुक्तो रागः । दशरथात्मजे नृपभेदे ।
श्रील त्रि० श्री+अस्त्यर्थे लच् । शोभायुक्ते सम्पदादियुक्ते च ।
श्रीलता स्त्री० श्रीयुक्ता लता । महाज्योतिष्मत्यां लतायाम् ।
श्रीवत्स पु० वदति महत्त्वं वद्-स श्रीयुक्तो वत्सः । महत्त्वलक्षणश्वेतरोमावर्त्तविशेषे । स अस्त्यस्य अच् । विष्णौ ।
श्रीवत्सक पु० श्रीवत्सः चिह्नभेदः तेन कायति कै-क । हृदयस्थश्वेतरक्ताकारलोमयुक्ते अश्वभेदे ।
श्रीवत्सभृत् पु० श्रीवत्सं बिभर्त्ति भृ-क्विप् । विष्णौ ।
श्रीवत्सलाञ्छन पु० श्रीवत्सो लाञ्छनं यस्य । विष्णौ । श्रीवत्साङ्कादयोऽप्यत्र । [वराहावतारे ।
श्रीवराह पु० श्रिया युक्तो वराहः विष्णोर्दशस्ववतारेषु
श्रीवाटी स्त्री० श्रिया वाटीव । नागवल्लीभेदे ।
श्रीवारक पु० श्रियं वारयति कामयते ण्वुल् । शितावरके ।
श्रीवास पु० श्रियै वासः सौरभमस्य । सरलद्रवरसे (टारपिन्)
श्रीवासस् न० श्रियै वासयति वस-णिच् असि । सरलद्रवरसे
श्रीविद्या स्त्री० श्रियै त्रिवर्गाय विद्या । त्रिपुरासुन्दर्याम् ।
श्रीवृक्ष पु० श्रिय शोभायाः वृक्ष इव । अश्वस्य हृदयस्थे श्वेतरोमावर्त्तभेदे । [(तारपिन) ।
श्रीवेष्ट पु० श्रियै वेष्ट्यतेऽसौ वेष्ट-घञ् । सरलद्रवनिर्यासे
श्रीश पु० ६त० । विष्णौ ।
श्रीसहोदर पु० ६त० । चन्द्रे, उच्चैःश्रवसि अश्वे च ।
श्रीहस्तिनी स्त्री० श्रीयुक्ता हस्तिनी । (हातिशुंडा) वृक्षभेदे
श्रु गतौ भ्वा० पर० सक० अनिट् । श्रवति अश्रौषीत् ।
श्रु श्रवणे स्वा० पर० सक० अनिट् । शृणोति अश्रौषीत् ।
श्रु(स्रु)घ्निका स्त्री० श्रु(स्रु)घ्नः देशभेदः आकरत्वेनास्त्यस्य ठन् । सर्ज्जिकाक्षारे ।
श्रुत न० श्रूयते श्रु-क्त । शास्त्रे, तच्छ्रवणे च 'श्रुतान्वित' इति भट्टिः । श्रवणेन स्वीकृते, आकर्णिते च त्रि० ।
श्रुतकीर्त्ति स्त्री० । कुशध्वजकन्यायां शत्रुघ्नपत्न्याम् । श्रुता विख्याता कीर्त्तिरस्य । विख्यातयशसि त्रि० ।
श्रुतदेवी स्त्री० श्रुतस्य शास्त्रस्य देवी । सरस्वत्याम् ।
श्रुतबोध पु० श्रुत-मात्रं बोधयति बुध-णिच्-अच् । कालिदासकृत छन्दोग्रन्थभेदे ।
श्रुतश्रवस् पु० श्रुतं श्रवो यशोऽस्य । शिशुपालपितरि 'निर्वर्त्तितेतरि क्रियया स श्रुतश्रवसः सुत' इति माघः ।
श्रुति स्त्री० श्रु-क्तिन् । कर्णे, श्रवणेन्द्रियजन्ये, ज्ञाने, वेदे च । अङ्कशास्त्रोक्ते त्रिभुजक्षेत्रादौ भुजकोट्यो र्भुज्यमानरेखाभेदे च । [कठोरवर्णविशेषरूपे काव्यदोषभेदे ।
श्रुतिकटु पु० श्रुतौ श्रवणे कटु कठोरः । अलङ्कारोक्ते
श्रुतिजीविका स्त्री० श्रुतिं जीवयति मूलतयानुसरति जीव-ल्युट् । स्मृतिशास्त्रे । [श्रवणमात्रेण धारणायुक्ते ।
श्रुतिधर त्रि० श्रुत्या श्रवणमात्रेण धरति धारयति धृ-अच् ।
श्रुतिमूल न० श्रुतिरेव मूलं धर्मप्रामाण्ये कारणम् । वेदरूपे धर्मबोधनप्रमाणे ६त० । यज्ञादौ, वेदशास्त्रबोधिते धर्मादौ च ६त० । कर्णमूले ।
श्रुतिवर्ज्जित त्रि० श्रुत्या वेदाध्ययनेन कर्णेन वा वर्ज्जितः वृज-क्त । वेदपाठहीने बधिरे च । [भेदे ।
श्रुतिवेध पु० श्रुतेः कर्णस्य वेधो यत्र । कर्णवेधाख्ये संस्कार
श्रुतिस्फोटा स्त्री० श्रुताविव पत्त्रे स्फोटो यस्याः । कर्णस्फोटालतायाम् । [ङ्कारोक्ते शब्दालङ्कारभेदे ।
श्रुत्यनुप्रास पु० श्रूयते इति श्रुतिः शब्दस्तस्यानुप्रासः । अल-
श्रुत्युक्त त्रि० श्रुतौ वेदे उक्तः विहितः । वेदविहिते धर्मादौ ।
श्रु(स्रु)वा स्त्री० श्रु(स्रु) क । स्रुचायां यज्ञपात्रभेदे । [वृक्षे ।
श्रु(स्रु)वावृक्ष पु० श्रु(स्रु)-वार्थो वृक्षः । (वइचि) विकङ्कत
श्रेढी स्त्री० श्रेण्यै राशीकरणाय ढौकते ढौक ड टि गौ० ङीप् । भिन्नजातीयद्रव्याणां मिश्रकरणाय अङ्कशास्त्रोक्ते गणनाप्रकारभेदे ।
श्रेढीव्यवहार पु० श्रेढ्या व्यवहारः । श्रेढीगणनार्थे लीलावत्युक्ते उपायभेदे ।
श्रेणि(णी) स्त्री० श्रि-नि वा ङीप् । छिद्ररहितायां पङ्क्तौ ।

श्वठ दुर्वचने अद०चु०उभ सक०सेट् । श्वठयति ते अशश्वठत् त
श्वदंष्ट्रक पु० शुनो दंष्ट्रेव कण्टकोऽस्य कन् । गोक्षुरे क्षुपे ।
श्वदंष्ट्रा स्त्री० शुनोदंष्ट्रेव कण्टकाढ्यत्वात् । गोक्षुरे क्षुपे ।
श्वधूर्त्त पु० श्वेव शुनां वञ्चनार्थं वा धूर्त्तः । शृगाले ।
श्वन् पु०श्वि-कनिन् नि०। कुक्कुरे तज्जातिस्त्रियां ङीप् शुनी ।
श्वनिशा न० स्त्री० शुनां कुक्कुराणां निशा वा ह्रस्वः । कक्कु-
रमाटकरात्रौ । [चण्डाले ।
श्वपच पु० श्वानः पच्यन्ते यैः भोजनाय पच-घञर्थे क ।
श्वपाक पु० श्वानं पचति कर्त्तरि घञ् । चण्डाले ।
श्वफल पु० शुनः प्रियं फलमस्य । बीजपूरवृक्षे ।
श्वफल्क पु० । वृष्णिवंश्ये अक्रूरपितरि नृपभेदे ।
श्वभीरु पु० श्वभ्यो भीरुः । शृगाले । [ति अशश्वभ्रत् त ।
श्वभ्र गतौ छिद्रकरणे सक०टौ स्वो अक० चु०उ०सेट् । श्वभ्रयति
श्वभ्र न० श्वभ्र-घञ् । छिद्रे ।
श्वयथु पु० श्वि-अथुच् । शोथे ।
श्वल वेगे भ्वा०पर०अक० सेट् । श्वलति अश्वालीत् ।
श्वल्क भाषणे चु०उ०सक०सेट् । श्वल्कयति ते अशश्वल्कत् त ।
श्वल्ल वेगे भ्वा०प०अक०सेट् । श्वल्लति अश्वल्लीत् ।
श्ववृत्ति पु० शुन इव पराधीना वृत्तिः । दास्ये 'न श्ववृत्त्या
कदाचने'ति स्मृतिः ।
श्वशुर पु० शु आशु अश्नुते आशु+अश-उरच् पृ० । पत्युः
पितरि, भार्य्यायाः पितरि च ।
श्वशुर्य्य पु० श्वशुरस्यापत्यम् यत् । देवरे, श्याले च ।
श्वश्रू स्त्री० श्वशुरस्य पत्नी ऊङ् उकाराकारलोपश्च । श्वशुर-
भार्य्यायाम् ।
श्वस् अव्य० आगामि अह्न पृ० नि० । आगामिनि दिवसे ।
श्वस जीवने अदा०अचा०प०सक०सेट् । श्वसिति अश्वसीत् ।
श्वस स्वप्ने अदा०प०अक० वैदिकयोयम् । श्वस्ति अश्वसीत् ।
श्वसन पु० श्वसित्यनेन श्वस-ल्युट् । वायौ, मदनवृक्षे च । भावे
ल्युट् । निश्वासे न० ।
श्वसनेश्वर पु० श्वसनो वायुरीश्वरोऽस्य । अर्ज्जुनवृक्षे ।
श्वसित न० श्वस-क्त । निश्वासे,मुखनासिकाभ्यां बहिर्गमनशीले
हृदयस्थप्राणवायौ ।
श्वसुन पु०श्वस-उनन् । (कुकुरशोङ्का) वृक्षे । [वस्तनि ।
श्वस्तन त्रि० श्वोभवः श्वस्+ट्युल् तुट् च । भाविदिनस्थायि-
श्वस्त्य त्रि० श्वोभवः श्वस्+त्यप् । भाविदिनस्थायिवस्तुनि ।
श्वागणिक पु० श्वगणेन चरति ठक् नि० दो० । कुक्कुरादिना
मृगयाकर्त्तरि व्याधे ।

श्वादन्त त्रि० शुन इव दन्तोऽस्य दी० । कुक्कुरतुल्यदशने ।
श्वान पु० श्वेव अण् । कुक्कुरे तज्जातिस्त्रियां ङीप् ।
श्वापद पु० शुन इवापदस्मात् अच् । हिंस्रपशौ, व्याघ्रे च ।
श्वाविध् पु० शुना आविध्यते आ-व्यध् क्विप् 3त० । शल्यके ।
(सजारु) क । श्वाविधोऽप्यत्र पु० ।
श्वास पु० श्वस-घञ् । वायौ, कासरोगभेदे, शिक्षोक्ते वर्णो-
च्चारणार्थे वाह्यप्रयत्नभेदे च । [प्राणव्यापारे ।
श्वासधारण न० श्वासः प्राणवायुः ध्रियतेऽनेन । प्राणा-
श्वासारि पु० श्वासस्य रोगभेदस्यारिः नाशकत्वात् । पुष्करमूले
श्वि गतौ सक०वृद्धौ अक०भ्वा०प०यजा०सेट् । श्वयति अशि-
श्वत्-अश्वयीत्-अश्वत् । [अश्वितत् अश्वेतिष्ट ।
श्वित शुक्लतापादने भ्वा०आ०लुङि उ० सक० सेट् । श्वेतते
श्वित्र न० श्वित-रक् । श्वेतकुष्ठभेदे (धवल) । [(विकृती) ।
श्वित्रघ्नी स्त्री० श्वित्रं हन्ति हन-ट ङीप् । पीतपर्ण्याम्
श्वित्रिन् त्रि० श्वित्रमस्त्यस्य इनि । श्वेतकुष्ठयुक्ते ।
श्विद शुक्लतापादने भ्वा० आ० सक०सेट् इदित् । श्विन्दते
अश्विन्दीत् ।
श्वेत पु० श्वित-अच् घञ् वा । द्वीपभेदे, पर्व्वतभेदे, कपर्दके,
शुक्रग्रहे, शङ्खे, शुभ्राभ्रे, जीरके, शुक्लवर्णे च । तद्वति
त्रि० । रौप्ये न० । स्वार्थे कन् । रौप्ये न० । वराटके पु० ।
श्वेतकण्टकारी स्त्री० कर्म० । शुभ्रवर्णकण्टकारिकायाम् ।
श्वेतकन्दा स्त्री०श्वेतः कन्दोऽस्याः । अतिविषायाम् (आतइच्)
श्वेतकुञ्जर पु० कर्म० । ऐरावतगजे, श्वेतगजमात्रे च श्वेत-
गजादयोऽप्यत्र ।
श्वेतकुश पु० कर्म० । शुक्लवर्णे कुशभेदे ।
श्वेतकेतु पु० कर्म० । केतुग्रहभेदे, सामवेदप्रसिद्धे ऋषिभेदे च ।
श्वेतकेश पु० श्वेतः केश इव यस्य । रक्तशिग्रौ । शुक्लवर्णकेश-
वति वृद्धे त्रि० । कर्म० । शुक्ले केशे पु० ।
श्वेतखदिर पु० कर्म० । शुक्ले खदिरभेदे ।
श्वेतगरुत् पु० श्वेतोगरुदस्य । हंसे । शुक्लपक्षयुक्ते त्रि० ।
श्वेतगुञ्जा स्त्री० कर्म० । शुभ्रगुञ्जायां टा० अदन्तोऽप्यत्र ।
श्वेतचिल्ली स्त्री० कर्म० । शाकभेदे, (शादाचिरुह) ।
श्वेतच्छद पु० श्वेत. छद पक्षोऽस्य । हंसे । शुक्लपक्षयुक्ते त्रि० ।
श्वेतजीरक पु० कर्म० । शुक्लजीरके । [क्षारभेदे ।
श्वेतटङ्कण न० कर्म० । शुक्लटङ्कणे मालतीनदीतीरसम्भवे
श्वेतदूर्व्वा स्त्री० कर्म० । शुक्लदूर्व्वायाम् ।
श्वेतद्वीप पु० कर्म्म० । वैकुण्ठाख्यविष्णुधाम्नि, द्वीपभेदे च ।
श्वेतधातु पु० कर्म० । खटिकायाम्, शुक्लवर्णधातुद्रव्ये च ।

सेट्। सट्टयति ते असषट्टत् त।

**षट्तिलिन्** पु॰ षट् तिला तिलोद्वर्त्तनादयः कर्म्माण्यस्य। 'तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलप्रदः। तिलभुक् तिलवापी च षट्तिली नावसीदति' इत्युक्ते तिलोद्वर्त्तनादिकारिणि

**षट्त्रिंशत्** स्त्री॰ षडधिका त्रिंशत् शाक॰। (छत्रिश) सङ्ख्याभेदे तत्सङ्ख्यान्विते च।

**षट्पञ्चाशत्** स्त्री॰ षडधिका पञ्चाशत् शाक॰। (छाप्पान्न) सङ्ख्याभेदे, तत्सङ्ख्यान्विते च। [भ्रमरप्रियत्वम्

**षट्पदप्रिय** पु॰ ६त॰। नागकेशरे तस्य हि मधुरत्वात्

**षट्पदातिथि** पु॰ षट्पदः अतिथिरिव यस्य। आम्रवृक्षे।

**षट्पदानन्दवर्द्धन** पु॰ षट्पदस्यानन्दं वर्द्धयति वृध-णिच्-ल्यु उप॰। अशोकवृक्षे।

**षट्पदी** स्त्री॰ षट् पादा अस्याः पादस्य पद्भावः ङीपि पद्भावः। यूकायां, भ्रमर्य्यामिति स॰ द्विगु। षट्चरणयुक्ते छन्दोभेदे च। षट् श्लोकात्मकपद्यसंघाते।

**षट्प्रज्ञ** पु॰ षट्सु प्रज्ञा यस्य। 'धर्मार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि। षट्सु प्रज्ञा तु यस्यासौ षट्प्रज्ञः परिकीर्त्तितः' इत्युक्ते धर्मार्थाद्यभिज्ञे बौद्धे।

**षडङ्ग** न॰ षण्णामङ्गानां समाहारः पात्रा॰। 'जङ्घे बाहू शिरो मध्यं षडङ्गमिदमुच्यते' इत्युक्ते देहावयवभेदे तन्त्रोक्ते हृदयाद्यवयवभेदे यत्र हृदयादिषु षट्सु अङ्गेषु मन्त्रविशेषो न्यस्यते तेषु। षट् अङ्गानीव यस्य। 'शिक्षाकल्पो व्याकरणं निरुक्तं छन्दसां चितिः। ज्योतिषामयनञ्चैव षडङ्गो वेद उच्यते' इत्युक्ते वेदे, क्षुद्रगोक्षुरक्षुपे च पु॰।

**षडभिज्ञ** पु॰ षट् अभिज्ञा 'दिव्यं चक्षुः श्रोत्रं, परचित्तज्ञानं पूर्व्वनिवासानुस्मृतिः, आत्मज्ञानम्, वियद्गतिः कायव्यूहसिद्धिश्चेत्येतानि अभिज्ञा अभिज्ञायमानानि यस्य। बौद्धभेदे।

**षडशीति** स्त्री॰ षडधिका अशीति शाक॰। (छेयाशि) सङ्ख्याभेदे, तत्सङ्ख्यान्विते च। षडशीतिमुखवत्सु मिथुनकन्याधनुर्मीनेषु रवेः संक्रान्तौ च 'अयनविषुवपदी षडशीतयो विषुवविष्णुपदीषडशीतय इति ज्योतिषम्।

**षडशीतिमुख** न॰ षडशीतेः तन्नामसंक्रान्तेः मुखम्। 'तुलादिषडशीत्यह्नां षडशीतिमुखम् क्रमात्। तच्चतुष्टयमेव स्यात् द्विस्वभावेषु राशिषु' इति षड्विंशे धनुषो भागे, द्वाविंशेऽनिमिषस्य च मिथुनाष्टादशे भागे कन्यायास्तु चतुर्द्दशे, इति सूर्य्यसिद्धान्तोक्ते तुलादितः षडशीतिदिनान्तरितकाले।

**षडानन** पु॰ षट् आननानि यस्य। कार्त्तिकेये षड्वदनादयोऽप्यत्र

**षडूर्म्मि** पु॰ षट् ऊर्म्मय ऐश्वर्य्याणि यस्य। षड्विधैश्वर्य्ये परमेश्वरे

**षड्गव** त्रि॰ षड्भिर्गोभिरायुक्तं शकटं हलो वा शाक॰ अच् समा॰। षड्भिर्गोभिराक्रष्टे हलादौ 'अष्टागवं धर्म्यहलं षड्गवं जीविकार्थिना'मिति स्मृतिः। षण्णां गवां समाहारः द्विगुः। षट्सु गोषु न॰।

**षड्गुण** पु॰ षड्भिः गुणिता गुणाः श॰क॰। राज्ञां सन्ध्यादिषु षट्सु गुणेषु। [षड्यान, मधाकरस्ते च।

**षड्ग्रन्था** स्त्री॰ ग्रन्थ ग्रन्थि॰ षट् ग्रन्था अस्याः। वचायां

**षड्ग्रन्थि** न॰ षट् ग्रन्थयोऽस्य। पिप्पलीमूले, षट्पर्वयुक्ते त्रि॰ शठ्यायां कन्। शथां स्त्री॰ टाप्। अत इत्वम् वा ङीप् वाचायां स्त्री॰।

**षड्ज** पु॰ षड्भ्यो नासादिस्थानेभ्यो जायते जन-ड। 'नासाकण्ठमुरस्तालु जिह्वा दन्तांश्च संश्रितः। षड्भ्यः संजायते यस्मात् तस्मात् षड्ज इति स्मृतः' इत्युक्ते स्वरभेदे 'षड्जसंवादिनी केका' इति रघुः।

**षड्दीर्घ** पु॰ षड्भिर्गुणिता दीर्घाः। तन्त्रोक्तेषु आ, ई, ऊ, ऐ, औ, अः इत्येवं रूपेषु षट्सु दीर्घेषु।

**षड्धा** अव्य॰ षष्+प्रकारे धाच्। षट्प्रकारे।

**षड्भुजा** स्त्री॰ षट् भुजा इव यस्या (खरमुज) फललताभेदे षड्हस्तयुक्ते त्रि॰।

**षड्रस** न॰ षण्णां रसानां समाहारः पा॰। 'मधुरो लवणस्तिक्तः कषायोऽम्ल कटुस्तथे'त्युक्तेषु 'मधुरं लौल्यमित्याद्धरिस्ताटौ स च लक्ष्यते। लवणस्तु पटुः प्रोक्तः सैन्धवादौ स दृश्यते। तिक्तस्तु पिचुमर्द्दादौ व्यक्तमास्वाद्यते रसः। कषायस्तुवरस्तुक्तः स च पूगीफलादिषु। कटुस्तु तीक्ष्णसंज्ञः स्यात् मरीचादौ स चेष्यते' इत्युक्तस्थानेषु लक्ष्येषु षट्सु रसेषु।

**षड्वर्ग** पु॰ ६त॰। 'कामक्रोधलोभमोहमदमात्सर्य्येषु 'त्यजेत् षड्वर्गमिति भट्टिः। 'चेत्रं होरा च तद्रेक्काणं नवांशद्वादशांके। त्रिंशांशकश्चेति विज्ञैः षड्वर्गः समुदाहृतः' इति ज्योतिषोक्तेषु क्षेत्रादिषु षट्सु विस्तरो वृहदभिधाने।

**षण** संभक्तौ भ्वा॰ पर॰ सक॰ सेट्। दस्य सत्वे णस्य नत्वम्। सनति असनीत् असानीत्।

**षण** दाने तना॰ उभ॰ सक॰ सेट्। षस्य सत्वे णस्य नत्वम्। सनोति असनीत्-असानीत् असनिष्ट-असत।

**षण्(ष)ण्ड** पु॰ षण-ड डस्य नेत्त्वम् ष्टु॰णत्वं शत्वं वा। वृषे, नपुंसके, पद्मादिसमूहे पु॰न॰।

**षण्ढ** पु॰ षण-ढ तस्य नेत्त्वम् ष्टु॰ ष॰। नपुंसके।

षण्मुख पु॰ षट् मुखानि यस्य । कार्त्तिकेये ।
षद् गतौ चु॰उ॰सक॰सेट् । षादयति ते असीषदत् ।
षद् विषादे अक॰हिंसायां गतौ च सक भ्वा पर अनिट् ज्वला॰।
सीदति, असदत् । सद धात् ।
षन्च गतौ भ्वा पर सक॰सेट् । षञ्चति असञ्चीत् ।
षन्ज सङ्गे, सम्बन्धे च भ्वा पर सक अनिट् । सजति असाङ्क्षीत्
षप समवाये भ्वा पर॰सक॰सेट् । सपति असापीत् असपीत् ।
षम वैकल्ये चद॰चु उभ॰अक॰सेट् । समयति ते अससमत् त
षम्ब सम्बन्धे भ्वा पर॰सक॰सेट् । सम्बति असम्बीत् ।
षर्ज्ज अर्जने भ्वा॰पर॰सक सेट् । सर्ज्जति असर्ज्जीत् ।
षर्ब्ब अपानशब्दे भ्वा॰पर सक सेट् । सर्ब्बति असर्ब्बीत् ।
षर्ब(र्व) गतौ भ्वा॰सक॰सेट् । सर्ब(र्व)ति असर्बी(र्वी)त् ।
षल गतौ भ्वा॰पर सक॰सेट् । सलति असालीत् ।
षष् त्रि ब ब॰। षो क्विप् ष॰ । (छय)सङ्ख्याभेदे व्याकरणोक्ते
सङ्ख्यावाचके शब्दे शब्दे च अर्थे च । [सङ्ख्यान्विते च।
षष्टि स्त्री षड्गुणिता दशति नि॰ । (षाट्) सङ्ख्याभेदे, तद्-
षष्टिक पु षष्ट्या अहोभि पच्यते कन् । (षाटिया) धान्यभेदे
षष्टिक्य न षष्टिकधान्यस्य भवन क्षेत्रम् यत् । षष्टिकधान्योत्
पत्तियोग्ये क्षेत्रे । [स्त्रियां ङीप्
षष्टितम त्रि॰षष्टे पूरण तमट् । येन षष्टिसङ्ख्या पूर्य्यते तस्मिन् ।
षष्टिमत्त पु षष्टिवर्षेण मत्त । अर्द्धवयस्के गजे तदुत्तर हि
तस्य मत्ततायोग्यत्वात् तथात्वम् ।
षष्टिसवत्सर पु॰ ब॰ ब षष्टिगुणिता संवत्सरा । ज्योतिष-
प्रसिद्धेषु प्रभवादिषु षष्टौ वत्सरेषु तद्विशेषो तच्छब्दभिधाने ।
षष्टिहायन पु॰ षष्टिहायना वयोऽस्य । षष्टिवर्षवयस्के गजे
षष्टिदिनभक्ष्योहायनो व्रीहि शाक॰ । षष्टिकधान्य ।
षष्ठ त्रि षण्णा पूरण षष्+डट् थुक् च । येन षट्सङ्ख्या पूर्य्यते
तस्मिन् । स्त्रियां ङीप् । [षष्ठस्यरूपे अपकरे ।
षष्ठक त्रि॰ षष्ठो भाग कन् । षष्ठे भागे । [तत्षष्ठभागस्य
षष्ठांश पु॰ करे । रक्षणप्रतिरूपतया प्रजाभ्यो ग्राह्ये
षष्ठान्न त्रि॰ षष्ठो दिवसस्य षष्ठकाल अन्नस्य तद्भोजनस्य वा
कालो यस्य । दिवसस्य षष्ठभागे यावभोजनकालवति पुरुषे ।
षष्ठान्नकाल पु॰ षष्ठे दिवसे भक्ष्याशकालो यत्र । व्रतभेदे ।
षष्ठी स्त्री॰षण्णा पूरणी डट थुट ङीप् । चान्द्रस्य षष्ठकलाया
ह्रासवृद्धिरूपक्रियारूपे तिथिभेदे, स्कन्दभार्य्यारूपे मातृ
काभेदे, 'मातृकासु पूज्यतमा सा च षष्ठी प्रकीर्त्तिता ।
शिशूनां प्रति विश्वेषु प्रतिपालनकारिणी तपस्विनी
विष्णुभक्ता कार्त्तिकेयस्य कामिनीति पुराणम् ।

षस स्वप्ने अदा पर॰अक॰सेट् वैदिक । षस्ति असासीत् असमीत्
षस्ज सर्पणे भ्वा॰पर॰सक॰सेट् । सज्जति असज्जीत् । अयं
आत्मनेपदीत्यन्ये 'वचोऽपि षट्पादार नव पदेषु समसज्जत
इति शकुन्तला ।
षस्त स्वप्ने अदा॰लुपा पर अक॰सेट् वैदिक इदित् । सस्ते
असस्तीत् । [ते सहाति असीषहत् असहीत् ।
षह्न क्षमायां वा चु उभ॰पक्षे दि॰पर॰सक॰सेट् । साहयति
षह क्षमायां भ्वा॰आ सक॰सेट् ज्वला॰ । सहते असहीत् ।
षाड्गुण्य न॰ षड्गुणा एव ष्यञ् । राजा सन्धिविग्रहादिषु
षट्सूपायेषु षाड्गुण्यमुपभुञ्जत'इति माघ ।
षाण्मातुर पु षण्णा मातृणामपत्यम् अण् उदादेश रपर ।
कार्त्तिकेये तस्य कृत्तिकादिक, गङ्गा,पृथिवी पार्व्वती चेति
षट् मातर पुराणेषु प्रसिद्धा ।
षात्वणत्विक त्रि॰ षत्वणत्वे अधिकृत्य कृतो ग्रन्थ ठक् ।
षत्वणत्वप्रतिपादके ग्रन्थे ।
षाण्मासिक न॰ षष्ठे मासे भव ठञ् । मृतस्य एकाहीन
षण्मासे कर्त्तव्ये श्राद्धभेदे आद्य षाण्मासिके तथेति
स्मृति 'एकाहन्यूनषण्मासे तस्य विधानमि'ति कात्यायन
षाध सिद्धौ स्वा॰दि॰च पर॰अक अनिट् । साध्नोति साध्यति ।
असात्सीत् । [ते अससान्त्वत् त ।
षान्त्व सामयुक्तसम्पादने चद चु॰उभ॰सक सेट् । सान्त्वयति
षि बन्धे स्वा॰क्रया॰उभ॰सक अनिट् । सिनोति सिनुते सिनाति
सिनीते असैषीत् । असेष्ट । [चत् त । सेता
षिच आर्द्रीकरणे तु स उभ॰सक अनिट् । सिञ्चति त असिच-
षिट अनादरे भ्वा प॰सक॰सेट् । सेटति असेटीत् ।
षिङ्ग पु षिट-गन् ष ॥ विटे (लम्पट) धातुके । [असेलीत ।
षिध माङ्गल्ये अक शासने सक॰ वेट् । सेधति असैधीत्-
षिध गतौ भ्वा॰पर सक सेट् । सेधति असेधीत् क्त्वावेट् ।
षिध सिद्धौ दिवा प अक अनिट् क्त्वावेट् । सिध्यति असैत्सीत् ।
षिम्भ हिंसने सक शोभे अक॰भ्वा पर सेट् क्त्वावेट् । सिम्भति
असिम्भीत् । [असेलीत् ।
षिम हिंसने भ्वा प॰सक॰सेट् । सेमति असेमीत । [सिलति
षिल उञ्छतपस्स्थैलात् कणाश आदाने तुदा पर सक सेट् ।
षिव तन्तुविस्तारे दि प सक॰सेट् क्त्वावेट । सीव्यति असेवीत
षु (सुराभ्यावनरूपे)सन्धाने सोमादे पीडने मन्थने च स्वा उ
सक॰ स्नाने अक अनिट् लुङि प सेट् । सुनोति सुनुते
असावीत् असोष्ट । [असोष्ट ।
षु गतौ भ्वा॰आ सक अनिट् लुङि प॰वेट् । सवति असावीत्

षु प्रसवे ऐश्वर्य्ये च भ्वा॰पर॰सक॰अनिट् सवति असौषीत् ।

षु ऐश्वर्य्ये प्रसवे च अदा॰ पर॰ सक॰ वेट् लिटि सेट् । सौति असावीत्-असौषीत् । सुषुविव ।

षुट्ट अनादरे भ्वा॰चु॰उ॰सक॰सेट् । सुट्टयति ते असुषुट्टत् त

षुन्भ दीपने अ॰हिंसने स॰भ्वा॰प॰सेट् , सुम्भति असुम्भीत्

षुर दीप्तौ अक॰ऐश्वर्य्ये सक॰तु॰प॰ सेट् । सुरति असोरीत् ।

षुह तृप्तौ क्षमायाञ्च सक॰दि॰प॰सेट् । सुह्यति असुहत् ।

षू प्रसवे अदा॰आ॰सक॰सेट् । सूते असविष्ट ।

षू प्रसवे दि॰आ॰सक॰सेट् । सूयते असविष्ट-असोष्ट ।

षू क्षेपे तु॰प॰सक॰वेट् । सुवति असावीत् ।

षूद निवारणे भ्वा॰आ॰सक॰सेट् । सूदते असूदिष्ट ।

षूद मारणे भ्वा॰प॰सक॰सेट् । सूदति असूदीत् ।

षूद क्षरणे अक॰प्रतिज्ञायां निरासे च सक॰चु॰उ॰सक॰सेट् । सूदयति ते असूषुदत् । [दिष्ट

षूर स्तम्भे अक॰हिंसने सक॰दि॰आ॰सक॰सेट् । सूर्य्यते असू-

षूर्क्ष अनादरे भ्वा॰प॰सक॰सेट् । सूर्क्षति असूर्क्षीत् ।

षूर्क्ष्य ईर्षायां भ्वा॰प॰सक॰सेट् । सूर्क्ष्यति असूर्क्ष्यीत् ।

षूष प्रसवे भ्वा॰प॰सक॰सेट् । सूषति असूषीत् ।

षृन्भ हिंसने भ्वा॰प॰सक सेट् । सृम्भति असृम्भीत् ।

षृभ हिंसने भ्वा॰प॰सक॰सेट् । सर्भति असर्भीत् ।

षेक सर्पणे भ्वा॰आ॰सक॰सेट् चङि न ह्रस्वः । सेकति असेकीत्

षेल चालने गतौ च भ्वा॰पर॰सक॰सेट् चङि न ह्रस्वः । सेलति असेलीत् ।

षेव आराधने उपभोगे आश्रये च भ्वा॰उ॰सक॰सेट् चङि न ह्रस्वः । सेवति सेवते असेवीत् असेविष्ट ।

षै क्षये भ्वा॰प॰अक॰अनिट् । सायति असासीत् ।

षो नाशने अक॰दि॰प॰अनिट् । स्यति असात्-असासीत् ।

षोडत् पु॰ षट् दन्ता यस्य दन्तस्य दतृ नि॰ । षड्दन्तयोग्यवयस्के वृषादौ । [तत्सङ्ख्यान्विते च

षोडशन् त्रि॰ ब॰व॰ षडधिका दश नि॰ । (षोल) संख्याभेदे

षोडश पु॰ षोडशानां पूरणः डट् । येन षोडशसंख्या पूर्य्यते तस्मिन् । चन्द्रमण्डलस्य कलात्मके षोडशभागरूपकलायां, त्रिपुरासुन्दर्य्याञ्च स्त्री॰ ङीप् ।

षोडशक न॰ षोडश परिमाणमस्य कन् । षोडशसंख्याते वस्तुनि 'भूम्यासनं जलं वस्त्रं प्रदीपोऽन्नं ततः परम् । ताम्बूलच्छत्रगन्धाश्च माल्यं फलमतः परम् । शय्या च पादुका गावः काञ्चनं रजतं तथा । दानमेतत् षोडशकं प्रेतमुद्दिश्य दीयते' इति स्मृत्युक्तेषु भूम्यादिषु प्रेतोद्देशेन दीयमानेषु षोडशसु । 'स्वर्णं रौप्यं तथा ताम्रं कांस्यं गावो गजा हयाः । गृहं भूमिर्वृषो वस्त्रं शय्या छत्रमुपानहौ । दास्यन्नं पितृयज्ञेषु दानं षोडशकं मतमिति वायुपुराणोक्तेषु पितृकृत्येषु देयेषु स्वर्णादिषु षोडशसु च ।

षोडशमातृका स्त्री॰ ब॰व॰ षोडशसंख्या मातरः । 'गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः । शान्तिः पुष्टिर्धृतिस्तुष्टिः कुलदेवात्मदेवता' इत्युक्तासु गौर्य्यादिषु षोडशसु मातृकासु

षोडशाङ्ग पु॰ षोडश द्रव्याणि अङ्गान्यस्य । 'गुग्गुलु सरलं दारु पत्रं मलयमम्बुजम् । ह्रीवेरमगुरुं कुष्ठं गुडं सर्ज्जरसं घनम् । हरीतकी नखी लाक्षा जटामांसी च शैलजम् षोडशाङ्गं विदुर्धूपं दैवे पैत्रे च कर्म्मणी' त्युक्ते गुग्गुल्वादिषोडशद्रव्यरचिते धूपे ।

षोडशाङ्घ्रि पु॰ षोडश अङ्घ्रयश्चरणा यस्य । कर्कटे ।

षोडशार न॰ षोडश आराणि कोणा अस्य । षोडशदलयुक्ते कमले, तन्त्रोक्ते यन्त्रभेदे च ।

षोडशिन् पु॰ षोडशकला विद्यन्तेऽस्य इनि । सोमे । यज्ञाङ्गे तन्नामसोमरसस्थापनपात्रे च 'अतिरात्रे षोडशिनं गृह्णातीति श्रुतिः ।

षोडशोपचार पु॰ब॰व॰ षोडशसंख्याता उपचाराः । 'आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् । मधुपर्काचमस्नानवसनाभरणानि च गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथे' त्युक्तेषु षोडशसु पूजाङ्गद्रव्येषु ।

षोढा अव्य॰ षट् प्रकारम् धाच् नि॰ । । षट्सु प्रकारेषु ।

षोढान्यास पु॰ षोढा षट्प्रकारो न्यासः । तन्त्रोक्ते षट्प्रकारन्यासभेदे विस्तरो वृहदभिधाने ।

ष्टक प्रतीघाते भ्वा॰प॰सक॰सेट् घटा॰ । स्तकति अस्ताकीत् ।

ष्टग संवरणे भ्वा॰प॰सक॰सेट् सिचि न वृद्धिः घटा॰ । स्तगति अस्तगीत् । [अस्तनीत् ।

ष्टन शब्दे भ्वा॰पर॰सक॰वेट् वा घटा॰ । स्तनति अस्तानीत्-

ष्टभि स्तम्भे स॰स्खने अ॰भ्वा॰आ॰सेट् इदित् । स्तम्भते अस्तम्भिष्ट

ष्टम वैकल्ये अद॰चु॰उभ॰सक॰सेट् । स्तमयति ते अतस्तमत् त

ष्टम वैकल्ये अक॰भ्वा॰प॰सेट् । स्तमति अस्तमीत् ।

ष्टिघ अभियोगे स्वा॰आ॰सक॰सेट् । स्तिघ्नुते अस्तेघिष्ट ।

ष्टिप क्षरणे भ्वा॰आ॰अक॰सेट् चङि न ह्रस्व । स्तेपते अस्तेपिष्ट

ष्टिम क्लेदे दि॰प॰अक॰सेट् । स्तिम्यति अस्तेमीत् ।

ष्टीम क्लेदे दि॰प॰अक॰सेट् । स्तीम्यति । अस्तीमीत् ।

ष्टु स्तुतौ अदा॰उ॰सक॰अनिट् सिचि सेट् लुङि प॰ वेट

ष्टौति स्तवीति स्तुते इत्यन्ये अस्तावीत अस्तोष्ट ।
ष्टुच प्रसादे अक०भ्वा आ सेट् । स्तोचते अस्तोचिष्ट ।
ष्टुप उच्छ्राये अद०चु०उ सक० सेट् । स्तूपयति ते अतुस्तूपत् त
ष्टुप उच्छ्राये दि प सक सेट् । स्तूप्यति अस्तूपत् । [अस्तोभिष्ट
ष्टुभ स्तम्भे अक स्तम्भने सक०भ्वा आ सेट् क्त्वा वेट् । स्तोभते
ष्टृक्ष गतौ भ्वा०प सक सेट् । स्तृक्षति अस्तृक्षीत् ।
ष्टृह वध तु०प सक वेट् । स्तृहति अस्तर्हीत् अस्तृक्षत् ।
ष्टृंह वधे तु प्या सक० वेट् । स्तृंहति अस्तृंहीत् अस्तृंक्षत् ।
ष्टेप क्षरणे भ्वा आ० अक० सेट् षडि न ह्रस्व । स्तेपते ।
अस्तेपिष्ट । [अस्तासीत् ।
ष्टै संघाते सक० ध्वनौ अक० भ्वा प अनिट् । स्तायति ।
ष्ट्यै वेष्टने सक शब्दे अक० भ्वा प० अनिट् । स्त्यायति
अस्त्यासीत् । मतान्तरे स्त्यायति । [अस्थगीत् ।
ष्ठग संवरणे भ्वा०प०सक०सेट् घटा मिचि न वृद्धि । स्थगति
ष्ठल स्थितौ भ्वा प०अक०सेट ज्वला० । स्थलति अस्थालीत् ।
ष्ठस निरासे दि०प०सक सेट् । स्थस्यति अस्थासीत् — अस्थसीत्
ष्ठा गतिनिवृत्तौ भ्वा प अक०अनिट् । तिष्ठति अस्थात् ।
ष्ठिव निरासे (मुखेन श्लेष्मादेर्वमने) भ्वा प सक सेट् ष्ठीवति
अष्ठेवीत् । ष्ठेवनम् । [अष्ठीवीत् ष्ठीवनम् ।
ष्ठीव निरासे(श्लेष्मादेर्मुखेन वमने) भ्वा प०अक सेट् । ष्ठीवति
ष्ठ्यूत त्रि ष्ठिव क्त । निरस्ते वान्ते च । [अस्नसत्
ष्णस निरासे दिवा प सक सेट् क्त्वा वेट् वा घटा० । स्नस्यति
ष्णा शोधने अदा प०अक अनिट् । स्नाति अस्नासीत् ।
ष्णिह प्रीतौ दि प०सक वेट् । स्निह्यति अस्निहत् । स्नेहिता
स्नेढा—स्नेग्धा । [अस्निहत् त ।
ष्णिह स्नेहयुक्त भवने चु०उ०अक सेट् । स्नेहयति ते असि-
ष्णु स्नाने अदा प अक सेट । स्नौति अस्नावीत् अस्नोट ।
ष्णुच सेचने भ्वा०आ०सक सेट् । स्नोचते अस्नोचिष्ट ।
ष्णुस भक्षे दि०प सक सेट् । स्नुस्यति अस्नोसीत् ।
ष्णुह उद्गारे दि०प सक वेट् । स्नुह्यति अस्नुहत् ।
ष्णै वेष्टे भ्वा०प०सक अनिट् । स्नायति अस्नासीत् । कृष्णत्वे
इत्येके ष्णायति कृष्णासीत् ।
ष्मि ईषद्धासे भ्वा०आ अक अनिट् । स्मयते अस्मेष्ट ।
ष्वक्क गमने भ्वा०आ सक सेट् । ष्वक्कते अष्वक्किष्ट ।
ष्वद स्वादे छदनेच चु०उ सक०सेट । स्वादयति ते असिष्वदत त
ष्वद प्रीतौ वेष्टने च भ्वा आ०सक०सेट् । स्वदते अस्वदिष्ट ।
ष्वन्ज आलिङ्गने भ्वा०आ०सक०अनिट् । स्वजते । अस्वङ्क्त
ष्वप शयने निद्रायाञ्च अदा० स्वपा० जक्षा० प० अक० अनिट् ।
स्वपिति अस्वाप्सीत् । [र्त्तते । अस्वर्त्तत् त ।
ष्वर्त्त गतौ सक०दु खेन जीवने अक० चु०उ०सेट् । स्वर्त-
ष्वष्क गतौ भ्वा०आ०सक०सेट् । स्वष्कते अस्वष्किष्ट ।
ष्विद मोहे स्नेहे च अक० मोचने सक० भ्वा आ लुङि उ०
सेट् । स्वेदते अस्विदत् अस्वेदिष्ट ।
ष्विद गात्रप्रक्षरणे अक दि०प अनिट् । स्विद्यति अस्विदत् ।

## स

स पु० सो-ड । विष्णौ, सर्पे, ईश्वरे विहगे च । [प्रकाशने ।
संक्षेप पु० सम्+क्षिप-घञ् । भूयसोऽर्थस्याल्पवाक्यादिना
संक्षोभ पु० सम्+क्षुभ-घञ् । चाञ्चल्ये, क्षोभे च । [त्रि० ।
संग्राहिन् पु० सम्+ग्रह-णिनि । कुटजवृक्षे । संग्रहकारके
संघ पु सम्+हन-ड नि० । समूहे जन्तुसमूहे च । घञ् ।
संघातोऽपि समूहे हठसंयोगे च पु ।
संघर्ष पु० सम्+घृष-घञ् । अन्योन्यहठसंयोगे ।
संज्ञ न० सम्+ज्ञा-क । पीतकाष्ठे कालीयके गन्धद्रव्ये । सम्+
ज्ञा-अङ् । चेतनायाम् बुद्धौ, आख्यायाम्, हस्ताद्यैरर्थ
सूचने, गायत्र्याम्, सूर्य्यपत्न्याञ्च स्त्री ।
सं(ज्ञ)ज्ञापन सम्+ज्ञा-णिच्-पुक् मारणे ह्रस्व ल्युट् । मा-
रणे । अन्यार्थे न ह्रस्व । ज्ञाने । क्तिन् । मनमितरपन स्त्री०
संज्ञासुत पु० संज्ञाया सूर्य्यपत्न्या सुत । शनैश्चरे ।
संज्ञु त्रि० संहते जानुनी यस्य जानुस्थाने ज्ञु । संहतजानुके ।
संज्वर पु० सम+ज्वर-अप् । अग्निजाते तापे ।
संमर्द्द पु० सम्+मृद-घञ् । अन्योन्यहठसंयोगरूपे संघर्षे ।
संयत त्रि० सम्+यम-क्त । बद्धे कृतशास्त्रोक्तनियमे च ।
संयत् स्त्री संयम्यतेऽत्र सम्+यम-क्विप् तुक् च । युद्धे ।
संयन्तृ त्रि० संयच्छति सम्+यम-तृच् । नियन्तरि ।
संय(या)म पु० सम् यम-घञ् वा वृद्धि । व्रताङ्गतया धर्मदिन
कर्त्तव्ये नियमभेदे इन्द्रियनिग्रहे बन्धने च ।
संयमन न० सम्+यम-ल्युट । बन्धने,व्रते चतु शाले गृहे च
संयमनी स्त्री संयम्यते बध्यतेऽत्र सम्+यम-ल्युट् । यमाधि-
ष्ठितपुर्य्याम् । [संयमवति त्रि ।
संयमिन् पु० सम्+यम-णिनि न वृद्धि । मुनिभेदे इन्द्रिय-
संयाव पु० सम्यक् घृतादिभिर्यूयते मिश्र्यते गोधमचूर्णादात्र
सम्+यु-घञ् । "संयावस्तु घृतक्षीरगुडगोधूमपाकज"
इत्युक्ते घृतादिना पक्वगोधूमचूर्णे । [संयुक्ते च
संयुज् त्रि० सम्यक् युनक्ति सम्+युज-क्विन् । गुणाढ्ये,

संयुक्त त्रि० सम्+युज-क्त। संयोगवति पदार्थे।
संयुग न० संयुज्यतेऽत्र सम्+युज-क पृ० जस्य ग.। युद्धे।
संयुत त्रि० सम्+यु-क्त। संयुक्ते।
संयोग पु० सम्+युज-घञ्। मेलने क्रियाजन्ये द्रव्याश्रिते गुणभेदे, सम्बन्धमात्रे च।
संयोगपृथक्त्व न० संयोगेन फलसम्बन्धभेदेन पृथक्त्वं नानारूपत्वं यत्र। एकस्यैव कर्म्मणो नित्यानित्यत्वप्रतिपादके मीमांसकोक्ते न्यायभेदे।
संयोजित त्रि० सम्+युज-णिच्-क्त। कृतमेलने पदार्थान्तरेण कृतयोजने पदार्थे।
संरम्भ पु० सम्+रभ-घञ् मुम् च। कोपे, आक्रोशे, उत्साहे. वेगे च "अदृष्टिसंरम्भमिवाम्बुवाहमि"ति कुमारः।
संराधन न० सम्+राध-ल्युट्। सम्यक् सेवने, सम्यक् चिन्तने च
संराव पु० सम्+रु-घञ्। शब्दे।
संरूढ त्रि० सम्+रुह-क्त। प्रौढे, जाताङ्कुरे च।
संरोध पु० सम्+रुध-घञ्। रोधने, क्षेपे च।
संलग्न त्रि० सम्+लग-क्त। मिलिते।
संलय पु० संलीयते इन्द्रियव्यापारोऽत्र सम्+ली-अच्। निद्रायाम्, प्रलये च।
संलाप पु० सम्+लप-घञ्। परस्परकथने प्रीत्या अन्योन्योक्तिप्रत्युक्तिभ्यां भाषणे, रहसि कथने च।
संवत्सर पु० संवसन्ति ऋतवोऽत्र सम्+वस+सरन्। वत्सरे, ज्योतिषोक्ते प्रभवादिषष्ठ्यब्दान्तर्गते वत्सरभेदे च।
संवत् अव्य० सम्+वय-क्विप् यलोपे तुक्। विक्रमादित्यराज्यावधिके तत्तत्गणनवत्सरे।
संवदन न० सम्+वद-ल्युट्। आलोचने, वशीकरणे, च। सम्+वन-ल्युट्। संवननमप्यत्र। [भेदे च।
संवर न० सम्+वृ-अप्। जले, दैत्यभेदे, मत्स्यभेदे, मृग
संवर्त्त पु० सम्यक् वर्त्यते परावर्त्यतेऽत्र सम्+वृत-णिच्-घञ्। प्रलयकाले, स्मृतिकारकमुनिभेदे, कर्षफलवृक्षे, मेघे, "संवर्त्तश्च बलाहक" इत्युक्ते मेघनायकभेदे च।
संवर्त्तक न० सम्+वृत-णिच्-ण्वुल्। बलदेवलाङ्गले। तत अस्त्यर्थे अच्। बलदेवे, वाड़वानले च पु०।
संवर्त्तिका स्त्री० सम्+वृत-ण्वुल् टापि अतइत्त्वम्। दीपादे शिखायाम्, पद्मादे केशरसमीपस्थे दले, नवपत्रे च
संवर्द्धक त्रि० सम्×वृध-णिच्-ण्वुल्। सम्माननाकारिणि वृद्धिकारके च।
संवलित त्रि० सम्×वल-क्त। मिलिते।

संवसथ पु० संवसत्यस्मिन् सम्×वस-अथन्। ग्रामे जनसमूहनिवासस्थाने। [वायौ।।
संवह पु० सम्यक् वहति सम्×वह-अच्। सप्तवायुमध्यवर्त्ति-
संवार पु० सम्×वृ-घञ्। शिक्षाग्रन्थोक्ते वर्णोच्चारणार्थे बाह्यप्रयत्नभेदे, सङ्गोपने च।
संवास पु० संवसत्यत्र सम्×वस-घञ्। गृहे, पुरवासिनां पुराद्बहिर्वासयोग्ये अनावृते स्थाने च। [तत्रैव।
संवाह पु० संवाहयति सम्×वह-घञ्। अङ्गसमर्द्दके। ण्वुल्।
संवाहन न० सम्+वह-णिच्-ल्युट्। भारादेर्वहने, अङ्गसमर्द्दने च।
संविग्न त्रि० सम्+विज-क्त। उद्विग्ने इष्टवस्तुलाभाय तत्प्राप्तिहेतुना भयादिना वा जातोत्कण्ठे, [अङ्गीकारे च
संवित्ति स्त्री० सम्+विद-क्तिन्। ज्ञाने, प्रतिपत्तौ, बुद्धौ,
संविद् स्त्री० सम्+विद-सम्प० क्विप्। ज्ञाने, प्रतिपत्तौ, बुद्धौ अङ्गीकारे, समाधौ, नामनि, आचारे, सङ्केते, युद्धे, तोषे च-
संविदा स्त्री० संविद्यतेऽनया सम्+विद-क्विप् टाप्। भङ्गायाम् (सिद्धि) "संविदासवयो र्मध्ये संविदेव गरीयसीति"तन्त्रम्
संविद्व्यतिक्रम पु० संविदोऽङ्गीकारस्य व्यतिक्रमो यत्र। कृताङ्गीकारस्योल्लङ्घनहेतुके विवादभेदे।
संविदित त्रि० सम्+विद-क्त। अङ्गीकृते, सम्यग्ज्ञाते च।
संविधान न० सम्×वि+धा-ल्युट्। उपाये, आयोजने रचनायाञ्च। [अतिविषायाम् (आतइच्)।
संविषा स्त्री० समर्द्दितं विषं यया धातुजस्य उत्तरपदलोपः।
संवीक्षण न० सम्यग्वीक्ष्यते अन्विष्यते वा सम्-वि+ईक्ष-ल्युट्। इष्टवस्तुनोलाभाय अन्वेषणे, सम्यग्दर्शने च।
संवीत त्रि० सम्+व्येञ्-क्त। आवृते, रुद्धे, च-सम्+वि+इण-क्त। सङ्गते। [मन्वस्रीत" रघु।
संवृत त्रि० सम्+वृ-क्त। आवृते, कृतगोपने च "तस्य संवृत-
संवेग पु सम्+विज-घञ्। भयादिना त्वरायाम्, सम्यग् वेगे च
संवेद पु सम्×विद-घञ्। ज्ञाने। युच्। संवेदनाप्यत्र स्त्री०।
संवेश पु० सम्यक् विशत्यत्र सम्×विश-घञ्। निद्रायाम् सं-पूर्वकस्य तस्य निद्रार्थकत्वात्तथात्वम्। तथाच संविष्ट कुशशयने निशां निनाये ति रघु पीठे च।
संवेशन न० सम्×विश-णिच्-ल्युट्। रतिक्रियायाम् तदुत्तरं हि निद्राधिक्येन तस्या निद्राहेतुत्वात् तथात्वम्।
संव्यान न० संवीयते सम+व्येञ्-कर्म्मणि ल्युट्। उत्तरीयवस्त्रे, वस्त्रमात्रे च।
संशप्तक पु० सम्यक् शपथमङ्गीकारो यस्य कप्। प्रतिज्ञाय संग्रामादनिवर्त्तिनि सैन्ये "संशप्तकगणैरभूदिति" रघुः।

संस्थित त्रि॰ सम्+स्था–क्त। मृते, सम्यक्स्थिते च। [दृश्ये।

संस्पर्शा स्त्री॰ संस्पृश्यते सम्+स्पृश–घञ् टाप्। रजनीगन्धा-

संस्फुट त्रि॰ सम्+स्फुट–क। विकशिते।

संस्फेट न॰ सम्+स्फिट–घञ्। युद्धे।

संस्फोट पु॰ सम्+स्फुट–घञ्। युद्धे।

संहत त्रि॰ सम्+हन–क्त। दृढे, मिलिते, परार्थं मिलिते, "संहतपरार्थत्वादिति,सांख्यम् दृढसंयोगयुक्ते सम्यग्हते च

संहतल पु॰ संहत संहनन संघात लाति–ला–क। मिलित पाणिद्वये।

संहतपुष्पिका स्त्री॰ संहतानि दृढं संयुक्तानि पुष्पाण्यस्याः कप् अत इत्त्वम्। मिश्रेयायाम्।

संहति स्त्री॰ सम्+हन–क्तिन्। समूहे, सम्यग्हनने च।

संहनन न॰ संहन्यते परार्थं संहन्यते सम्+हन–ल्युट्। देहे, संघाते, वधे च।

संहर्ष पु॰ सम्यक् हर्ष सम्+हृष–घञ्। आनन्दे, स्पर्द्धायाञ्च संहृष्यत्यनेन घञ्। वायौ।

संहार पु॰ सम्+हृ–घञ्। प्रलये, नाशे, संक्षेपे, नरकभेदे, विसर्ज्जने, भैरवभेदे च।

संहारमुद्रा स्त्री॰ संहाराय स्थानान्तरनयनाय मुद्रा। तन्त्रोक्ते मुद्राभेदे तल्लक्षणं दृष्टमभिधाने।

संहिता स्त्री॰ सम्यक् हितं प्रतिपाद्यं यस्या। मन्वादिप्रणीते, धर्मशास्त्रे, पुराणे, इतिहासादौ, कर्मकाण्ड-प्रतिपादके वेदभागे, च।

संहूति स्त्री॰ सम्+ह्वेञ् क्तिन्। बहुभिः कृते आह्वाने।

संहृत त्रि॰ सम्+हृ–क्त। कृतसंहारे, सङ्कुचिते च।

संहृति स्त्री॰ सम्+हृ–क्तिन्। संहारे–

संह्लादि पु॰ सम्+ह्लद–घञ्। शब्दभेदे।

संह्लादिन् त्रि॰ सम्+ह्लद–णिनि। शब्दायमाने।

संह्लाद पु॰ सम्+ह्लद–घञ्। आनन्दभेदे।

सकण्टक पु॰ सह कण्टकेन सहस्य सः। करञ्जभेदे, (नाटा-करञ्जा) शैवाले च। कण्टकयुक्ते त्रि॰। [कर्णयुक्ते च।

सकर्ण त्रि॰ सह कर्णेन श्रवणेन तद्व्यापारेण वा। श्रुतिशीले,

सकर्म्मक त्रि॰ सह कर्म्मणा कप्। व्याकरणोक्ते कर्म्मयुक्त क्रियाबोधके धातौ "फलव्यापारयोरेकनिष्ठतायामकर्म्मक। धातुस्तयोर्धर्म्मिभेदे सकर्म्मक उदाहृत" इत्युक्तदिशा धातौ सकर्म्मकत्वमवसेयम्।

सकल त्रि॰ सह कलया, अवयवमात्रयो, चतुष्षष्ट्या कलाभि र्वा सहस्य सः। सम्पूर्णे समस्ते, कलासहिते च।

सकारण त्रि॰ सह कारणेन। कार्य्ये। [अन्तिके समीपे।

सकाश पु॰ काशन पीडन काशः काश–घञ् सह काशेन।

सकुरुण्ड पु॰ सह समान. कुरुण्टेन। शाककुरुण्डवृक्षे।

सकुल पु॰ सह समान कुलमस्य। शकुलमत्स्ये (शल) स्त्री त्वमपि। समानवंशे त्रि॰।

सकुल्य त्रि॰ समाने कुले भव. यत्। अशौचविषये स्वाव-धपूर्द्धाधस्तनाष्टमपुरुषावधिदशमपर्य्यन्ते पुरुषवर्गे, दायप्र-करणे स्वावधिपञ्चमोर्द्धाधस्तनपुरुषमात्रे "विभक्तादायादान् सकुल्यानाचक्षते" इति स्मृति। [मिति केचित्।

सकृत् अव्य॰ एक+नि॰। एकवारे विदायाञ्च तत स्त्रीत्व-

सकृत्प्रज पु॰ सकृत् एकवार प्रजायते प्र+जन-ड। काके एकवारजातापत्ये त्रि॰।

सकृत्फला स्त्री॰ सकृत् फलति फल–अच्। कदलीवृक्षे

सक्त त्रि॰ सन्ज–क्त। आसक्ते, अविरते च।

सक्तु पु॰ सच–तुन्। भृष्टयवादिचूर्णे (छातु) "सैषाटौ सक्तवो देयाः" इति स्मृति। [ङीप्। शमीवृक्षे।

सक्तुफला(ली) स्त्री॰ सक्तवइव क्षुद्राणि फलान्यस्याः वा

सक्थि न॰ सन्ज–क्थिन्। ऊरौ, शकटावयवभेदे च।

सखि त्रि॰ सह समं न ख्यायते ख्या इन् नि॰। सौहार्द्दयुक्ते

सखी स्त्री॰ सखि+ङीप्। सहचर्य्या, वयस्यायाञ्च।

सख्य न॰ सख्युर्भाव. यत्। मित्रतायाम् सौहार्द्दे।

सगर पु॰ सह गरेण विषेण जात। सूर्य्यवंश्ये नृपभेदे "सग-रात् सागरोजात" इति पुराणम्। विषयुक्ते त्रि॰।

सगर्भ पु॰ सह समानो गर्भोऽस्य। सहोदरे भ्रातरि। सह गर्भेण। गर्भयुक्ते, मध्यवर्त्तिसूक्ष्मपत्रयुक्ते कुशदूर्वा-दौ च त्रि॰।

सगर्भ्य पु॰ समाने गर्भे भव यत्। सहोदरे भ्रातरि।

सगोत्र न॰ सह समानं गोत्रम्। कुले। सह सम गोत्रमस्य। ज्ञातौ त्रि॰।

सग्धि स्त्री॰ अद–क्तिन् नि॰ सह ग्धि। सहभोजने।

सङ्कट त्रि॰ सम्+कटच्। अल्पावकाशे स्थाने, सवाधे। सम्+कट–अच्। दुःखे"नरोमुच्येत सङ्कटादिति"चण्डी। देवी-भेदे, ज्योतिषोक्ते दशाभेदे च स्त्री॰ टाप्।

सङ्कटाक्ष पु॰ सङ्कट सवाधमक्षति अक्ष–अण्। धववृक्षे।

सङ्कर पु॰ सम्+कृ–अप्। सम्मार्ज्जन्यादिभिः क्षिप्ते रजसि। मैलने,इतरजातिपुरुषेण इतरजातिस्त्रिया जाते जातिभेदे

"सङ्करस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजा" इति गीता न्यायोक्ते जातिबाधके परस्पराभावसमानाधिकरणयोरेका धिकरणवृत्तित्वरूपे धर्म्मविशेषे च। तदुदाहरणादि दृष्ट- दभिधाने।

सङ्करीकरण न० सकरः क्रियतेऽनेन च्वि+कृ-ल्युट्।"खरा- श्वोष्ट्रमृगेभानामजाविकवधस्तथा। सङ्करीकरणं ज्ञेयं मीना- हिमहिषस्य च" इत्युक्ते खरादिवधजन्ये पापे।

सङ्कर्षण पु० सकृष्यते गर्भात् गर्भान्तरं नीयतेऽसौ सम्+कृष- ल्युट्। बलदेवे। भावे ल्युट्। आकर्षणे, स्थानान्तर- नयने च न०।

सङ्कलन न० सम्+कल-ल्युट्। एकत्रस्थीकरणे, योजने, (ठिक देया) यथार्थे च। [ संस्पृष्टीते च।

सङ्कलित त्रि० सम्+कल-क्त। योजिते, रेखादिना धृते,

सङ्कल्प पु० सम्+कृप-घञ्। अभीष्टसिद्धये "इदमित्थमेव कार्य्यं" मित्येवंरूपे मनसोव्यापारभेदे,कर्म्मसाधनाय अभि- लापवाक्ये, 'सङ्कल्पेन विना राजन्! यत्किञ्चित् कुरुते नरः" इति पुराणम् तत्रविशेषोवेदृष्टदभिधाने [ योऽव्यय

सङ्कल्पजन्मन् पु० सङ्कल्पात् जन्म यस्य। कामदेवे। सङ्कल्पभवाद-

सङ्कल्पयोनि पु० सङ्कल्पोयोनिरुत्पत्तिकारणं यस्य। काम- देवे 'सङ्कल्पयोनेरभिमानभूतमिति' कुमारः।

सङ्कसुक त्रि० सम्+कस-उकञ्। अस्थिरे, मन्दे, दुर्बले सङ्कीर्णे, अपवादयोग्ये च।

सङ्काश त्रि० सम्यक् काशते काश-अच्। सदृशे "तदयादित्य सङ्काशमिति तन्त्रम्। भिन्नादिवदस्य नित्यसमासता।

सङ्कील पु० सम्+किल-क। वह्निरेकायाम्।

सङ्कीर्ण त्रि० सम्+कॄ-क्त। बहुजनसम्मर्द्देन निरवकाशे स्थाने मिलितनानाजातौ, व्याप्ते मिश्रिते, सङ्कटे, एकत्र मिलितयोः परस्परविजातीययोः। इतरवर्णेन इतरवर्ण- स्त्रिया जाते जातिभेदे पु०। [ च।

सङ्कुचित त्रि० सम्+कुच-क्त। प्राप्तसङ्कोचे, लज्जिते, अप्रफुल्ले

सङ्कुल न० सम्+कुल-क। परस्परपराहते, 'यावज्जीवमह- मौनो ब्रह्मचारी च मे पिता। माता तु मम वन्ध्यैव पुत्र- हीनः पितामहः' इत्येव वाक्ये, परस्परहननरूपे युद्धे बहुजनादिभिः सम्बाधेन निरवकाशे स्थाने च सङ्कीर्णे त्रि।

सङ्केत पु० सम्+कित-घञ्।अस्माच्छब्दादयमर्थोबोद्धव्य इति शक्त्यादि ज्ञापनरूपे व्यापारे (इसारा) अस्माच्छब्दादयमर्थो बोध्यः अयमर्थः अस्मच्छब्दबोध्योभवतु वा इत्येव शब्दनिष्ठ- शक्तिबोधनार्थेच्छाविशेषे, प्रियसङ्गमार्थं गुप्तस्थाने च।

सङ्केतित त्रि० सङ्केतो जातोऽस्य तार० इतच्। सङ्केतवति वाच्येऽर्थे "साक्षात् सङ्केतितं योऽर्थमभिधत्ते" इति काव्यप्र०

सङ्कोच पु० सम्+कुच-घञ्। बहुविषयकवाक्यस्याल्पविषय कतया व्यवस्थापने, सामान्यशब्दस्य विशेषपरतायाम्, जडीभावे, बोधे बन्धे च। सम्+कुच-अच्। मत्स्यभेदे पु कुङ्कुमे न०। [याम्।

सङ्कोचनी स्त्री० सम्+कुच-ल्यु-गौ०ङीप्। लज्जालुलता।

सङ्क्रन्दन पु० सङ्क्रन्दयत्यसुरान् सम्+क्रन्द-णिच्-ल्यु। इन्द्रे। भावे ल्युट्। सम्यक्क्रन्दने न०।

सङ्क्र(क्रा)म पु० सङ्क्राम्यत्यनेन सम्+क्रम-घञ् वा वृद्धि जलबन्धनस्थाने(साकी)' आसाम सङ्क्रमं जानेति' स्मृति भावे घञ्। रव्यादे राश्यन्तरसञ्चारे च। [न्तरगमने च।

सङ्क्रमण न० सम्+क्रम-ल्युट्। सङ्क्रान्तौ,रव्यादीनां राश्य

सङ्क्रान्त त्रि सङ्क्रान्तिरस्यास्ति अच्, सम्+क्रम-क्त वा। सङ्क्रान्तियुक्ते सङ्क्रमकर्त्तरि, प्राप्ते, दायरूपेण पितृधनादिना आगते क्रियया प्राप्तधने च।

सङ्क्रान्ति स्त्री० सम्+क्रम-क्तिन्। सम्यक्क्रमणे,रव्यादीनां राश्यन्तरसञ्चारे च। तत्र विशेषो वृहद्दभिधाने वक्ष्यते।

सङ्ख्या न० सङ्ख्यायते परस्परतोभेदेन क्रियतेऽत्र सम्+ख्या। भावे क। युद्धे। अङ्। विचारे बुद्धौ, द्रव्याश्रिते एक- त्वद्वित्वादौ गुणभेदे, च स्त्री० टाप्।

सङ्ख्यात त्रि० सम्+ख्या-क्त। प्राप्तसङ्ख्ये, गणिते-सम्यक् ख्याते च।

सङ्ख्यावत् पु० सङ्ख्या विचारणा सास्त्यस्य मतुप् मस्य व। पण्डिते सङ्ख्यायुक्ते त्रि०। [करणयोग्ये।

सङ्ख्येय त्रि सङ्ख्यायतेऽसौ सम्+ख्या-यत्। गुण्ये सङ्ख्या

सङ्ग पु० सञ्ज-घञ्। मेलने, सम्बन्धे विषयादिरागे च "ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते" इति गीता।

सङ्गत न० सम्+गम-भावे क्त। सौहार्द्दे सङ्गतौ च कर्त्तरि क्त। मिलिते त्रि।

सङ्गति स्त्री सम्+गम-क्तिन्। सङ्गमे, मेलने न्यायोक्ते अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषये, 'यत्र यत्र व्योपाहातो चेत्ततावकत्वता। निराकाङ्क्षाकायत्वे चोटा सङ्गतिरिष्यते' इत्युक्ते प्रसङ्गादौ पदार्थे च।

सङ्गम पु० सम्+गम-घञ् न वृद्धिः। सङ्गतौ स्त्रीपुंसयोः सम्भोगे नद्यादेर्नद्यादियोगस्थाने च "गङ्गासागरसङ्गम इति पुराणम्।

सङ्गर पु० सगीर्यते सम्+गॄ-अप्। आपदि, ...

क्रियाकारके, विषे, गमीष्टर्के च।
सङ्गव पु० सङ्गता गावोदोहनायात्र काले नि०। "प्रातःकालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु" इति स्मृत्युक्ते प्रातःकालानन्तर मुहूर्त्तत्रयात्मके कालभेदे।
सङ्गिन् त्रि० सनज-घिणुन्। सङ्गयुक्ते। स्त्रियां ङीप्।
सङ्गीत न० सम्+गै-क्त। दर्शनार्थे नाट्यगीतवाद्यत्रिके, तत्प्रतिपादकग्रन्थे च। कर्म्मणि क्त। सम्यग्गीते त्रि०।
सङ्गीर्ण त्रि० सम्+गॄ-क्त। स्वीकृते।
सङ्ग्रह पु० सम्+ग्रह-अप्। सञ्चये, संक्षेपे, बह्वर्थकवाक्यानामेकत्र सङ्कलने च [मत् त।
सङ्ग्रहणी स्त्री० सङ्गिता ग्रहणी। ग्रहणीरोगभेदे। [सङ्ग्रा-
सङ्ग्राम युद्धे अद० चु० उभ० सक० सेट्। सङ्ग्रामयति ते अस
सङ्ग्राम पु० सङ्ग्राम-घञ्। युद्धे।
सङ्ग्रामपटह पु० ६त०। रणवाद्यभेदे।
सङ्ग्राहिन् पु० सम्यक् गृह्णाति मलम् सम्+ग्रह-णिनि। कुटजवृक्षे। मलावष्टम्भके सङ्ग्रहकारके, च त्रि०।
सङ्घ पु० सघवत् सर्व्वम्। सजातीयसमूहे, समूहे च।
सङ्घचारिन् पु० सङ्घीभूय चरति चर-णिनि। मत्स्ये। सङ्घीभूयचारिणि जन्तुमात्रे त्रि०।
सङ्घजीविन् पु० सङ्घेन जीवति जीव-णिनि। सङ्घोपजीविनि वार्तीने।
सङ्घट्ट पु० सम्+घट्ट-घञ्। परस्परसङ्घर्षणे गठने च।
सङ्घट्टन न० सम्+घट्ट-ल्युट्। मेलने, गठने, रचनायाञ्च। युच्। तत्रैव स्त्री०। [(योडहात)।
सङ्घतल पु० सङ्घौ संहते मिलिते तले यत्र। संयोजितप्रतलद्वये
सङ्घपुष्पी स्त्री० सङ्घीभूतानि पुष्पाण्यस्याः ङीप्। धातकीपुष्पाम्। (धाइफुल)।
सङ्घर्ष पु० सम्+घृष्-घञ्। परस्परघर्षणे, स्पर्द्धायाञ्च।
सङ्घशस् अव्य० सङ्घ+वीप्सार्थे-शस्। भूरिश इत्यर्थे।
सङ्घाटिका स्त्री० सङ्घटयति-सम्+घट-णिच् ण्वुल्। युग्मे, जलकण्टके, घ्राणे च। [दूतसंयोगे कफे च।
सङ्घात पु० सम्+हन-घञ्। समूहे, नरकभेदे, सम्यग्हनने,
सङ्घातपत्त्रिका स्त्री० सङ्घातयुक्तं पत्त्रमस्याः कप् अत इत्वम्। शतपुष्पायाम्।
सचि(ची) स्त्री० सच-इन् वा ङीप्। इन्द्राण्याम्।
सचिक्कण पु० सह चिक्कणेन। क्लिन्ननेत्रे (पिचुटियुक्तनेत्रे)।
सचिव पु० सच-इन् तथा सन् वाति वा-क। सहाये, मन्त्रिणि, कृष्णधुस्तूरे च।

सचेतन त्रि० सह चेतनया। विशिष्टज्ञानयुक्ते।
सचेष्ट पु० सचते सच-अच् तथाभूतः सन् इष्ट। आम्रे। सह चेष्टया। चेष्टान्विते त्रि० [हरिद्रायाम्।
सञ्चारा स्त्री० सन् चारो गात्रानुलेपने विषयगतिरस्याः।
सच्चिदानन्द पु० सन् नित्यः चित् चैतन्यमानन्दः त्रिपदकर्म्म०। नित्यज्ञानसुखमये ब्रह्मणि।
सच्छूद्र पु० कर्म्म०। सद्गोपनापितादौ शूद्रभेदे। "सच्छूद्रौ गोपनापितावित" स्मृतिः।
सजम्बाल त्रि० सह जम्बालेन। पङ्कयुक्ते देशे।
सजाति पु० समाना जातिरस्य। समानवर्णेन समानवर्णायामूढायाम् उत्पादिते पुत्रे। तुल्यजातौ त्रि०।
सजातीय त्रि० समानां जातिमर्हति छ। समानधर्म्मयुक्ते।
सजु(जू)ष् अव्य० सह जुषते क्विप् ष्ठ० वा दीर्घः। सहार्थे "सजुःलब्ध रतिं वसेटिति"। भट्टिः।
सज्ज त्रि० सस्ज-अच्। उद्युक्ते, संनद्धे, सम्भृते, निश्चते च। घ। आयोजने, वेगे, च स्त्री०। सतोजायते जन-ड। साधुजाते त्रि०।
सज्जन त्रि० सस्ज-णिच्-ल्युट्। रक्षार्थं सैन्यस्थापने, घट्टे च। सस्ज- ल्युट्। आयोजने,। सन् जन । सौजन्यवति जने, "कुरुसज्जनरञ्जनमिति" सत्कुलोद्भवे च पु०। सस्ज-णिच्-ल्युट्। स्पादीनामारोहणार्थं गजभूषाकरणादौ। [सन्नद्धे च।
सज्जित त्रि० सज्जा जातास्य तार० इतच्। कृतवेशे, भूषिते
सञ्च सञ्चीयते ऽत्र सम्+चि-ड। लेखनार्थे पत्त्रभेदे (खाच)
सञ्चय पु० सम्+चि-अच्। समूहे, संग्रहे च। ल्युट्। सञ्चयनम्। सङ्ग्रहे न०। [मीटतीति" पुराणम्।
सञ्चयिन् पु० सम्+चि-इनि। सञ्चयकारके, "सञ्चयी नाय-
सञ्च(ञ्चा)र पु० सञ्चरत्यनेन सम्+चर घञर्थे क घञ् वा। सेतौ, देहे, प्रकादे राश्यन्तरगमने च। भावे क। सम्यग्गतौ
सञ्चाय्य पु० सञ्चीयतेऽग्निरत्र सम् चि-ण्यत्। यज्ञभेदे।
सञ्चारिका स्त्री० सञ्चारयति नायकयो र्वार्त्ताम् सम्+चर-णिच्-ण्वुल्। दूत्या कुट्टिन्याम्, युग्मे, घ्राणे च।
सञ्चारिन् पु० सम्+चर-णिनि। धूमे, वायौ, अलङ्कारोक्ते शृङ्गारादिरसाद्यनुगुणे भावभेदे च। "व्यक्त सञ्चारिणा तथेति, साहित्य० सञ्चारकारके त्रि० स्त्रियां ङीप्। "सञ्चारिणी दीपशिखेवेति" रघु। सा च हंसपद्याञ्च।
सञ्चाली स्त्री० सञ्चलति सम्+चल-ण गौ० ङीप्। गुञ्जायाम्
सञ्चित त्रि० सम्+चि-क्त। समाहृते।

सञ्जवन न० सम्+जु-ल्युट्। परस्पराभिमुखतया स्थिते चतुः शालेगृहे।

सञ्जीवन न० सम्+जीव-ल्युट्। नरकभेदे सम्यक्प्राणधारणे च। सञ्जीवयति णिच्-ल्युट्। औषधिभेदे स्त्री० ङीप्।

सट न० स्त्री० सट-अच्। व्रतिनां केशसङ्घाते, जटायाम् शिखायां सिंहादेः केसरे च 'सटाच्छटाभिन्नघनेनेति' माघ।

सटि(टी) स्त्री० सट-इन् वा ङीप्। शठ्याम्। कचूर। गन्धपलाश इत्ये। शठ-इन् ङीप्। शठीत्यप्य। [भेदे।

सड्डीन न० सम्+डी-क्त। पक्षिणां सङ्गत्य गमनरूपे गति

सत् त्रि० अस-शतृ। सत्ये, साधौ, पूजिते, धीरे प्रशस्ते, विद्यमाने च। स्त्रियां ङीप् सती पतिव्रतायां, स्त्रियां, दक्षकन्यायाम्। 'सती सती योगविसृष्टदेहेति' कुमार। ब्रह्मणि न० 'ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत इति गीता। आदरे अव्य० "सदसती आदरानादरयोरिति" पाणिनि। [तद्वति त्रि०।

सतत न० सम्×तन-क्त पृ० समोऽन्त्यलोप। निरन्तरे

सतत्त्व न० सह तत्त्वेन। स्वभावे।

सतानन्द पु० गौतमपुत्रे अहल्यागर्भजे मुनिभेदे।

सतीन पु० सतीं नयति नी-ड। वंशभेदे (मुद्गमटर) कलायभेदे च। स्वार्थे कन् तत्रैव।

सतीर्थ्य पु० समाने तीर्थे गुरौ वसति यत् समानस्य स। परम्परैकगुरुके छात्रे, निर्यन्तारोऽप्ययमित्यन्ये।

सतील पु० सतीं लाति क। (मुद्गमटर) कलाये।

सतीलक पु० सतीलमिव कायति कै-क, सह तिलेन तिलाचिह्नेन वा पृ० दीर्घ। वंशे, (मुद्गमटर) कलायभेदे च।

सतीला स्त्री० सह तिलेन तिलचिह्नेन पृ० दीर्घ। कलायभेदे।

सत्कर्तृ पु० सत्+कृ-तृच्। विष्णौ। सत्कारके त्रि०।

सत्कर्मन् न० कर्म०। वेदादिविहिते यागादौ कर्मणि।

सत्काञ्चनार पु० कर्म०। रक्तकाञ्चने।

सत्कार पु० सत्+कृ-घञ्। सम्मानने पूजने च।

सत्कृत त्रि० सत्+कृ-क्त। पूजिते, कृतसम्माने च।

सत्क्रिया स्त्री० सत्+कृ-श। सत्कारे सम्मानने पूजने च।

सत्तम त्रि० अतिशयेन सन् तमप्। अतिशयसाधौ।

सत्ता स्त्री० सतोभाव तल्। द्रव्यगुणकर्मवृत्तौ जातिभेदे विद्यमानतायाञ्च।

सत्र न० सद-ष्ट्रन्। स्थाने यज्ञे, सदादाने आच्छादने अरण्ये कैतवे धने गृहे दाने सरसि च।

सत्रम् अव्य० सद-त्रल्। सहार्थे। न। सत्राप्यत्रार्थे अव्य०

सत्रशाला स्त्री० ६त०। अन्नजलादेर्दानार्थं कल्पिते गृहे

सत्राजित् पु० सत्रेणाजयति लोकान् आ+जि-क्विप्। श्रीकृष्णश्वशुरे सत्यभामाजनके राजभेदे। [गृहस्थे च।

सत्रिन् पु० सत्र गृह यज्ञो वा विद्यतेऽस्य इनि। गृहपतौ

सत्त्व न० सतोभाव त्व। सांख्यसिद्धे प्रकाशादिसाधने प्रकृत्यवयवे पदार्थे, "तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयमिति' गीता। अत्र द्वितकार। पु० एकतकार। स्वभावे द्रव्ये, प्राणेषु, व्यवसाये, रणे, आत्मनि, चित्ते, आयुषि धने, च। न्यायोक्ते सत्तारूपे जातिभेदे, विद्यमानतायाञ्च द्वितकार। जन्तुषु पु० न०।

सत्पत्र न० सत् शोभनं पत्रम्। पद्मस्य नवदले च। तद्वति त्रि०

सत्पथ पु० कर्म०। शोभनमार्गे, वेदादिविहिताचारे च।

सत्प्रतिग्रह पु० सद्भ्यः प्रतिग्रहः। साधुदत्तधनस्य प्रतिग्रहे 'सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। प्रयोगः कर्मयोगश्च सत्प्रतिग्रहएव चेति" स्मृतिः।

सत्प्रतिपक्ष पु० कर्म०। तुल्यबलविरोधिनि, न्यायोक्ते हेतुदोषभेदे च। [तद्वति त्रि०।

सत्फल पु० सन्ति शोभनानि फलान्यस्य। दाडिमवृक्षे शुभ-

सत्य न० सते हितं यत्। सत्ययुगे, शपथे, सिद्धान्ते, यथार्थे च तद्वति त्रि०। अश्वत्थवृक्षे नान्दीमुखश्राद्धदेवे च पु०।

सत्यङ्कार पु० सत्य+कृ-घञ् नि० मुम्। 'ममैतत् अवश्यं क्रेयमित्येव सत्यकरणे, सत्यापने (वायनादेर्थोक्ता)।

सत्यपुर न० सत्ययुक्तं पुरम्। विष्णुलोके।

सत्यफल पु० सत्यं फलमस्य। बिल्ववृक्षे। [र्याम्।

सत्यभामा स्त्री० सत्राजितोऽपत्यतायां श्रीकृष्णस्य भार्या-

सत्यम् अव्य० सत्+यत्। स्वीकारे।

सत्ययुग न० सत्यप्रधानं युगम् शाक०। सत्यप्रचुरे प्रथमे युगे।

सत्यलोक पु० सत्यप्रचुरो लोकः। ऊर्ध्वस्थसप्तलोकमध्ये सर्वोपरिस्थे लोके। [सत्यवचनादयोऽप्यत्र।

सत्यवचस् पु० सत्यं वचोऽस्य। ऋषौ। सत्यवचनयुक्ते त्रि०

सत्यवत् पु० सत्यं विद्यते अस्य मतुप् मस्य व। सावित्रीपतौ नृपभेदे मुनिभेदे च। सत्ययुक्ते त्रि० स्त्रियां ङीप् सा च व्यासस्य मातरि च।

सत्यवतीसुत पु० ६त०। सत्यवत्याः पुत्रे व्यासे मुनिभेदे।

सत्यवाच् पु सत्या वाग् यस्य। ऋषौ काके च तस्य शब्देन हि शुभाशुभनिश्चयेन तस्य तथात्वम्। सत्यवचनयोगेऽपि त्रि०।

सत्यवादिन् त्रि॰ सत्यं वदति वद-णिनि। यथार्थवाक्य वक्तरि।
सत्यव्रत पु॰ सत्य व्रतमस्य। त्रिशङ्कुनामके राजभेदे। सत्यतत्परे त्रि॰।
सत्यसङ्गर सत्यः सङ्गरः प्रतिज्ञा यस्य। कुवेरे सत्यप्रतिज्ञे त्रि॰
सत्यसन्ध त्रि० सत्या सन्धा सन्धान यस्य। सत्याभिसन्धौ।
सत्याकृति स्त्री॰ सत्य+डाच्+कृ-क्तिन्। "अवश्यमेतत्कया-क्रेयमित्येवं" प्रतिज्ञारूपे सत्यकरणे (वायनादेच्चोया)।
सत्यानृत न॰ सत्यसहितमनृतं यत्र। वणिग्वृत्तौ वाणिज्ये।
सत्यापन न॰ सत्य+णिच्-पुक्च ल्युट्। सत्याकृतौ। युच्। सत्यापनाप्यत्र स्त्री॰। [सत्यवाक्ये न॰
सत्योद्य त्रि॰ सत्यमुद्यं यस्य वद-क्यप्। सत्यवादिनि। कर्म्म०।
सत्र सम्बन्धे सन्ततौ च अद० चु॰ आ॰ सक० सेट्। सत्रयते असससत्रत। सत्रापयते इत्यन्ये।
सत्र न॰ सत्यते सन्तन्यते यज्ञ। यज्ञभेदे,श्रीकृष्णस्वशुरे,न्दपभेदे च
सत्राजित् पु॰ सत्रेणाजयति लोकान्। श्रीकृष्णश्वशुरे।
सत्वर न॰ सह त्वरया। शीघ्रे त्वरान्विते त्रि०।
सदंशक पु॰ सह दंशेन कप्। कर्कटके। दंशकयुक्ते त्रि०।
सदंशवदन पु॰ सह दंशेन दशाकारेण तथाभूतं वदनमस्य। कङ्कविहगे।
सदञ्जन न० कर्म्म॰। पुष्पाञ्जने रीतिजाते अञ्जनभेदे।
सदन न॰ सीदत्यस्मिन् +सद-ल्युट्। गृहे, जले च।
सदय पु॰ सन् अय। साधुशुभावहविधौ। सह दयया। दयान्विते त्रि०।
सदस् स्त्री॰ न॰। सीदन्त्यस्याम् सद-असि। सभायाम्।
सदस्य पु॰ सदसि साधुर्वसति वा यत्। न्यूनातिरिक्तताविपर्य्ययपरिहारार्थं विधानदर्शिनि। सभासदि त्रि॰।
सदा अव्य॰ सर्व्वस्मिन् काले दाच् सादेश॰। सर्व्वस्मिन् काले इत्यर्थे।
सदागति पु॰ सदा गतिरस्य। वायौ सदागतियुक्ते त्रि॰।
सदाचार पु॰ कर्म्म० ६त॰ वा "सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्। तं देवनिर्म्मितं देशं ब्रह्मावर्त्तं प्रचक्षते। तस्मिन् देशे य आचार॰ पारम्पर्य्यक्रमागतः। वर्णाना सान्तरलानां स सदाचार उच्यते" इति मनूक्तदेशप्रचलिताचारे "साधव॰ क्षीणदोषाश्च सच्छब्द, साधुवाचक.। तेषामाचरणं यत्तु सदाचार. स उच्यते"इत्युक्ते साधूनामाचरणे च।
सदातन पु॰ सदा भव. सदा×ट्युल् तुट् च। विष्णौ। नित्ये त्रि॰। स्त्रियां ङीप्। [एलापर्ण्याञ्च।
सदातोया स्त्री० सदा तोयानि यस्याम्। करतोयानद्याम्,

सदात्मन् त्रि॰ सन् साधुरात्मा चित्तं यस्य। साधुचित्ते।
सदादान पु॰ सदा दानं मदजलं त्यागो वा यस्य। ऐरावते गजे+सदात्यागिनि त्रि॰। [युक्ते त्रि॰।
सदानन्द पु॰ सदा आनन्दोयस्य। सदाशिवे। अनवरतानन्द-
सदानर्त्त पु॰ सदा नृत्यति नृत-अच्। खञ्जनविहगे। सदा नृत्यवति त्रि॰
सदानीरा स्त्री॰ सदा नीरमस्याम्। करतोयानद्याम्।
सदापुष्प पु० सदा पुष्पं यस्य। नारिकेलवृक्षे। रक्तार्के स्त्री॰ ङीप्। सदापुष्पयुक्ते त्रि॰ [कुन्दे च।
सदाप्रसून पु॰ सदा प्रसूनमस्य। रोहितकवृक्षे, अर्कवृक्षे,
सदाफल पु॰ सदा फलमस्य। नारिकेलवृक्षे, उदुम्बरवृक्षे च वार्त्ताकुभेदे त्रि॰ स्त्रियां टाप्।
सदाभद्रा स्त्री॰ सदा भद्रमस्या.। गाम्भारीवृक्षे।
सदाशिव पु॰ सदा शिवमस्मात्। महादेवे।
सदुत्तर न॰ कर्म्म०। व्यवहारे,प्रतिज्ञापत्रानुसारिण्युत्तरे दृष्टस्य सम्यगुत्तरे च ६व॰। तद्वति त्रि॰।
सदृक्ष त्रि० समानं दर्शनमस्य दृश+क्स समानस्य सादेशः। तुल्यरूपे। [तुल्यरूपे।
सदृश् त्रि॰ समानं दर्शनमस्य समान×दृश-क्विप् सादेश॰।
सदृश त्रि॰ समानं दर्शनमस्य समान+दृश-टक्। तुल्यरूपे स्त्रियां ङीप्।
सदेश पु॰ सह देशेन। निकटे। देशान्विते त्रि॰।
सद्धेतु पु॰ कर्म्म॰। न्यायोक्ते हेत्वाभासदोषरहिते हेतौ।
सद्भाव पु० सतोभाव., सन् वा भाव.। विद्यमानत्वे साधुभावे च। "सद्भावमागत" इति भट्टि। [द्वति त्रि०।
सद्भूत न० असत् सत् भूतम्। सत्+च्वि-भू-क्त। यथार्थे। त-
सद्मन् न॰ सीदत्यस्मिन् सद-मनिन्। गृहे, जले च।
सद्यःक्षत त्रि॰ सद्यस्तत्क्षणात् क्षत. क्ष-क्त। तत्क्षणक्षते।
सद्यःप्राणकर त्रि॰ सद्योऽकृठात् प्राण बलम् आयुश्च शिघ्र करोति कृ-अच्। "सद्योमांस नवान्न च बाला स्त्री क्षीर भोजनम् घृतमुष्णोदकञ्चैव सद्य प्राणकराणि षडि-त्युक्ते" द्रव्यसमूहे।
सद्यःप्राणहर त्रि॰ सद्य॰ प्राणमायुर्बलं वा हरति हृ-अच्। "शुष्क मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि। प्रभाते मैथुनं निद्रा सद्य प्राणहराणि षडित्युक्ते"शुष्कमांसादिद्रव्यसमूहे
सद्यःशोथा स्त्री॰ सद्य शोथोयस्या। कपिकच्छ्वाम्।
सद्यःशौच न० सद्य॰ शौचमपनेयमशौचम्। स्नात्युक्ते शौचनाश्ये अशौचे ६त॰। तद्वति शिल्पादिपञ्चोतियादौ त्रि०।

सद्यस् अव्य० समेऽह्नि नि०। तत्क्षणे, समानदिवसे इत्यर्थेच।
सद्यस्क त्रि० सद्योभव कन्। सद्योजाते।
सद्योजात पु० सद्योजायते जन-कर्त्तरि क्त। वत्से, शिवमूर्त्तिभेदे च आशुजाते त्रि०।
सद्योभाविन् पु० सद्योभवति भू णिनि। वत्से।
सद्वृत्त न० वृत-क्त-कर्म्म०। साधुस्वभावे साधुवर्त्तने। ६ब० सद्वृत्तिवर्त्ति त्रि०। "सद्वृत्तसन्निकर्षोऽपि सुपादेर्मपि मन्यते इति पुराणम्।
सद्वृत्ति स्त्री० कर्म्म०। उत्तमचरित्रे उत्तमव्याख्यानरूपे ग्रन्थे च सती वृत्तिः यस्य। सद्वृत्तिमति त्रि० "सद्वृत्ति सचिवस्मनेति" माघ। [स्त्रियावाडाप्।
सधर्म्मन् त्रि० समानोधर्म्मो ऽस्यानिच् समानस्य स। सदृशे।
सधर्म्मचारिणी स्त्री० सह धर्म्मं चरति चर-णिनि। सह धर्म्मकारिण्यां भार्य्यायाम्।
सधर्म्मिन् त्रि० समान धर्म्मं चरति। तुल्यधर्म्मचरणकर्त्तरि। स्त्रियां ङीप्। सा च पत्न्याम्।
सधवा स्त्री० सह धवेन। जीवत्पतिकायां स्त्रियाम्।
सध्र्यच् त्रि० सह-अञ्चति अञ्च-क्विप् सहस्य सध्रि। सहचरे स्त्रियां ङीप् सध्रीची सा च भार्य्यायाम्।
सन पु० सन-अच्। घण्टाकर्णशिवगणे। [सम्मन्।
सनक पु० सन-वुन्। मुनिभेदे "सनकश्च सनन्दश्चेति तथैव-
सनत् पु० सन-अति। चतुर्मुखे ब्रह्मणि, सदेत्यर्थे अव्य०।
सनत्कुमार पु० ६त०। ब्रह्मणः पुत्रे मुनिभेदे।
सनन्द पु० सह नन्देन। मुनिभेदे। आनन्दयुक्ते त्रि०।
सनपर्णी स्त्री० सनस्येव पर्णान्यस्याः ङीप्। अश्वनपर्ण्याम्।
सनस्थल न० सनस्य स्थलमस्य अच् इ०। मत्स्यधारणार्थे कल्पते जाले।
सना अव्य० सदा-नि दस्य न। सदेत्यर्थे।
सनातन त्रि० सदा ट्युल् तुट् च नि०। सदाभवे वस्तुनि नित्ये च स्त्रियां ङीप् सा च सरस्वत्यां, दुर्गायाम्। शिवे ब्रह्मणि, विष्णुप्रभृत्ये च पु०।
सनाभि पु० समान नाभिर्यस्य। ज्ञातौ तस्य एकदेहोत्पन्नत्वेन तुल्यनाभिता इति तथात्वम्। सप्तपुरुषे, स्नेहयुक्ते च त्रि०
सनामक पु० सना सदा नमयति नम-ण्वुल्। शोभाञ्जनवृक्षे तस्य मद्यादिभोजनस्य रोगहेतुत्वात्तथात्वम्। सह नाम्ना कप्। नामयुक्ते त्रि०।
सनि पु० सन-इन्। पूजायां, दाने च। सत्कारपूर्व्वकनियोगे स्त्री० वा ङीप्।

सनिष्ठी(ष्ठे)व न० सह निष्ठी(ष्ठे)वेन। सश्लेष्मवाक्यकथने (थुतु कारे)। [युक्ते च।
सनीड त्रि० समानं नीडं यस्य नीडेन वा। निकटस्थे, नीड-
सन्तत न० सम्+तन क्त। सतते निरन्तरे। नैरन्तर्य्यवति विस्तीर्णे च त्रि०।
सन्तति स्त्री० सन्तन्यते सम्+तन क्तिन्। गोत्रे पुत्रे, कन्यायाम्। भावे क्तिन्। विस्तारे, पङ्क्तौ, अविच्छिन्न धारायाम्।
सन्तप्त त्रि० सम्+तप-क्त। अश्रमत्यादिना परिम्लाने, अग्नितप्ते, तेन विगुले च 'सन्तप्तचामीकरवल्गुवज्र'मिति भट्टिः।
सन्तमस न० सन्ततं तमः अच् समा०। गाढान्धकारे, लोके च
सन्तान पु० सम्+तन घञ्। वंशे, अपत्ये, विस्तारे कल्पवृक्षे च।
सन्तानिका स्त्री० सम्+तन-ण्वुल् टाप् अत इत्वम्। क्षीर सरे, मर्कटजाले, फेने, क्षुरिकाफले च।
सन्ताप पु० सम्यक् ताप प्रा०। वह्निजाते तापे।
सन्तापन पु० सन्तापयति सम्+तप णिच्-ल्यु। कामदेवस्य पञ्चशरान्तर्गते शरभेदे। सन्तापकारके त्रि०।
सन्तोष पु० सम्+तुष घञ्। धैर्य्ये, स्वास्थ्ये च 'सन्तोषमूलं हि सुखमिति मनुः। [सन्दंशिकायत स्त्री०।
सन्दंश पु० सम् दन्श घञ्। (साँडाशी) यन्त्रभेदे। ण्वुल्।
सन्दंशपतित पु० सन्दंशे तन्मध्ये पतित इव। मीमांसकोक्त न्यायभेदे।
सन्दर्भ पु० सम्+दृभ-घञ्। रचनायां, ग्रन्थने, प्रबन्धे "गाढादंश प्रकाशश्च सारोक्ति श्चेवता तथा। नानार्थवत्त्व वेद्यत्व सन्दर्भ कथ्यते बुधै"रित्युक्ते कथनभेदे, वक्तृतात्पर्य्य विषये च।
सन्दान न० सम्+दो-ल्युट्। बन्धने दाम्नि, सम्यक्खण्डने च दा ल्युट्। सम्यग्दाने च गजस्याधोभागे पु०।
सन्दानिका स्त्री० सन्दान बन्धनमस्यस्य ठन्। विट्खदिरे
सन्दानित त्रि सन्दान जातमस्य तार० इतच्। बद्धे 'रसनासन्दानितचरणे'ति मालविकाग्निमित्रम। [गोष्ठे
सन्दानिनी स्त्री० सन्दानं बन्धनं गवामत्र इनि ङीप्।
सन्द्राव पु० सम+द्रु घञ्। पलायने।
सन्दाह पु सम्+दह घञ्। दाहादिरोगे, सम्यग्दाहे च।
सन्दिग्ध त्रि० सम्+दिह कर्त्तरि क्त। सन्देहयुक्ते। कर्म्मणि क्त। सन्देहविषये।

**सन्दित** त्रि० सम्+दो-क्त। बद्धे। [कर्मणि-क्त। उपदिष्टे त्रि०।

**सन्दिष्ट** न० सम्+दिश-भावे-क्त। वाचिकार्थकथने वार्त्तायाम्

**सन्दिहान** त्रि० सम्+दिह-शानच्। सन्देहयुक्ते।

**सन्दी** स्त्री० सम्+दो-ड गौ०ङीष्। खट्वायाम्।

**सन्दीप्य** पु० सन्दीप्यतेऽसौ सम्+दीप-कर्त्तरि यत्। मयूरशिखावृक्षे।

**सन्देश** पु० सम्+दिश-घञ्। वाचिकार्थकथने वार्त्तायाम्।

**सन्देशहर** पु० सन्देशं हरति अभीष्टस्थानं कथनाय नयति हृ-अच्। दूते 'तवैव सन्देशहरादिति' रघुः। ण्वुल्। सन्देशहारकोऽप्यत्र।

**सन्देह** पु० सम्+दिह-घञ्। संशयशब्दार्थे।

**सन्दोह** पु० सम्+दुह-घञ्। समूहे। सम्यग्दोहे च

**सन्द्राव** पु०सम्+द्रु-घञ्। पलायने।

**सन्धा** स्त्री० सम्+धा-अङ्। स्थितौ, प्रतिज्ञायाम्, सन्धाने, सुरोत्पादनानुगुणे व्यापारभेदे, अनुसन्धाने च।

**सन्धान** न० सम्-धा-ल्युट्। सुरादिसम्पादनानुगुणे व्यापारे सौवर्चलकरणनालके अभिषवे, अनुसन्धाने, सङ्घट्टने च सन्धाने स्त्रीत्वमपि तत्र ङीप्। सा च कुम्भशालायाञ्च

**सन्धि** पु० सम्+धा-कि। नृपाणां षड्गुणान्तर्गते मेलनार्थं मैत्रीकरणरूपे व्यापारे, संयोगे, अस्थिद्वयसंयोगस्थाने, चौरादिकृतसुरङ्गायां 'सन्धिं कृत्वा तु चौर्यमि'ति स्मृतिः भगे, सङ्घट्टने, नाटकाङ्गविशेषे, व्याकरणोक्ते वर्णद्वयजाते वर्णविकारभेदे।

**सन्धिचौर** पु० सन्धिना कृतसुरङ्गया चौरः। सन्धिं कृत्वा चौर्यकारके (सिन्धेल)। [परार्थहारके

**सन्धिजीवक** पु० सन्धिं जीवति जीव-ण्वुल्। शाठ्येन

**सन्धित** त्रि० सन्धा जाताऽस्य तार०इतच्। कृतसन्धे, मिलिते च

**सन्धिनी** स्त्री० सन्धा वृषभसंयोगस्तज्जगर्भोऽस्त्यस्याः इनि ङीप्। वृषभसंयोगेन धृतगर्भायां गवि।

**सन्धिपूजा** स्त्री० सन्धौ अष्टम्याः शेषे नवम्याश्च आद्ये दण्डे पूजा। आश्विनशुक्लाष्टमीनवमीसन्धिकाले विहितपूजायाम्।

**सन्धिबन्ध** पु० सन्धिं बध्नाति संयुनक्ति सम्+बन्ध-अच्। भूमिचम्पके। तल्लेपने हि भग्नसन्धियोजनं वैद्यके प्रसिद्धम्

**सन्धिला** स्त्री० सन्धिं लाति ला-क। नद्यां, मदिरायाञ्च। स्वार्थे लच्। सुरङ्गायाम्।

**सन्धिविग्रहाधिकारिन्** पु० सन्धिविग्रहेषु अधिकरोति अधि+कृ-णिनि। नृपाणां सन्धिविग्रहाद्यधिकारिमन्त्रिभेदे

**सन्धिवेला** स्त्री० सन्धियुक्ता वेला समय। अहोरात्रसन्धिसमये

**सन्धिहारक** पु० सन्धिना सुरङ्गया हरति परद्रव्यम् हृ-ण्वुल् सन्धिचौरे। (सिन्धेल)

**सन्धुक्षित** त्रि० सम्+धुक्ष-क्त। उद्दीपिते।

**सन्धेय** त्रि० सम्+धा-यत्। संयोज्ये मेलनीये।

**सन्ध्या** स्त्री०सम्-ध्यै-अङ् सुवा। एकरूपकालोत्तरभाविपररूपकालस्थायकाले, दिवारात्रयः मध्यवर्त्तिकाले, स च दिवाशेषदण्डसहितरात्रिप्रथमदण्डात्मकः कालः तयोः चतुर्दण्डात्मककालस्य 'त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टये। नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते इति स्मृतिः। अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः। सा च सन्ध्या समाख्यातेति स्मृतिः। सायाह्ने, सन्ध्याकाले-उपास्यदेवताभेदे च। सन्ध्यामुपासते ये तु नियतं शंसितव्रता इति स्मृतिः। 'प्रातः सन्ध्यां ततः कृत्वा सकलं बुध आचरेदि'ति स्मृतिः। एतद्विशेषो ब्रह्माभिधाने। 'चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युगम्। तस्य तावच्छती सन्ध्या सन्ध्यांशस्य प्रकीर्त्तित' इत्युक्ते युगसन्धिकाले, नदीभेदे, ब्रह्मपत्नीभेदे च।

**सन्ध्यांश** पु० सन्ध्यायाः सत्ययुगादेरंशः। सत्ययुगादेरंशभेदे तत्प्रमाणन्तु सन्ध्याशब्दे द्रष्टव्यम्। 'सन्ध्यासन्ध्यांशसहितं विज्ञेयं चतुर्युगमि'ति मनुः।

**सन्ध्याचल** पु० 'सन्ध्यां वशिष्ठः कृतवान् तत्र यथाविधि' सुत। ततः सन्ध्याचलं नाम तस्य गायन्ति देवता' इत्युक्ते पर्वतभेदे।

**सन्ध्यानटिन्** सन्ध्यायां नटति नट-णिनि। शिवे।

**सन्ध्यापुष्पी** स्त्री० सन्ध्यायां पुष्पमस्याः। जातिवृक्षे।

**सन्ध्याबल** पु० सन्ध्याया सन्ध्योपलक्षिते रात्रिकाले बलं यस्य। रात्रौ-बलयुक्ते राक्षसे। [कालिकमेघे च।

**सन्ध्याभ्र** न० सन्ध्याकालिकमभ्रमिव। सुवर्णगैरिके। सन्ध्या-

**सन्ध्याराग** न० सन्ध्याया इव रागोऽस्य। सिन्दूरे।

**सन्ध्याराम** पु० सन्ध्याया तदाख्यभार्यया रमते रम-घञ्। चतुर्मुखे ब्रह्मणि। [खर्व्वे।

**सन्न** पु० सीदति सद-क्त। पियालवृक्षे अवसन्ने त्रि०स्वार्थे कन्।

**सन्नकद्रु** पु० सन्न एव सन्नकः कर्म्म०। पियालवृक्षे, खर्व्ववृक्षे च

**सन्नत** त्रि० सम्+नम-क्त। प्रणते, शब्दायमाने च।

**सन्नति** स्त्री० सम्+नम-क्तिन्। प्रणामे, ध्वनौ, नम्रतायाञ्च।

**सन्नद्ध** त्रि० सम्+नह-क्त। कृतसन्नाहे धृतवर्म्मणि, व्यूहरचनयावस्थिते सैन्यादौ, आततायिनि, सन्नादियुक्ते च।

**सन्नय** पु० सम्+नी-अच्। समूहे, पृष्ठस्थिते-बले च।

**सान्दीपनि** पु० सन्दीपनस्यापत्यम् इञ् । रामकृष्णयोराचार्य्ये अवन्तिपुरवासिनि मुनिभेदे । [मनोज्ञे च वने न० ।

**सान्द्र** त्रि० अदि-रक् सह अन्द्रेण । निविडे, मृदौ, स्निग्धे,

**सान्द्रपुष्प** पु० सान्द्रं पुष्पमस्य । विभीतकवृक्षे ।

**सान्द्रस्निग्ध** त्रि० सान्द्रं स्निग्ध० । अतिहृद्ये अतिमनोहरे च

**सान्धिक** पु० सन्धा सुराच्यावनं शिल्पं वेत्ति ठक् । शौण्डिके सन्धि० प्रयोजनमस्य ठण् । सन्धिकर्त्तरि त्रि० ।

**सान्ध्य** त्रि० सन्ध्यायां भवः अण् । सन्ध्याकालिके ।

**सान्नाय्य** न० सन्नीयते सम्+नी-ण्यत् नि० । मन्त्रादिना संस्कार्य्ये हुतादौ । [ति' दुर्गावाहनमन्त्रः ।

**सान्निध्य** न० सन्निधिरेव ष्यञ् । नैकट्ये, 'सान्निध्यमिह कल्पये

**सान्निपातिक** त्रि० सन्निपातात् त्रिदोषविकारात् आगत० तेन निर्वृत्तो वा ठक् । सन्निपाताज्जाते रोगे 'विकारे सन्निपातिके' इति कुमारः ।

**सान्न्यासिक** पु० सन्न्यासः प्रयोजनमस्य ठक् । सन्न्यासिनि ।

**सापत्न** पु० सपत्न एव स्वार्थे ष्यञ् । शत्रौ, सपत्न्यां भवः तस्या अपत्यं वा यञ् । सपत्नीपुत्रे । अण् । सापत्नोऽप्युभयत्र

**सापिण्ड्य** न० सपिण्डस्य भावः ष्यञ् । दायाशौचग्रहणाद्युपयोगिनि ज्ञातिधर्म्मे सापिण्ड्यं साप्तपौरुषमि'ति स्मृतिः [हार्द्दे

**साप्तपदीन** न० सप्तभिः पदैः उच्चारितैर्निर्वृत्तम् खञ् । सख्ये सौ-

**साप्तपौरुष** त्रि० सप्त पुरुषान् व्याप्नोति अण् । सप्तपुरुषव्यापके

**साफल्य** न० सफलस्य भाव० ष्यञ् । सार्थक्ये, सम्पूर्णतायाञ्च ।

**साम** सान्त्वने अद०चु०उ०स०सेट् । सामयति ते अससामत् त

**सामग** पु० साम तद्भेदं गायति । सामवेदाध्यायिनि ।

**सामगर्भ** पु० साम गर्भे यस्य । विष्णौ ।

**सामग्री** स्त्री० न० समग्रस्य भावः ष्यञ् स्त्रीत्वपक्षे ङीष् ङीषि यलोप । समस्ततायाम् 'प्रायेण सामग्र्यविधा'विति कुमारः स्वार्थे ष्यञ् । कारणसमूहे, द्रव्ये च स्त्री० ।

**सामञ्जस्य** न० समञ्जसस्य भावः ष्यञ् । औचित्ये ।

**सामन्** न० सो-मनिन् । 'अग्निं दूतं वृणीमहे, इत्यादिके वेदभेदे, तत्रोक्तासु ऋक्षु गानभेदे 'ऋच्यध्यूढं साम गीयते इति' छान्दोग्यम् । राज्ञां 'साम भेदस्तथा दानं दण्डश्चे'त्युक्ते शत्रुवशीकरणोपायभेदे, प्रियवाक्यादिना सान्त्वने च । पशुबन्धनरज्जौ स्त्री० ङीप् ।

**सामन्त** पु० संश्लिष्टोऽन्तः एकदेशो यस्य समन्तस्तस्येश्वरः अण् । स्वविषयानन्तरवर्त्तिदेशाधिपे नृपे । समन्तात्भव' अण् टिलोपः । श्रेष्ठप्रजासु (मडल) यं परम्परया मौलाः सामन्ता'वेति स्मृतिः । [कालोचिते च ।

**सामयिक** त्रि० समये भवः उचितो वा ठञ् । समयभवे,

**सामयोनि** पु० साम योनिरुत्पत्तिस्थानं यस्य । हस्तिनि, तेषाञ्च सामयोनित्वमुक्तं पालकाप्ये 'सूर्य्यस्याण्डकपाले द्वे समानीय प्रजापतिः । हस्ताभ्यां परिगृह्याय सप्त सामान्यगायत । गायतो ब्रह्मणस्तस्मात् समुत्पेतुर्मतङ्गजा' इति । चतुर्मुखे ब्रह्मणि च ।

**सामर्थ्य** न० समर्थस्य भावः ष्यञ् । देहजे बले शक्तौ योग्यतायां, सङ्गतार्थतायाञ्च । [समवायसम्बन्धिनि त्रि० ।

**सामवायिक** पु० समवाये प्रसृतः ठञ् । मन्त्रिणि । तस्येदम् ठञ् ।

**सामाजिक** पु० समाजः समावेशनं प्रयोजनमस्य । सभ्ये ।

**सामान्य** न० समानस्य भाव० ष्यञ् । सादृश्यप्रयोजकधर्मे यथा मुखं पद्ममिव सुन्दरमित्यादौ सौन्दर्य्यादि । समानमेव स्वार्थे ष्यञ् । द्रव्यगुणकर्मसु तुल्यतया स्थितायां जातौ ।

**सामान्यलक्षणा** स्त्री० सामान्यं साधारणधर्म० लक्षणं यस्याः । न्यायोक्ते अलौकिकप्रत्यक्षसाधने उपायभेदे । यथा एकघटज्ञाने घटत्वरूपसामान्यधर्मज्ञानात् सकलस्य घटत्ववतो ज्ञानम् । [रणस्त्रियां वेश्यायाम् ।

**सामान्या** स्त्री० समानैव स्वार्थे ष्यञ् अजा० टाप् । साधा-

**सामि** अव्य० साम-इन् । अर्द्धे 'सामिघटिते'ति नैषधम् ।

**सामिधेनी** स्त्री० सम्-इन्ध करणे ल्युट् नि० । अग्निसमिन्धनसाधने ऋग्भेदे, समित्काष्ठे च ।

**सामीप्य** न० समीपस्य भावः स्वार्थे वा ष्यञ् । नैकट्ये निकटे च 'सामीप्याश्लेषविषयैर्व्याप्याधारश्चतुर्विधः' इति व्याकरणम् ।

**सामुद्र** न० समुद्रे भव अण् । (करकच) लवणे ।

**सामुद्रक** न० समुद्रेण प्रोक्तम् वुण् । हस्तादिरेखादिना स्त्रीपुंसयोः शुभाशुभलक्षणज्ञापके ग्रन्थभेदे, 'वामभागे तु नारीणां दक्षिणे पुरुषस्य च निर्दिष्टं लक्षणं तेषां समुद्रेण यथोदितमिति' 'सामुद्रकसारमुद्रणे'ति नैषधम् ।

**सामुद्रिक** त्रि० समुद्रेण प्रोक्तम् ठञ् । स्त्रीपुंसशुभाशुभलक्षणज्ञापके ग्रन्थे । [ठण् । युद्धे परलोकसाधने त्रि०

**साम्परायिक** न० सम्परायाय आपदे परलोकाय वा हितम् ।

**साम्प्रतम्** अव्य० सम्+प्र+तन-अनुयुक्ते । उचिते ।

**साम्बर** न० सम्बरदेशे भवम् अण् । सम्बरदेशोद्भवे लवणे

**साम्भवा** स्त्री० सम्भवः अस्त्यस्य प्रज्ञाद्यण् गौ० ङीप् । रक्तलोध्रे

**साम्य** न० समस्य भावः ष्यञ् । तुल्यत्वप्रयोजके साधारणधर्मे

**साम्राज्य** न० सम्राजः भावः ष्यञ् । सार्व्वभौमत्वे 'भेजे साम्राज्यदीक्षितमिति रघुः 'लक्षाधिपत्यं राज्यं स्यात् साम्राज्यं दशलक्षके' इत्युक्ते दशलक्षयोजनाधिराज्ये च ।

साय पु० सो-घञ्। दिनान्ते, वाणे च।

सायसन्ध्या स्त्री० सायम् दिनान्ते सन्ध्या, तत्र सन्ध्यायते सम्+ध्यै-घञर्थे क वा। दिनान्तसन्ध्यायाम् दिनान्ते-उपास्य देवताभेदे च। भावे अङ्। तत्रोपासनायाम्।

सायक पु० सो-ण्वुल्। वाणे-खड्गे च।

सायन्तन त्रि० सायम्भव ट्युल् तुट् च। दिनान्तभवे। स्त्रियां ङीप्। "सायन्तनीं तिथिप्रणः" इति भट्टिः।

सायपुङ्खा स्त्री० सायकस्य पुङ्खोयस्याः ५ ब०। शरपुङ्खाख्ये।

सायम् अव्य० सो-अमु। दिनान्ते "साय सन्ध्यामिति वर्त्तते" इत्युद्भट

सायाह्न पु० सायोऽह्न एक० स० टच् ह्लादेश। दिनान्ते, "सायाह्नस्त्रिमुहूर्त्तः स्यात् श्राद्धं तत्र न कारयेदिति" स्मृत्युक्ते पञ्चधाविभक्तदिनस्य त्रिमुहूर्त्तात्मके पञ्चमे यो भागः स च।

सायुज्य न० सह युनक्ति-युज-क्विप् सादेश सयुज् तस्य भाव ष्यञ्। सहयोगे पञ्चविधमुक्तिमध्ये एकत्वसमवस्थानरूपे मुक्तिभेदे च। [सारत् च।

सार दौर्बल्ये अद० चु० उभ० सक० सेट्। सारयति ते अस

सार न० सृ-घञ्, सार-अच् वा। जले, धने, न्याय्ये, नवनीते, क्षीरे, वने च। बले, स्थिरांशे, मज्जनि, सर्जक्षारे, वायौ, रोगे, अतिसारे इत्यर्थे च पु० न०। श्रेष्ठे, वरे च त्रि०

सारक पु० सारयति रेचयति सृ-णिच्-ण्वुल्। जयपाले। रेचकद्रव्ये त्रि०।

सारखदिर पु० कर्म०। विट्खदिरे।

सारगन्ध पु० सार श्रेष्ठो गन्धोयस्य। चन्दने।

सारघ न० सरघाभिर्निर्वृत्तम् अण्। मधुनि क्षौद्रे।

सारङ्ग पु० सृ-अङ्गच्। चातकखगे, हरिणे, गजे, भृङ्गे छत्रे, राजहंसे, चित्रमृगे, वाद्यभेदे वस्त्रे, नानावर्णे मयूरे कामदेवे चापे, केशे, आभरणे, पद्मे, शङ्खे, चन्दने, कर्पूरे पुष्पे, कोकिले, मेघे, शिवे, रात्रौ, भूमौ, दीप्तौ च। सारङ्गमस्य प्रक०। शारङ्गोऽपि चित्रमृगादौ।

सारङ्गिक पु० सारङ्ग मृग हन्ति ठक्। व्याधे।

सारज न० सारात् दध्यग्रात् जायते जन-ड। नवनीते।

सारण न० सृ-णिच्-ल्यु। गन्धभेदे, अतीसाररोगे, रावणसचिवे च। भद्रवलायाम् आम्रातके च पु०।

सारणि(णी) स्त्री० सृ-णिच्-अनि वा ङीप्। क्षुद्रनद्याम्, प्रसारिण्याम् ग्रहचैत्र पञ्चाङ्गादिबोधके ज्योतिषग्रन्थभेदे च।

सारतरु पु० सारप्रधान अक्षप्रधानतरुः। कदलीवृक्षे।

सारथि पु० सृ-अथिण्, सह रथेन सरथ घोटक: नियुक्त इञ् वा। रथादिवाहनप्रेरके नियन्तरि।

सारदा स्त्री० सार ददाति दा-क। सरस्वत्याम् "लिख यदि गृहीत्वा सारदेति" शिवस्तवः। सारदातरि त्रि

सारद्रुम पु० साराढ्योद्रुमः। खदिरवृक्षे।

सारभाण्ड न० कर्म०। वस्तुनिभपात्रे, श्रेष्ठपात्रे च। [वृक्षे

सारमूषिका स्त्री० सारे मूषिकेवापहारकत्वात्। देवदा

सारमेय पु० स्त्री० सरमाया काश्यपपत्न्या अपत्यम् ढक् कुक्कुरे। तस्योषिति स्त्री०।

सारलौह न० लौहेषु सार राज०। लौहसारे (इस्पात)

सारव त्रि० सरय्वा भव अण् नि०। सरयूनदीभवे।

सारस न० सरोऽभिजनोनियतवसतिरस्य अण्। पद्मे, कथा भरणे च। सह रसेन स्वार्थे अण्। चन्द्रे, स्वनामख्या पक्षिणि च पु०। तस्योषिति स्त्री०। सरस इदम् अण् सरोवरसम्बन्धिनि त्रि।

सारसन न० सार सनोति सन-अच्। स्त्रीकट्याभरणे, का ख्याम् कञ्चुकदाढ्यार्थं मध्यकाये निबद्धे, पट्टिकादौ च।

सारस्वत पु० सरस्वती देवताऽस्य, सरस्वत्याइद वा अण् बिल्वदण्डे, देशभेदे, पञ्चगौडमध्ये ब्राह्मणभेदे सरस्वतीं प्रतिपालितमुनिभेदे, ब्राह्मदिनरूपे कल्पभेदे च "सारस्व तस्य कल्पस्येति" पुराणम्। सरस्वतीसम्बन्धिनि "तस्य पूर्वाह्णसमये कुर्यात् सारस्वतोत्सवमिति" पुराणम् सरस्वतीदेवताके च त्रि० "तत्रावसाय निर्माण्यवर सार स्वतोद्दिश्य रिति" स्मृतिः।

सारस्वतकल्प पु० कर्म०। तन्त्रोक्ते सरस्वत्या उपासनार्थ के विधानभेदे, तदात्मके-ब्रह्मदिने च। [दूर्वायाञ्च

सारा स्त्री० सारयति सृ-णिच्-अच्। कृष्णत्रिवृतायाम्

साराल पु० सारमालाति आ×ला-क। तिलवृक्षे।

सारि(री) पु० स्त्री० सृ-इञ् स्त्रीत्वपक्षे वा ङीप्। पाशकै "शारीं चरन्तीं सखि! मारयेति" नैषधम् पक्षिभेदे च।

सारिका स्त्री० सरति गच्छति सृ-ण्वुल्। पक्षिभेदे (शालिक)

सारिणी स्त्री० सृ-णिनि। सहदेवीलतायाम् कार्पासा, दुरा लभाया, कपिलशिंशपायां प्रसारिण्या, रक्तपुनर्णवायाञ्च।

सारिवा स्त्री सारिरिव वाति वा क। (अनन्तमूल) लताभेदे [भव ठञ्। पिण्डभेदे

सारोष्ट्रिक पु० सार श्रेष्ठ उष्ट्रोयत्र सारोष्ट्र देशभेदस्तत्र

सार्थ पु० सृ-थन् स्वार्थेऽण्। समूहे, जन्तुसमूहे "स जयन्नरि-

सार्थसार्थकीर्ति" नैषधम् सह अर्थेन वाच्येन वा। वणिग्समूहे। धनिनि त्रि० कन्। सार्थकः। अर्थसहिते जने त्रि० शब्दे।पु० "सार्थक स्वार्थबोधकदिति" शब्दशक्तिप्रकाशिका".

**सार्थवाह** पु० सार्थं वहति वह-अण्। वणिग्जने।

**सार्द्र** त्रि० सह आर्द्रेन। आर्द्रतायुक्ते। [अर्द्धयुक्ते त्रि०।

**सार्द्धम्** अव्य० सह+ऋध-अम्। साहित्ये। सह अर्द्धेन। सार्द्धः।

**सार्प** न० सर्पोदेवतास्य अण्। अश्लेषानक्षत्रे।

**सार्पिष्क** त्रि० सर्पिषा संस्कृतम् ठण्। घृतसंस्कृते व्यञ्जनादौ

**सार्व्वजनीन** त्रि० सर्व्वेषु जनेषु विदित खञ् द्विपदवृद्धिः। सर्व्वलोकविदिते।

**सार्व्वत्रिक** त्रि० सर्व्वत्रभवम् ठञ्। सर्व्वस्मिन् कालादौभवे।

**सार्व्वधातुक** न० सर्व्वधातून् व्याप्नोति ठञ्। व्याकरणोक्ते सर्व्वधातुप्रकृतिके तिङादौ प्रत्यये।

**सार्व्वभौतिक** त्रि० सर्व्वाणि-भूतानि व्याप्नोति ठञ् द्विपदवृद्धि। सर्व्वभूतव्यापके।

**सार्व्वभौम** पु० सर्व्वस्या भूमेरीश्वरः सर्व्वासु भूमिषु विदितो वा अण्। चक्रवर्त्तिनि नृपे, उत्तरदिक्स्थे गजे च।

**सार्व्वलौकिक** त्रि० सर्व्वेषु लोकेषु विदितः ठञ् द्विपदवृद्धिः। सर्व्वलोकेषु विदिते "स रामः सार्व्वलौकिक"इति भट्टिः।

**सार्व्वविभक्तिक** त्रि० सर्व्वासु विभक्तिषु तदर्थे भवः-ठञ्। सर्व्वविभक्त्यर्थे विहिते तसिलादौ प्रत्यये।

**सार्षप** त्रि० सर्षपस्य विकारः अण्। सर्षपविकारतैलादौ "अदुष्ट सार्षप तैलमिति, स्मृति."।

**साल** पु० सल-घञ्। वृक्षमात्रे, "रसालः सालः समदृश्यतेति"नैषधम् स्वनामख्याते वृक्षभेदे, प्राकारे च।

**सालन** पु० सालः कारणत्वेनास्त्यस्य पामादित्वात् न। सालनिर्यासे (धुना)।

**सालनिर्यास** पु० ६त०। धुना) सर्ज्जरसे। [वृक्षे।

**सालपर्णी** स्त्री० सालस्येव पर्णान्यस्याः ङीप्। (सालपानि)

**सालपुष्प** न० सालस्येव पुष्पं यस्य। स्थलपद्मे।

**सालभञ्जिका** स्त्री० सालं भनक्ति भनृज-ण्वुल्। काष्ठादिनिर्म्मिते कृत्रिमक्रीड़ासाधने पुत्तलिकायाम्, वेश्यायाञ्च।

**सालरस** पु० ६त०। (धुना) राले।

**सालवेष्ट** पु० साल वेष्टयति वेष्ट-अण्। राले (धुना)।

**साला** स्त्री० साल प्राकारोऽस्त्यस्याः अच्। गृहे।

**सालाष्टक** पु० सालायां दृकद्रव। कुक्कुरे।

**सालूर** पु० सल-ऊरच् णिच्। भेके मण्डूके

**सालेय** पु० सालायां भव ढक्। मधुरिकायाम्।

**सालोक्य** न० समानोलोकोऽस्य तस्य भावः ष्यञ्। पञ्चविधमुक्तिमध्ये एकलोकवासरूपे मुक्तिभेदे। [नृपे।

**साल्व** पु० ब०व० सौभदेशे। तेषा राजा अण्। तद्देशाधिपे

**साल्वहन्** पु० साल्वं नृप हतवान् हन-क्विप्। विष्णौ।

**सावधान** त्रि० सह अवधानेन। सचेतने, सतर्के, मनोभिनिवेशयुक्ते च।

**सावन** न०सवनं। सोमयागाङ्गं स्नानं तस्येदम् अण्। "अहोरात्रेण चैकेन सावनो दिवसः स्मृत" इति ज्योतिषोक्ते अहोरात्रात्मके दिवसे, सवनत्वस्य अहोरात्रसाध्यत्वाद्‌-रूपत्वात्तदभिन्नत्वम्। तत्त्रिंशद्दिवसात्मके मासभेदे च पु० "विवाहादौ स्मृत सौर यज्ञेषु सावनोमत इति"स्मृति। "सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तितः" इति सूर्यसिद्धान्त.।

**सा(शा)वर** पु० स(श)वरेण निर्वृत्त अण्। पापे,अपवादे च।

**सावर्ण** पु० सवर्णायां सूर्यपत्न्यां संज्ञायां भवः अण्। सवर्णागर्भजे सूर्यजे अष्टमे मनौ। इञ्। सावर्णिरप्यत्र "सूर्यात्मजन्म समासाद्य सावर्णिर्भविता मनुरिति"चण्डी।

**सावित्र** पु० सविता देवताऽस्य अण्। विप्रे। स्त्रविशेषे, स्त्री० ङीप्। "सावित्रीमात्रसारोऽपीति" स्मृतिः। सा च सत्यवतोभार्य्यायाञ्च। सवितृदेवताके चर्व्वादौ त्रि० यज्ञोपवीते न०। स्वार्थादौ अण्। सूर्य्ये। तस्येदम् अण्। महादेवे, गर्भे वसौ च पु०।

**सावित्रीव्रत** न० सावित्रीपूजनमुद्दिश्य कर्त्तव्यं व्रतम्। ज्यैष्ठकृष्णचतुर्द्दश्यां सावित्रीपूजनार्थे व्रते। [पवीते।

**सावित्रीसूत्र** न० सावित्रीदीक्षाकालिकं सूत्रम् शाक०। यज्ञो-

**सास्ना** स्त्री० सस-न णिच्। गोगलस्थिते लोमसंघातात्मके कम्बले। [करस्थे च।

**सास्र** त्रि० सह अस्रेण। चक्षुर्जलान्विते। [सामानाधि

**साहचर्य्य** न० सहचरस्य भाव. ष्यञ्। समभिव्यारे, साहित्ये,

**साहस** न० सहसा बलेन निर्वृत्तम् अण्। बलेन कृते चौर्य्यस्त्रीसंग्रहादौ दुष्टकर्म्मणि,"सहसा क्रियते यत्तु तत् साहसमिति स्मृत मिति" स्मृतिः तच्च पञ्चविधम् "मनुष्यमारणं स्तेयं परदाराभिमर्षणम्। पारुष्यमनृतञ्चैव साहसं पञ्चधा स्मृतमिति" स्मृति.। सहसा अविवेचनेन कृतम् कर्म्म। अविमृश्यकृतकर्म्मणि, त्रि०। साहसमनुसरति अण्। स्मृत्युक्ते दण्डविशेषे,"साशीतिपणसाहस्रो दण्डउत्तमसाहस।

सितकुञ्जर पु० सितः कुञ्जरोऽस्य। इन्द्रे। कर्म०। ऐरावतगजे
सितगुञ्जा स्त्री० कर्म०। श्वेतगुञ्जायाम्।
सितच्छत्रा स्त्री० सित छत्रमिव पुष्पमस्याः। श्वेतपुष्पायाम्।
सितच्छद पु० सितश्छद पत्त्रोयस्य। हंसे। श्वेतदूर्व्वायां,स्त्री०।
सितदर्भ पु० कर्म०। श्वेतकुशे। [जीरके।
सितदीप्य पु० दीपयत्यग्निम् दीप-णिच्-यत् कर्म०। श्वेत-
सितदूर्वा स्त्री० कर्म०। श्वेतदूर्व्वायाम्।
सितद्रु पु० कर्म०। मोरटभेदे, शुक्लवर्णवृक्षे च।
सितधातु पु० कर्म०। कठिन्याम्।
सितपक्ष पु० सितः पक्षोऽस्य। हंसे। कर्म०। चन्द्रस्य वृद्धिकारक पञ्चदशतिथ्यात्मके शुक्ले पक्षे। [वृक्षे।
सितपर्णी स्त्री० सितानि पर्णान्यस्याः ङीप्। अर्कपुष्पिका
सितपाटलिका स्त्री० कर्म०। (श्वेतपारुल) वृक्षे।
सितपुङ्खा स्त्री० सित. पुङ्खोऽस्याः। श्वेतशरपुङ्खावृक्षे।
सितपुष्प न० सितानि पुष्पाण्यस्य। कैवर्त्तीमुस्तके। तगर-वृक्षे, काशे, श्वेतरोहितकवृक्षे च पु०। श्वेतापराजितायां स्त्री० ङीप्। मल्लिकायां स्त्री० टाप्। कर्म०। श्वेतपुष्पे न०।
सितमरिच न० कर्म०। शुभ्रमरिचे।
सितमाष पु० कर्म०। राजमाषे (बरवटी) [वायाम्।
सितवर्षाभू स्त्री० वर्षासु भवति भू-क्विप् कर्म०। श्वेतपुनर्ण-
सितसायका स्त्री० सितः सायकोऽस्याः ५ब०। शुभ्र-शरपुङ्खावृक्षे।
सितशिम्बिक पु० सिता शिम्बि र्यस्य कप्। गोधूमे,
सितशूक पु० सित, शुभ्रः शूकोऽस्य। यवे।
सितशूरण पु० कर्म०। वनशूरणे (वनओल)।
सितसर्षप पु० कर्म०। गौरसर्षपे। [शाके।
सितसार(क) पु० सित. सारोनिर्यासोऽस्य वा कप्। शालिञ्च-
सिता स्त्री० सो-क्त। शर्करायाम्।
सिताखण्ड पु० सितायाः खण्ड इव। मधुजातशर्करायाम्।
सिताग्र पु० सितमग्रं यस्य। कण्टके
सितादि पु० सितायाआदि कारणम्। गुडे।
सितापाङ्ग पु० सितमपाङ्ग यस्य। मयूरे
सिताब्ज न० कर्म०। श्वेतकमले। सिताम्भोजादयोऽप्यत्र।
सिताभ पु० सिता आभा यस्य। कर्पूरे,चन्द्रे च। तक्रे स्त्री०
सिताभ्र पु० अभ्रइव सित शुभ्र राज०। कर्पूरे।
सिताभ्रक न० अभ्रकमिव सितम् राज०। कर्पूरे
सितार्जक पु० कर्म०। श्वेततुलस्याम्।
सितालक पु० आलयति भूषयति अल-णिच्-ण्वुल् कर्म०। श्वेतमन्दारे। [श्वेतदूर्व्वायाम्
सितालता स्त्री० सिता सती आलतते आ+लत-अच्।
सितावर पु० सित श्वेततामावृणोति आ+वृ-अच् (सुसुनि) शाकभेदे।
सिति पु० सो-क्तिच्। शुक्लवर्णे, कृष्णवर्णे च। तद्वति त्रि०।
सितिमन् पु० सितस्य भाव. इमनिच्। शुभ्रतायाम्
सितिवार पु० सितिं श्वेततां वृणोति वृ-अण्। सुनिषण्णके (सुसुनि)शाके।
सितिवासस् पु० सिति कृष्ण वासोऽस्य। बलदेवे।
सितेतर पु० सितादितरः। श्यामशालौ. कुलत्थे च श्यामेतर वर्णे पु० तद्वति त्रि०।
सितोपल पु० कर्म०। स्फटिके। कठिन्यां न०। शर्करायां स्त्री०
सिद्ध न० सिध-क्त। सैन्धवलवणे अकृत्रिमत्वात्तथात्वम् निष्पन्ने,पक्वे,, नित्ये च त्रि०। सिद्धिरस्त्यस्य अच्। व्यासादौ मुनौ देवयोनिभेदे च पु०। निश्चिते त्रि० विष्कम्भादिषु मध्ये द्वाविंशयोगे, गुडे, कृष्णधुस्तूरे च पु०। ज्योतिषोक्ते योगिनीदशामध्ये सप्तम्या दशायां स्त्री०। तन्त्रोक्ते सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठस्थाद्याक्षरयुक्ते मन्त्रभेदे पु०।
सिद्धक पु० सिद्धइव इवार्थे कन्। सिन्धुवारे, शालवृक्षे च
सिद्धजल न० सिद्ध पक्व जलम्। काञ्जिके। सिद्धतोयादयोऽप्यत्र
सिद्धदेव पु० सिद्धानां देव.। महादेवे
सिद्धधातु पु० सिद्धः प्रसिद्धोधातुः। पारदे
सिद्धपीठ पु० न० कर्म०।"जातोलक्षवलिर्यत्र होमोवा कोटि-सद्मक.। महाविद्याजपः कोव्यः सिद्धपीठः प्रकीर्त्तित" इति तन्त्रोक्ते स्थानभेदे।
सिद्धपुर न० कर्म०। "लङ्काकुमध्ये यमकोटिरस्याः प्राक् पश्चिमे रोमकपत्तनञ्च। अधोगतं सिद्धपुरञ्चेत्युक्ते" भूगोलस्थेषु भूवृत्तपादान्तरितदेशस्थेषु चतुर्षु देवनिर्मितेषु पुरेषु मध्ये लङ्काधोभागस्थे पुरभेदे।
सिद्धपुष्प पु० सिद्ध नित्य पुष्पं यस्य। करवीरवृक्षे।
सिद्धप्रयोजन पु० सिद्धं प्रयोजनं यस्मात् ५ब०। गौरसर्षपे
सिद्धरस पु० सिद्ध. प्रसिद्धोरसः। पारदे सिद्धोरसोऽत्र धातुमाते त्रि०।
सिद्धविद्या स्त्री० सिद्धा विद्या मन्त्रोयस्याः। "काली तारा महाविद्या षोड़शी भुवनेश्वरी। भैरवी छिन्नमस्ता च विद्या धूमावती तथा। बगला सिद्धविद्या च मातङ्गी क-

तरङ्गानिलकम्पितास्विति' रघुः ।

**सिम** पु० सि-मन् किच्च । सर्व्वस्मिन् इत्यर्थे, तदर्थेऽस्य सर्व्वनामता

**सिम्बा(म्बि)** स्त्री० शाम्यति क्षुदिरनया शम-बन् इत्‌ वा पृ० । (छुटि) शिम्बायाम् इत्यन्ये । नखीनामगन्धद्रव्ये । वा ङीप् । ङीबन्तः । निष्पाव्यां च ।

**सिम्बिजा** स्त्री० सिम्बेर्जायते जन-ड । शमीधान्ये कलायादौ

**सिर** पु० सि-रक् । पिप्पलीमूले । नाड्याम् अम्बुवाहिन्यां च स्त्री० । [सङ्कोरेच्चे ।

**सिल्लकी** स्त्री० सि-क्विप् लक-अच् गौरा० ङीष् कर्म्म० ।

**सिङ्खाण्ड** पु० सो-क्वि सि छेदकं खण्डते कण्टकावृतत्वात् खडि-अण् । स्नुहीवृक्षे [तत्रं व ।

**सिह्ल** पु० स्निह-लक् पृ० । तुरुष्कधूपाख्ये गन्धद्रव्ये । स्वार्थे कन् ।

**सिह्लकी** स्त्री० स्निह-लकक् पृ० गौ० ङीष् । सल्लकीवृक्षे ।

**सिह्लभूमि** स्त्री० सिह्लस्य गन्धद्रव्यस्य भूमिः । सल्लकीवृक्षे ।

**सीक** सेचने भ्वा० आ० सक० सेट् । सीकते असीकिष्ट । षादि न ह्रस्वः । अपोपदेशत्वान्न षत्वम् ।

**सीक** सर्षे वा चु० उभ० पक्षे भ्वा० प० सक० सेट् । सीकयति ते सीकति असीसिकत् त असीकीत् । न षत्वम् ।

**सीकर** पु० सीक्यते सिच्यतेऽनेन सीक-अरण् । जलकणे ।

**सीता** स्त्री० सि-त पृ० दीर्घ । लाङ्गलपद्धतौ, जनकराजदुहितरि, भद्राश्ववर्षस्थितगङ्गायां च ।

**सीतापति** पु० ६ त० । श्रीरामे ।

**सीतायाःपति** पु० ६त० अलुक्समा० । श्रीरामे "सीताया पतये नम,, इतिपुराणम् असमस्तत्वे पत्ये इति स्यात् ।

**सीत्कार** पु० सीदित्यव्यक्तस्य कार' सीत्+कृ-घञ् । अनुरागजे शब्दे ।

**सीत्कृत** न० सीत्×कृ-भावे क्त । सीत्कारे, अनुरागजशब्दे

**सीत्य** न० सीतया लाङ्गलपद्धत्या निर्वृत्तं यत् । धान्ये । सीतामर्हति यत् । हलकर्षणयोग्ये क्षेत्रादौ त्रि० ।

**सीधु** पु० सिध-उ पृ० । मद्ये "इक्षो पक्वरसैः सिद्धः सीधुरित्यभिधीयते" इत्युक्ते मद्यभेदे च ।

**सीधुगन्ध** पु० सीधोरिव गन्धोऽस्य न इत् अनित्यत्वात् । वकुले ।

**सीधुपुष्प** पु० सीधुगन्धयुक्तं पुष्पमस्य । कदम्बे, वकुले च । धातक्यां स्त्री० ङीप् ।

**सीधुरस** पु० सीधोरिव रस आस्वादोऽस्य । आम्रवृक्षे ।

**सीमन्त** पु० सीम्नोऽन्त शक० । (सिंथि) केशान्तर्गतवर्त्माकारे पदार्थे "षष्ठेऽष्टमे वा सीमन्त" इत्युक्ते गर्भावधिके षष्ठे अष्टमे वा मासि कर्त्तव्ये संस्कारभेदे च ।

**सीमन्तक** न० सीमन्ते जायते कै-क । सिन्दूरे । नरकावासे पु०

**सीमन्तिनी** स्त्री० सीमन्त+अस्त्यर्थे इनि । योषिति नार्य्याम् ।

**सीमन्तोन्नयन** न० सीमन्तस्य तदाख्यगर्भसंस्कारस्य उन्नयनमुद्भावनमत्र । स्मृत्युक्ते गर्भसंस्कारककर्मभेदे

**सीमन्** स्त्री० सि-इमनि पृ० न गुणादि । मर्य्यादायाम्,अवधौ, स्थितौ-क्षेत्रे, अण्डकोषे "सीम्नि पुष्कलकोहतः" इति सिद्धान्तकौमुदी । वेलायां च । [सीमन्शब्दार्थे च ।

**सीमा** स्त्री० सीमन्×डाप् । मर्य्यादायां, ग्रामादेरन्तभागे,

**सीमाविवाद** पु० सीमाया विवाद । अष्टादशसु विवादेषु मध्ये स्वनामख्याते विवादभेदे ।

**सीर** पु० सि-रन् पृ० । सूर्य्ये, अर्कवृक्षे, हले च । [जनकनृपे ।

**सीरध्वज** पु० सीरोहलं, तच्चिह्नितो ध्वजोयस्य । चन्द्रवंश्ये

**सीरपाणि** पु० सीर' हलं पाणौ यस्य । बलदेवे

**सीरिन्** पु० सीरोहलोऽस्त्यस्यायुधत्वेन इनि । बलरामे

**सी(से)वन** न० सिव-ल्युट् नि० वा दीर्घ । सेवने तन्तुसन्ताने ( सेयोयान ) [स्वार्थे कन् । तत्रार्थे

**सीस** न० सि-क्विप् पृ० सो-क कर्म० । ( सीसे ) धातुभेदे

**सीहुण्ड** पु० सिहुण्ड+पृ० दीर्घ । स्नुहीवृक्षे,

**सु** अव्य० सु-डु । पूजायाम्,अतिशये, कृच्छ्रे, अनुमतौ, समृद्धौ, अनायासे च ।

**सुकण्टका** स्त्री० सुष्ठु कण्टकोऽस्याः । घृतकुमार्य्याम् ।

**सुकण्डु** स्त्री० सु+कण्डु+यक् डु । कण्डुरोगे (चुलकाना)

**सुकन्द** पु० शोभन कन्दोऽस्य । कशेरौ, शोभनकन्दयुक्ते त्रि० संज्ञाया कन् । पलाण्डौ

**सुकन्दिन्** पु० शोभनः हितकर. कन्दोस्त्यस्य इनि । वाराहीकन्दे, धरणीकन्दे, शूरणे, च । (ओल)

**सुकरा** स्त्री० सुखेन क्रियते दुह्यते वा सु+कृ-खल् । सुशीलाया गवि । सुखसाध्ये त्रि० । [कर्णयुक्ते त्रि० ।

**सुकर्णक** पु० सुष्ठु कर्णइव कन्दोऽस्य कप् । हस्तिकन्दे । शोभन

**सुकर्णिका** स्त्री० सुष्ठु-कर्णाविव पर्णान्यस्याः कप् अत इत्त्वम् । मूषिकपर्ण्याम् । [वारुण्याम् (रासालुया)।

**सुकर्णी** स्त्री० सुष्ठु कर्णाविव पत्राण्यस्या ङीप् । इन्द्र-

**सुकर्म्मन्** पु० सुष्ठु कर्म्म यस्मात् ५ब० । विष्कम्भादिषु मध्ये सप्तमे योगे । शोभनकर्म्मवति त्रि० प्रादि० । शोभने कर्म्मे न०

**सुकल** पु० सुष्ठु कल्यते ख्यायतेऽसौ सु+कल+घञ् । दातृत्वभोक्तृत्वादिना विख्याते जने सुन्दरमधुराव्यक्तशब्दे च ।

**सुकाण्ड** पु० सुष्ठु काण्डोऽस्य । कारवेल्ले, सुन्दरकाण्डयुक्ते त्रि० च काण्डीरलतायां स्त्री० । स्वार्थेकन् अतइत्त्वम् । तत्रैव

पुष्करमूले, उशीरे, सुरपर्णे, मरु माली, गन्धके, तुरस्के च

**सुगन्धिकुसुम** पु० सुगन्धि कुसुमं यस्य। पीतकरवीरे। सुग-न्धियुक्तपुष्पवति लि०।

**सुगन्धित्रिफला** स्त्री० त्वग्यत लिशिरात वा फल त्रिफलं सुगन्धि त्रिफलमस्यस्या.साहस्येन अच्। जातीफले, पूगफले, लवङ्गकलिकाफले च

**सुगन्धिमूल** न० सुगन्धि मूलमस्य। उशीरे (बेना)

**सुगृहीतनामन्** पु० सुगृहीतं प्रात काले स्मरणीय नाम यस्य। प्रात स्मरणीये पुण्यकीर्त्तौ जने। [लि०

**सुग्रन्थि** पु० सुष्ठु ग्रन्थिर्यस्य। चोरकद्रव्ये। सुन्दरग्रन्थिमति

**सुग्रीव** पु० सुष्ठु ग्रीवाऽस्य। श्रीकृष्णस्याश्वे, सूर्यपुत्रे वानरेश्वरे च। सुन्दरग्रीवावति लि०

**सुचक्षुस्** पु० सुष्ठु चक्षुरिव फलमस्य। उडुम्बरे, शोभनलो-चनयुक्ते लि०। प्रा०। शोभने नेत्रे न०।

**सुचञ्चुका** स्त्री० सुष्ठु चञ्चुरिव शिखा यस्या कप्। महाचञ्चुशाके

**सुचरित्रा** स्त्री० सुष्ठु चरित्रं यस्याः। पतिव्रतायां स्त्रियाम् सच्चरित्रवति लि०। प्रा०। सच्चरित्रे न०।

**सुचर्म्मन्** पु० सुष्ठु चर्म्मेव वल्कलमस्य। भूर्जद्रुमे सुन्दरचर्म्म वति लि०। प्रा०। सुन्दरे चर्मणि न०। [ट्टायाम्।

**सुचित्रबीजा** स्त्री० सुचित्र विचित्रं बीजं यस्या। विड-

**सुचित्रा** स्त्री० प्रा०। चिर्भटायाम्। विचित्रे लि०।

**सुचिर** प्रा०। अत्यन्तचिरकाले, बहुकाले च। बहुकालभवे लि०

**सुचिरायुस्** पु० सुचिर बहुकालिकमायुर्यस्य। देवे। बहुकाल-जीविनि लि०

**सुचेलक** पु० प्रा०। सूक्ष्मवस्त्रे। सुष्ठु चेलोऽस्य कप्। सूक्ष्मवस्त्र-धरे लि०। [जले न०

**सुजल** न० शोभनं जलं यस्मात् ५व०। कमले। प्रा०। सुन्दरे

**सुजाता** स्त्री० सु+जन-क्त। तुवर्य्याम्। मनोज्ञे लि०।

**सुजीवन्ती** स्त्री० प्रा०। स्वर्णजीवन्त्याम् [अपोपदेशत्वान्न ष।

**सुट्ट अनादरे** चु० उ० सक० सेट्। सुट्टयति ते असुसुट्टत् त

**सुत** पु० स्त्री० सु-क्त। पुत्रे तनयायां। स्त्री० सा च दुरालभायाञ्च। उत्पन्ने, सम्पादे, निष्पीडिते च लि०।

**सु(सू)तक** न०। सु-(सू)-भावे क्त सु(सू)तं जननं तस्मादा गतम् कन्। जननाशौचे, अशौचमात्रे च "सुतके सूतके तवेति "मातश्च सूतकं तस्यादिति" च स्मृति।

**सुतजीवक** पु० सुतं जीवयति धारणात् जीव-णिच्-ण्वुल्। पुत्रजीवकद्रुमे।

**सुतनु(नू)** पु० स्त्री० सुष्ठु तनुर्यस्याः वा ऊङ्। नार्य्याम्। "सुतनु! मत्यजमप्यलङ्करणाय ते" इतिमाघः।

**सुतपस्** पु० सुष्ठु तपति सु+तप-असुन्। सूर्य्ये। सुष्ठु तपोऽस्य मुनौ पु०। सुन्दरतपोयुक्ते लि० प्रा०। सुन्दरे तपसि न०।

**सुतपादिका** सुता. संहताः पादा. मूलान्यस्याः कप् न पाद्भाव कपि अत इत्त्वम्। हंसपदीलतायाम्

**सुतराम्** अव्य० सु+अतिशये ऽर्थे आमु तरप्। अवधारितार्थस्य अतिशयोचितत्वे "धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्य-माण सुतरां दयालुरिति" रघु. अत्र कातराक्ष्या धेन्वा दृश्यमानत्वेन दयालुत्वस्य अतिशयौचित्यम् [लतायाम्।

**सुतर्कारी** स्त्री० सुतर्कं स्वच्छति ऋ-अण् ङीप्। देवदाली

**सुतल** पु० न० सुष्ठु तलं यत्र। पातालभेदे अट्टालिकाभेदे पु०।

**सुतहिबुकयोग** पु० सुते हिबुके च योग ग्रहविशेषस्य। "सुतहिबुकवियद्विलग्नधर्मेष्वमरगुरुर्यदि दानवार्चितो वा। यदशुभमुपयाति तच्छुभं स्यात्" इत्युक्ते योगभेदे।

**सुतिक्त** पु० प्रा०। (क्षेतपापड़ा) पर्पटे अत्यन्ततिक्ते लि० कोषातक्यां स्त्री० सप्तायां मन्। पारिभद्रे निम्बे भूनि-म्बे च पु०।

**सुतीक्ष्ण** पु० प्रा०। शोभाञ्जनद्रुमे, श्वेतशोभाञ्जने, मुनिभेदे च "सुतीक्ष्णमुनिनिकेतन" मितिभट्टि। अत्युग्रे लि०।

**सुतुङ्ग** पु० प्रा०। नारिकेलद्रुमे ज्योतिषोक्ते ग्रहाणाम् उच्च-राशिषु अंशभेदेषु च विस्तरो दृष्टभिधाने। अतिशयोच्चे लि०

**सुतेजन** पु० सु+तिज-ल्यु। धन्वनि, द्रुमे।

**सुतेजस्** पु० सुष्ठु तेजोऽस्य। आदित्यभक्तायाम्। शोभन-तेजोयुक्ते लि० [लतायाम्

**सुतैला** स्त्री० सुष्ठु तैलं यस्याम् ७व०। महाज्योतिष्मती

**सु(सू)त्रामन्** पु० सुष्ठु त्रायते सु+त्रै-मनिन् ष०। इन्द्रे

**सुत्वन्** पु० सुनोतिस्म सु-क्वनिप्। सुताभिषेके सुतयज्ञार्थस्नाने सुतसोमनिष्पीडने च। [अपोपदेशत्वान्न ष।

**सुद** शोभायां सौ० प० सक० सेट् इदित्। सुन्दति असुन्दीत्।

**सुदग्धिका** पु० सुष्ठु दग्धमस्यस्य ठन्। सुदग्धानामद्रुमे।

**सुदण्ड** पु० सुष्ठु दण्डोयस्मात् ५व०। वेत्रे

**सुदण्डिका** स्त्री० सुदण्डयति रोगान् ण्वुल्। गोरक्षाम्। (गोरचचाकुले) सुदण्डवत्यां स्त्रियाञ्च।

**सुदत्** पु० सुष्ठु दन्तोऽस्य वयसि दतृआदेश। शोभनदन्तयुक्त-वयस्के गजादौ युवत्यां स्त्रियां ङीप्। "सुदतीजनमज्ज-नार्पितमिति"नैषधम्। वयो भिन्ने तु सुदन्तइत्येव नटादौ।

**सुदर्भा** स्त्री० सु+दम-घञ्। इक्षुदर्भाद्रुमे। सुष्ठु दर्भोयत्र सुन्दरकुशयुक्ते लि०।

ङीप्। सा च उत्तमस्त्रियां त्रिपुरसुन्दरीदेव्याञ्च। कामदेवे, वृक्षभेदे च (सुंदरि) पु०। [परिणते त्रि०।

सुपक्व पु०सुन्दरं पच्यते स्म पच-क्त तस्य वः। शोभनाम्रे सुन्दर

सुपच त्रि० भुक्तं सत् सुखेन पच्यते पच-कर्मणि खल्। लघुपाके द्रव्यमात्रे।

सुपत्त्र न० सुष्ठु पत्त्रमस्य। तेजपत्रे आदित्यपत्रे पु० सुन्दर पत्त्रयुक्ते त्रि० रुद्रजटायां, शतावर्य्यां, पालङ्क्यां शालपर्ण्याञ्च स्त्री०। [कायां स्त्री० अत इत्वम्।

सुपत्त्रक पु० सुष्ठु पत्त्रमस्य स्वार्थे कन्। शोभाञ्जनवृक्षे जतु-

सुपथ पु० सुष्ठु पन्थाः प्रा० अच् समा०। सदर्थानि सदाचारे च सुष्ठु पन्था यत्र अच् समा०। सुन्दरपथयुक्ते त्रि०

सुपथिन् पु० प्रा० समासान्ताभावः। सत्पथे।

सुपद्मा स्त्री० सुष्ठु पद्यते पद-म। वचायाम् [पद्मिन्यां स्त्री०

सुपर्ण पु०सुष्ठु पर्णं पत्त्रं पत्नो वा यस्य। गरुडे सुन्दरपर्णयुक्ते त्रि० नागकेशरे पु०। बहुव्रीहौ कप्। आरग्वधे वृक्षे, सप्तच्छदवृक्षे, गरुडे च। शालपर्ण्यां, रेणुकायां, पलाश्यां, स्वर्णजीवन्त्याञ्च स्त्री० कापि अत इत्वम्।

सुपर्णकेतु पु० सुपर्णो गरुडः केतुर्यस्य। विष्णौ।

सुपर्णी स्त्री० सुष्ठु पर्णान्यस्याः गौ० ङीष्। पद्मिन्यां, गरुड़मातरि च।

सुपर्णीतनय पु० ६त०। गरुड़े। [सुन्दरे पर्व्वणि न०।

सुपर्व्वन् पु० सुष्ठु पर्व्व यस्य। देवे, बाणे, वंशे, धूमे च प्रा०।

सुपर्व्वा स्त्री० सुष्ठु पर्व्व यस्याः डाप्। श्वेतदूर्व्वायाम्।

सुपाक्य न० सुपाकमर्हति यत्। विड्लवणे।

सुपार्श्व पु० सुष्ठु पार्श्वोऽस्य। प्लक्षवृक्षे (पाकुड़) वृक्षभेदे, सम्पातिपुत्त्रे विहगभेदे च प्रज्ञायां कन्। गर्द्दभाण्डवृक्षे पु सुन्दरपार्श्वान्विते त्रि०।

सुपिङ्गला स्त्री० प्रा०। ज्योतिष्मत्यां, जीवन्त्याञ्च। [त्रि०

सुपीत न०प्रा०। गर्ज्जरे (गाजर)। सुन्दरपीतवर्णे पु०। तद्वति

सुपुट पु० सुष्ठु पुटमस्य। कोलकन्दे, विष्णुकन्दे च।

सुपुत्रिका स्त्री० सुष्ठु पुत्र पत्रः यस्याः कप् अत इत्वम्। जतुकायाम् (तेलोपोका)।

सुपुष्करा स्त्री० सुष्ठु पुष्करमस्त्यस्याः अच्। स्थलपद्मिन्याम्।

सुपुष्प न० प्रा०। लवङ्गकुसुमे, प्रपौण्डरीके, तूले, स्त्रीणां रजसि च। 'सुपुष्पैराकीर्णं कुसुमधनुषोमन्दिरमि'ति व्याभास्त्व०। सुष्ठु पुष्पमस्य। (पालवामान्दार) वृक्षे। कप्। पाटलायां स्त्री० अत इत्वम्।

सुपुष्पी स्त्री० सुष्ठु पुष्पमस्याः गौ० ङीष्। श्वेतापराजिताया, शतपुष्पायाम्, मिश्रेयायां, द्रोणपुष्प्याञ्च।

सुपूर पु० सुष्ठु पूर्य्यते सु+पूर-क। बीजपूरे।

सुपूरक पु० सुष्ठु पूरयति पूर-ण्वुल्। बकवृक्षे।

सुप् स्त्री० व्याकरणपरिभाषिते सुप्रभृतौ प्रत्यये।

सुप्त न० स्वप-भावे क्त संप्रसारणम्। निद्रायां, शयने च। कर्त्तरि क्त। निद्रिते त्रि०।

सुप्तजन पु० सुप्तो जनो यत्र। अर्द्धरात्रे।

सुप्ति स्त्री० स्वप-क्तिन्। शयने, निद्रायाम्, स्वप्ने च 'करोति सुप्तिर्जनदर्शनातिथिमि'ति नैषधम्।

सुप्रतिभा स्त्री० सुष्ठु प्रतिभा यस्याः ६ब०। सुरायाम् प्रा०। उज्ज्वलबुद्धौ। ६ब०। तद्वति त्रि० [पादके छन्दोभेदे स्त्री०

सुप्रतिष्ठा स्त्री०प्रा०। प्रतिष्ठायाम्। ६ब० तद्वति त्रि०। पञ्चाक्षर

सुप्रतीक पु० सुष्ठु प्रतीकं यस्य। ऐशानकोणस्थिते दिग्गजे शिवे, कामे च सुन्दराङ्गे त्रि०। प्रा०। सुन्दरेऽङ्गे न०।

सुप्रभा स्त्री० सुष्ठु प्रभा यस्याः। अग्निजिह्वाभेदे। सुन्दरदीप्तिमति त्रि०। प्रा०। शोभनदीप्तौ स्त्री०। [स्तवे च

सुप्रभात न०प्रा०। शुभसूचकप्रातःकाले, तत्र पाठ्यमाङ्गल्य-

सुप्रयुक्तशर पु० सुप्रयुक्तः शरो येन। शीघ्रकृते बाणमोचनाभ्यासपाटवयुक्ते।

सुप्रयोगविशिख पु० सुष्ठु प्रयोगो निक्षेपो यस्य तादृशो विशिखोयस्य। शीघ्रकृते बाणमोचनशीघ्रतारूपपाटवयुक्ते।

सुप्रलाप पु० सु+प्र+लप-घञ्। सुवचने।

सुप्रसन्न पु० सु+प्र+सद-क्त। कुबेरे। प्रसादयुक्ते त्रि०। संज्ञायां कन्। कृष्णार्जके पु०। [विस्तारयुक्ते त्रि०

सुप्रसरा स्त्री० सु+प्र+सृ-अच्। प्रसारिण्यां-लतायाम्

सुप्रसाद पु० सुखेनानायासेन प्रसादो यस्य। शिवे। प्रा०। सुन्दरप्रसन्नतायाम्।

सुफल पु० सुष्ठु फलमस्य। दाडिमे, बदरे, मुद्गे, कर्णिकारे, कपित्थे च। सुन्दरफलवति त्रि०। इन्द्रवारुण्यां कुष्माण्ड्यां, कदल्यां, कपिलद्राक्षायाञ्च स्त्री०।

सुबन्ध पु० सुखेन बध्यतेऽसौ बन्ध-घञ्। तिलवृक्षे।

सुभग पु० सुष्ठु भगः माहात्म्यादिः यस्य। चम्पके, अशोके, रक्ताम्लाने, टङ्कणे च। सुदृश्ये, प्रिये, शोभनैश्वर्य्ययुक्ते च त्रि०। कैवर्त्तीमुस्तायां, शालपर्ण्याम्, हरिद्रायां, नीलदूर्व्वायां, तुलस्यां, प्रियङ्गौ, कस्तूर्य्यां, स्वर्णकदल्यां, वनमल्लिकायां, पतिप्रियायां स्त्रियां च स्त्री०।

सुभगम्भावुक त्रि० असुभगः सुभगोभवति भू-ख्युन् खुकञ् मुमच। प्रियम्भविष्णौ।

सुरेभ न० सु+रेभ अच् । रङ्गे । (राङ) ।
सुरेवट पु सुष्ठु रेवट सु+रेव—अटन् वा । रामपूगे ।
सुरेश्वर पु० सुराणामीश्वर । रुद्रे, इन्द्रे च । स्वर्गगङ्गायां, दुर्गायाञ्च स्त्री ङीप् । [ब्राह्म्या स्त्री० ।
सुरेष्ट पु० ६त० । शाले, सुरपुन्नागे, शिवमल्लाम् च
सुरोत्तम पु० सुरेषूत्तम । सूर्ये देवश्रेष्ठे त्रि० ।
सुरोत्तर पु० सुरेषु तत्सन्नेषूत्तर श्रेष्ठ । चन्दने ।
सुरोद पु० सुरेव उदकमस्य उदादेश । सुरासमुद्रे ।
सुलभ त्रि सुखेन लभ्यते सु+लभ खल् । अनायासलभ्ये । माषपर्ण्यां, धूम्रपत्त्रायाञ्च स्त्री ।
सुलोचन पु सुष्ठु लोचनमस्य । हरिणे । सुन्दरनेत्रयुक्ते त्रि०
सुलोमशा स्त्री० सुलोमानि सन्त्यस्याः श । काकजङ्घायाम् सुलोमयुक्ते त्रि । [मांसच्छदायाञ्च ।
सुलोमा स्त्री० सुष्ठु लोमान्यस्याः ङीप् । ताम्रवल्ल्याम्
सुलोहक न प्रा० । पित्तले । [त्रि स्त्रियां ङीप् तस्य नश्च
सुलोहिता स्त्री प्रा० । अग्निजिह्वाभेदे । सुरक्तवर्णे पु० तद्वति
सुवक्त्र पु०सुष्ठु वक्त्रं देवनाद् यस्मात् । वनवर्व्याम् द्व० । सुन्दराननयुक्ते त्रि० । प्रा० । सुन्दरे मुखे न० ।
सुवचस् त्रि० सुष्ठु वचोऽस्य । वाग्मिनि ।
सुवर्चक पु०सुष्ठु वर्चयति सु+वर्च णिच्-ण्वुल् । सर्जिकाक्षारे
सुवर्चला स्त्री० सुष्ठु वर्चयति वर्च णिच्-कलच् । सूर्यभार्यायाम्, अतस्याम्, आदित्यभक्तायां, ब्राह्म्याञ्च । देशभेदे पु० ।
सुवर्चिक पु सुवर्च+अस्त्यर्थे ठन् । सर्जिकाक्षारे । जतुकायां स्त्री०
सुवर्चिन् पु सु+वर्च णिच् णिनि । सर्जिकाक्षारे ।
सुवर्ण न० सुष्ठु वर्णोऽस्य । स्वनामख्याते धातुभेदे, हरिचन्दने स्वर्णगैरिके धने, नागकेशरे । 'कर्षं सुवर्णस्य सुवर्णषोडश' मित्युक्ते कर्षमिते काञ्चने च यज्ञभेदे, धत्तूरे कर्णगुग्गुलौ च पु० । सुष्ठु वर्णो रूपमक्षरं वास्य । सद्वर्णे सुन्दराक्षरयुक्ते च त्रि० । 'न सुवर्णमयी तनुः परं ननु वागपि तावकी सखे'ति नैषधम् ।
सुवर्णक न सुवर्णमिव स्वार्थे कन् । पित्तले, सुष्ठु वर्णोऽस्य कप् । सुन्दरवर्णयुक्ते त्रि । [स्याम् (आपाङ्गा) ।
सुवर्णकदली स्त्री० सुष्ठु वर्णो यस्याः कर्म० । स्वर्णवर्णकद-
सुवर्णकार पु० सुवर्णं सुवर्णमयभूषणादि करोति कृ अण् । (सेकरा) स्वर्णकारे जातिभेदे ।
सुवर्णगैरिक सुवर्णमिव पीतं गैरिकम् । (वर्णकमाटि) गैरिकभेदे । [लयाम् ।
सुवर्णनकुली स्त्री० सुवर्णमिव पीता नकुली । महाज्योतिष्मत्याम्

सुवर्णप्रसव न० सुवर्णस्य प्रसव इव । एलवालुके ।
सुवर्णवणिज् पु० सुवर्णस्य वणिक् क्रयविक्रयादिकर्त्ता । जातिभेदे (सोनारवेने) स्वर्णवणिक्प्रभृतयोऽप्यत्र ।
सुवर्णयूथी स्त्री० सुवर्णमिव पीता यूथी । पीतवर्णयूथिकायाम्
सुवर्णवर्णा स्त्री सुवर्णस्येव वर्णो यस्याः । हरिद्रायाम् स्वर्णतुल्यवर्णयुक्ते त्रि० ।
सुवर्णा स्त्री सुष्ठु वर्णो यस्याः । कालागुरुणि, वाष्पालके च स्वर्णजीव्यां, हरिद्रायाम् आखुकर्ण्यां च स्त्री० ङीप् ।
सुवयस् स्त्री० सुष्ठु वयोऽस्याः । प्रौढायां स्त्रियाम् ।
सुवल्लि(ल्ली) स्त्री० प्रा० । सोमराजीलतायाम् ।
सुवहा स्त्री० सुखेन उह्यते वायुनाऽसौ सु+वह-खल् । शेफालिकायां रास्नायां गोधापद्याम्, एलापर्ण्याम्, शल्लक्यां, वीणायां त्रिवृतायाम् रुद्रजटायां, हंसपद्यां, गन्धनाकुल्यां, मुसल्यां, नीलसिन्धुवारे च । सुखवाह्ये त्रि ।
सुवास पु० सुष्ठु वासः । सद्गन्धे सुखनिवासे च । द्व० । सद्गन्धयुक्ते सन्निवासान्विते च त्रि० ।
सुवासिनी स्त्री सुखेन वसति सु+वस णिनि । चिरण्टां चिरं पितृकुलवासिन्याम् स्त्रियाम् ।
सुविद् पु सुष्ठु वेत्ति विद-क्विप् । पण्डिते । सुष्ठु विद्यते लभ्यते विद लाभे क्विप् । गुणाढ्यायां स्त्रियाम् ।
सुविद पु० सु+विद क । कञ्चुकिनि ।
सुविदत् पु० सुविदं गुणाढ्यां स्त्रियमतति अत क्विप् । नृपे
सुविदल्ल पु० सुविदत राजानं लाति ला-क । अन्तःपुरेऽधिकृते, कञ्चुकिनि च । सुविदता राज्ञा लीयते ली-क । अन्तःपुरस्थनार्याम् स्त्री० । [युक्ते त्रि ।
सुविनीता स्त्री सु+वि+नी क्त । सुशीलायां गवि । सुविनय-
सुवीज पु० सुष्ठु वीज्यतेऽसौ वीज क । (खसखस) शम्भौ द्व० । सुन्दरवीजवति त्रि० । प्रा । सुन्दरे वीजे न ।
सुवीरक न सु+वीर ण्वुल । सौवीराञ्जने ।
सुवीराम्ल न० सुवीरयति वीर्यान्वितं करोति सु+वीर-अच् कर्म । काञ्जिके । [प्रा० । उत्तमे वीर्ये न ।
सुवीर्य्य न सुष्ठु वीर्यं यस्मात् । बदरीफले । वनकार्पास्यां स्त्री
सुवृत्त पु० सुष्ठु वृत्तं वर्त्तुलं । शूरणे (ओल) सुन्दरवृत्तान्विते त्रि० शतपत्त्र्यां, कारव्यां, द्राक्षायाञ्च स्त्री० ।
सुवेगा स्त्री० सुष्ठु वेगो वायुनिःसारणवेगो यस्याः ५त० । महाज्योतिष्मत्याम् ।
सुवेल पु० सुगता वेला समुद्रकूलं येन । त्रिकूटपर्वते । सुष्ठु वेला मर्यादा स्थिति यस्य । शान्ते, प्रणते च त्रि० ।

सुवेश पु० सुखेन विश्यते उपभुज्यते सु+विश-घञ् । श्वेतेक्षौ सुन्दरवेशयुक्ते त्रि० । [सुन्दरव्रतयुक्ते त्रि० ।

सुव्रता स्त्री० सुष्ठु व्रतं नियमो यस्याः । सुशीलायां गवि

सुशर्मन् पु० सुष्ठु शर्म सुखं यस्य । नृपभेदे सुन्दरसुखवति त्रि० ।

सुशल्य पु० सुष्ठु दृढं शल्य यस्मात् । खदिरे । [रक्ते च

सुशवी स्त्री० सु+शव-अच् गौरा०ङीप्। कारवेल्ले, कृष्णजी-

सुशाक न० सुष्ठु शाको यस्मात् ५ब० । आर्द्रके । तत्संयोगे हि शाकस्य सुस्वादुता । सुष्ठु शाको यस्य । चञ्चुशाके, तण्डुलीये, (नटेशाक) भिण्डायाञ्च पु० ।

सुशिख पु० सुन्दरी शिखा यस्य । वह्नौ, चित्रकवृक्षे च शोभन शिखायुक्ते त्रि० मयूरशिखायां स्त्री० ।

सुशीत न० प्रा० । पीतचन्दने अतिशीतलस्पर्शे । तद्वति त्रि०

सुशीतल न० प्रा० । गन्धतृणे अतिशीतगुणयुक्ते त्रि० ।

सुशीता स्त्री० प्रा० । शतपत्त्र्याम्, शीतगुणवत्यां स्त्रियां च ।

सुशीम पु०सु+श्यै मक् सम्प्रसारणञ्च । शीतस्पर्शे । तद्वति त्रि०

सुशील पु० सुन्दरं-शीलमस्य। विष्णुपार्श्वचरभेदे शोभनचरितान्विते त्रि० । [युक्ते त्रि०

सुश्रीक स्त्री० सुन्दरी श्रीरस्य कप् । सल्लकीवृक्षे। सुन्दरश्री-

सुश्रुत पु० सु श्रूयते सु+श्रु-क्त । विश्वामित्रमुनिपुत्रे चिकित्साशास्त्रकर्त्तरि मुनिभेदे, तत्कृतग्रन्थे च। सुन्दरश्रुते त्रि० 'देवाकर्णय सुश्रुतेन चरकस्योक्तेनेति, नैषधम् ।

सुश्लिष्ट त्रि० सु+श्लिष-क्त । सुसंयुक्ते दृढमिलिते ।

सुषम पु०सुन्दर० समः प्रा-षत्वम् । शोभने, समे च परमायां शोभायां स्त्री० । [जीरके, कृष्णजीरके च ।

सुषवी स्त्री० सु+सु-अच् गौ०ङीप् । कारवेल्ले, क्षुद्रकारवेल्ले,

सुषामन् त्रि० सुष्ठु साम यस्य सुषामादि०षत्वम् । सुसान्त्वने स्त्रियां वा डाप् ङीप् च ।

सुषि स्त्री० शुष-इन् ष० शस्य सः । सुषौ छिद्रे ।

सुषिर न० शुष-किरच् ष० शस्य सः । छिद्रे । [त्रि०

सुषीम पु० सुष्ठु, सीमा यस्य। शीतलस्पर्शे । तद्वति, मनोज्ञे च

सुषुप्त न० सु+स्वप-भावे क्त । 'यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत् सुषुप्तमिति' श्रुत्युक्ते ज्ञानशून्यावस्थाभेदे । कर्त्तरि क्त । तदवस्थान्विते त्रि०

सुषुप्ति स्त्री०सु+स्वप-क्तिन्। पुरीतति नाड्यां मनसः संयोगरूपे सर्वज्ञानशून्ये वेदान्तोक्ते सर्वपदार्थशून्ये च अवस्थाभेदे 'सुषुप्तिकाले सकले प्रलीने' इति श्रुति ।

सुषुम्ना स्त्री० सुषु इत्यव्यक्तं शब्दं म्नायति यत्र म्ना-क । तन्त्रोक्ते मेरुदण्डपार्श्वस्थे इडापिङ्गलानाड्योर्मध्यस्थे सूक्ष्मे नाडीभेदे ।

सुषेण पु० सुष्ठु सेनयति सेनां करोति णिच् पत्वम् । करमर्द्दके (करमचा) वेतसे, चिकित्सक-वानरभेदे च, विष्णौ स्त्री० ङीप् । यत् अत इत्वम् । कृष्णत्रिवृति स्त्री० ।

सुष्ठु अव्य० सु+स्था-कु । अतिशये, प्रशंसे, सत्ये च ।

सुसंस्कृत त्रि० सु+सम+कृ-क्त सुट् च । प्रयत्नेन घृतादिनानाद्रव्येण पक्वे व्यञ्जनादौ ।

सुसम्पद् स्त्री०प्रा०। सौभाग्ये सुष्ठु सम्पद् यस्य । सुसम्पद्युक्ते त्रि०

सुसार पु० सुष्ठु सारोऽस्य । रक्तखदिरे ।

सुसिकता स्त्री० प्रा० । शर्करायाम् । उत्तमबालुकायां ब०व०

सुस्थ त्रि० सुखेन तिष्ठति स्था-क । आरोग्येण युक्ते सुखिनि च

सुस्ना स्त्री० सु+स्नै-क । (जिमारी) शमीधान्यभेदे ।

सुस्नात त्रि० सुष्ठु स्नातः सु+स्नै-क्त । मङ्गलद्रव्येण कृतस्नाने

सुहित त्रि० सु+धा-क्त । तृप्ते, हिते च । प्रा० । सुन्दरहिते न० । ५ब० । अग्निशिखाभेदे स्त्री० ।

सुहृद् पु० सुष्ठु हृदयं यस्य मित्रार्थे हृदादेशः । मित्रे ज्योतिषोक्ते लग्नाच्चतुर्थस्थाने च ।

सुहृदय त्रि० सुष्ठु हृदयं यस्य । प्रशस्तमनस्के । प्रा० । सुचित्ते न०

सुहृद्बल न० सुहृदेव बलम् । मित्ररूपे सैन्ये ।

सू स्त्री० सू-क्विप् । सूतौ, प्रसवे, क्षेपे प्रेरणे च ।

सूक न० सू-प्रेरणे क्विप् स्वार्थे कन् । उत्पले, वाणे, वाते च

सूकर पु० सू-इत्यव्यक्तं शब्दं करोति कृ-अच् । वराहे, कुम्भकारे, मृगभेदे च । वराहक्रान्तायां, वराहयोषिति च स्त्री० ङीप् ।

सूक्त न० सु+वच-क्त । सुन्दरकथने, एकार्थप्रतिपादके एकदैवत्ये वेदमन्त्रसमुदाये च । यथा श्रीसूक्तं पुरुषसूक्तमित्यादि तानि च वेदे बहूनि सन्ति तत्र महादानोपयोगीनि कतिचित् सूक्तानि तुलादानादिपद्धतौ अस्माभिः उद्धृतानि । 'जप्यानि सूक्तानि तथैव चैषा'मिति वह्निपुराणम् ।

सूक्ष्म न० सूच—मन् । कैतवे, अध्यात्मपदार्थे, अलङ्कारभेदे च । कतकवृक्षे पु० । अणुपरिमाणवति, अल्पे च त्रि० ।

सूक्ष्मकृष्णफला स्त्री० सूक्ष्मं कृष्णं फलं यस्याः । मध्यमजम्बूवृक्षे ।

सूक्ष्मतण्डुल पु० सूक्ष्मस्तण्डुलोऽस्य । (खसखस) इतिख्याते, पिप्पल्यां स्त्री० । [कुशाग्रीयबुद्धौ ।

सूक्ष्मदर्शिन् त्रि० सूक्ष्मं पश्यति दृश-णिनि । अत्यन्तसुबुद्धौ

सूक्ष्मपत्त्र पु० सूक्ष्मं पत्त्रमस्य । धान्यके, वनजीरके, देवसर्षपे,

सूत्रपुष्प पु० सूत्रगर्भं पुष्पं यस्य। कार्पासे। [(दरजी)।

सूत्रभिद् पु० सूत्रं भिनत्ति सूच्या, भिद-क्विप्। सूच्याजीवे

सूत्रयन्त्र न० सूत्रवापनयन्त्रम्। (तांत) सूत्रवापनयन्त्रे।

सूत्रला स्त्री० सूत्रं लाति ला-क। तर्कुट्याम् (टेको)।

सूद पु० सूदयति व्यञ्जनान् सूद-अच्। सूपकारके, व्यञ्जनभेदे सूपे, सारथ्ये, अपराधे, लोध्रे, पापे च।

सूदन न०सूद-ल्युट्। हिंसने, निःक्षेपे, अङ्गीकारे च।

सूदशाला स्त्री० ६त०। पाकशालायाम्।

सून न० सू-क्त तस्य नः। पुष्पे, प्रसवे च। कर्त्तरि-क्त। विकसिते, जाते च त्रि०।

सूना स्त्री० सू-क्त तस्य नः। प्राणिवधस्थाने 'पञ्च सूना गृहस्थस्येति, मनुः तनयायां, गलशुण्डायाम् मांसविक्रये च।

सूनु पु० सू-नु। पुत्रे अनुजे, सूर्ये, अर्कवृक्षे च कन्यायां स्त्री० वा ऊङ्।

सूनृत न० सुष्ठु नृत्यति अनेन सु+नृत-घञर्थे क। सत्ये-प्रिये-वाक्ये, मङ्गले च तद्वति त्रि०।

सूप पु० सुखेन पीयते सु+पा-घञर्थे क पृ०। (दालि) व्यञ्जनभेदे सुवपति सु+वप-क पृ०। सूपकारे पाचके। आधारे क। भाण्डे। करणे क। सायके।

सूपकार पु० सूपं करोति कृ-अण्। पाचके।

सूपधूपन न० सूपो धूप्यतेऽनेन। हिङ्गौ, सूपपाके हि हिङ्गुधूपदानं पाकशास्त्रे प्रसिद्धम्। [पर्य्याम्।

सूपपर्णी स्त्री० सूपसाधनस्य मुद्गस्येव पर्णमस्याः ङीप्। मुद्ग-

सूपश्रेष्ठ पु० सूपेषु तत्साधनेषु श्रेष्ठः। मुद्गे।

सूपाङ्ग न० सूपस्य तत्संस्कारकमङ्गमुपकरणम्। हिङ्गौ।

सूर पु० सुवति प्रेरयति कर्म्मणि लोकान् सू-क्रन्। सूर्ये, अर्कवृक्षे च। सूर-क। पण्डिते।

सूरण पु० सूर-ल्युट्। शूरणे (ओल)।

सूरत त्रि० सु+रम-क्त पृ०। दयालौ।

सूरसूत पु० ६त०। अरुणे, गरुडाग्रजे।

सूरि पु० सू-क्रिन्। सूर्ये, अर्कवृक्षे, यादवभेदे, पण्डिते च 'सदा पश्यन्ति सूरय' इति श्रुतिः राजसर्षपे स्त्री० ङीप्।

सूरिन् पु० सूर-णिनि। पण्डिते। [अयोपदेशत्वान्न ण।

सूर्क्ष(र्क्ष्य) अनादरे भ्वा०प०सक०सेट्। सूर्क्षति(र्क्ष्यति) असूर्क्षीत्(र्क्ष्यीत्)

सूर्क्ष(र्क्ष्य)ण न० सूर्क्ष-(र्क्ष्य) ल्युट्। अनादरे।

सूर्प पु०न०। शूर्प-पृ० शस्य सः। शूर्पशब्दार्थे।

सूर्पणखा स्त्री० शूर्पं इव नखा अस्याः पृ० शस्य सः णत्वम्। रावणभगिन्याम्।

सूर्म्मि स्त्री० शूर्म्मि+पृ० शस्य सः। शूर्मिशब्दार्थे वा ङीप्।

सूर्य्य पु० सृ-क्यप् नि० दीर्घश्च। दिवाकरे, अर्कवृक्षे, दानवभेदे च।

सूर्य्यकान्त पु० सूर्य्यस्य कान्तः प्रियः। स्फटिकमणौ सूर्य्यसम्पर्कात् तत्राग्निसम्भवस्तस्मिन् मणौ च (आतसी)।

सूर्य्यग्रहण न० सूर्य्यस्य राहुणा तदाक्रान्तभूच्छायया ग्रहणमाक्रमणम्। ज्योतिषोक्ते राहुशब्दितभूमिच्छायया सूर्य्यमण्डलस्य आक्रमणरूपे ग्रासे

सूर्य्यज पु० सूर्य्यात् जायते जन-ड। शनिग्रहे, यमे, वैवस्वते मनौ, सुग्रीववानरे च सूर्य्यपुत्रादयोऽप्यत्र। यमुनायां स्त्री०।

सूर्य्यभक्त पु० सूर्य्यस्य भक्त इव प्रियः। बन्धूकवृक्षे।

सूर्य्यमणि पु० सूर्य्यप्रियं मणिः। सूर्य्यकान्तमणौ।

सूर्य्यलता स्त्री० सूर्य्यभक्ता लता। आदित्यभक्तायाम्।

सूर्य्यवल्ली स्त्री० सूर्य्यतुल्यपुष्पिका वल्ली। अर्कपुष्पिकावृक्षे।

सूर्य्यसारथि पु०६त०। अरुणे गरुडाग्रजे। सूर्य्यसूतादयोऽप्यत्र

सूर्य्या स्त्री० सूर्य्यस्य भार्य्या टाप्। अमानुष्यां, संज्ञानाम्न्यां सूर्य्यभार्य्यायाम्। मानुष्यां कुन्त्यान्तु ङीप्। सूरीत्येव।

सूर्य्यालोक पु० ६त०। आतपे रौद्रे।

सूर्य्यावर्त्त पु० सूर्य्यं इवावर्त्तते आ+वृत-अच्। (हुडहुडिया) क्षुपभेदे (सुवर्चला) शाके च आदित्यभक्तायां स्त्री०।

सूर्य्याश्मन् पु० सूर्य्यप्रियः अश्मा। सूर्य्यकान्तमणौ।

सूर्य्योढ पु० सूर्य्येण सूर्य्यास्तकालेन ऊढं प्रापितः वह-क्त। सूर्य्यास्तसमये आगतातिथौ।

सृकाल पु० सृ कालन् कस्य नेत्त्वम्। शृगाले।

सृक्(न्) न० सृज-कन् कनिन् वा कस्य नेत्त्वम्। ओष्ठप्रान्तभागे 'सृक्कणी परिलेढि चेति' श्रुतिः। 'महासृक्काय शोभितो नृसिंहवदिति।' सृपात् कमध्यतायस्य।

सृक्वन् न०सृज-क्वनिप्। ओष्ठप्रान्तभागे। पृ० सृक्विन्। अप्यत्र

सृग पु० सृ-गक् गस्य नेत्त्वम्। भिन्दिपालास्त्रे।

सृगाल पु० सृ-गालन् गस्य नेत्त्वम्। जम्बूके, दैत्यभेदे च।

सृजकाचार पु० सृजति वर्द्धयति सृज क ततः स्वार्थे कन् कर्म०। सर्ज्जिकाक्षारे। [सृणीत्यपि।

सृणि पु० सृ-निक्। गतौ। अङ्कुशास्त्रे स्त्री० तत्र वा ङीप्।

सृ(णि)णीका स्त्री० सृणि+कन् ईकन् वा। लालायाम्।

सृति स्त्री०सृ-भावे क्तिन्। गमने। करणे क्तिन्। पथि। [च

सृत्वर त्रि० सृ-क्वरप्। गमनकर्त्तरि स्त्रियां ङीप् सा च मातरि

सृप गतौ भ्वा०पर०सक०अनिट्। सर्पति असृपत्। अत्रोप-

शैवाल• तत स्वार्थे अण् । शैवाले स्वार्थे कन् । तत्रैव ।

**सोढ** त्रि० सह-क्त वा ढत्वभावः । क्षान्ते तितिक्षिते । कर्त्तरि क्त । शीतादिसहनशीले त्रि० ।

**सोढृ** त्रि० सह-तृच् वा ढत्वभावः । सहनकर्त्तरि क्षमाशीले

**सोत्कण्ठ** त्रि० सह उत्कण्ठया । औत्सुक्यान्विते अभीष्टलाभेच्छया विलम्बासहिष्णुत्वयुक्ते ।

**सोत्प्रास** न० उद्+प्र-अस-घञ् सह उत्प्रासेन । सोल्लुण्ठने, अन्यार्थकस्य वाक्यस्य अन्यार्थकत्वकल्पनया तदुत्तरार्थके, वाक्ये, प्रियवाक्ये च । सशब्दहासे पु० ।

**सोदय** न०त्रि० सह उदयेन प्रादुर्भावेण वृद्ध्या, वा । प्रादुर्भूते, वृद्धियुक्ते, लाभयुक्ते (सुदयुक्ते) च । [भगिन्यां स्त्री० ।

**सोदर** पु० सह समानमुदरं यस्य । एकोदरभवे भ्रातरि-

**सोदर्य्य** पु० सह समाने उदरे शयिता यत् साहेश' । एकोदरजाते भ्रातरि । भगिन्यां स्त्री० ।

**सोनह** न० सु-विच् सवे नह्यते नह घञर्थे क । लशुने ।

**सोन्माद** पु० सह उन्मादेन । उन्मत्ते, उन्मादिष्णौ ।

**सोपप्लव** पु० सह उपप्लवेन । समाक्रान्तभूच्छायेन राहुणा योगरूपोपप्लवसहिते चन्द्रे तथाभूतचन्द्रच्छायायोगयुक्ते सूर्य्ये च । [यथा सतदानादौ ।

**सोपाधि(क)** सह उपाधिना वा कप् । उपाधियुक्ते प्रतिलाभा

**सोपान** न० उप-अन-भावे घञ् सह विद्यमानः उपान ; उपरि गतिरनेन । आरोहणसाधने काष्ठादिनिर्मिते (पैठा) प्रभृतौ पदार्थे ।

**सोभाञ्जन** पु० शोभाञ्जन+पृ० । (शजना) वृक्षे ।

**सोम** पु० सू-मन् । चन्द्रे, कर्पूरे, कुवेरे, यमे, वायौ, वसुभेदे, जले, सोमलतौषधौ, तद्रसे, अमृते, दीधितौ च । सह उमया । शिवे, वानरेशे-सुग्रीवे च । [विष्णौ ।

**सोमगर्भ** पु० सोमस्य तदात्मकामृतरूपमोचस्य गर्भःस्थानम् ।

**सोमज** न० सोमात् तत्चरितौषधिस्यरसपानात् जायते जन-ड । दुग्धे चन्द्रजाते त्रि० । बुधे पु० ।

**सोमतीर्थ** न० सोमेन तपस्तप्त्वा कृतं तीर्थम् । प्रभासतीर्थे ।

**सोमप** पु० सोमं तद्रसं पिबति पा-क । यज्ञे—सोमरसपानकर्त्तरि पितृगणभेदे ब० व० । पा-क्विप् सोमपाऽप्यत्र ।

**सोमपत्र** पु० सोमस्य ओषधिविशेषस्येव पत्त्रमस्य । (उलखड़) तृणभेदे ।

**सोमपीति(थि)न्** पु० पीतसनेन इनि सोमं पीतो पृ० वा तस्य यः । यज्ञे-सोमरसपायिनि । पा-क्वनिप् । सोमपीवाप्यत्र ।

**सोमबन्धु** पु० सोमस्य बन्धुः, सोमो बन्धुरस्य वा । सूर्य्ये तद्वंशिकरत्वात् तस्य तथात्वम् चन्द्रजे बुधे पु० कुमुदे न० ।

**सोमभू** पु० सोम एव भूरुत्पत्तिस्थानं यस्य । बुधग्रहे, चन्द्रवंश्ये क्षत्रिये च । [यागभेदे ।

**सोमयाग** पु० सोमेन याग' । त्रिवर्षसाध्ये सोमरसपानाङ्गके

**सोमयाजिन्** पु० सोमेन यजते यज-णिनि । सोमयागकर्त्तरि

**सोमयोनि** न० सोमः योनिरस्य । चन्दनभेदे ।

**सोमराजी** स्त्री० सोमेन राजते राज-अच् गौ०ङीष् । (सोमराज) ओषधिभेदे । स्वार्थे कन् । सोमराजिकाप्यत्र । राज-णिनि । सोमराजीत्यप्यत्र पु० ।

**सोमलता** स्त्री० सू-मन् कर्म० । स्वनामख्यातायां लतायाम्

**सोमलतिका** स्त्री०सोमलतेव इवार्थे कन् अत इत्वम् । गुडूच्याम्

**सोमवंश** पु० सोमस्य वंशः । चन्द्रवंशे चन्द्रादिके गोत्रपरम्पराजाते क्षत्रिये च । [श्वेतखदिरे, कट्फले च ।

**सोमवल्क** पु० सोमस्येव वल्कमस्य । करञ्जे, रीठाकरञ्जे.

**सोमवल्लिका** स्त्री० सोमवल्लीव इवार्थे कन् । सोमराज्याम् स्वार्थे कन् । सोमलतायाम् ।

**सोमवल्ली** स्त्री० सोमाख्यालताय वल्ली । गुडूच्याम् । सोमरूपा वल्ली । सोमलतायाम् सोमराज्यां, ब्राह्म्यां, सुदर्शनायाञ्च ।

**सोमवार** पु० सोमस्वामिको वारः । चन्द्रस्वामिके दिने ।

**सोमविक्रयिन्** पु० सोमं विक्रीणाति वि+क्री-णिनि । सोमलतायाः तद्रसस्य वा विक्रेतरि ।

**सोमवृक्ष** पु० सोम इव वृक्षः । कट्फलवृक्षे, श्वेतखदिरे च ।

**सोमसार** पु० सोम इव शुभ्र' सारोऽस्य । श्वेतखदिरे ।

**सोमसिद्धान्त** पु० सोमकृतः सिद्धान्त' । चन्द्रप्रोक्ते ज्योतिषग्रन्थभेदे । [सोमलतानिष्पीडने ।

**सोमसुत** पु० सोमं सुतवान् सु-भूते क्विप् । यज्ञार्थं कृत

**सोमसुत्वन्** पु० सोमं सुतवान् भूते क्वनिप् । कृतसोमरसपाने

**सोमसुता** स्त्री० ६त० । नर्मदानद्याम् । बुधे पु० । सोमोद्भवादयोऽप्यत्र पु० स्त्री० यथायथम् ।

**सोमसूत्र** न० सोमस्य जलस्य सूत्रमिव प्रणाली । जलनिर्गमप्रणाल्याम्. शिवलिङ्गस्थगौरीपट्टस्य जलनिर्गमस्थाने च 'सोमसूत्रं न लङ्घयेदिति' तन्त्रम् ।

**सोल्लुण्ठ** त्रि० सह उल्लुण्ठेन । भूमौ पार्श्वपरिवर्त्तादियुक्ते अश्वादौ अन्यार्थवाक्यस्य अन्यपरत्वयुक्ते वाक्ये च ।

**सोल्लुण्ठन** न० सह उल्लुण्ठनेन । अन्यथास्थितस्य अन्यक्रमेण परिवर्त्तनसहिते वाक्ये (स्तुतिपरस्य निन्दापरता निन्दापरस्य च स्तुतिपरता इत्येवं रूपे वाक्ये) ।

**सौकर्य्य** न० सुकरस्य भावः ष्यञ् । अनायाससाध्यत्वे ।

**सौखसुप्तिक** त्रि० सुखसुप्तिं सुखेन शयनं पृच्छति ठञ्। प्रातःकाले सुखशयनप्रच्छके वैतालिकादौ।

**सौख्य** न० सुखमेव चातु० ष्यञ्। सुखे। [तत्सम्बन्धिनि त्रि०।

**सौगत** पु० सुगत एव अण्। सुगते बुद्धभेदे तस्येदमण्। सुग-

**सौगन्ध** न० सुष्ठु गन्धोऽस्य स्वार्थे अण्। कत्तृणे रामकर्पूरे।

**सौगन्धिक** न० सुष्ठु गन्ध सुगन्ध तस्येदम् ठण्। कह्लारे। [सुगन्धौ।

**सौगन्ध्य** न० सुगन्धस्य भाव ष्यञ्। सदगन्धे। स्वार्थे ष्यञ्।

**सौचिक** पु० सूची तत्कर्मसीवनमुपजीवति ठन्। (दरजी) सीवनकारके। [च। 'सौजन्यजन्य यश' इत्युद्भट।

**सौजन्य** न० सुजनस्य भाव ष्यञ्। सुजनतायां सद्व्यवहारे

**सौण्डी** स्त्री० शुण्डाकारोऽस्त्यस्या अण् ङीप् पृ० मस्य स। गजपिप्पल्याम्।

**सौत्र** पु० पाणिन्यादिभि सूत्रेण कर्मविशेषाय पठित अण्। भ्वादादिदशगणीयभिन्नेषु सूत्रमात्रपठितेषु धातुषु।

**सौत्रामणी** स्त्री० सुत्रामा इन्द्रो देवताऽस्य अण् अपूर्व- त्वात् न टिलोप णत्वम्। इष्टिभेदे तत्र हि सुरापान- शिष्टायामपि विहितम् 'सौत्रामण्यां सुरां पिबेदिति श्रुति

**सौदामनी** स्त्री० सुदामा पर्वततभेदस्तेनैका दिक् तत्सान्न- ध्यात् अण्। विद्युति। सा हि स्फटिकमयस्य सुदाम्न पर्वतस्यैकदेशे जाता। अप्सरोभेदे च। सुदामा ऐरावत गजस्तस्य पत्नी ङीप्। ऐरावतयोषिति। तत्र ङीपि प्रतोऽल्लोपे। सौदाम्नीत्यपि।

**सौदायिक** न०सुदायात् बन्धुकुलात् आगत ठञ्। 'ऊढया कन्यया वापि पत्यु पितृगृहेऽथ वा। भर्त्तु सकाशात् पित्रो र्वा लब्ध सौदायिक स्मृतमिति, स्मृत्युक्ते स्त्रीधनभेदे 'सौदायिक धन प्राप्य स्त्रीणां स्वातन्त्र्य परिकीर्त्तितमिति" स्मृति

**सौदास** पु० चन्द्रवंश्ये कल्माषपादे नृपतौ।

**सौध** पु०न० सुधया लेपनद्रव्येण रक्तम् अण्। राजसदनभेदे सुधाधवलमर्हति अण्। रूप्ये न०। सुधासम्बन्धिनि त्रि०।

**सौनिक** पु० सूना बध्यस्थानं तदुपलक्षितमांसादि पण्यमस्य ठण्। मांसक्रयविक्रयोपजीविनि व्याधे (कसाइ)।

**सौन्दर्य्य** न० सुन्दरस्य भाव ष्यञ्। चारुतायां, "अङ्ग- प्रत्यङ्गकानां य सन्निवेशो यथोचितम्। सुश्लिष्ट सन्धिबन्ध स्यात् तत्सौन्दर्य्यमुदाहृतमि 'सुश्लिष्ट चाङ्गादीनां मनोहरत्वे

**सौपर्ण** न० सुपर्णानि तद्रूपमर्हति अण्। मरकतमणौ।

**सौपर्णेय** पु० सुपर्ण्या विनताया अपत्यम् ढक्। गरुडे।

**सौप्तिक** त्रि० सुप्तिकाले रात्रौ भवम् ठञ्। रात्रियुद्धे सुप्ता- नधिकृत्य कृतो ग्रन्थ ठञ्। महाभारतपर्व्वभेदे।

**सौभ** न० सुष्ठु सर्व्वत्र लोके भाति भा क स्वार्थे अण्। कामचारिणि, पुरे हरिश्चन्द्रस्यपुरे च।

**सौभद्र** पु० सुभद्राया भव अण्। सुभद्रापुत्रे अभिमन्यौ।

**सौभद्रेय** पु०सुभद्राया अपत्यम् ढक्। सुभद्रासुते अभिमन्यौ।

**सौभरि** पु० मुनिविशेषे।

**सौभागिनेय** पु० सुभगाया अपत्यम् ढक् इनादेश द्विपद- वृद्धि। सुभगापुत्रे। तत्कन्यायां स्त्री० ङीप्।

**सौभाग्य** न०सुभगस्य भाव ष्यञ् द्विपदवृद्धि। प्रियत्वे स्वार्थे ष्यञ्। सिन्दूरे, टङ्कणे च। विष्कम्भादिषु मध्ये चतुर्थे योगे पु। [ऐन्द्रजालिके।

**सौभिक** पु० सौभ कामचारिपुर तन्निर्माणं शिल्पमस्य ठण्।

**सौमनस्य** न० सुमनसो भाव ष्यञ्। प्रसन्नचित्तत्वे।

**सौमनसायनी** स्त्री० सौमनसमयतेऽनया अय ल्युट् ङीप् इत्व०। मालत्याम् तत्कलिकायाञ्च। [लक्ष्मणे।

**सौमित्र(त्रि)** पु० सुमित्राया भव अण्, बाह्वादि इञ् वा।

**सौम्य** त्रि०सोमो देवताऽस्य अण्। सोमदेवताके टित्वात् स्त्रियां ङीप्। सोमस्य शाखादित्वात् य स्वार्थे अण्। मनोहरे प्रियदर्शने अतुग्रे च त्रि० बुधे पु०। तत्र स्वार्थिक प्रत्ययाभावे सोम्योऽप्युभयत्र। 'सदेव सोम्येदमग्र आसी दिति श्रुति ज्योतिषोक्ते शुभपक्षे इष्टादिसमराशौ, उडुम्बरवृक्षे सोमयायिनि विप्रे पु०। [मृगशिरसि।

**सौम्यकृच्छ्र** पु कर्म०सोमदेवताके कृच्छ्रसाध्ये व्रतभेदे। [मृग-

**सौम्यगन्धी** स्त्री० सौम्य अनुग्र गन्धो यस्या गौ ङीष्।

**सौम्यग्रह** पु कर्म०। ज्योतिषोक्ते चन्द्रबुधगुरुशुक्ररूपे शुभग्रहे

**सौर** पु० सूरस्य इदम् सूरो देवतास्य अण् वा। सूर्य्यपुत्रे शनैश्चरे यमे च। सूर्य्यदेवताके त्रि०स्त्रियां ङीप्। सूरेण निर्वृत्त अण्। एकैकराशौ तद्भोगेषु सूर्य्यगतिसाध्ये दिन- मासादौ त्रि। 'विवाहादौ स्मृत सौर' इति स्मृति उडुम्बुरवृक्षे पु०। [तुम्बुरुवृक्षे।

**सौरज** पु० सूर्य्याद् सौर आलोकस्तस्माज्जायते जन ड।

**सौरभ** न० सुरभेर्भाव अण्। सद्गन्धे, सौरभमस्त्यस्य अच्। सुरभिरस्त्यस्मिन् अण् वा। कुङ्कुमे, बोले च न।

**सौरभेय** पु० सुरभेरपत्यम् ढक्। गवि स्त्रियां ङीप्। 'सौरभेयोऽथ एव चेति' गोदानमन्त्र तस्या इदम् ढक्। सुरभि सम्बन्धिनि त्रि०।

**सौराष्ट्र** पु० सुष्ठु, राष्ट्रमस्त्यत्र प्रज्ञा० अण्। (सुरट) देश- भेदे। सुराष्ट्रे भव अण्। सुराष्ट्रदेशभवे त्रि०। विषभेदे न०

**सौराष्टिक** न० सुराष्ट्रदेशे भवः ठक् । विषभेदे ।

**सौरि** पु० सूरस्यापत्यम् इञ् । शनैश्चरे 'सौरिवारेऽमृता-नीति' ज्योतिषम् ।

**सौरिरत्न** न० सौरिप्रियं रत्नम् शाक० । नीलके मणौ ।

**सौरेय** पु० सुरायै हितम् ढक् । शुक्लझिण्ट्याम् स्वार्थे कन् तत्रैव । [ताम्रमयपात्रनिर्म्माणकर्त्तरि (कामारि)

**सौल्विक** त्रि० सुल्वं ताम्रपात्रादिनिर्म्माणं शिल्पमस्य ठक् ।

**सौव** त्रि० स्वस्येदम् अण् न वृद्धिः वात्पूर्व्वं औत् । आत्म-सम्बन्धिनि । [स्वग्रामभवे पदार्थे ।

**सौवग्रामिक** त्रि० स्वग्रामे भवः ठक् न वृद्धिः वात्पूर्व्वमौत् ।

**सौवर्चल** न० सुवर्चलदेशे भवम् अण् । कृष्णलवणे ।

**सौवर्णभेदिनी** स्त्री० सुवर्णस्य विकारः अण् सौवर्णमिव भिनत्ति प्रकाशते भिद्-णिनि । प्रियङ्गौ ।

**सौवस्तिक** पु० स्वस्तिकरणे कुशलः ठक् न वृद्धिः वात्पूर्व्व-मौत् । पुरोहिते ।

**सौविद** पु० सुविदन्ति सु+विद्-क स्वार्थेऽण् । अन्तःपुररक्षके

**सौविदल्ल** पु० सुष्ठु विदन्तं विद्वांसमपि लाति ला-क स्वार्थेऽण् । अन्तःपुररक्षके ।

**सौवीर** पु० सुष्ठु वीरो यत्र सुवीरो देशभेदः तत्र भवः अण् । स्रोतोऽञ्जने । काञ्जिके, वदरे च न० स्वार्थे कन् । काञ्जिकभेदे न० । वदरवृक्षे पु० ।

**सौवीरसार** पु०न०कर्म० । स्रोतोऽञ्जने ।

**सौवीराञ्जन** न० सौवीराख्यमञ्जनम् । अञ्जनभेदे 'सौवीरन्तु यवैरामैः पक्वैर्वा निस्तुषैः कृतम् गोधूमैरपि सौवीरमि'त्या-द्युक्ते अञ्जनभेदे ।

**सौष्ठव** न० सुष्ठु भद्रं तस्य भावः अण् न टिलोपः । आति-शय्ये 'स सौष्ठवौदार्य्यविशेषशालिनीमि'ति भारविः ।

**सौहार्द** न० सुहृदो भावः अण् । स्नेहे, मित्रत्वे च ।

**सौहित्य** न० सुहितस्य तृप्तस्य भावः ष्यञ् । तृप्तौ, 'नातिसौहित्यमाचरेदिति' स्मृतिः ।

**सौहृद** न० सुहृदो भावः अण् । मित्रत्वे बन्धुतायाम् ।

**स्कद्** उत्प्लुत्य गतौ अक० उद्धृतौ, आप्लावे च सक० भ्वा०आ० सेट् इदित् । स्कन्दते अस्कन्दिष्ट । [न्दत् त

**स्कन्द्** समाहारे अद०चु०उभ०सक०सेट् । स्कन्दयति ते अचस्क

**स्कन्द्** गतौ शोषणे च भ्वा०पर०सक०अनिट् । स्कन्दति अस्क-दत् अस्कान्त्सीत् ।

**स्कन्द** पु० स्कन्दते उत्प्लुत्य गच्छति अच् । कार्त्तिकेये ।

**स्कन्दन** न० स्कन्द्-ल्युट् । रेचने,शरणे,गतौ शोषणे च ।

**स्कन्दांशक** पु०स्कन्दस्यांश एवांशो यस्य कप् । पारदे । तयोः शिववीर्य्यजत्वादेकांशत्वम् ।

**स्कन्ध** पु० स्कद्यते आरुह्यते कर्मणि घञ् पृ० । अंसे (कांध) वृक्षस्य काण्डे (गुडि)न्टपे,व्यूहे, युद्धे,समूहे, काये,भद्रादौ, छन्दोभेदे, सौगतसिद्धेषु विज्ञानादिषु पञ्चसु 'मुक्ताङ्गस्कन्धपञ्चकमि'ति माघः । पथि, ग्रन्थपरिच्छेदे च । 'स्कन्धै-र्द्वादशभिर्युक्तमि'ति भागवतविशेषणम् ।

**स्कन्धतरु** पु० स्कन्धप्रधानस्तरुः । नारिकेलवृक्षे ।

**स्कन्धफल** पु० स्कन्धे फलमस्य । नारिकेलवृक्षे, उडुम्बरवृक्षे च

**स्कन्धबन्धना** स्त्री० स्कन्धे बन्धनमस्याः । मधुरिकायाम् ।

**स्कन्धरुह** पु० स्कन्धात् रोहति रुह क । वटवृक्षे ।

**स्कन्धवाह** पु० स्कन्धेन वाहयति वह-णिच्-अच् । शकटादि द्वारा स्कन्धवाहके वृषादौ । ण्वु । तत्रैव । [शाखायाम् ।

**स्कन्धशाखा** स्त्री० स्कन्धात् प्रभृति शाखा । वृक्षस्य प्रधान

**स्कन्धशृङ्ग** पु० स्कन्धपर्य्यन्तं शृङ्गमस्य । महिषे ।

**स्कन्धावार** पु० स्कन्धार्थमावारः आ+वृ-घञ् । युद्धार्थमुद्युक्त-सैन्यानां स्थापने, तदाधारे-कटके च । [भावे क्त । क्षरणे,न०

**स्कन्न** त्रि० स्कन्द्-क्त । च्युते, गलिते, क्षरिते, शुष्के, गते च ।

**स्कभ्** प्रतिघाते क्र्या० स्वा०उ०सक०सेट् । स्कभ्नाति स्कभ्नीते स्कभ्नोति स्कभ्नुते । अस्कम्भीत् अस्कम्भिष्ट ।

**स्कभ** लम्भे भ्वा०आ०सक०सेट् इदित् । स्कम्भते अस्कम्भिष्ट ।

**स्कु** उद्धृतौ आप्लावने च क्र्या०स्वा०उ०सक०अनिट् । स्कुनाति स्कुनीते स्कुनोति स्कुनुते । अस्कौषीत् अस्कोष्ट ।

**स्कुद्** आप्लावने उद्धृतौ च भ्वा०आ०सक०सेट् इदित् । स्कुन्दते अस्कुन्दिष्ट । [ स्कुभ्नाति स्कुभ्नोति । अस्कुम्भीत् ।

**स्कुन्भ** रोधने सौ० क्र्या०स्वादि० कार्य्यभागी प०सक०सेट् ।

**स्खद्** विदारे दि०आ०सक०सेट् । स्खद्यते अस्खदिष्ट घटादि० स्खदयति । [स्खलयति स्खालयति ।

**स्खल** चले भ्वा०प०सक०सेट् वा घटा० । स्खलति अस्खालीत्

**स्खलन** न० स्खल-भावे ल्युट् । चलने पतने ।

**स्खलित** न० स्खल—भावे क्त । कूटयुद्धादौ-प्रवृत्त्या वीरमर्य्या-दातः पतने स्खलनमात्रे च । कर्त्तरि क्त । चलिते त्रि०

**स्तन** मेघशब्दे अद०चु०उभ०सक०सेट् । स्तनयति ते अतस्तनत् त

**स्तन** पु० स्तन-अच् । (माइ) स्त्रीणाम् अङ्गभेदे ।

**स्तनन** न० स्तन-ल्युट् । ध्वनिमात्रे, मेघशब्दे, कुन्थनशब्दे च ।

**स्तनन्धय** पु० स्त्री० स्तनं धयति धे-खश् मुम् च । अतिशिशौ स्त्रियां ङीप् । [टाप् ।

**स्तनप** पु०स्त्री०स्तनं पिबति पा-क । अतिशिशौ बालके । स्त्रियां

स्तनभर पु० ६त० । स्थूलस्तनभारे स्तनाभोगे च ।

स्तनयित्नु पु० स्तन-इत्नु । मेघे, मुस्तके, मेघशब्दे, विद्युति, मृत्यौ, रोगे च ।

स्तनवृन्त पु०स्तनस्य वृन्तइवाग्रम् । स्तनाग्रे स्तनशिखाद्योपयत्र

स्तनान्तर न० स्तनयोरन्तरम् । हृदये स्तनमध्ये च ।

स्तनाभोग पु० ६त० । स्तनस्य परिपूर्णतायाम् ।

स्तनित न० स्तन—भावे क्त । मेघशब्दे, सुरतादिशब्दे च । कर्त्तरि क्त । शब्दिते त्रि० ।

स्तन्भ रोधने क्र्या० स्वा०प०सक०सेट् क्ना सेट् । स्तभ्नाति स्तभ्नोति अस्तभत् अस्तम्भीत् ।

स्तन्य न० स्तने भवम् यत् । स्तनजाते दुग्धे ।

स्तब्धरोमन् पु० स्तब्धानि रोमाणि यस्य । शूकरे ।

स्तभ स्तम्भने जडीभावे अक० सत्करणे, क्रियानिरोधे च सक० भ्वा०आ० सेट् इदित् । स्तम्भते अस्तम्भिष्ट ।

स्तम्ब पु० स्था अम्बच् किञ्च उ० । काण्डरहिते क्लिष्टिकादौ-इक्षे तृणादौ, गुच्छे च ।

स्तम्बकरि पु० स्तम्ब गुच्छ करोति कृ इन् । व्रीहिधान्ये ।

स्तम्बघन पु० स्तम्बो हन्यतेऽनेन हन क नि० । स्तम्बोन्मूलके खनित्रादौ । [खनित्रादौ ।

स्तम्बघ्न त्रि० स्तम्बो हन्यतेऽनेन हन-घञर्थे क । स्तम्बोन्मूलके

स्तम्बेरम पु स्तम्बे तृणादीनां काण्डे गुच्छे गुल्मे वा रमते अच् अलुक् स० । गजे । [जडीभावे पु ।

स्तम्भ पु स्तम्भ-अच् । (थाम) स्थूणायाम् । भावे घञ् ।

स्तम्भन न० स्तम्भ-जडीकरणे भावे ल्युट् । जडीकरणे । करणे ल्युट् । तन्त्रोक्ते जडीकरणसाधने प्रयोगभेदे ।

स्तम्भन पु० स्तम्भयति स्तम्भ—णिच् ल्यु । कन्दर्पस्य पञ्च बाणेषु मध्ये बाणभेदे ।

स्तव पु० स्तु-अप् । प्रशंसायाम्, स्तुतौ च ।

स्तवक पु स्तु-वुन्, स्था-अवक इ वा । गुच्छे ।

स्तावक त्रि० स्तु ण्वुल् । स्तुतिकारके ।

स्तिमित न स्तिम भावे क्त । आर्द्रतायाम्,अचाञ्चल्ये च । कर्त्तरि क्त । अचञ्चले आर्द्रे च त्रि० ।

स्तुत पु० स्तु-क्त । कृतस्तवे ।

स्तुति स्त्री स्तु-क्तिन् । स्तवे ।

स्तुतिपाठक पु स्तुतिं पठति पठ-ण्वुल् । राजादेर्बन्दिनि ।

स्तुन्भ रोधने सौ० क्र्या० स्वा० कार्य्यभागी पर० सक सेट् क्नासेट् । स्तुभ्नोति स्तुभ्नाति । अस्तुम्भीत् ।

स्तूप पु० स्तू—पक् स्तूप-अच् वा । राशीकृते मृत्तिकादौ सङ्घाते, वंशे, निष्प्रयोजने च ।

स्तूभ पु० स्तुन्भ-मूल० क । छागे । [ पीत् अस्तृत अस्तरिष्ट ।

स्तृ विस्तारे स्वा० उ० सक० अनिट् । स्तृणोति स्तृणुते अस्ता-

स्तृ प्रीतौ अक रक्षणे सक० स्वा० प० अनिट् । स्तृणोति अस्तार्षीत् । षोपदेशत्वात् ष । [षदेशत्वात् ष ।

स्तृक्ष गतौ भ्वा० पर० सक० सेट् । स्तृक्षति अस्तृक्षीत् । षो-

स्तृह वधे तु० प० सक० वेट् । स्तृहति अस्तर्हीत् अस्तृक्षत् । षोपदेशत्वात् ष ।

स्तॄ आच्छादने क्र्या० स्वा० उ० सक० सेट् । स्तृणाति स्तृणीते अस्तारीत् अस्तरिष्ट अस्तरीष्ट अस्तीर्ष्ट । [स्तेनत्-त ।

स्तेन चौर्य्ये अद० चु० उभ० सक० सेट् । स्तेनयति-ते अति-

स्तेन पु० स्तेन-घञ् । चौर्य्ये । अच् । चौरे त्रि० ।

स्तेप क्षेपे चु० उभ० सक० सेट् । स्तेपयति-ते अतिस्तिपत् त । षोपदेशत्वात् ष ।

स्तेम पु० स्तिम-घञ् । आर्द्रीभावे, स्नेहे च ।

स्तेय न० स्तेनस्य भाव यत् नि । चौर्य्ये "प्रत्यक्षं वा परोक्षं वा रात्रौ वा यदि वा दिवा । यत् परद्रव्यहरणं स्तेयं तत्परिकीर्त्तितम् इत्युक्ते परद्रव्यापहारे । [ङीप् ।

स्तेयिन् त्रि० स्तेयमस्त्यस्य इनि । परद्रव्यापहारके । स्त्रियां-

स्तैन(न्य) न० स्तेनस्य भाव अण् ष्यञ् वा । चौर्य्ये परद्रव्यापहरणे । स्तेन एव स्वार्थे ष्यञ् । चौरे त्रि० । [भावे च ।

स्तैमित्य न० स्तिमितस्य भाव ष्यञ् । जाड्ये, स्नेहे, आर्द्री-

स्तोक पु० स्तुच-घञ् । चातके, जलबिन्दौ च । अल्पे त्रि ।

स्तोकक पु० स्तोकाय जलाय कायति शब्दायते कै—क । चातके

स्तोत्र न० स्तु-ष्ट्रन् । स्तवे-गुणकर्म्मादिभि प्रशंसने ।

स्तोभ पु० स्तुभ-घञ् । अर्थशून्ये गानादिस्वरपरिपूरणार्थे शब्दभेदे यथा सामवेदे हुङा होइ प्रभृतय । हेलने स्तम्भने च

स्तोम श्लाघागुणाविष्करणे अद० चु० उभ सक० सेट् । स्तोमयति ते अतुस्तोमत्-त ।

स्तोम पु स्तोम-घञ् स्तु-मन् वा । समूहे यज्ञे स्तवे च मस्तके, धने, शस्ये लौहदण्डे च न० । वक्रे त्रि ।

स्त्यान न० स्त्यै-भावे क्त तस्य न । स्नेहे, घनत्वे सङ्हतौ आलस्ये प्रतिशब्दे च । कर्त्तरि क्त । सङ्घातकारके ध्वनि कारके च त्रि० । [षोपदेशत्वात् ष

स्त्यै सङ्हतौ ध्वनौ भ्वा० अक अनिट् । स्त्यायति अस्त्यासीत् ।

स्त्री स्त्री० स्तृ-ड्रट् । योषिति भार्य्याम् ।

स्त्रीगवी स्त्री॰ स्त्री चासौ गौश्च षच् समा॰ । (गाभि) रोहि-
ण्याम् । [भाञ्जने । स्त्रीमनोहारके त्रि॰ ।

स्त्रीचित्तहारिन् पु॰ स्त्रियाश्चित्त हरति हृ-णिनि । घो-

स्त्रीचिह्न न॰ स्त्रिया असाधारणं चिह्नम् । योनौ

स्त्रीचोर पु॰ स्त्रिया. चोर इव । कामुके ।

स्त्रीजित पु॰ स्त्रिया जित जि-क्त । स्त्रीवश्ये ।

स्त्रीधन न॰ ६त॰ । स्त्रीस्वत्वाश्रये द्रव्यमात्रे इतिमिताक्षरा-
दय । "अध्यग्न्यध्यावाहनिक भर्तृदायं तथैव च । भ्राता-
दत्त पितृभ्याञ्च षड्विध स्त्रीधन स्मृत" मित्येवं परि-
गणिते स्त्रीस्वत्वाश्रये धने इति दायभागादय. ।

स्त्रीधर्म्म पु॰ ६त॰ । ऋतौ नारीकुसुमविकाशे रजसि ।

स्त्रीधर्म्मिणी स्त्री॰ स्त्रीधर्मोऽस्त्यस्या इनि । ऋतुमत्यां स्त्रियाम्

स्त्रीपुंधर्म्म पु॰ स्त्रिया पुंसश्च धर्म. तमधिकृत्य व्यवहारो वा ।
स्त्रीपुंसयो. यथाशास्त्राचाररूपे धर्मे तद्विषयके अष्टा-
दशसु विवादेषु मध्ये विवादभेदे "स्त्रीपुंधर्मोविभाग-
श्चेति" स्मृति । [पुरुषयोः ।

स्त्रीपुंस पु॰ द्विव॰ स्त्री च पुमांश्च अच् समा॰ । मिलितयोः स्त्री-

स्त्रीपुंसलक्षणा स्त्री॰ स्त्रीपुंसयोर्लक्षणमस्याम् । स्तनश्मश्रु-
प्रभृतिस्त्रीपुरुषचिह्नधारिण्यां स्त्रियाम् ।

स्त्रीप्रिय पु॰ ६त॰ । आम्रवृक्षे । नारीप्रियमात्रे त्रि॰ ।

स्त्रीलिङ्ग पु॰ स्त्रिया इव लिङ्गं तत्कार्यं यस्य । स्त्रीलिङ्ग-
विहितव्याकरणोक्तसंस्कारयुक्ते शब्दभेदे । ६त॰ स्त्री-
चिह्ने न॰ ।

स्त्रीवश्य पु॰ ६त॰ । स्त्रीवशीभूते ।

स्त्रीविधेय पु॰ ६त॰ । स्त्रीवशीभूते । [विवादभेदे ।

स्त्रीसंग्रहण न॰ स्त्रिया संग्रहण यत्र । परस्त्रीहरणरूपे-

स्त्रीसभ न॰ स्त्रीणां सभा क्लीवत्वम् । स्त्रीसमाजे ।

स्त्रीसेवा स्त्री॰ ६त॰ । स्त्रीसम्भोगे, व्यवायधर्म्मेण नारीसेवने ।

स्त्रीस्वभाव पु॰ स्त्रिया इव स्वभावो यस्य । अन्तःपुररक्षके
षण्ढके ६त॰ । स्त्रीणां शीले ।

स्त्रैण न॰ स्त्रिया इदम् अण् नञ् । स्त्रीस्वभावे, "स्त्रैणेन नीता
विकृतिं लघिम्नेति" भट्टि । स्त्रीविधेये, स्त्रीसम्बन्धिनि
च त्रि॰ ।

स्थ त्रि॰ स्था-क । स्थितिशीले प्रायेण उत्तरपदस्थित एवायं
प्रयुज्यते यथा पटस्य मार्गस्य निकटस्थ इत्यादि ।

स्थग संवरणे भ्वा॰ पर॰ सक॰ सेट् घटा॰ णिचि न वृद्धिः ।
स्थगति, अस्थगीत् । अषोपदेशत्वान्न ष ।

स्थगन न॰ स्थग-ल्युट् । आच्छादने ।

स्थगित त्रि॰ स्थग-क्त । आवृते तिरोहिते । [करङ्के ।

स्थगी स्त्री॰ स्थग्यते ऽनया घञर्थे क गौ॰ ङीष् । ताम्बूलपात्रे

स्थण्डिल न॰ स्थल इलच् नुक् लस्य ड । चत्वरे, उन्नत्यवनति
शून्ये समीकृते प्रदेशे "निषेदुषी स्थण्डिल एव केवले"
इति कुमार । यज्ञार्थं परिष्कृतस्थाने, होमार्थं कुण्ड-
प्रतिनिधित्वेन वालुकादिभिः कर्त्तव्ये मण्डलभेदे च "नित्यं
नैमित्तिक कर्म्म स्थण्डिले वा समाचरेत् । हस्तमात्रं तु
तत् कुर्य्यात् वालुकाभि. समन्तत" इति तन्त्रम् ।

स्थण्डिलशायिन् पु॰ स्थण्डिले चत्वरे शेते व्रतवशात् शी-
णिनि । व्रतार्थं चत्वरे शयितरि । "स्थण्डिलशायिन-
श्चेति" भट्टि. । [चत्वरे शयितरि ।

स्थण्डिलेशय पु॰ स्थण्डिले शेते अच् अलुक् समा॰ । व्रतार्थं

स्थपति पु॰ स्था-क तस्य पति. । कञ्चुकिनि, शिल्पिभेदे, (छुतार)
कुवेरे, अधीशे, वृहस्पतिसवनामकयागकर्त्तरि च । सत्तमे त्रि॰

स्थपुट त्रि॰ तिष्ठति स्था-क स्थं पुटं यत्र । विषमोन्नतप्रदेशे,
"स्थपुटगतमपि क्रव्यमव्यग्रमत्तीति" मालतीमाधवम् ।
विषमस्थाने-सञ्चारिणि-जीवे पु॰ ।

स्थल स्थाने भ्वा॰ पर॰ अक॰ सेट् ज्वला॰ । स्थलति अस्था-
लीत् । ष्ठलधातुनैवायं गतार्थ इत्यन्ये ।

स्थल न॰ स्त्री॰ स्थल-अच् । जलशून्ये-अकृत्रिमे-भूभागे ।
स्त्रीत्वपक्षे ङीष् । "वनस्थलीर्मर्म्मरपत्त्रमोक्षा" इति
कुमार. । कृत्रिमाकृत्रिमप्रदेशमात्रे, कृत्रिमभूभागे च न॰ ।

स्थलकन्द पु॰ स्थलज कन्द । (वनओल) अग्राह्यकन्दे ।

स्थलकमल न॰ स्थलजात कमलम् । स्थलपद्मे ।

स्थलकुमुद पु॰ स्थले कुमुदमस्त्यस्य सादृश्येन अच् । करवीरे ।

स्थलपद्म न॰ स्थलजात पद्म शाक॰ । स्वनामख्याते पुष्पवृक्षे ।
स्थलजं पद्ममिव । मानके पु॰ ।

स्थलपद्मिनी स्त्री॰ स्थलपद्मानां समूह तेषां सन्निकृष्टदेशो
वा इनि । स्थलपद्मसमूहे तद्युक्तवृक्षे च । "ददर्श दून.
स्थलपद्मिनी नल" इति नैषधम् ।

स्थलमञ्जरी स्त्री॰ स्थलस्य मञ्जरीव । अपामार्गे ।

स्थलशृङ्गाट पु॰ स्थलजात शृङ्गाट. शाक॰ । गोक्षुरे तस्य कण्ट-
कावृतत्वात् तथात्वम् । [कुमार्य्याम् ।

स्थलेरुहा स्त्री॰ स्थले रोहति रुह-क अलुक् स॰ । घृत

स्थलेशय पु॰ स्थले शेते शी-अच् अलुक् स॰ । वराहरुरु
प्रभृतौ पशौ-स्थलशायिनि त्रि॰ ।

स्थविर न॰ स्था-किरच् स्थवादेश । शैलेये गन्धद्रव्ये । चतुर्मुखे
ब्रह्मणि पु॰ । अचले, स्थिरे, वृद्धे च त्रि॰ । महाश्रावण्यां स्त्री॰ ।

स्थविष्ठ त्रि॰ अतिशयेन स्थूल इष्ठन् उणोमे गुण । अतिवृद्धे- स्थष्ठ स्थवीयानपि । अतिवृद्धे । स्त्रियां ङीप् ।

स्थाणु पु स्था नु पृ॰ धात्वम । शिवे,शाखाशून्यवृक्षे च ।वस्त्र- भेदे पु॰ स्थविरे त्रि । [तिरि ।

स्थाण्डिल पु स्थण्डिले शयिता अण् । व्रतार्थं स्थण्डिले शयि

स्थान न॰ स्था-ल्युट् । स्थितौ, सादृश्ये अवकाशे, सन्निवेशे, वसतौ, दन्त्यमन्त्रौ, भाजने, निकटे, व्याकरणोक्ते प्रसङ्गे, (आदिश्यमानस्य यथादि कारणभूते दृगादौ)। नीतिवेदि- भाग्यवयापचयहीने साध्याव स्थाने च ।

स्थानचञ्चला स्त्री॰ स्थाने स्थितापि चञ्चला । वर्वरीभेदे अल्पपातेन चञ्चलत्वात्तथात्वम् ।

स्थानाध्यक्ष त्रि॰ स्थाने अध्यक्ष । स्थानरक्षके ।

स्थानिक त्रि॰ स्थानेऽधिकृत ठञ् । स्थानाध्यक्षे ।

स्थानिन् त्रि॰ स्थानमस्यास्ति इत्यनेन । स्थानरक्षके । स्थान प्रसङ्ग अस्त्यर्थे इनि । व्याकरणोक्ते आदिश्यमानयणादे कारणे दृगादौ 'स्थानिवदादेशोऽनल्विधाविति' पाणिनि

स्थानीय न॰ तिष्ठतेऽस्मिन् स्था-आधारे अनीयर् । नगरे, स्थान यावमर्हति स्थानस्येदम् वा छ । वासयोग्ये, देशे स्थानसम्बन्धिनि च त्रि॰ ।

स्थाने अव्य॰ स्था-ने । योग्यत्वे औचित्ये च"स्थानेभवानेकनरा- धिप मन्निति रघु । सत्ये सादृश्ये, कारणार्थे च ॥

स्थापत्य पु॰ स्थपतिरेव स्वार्थे ष्यञ् । अन्तःपुररक्षके कञ्चुकि- प्रभृतौ । तस्य भाव ष्यञ् । स्थपतिधर्मे न॰ ।

स्थापन न॰ स्था-णिच् ल्युट् । आरोपणे, समाधौ, पुंसवनाख्ये गर्भधारणसंस्कारे च युच् । स्थापनायाम् स्त्री॰ सा च निवे- शने च । [पाठायाम् ।

स्थापनी स्त्री॰ स्थाप्यतेऽनया स्था-णिच्-करणे ल्युट् ।

स्थापित त्रि॰ स्था-णिच्-क्त । निहिते,निश्चिते न्यस्ते च ।

स्थामन् न॰ स्था-मनिन् । सामर्थ्ये बले च ।

स्थायिन् त्रि॰ स्था-णिनि । स्थितिशीले अलङ्कारोक्ते रसानु- कूले रसस्थिभावे पु॰ । 'विभावेनानुभावेन व्यक्त सञ्चा- रिणा तथा । रसतामेति रत्यादि स्थायी भाव सचेतसा मिति ' साहित्य । [पु ।

स्थायुक त्रि॰ स्था-उकञ् । स्थितिशील । एकग्रामाधिकृते

स्थाल न॰ स्थलति तिष्ठत्यत्र आधारे घञ् । (थाल पात्र- भाजे । पाकपात्रे (हाँड़ि) स्त्री गौ ङीष् ।

स्थालीपाक पु स्थाल्यां पाक । गृह्योक्तेन स्थाल्यां कृत पाकभेदे तद्विधान हव्यविधाने ।

स्थालीपुलाक पु॰ स्थालीस्था पुलाकास्तण्डुला यत्र एक धर्मतोद्बोधकत्वेन अच् । मीमांसकोक्ते "स्थालीस्थास्तण्डु- लायते यथे विक्लित्तिभागिन । समकालाग्निसंयोगभागि- त्वात् प्रतिपद्यत ' इत्यनुमानकल्पके न्यायभेदे यथा एकस्य पाकदर्शनेन अन्येषां पाकज्ञानम् एव एकरूपाणां सर्वेषां मेकधर्माक्रान्तत्वमित्येवद्बोधोद्भावनम् । [साधने द्रव्यभेदे ।

स्थालीहन्त पु॰ स्थालीं-हन । यत्रपात्राकारे स्थालीनिर्माण

स्थावर त्रि॰ स्था-वरच् । अचलत्वे स्थिरे, वृक्षादौ, भूम्यादौ च "स्थावर जङ्गमञ्चैव यद्यपि स्वयमर्जितमिति ' स्मृति । पर्वते पु । धनुर्गुणे न॰ । [पत्रमे भवतीति हव्यविधाने ।

स्थाविर न॰ स्थविरस्य भाव अण् । वृद्धत्वे तत्र सप्ततिवर्षा-

स्थासक पु॰ स्था-स-स्वार्थादौ कन् । अलङ्कारे, वा चिक्के जलबुद्बुदे च । [भट्टि ।

स्थास्नु त्रि॰ स्था-स्नु । स्थितिशीले, "स्थास्नुरिवाचिरप्रभेति

स्थित त्रि॰ स्था-क्त । स्थिते, ऊर्द्धस्थतया दण्डायमाने "स्थितायां स्थानमाचरेदिति" रघु निश्चिते 'प्रतिज्ञायुक्ते स्थितिशालिनि च । [स्थाने च ।

स्थिति स्त्री॰ स्था-क्तिन् । मर्यादायां, न्याय्यपथावस्थाने,

स्थिर पु॰ स्था-किरच् । पर्वते, देवे वृक्षे, कार्त्तिकेये, शनौ, मोक्षे वृषे, धववृक्षे, ज्योतिषोक्तेषु वृषसिंहवृश्चिककुम्भ राशिषु च । कठिने,निश्चले च त्रि॰ । स्त्री.शमी, काकोल्यां, पृश्निपर्ण्यां, शालपर्ण्यांश्च स्त्री ।

स्थिरगन्ध पु॰ स्थिरोगन्धो यस्य । चम्पकवृक्षे । पाटलाया केतक्याञ्च स्त्री॰ । स्थिरगन्धयुक्ते द्रव्यमात्रे त्रि॰ ।

स्थिरच्छद पु॰ स्थिरच्छदोयस्य । भूर्जपत्रवृक्षे । [दौ च ।

स्थिरच्छाय पु स्थिराच्छाया यस्य । छायाप्रधाने वटा-

स्थिरजिह्व पु॰ स्थिरा अचञ्चला जिह्वा यस्य । मत्स्ये । [मौढ्ये

स्थिरजीविता स्त्री॰ स्थिर जीवित यदुपमं यस्या । शाल्म

स्थिरतर त्रि अतिशयेन स्थिर तरप् । अत्यन्तस्थिरे । ईश्वरे पु ।

स्थिरपत्त्र पु॰ स्थिराणि पत्त्राणि यस्य । हिन्ताले, ।

स्थिरपुष्प पु स्थिर पुष्पमस्य । चम्पकवृक्षे बकुलवृक्षे च ।

स्थिरपुष्पिन् पु स्थिर पुष्पमस्यास्ति इनि । तिलकवृक्षे ।

स्थिरफला स्त्री॰ स्थिरं फल यस्या । कूष्माण्डयाम् ।

स्थिरमति स्त्री॰ स्थिरा-मति । स्थिरचित्ते, स्थिरा मति [illegible] स्थिरबुद्धियुक्ते त्रि॰ अनिकेत । [illegible] इति गीता । [भेदे, चिरस्थायियौवनयुक्ते त्रि

स्थिरयौवन न॰ पु॰ स्थिरयौवनमस्य । विद्याधराणां [illegible]

स्थिररङ्गा स्त्री० स्थिरोरङ्गो रागोयस्याः। नील्याम्।
स्थिररागा स्त्री० स्थिरोरागोरञ्जनं यस्या। दारुहरिद्रायाम्
स्थिरसाधनक पु० स्थिर साधयति ल्यु ततः कन्। सिन्दुवारवृक्षे।
स्थिरसार पु० स्थिर सारोयस्य। (सेगुण) शाकवृक्षे।
स्थिराङ्घ्रिप पु० कर्म्म०। हिन्तालवृक्षे।
स्थिरायुस् पु० स्थिरमायुर्यस्य दीर्घकालस्थायित्वात्। शाल्मलिवृक्षे। चिरजीविनि त्रि०।
स्थुड वरणे तुदा० कुटा० पर० सक० सेट्। स्थुडति अस्थुडीत् तुस्थोड। अयोपदेशत्वान्न ष।
स्थूणा स्त्री० स्था-नक् उदन्तादेशः पृ०। (खुटी) गृहस्तम्भे "स्थूणावशेषं गृहमिति" साहि० लौहप्रतिमायाञ्च।
स्थूरिन् पु० स्था-उरन् किञ्च स्थूरो वृषादिर्भारवाहकः स्थूरोऽस्त्यस्य सादृश्येन इनि। वृषादिवत्पृष्ठेन भारवाहकेऽश्वे। स्थूरस्य भाव अण् स्थौरं तदस्यास्ति इनि। स्थौरीत्यप्यत्र। [स्थूलत्-त।
स्थूल वृंहणे अद० चु० उभ० अक० सेट्। स्थूलयति-ते अतु-
स्थूल त्रि० स्थूल-अच्। पीवरे, (मोटा) कूटे, समूहे च न० पनसे पु०। गजपिप्पल्याम्, एर्वारौ, वृहदेलायाञ्च स्त्री०। स्वार्थे कन्। पीवरे त्रि०। संज्ञायां कन्(उलुखड़) तृणभेदे पु०
स्थूलकङ्गु पु० कर्म०। वरकधान्ये (बोरधान)।
स्थूलकणा स्त्री० कर्म०। स्थूलजीरके वैद्य०। पीनकणवति त्रि०।
स्थूलकण्टक पु० स्थूल कण्टकोऽस्य। जालवर्व्वुरे। संज्ञायां कन् अत इत्त्वम्। शाल्मलीवृक्षे स्त्री०।
स्थूलकण्टा स्त्री० स्थूल. कण्ट कण्टकोऽस्या। वृहत्याम्।
स्थूलकन्द पु० स्थूल कन्दोऽस्य। रक्तलशुने, सूरणे, हस्तिकन्दे, मानके च। [वृहच्चञ्चौ त्रि०।
स्थूलचञ्चु पु० स्थूला चञ्चुरिव शिखाऽस्य। महाचञ्चुशाके।
स्थूलजीरक पु० कर्म०। जीरकभेदे (कालजिरा)।
स्थूलताल पु० कर्म०। हिन्ताले।
स्थूलदण्ड पु० स्थूलोदण्डोऽस्य। देवनले। स्थूलनालोऽप्यत्र।
स्थूलदर्भ पु० स्थूलं दृढं दृभ्यतेऽनेन दृभ-घञ्। मुञ्जे (मुज)।
स्थूलदला स्त्री० स्थूलानि दलानि यस्या। घृतकुमार्य्याम्।
स्थूलनास पु० स्थूला नासाऽस्य। सूकरे, स्थूलनासिकोऽप्यत्र। वृहन्नासावति त्रि०। [स्थूलत्वात्तथात्वम्।
स्थूलपट्ट पु० स्थूलं पट्टं यस्मात्। कार्पासे तत्सूत्रजपट्टस्य
स्थूलपाद पु० स्थूला. पीनाः पादा अस्य न पाद्भावः। गजे श्लीपदरोगे च। [स्त्री०। यवतिक्तायां स्त्री० ङीप्।
स्थूलपुष्प पु० स्थूल पुष्पं यस्य। वकवृक्षे। पर्व्वतजातापराजितायां
स्थूलफल पु० स्थूलं फलमस्य। शाल्मलीवृक्षे। वृहत्फलान्विते त्रि०। शणपुष्प्यां स्त्री० ङीप्। [पृथिव्यादौ भूते।
स्थूलभूत न० कर्म०। वेदान्तोक्ते प्रत्येकमेकात्मकतामापन्ने
स्थूलमरिच न० कर्म०। कक्कोले।
स्थूललक्ष(क्ष्य) त्रि० स्थूल लक्षयति दानाय संकल्पते,स्थूलं लक्ष्यं वाऽस्य। बहुदातरि। [कायाम्।
स्थूलवर्त्मकृत् पु० स्थूलं वर्त्म करोति कृ-क्विप्। आम्लयष्टि
स्थूलवल्कल पु० स्थूलं वल्कलमस्य। रक्तलोध्रे। स्थूलत्वचान्विते त्रि०
स्थूलवृक्षफल पु० स्थूलस्य वृक्षस्येव फलमस्य। स्निग्धपिण्डीतकवृक्षभेदे (मयना)।
स्थूलवैदेही स्त्री० विदेहे भवा अण् कर्म०। गजपिप्पल्याम्।
स्थूलशाटक पु० कर्म०। स्थूलवस्त्रे स्थूलशाटिकादयोप्यत्र स्त्री०।
स्थूलशालि पु० कर्म०। महाशालौ।
स्थूलशीर्षिका स्त्री० स्थूलं शीर्षं यस्याः कप् अत इत्त्वम्। क्षुद्रपिपीलिकायाम्। [लता)।
स्थूलषट्पद पु० षट्पद इव स्थूलः राज०। वरेलायाम् (वो-
स्थूलस्कन्ध पु० स्थूलः स्कन्धोऽस्य। नकुचे।
स्थूलांशा स्त्री० स्थूलः अंशोऽवयवोऽस्याः। गन्धपत्त्रायाम्।
स्थूलाम्र पु० कर्म०। आम्रभेदे।
स्थूलैला स्त्री० कर्म०। वृहदेलायाम्।
स्थूलोच्चय पु० स्थूलानामुपलानामुच्चयोयत्र। गण्डशैले। स्थूलस्य गजस्योच्चयः। गजमध्यगतौ। वरण्डे, गजदन्तच्छिद्रे च।
स्थेय पु० स्थीयते विवादनिर्णायकतयास्मै स्था-यत्। विवादेसंशयनिर्णायके, (जुरी पुरोहिते च। स्थिरे त्रि०।
स्थेयस् त्रि० अतिशयेन स्थिर ईयसु स्थादेश। स्थिरतरे त्रि० स्त्रियां ङीप्। इष्ठन् स्थेष्ठो ऽप्यत्र त्रि०। सान्त्वने न०।
स्थैर्य्य न० स्थिरस्य भाव ष्यञ्। स्थिरतायाम्।
स्थौणेय(क) पु० स्थूणायां तत्समीपे भवः ढक्। ग्रन्थिपर्णनामगन्धद्रव्ये।
स्थौल्य न० स्थूलस्य भावः ष्यञ्। पीवरत्वे।
स्नपन पु० स्ना-णिच्-पुक् ल्युट्। जलादिनाऽभिषेककरणे
स्नव पु० स्नु-अप्। स्रवणे, क्षरणे च।
स्नसा स्त्री० स्नस-अच्। स्नायौ।
स्नातक पु० स्ना-भावे क्त स्नानं वेदाध्ययनानन्तरं समावर्त्तनाङ्ग

स्नान तदस्यास्ति कन् । वेदाध्ययनानन्तर गार्हस्थ्याय व्रत-
समावर्त्तनाङ्गस्नाने ।

स्नातकव्रत न० ६त० । स्नातककर्त्तव्ये स्मृत्युक्ते व्रतभेदे, "अ-
लाभे वेद यथाया स्नातकव्रतमाचरेदिति" स्मृति ।

स्नान न० स्ना-ल्युट । शोधने, अवगाहने मज्जने, च तच्च ।
मन्त्रादि कारणभेदादष्टविध विस्तरो वृहदभिधाने ।

स्नानतृण न स्नानार्थं तृणम् । कुशे ।

स्नानीय त्रि० स्नानाय हितम् छ । स्नानसाधने तैलो-
द्वर्त्तनादौ । [वायुवाहिनाडीभेदे ।

स्नायु स्त्री० स्नाति-शुध्यति दोषोऽनया स्ना उण् । शरीरस्थे

स्निग्ध त्रि० स्निह क्त । स्नेहयुक्ते, वयस्ये, मसृणे, चिक्कणे
च । रक्तैरण्डे सरलद्रुमे च पु० । मक्तमण्डे न० ।
मेदायां स्त्री० ।

स्निग्धतण्डुल पु० कर्म० । षष्टिधान्ये ।

स्निग्धता स्त्री० स्निग्धस्य भाव । स्नेहे,प्रियत्वे च । [हस्ते च ।

स्निग्धदारु पु० स्निग्ध दारु काष्ठमस्य । सरलद्रुमे, देवदारु

स्निग्धपत्रक पु० स्निग्ध पत्रमस्य कप् । करकद्रुमे, गुन्द्रक-
द्रुमे,गर्भरदमे च । बदर्यां, पालक्यां,काश्मर्यांश्च स्त्री० ।

स्निग्धपिण्डीतक पु० कर्म० । मदनवृक्षभेदे, पिण्डीतकभेदे

स्निग्धफला स्त्री स्निग्ध फलमस्या । नाकुल्याम् ।

स्निट स्नेहे चु०उ० सक० सेट् । स्नेटयति असिस्निटत् त ।
अयोपदेशत्वात् च । [भाण्डेऽश्वादौ स्त्री० ।

स्नु पु० सानु+स्नु आदेश स्ना-कु वा । पर्वतस्य समभू-

स्नुक्छद पु० स्नुहाति किरु छदम् स्नुक् सदोऽस्य । क्षीरक-
स्नुहीवृक्षे ।

स्नुत पु० स्नु-क्त । क्षरिते जलादौ ।

स्नुषा स्त्री० स्नु-सक् । पुत्रवध्वाम् स्नुहीवृक्षे च ।

स्नुह्(हा) स्त्री० स्नुह-क्विप् वा टाप् । स्नुहीवृक्षे ।

स्नुहि(ही) स्त्री० स्नुह-इन् वा ङीप् । (मनसासिज्) वृक्षे ।
'स्नुहीविटपभञ्जिता भिति" पुराणम् ।

स्नेह पु० स्निह-घञ् । प्रेमणि, तैलादिरसभेदे,न्यायोक्ते गुण
भेदे च सद्भवात् दाहानुकूलम् ।

स्नेहन न० स्निह-णिच्-ल्युट् । तैलादिमर्द्दने अभ्यङ्गे ।

स्नेहप्रिय पु० स्नेह तैलादि प्रियोऽस्य । प्रदीपे ।

स्नेहभू स्त्री० ६त । स्नेहाश्रये देहस्थे धातुभेदे, श्लेष्मणि च

स्नेहरङ्ग पु० स्नेहेन रज्यते रन्ज-कर्मणि घञ् । तिले ।

स्नेहवत् त्रि० स्नेहोऽस्त्यस्य मतुप् मस्य व । स्नेहयुक्ते स्त्रियां
ङीप् । सा च मेदायां पु० स्त्री ।

स्नेहविद्ध न० स्नेहेन विद्धम् । देवदारुणि । [स्नेहकारणे न० ।

स्नेहबीज पु० स्नेहाय बीजमस्य । प्रियालवृक्षे । ६त० ।

स्नेहाश पु० स्नेहमश्नाति अश-अण् । प्रदीपे ।

स्नेहिन् पु० स्निह-णिनि । वयस्ये मित्रे, स्नेहयुक्ते त्रि० ।
स्त्रियां ङीप् । [स्पन्दिष्ट ।

स्पद ईषत्कम्पे भ्वा० आ० अक० सेट् इदित् । स्पन्दते अ

स्पन्द पु० स्पदि-घञ् । ईषच्चलने, इषत्कम्पे,क्रियाभेदे च । नेत्र-
स्पन्दादौ शुभाशुभविवेचन वृहदभिधाने ।

स्पर्द्ध सङ्घर्षे (पराभिभवेच्छायाम्) भ्वा० आत्म० अक० सेट् ।
स्पर्द्धते अस्पर्द्धिष्ट । [क्षतौ च ।

स्पर्द्धा स्त्री० स्पर्द्ध-अ । सङ्घर्षे पराभिभवेच्छाया, साम्ये,

स्पर्श स्पर्शे, स्नेहे च चु० उ० सक० सेट् । स्पर्शयति ते अप-
स्पर्शत् त ।

स्पर्श पु -स्पर्श-स्पृश-वा अच् घञ् वा । न्यायोक्ते त्वगिन्द्रिय
ग्राह्ये गुणभेदे, स्पर्शने, रोगे, युद्धे, गुप्तचरे, उपतापके च ।
वायौ पु० स्पर्शके त्रि० । स्पृश-णिच् अच् । दाने स्पृशन्ते । वा
कुना जिह्वाग्रादयोऽत्र यत्नादिषु कादिषु मावसानेषु वर्णेषु पु

स्पर्शन न० स्पर्शं स्पृश-वा ल्युट् । स्पर्शे, स्पर्शे च । णिच् ल्युट् ।
स्पर्शने, दाने च । स्पृश-कर्त्तरि ल्यु । वायौ पु० ।

स्पर्शलज्जा स्त्री० स्पर्शमात्रेण लज्जते लज्ज-अच् । लज्जालुवृक्षे

स्पर्शसुखा स्त्री० स्पर्शे सुखा । गतमूल्याम् । [हाप्यत ।

स्पर्शन् त्रि० स्पृश-तृण् । उपतापयितरि । रोगे पु० । अच । स्प-

स्पश ग्रन्थे बाधने च भ्वा० उभ० सक० सेट् । स्पशति-ते अस्प
शीत्-अस्पाशीत् । अस्पशिष्ट । [रपस्पशेति" माघ ।

स्पश पु० स्पश-अच् । चरमाले, युद्धे गूढचरे,च । "राजनीति

स्पष्ट त्रि० स्पश-क्त नि० इड्भाव । व्यक्ते, स्फुटे च ।

स्पृ प्रीतौ अक प्रीणने रक्षणे पालने च सक० स्वा० पर०
अनिट् । स्पृणोति अस्पार्षीत् ।

स्पृक्का स्त्री० स्पृश-क्वन् पृ० शस्य च । शृक्कायाम् ।

स्पृश स्पर्शे तु० पर सक० अनिट् । स्पृशति अस्प्राक्षीत् अ-
स्पार्क्षीत् अस्पृक्षत् । [ङीप् ।

स्पृशी स्त्री० स्पृश-क । सर्पण तिनीवृक्षे । कण्टकार्यां स्त्री०

स्पृष्ट त्रि० स्पृश-क्त । स्पर्शेच । भावे क्त । स्पर्शे न० ।

स्पृष्टास्पृष्ट न स्पृष्टेन सह सम्यक् स्पृष्टम् । परस्परस्पर्शने ।

स्पृष्टास्पृष्टि न स्पृश-भावे-क्त नञ्+स्पृश-क्तिन्, स्पृष्टस्य
अस्पृष्टिश्च द्वयो समाहार । स्पर्शास्पर्शयो । 'नगरे
ग्रामदाहे च स्पृष्टास्पृष्टि न दुष्यतीति स्मृति । [स्पृहणीय

स्पृह इच्छायां अद० चुरा० उभ० सक० सेट् । स्पृहयति-ते अ

**स्पृहणीय** त्रि० स्पृह-अनीयर्। वाञ्छनीये, श्लाघ्ये च "अहो बतासि स्पृहणीयवीर्य्यः" इति कुमारः।

**स्पृहयालु** त्रि० स्पृह-आलुच्। स्पृहाशीले। [कुमार।

**स्पृहा** स्त्री० स्पृह-अङ्। इच्छायाम् "मिथुने स्पृहावतीति"

**स्पृह्य** पु० स्पृह-यत्। मातुलङ्गवृक्षे। वाञ्छनीये त्रि०।

**स्फट** विशीर्णतायाम् अक० भ्वा० पर० सेट्। स्फटति अस्फाटीत्-अस्फटीत्। इदिदयमप्ययमुक्तार्थे स्फण्टति अस्फण्टीत्।

**स्फट** पु० स्त्री० स्फट-अच्। सर्पफणायाम्। [भेदे।

**स्फटि(टी)** स्त्री० स्फट-इन् वा ङीप्। (फट्का। रि)वणिग्द्रव्य

**स्फटि(टी)क** पु० स्फटिरि(टी)व इवार्थे कन्। स्वनामख्याते मणौ स्वार्थेऽण्। स्फाटिकमप्यत्र न०। [स्फाटिकमयपर्व्वते च।

**स्फटिकाचल** पु० स्फटिक इव शुभ्र. अचल.। कैलासपर्व्वते,

**स्फटिकाद्रिभिद्(द)** पु० स्फटिकाद्रिं स्फाटिकपर्व्वतं भिनत्ति सादृश्यात् भिद-क्विप् क वा। कर्पूरे।

**स्फटिकाभ्र** पु० स्फाटिकवर्णः अभ्र इव। कर्पूरे।

**स्फटिकारि** पु० ६त०। (फट्किरि) वणिग्द्रव्यभेदे तस्य स्फटिकतुल्यटीभिमत्त्वात्तथात्वम्। [अति-ते अपस्फण्डत्-त।

**स्फड** परिहासे चु० उभ० अक० सेट् इदित्। स्फण्ड-

**स्फर** चले स्फूर्त्तौ च तुदा० प० अक० सेट्। स्फरति अस्फारीत्।

**स्फरण** न० स्फर-ल्युट्। स्फुरणे। [लीत्

**स्फल** चले स्फूर्त्तौ च तुदा० पर० अक० सेट्। स्फलति अस्फा-

**स्फटिकोपल** पु० स्फटिकमेव अश्म कर्म्म०। स्फटिके।

**स्फाति** स्त्री० स्फाय-क्तिन्। वृद्धौ।

**स्फाय** वृद्धौ भ्वा० आ० अक० सेट्। स्फायते अस्फायि-अस्फायिष्ट। निष्ठायामनिट् स्फीत.। [त्रि०।

**स्फार** पु० स्फाय-रक्। स्वर्णवुद्बुदे। विपुले, विकटे, प्रचुरे च

**स्फारण** न० स्फुर-णिच्-स्फारादेश. ल्युट्। विकाशने।

**स्फाल** पु० स्फल-घञ्। स्फूर्त्तौ। [कट्फले।

**स्फिग्घातन** पु० स्फिचं घातयति हन-स्वार्थे णिच्-ल्यु।

**स्फिच्** स्त्री० स्फाय-डिच्। कटिप्रोथे,तत्स्थे वातजे रोगभेदे च

**स्फिट** हतौ हिंसे अनादरे च चु० उभ० सक० सेट्। स्फेटयति ते अपिस्फिटत् त।

**स्फिर** त्रि० स्फाय-किरच्। प्रचुरे, वृद्धे च।

**स्फीत** त्रि० स्फाय-क्त स्फीभाव। वृद्धे-समृद्धे च।

**स्फुट** भेदे चु० उभ० सक० सेट्। स्फोटयति ते अपुस्फुटत् त।

**स्फुट** विकाशे भ्वा० प० अक० सेट्। स्फोटति अस्फुटत् अस्फोटीत्। [पुस्फोट।

**स्फुट** विकाशे तु० कुटा० प० अक० सेट्। स्फुटति अस्फुटीत्

**स्फुट** विदलने भ्वा० आत्म० अक० सेट्। स्फोटते अस्फोटिष्ट

**स्फुट** स्रावे चुरा० उभ० अक० सेट्। इदित् स्फुण्टयति ते अपुस्फुण्टत् त।

**स्फुट** हिंसे चु० उभ० सक० सेट् प्रायेणाङ् पूर्व्व। आस्फोटयति ते आपुस्फुटत् त। [अपुस्फुटत् त।

**स्फुट** विकाशे अद० चु० उभ० सक० सेट्। स्फुटयति ते

**स्फुट** त्रि० स्फुट-क। विकशिते, व्यक्ते, भिन्ने, शुक्ले च। ज्योतिषोक्तेषु मेषादिराशिषु अशविशेषस्थितेषु सूर्य्यादिग्रहेषु पु० तेषां तत्तदंशकलादिषु गतौ स्त्री०। तत् प्रैचाया द्योतने न०। सर्पफणायां स्त्री०।

**स्फुटन** न० स्फुट-ल्युट्। विकशने, विदलीभावे च,

**स्फुटबन्धनी** स्त्री० स्फुटं बन्धनं यस्याः गौ० ङीप्। कपोतपद्याम्

**स्फुटित** त्रि० स्फुट-क्त। विकशिते, भिन्ने "दग्धे वा स्फुटितेऽथ वेति" पुराणम् व्यक्तीकृते, परिहासिते च।

**स्फुटि(टी)** स्त्री० स्फुट-इन् वा ङीप्। पादस्फोटरोगे (फोड़ा) कर्कटीफले च। (फुटि)। [इत् त।

**स्फुट्ट** अनादरे चु० उ० सक० सेट्। स्फुट्टयति ते अपुस्फु-

**स्फुड़** वरणे तु० कु० पर० सक० सेट्। स्फुडति अस्फुडीत् पुस्फोड़। [अस्फुडिष्ट।

**स्फुड** विकाशे भ्वा० आत्म० अक० सेट् इदित्। स्फुण्डते

**स्फुड** परिहासे चु० उ० सक० सेट् इदित्। स्फुण्डयति ते अपुस्फुण्डत् त।

**स्फुर** स्फूर्त्तौ तु० कुटा० प० अक० सेट्। स्फुरति अस्फुरीत् पुस्फोर। "चारु पुस्फोर वाङ्करिति" भट्टि.।

**स्फुरण** न० स्फुर-ल्युट्। ईषत्सन्दने। युच्। तत्रैव स्त्री०।

**स्फुर्च्छ** विस्मरणे भ्वा० प० सक० सेट्। स्फूर्च्छति अस्फूर्च्छीत्

**स्फुर्ज** वज्रशब्दे भ्वा० प० अक० सेट्। स्फूर्जति अस्फूर्जीत्।

**स्फुल** स्फूर्त्तौ-चले च अक० सञ्चये सक० तुदा० कुटा०प० सेट् स्फुलति अस्फुलीत्। पुस्फोल।

**स्फुल** न० स्फुल-क। वस्त्रागारे (ताँबु)।

**स्फुलन** न० स्फुल-ल्युट्। स्फुरणे।

**स्फुलिङ्ग** पु० स्त्री० स्फुल-इङ्गच्, स्फुतृइतव्यक्त शब्दो लिङ्गति गच्छति यस्मात् लिगि-घञ् ष्ठ० वा। अग्निकणे।

**स्फुलिङ्गिनी** स्त्री० स्फुलिङ्ग+अस्त्यर्थे इनि। अग्निज्वालायाम्। स्फुलिङ्गयुक्ते त्रि०।

**स्फूर्जथु** पु० स्फुर्ज-अथु। वज्रपातशब्दे। [प्रतिभायाञ्च।

**स्फूर्त्ति** स्त्री० स्फुर्च्छ-स्फुर-वा क्तिन्। स्फुरणे विकशने

**स्फूर्त्तिमत्** पु० स्फूर्त्तिरस्त्यस्य मतुप्। पाशुपताख्ये शैवभेदे

प्रतिभायुक्ते विकाशयुक्ते च त्रि० ।

**स्फेयस्** त्रि० अतिशयेन स्फिर, ईयसु स्फादेश । अति-प्रचुरे, स्त्रियां ङीप् । इष्ठन् । स्फेष्ठोऽप्यत्र त्रि० ।

**स्फोट** पु स्फुटत्यर्थो यस्मात् स्फुट-घञ् । व्याकरणोक्ते वर्णातिरिक्ते पूर्वपूर्ववर्णानुभवसहितचरमवर्णव्यङ्ग्ये अर्थप्रत्यायके अखण्डे शब्दभेदे "शृणोति य इमं स्फोटमिति" भागवतम् । "न स्फोट प्रतीत्यप्रतीतिभ्यामिति शारीरकसूत्रम् यथा च वर्णसमुदायानां नार्थबोधकत्वं तथा प्रपञ्चितमस्माभि, शब्दार्थरत्ने । व्रणभेदे च (फोड़ा) ।

**स्फोटक** पु० स्फुट-ण्वुल् । (फोड़ा) व्रणभेदे विदारके च ।

**स्फोटन** न० स्फुट-ल्युट् । विदारणे, विकाशने च ।

**स्फोटनी** स्त्री० स्फुट्यतेऽनया स्फुट-ल्युट् ङीप् । मणिवेधनकरणे यन्त्रभेदे (भोमरी) । [कन् । भल्लातके ।

**स्फोटबीजक** पु० स्फोटस्य व्रणभेदस्य बीजम् तत स्वार्थे

**स्फोटायन** पु० स्फोट एवायनं अर्थबोधकतयाश्रयणं यस्य । अर्थबोधकत्वेन स्फोटाभ्युपगन्तरि वैयाकरणे मुनिभेदे "अवङ् स्फोटायनस्येति" पाणिनि ।

**स्म** न० स्मा-य यत् नि० । खड्गाकारे यज्ञार्थे काष्ठभेदे ।

**स्म** अव्य० स्मि-ड । अतीते, पादपूरणे च ।

**स्मय** पु० स्मि-अच् । गर्वे, अद्भुते च ।

**स्मर** पु० स्मरति प्रियमनेन स्मृ-अच् । कामदेवे । भावे अप् । स्मरणे । [बोध्यम ।

**स्मरगृह** न० स्मरस्य गृहमिव । स्त्रीचिह्नभेदे स्मरमन्दिरादि-

**स्मरण** न० स्मृ-ल्युट् । ज्ञातवस्तुनोऽनुभवाधीनसंस्कारजन्ये उद्बोधकसहकारेण जायमाने ज्ञानभेदे आध्याने चिन्तने च ।

**स्मरदशा** स्त्री० स्मरजाता दशा । कामिनां स्मरजातासु नयनप्रीत्यादिषु दशसु दशासु । विस्तरोऽस्मदभिधाने ।

**स्मरप्रिया** स्त्री० ६त० । स्मरभार्यायां रतौ ।

**स्मरवीथिका** स्त्री० स्मरस्य वीथिकेव प्राप्तिहेतुत्वात् वेश्यायाम्

**स्मरहर** पु स्मरं हरति नाशयति हृ-अच् । महादेवे स्मरहर्षादयोऽप्यत्र । [न हि स्त्रीणां स्मरोद्दीपनम् ।

**स्मराङ्कुश** पु० स्मरस्याङ्कुश इव उत्तेजकत्वात् । नखे, नखाघाते-

**स्मराम्र** पु० स्मरप्रिय आम्र । राजाम्रे ।

**स्मरासव** पु० स्मरोद्दीपक आसव । लालायाम् कामिना तत्पाने हि स्मरोद्दीपनात्तस्य तथात्वम् ।

**स्मार्त्त** त्रि० स्मृतौ विहित, स्मृतिं वेत्त्यधीते वा अण् । स्मृतिविहिते श्राद्धादौ "स्मार्त्तोऽपि स्मार्त्तमाचरेदिति" स्मार्त्तं वैदिकवत् चरेदिति" च स्मृति स्मृतिशास्त्राभिज्ञे च ।

**स्मि** अनादरे विस्मये च चु० आ० सक० सेट् । स्माययते असिस्मयत । अमोपदेशत्वात् न ण । अन्यतोविस्मये स्माययती त्येव । अय भ्वादिरपि अनिट् । स्मयते अस्मेष्ट ।

**स्मिट** अनादरे सक० स्नेहे अक० चु० उभ० सेट् । स्मेटयति ते असिस्मिटत् त ।

**स्मित** न० स्मि-क्त । ईषद्धासे "मुखं विकसितस्मितमिति मालतीमाधवम् । विकसिते, विस्मिते च त्रि० ।

**स्मील** निमेषणे भ्वा० पर० अक० सेट् । स्मीलति अस्मीलीत्

**स्मृ** स्मरणे भ्वा० प० सक० अनिट् । स्मरति अस्मार्षीत् ।

**स्मृ** औत्सुक्ये भ्वा० प० सक० अनिट् घटा० । स्मरति अस्मार्षीत्

**स्मृत** त्रि० स्मृ-क्त । ज्ञातस्मरणे स्मृतिविषये ।

**स्मृति** स्त्री० स्मृ-क्तिन् । अनुभूतवस्तुनउद्बोधकसहकारेण संस्काराधीने ज्ञानभेदे । स्मर्यते वेदधर्मोऽनेन करणे क्तिन् । धर्मशासनशास्त्रे वेदार्थानुभवजन्ये वेदार्थानुवादके मुनिप्रणीते वाक्यरूपे शास्त्रे । "वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदा मिति" मनु ।

**स्मृतिहेतु** पु० ६त० । संस्कारे वासनारूपे गुणभेदे ।

**स्मेर** त्रि० स्मि-रन् । विकशिते ईषद्धासान्विते च "महाजनः स्मेरमुखोभविष्यतीति" कुमार । [अस्यन्त ।

**स्यद** पु० स्यन्द्-घञर्थे क । वेगे । [स्यन्दते असदत् अस्यन्दिष्ट

**स्यन्द** स्रवणे भ्वा० आ० लुङि, लृटि, लृङि च उभ० अक० वेट् ।

**स्यन्द** पु० स्यन्द्-घञ् । स्रवणे, प्रस्रवे ।

**स्यन्दन** न० स्यन्द-भावे ल्युट् । स्रवणे । कर्त्तरि ल्यु । जले न० । रथे, तिनिशवृक्षे च पु० । [रथारोहेण योद्धरि ।

**स्यन्दनारोह** पु० स्यन्दनमारोहति युद्धार्थम्, आ+रुह अण् ।

**स्यन्दनि** पु० स्यन्द्-अनि । तिनिशवृक्षे । ङीप् । लालायां स्त्री०

**स्यन्दिन्** त्रि० स्यन्द+णिनि । स्रवविशि । लालायां स्त्री ङीप् ।

**स्यन्न** त्रि स्यन्द-क्त । स्रुते जलादौ । [अस्यमीत् ।

**स्यम** ध्वनने भ्वा० पर अक० सेट् ज्वलादि० घटादि० । स्यमति

**स्यम** वितर्के चु० उ० सक-सेट् । स्यामयति त असिस्यमत् त ।

**स्यम** ध्याने अद० चु० उभ० सक० सेट् । स्यमयति असिस्यमत् त

**स्यमन्तक** पु० स्यम-झच् स्वार्थे कन् । श्रीकृष्णस्य कण्ठस्थे मणिभेदे । तस्य गुणादिकं बृहदभिधाने मस्यते ।

**स्यमीका** स्त्री० स्यम-ईकन् । वल्मीके । काले, मेघे च पु ।

**स्यूत** त्रि० सिव-क्त । सूच्यादिना ग्रथिते वस्त्रादौ । स्यूतरचित माले पु० । ष्ठ० ओतु । स्योतोऽप्यत्र ।

**स्यूति** स्त्री० सिव-क्तिन् । सूच्यादिना वस्त्रादिसीवने ।

स्यून पु० सिव-नक्। सूर्य्ये, किरणे, सूत्र्यादिसूत्रखण्डव-
स्त्रनिर्म्मिते पदार्थे (थुकडी) च।

स्रंसन न० स्रन्स-णिच्-ल्युट्। ऊर्द्ध्वगतस्याधोनयने पातने।
युच्। स्रंसनाप्यत्र स्त्री०।

स्रंसिन् त्रि० स्रन्स-णिनि। अधःपतनशीले। पीलुवृक्षे पु०।

स्रक गतौ भ्वा० आत्म० सक० सेट् इदित्। स्रङ्कते अस्रङ्किष्ट।

स्रग्वत् त्रि० स्रक् माल्यमस्त्यस्य मतुप् मस्य वः कुत्वम्। माल्य-
वति। विनि। स्रग्वीत्यप्यत्र। उभयत्र स्त्रियां ङीप्।

स्रज् स्त्री० सृज्यते सृज-क्विन् नि०। माल्ये।

स्रन्स पतने भ्वा० आत्म० लुङि उ० अक० सेट् क्त्वावेट्। स्रंसते
अस्रसत् अस्रंसिष्ट। ["नास्रसत् करिणां ग्रैवमिति" रघुः।

स्रन्भ प्रमादे भ्वा० आ० अक० सेट् क्त्वावेट्। स्रंभते अस्रंभिष्ट।

स्रम्भ अनवधाने भ्वा० आ० अक० सेट् क्त्वावेट्। स्रम्भते
अस्रम्भिष्ट। [म्भते अस्रभत् अस्रम्भिष्ट।

स्रम्भ विश्वासे भ्वा० आत्म० लुङि उ० सक० सेट् क्त्वावेट्। स्र-

स्र(स्रा)व पु० स्रु-अप् घञ् वा। क्षरणे। कर्त्तरि अच्। निर्झरे

स्रवण न० स्रु-ल्युट्। मूत्रजले, घर्म्मे च। भावे ल्युट्। क्षरणे

स्रवन्ती स्त्री० स्रु-झिच् ङीप्। नद्याम् ओषधिभेदे, गुल्ला
स्थाने च। शतृ। स्रवविशिष्टे त्रि०। स्त्रियां ङीप्।

स्रवा स्त्री० स्रु-अच्। मूर्व्वायाम्।

स्रष्टृ पु० सृज-तृच्। जगत्कर्त्तरि, चतुर्मुखे, शिवे च। सृष्टि-
कर्त्तरि त्रि० स्त्रियां ङीप्।

स्रस्त त्रि० स्रन्स-क्त। च्युते पतिते।

स्रस्तर पु० स्रन्स-तरच् किच्च। आसने।

स्राक् अव्य० स्रु-डाकु। त्वरिते द्रागित्यर्थे। [त्रि०

स्रावक न० स्रावयति स्रु-णिच्-ण्वुल्। मरिचे। [नि स्रावके-

स्रिन्भ हिंसे भ्वा० प० सक० सेट् क्त्वावेट्। स्रिम्भति अस्रिम्भीत्

स्रिभ हिंसे भ्वा० प० सक० सेट् क्त्वावेट्। स्रेभति अस्रेभीत्।

स्रिव शोषे अक० दिवा० प० गतौ सक० सेट् क्त्वावेट्।
स्रीव्यति अस्रेवीत्। [स्रुवत्।

स्रु गतौ सक० क्षरणे अक० भ्वा० प० अनिट्। स्रवति अस्रु।

स्रुग्दारु पु० स्रुचे यज्ञपात्राय दारु यस्य। विकङ्कतवृक्षे।

स्रुघ्न पु० देशभेदे। सोऽस्य निवासः अण्। गौ० ङीष्। सर्जि-
काक्षारे स्त्री० [वाङ्माले यज्ञपात्रभेदे।

स्रुच् स्त्री० स्रु-क्विप् चिट् च। वटपत्राकृतौ विकङ्कतकाष्ठजे

स्रुत त्रि० स्रु-क्त। क्षरिते जलादौ, गते च। हिङ्गुपत्र्यां स्त्री०

स्रुव पु० स्त्री० स्रु-क। खदिरकाष्ठभवे हस्तमिते यज्ञपात्रभेदे।
सल्लक्याम् मूर्व्वायाञ्च स्त्री०।

स्रू स्त्री० स्रु-क्विप् नि०। यज्ञपात्रभेदे। निर्झरे च।

स्रै विकृतौ-भ्वा० पर० अक० अनिट्। स्रायति अस्रासीत्

स्रोत न० स्रु-तन्। स्रोतसि वेगेन स्वतोजलनिःसरणे।

स्रोतस् न० स्रु-तसि। वेगेन स्वतोजलनिःसरणे रेतसि च।

स्रोतस्वत् त्रि० स्रोतोऽस्त्यस्य मतुप् मस्य वः। स्रोतोयुक्ते। नद्यां
स्त्री० ङीप्। [तोयुक्ते त्रि०।

स्रोतस्विनी स्रोतस्+अस्त्यर्थे विनि ङीप्। नद्याम्। स्रो-

स्रोतोञ्जन न० स्रोतसि यमुनास्रोतोजलसन्निकृष्टसौवीर-
देशे भवम् अञ्जनम्। सौवीरदेशजेऽञ्जने।

स्रोतोवहा स्त्री० स्रोतसा वहति सरति वह-अच्। नद्याम्।

स्व न० स्वन-ड। धने, आत्मनि ज्ञातौ च पु०। आत्मीये
त्रि०। आत्मनि आत्मीये, चार्थेऽस्य सर्व्वनामता।

स्वकम्पन पु० स्वेनैव परामृश्यमान एव कम्पते कम्पि-युच्।
वायौ। [स्वदेति" गीता।

स्वकर्म्मन् न० स्वस्य कर्म्म। स्ववर्णोचिते कृत्ये. "स्वकर्म्मनिरतः

स्वकीय त्रि० स्वस्येदम् छ कुक् च। आत्मीये। अत्र नित्यमेव
कुक्, अकुक्युक्तप्रयोगस्तु अपाणिनीय.।

स्वग सर्पणे भ्वा० प० सक० सेट् इदित्। स्वङ्गति अस्वङ्गीत्।

स्वगत त्रि० स्वस्मिन् मनसि आत्मनि वा गतम् गम-क्त।
मनोगते, आत्मगते च। नाटकाभिनये प्रतिपाद्यपुरुषं
वर्ज्जयित्वा रङ्गभूमिस्थसामाजिकजनश्रवणयोग्ये वाक्ये न०।
लक्षणं बृहदभिधाने।

स्वगुप्ता स्त्री० स्वेनैव गुप्ता। शूकशिम्ब्याम्, लज्जालुलतायाञ्च

स्वच्छ त्रि० सुष्ठु अच्छः प्रा०। अतिनिर्म्मले कालुष्यरहिते।
मुक्तायां, स्फटिके च पु०। श्वेतदूर्व्वायाम् स्त्री०।

स्वच्छन्द त्रि० स्वस्य छन्दोऽभिप्राय. स्वमते यस्य। स्वाधीने

स्वच्छपत्र न० स्वच्छं पत्रं यस्य। अभ्रके।

स्वच्छमणि पु० कर्म०। स्फाटिके।

स्वज न० स्वस्मात् देहात् आत्मनो वा जायते। रुधिरे।
पुत्रे पु० कन्यायां स्त्री० आत्मजाते त्रि०। [आत्मसम्बन्धिलोके।

स्वजन पु० स्वस्येव जनो जननमेककुले यस्य। ज्ञातौ। ६त०।

स्वट गतौ संस्कारेऽलङ्कारे च चु० उभ० सक० सेट्। स्वट-
यति-ते असिस्वटत्-त।

स्वतन्त्र त्रि० स्वस्य तन्त्रं वशीकारो यस्य। स्वाधीने अपराधीने

स्वतस् अव्य० स्व+तसिल्। आत्मन इत्यर्थे।

स्वता स्त्री० स्वस्य स्वकीयस्य भाव. तल्। स्वकीयत्वे। "कामं
स्वतां पश्यतीति" शकुन्तला।

स्वत्व न० स्वस्य भाव. त्व। द्रव्यादिषु यथेष्टक्रयविक्रयादिक्रि-

स्वर्गनाथ पु० ६त०। इन्द्रे। स्वर्गपत्यादयोप्यत्र।
स्वर्गवधू स्त्री० ६त०। अप्सरसु।
स्वर्गाचल पु० स्वर्गलोकस्योऽचल। सुमेरुपर्वते। [त्रि०।
स्वर्गिन् पु० स्वर्गोस्यस्य भोग्यत्वेन इनि। देवे। स्वर्गवासिनि
स्वर्गौकस् पु० स्वर्गओको यस्य। देवे।
स्वर्जिक पु० सु+अर्ज्ज–घञ् अस्त्यर्थे ठन्। सर्ज्जिकाक्षारे।
कर्म०। स्वर्जिकाक्षारादयोप्यत्र।
स्वर्ण न० सुष्ठु अर्णो वर्णोयस्य। काञ्चने, धुस्तूरे,नागकेशरे,
गौरवर्णशाके च। [सुवर्णस्य तोले पु०।
स्वर्णकणा न० स्वर्णमिव पीत.कणोऽस्य। कणगुग्गुलौ ६त०'
स्वर्णकाय पु० स्वर्णमिव पीत कायोऽस्य। गरुड़े।
स्वर्णकार पु० स्वर्णं स्वर्णमयमलङ्कारादि करोति कृ–अण्।
(सेकरा)जातिभेदे।
स्वर्णकेतकी स्त्री० स्वर्णमिव पीता केतकी। पीतकेतक्याम्।
स्वर्णक्षीरी स्त्री० स्वर्णमिव पीतं क्षीरं निर्यासोऽस्यस्य अच्
गौ०ङीप्। ओषधिभेदे सा च मालवदेशे जायते। [भेदे।
स्वर्णगैरिक न० स्वर्णमिव पीतं गैरिकम्। (वर्णकमाटि) पदार्थ
स्वर्णग्रीवा स्त्री० नदीभेदेन।
स्वर्णचूड़ पु० स्वर्णमिव पीता चूड़ा यस्य। चापपक्षिणि।
स्वर्णज न०स्वर्णात् जायते जन–ड। वङ्गे। स्वर्णजातमात्रे त्रि०।
स्वर्णजीवन्तीस्त्री० स्वर्णमिव पीता जीवन्ती।पीतपुष्पजीवन्त्याम्
स्वर्णदी स्त्री० स्वर्णं द्यति अपसारयति तुल्यवर्णत्वात् दो–क
गौ० ङीष्। वृश्चिकाल्याम्। ६त०।गङ्गायाम्। [विकङ्कते च।
स्वर्णदीधिति पु० स्वर्णमिव भास्वरा दीधितिरस्य। अग्नौ,त्रि-
स्वर्णद्रु पु० स्वर्णमिव पुष्पादौ पीतो द्रु। आरग्वधे।
स्वर्णपक्ष पु० स्वर्णमिव पीत. पक्षोऽस्य। गरुडे।
स्वर्णपाटक पु० स्वर्णं पाटयति पट–णिच्–ण्वुल्। टङ्कणे।
स्वर्णपुष्प पु० स्वर्णमिव पीत पुष्पमस्य। चम्पके, आरग्वधे,
पु० स्त्री० स्त्रीत्वे ङीष्। सा च स्वर्णकेतक्याञ्च। सातलायाम्
कलिकारौ स्त्री० टाप्। [कदल्याम्।
स्वर्णफला स्त्री० स्वर्णमिव पीत फलमस्या। (चांपाकला) स्वर्ण
स्वर्णभृङ्गार पु० स्वर्णमिव स्वर्णमयो वा भृङ्गार। पीतभृङ्गराजे
स्वर्णमयकलसे च। [उपधातुभेदे।
स्वर्णमाक्षिक न० स्वर्णमिव पीतं माक्षिकम्। स्वनामख्याते
स्वर्णयूथी स्त्री० स्वर्णमिव पीता यूथी। पीतयूथिकायाम्।
स्वर्णलता स्त्री० स्वर्णमिव पीता लता। ज्योतिष्मत्याम्।
स्वर्णवर्णा स्त्री० स्वर्णमिव वर्णोरूपमस्या। हरिद्रायाम्।
स्वर्णवल्कल पु० स्वर्णमिव पीतं वल्कलमस्य। श्योनाकवृक्षे।
स्वर्णशेफालिका स्त्री० स्वर्णमिव पीता शेफालिका।
पीतशेफालिकायाम्। [वर्णदेहे त्रि०।
स्वर्णाङ्ग पु० स्वर्णमिवाङ्ग पत्रपुष्पादि-यस्य। आरग्वधे। पीत-
स्वर्णारि पु० ६ त०। गन्धके तस्य स्वर्णमारकत्वात्तथात्वम्।
स्वर्त्त गतौ सक०दु ःखजीवने अक० चु० उ० सेट्। स्वर्त्तयति ते
असस्वर्त्तत् त। [अस्वर्द्दिष्ट।
स्वर्द्द प्रीतौ अक० प्रीणने लेहनेच सक० भ्वा० आत्म०सेट्। स्वर्द्दते
स्वर्भानव पु० स्वरिव भूमौ भानुर्दीप्तिरस्यस्य अण्। गोमेदमणौ
स्वर्भानु पु० स्व स्वर्गे भानुर्दीप्तिरस्य। राहौ।
स्वर्लोक पु० स्वरेव लोक भुवनम्। स्वर्गे, ६त०। स्वर्गस्थलोके।
स्वर्वापी स्त्री० स्व स्वर्गस्य वापीव। गङ्गायाम्।
स्वर्वेश्या स्त्री० स्व. स्वर्गस्य वेश्या। मेनकाद्यप्सरस्मु।
स्वल्प त्रि० सुष्ठु अल्पम् प्रा०। अल्पत्वे क्षुद्रे।
स्वल्पकेशरिन्पु०स्वल्पः केशरोऽस्यस्य इनि। कोविदारवृक्षे।
स्वल्पपत्रक पु० स्वल्पं पत्त्रमस्य कप्। गौरशाके
स्ववासिनी स्त्री० स्वस्मिन् पित्रालये वसति वस-णिनि। चिरं
पितृगृहादिवासिन्यामूढायामनूढायां वा स्त्रियाम्।
स्वसृ स्त्री० सु+अस-ऋन्। भगिन्याम्।
स्वस्क गतौ चु० उ० सक० सेट्। स्वस्कति ते असस्वस्कत्।
स्वस्ति अव्य० सु-अस–क्तिच्, अस्तीति विभक्तिरूपकम् अव्य
य प्रादि० वा। क्षेमे, आशिषि,पुण्यादौ, स्वीकारसूचने च।
स्वस्तिक पु० न०। स्वस्ति शुभाय क्रितम् ठन्। "स्वस्तिकं प्रा-
ङ्मुख यत् स्यादलिन्दात्तुगतं भवेत्। तत्पार्श्वानुगतौ चान्यौ
तत्पर्यन्तगतोऽपर„इत्युक्तलक्षणे गृहभेदे, सितावरशाके,
आसनवन्धभेदे, तण्डुलचूर्णनिर्म्मिते-त्रिकोणाकारे–द्रव्य-
भेदे च "इतं स्वस्तिकसिन्दूर" मित्यधिवासनद्रव्यज्ञापक-
वाक्यम्'' चतुष्पदे पु०। [पु०। स्वस्तिवादिनि त्रि०।
स्वस्तिमुख पु० स्वस्ति मुखे आदौ यस्य। लेख्ये पत्त्र.दौ। विप्रे
स्वस्तिवाचन न० स्वस्ति शुभस्य विप्रद्वारा वाचनम्। कर्मार-
म्भे विघ्नोपशान्तये ब्राह्मणद्वारा कर्त्तव्यकर्मणां शुभता
वाचने।
स्वस्तिवाचनिक त्रि० स्वस्तिवाचनाय हितं, तत आगतम्,,तत्र-
भव वा ठन्। स्वस्तिवाचनसाधने,तद्दक्षिणादौ,तत्संवन्धिनि च
स्वस्त्ययन न० स्वस्ति शुभस्य.यन लाभोयस्मात्। शुभार्थं
क्रियमाणे वेदादिविहिते यज्ञयागादौ।
स्वस्थ त्रि० स्व परलोके तिष्ठति स्वेन स्वभावेन सुखेन, वा
तिष्ठति स्था–क विसर्गलोप.। स्वभावस्थे, स्वर्गस्थिते, विना
यासेन सुखेनावस्थिते च। "स्वस्था भवन्तु मयि जीवति

धार्त्तराष्ट्रा' इतिवेणीसंहारनाटकम्।

**स्वस्रीय** पु० स्वसुरपत्यम् छ। भागिनेये भागिनेया स्त्री०।

**स्वागत** न० सुखेनागतम् सु+आ+गम्-क्त। सुखेनागमने "स्वागतं स्वानधीकारानिति, कुमार तदस्यास्ति अच्। कुशले।

**स्वाच्छन्द्य** न० स्वच्छन्दस्य भावः ष्यञ्। स्वाधीनत्वे, स्वास्थ्ये च।

**स्वातन्त्र्य** न० स्वतन्त्रस्य भावः ष्यञ्। स्वाधीनत्वे परानधीनत्वे।

**स्वाति(ती)** पु० स्त्री० स्वेनैव अतति अत इन् स्त्रीत्वपक्षे वा ङीप्। अश्विन्यादिषु पञ्चदशे नक्षत्रे, सूर्य्यपत्नीभेदे च।

**स्वाद** प्रीतौ अक० भोजने छेदने च सक० भ्वा० आ० सेट्। स्वादते अस्वादिष्ट। [ने च।

**स्वाद** पु स्वद-स्वाद-वा घञ्। रसानुभवे प्रीतौ भोजने,छेद-

**स्वादु** पु० स्वद-उण्। मधुररसे, गुडे, जीवकौषधौ च। इष्टे, मधुरे, मनोज्ञे च त्रि स्त्रियां वा ङीप्।

**स्वादुकण्टक** पु० स्वादुः कण्टकोऽस्य। विकङ्कतवृक्षे।

**स्वादुकन्दा** स्त्री०स्वादुः कन्दोऽस्याः। विदार्य्याम्। [न्याम्।

**स्वादुका** स्त्री० स्वादुना मधुररसेन कायति कै-क। नागद-

**स्वादुखण्ड** पु० स्वादुः इष्टः खण्डोऽस्य। गुडे कर्म०। मधुरे भागे। [कुष्माण्डाञ्च।

**स्वादुगन्धा** स्त्री० स्वादुरिष्टः गन्धोऽस्याः। रक्तशोभाञ्जने, भूमि

**स्वादुपर्णी** स्त्री० स्वादूनि पर्णान्यस्याः ङीप्। दुग्धिकायाम्

**स्वादुपाका** स्त्री० स्वादुः पाकोऽस्याः। काकमाच्याम्।

**स्वादुपिण्डी** स्त्री स्वादुः पिण्डः पिण्डाकारफलमस्याः। पि-ण्डखर्ज्जूर्य्याम्। [फले न०।

**स्वादुफल** स्त्री० स्वादु फलमस्य। कोविदार्य्याम् कर्म०। मिष्ट-

**स्वादुमज्जन्** पु० स्वादुः मज्जाऽस्य। पर्वतजे पीलौ।

**स्वादुमांसी** स्त्री० स्वादु मांसमिव फलमस्याः। काकोल्याम्।

**स्वादुमूल** न० स्वादु मूलमस्य। गर्जरे (गाजर)।

**स्वादुरसा** स्त्री० स्वादुः रसोऽस्याः। काकोल्याम् मदिरायाम् शतावर्य्याम्, द्राक्षायाम् आम्रातके च।

**स्वादुलता** स्त्री० स्वाद्वी लता। विदार्य्याम्।

**स्वाद्वम्ल** पु० स्वादुः अम्लः। दाडिमे। [नभर्हकादयोऽप्यत्र।

**स्वाधीन** त्रि स्व आधीनः। स्वः वशे स्वतन्त्रे। [भेदे स्वाधी-

**स्वाधीनपतिका** स्त्री० स्वाधीनः पतिर्यस्याः कप्। नायिका

**स्वाध्याय** पु० स्व शब्देन वेदविहित अध्यायः इङ्गाध्ययने अधि +इङ्-कर्म्मणि घञ्। द्विजे पठ्ये वेदभागभेदे' स्वाध्या योऽध्येतव्य इति श्रुतिः। भावे घञ्। वेदाध्ययने अध्य-यने स्वाध्यायोपपरामुक्तो वेदाध्ययनकर्म्मणीति क्वचित्।

**स्वान्त** न० स्वन-क्त। मनसि-गह्वरे च,।

**स्वाप** पु० स्वप-घञ्। निद्रायाम् शयने, अज्ञाने च।

**स्वापतेय** न० स्वस्य धनस्य पतिः तस्येदम् ढञ्। धने।

**स्वाभाविक** त्रि० स्वभावादागतः ठञ्। स्वभावसिद्धे, स्त्रियां ङीप् ("स्वाभाविकी स्वच्छतेत्युद्भट )

**स्वामिन्** त्रि स्व+अस्त्यर्थे मिनि दीर्घश्च। अधिपतौ, ईश्वरे च। स्त्रियां ङीप्। हरे,विभौ नृपे कार्त्तिकेये, भर्त्तरि, वात्स्यायनमुनौ, गरुडे, परमहंसे च पु०।

**स्वायम्भुव** पु० स्वयम्भुवोऽपत्यं, तस्येदम् वा अण् ओरोदिति वक्तव्ये ओर्गुण इति सञ्ज्ञापूर्वकविधानादनित्यत्वान्न गुण उवङ्। स्वयम्भूपुत्रे प्रथमे मनौ, स्वयम्भूसम्बन्धिनि त्रि० "धाम स्वायम्भुवं ययुरिति" कुमार। स्त्रियां ङीप्। सा च ब्राह्मयाञ्च। [क्तौ मनुपत्न्यां।

**स्वार्थिक** त्रि० स्वार्थे विहितः ठण्। स्वार्थविहिते व्याकरणो-

**स्वाराज्** पु० स्वः स्वर्गे राजते राज-क्विप्। इन्द्रे। [क्ते च।

**स्वाराज्य** न० स्वराजः स्वाराजो वा भावः ष्यञ्। ब्रह्मत्वे, इन्द्र-

**स्वारोचिष** पु० द्वितीये मनौ।"स्वारोचिषेऽन्तरे प्राप्ते इति चण्डी।

**स्वार्थ** पु स्वस्य अर्थः प्रयोजनम् अभिधेयो वा। स्वप्रयोजने स्वाभिधेये च "सार्थकः स्वार्थबोधकत्वादिति" शब्दशक्ति

**स्वास्थ्य** न० स्वस्थस्य भावः ष्यञ्। आरोग्ये, सन्तोषे, सुखे च।

**स्वाहा** अव्य० सु+आ+ह्वे-डा नि। देवोद्देशेन हवि-स्त्यागे। अग्निभार्य्यायां "स्वाहयेव हविर्भुजमिति' रघु मातृकाभेदे च स्त्री० "नमः स्वधायै स्वाहायै"इति पितृगाथा।

**स्वाहाप्रिय** पु ६त०। अग्नौ। स्वाहापत्यादयोऽप्यत्र। [देवे।

**स्वाहाभुज्** पु० स्वाहेतिमन्त्रेण यस्य दत्तं भुङ्क्ते भुज क्विप्।

**स्विद्** अव्य० स्विद्-क्विप्। प्रश्ने, वितर्के पादपूरणे च।

**स्विन्न** त्रि० स्विद-क्त। घर्मयुक्ते प्रस्वेदान्विते च। [पक्वीकारे,

**स्वीकार** पु० अस्वस्य स्वस्य करणं स्व+च्वि+कृ-घञ्।

**स्वीय** त्रि० स्वस्येदम् छ स्वपादिभ्योऽदरन्न न कुगिति भण्यते। स्वसम्बन्धिनि। नायिकाभेदे स्त्री०।

**स्वुर्च्छ** विस्मृतौ भ्वा० प० सक० सेट्। स्वूर्च्छति अस्वूर्च्छीत्।

**स्वृ** शब्दे अक० उपतापे सक० भ्वा० प० वेट्। स्वरति अस्वा-रीत् अस्वारीत्।

**स्वॄ** हिंसने क्र्या० वा प० सक० सेट्। स्वृणाति अस्वारीत्।

**स्वेक** गतौ भ्वादि० आत्म० सक० सेट् चङि न ह्रस्वः। ऐदित् अस्वेकिष्ट।

**स्वेच्छा** स्त्री० स्वस्येच्छा। स्वाभिलाषे।

**स्वेच्छामृत्यु** पु० स्वेच्छया मृत्युर्यस्य। भीष्मे स्वेच्छाधीन मृत्युयुक्ते त्रि०।

**स्वेद** पु० स्विद-स्विद-वा,घञ्। पाकभेदे (सेका) घर्मे गात्रादितो जलादे निस्यन्दने। [स्वेदजातमात्रे त्रि०।

**स्वेदज** पु० स्वेदाज्जायते जन-ड। स्वेदजाते दंशादिजन्तौ।

**स्वेदन** न० स्विद-णिच्-ल्युट्। गात्रादितो घर्मादेर्निःसारणव्यापारे। (भापरा)।

**स्वेदनी** स्त्री० स्विद्यते पच्यतेऽनया स्विद-ल्युट्। लौहपात्रभेदे (तावोया) संज्ञायां कन् टापित्त्वस्य। स्वेदनिका। कन्दुरूपे पात्रे भर्ज्जनपात्रे स्त्री०। [च त्रि०।

**स्वैर** न० स्वस्य ईरम् ईर-अच् वृद्धि। स्वेच्छायाम्। तद्वति मन्दे,

**स्वैरिन्** त्रि० स्वेनैव ईरयितुं शीलमस्य ईर-णिनि वृद्धिः। स्वेच्छाचारिणि स्वतन्त्रे। व्यभिचारिस्त्रिया स्त्री० ङीप्

**स्वोपार्ज्जित** त्रि० स्वेन उपार्जितम्। स्वयमर्ज्जिते धनादौ।

## ह

**ह** अव्य० हा-ड। पादपूरणे, सम्बोधने, नियोगे, क्षेपे, निग्रहे, प्रसिद्धौ च,। शिवे, जले, शून्ये, मङ्गले, आकाशे, रक्ते, स्वर्गे, पापहरणे, चन्द्रे, सकोपवारणे, शुष्के च पु०

**हंस** पु० हस-अच्-पृ०। स्वनामख्याते पक्षिभेदे, निर्लोभनृपे, विष्णौ, सूर्य्ये, परमात्मनि, "हंसं तनौ सन्निहितं चरन्तमिति" नैषधम्। मत्सरे, यतिभेदे, मन्त्रभेदे० देहस्थवायुचेष्टाभेदे, अश्वभेदे, सुमेरुपर्व्वते, शिवे, अग्रस्थिते, श्रेष्ठे, विशुद्धे, अजपामन्त्ररूपे वर्णे च "हंकारेण बहिर्याति सकारेण विशेत्पुन, हंसेति सततं मन्त्रं जीवो जपति सर्व्वदेति" तन्त्रम्। [नूपुरादौ

**हंसक** पु० हंसइव कायति शब्दायते कै-क। पादकटके

**हंसगामिनी** स्त्री० हंसइव मन्दं गच्छति गम-णिनि। मन्दगामिन्यांस्त्रियाम्। हंसेन गच्छति णिनि ङीप्। ब्रह्माण्याम्

**हंसनादिनी** स्त्री० "गजेन्द्रगमना तन्वी कोकिलालापसंयुता। नितम्बे गुर्व्विणी या स्यात् सा स्मृता हंसनादिनी" युक्तलक्षणायां नार्य्याम्।

**हंसपदी** स्त्री० हंसस्येव पादाः मूलान्यस्याः पाद्भावे स्त्रियां ङीपि पद्भाव। गोधातकीलतायाम्। छन्दोभेदे तु हंसपदा।

**हंसपाद** न० हंसस्य पादः तद्वर्णोऽस्त्यस्य अच्। हिङ्गुले

**हंसमाला** स्त्री०६त०। पङ्क्याकारेण स्थिते हंससमूहे,कादम्बे च

**हंसरथ** पु० हंसः रथोवाहनं यस्य। चतुर्मुखे ब्रह्मणि हंसवाहनादयोऽप्यत्र। [धातौ।

**हंसलोमश** न० हंस इव लोमशं लोमयुक्तम्। कासीसे उप-

**हंसवती** स्त्री० हंसमालाटाकार. अस्त्यस्याः मतुप् मस्य वः। हंसपद्याम्।

**हंसबीज** न० हंसस्य बीजमिव। हंसडिम्बे।

**हंसाङ्घ्रि** पु० हंसस्याङ्घ्रिरिव लोहितत्वात्। हिङ्गुले।

**हंसारूढ** पु० हंसमारूढ आ+रुह-क्त। ब्रह्मणि तच्छक्त्यां ब्रह्माण्यां स्त्री०। [पाठके छन्दोभेदे च।

**हंसी** स्त्री० हंसस्य भार्य्या ङीप्। हंसयोषिति द्वाविंशत्यक्षर

**हंहो** अव्य० हमित्यव्यक्तं जहाति हा-डो। सम्बोधने "हंहो स्निग्धसखचित्तचन्द्रमणयः चन्द्रादति दर्पे, दम्भे, प्रश्ने च।

**हञ्जे(ञ्जा)** अव्य० हमित्यव्यक्तं जायतेऽत्र जन-डे डा वा। नाट्यक्रियायां नटाभिनेयत्वते चेटीसम्बोधने।

**हट** दीप्तौ भ्वा० प० अक० सेट्। हटति अहटीत्-अहाटीत्

**हट्ट** पु० हट-ट टस्य नेत्त्वम्। क्रयविक्रयस्थाने "प्रतिहट्टपथे घरट्टजातिति" नैषधम्। [(हाटचोर) चौरभेदे।

**हट्टचौरक** पु० हट्टे प्रकाशिते स्थाने एव चौरः स्वार्थे कन्।

**हट्टविलासिनी** स्त्री० हट्टं विलासयति वि+लस-णिच्-णिनि ङीप्। गन्धद्रव्यभेदे, हरिद्रायाञ्च।

**हठ** कीलबन्धे बलात्कारे प्लुतौ च, भ्वा० पर० अक० सेट्। हठति। अहाठीत्-अहठीत्।

**हठ** पु० हठ-अच्। बलात्कारे, प्रसभार्थे च।

**हठपर्णी** स्त्री० हठते प्लवते हठ-अच् हठ प्लवमानं पर्णं यस्याः ङीप्। शैवाले, कुम्भिकायाञ्च।

**हठयोग** पु० हठात्कारेण योग.। प्राणायामादिक्रियाभ्यासने राजयोगं विनैव परमात्मसाक्षात्काररूपे चित्तवृत्तिरोधात्मके योगे। [(पाना)।

**हठालु** पु० हठ. प्लवमानं आलुरिव। कुम्भिकायाम्।

**हठी** स्त्री० हठ-अच् गौ० ङीष्। वारिपर्ण्याम् (पाना)

**हडि** पु० हठ-इन् पृ०। पशुमारणसाधने काष्ठयन्त्रे(हाड़िकाठ)

**हडिक** पु० हठ-इकक् पृ०। नीचजातिभेदे (हाडि)।

**हड्ड** न० हड-ड डस्य नेत्त्वम् पृ०। अस्थ्नि-(हाड)। संज्ञायां कन्। नीचजातिभेदे (हाडि)।

**हण्डा** स्त्री० हन-डा डस्य नेत्त्वम्। दहति-मृत्पात्रभेदे (हांडा) नाट्योक्तौ नीचसम्बोधने अव्य०।

**हण्डिका** स्त्री० क्षुद्रा हण्डा कन्। क्षुद्रे मृत्पात्रे (हांडि)।

**हण्डे** अव्य० हन-डे डस्य नेत्त्वम्। नाट्योक्तौ नीचसम्बोधने।

**हत** त्रि० हन-क्त। नाशिते, प्रतिहते, प्रतिबद्धे, आशारहिते, गुणिते च। भावे क्त, हनने, गुणने च न०।

**हतक** त्रि० हतइव नष्टप्रायत्वात् कन्। नष्टप्राये (मडा)।

**हताश** त्रि० हता आशा यस्य। आशाशून्ये, वन्ध्ये, निर्दये, पिशुने च। [गुणने च।

**हति** स्त्री० हन-क्तिन्। हनने, मारणे, व्याघाते, अपकर्षे

**हत्या** स्त्री० हन-क्यप्। मारणे, वधे, प्राणवियोगानुकूल व्यापारे "ब्रह्महत्या सुरापानमिति स्मृति।

**हद** विष्ठोत्सर्गे भ्वा० आ० अक० सेट्। हदते अहदिष्ट।

**हन** वधे-गतौ च भ्वा० प० सक० अनिट्। हन्ति अवधीत्। "कुक्षं हन्ति कृशोदरी" त्यादावलङ्कारिकास्तु गतौ निरूढार्थतामाहुः।

**हनन** न० हन-ल्युट्। "स्यात् प्राणविच्छेदकव्यापारो हननं स्मृतम्, मिलिते, व्यापारे गुणने च। [वधे।

**हनीज** पु० हन-इन् ङीप् हन्या जीयते जी-ड। केतकी

**हनु(नू)** पु० स्त्री० हन उन् वा ऊङ्। कपोलद्वयोपरिस्थे मुखभागे, कट्टविलासिन्यां, रोगे, अस्त्रभेदे, मृतौ च स्त्री०।

**हनु(नू)मत्** पु० हनु(नू)+अस्त्यर्थे मतुप्। रामस्य अनुचरे, अञ्जनागर्भजाते पवनतनये वानरभेदे।

**हन्त** अव्य० हन-त। हर्षे, अनुकम्पायां, विषादे आर्त्तौ, वाक्ये सम्भ्रमे वाक्यारम्भे, खेदे, परिच्छेदे, कल्पने च।

**हन्तकार** पु० हन्त हर्षस्य कारः करणं हन्तेत्यस्य कारः उच्चारणम् वा अत्र मञ्। अतिथये देये अन्ने हन्तशब्दप्रयोगे च।

**हन्तृ** त्रि० हन-तृच्। हननकर्त्तरि सततहननानुशीलयितरि च स्त्रियां ङीप्। "महिषासुरहन्त्र्यादेति" पुराणम्।

**हन्न** त्रि० हद-क्त। कृतपुरीषोत्सर्गे।

**हम्** अव्य० हा-डम्। रुषोक्तौ, अनुनये च। [ष्ट। हम्मायत।

**हम्भा(म्मा)** स्त्री० हम्+भा-हम्म-अङ् वा। गवां ध्वनौ

**हम्म** गतौ भ्वा प० सक० सेट्। हम्मति। अहम्मीत्।

**हय** गतौ सक० क्लान्तौ अक० भ्वा प० सेट्। हयति अहयीत्।

**हय** पु० हय-हि-वा अच्। घोटके।

**हयगन्ध** पु हयस्येव गन्धोऽस्य। काचलवणे। अश्वगन्धायाम्, अजमोदायाञ्च स्त्री०।

**हयग्रीव** पु० हयस्येव दीर्घा ग्रीवाऽस्य। विष्णोरवतारभेदे, दैत्यभेदे च, "हयग्रीववधोपेतं तद्वै भागवतं विदुरिति, पुराणम् दुर्गायां स्त्री०। [विष्णौ।

**हयग्रीवहन्** पु० हयग्रीवाख्य दैत्यं हतवान् हन-क्विप्।

**हयन** न हि-ल्युट्। कर्णीरथे। [मायणवर्षम्।

**हयपुच्छी** स्त्री हयस्य पुच्छाकारोऽस्त्यस्याः अच् गौ०ङीप्।

**हयप्रिय** पु० ६त०। यवे, अश्वगन्धायां, खर्जूर्याञ्च स्त्री० अश्वबल्लभे त्रि०। हयेष्टादयोऽप्यत्र। [करवीरे स्तुम। तत्रैव।

**हयमार** पु० हय मारयति विषेबलात् मृ-णिच्-अण्।

**हयमारण** पु० हय मारयति मृ-णिच्-ल्यु। अश्वत्थवृक्षे।

**हयवाहनसङ्कर** पु० हयस्य वाहन चालनं सङ्करोति सम्+कृ-अच्। रक्तकाञ्चने।

**हया** स्त्री० हय हयगन्धोऽस्त्यस्या अच्। अश्वगन्धायाम्।

**हयाध्यक्ष** पु हयेषु तद्रक्षणेषु अध्यक्ष। अश्वरक्षणाधिकृते।

**हयानन्द** पु० हयमानन्दयति आ+नन्द-णिच्-अण्। मुद्गे

**हयारि** पु० ६त०। करवीरे।

**हयाशना** स्त्री० हयैरश्यते अश-ल्युट्। सल्लकीवृक्षे।

**हयोत्तम** पु० हयेषु उत्तम। अश्वरत्ने आजानेयेऽश्वे।

**हर** पु० हृ-अच्। रुद्रे, अग्नौ, गर्द्दभे, विभाजके च, अन्योन्यहाराभिहतौ हरांशा विति,, लीलावती। हृ भावे अप्। हरणे, विभाजने च।

**हरगौरी** स्त्री० हरदेहार्द्धहरा गौरी। अर्द्धनारीश्वररूपे शिवपार्वत्योर्मूर्त्तिभेदे द्वन्द्व०। शिवपार्वत्यो द्वि० व०।

**हरण** न० हृ-भावे ल्युट्। स्थानान्तरकरणे, विभाजने च कर्मणि ल्युट्। यौतुकादौ देये धने।

**हरतेजस्** न ६त०। पारदे शिववीर्य्ये च। हरवीजादयोऽप्यत्र

**हरशेखरा** स्त्री० हरस्य शेखरमाश्रयत्वेनास्त्यस्याः अच्। गङ्गायाम्।

**हरि** पु हृ-इन्। विष्णौ, शिवे सर्पे वानरे भेके चन्द्रे, सूर्य्ये, वायौ, अश्वे यमे हरे, ब्रह्मणि, किरणे, रवसिंहे वयभेदे मयूरे, कोकिले हंसे शुकमक्षिणि भस्तु हरिनामके वाक्यप्रदीयस्य व्याख्याकारके पण्डिते इन्द्रे, पीत पिङ्गलवर्णे, हरिद्वर्णे च। तद्वति त्रि० "हरि विदित्वा हरिभिश्च वाजिभिरि ति रघु।

**हरिकेश** पु० हरि पिङ्गल केशोऽस्य। शिवे शिवभक्तयक्षभेदे च। स एव तत्प्रसादात् काश्यां दण्डपाणित्वमाप्तवान् इति काशीखण्डे स्थितम्। [एकषष्ट्युपुरीभेदे च।

**हरिगृह** न ६त०। हरेर्विष्णुमूर्त्तेर्गृहम्। हरिमूर्त्तिगृहे

**हरिचन्दन** न० हरेरिन्द्रस्य प्रियं चन्दनम् चन्दयति चदि ल्यु ६त वा। देवतरुभेदे। हरेर्विष्णोः प्रियं चन्दनम्। श्वेतचन्दने गोशीर्षनामके मलयैकदेशे-जाते चन्दनभेदे ज्योत्स्नायां, कुङ्कुमे सुन्दराङ्गे च न।

**हरिण** पु हृ-इनन्। स्वनामख्याते पशौ शिवे विष्णौ हंसे, शुक्लवर्णे पाण्डुवर्णे च। तद्वति त्रि।

**हरिणहृदय** पु० हरिणस्येव भीतं हृदयमस्य। भीरौ।

**हरिणाक्षी** स्त्री हरिणस्येवाक्षि यस्याः ६त षच् समा ङीप्। रुद्रविलासिनीनामगन्धद्रव्ये हरिणतुल्यनेत्रवति त्रि० स्त्रियां ङीप्। 'हरिणाक्षि। कटाक्षेण'स्फुटम्।

**हव्य** न० हु-कर्मणि यत् । देवयोग्ये अन्ने हवनीयद्रव्ये त्रि० । भावे यत् होमे न० [सिध्यति सिद्धे अन्ने चरौ ।

**हव्यपाक** पु० हव्याय होमाय पाको यस्य । होमार्थं घृतादि-

**हव्यवाह** पु० हव्यं वहति देवान् वह-अण् । अग्नौ ।

**हव्यवाहन** पु० हव्यं वाहयति वह-णिच्-ल्यु । वह्नौ ।

**हव्याश** पु० हव्यमश्नाति अश-अण् । वह्नौ । ल्यु । हव्याशनो अप्यत्र पु० ।

**हस** हासे भ्वा० प० अक० सेट् सिचि न वृद्धिः । हसति अहसीत् दोषदर्शनपूर्वकहासे तु सकर्मकः 'स्मितावहस्तेन पुरं मघोन इति भट्टिः' ।

**ह(हा)स** पु० हस-अप् घञ् वा । हासे मुखविकाशनभेदे ।

**हसन** न० हस-ल्युट् । प्रीत्यादुत्सकपोलादेर्विकाशने हास्ये ।

**हसन्ती** स्त्री० हस-झ ङीप् । अङ्गारधानिकायां मल्लिकाभेदे, शाकिनीभेदे च । हस-शतृ-ङीप् । हासिनि त्रि० । स्त्रियाम् ङीप् । [विकसिते च ।

**हसित** न० हस-भावे क्त । हास्ये, कर्त्तरि क्त । कृतहास्ये

**हस्त** पु० हस-तन् नट् । देहावयवभेदे (हात) चतुर्विंशत्यङ्गुलपरिमाणे 'यवोदरैरङ्गुलमष्टसंख्यैर्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिरिति' लीलावती । हस्तिशुण्डे च । अश्विन्यादिषु त्रयोदशे नक्षत्रे पु० स्त्री० । 'जाह्नवी हस्तयोगे' इति पुराणम् 'पुष्या हस्ता तथा स्वातिरि'ति ज्योतिषम् ।

**हस्तामलक** न० हस्तस्थितमामलकम् आमलक्याः फलं तदिव वा । करावस्थितामलकफले, तद्वत् अनायासदृश्ये पदार्थे वेदान्तप्रसिद्धग्रन्थभेदे च । करामलकादयोऽप्यत्र ।

**हस्तिक** न० हस्तिनां समूहः कन् । हस्तिसमूहे ।

**हस्तिकर्ण** पु० हस्तिनः कर्ण इव पर्णमस्य अच् । एरण्डवृक्षे, पलाशभेदे, गणदेवताभेदे, हस्तिकन्दे, रक्तैरण्डे च । कन् । किंशुकभेदे । [कन्दभेदे

**हस्तिकन्द** पु० हस्तिनः पदमिव कन्दोऽस्य । स्वनामख्याते

**हस्तिकरञ्ज** पु० हस्तीव महान् करञ्जः । महाकरञ्जे ।

**हस्तिकर्णदल** पु० हस्तिनः कर्ण इव दलमस्य । पलाशभेदे ।

**हस्तिकोलि** पु० हस्तीव कोलिः । बदरीभेदे ।

**हस्तिघोषा** स्त्री० हस्तीव वृहती घोषा । वृहद्घोषायाम् ।

**हस्तिघोषातकी** स्त्री० हस्तीव वृहती घोषातकी । हस्तिघोषायाम्

**हस्तिचारिणी** स्त्री० हस्तीव चरति चर-णिनि । महाकरञ्जे

**हस्तिदन्त** पु० ६त० । करिदन्ते । तदाकारोऽस्त्यस्य अच् । मूलके न० । स्तम्भभित्तिनिखाताग्रे काष्ठनिर्मितकलिकाकारे पदार्थे नागदन्तादयोऽप्यत्र ।

**हस्तिदन्तफला** स्त्री० हस्तिदन्त इव फलमस्याः । पर्वारौ कर्कटीभेदे ।

**हस्तिन्** पु० हस्तः शुण्डादण्डोऽस्त्यस्य । गजे, चन्द्रवंश्ये नृपभेदे च

**हस्तिनख** पु० हस्तिनो नख इव हस्तिना न गम्यते नञ्+गम-ड वा । पुरद्वारस्थे, कूटे, दुर्गद्वारावरोधनार्थं निर्मिते मृत्तिकोद्धृते कूटे सङ्गाटे च ।

**हस्तिनापुर** न० हस्तिना तदाख्यनृपेण चिह्नितं तत्कृतत्वात् पुरम् अलुक्स० । (दिल्ली) पुरभेदे । [स्त्रीभेदे च ।

**हस्तिनी** स्त्री० हस्तिन् योगे ङीप् । करिण्याम् गजयोषिति

**हस्तिप** पु० हस्तिनं पाति पा-क । हस्त्यारोहे । स्वार्थे कन् तत्रैव

**हस्तिपत्त्र** पु० हस्तिकर्ण इव पत्त्रमस्य । हस्तिकन्दवृक्षे ।

**हस्तिपर्णिका** स्त्री० हस्तिकर्ण इव पर्णमस्याः कप् अत इत्वम् । शालकोपातव्याम् ।

**हस्तिपर्णी** स्त्री० हस्तिकर्ण इव पर्णमस्या ङीप् । मोरटा-लतायां, कर्कट्याञ्च । [द्रव्यभेदे च ।

**हस्तिमद** पु० ६त० । करिकरटनिःसृतमदजले । स इव । गन्ध

**हस्तिरोहणक** पु० हस्तीव रोहति ल्यु, कन् । महाकरञ्जे ।

**हस्तिलोध्रक** पु० हस्तीव लोध्रः स्वार्थे कन् । लोध्रभेदे ।

**हस्तिविषाणी** स्त्री० हस्तिविषाणं गजदन्तस्तदाकारः मध्य-भागो (थोड) यस्याः गौ० ङीष् । कदल्याम् ।

**हस्तिशुण्डा(ण्डी)** स्त्री० हस्तिशुण्डस्तदाकारोऽस्त्यस्याः अच् वा गौ० ङीष् । (हातिशुंडा) वृक्षे ।

**हस्तिश्यामाक** पु० हस्तीव स्थूलः श्यामाकः । स्थूलश्यामाके

**हस्ते** अव्य० हस्त+ए । पाणौ इत्यर्थे स्वीकारे च ।

**हस्त्यध्यक्ष** पु० ६त० । गजाध्यक्षे गजरक्षणादौ नियुक्ते च ।

**हस्त्यारोह** पु० हस्तिनमारोहति आ+रुह अण् । हस्तिपके

**हहा** पु० हेति शब्दं जहाति हा-क्विप् । गन्धर्वभेदे ।

**हा** त्यागे जु० प० स० अनिट् । जहाति अहासीत् निष्ठातस्य न.

**हा** गतौ जु० आ० स० अनिट् निष्ठातस्य नः । जिहीते अहास्त

**हा** अव्य० हा-का । विषादे, शोके, पीडायां, कुत्सायाञ्च ।

**हाङ्गर** पु० हा विषादाय पीडायै वा अङ्गं राति रा-क । स्वनामख्याते जलजन्तुभेदे । [निर्मिते त्रि० ।

**हाटक** न० हट-ण्वुल् । देशभेदे । तत्रजे-स्वर्णे, धुस्तूरे च स्वर्ण-

**हान** न० हा भावे क्त । परित्यागे 'हिमहानकृता न कृतेति' भट्टि

**हानि** स्त्री० हा-क्तिन् नि० नि० । क्षतौ अपचये ।

**हायन** पु० स्त्री० अम्बु जहाति हा-ल्यु-नि० । व्रीहौ । भावं जहाति हा-ल्यु नि० । वत्सरे अग्निशिखायां स्त्री० ।

**हार** पु० हृ-कर्मणि घञ् । मुक्तामालाभेदे 'हारो नारोपित

कण्ठे' इति सीतावाक्यम् । हरतीति कर्त्तरि घञ् ण वा । भाजके, 'अन्योन्यहाराभिहतौ हराशी'विति लीलावती ।

**हारक** पु० हृ-ण्वुल् । चौरे, कितवे, गद्यभेदे, भाजकाङ्के च हरणकर्त्तरि त्रि० ।

**हारहूरा** स्त्री० हार इव हरति आस्वादनात् हृ-अण् । कपिलद्राक्षायाम् । [द्राक्षायाम् । मद्ये पु०

**हारहूरा** स्त्री० ह्वे क्विप् हू हारस्य हूः इव राति रा-क ।

**हारावली** स्त्री० हार इवावली । मुक्तावल्यां 'स्फुरद्धारहारावलीति' गङ्गास्तव । पुरुषोत्तमकृते कोषभेदे च ।

**हारि(री)** स्त्री० हृ णिच् इन् वा ङीप् । द्यूतादिभङ्गे तत्पराजये, पथिकसमूहे च ।

**हारिद्र** पु० हरिद्रया रक्त अण् । कदम्बवृक्षे तत्पुष्पस्य पीतप्रायत्वात् तथात्वम् । हरिद्रारक्ते त्रि० ।

**हारिन्** त्रि० हारोऽस्त्यस्य इनि हृ-णिनि वा । हारके, हारविशिष्टे, मनोहारिणि च । 'हारीण्यवलाभा हारीण्यबलाना'मिति भट्टि । [कितवे च ।

**हारीत** पु० हृ णिच्-ईतच् । स्मृतिकर्त्तरि मुनिभेदे । पक्षिभेदे,

**हार्द** न० हृदयस्य कर्म युवा० अण् हृदादेश । स्नेहे, प्रेमणि, हृदि भव विदितो वा अण् । हृदयस्थे, हृदयवेद्ये च त्रि०

**हार्य्य** पु० ह्रियतेऽसौ हृ ण्यत् । बिभीतकवृक्षे । हरणीये त्रि० ।

**हाल** पु० हलोऽस्त्यस्य अण् हल एव वा अण् । बलरामे, हले च

**हाला** स्त्री० हल घञ् । मद्ये, तालध्वजे मद्ये च ।

**हालाहल** पु० न० । हालेन हलति हल-अच् । विषभेदे, कीटभेदे च मद्ये स्त्री० तत्र ङीप् ।

**हालिक** त्रि० हलेन खनति हल ष्ठन् हलस्येदम् वा ठक् ठञ् वा । हलकर्षके हलेन योद्धरि, हलसम्बन्धिनि च ।

**हाव** पु० ह्वे घञ् नि० । आह्वाने, स्त्रीणां शृङ्गारभावजे चेष्टाभेदे च

**हास्तिक** न० हस्तिनां समूह ठञ् । हस्तिसमूहे ।

**हास्तिन** न० हस्तिना नृपेण निर्वृत्तम् नगरम् अण् सयोगान्तादिनो न टिलोपः । हस्तिनापुरे ।

**हास्य** न० हस ण्यत् । हासे, हसने, अलङ्कारोक्ते रसभेदे च ।

**हाहाकार** पु हाहा इत्यस्य कार कृ-घञ् । युद्धशब्दे शोकध्वनौ च

**हि** वर्द्धने गतौ च स्वा० पर० सक० अनिट् । हिनोति अहैषीत् ।

**हि** अव्य० हा हि-वा डि । हेतौ, अवधारणे, विशेषे, प्रश्ने, सम्भ्रमे, हेत्वपदेशे, शोके, असूयायां, श्लोकपूरणे च ।

**हिंसक** पु० हिंस ण्वुल् । व्याघ्रादौ हिंस्रे पशौ, शत्रौ च हिंसाकारके त्रि ।

**हिंसा** स्त्री० हिंस अ । वधे, घातने, चौर्य्यादिकर्मणि च ।

**हिंस्र** त्रि० हिंस-र । हिंसाशीले, घोरे भये, मांसी, काकादन्या, जटामांसी, गवेधुकायां, शिवायाश्च स्त्री० ।

**हिक्क** कूजने भ्वा० उ० अ० सेट् । हिक्कति ते अहिक्कीत् अहिक्किष्ट ।

**हिक्क** हिंसायां चु० आ० सक सेट् । हिक्कयते अजिहिक्कत ।

**हिक्का** स्त्री० हिक्क-अ । रोगभेदे (हेचकी) ।

**हिङ्गु** न० हिम गच्छति गम डु नि० । (हिङ) रामठदेशोद्भवे वृक्षे यस्य निर्यासो हिङ्गुद्रव्यम् । [नाडीहिङ्गौ ।

**हिङ्गुनाडिका** स्त्री० हिङ्गुनो नाडीव इवार्थे कन् ह्रस्व ।

**हिङ्गुनिर्यास** पु० हिङ्गुन इव निर्यासोऽस्य । निम्बवृक्षे, हिं० -हिङ्गुवृक्षनिर्यासे (हिङ) । [वृक्षभेदे स्त्री० ङीप् ।

**हिङ्गुपत्र** पु० हिङ्गुन इव पत्रमस्य । इङ्गुदीवृक्षे । (हिङ्पत्र)

**हिङ्गुपर्णी** स्त्री० हिङ्गुन इव पर्णमस्याः ङीप् । वंशपत्र्याम्

**हिङ्गुल** पु० न० हिङ्गु तद्वर्ण लाति ला-क । रक्तवर्णे वर्णकद्रव्यभेदे, वार्त्ताक्यां, इहलायां स्त्री० ङीप् ।

**हिङ्गुलु** पु० न० हिङ्गु तद्वर्णं लाति ला-डु । (हिङ्गुल) वर्णकद्रव्ये ।

**हिङ्गुशिराटिका** स्त्री० हिङ्गुन इव शिरा पत्रशिरा अटति अट-ण्वुल् अत इत्वम् । वंशपत्र्याम् ।

**हिङ्गूल** न० हिङ्गुल+अ । मधुरमूले । (आलु) ।

**हिज्ज** पु० हिनोति हि क्विप् तथा सन् जायते जन-ड कर्म । हिज्जलवृक्षे । [(हिजल) ।

**हिज्जल** पु० हि क्विप् हित् हितकारि जल यस्य । वृक्षभेदे

**हिड** गतौ भ्रमणे भ्वा० आ० सक० सेट् इदित् । हिण्डते अहिण्डिष्ट

**हिडिम्ब** पु० राक्षसभेदे यश्च भीमेन हत तद्भगिन्यां स्त्री० ।

**हिडिम्बजित्** हिडिम्ब राक्षसभेद जितवान् जि-क्विप् । भीमसेने हिडिम्बयातुप्रभृतयोऽप्यत्र ।

**हिडिम्बापति** पु ६त० । भीमसेने ।

**हिण्डन** न हिडि-ल्युट् । भ्रमणे, रमणे, लेखने च ।

**हिण्डि(ण्डी)र** पु० हिडि-इरन् ईरन् वा । समुद्रफेने वार्त्ताक्यां, पुरुषे रुचके च ।

**हित** त्रि० धा क्त हि क्त वा । गते, पथ्ये इष्टसाधने, मङ्गले च

**हितकारिन्** त्रि० हित करोति कृ णिनि । शुभकारके ।

**हितैषिन्** त्रि० हितमिच्छति इष-णिनि । हितेच्छाकारिणि

**हितोपदेश** पु० हितस्य इष्टसाधनस्य उपदेश । हितार्थे उपदेशे, विष्णुशर्म्मकृते नीतिग्रन्थभेदे च ।

**हिन्ताल** पु० हीनस्तालो यस्मात् पृ० । (हेताल) वृक्षे ।

**हिन्दोल** पु० हिन्दोल+घञ् ष । दोलने, श्रावणशुक्लपक्षविहितदोलनयन्त्रेण भगवतोदोलनरूपे उत्सवभेदे रागभेदे च ।

**हिम** न० हि मक् । आकाशच्युत जलकणे, शीतस्पर्शे,

तद्वति त्रि० स्वल्पैलायां, रेणुकायां, भद्रमुस्तायाम्, नागरमुस्तायां, एलायाञ्च स्त्री०। अग्रहायणपौषमासात्मके ऋतुभेदे, चन्दनवृक्षे, चन्द्रे, कर्पूरे, च पु०।

**हिमक** पु० हिममिव कायति कै-क। विकङ्कतवृक्षे।

**हिमकर** पु०हिमः करः किरणो यस्य हिमं करोति निमित्तत्वात् कृ-अच्। चन्द्रे, कर्पूरे च हिमकिरणादयोप्यत्र।

**हिमगिरि** पु० हिममयो गिरिः हिमप्रधानो वा गिरिः। हिमालयपर्व्वते हिमपर्व्वतादयोप्यत्र।

**हिमतैल** पु० हिमवीर्य्यं तैलम्। कर्पूरजाते तैले।

**हिमदुग्धा** स्त्री० हिमवीर्य्यकरं दुग्धमस्याः। क्षीरिण्याम्।

**हिमदुर्द्दिन** न० हिमहेतुकं दुर्द्दिनम्। हिमपातेन दुःखकरे दिने कुज्झटिकायुक्तदिने।

**हिमद्रुम** पु० हिमप्रधाने जायमानः द्रुमः। निम्बवृक्षे।

**हिमप्रस्थ** पु० हिमः शीतलः प्रस्थो यस्य। हिमालयपर्व्वते

**हिमवत्** पु० हिमानि प्राचुर्य्येण सन्त्यत्र मतुप् मस्य वः। हिमालयपर्व्वते।

**हिमवालुक** पु० हिममयो वालुकेव अंशो यस्य। कर्पूरे।

**हिमसंहति** स्त्री० ६त०। हिमसमूहे हिमेन कृतसङ्घाते (वरफ) पदार्थे च। [वृक्षे

**हिमहासक** पु०हिमं हसति शीतवीर्य्यत्वात् ण्वुल्। हिन्ताल

**हिमांशु** पु० हिमाः अंशवोऽस्य। चन्द्रे, कर्पूरे च।

**हिमांशुभिख्य** न० हिमांशोरिवाभिख्या शोभा यस्य। रौप्ये तस्य अतिशुभ्रत्वात्तथात्वम्।

**हिमागम** पु० हिमस्यागमो यत्र। हेमन्ते अग्रहायणपौषमासात्मके ऋतौ। [पार्व्वत्यां, गङ्गायाञ्च।

**हिमाद्रिजा** स्त्री० हिमाद्रौ जायते जन-ड। क्षीरिण्यां,

**हिमाद्रितनया** स्त्री० ६त०। दुर्गायां हिमाद्रिसुतादयोप्यत्र

**हिमानी** स्त्री० हिमानां संहतिः हिम+ङीप् आनुक् च। हिमसमूहे 'आगता वत जरेव हिमानीत्युद्भटः।

**हिमाराति** पु० ६त०। सूर्य्ये, अर्कवृक्षे, वह्नौ चित्रकवृक्षे च

**हिमालय** पु० हिमानामालयः। हिमवत्पर्व्वते हिमप्रधाने आलयो यस्य। शुक्लखदिरे, भूम्यामलक्याञ्च।

**हिमाल** न० हिमकाले जायते जन-ड। उत्पले।

**हिमावती** स्त्री० हिमं सेवने हिमवीर्य्यं विद्यतेऽस्य मतुप् मस्य व संज्ञायां दीर्घः। स्वर्णक्षीर्य्याम्।

**हिमाश्रया** स्त्री० हिमं हिमवीर्य्यमाश्रयति आ+श्रि-अच्। सहदेवीवन्याम्। [कपिलद्राक्षायाम्।

**हिमोत्तरा** स्त्री०हिममुत्तरं यस्याः सेवने शीतवीर्य्यकरत्वात्।

**हिमोद्भवा** स्त्री०हिमप्रधानस्थाने उद्भवति उद्-भू-अच्। शठ्याम्

**हिरण** न० हृ-ल्युट् नि०। रेतसि, स्वर्णे, वराटके च।

**हिरण्मय** त्रि० हिरण्यात्मकम् मयट् नि०। हिरण्यात्मके स्त्रियां ङीप्। 'हिरण्मयी शाललतेवेति' भट्टिः। नववर्षमध्ये वर्षभेदे न० आदित्यमण्डलस्थे परमब्रह्मणि 'य एष हिरण्मयः पुरुषो दृश्यते हिरण्याक्षः' इति छान्दोग्यम्

**हिरण्य** न० हिरणमेव स्वार्थे यत्। सुवर्णे, धुस्तूरे, रेतसि, द्रव्ये, वराटके, अक्षये, मानभेदे, अकुप्ये, रजते, धने च।

**हिरण्यकशिपु** पु० दैत्यविशेषे। स तु कश्यपात् दित्यां जातः

**हिरण्यकशिपुहन्** पु० हन-क्विप् ६त०। विष्णौ।

**हिरण्यकामधेनु** स्त्री० विधानेन हिरण्यरचिता कामधेनुः। तुलादिषोडशमहादानमध्ये दानार्थं हिरण्येन कल्पितायाम् धेनौ, उपचारात् तद्दाने च।

**हिरण्यगर्भ** पु०हिरण्यं स्वर्णमयाण्डं गर्भं उत्पत्तिस्थानमस्य। चतुर्मुखे ब्रह्मणि तस्य हैमाण्डप्रभवत्वात्तथात्वम् 'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिन् यज्ञे स्वयं ब्रह्मा सर्व्वलोकपितामह इति' मनुः। तुलादिषोडशमहादानमध्ये दानार्थं स्वर्णादिना कल्पिते हिरण्यगर्भे, उपचारात्तद्दाने, शालग्राममूर्त्तिभेदे च।

**हिरण्यवाह(ड)** हिरण्यं वाहयति प्रापयति भक्तान् हिरण्यवर्णो वाडरिव तरङ्गो वा यस्य। महादेवे, शोणे नदभेदे च।

**हिरण्यरेतस्** पु० हिरण्यं रेतो यस्य। वह्नौ, चित्रकवृक्षे च स्वर्णस्य वह्निरेतोभवत्व भारतादावुक्तम्।

**हिरण्याक्ष** पु० कश्यपस्य पुत्रे दैत्यभेदे।

**हिरण्याश्व** पु० हिरण्यनिर्म्मितोऽश्वः। तुलादिषोडशमहादानमध्ये दानार्थं स्वर्णादिकल्पितेऽश्वे, तद्दाने च।

**हिरण्याश्वरथ** पु०हिरण्येन निर्म्मितः अश्वः तद्युक्तरथश्च। तुलादिषोडशमहादानमध्ये दानार्थं स्वर्णादिना कल्पिते सुवर्णमयाश्वयुक्तरथे, तद्दाने च।

**हिरुक्** अव्य० हि-उकिक् रुट् च। वर्ज्जने त्यागे।

**हिल** हावकरणे तु०प०अक०सेट्। हेलति अहेलीत्।

**हिलमोचि(ची)** स्त्री० हिल-क मुच-इनि कर्म० वा ङीप्। (हेलेञ्चा) शाके स्वार्थे कन् तत्रैव। [अजिहिल्लोलत् त।

**हिल्लोल** दोलने अद०चु०उभ०सक०सेट्। हिल्लोलयति ते

**हिल्लोल** पु० हिल्लोल-अच्। तरङ्गे। मज्। दोलने।

**हिव** प्रीणने भ्वा०प०सक०सेट् इदित्। हिन्वति अहिन्वीत्।

**हिवुक** न० हिवि-उकक् नि०। ज्योतिषोक्ते लग्नाच्चतुर्थे स्थाने

**हिस** वधे वा चु०उ०पक्षे भ्वा०प०सक०सेट् इदित्। हिनस्ति हिंसयति ते अहिंसीत अजिहिंसत् त।

**ही** अव्य०हि-डी। विस्मये, दुःखे, विषादे, शोके च। वीप्सायां द्वित्वम्। विषादाद्यतिशये। [व्यवहारे प्रतिवादिभेदे पु०

**हीन** त्रि०प०हा-क्त तस्य न ईत्वम्। ऊने, निन्द्ये, अधमे च।

**हीनवादिन्** पु० कर्म०। 'पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः। वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः' इति स्मृत्युक्ते व्यवहारे वादिभेदे।

**हीनाङ्ग** त्रि० हीनमङ्गं यस्य। स्वभावतो न्यूनाङ्गवति 'हीनाङ्ग विकलाङ्ग चेति स्मृतिः। स्त्रियां वा ङीप् हीना। क्षुद्रभिन्नशाखा।

**हीन्ताल** पु० हीनस्तालो यस्मात् ५ब०। हिन्तालवृक्षे (हेताल)

**हीर** न० हृ क नि०। वज्रे, हीरके च। सिंहे, सर्पे, हारे, शिवे च पु०। वल्लाम पिपीलिकायां काश्मीर्याञ्च स्त्री०। स्वार्थे कन् (हीरा) मणिभेदे।

**हीराङ्ग** पु० हीरमिव दृढमङ्गमस्य। इन्द्रस्य वज्रे।

**हील** न० ह्री विषाय लाति ला क। रेतसि।

**हु** होमे, अदने च जु०प०सक०अनिट्। जुहोति अहौषीत्।

**हुङ्कार** पु० हुमित्यव्यक्तस्य कारः कृ-घञ् उप०। हुमिति अक्षरस्य प्रतिषेधसूचकशब्दस्योच्चारणे। मौनमतः महाकष्ट हुङ्कारेणापि भस्मतीति' पुराणम्।

**हुड** संघातीकरणे सक० मज्जने संघाते च अक०तु० कु०प०सेट्। हुडति अहुडीत् जुहोड। [विहड

**हुड** संघातीकरणे भ्वा० आ० सक० सेट् इदित्। हुण्डते अहु

**हुड** गतौ भ्वा० प्रा० सक०सेट् ऋदित् न हृस्व। होडति अहोडिट। [कोलके च।

**हुड** पु०हुड क। मेषे, चौरनिवारणार्थं भूमौ निखाते लौह

**हुत** त्रि० हु-क्त। देवोद्देशेन मन्त्रद्वाराऽग्नौ प्रक्षिप्ते घृतादौ भावे क्त। होमे न०। [अग्नौ, चित्रकवृक्षे च।

**हुतभुज्** पु० हुत मन्त्रेण प्रक्षिप्तं घृतादि भुङ्क्ते भुज क्विप्।

**हुतवह** पु० हुतं घृतादिकं वहति प्रापयति देवान् प्रीत्यर्थम् वह-अच्। अग्नौ, चित्रकवृक्षे च।

**हुताश** पु० हुतमश्नाति अश अण्। वह्नौ। चित्रकवृक्षे। स्त्र० हुताशनोऽप्यत्र। सप्त कर्मविशेषविहितवह्नौ च।

**हुति** स्त्री० हु-क्तिन्। होमे।

**हुम्** अव्य०हु डुमि। स्मरणे, प्रश्ने, अनुज्ञायां च निवारणे 'गुरुं हुङ्कृत्य तुङ्कृत्य' स्मृतिः।

**हुर्च्छ** कौटिल्ये भ्वा०प०सक०सेट्। हूर्च्छति अहुर्च्छीत्। हूस्वपाठपक्षात् हूर्च्छतीत्यन्ये। [अहोलीत्।

**हुल** हृतौ संवरणे च भ्वा०प०सक०सेट् ज्वला०। होलति

**हुलहुली** स्त्री० हुल-क आभीक्ष्ण्ये द्वित्वम् ङीष्। स्त्रीणां मङ्गलध्वनिभेदे (उलुउलु)।

**हूहू(हू)** हु हु त्रि०। गन्धर्वभेदे पु० हूहूरित्यप्यत्र।

**हुङ्कार** पु हुम्+कृ-घञ्। अव्यक्तहेतुके शब्दभेदे 'हुङ्कारेणैव त भस्म सा चकारात्मिका तत इति चण्डी। [हिंस

**हूड** गतौ भ्वा०प्रा० सक०सेट् ऋदित् न हृस्व। हूडते अहू-

**हूत** त्रि० ह्वे क्त सम्प्रसारणम्। आहूते कृताह्वाने।

**हूति** स्त्री० ह्वे-क्तिन् सम्प्रसारणम्। आह्वाने।

**हूण** पु० ह्वे-नक् सम्प्रसारणम् च। म्लेच्छजातिभेदे, तद्वासस्थानदेशभेदे च 'अनवद्भूतसैव साम्यदेशे कदाचने'ति ज्योतिषम्। तत्र प्रचलिते स्वर्णमुद्राभेदे इत्यन्ये।

**हूम्** अव्य० हु डम्। प्रश्ने, वितर्के, सम्मतौ, क्रोधे, भये, निन्दायाम्, अवज्ञायाञ्च।

**हृल्लेम** न हुल क्लुट्। कौटिल्ये।

**हृ** हरणे भ्वा०उभ०द्विक० अनिट्। हरति ते अहार्षीत् अहृत

**हृ** बलात्कारहरणे जु पर सक०अनिट् वैदिक। जहर्ति अहार्षीत्

**हृच्छय** पु० हृदि शेते शी अच्। कामदेवे। हृदयशायिनि त्रि०

**हृच्छूल** न०हृत। शूलरोगभेदे। [अते मोदयतीति भट्टि।

**हृणी** कण्ड्वा०आत्म०अक०सेट्। हृणीयते अहृणीयत हृणी

**हृणीया** स्त्री० हृणीय अ। निन्दायाम्।

**हृत्कम्प** पु० हृत० भयादिहेतुके हृदयकम्पे।

**हृत** त्रि० हृ क्त। अपहृते, स्थानान्तरं गमिते च।

**हृत्** त्रि हृ क्विप् तुक् च। हारिणि। पु० तस्य द हृदयस्य हृदादेशो वा। हृदये मानसे [illegible] न०।

**हृदय** न० हृ कयन् दुकच। 'मनसि, वक्षसि च। हृत् पतिदश अच्। मरकश्रुत्यपि 'हृदयं तस्माद्धृदयमिति,, श्रुतिः।

**हृदयग्रन्थि** पु० हृदयस्य ग्रन्थिः। अविद्याधनभ्रमदृढे समारम्भे 'भिद्यते हृदयग्रन्थिरि'ति भागवतम्।

**हृदयङ्गम** न हृदयं गच्छति गम खश् मुम् च। युक्तियुक्ते वाक्ये। मनोहरे त्रि० 'हृदयङ्गमपूर्त्तिम्वमि'ति भट्टि।

**हृदयस्थान** न० हृदयस्य मनसः स्थानम् हृदयरूपं वा स्थानम्। वक्ष स्थले। [इति ततैव

**हृदयिक** त्रि० हृदय प्रयस्तमनोऽस्त्यस्य ठन्। प्रसन्नचित्ते।

**हृदयेश** पु०६त०। भर्त्तरि। [रोमस्थे

**हृदावर्त्त** [illegible] हृदिस्य आवर्त्तः। अश्वस्य हृदयस्थे आवर्त्ताकारे

**हृदिका** स्त्री० ह्रीषस्यात्मजस्य, कृपाचार्यस्य मातरि।

हृदिकासुत पु०६त०। द्रोणश्यालके कृपाचार्य्ये।
हृदिस्पृश् त्रि०हृदि हृदये स्पृश्यतेऽसौ कर्मणि क्विन् अलुक्स०। हृद्ये मनोज्ञे। कर्त्तरि क्विन्। मर्मस्पृशि, दुःखदे च।
हृद्गोल पु० पर्व्वतभेदे।
हृद्य न० हृदि स्पृश्यते मनोज्ञत्वात् हृद्+यत्। गुडत्वचि (दारचिनि। मनोज्ञे त्रि० वृद्धिनामौषधौ स्त्री०।
हृद्यगन्ध न० हृद्यो गन्धोऽस्य। क्षुद्रजीरके, बिल्ववृक्षे पु०। जात्या स्त्री०। इत् समा०। हृद्यगन्धीत्यपि क्षुद्रजीरके न०
हृद्रोग पु० ६त० हृदयस्य रोगभेदे,कामे च।
हृद्रोगवैरिन् पु०६त०। अर्जुनवृक्षे।
हृद्वण्टक पु०६त०। हृदयस्य विभाजके, जठरे।
हृल्लास पु० हृदयस्य लासो यत्र हृदादेशः। हिक्कारोगे तेन हि हृदयस्य स्फूर्त्तिरिव भवति।
हृल्लेख पु० हृदयं लिखति स्पृशति लिख-अ हृदादेशः। ज्ञाने, तर्के, तन्त्रोक्ते-मन्त्रभेदे च। औत्सुक्ये स्त्री०।
हृष चित्तोत्साहे भ्वा०पर०अक०सेट्। हर्षति अहर्षीत्।
हृष हर्षे चित्तोत्साहे,दि०प०अ०सेट्। हृष्यति अहृषत् अहर्षीत्
हृष मिथ्याकरणे भ्वा०पर०सक०सेट् क्त्वावेट्। हर्षति अहर्षीत्
हृषित त्रि० हृष-क्त। प्रीते, विस्मिते, प्रहते, प्रणते, वर्म्मिते, जातरोमाञ्चे च।
हृषीक न० हृष-ईकक्। विषयग्राहके-चक्षुरादौ-इन्द्रिये।
हृषीकेश पु०६त०। विष्णौ 'अन्तर्यामिब्राह्मणे तस्य सर्व्वनियन्तृत्वोक्तेः सर्व्वेन्द्रियप्रवर्त्तकत्वादीशत्वम्। [प्रतिहते च।
हृष्ट त्रि० हृष-क्त। प्रीते, जातहर्षे, जातरोमाञ्चे, विस्मिते,
हृष्टमानस त्रि०हृष्टं प्रीतं मानसमस्य। हृष्टचित्ते।
हृष्टरोमन् त्रि० हृष्टमिव जाताङ्कुरं रोम यस्य। जातरोमाञ्चे पुलकिते।
हृष्टि स्त्री० हृष-क्त। आनन्दे, हर्षे, ज्ञाने च।
हे अव्य० हा-डे। सम्बोधने, आह्वाने, असूयादौ च।
हेठ विघाते भ्वा०प०सक०सेट्। हेठति अहेठीत्।
हेठ भूतौ उत्पत्तौ च अक० पवित्रीकरणे सक० क्र्०प० सेट्। हेठति अहेठीत्।
हेठ बाधने भ्वा०आ०सक०सेट् चङि न ह्रस्वः। हेठते अहेठिष्ट
हेठ पु० हेठ-घञ्। बाधायाम्, विघाते च। [डिष्ट।
हेड अनादरे भ्वा०आ०सक०सेट् चङि न ह्रस्वः। हेडते अहे-
हेड वेष्टने भ्वा०प०सक०सेट् घटा०। हेडति अहेडीत्।
हेति स्त्री० हन-करणे क्तिन् नि०। अस्त्रे, अग्निशिखायां, सूर्य्यकिरणे, तेजोमात्रे, साधने च।
हेतु पु० हि-तुन्। कारणे, अनुमितिसाधने-व्याप्ये, फले च।
हेतुता स्त्री० हेतोर्भावः तल्। हेतुत्वे, कार्य्याव्यवहितपूर्व्वक्षणे नियतकार्य्याधिकरणवृत्तित्वरूपे कारणत्वे, शक्तिविशेषे च 'हेतुतामस्मत्याधेति' प्राञ्चः।
हेतुमत् त्रि० हेतुरस्त्यस्य मतुप्। कार्य्ये। स्त्रियां ङीप्।
हेत्वाभास पु० हेतुरिव आभासते आ+भास-अच् हेतोर्वा आभासः आ+भास घञ्। दुष्टे हेतौ, हेतुदोषे च। स च दोष. पञ्चविधः व्यभिचारः, विरुद्धता, असिद्धिः, सत्प्रतिपक्षता, बाधश्च। तादृशदोषेषु सत्सु अनुमितिर्नोदेति एतल्लक्षणोदाहरणादिकं वृहदभिधाने। [बुधे च पु०।
हेम न०हि-मन्। स्वर्णे, धुस्तूरे,माषकपरिमाणे च। कृष्णवर्णाश्वे,
हेमकन्दल पु० हेमवर्णं कन्दं लाति ला-क। प्रवाले।
हेमकान्ति स्त्री० हेम्न इव कान्तिरस्याः। दारुहरिद्रायाम् स्वर्णतुल्यद्युतियुक्ते त्रि० ६त०। स्वर्णस्य दीप्तौ स्त्री०।
हेमकार पु० हेम तन्मयं भूषणं करोति कृ-अण्। स्वर्णकारे वर्णसङ्करभेदे। (सेकरा)
हेमकिञ्जल्क न० हेमेव पीतं किञ्जल्कं यस्य। नागकेशरे।
हेमकूट पु० हेममयः कूटो यस्य। किंपुरुषवर्षस्थे पर्व्वतभेदे।
हेमकेतकी स्त्री० हेमवर्णा केतकी। स्वर्णकेतक्याम्।
हेमक्षीरी स्त्री०हेम इव पीतं क्षीरं यस्याः। स्वर्णक्षीर्य्याम्।
हेमगन्धिनी स्त्री० हेम्नः नागकेशरस्येव गन्धोऽस्त्यस्याः इनि ङीप्। रेणुकाख्ये गन्धद्रव्ये। [त्रि०
हेमगौर पु० हेमेव गौरः पीतः। अशोकवृक्षे, स्वर्णतुल्यपीते
हेमतार न०हेमं तारयति उत्कृष्टं करोति तृ-णिच्-अण्। तुत्थे
हेमदुग्धक पु० हेमवर्णं दुग्धं निर्यासोऽस्य कप्। उडुम्बरे। स्वर्णक्षीर्य्यां स्त्री० वा ङीपि अत इत्त्वम्।
हेमदुग्धिन् पु०हेमवर्णं दुग्धं निर्यासोऽस्त्यस्य इनि। उडुम्बरे
हेमन् न०हि-मनिन्। स्वर्णे-धातौ, धुस्तूरे, नागकेशरे, हिमे च
हेमन्त पु०न०। हि-झ सुट् च। अग्रहायणपौषमासात्मके ऋतौ
हेमन्तनाथ पु० हेमन्ते नाथ्यते याच्यते नाथ-कर्मणि घञ्। कपित्थे। [स्वार्थे कन्। तत्र, लोध्रे च।
हेमपुष्प न० हेमवर्णं पुष्पमस्य। अशोकवृक्षे। चम्पकवृक्षे पु०
हेमपुष्पी स्त्री० हेमवर्णं पुष्पमस्याः ङीप्। मञ्जिष्ठायाम्, स्वर्णजीवन्त्याम्, इन्द्रवारुण्याम्,मुषल्याम्, कण्टकार्य्याञ्च। संज्ञायां कन् ह्रस्वः। स्वर्णयूथिकायाम् स्त्री०।
हेमफला स्त्री०हेमवर्णं फलमस्याः। स्वर्णकदल्याम्(चांपाकला)
हेममालिन् पु० हेमेव किरणानां मालाऽस्त्यस्य इनि। सूर्य्ये
हेमयूथिका स्त्री० हेमवर्णा यूथिका। स्वर्णयूथिकायाम्।

हेमरागिणी स्त्री० हेम्न इव रागोऽस्त्यस्याः इनि ङीप्। हरिद्रायाम्।

हेमलता स्त्री० हेमवर्णा लता। स्वर्णजीवन्त्याम्।

हेमशिखा स्त्री० हेमवर्णा शिखा यस्याः। स्वर्णक्षीर्याम्।

हेमसार न० हेम सारयति निर्मलीकरोति सृ-णिच्-अण्। तुत्थे

हेमहस्तिरथ पु० हेमनिर्मितहस्तियुक्तो रथः। तुलापुरुषादिषोडशमहादानमध्ये दानार्थं कल्पिते स्वर्णमयहस्तियुक्ते रथे, तद्दाने च।

हेमाङ्ग पु० हेमेव पीतमङ्गं यस्य। गरुडे, सिंहे, सुमेरौ, ब्रह्मणि, चम्पकवृक्षे, विष्णौ च। स्वर्णवर्णाङ्गयुक्ते त्रि० हेमतुल्येऽङ्गे न०। [त्रि।

हेमाद्रि पु०हेममयोऽद्रिः। सुमेरौ पर्वते। [हिमसम्बन्धिनि

हेमाद्रिजरण पु० हेमाद्रिं जीर्यति जॄ ल्यु। स्वर्णक्षीर्याम्।

हेय त्रि० हा यत्। त्याज्ये।

हेर न० हि-रन्। हरिद्रायाम्, मुकुटभेदे च।

हेरम्ब पु० हे शिवे रम्बति रबि अच् अलुक् समा०। गणेशे।

हेरम्बजननी स्त्री० ६त०। दुर्गायाम्। [चिकायाम्।

हेलञ्चा स्त्री०हिल वन् हेलं चिनोति चि ड टाप् पृ०। हिलमो

हेलन न हिल-ल्युट्। अवज्ञायाम्।

हेला स्त्री० हेड-अनादरे भावे अ डस्य लः। स्त्रीणां शृङ्गारभावजे 'प्रौढेच्छा याऽतिरूढानां नारीणां सुरतोत्सवे। शृङ्गारशास्त्रतत्त्वज्ञैः हेला सा परिकीर्तिता' इत्युक्ते चेष्टाविशेषे

हेलि पु०हिल इन्। सूर्ये,अर्कवृक्षे च। णिनि। हेलीत्यप्यत्र।

हेष अव्यक्तशब्दे भ्वा आ०अ०सेट् ऋदि न ह्रस्व। हेषते अहेषिष्ट

हेषा स्त्री हेष-अ। घोटकानां शब्दे।

हैहै अव्य० हैच हैच द्व०। सम्बोधने।

हे अव्य० हा कै। सम्बोधने, आह्वाने च।

हैतुक त्रि० हेतौ सक्त ठण्। हेतुवादरते, सयुक्तिकवाक्यवादिनि 'त्रैविद्यो हैतुकस्तर्की निरुक्तो धर्मपाठकः' इति मनुः

हैम त्रि हिमे भवम् अण्। हिमजातमात्रे भूनिम्बे पु० हेम्नो विकारः अण् टिलोप। स्वर्णविकारे स्वर्णमय पदार्थे। [हिमन्ते काले। तत्र जाते त्रि०।

हैमन पु० हेमन्त एव हेमन्ते भवो वा अण् तलोप।

हैमवत न० हिमवतोऽदूरभवो देशः तस्येदं वा अण्। भारतवर्षभेदे हिमालयसम्बन्धिनि त्रि०।विषभेदे पु तस्यापत्यं तत्र भवो वा अण्।पार्वत्यां, हरीतक्यां, स्वर्णक्षीर्यां, श्वेतवचायाञ्च स्त्री० ङीप्। [कायाम्।

हैमा(मी) स्त्री० हेम तद्वर्णोऽस्त्यस्य अण् वा ङीप्। स्वर्णयूथि

हैयङ्गवीन ह्योगोदोहाद्भवम् ह्यस्+गो+ख नि०। नवनीते, पूर्वदिनदुग्धोद्भवे सद्योजाते घृते च।

हैहय पु०देशविशेषे। तेषां राजा अण्। हैहयेश्वरे कार्त्तवीर्ये।

हो अव्य० हे-डो नि०। सम्बोधने।

होड गतौ अनादरे च भ्वा आ०सक०सेट् ऋदि न ह्रस्व। होडते अहोडिष्ट। [(ङडि)चौरचिह्ने च।

होड पु होड-अच् ड्ठ अच् वा। समुद्रगामिनौकाभेदे

होतृ पु० हु तृच्। ऋग्वेदाभिज्ञे। होमकर्त्तरि त्रि० स्त्रियां ङीप् 'या हवि र्या च होत्री'ति शकुन्तला।

होत्र न०हु त्रन्। होमे, हविषि घृतादौ च। स्तुतौ स्त्री०टाप्

होत्रिन् पु होत्र होमोऽस्त्यस्य इनि। होमकर्त्तरि।

होत्रीय न० होत्राय हितम् होतुरिदं वा छ। हविर्गेहे। होतृसम्बन्धिनि त्रि०।

होम पु० हु मन्। देवतोद्देशेन वह्नौ घृतादित्यागरूपे हवने नित्यं गृहस्थकर्त्तव्येषु पञ्चसु यज्ञेषु मध्ये देवयज्ञे, आहीय विभक्तावाहीयापभागस्य सत्त्वेऽपि दाने च।

होमकुण्ड न० होमार्थं कुण्डम्। होमार्थं कुण्डे।

होमधान्य न० होमोपयुक्तं धान्यम्। तिले, यवे च।

होमधूम पु० होमज धूम। होमार्थाग्निजाते धूमे।

होमभस्मन् न० होमज भस्म। हुतद्रव्यजाते भस्मनि।

होमिन् पु० होमोऽस्त्यस्य इनि। होमकर्त्तरि।

होम्य त्रि० होमाय हितम् यत्। होमोपयुक्ते घृतादौ।

होरा स्त्री० हु-रन्। ज्योतिषोक्ते लग्ने, राश्यर्द्धभागे,होराशापकशास्त्रभेदे, रेखायाञ्च।

होलका स्त्री० हु-क्विप् लकति लक-अच् कर्म०। 'अर्द्धपक्वो शमीधान्यैस्तृणभ्रष्टैश्च होलकः' इत्युक्ते तृणादिना अर्द्धपक्वे शमीधान्ये। [कर्त्तव्येति, कामयतिरिति दायभाग

होलाका स्त्री हु क्विप् लाक-घञ्। वसन्तोत्सवभेदे,'होलाका

हौ अव्य० हे-डौ नि०। सम्बोधने, आह्वाने च।

हौड अनादरे गतौ च भ्वा० आ सक सेट ऋदि न ह्रस्व। हौडत अहौडिष्ट।

ह्नु, चौर्ये अदा आत्म०सक०अनिट्। ह्नुते अह्नोष्ट।

ह्मल चलने भ्वा०प०अक सेट घटा। ह्मलति अह्मालीत्। प्रह्मलयति अनुपसर्गस्य वा ह्रस्व।

ह्यस् अव्य० गतेऽहनि नि०। गतदिवसे। [ह्यस्तनीयम् नि०

ह्यस्तन त्रि० ह्यस्+भवार्थे ट्युल् तुट् च। गतदिवसभवे त्यप्,

ह्रुग संवरणे भ्वा०पर सक० सेट् घटा० इदित् न इदि। ह्रगति अह्रुगीत्।

ह्रद पु॰ ह्राद-अच् नि॰ । अगाधजलाशये ।

ह्रदिनी स्त्री॰ ह्रदोऽस्त्यस्याम् इनि । नद्याम् ।

ह्रप भाषणे चु॰उ॰सक॰सेट् । ह्रापयति ते अजिह्रपत् त ।

ह्रस रवे भ्वा॰प॰सक॰सेट् । ह्रसति अह्रसीत् अह्रासीत् ।

ह्रसिष्ठ त्रि॰ अतिशयेन ह्रस्वः इष्ठन् ह्रसादेशः । अतिह्रस्वे ।

ह्रसीयस् त्रि॰ अतिशयेन ह्रस्वः ईयसु ह्रसादेशः । अति-ह्रस्वे । स्त्रियां ङीप् ।

ह्रसिमन् पु॰ ह्रस्वस्य भावः इमनिच् ह्रसादेशः । ह्रस्वतायाम्

ह्रस्व न॰ ह्रस-वन् । परिमाणभेदे तद्वति । सर्वे च त्रि॰ एक-मात्राकालोच्चार्ये लघुवर्णे पु॰ ।

ह्रस्वकुश पु॰ कर्म॰ । श्वेतकुशे ह्रस्वदर्भादयोऽप्यत्र ।

ह्रस्वगर्भ पु॰ ह्रस्वो गर्भो यस्य । कुशे ।

ह्रस्वगवेधुका स्त्री॰ कर्म॰ । नागबलायाम् ।

ह्रस्वजम्बू स्त्री॰ कर्म॰ । क्षुद्रजम्बूवृक्षे ।

ह्रस्वदा स्त्री॰ ह्रस्वैरपि दीयते छिद्यते दो-क । शल्लक्याम् ।

ह्रस्वपत्रक पु॰ ह्रस्वं पत्रमस्य कप् । नगजमधूके (मौल) अश्वत्थ्याम् स्त्री॰ टाप् अत इत्वम् ।

ह्रस्वफला स्त्री॰ ह्रस्वं फलमस्याः । भूमिजम्बूवृक्षे ।

ह्रस्वमूल पु॰ ह्रस्वं मूलमस्य । रक्तेक्षौ ।

ह्रस्वाग्नि पु॰ ह्रस्वः अग्निरस्मात् ५ब॰ । अर्कवृक्षे ।

ह्रस्वाङ्ग पु॰ ह्रस्वमङ्गमस्मात् ५ब॰ । जीवकौषधे ६ब॰ । वामने खर्वे त्रि॰ । कर्म॰ । ह्रस्वे अङ्गे न॰ । [कारके त्रि॰

ह्राद स्वने भ्वा॰आ॰अक॰सेट् । । ह्रादते अह्रादिष्ट । [शब्द

ह्राद पु॰ ह्राद-घञ् । शब्दे । अच् । हिरण्यकशिपुपुत्रभेदे पु॰ ।

ह्रादिनी स्त्री॰ ह्राद-णिनि ङीप् । विद्युति, वज्रे, नद्याम्, शल्लक्याञ्च । ह्रादविशिष्टे त्रि॰ ।

ह्रास पु॰ ह्रस-घञ् । शब्दे, अपचये च ।

हृणी लज्जायाम् कण्ड्वा॰आ॰अ॰सेट् । हृणीयते अहृणीयिष्ट

हृणीया स्त्री॰ हृणी-यक् अ । लज्जायाम् ।

ह्री लज्जायां जु॰प॰अक॰अनिट् । जिह्रेति अह्रैषीत् ।

ह्री स्त्री॰ ह्री-क्विप् । लज्जायाम् ।

ह्रीच्छ लज्जायाम् भ्वा॰प॰अक॰सेट् । ह्रीच्छति अह्रीच्छीत् ।

ह्रीणित त्रि॰ इत॰ । लज्जाशीले ।

ह्री(त)ण त्रि॰ ह्री-क्त वा तस्य नः । लज्जिते ।

ह्रीवेर(ल) न॰ ह्रिये लज्जायै वेरमङ्गमस्य क्षुद्रत्वात् इत्वा रस्य ल (वाला) । क्षुपभेदे । [डिष्ट ।

हुड गतौ भ्वा॰आ॰सक॰सेट् चङि न ह्रस्वः । होडते अहो-

हुड गतौ भ्वा॰आ॰सक॰सेट् चङि न ह्रस्वः । हुडति अहुडिष्ट

ह्रेप गतौ भ्वा॰आ॰स॰सेट् चङि न ह्रस्वः । ह्रेपते अह्रेपिष्ट

ह्रेष सर्पणे भ्वा॰आ॰सक॰सेट् चङि न ह्रस्वः । ह्रेषते अह्रेषिष्ट

ह्रेषा स्त्री॰ ह्रेष-अ । अश्वशब्दभेदे ।

ह्रौड गतौ भ्वा॰आ॰स॰सेट् चङि न ह्रस्वः । ह्रौडते अह्रौडिष्ट

ह्लग संवरणे भ्वा॰ प॰सक॰सेट् घटा॰ मिचि न वृद्धिः । ह्लगति अह्लगीत् ।

ह्लप भाषणे चु॰उ॰द्वि॰क॰सेट् । ह्लापयति ते अजिह्लपत् त ।

ह्लस रवे भ्वा॰प॰अ॰सेट् । ह्लसति अह्लसीत् अह्लासीत् ।

ह्लाद शब्दे भ्वा॰आत्म॰अक॰मोदने सक॰ सेट् निष्ठायामनिट् । ह्लादते अह्लादिष्ट ।

ह्लाद पु॰ ह्लाद-घञ् । आह्लादे, आनन्दे, सन्तोषे ।

ह्लादिनी स्त्री॰ ह्लाद-णिनि ङीप् । विद्युति, वज्रे, ईश्वर-शक्तिभेदे च । ह्लादविशिष्टे त्रि॰ ।

ह्लल चलने भ्वा॰प॰अक॰सेट् घटा॰ । ह्ललति अह्लालीत् । सह्ललयति अनुपसर्गस्य वा ह्रस्वः ह्ललयति ह्लालयति ।

ह्वान न॰ ह्वे-ल्युट् । आह्वाने ।

ह्वृ कुटिलीकरणे भ्वा॰प॰सक॰ अनिट् । ह्वरति अह्वार्षीत् ।

ह्वे स्पर्द्धायां शब्दे च अक॰ आह्वानार्थे सक॰ भ्वा॰ उभ॰ यजा॰ अनिट् । ह्वयति अह्वत्-अह्वत । अह्वास्त ।

ये शब्दाम्बुधिपारमापुरमलप्रज्ञातरी वैभवात्
तानुद्दिश्य नमस्क्रियैव सततं तेभ्यो न चया क्रिया ।
ये शास्त्रेष्वकृतश्रमा निजधिया व्युत्पित्सवो मानवा
ज्ञानाकोषनिरीक्षणे श्रमभियस्तेभ्यो ममैषा क्रिया ॥

शब्दरत्नमयः कोषो सोपटोपमयोज्भितः ।
नानार्थोऽव्ययरूपाढ्यो नष्टधातुर्जयत्ययम् ॥
पदानुशासने रत कुनित्वयं हृदानतम् ।
अमुष्य भूमिमण्डले करोतु सुप्रचारणम् ॥

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलितः शब्दस्तोम-महानिधिः समाप्तः ।

ॐ तत्सत् ।

---

तारानाथसमाह्वयेन रचितो विप्रेण यत्नादयं
शाके भूमिनयाद्रिचन्द्रविमिते मार्गेऽङ्कणारम्भणः ।
शब्दस्तोममहानिधिर्नखमितैर्मासैः समाप्तिं गतः
खण्डैः पञ्चभिरन्वितो सतिमतां प्रीत्यै समुज्जृम्भताम् ॥

---